# साहित्यदर्पणः ।

श्रीविश्वनाथकविराजकृतः ।

श्रीरामचरणतर्कवागीशकृतव्याख्यामवलम्ब्य

पण्डित-कुलपतिना,

वि, ए, उपाधिधारिणा

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितया

तदात्मजाभ्यां

पण्डित-श्रीमदाशुबोध-विद्याभूषण-पण्डित-श्रीमन्नित्यबोध-
विद्यारत्नाभ्यां परिवर्द्धितया प्रतिसंस्कृतया च
टीकया परिशोभ्य प्रकाशितः ।

सप्तमं संस्करणम् ।




कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे

मुद्रितः ।

इं १९१६ ।

सर्व्वं स्वत्वं संरक्षितम् ।

मूल्यं मुद्राद्वयम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

SRI JAGADGU 'U S I'VARADHYA
JNANA SIMHASA . AMANDIR
LIB... .Y.
Jangamwadi Math, VARANASI,
Acc. No. ............
015:9x H35,1
E6
1357

प्रकाशक—{ पण्डित-श्रीआशुबोध-विद्याभूषण तथा पण्डित-श्रीनित्यबोध-विद्यारत्न।

प्राप्तिस्थान—{ २न०, रमानाथ मजुमदार ष्ट्रीट्, ह्यारिसन-रोड—पोष्ट अफिस। कलिकाता।

प्रिण्टर—वि, वि, मुखर्जी।

२ न०, रमानाथ मजुमदार ष्ट्रीट्, कलिकाता।

SRI JAGADGU 'U VIS' 'ARADHYA
JNANA SIMH... ... MANDIR
L
Jangamwa
Acc. N ... ASI,
1357
5306

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# मातृकाक्रमेण साहित्यदर्पणस्य सूचीपत्रम् ।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

श



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## अकारादिक्रमेण साहित्यदर्पणधृतग्रन्थनामानि ।

| | | | |
|---|---|---|---|
| अनर्घराघवः | चण्डकौशिकः | भट्टिकाव्यम् | रामाभिनन्दः |
| अमरुशतकम् | चन्द्रकला | भरतशास्त्रम् | रामाभ्युदयः |
| आग्नेयपुराणम् | छलितरामः | भाषार्णवः | रामायणम् |
| आर्याविलासः | जानकीराघवम् | भिक्षाऽटनम् | रैवतमदनिका |
| उदयनचरितम् | त्रिपुरदाहः | महाभारतम् | लीलामधुकरः |
| उदात्तराघवः | देवीमहादेवम् | मायाकापालिकम् | वालिवधः |
| कनकावतीमाधवः | देशराजचरितम् | मालतीमाधवम् | विक्रमोर्वशी |
| कन्दर्पकेलिः | धूर्त्तचरितम् | मालविकाऽग्निमित्रम् | विलासवती |
| कर्णपराक्रमः | नटकमेलकम् | मुक्तावली | विष्णुपुराणम् |
| कर्पूरमञ्जरी | नर्मवती | मुद्राराक्षसम् | वीरचरितम् |
| कादम्बरी | नागानन्दः | मेघदूतम् | वेणीसंहारः |
| कामदत्ता | नैषधचरितम् | मेनकाहितम् | शर्मिष्ठाययातिः |
| कुन्दमाला | पञ्चतन्त्रम् | ययातिविजयः | शाकुन्तलम् |
| कुमारसम्भवः | पुष्पभूषितम् | यादवोदयः | शारीरकमीमांसाभाष्य- |
| कुम्भः | पुष्पमाला | रघुवंशः | व्याख्यानम् |
| कुवलयाश्वचरितम् | प्रभावतीपरिणयः | रङ्गदत्तम् | शिशुपालवधः |
| कुसुमशेखरविजयः | प्रशस्तिरत्नावली | रत्नावली | शृङ्गारतिलकम् |
| कृत्यरावणः | बालचरितम् | राघवविलासः | समुद्रमथनम् |
| केलिरैवतकम् | बालरामायणम् | राघवानन्दः | सेतुबन्धः |
| क्रीड़ारसातलम् | बिन्दुमती | राघवाभ्युदयः | हयग्रीववधः |
| गटहच्चवाटिका | विरुदमणिमाला | रामचरितम् | हर्षचरितम् |

## अकारादिक्रमेण साहित्यदर्पणधृतग्रन्थकृन्नामानि ।

| | | | |
|---|---|---|---|
| अभिनवगुप्तपादाः | धनिकः | भवभूतिः | रुद्रटः (काव्यालङ्कार- |
| अभिहितान्वयवादी | धर्मदत्तः | भोजः | कारः ) |
| उदयनाचार्यः | ध्वनिकारः | मम्मटः | वक्रोक्तिजीवितकारः |
| कालिदासः | नखकुट्टः | महिमभट्टः ( व्यक्ति- | वाचस्पतिमिश्रः |
| चण्डीदासः | नारायणः | विवेककारः ) | वामनः |
| चन्द्रशेखरः | पुरुषोत्तमः | मुनिः | श्रीमल्लोचनकारः |
| चाणक्यः | भरतः | मुनीन्द्रः | श्रीहर्षः |
| दण्डी | भर्तृहरिः | राघवानन्दः | श्रीचिरञ्जीमांस |

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# साहित्यदर्पणोद्धृतश्लोकानां मातृकाक्रमिका सूची।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## अशुद्धिशोधनम् ।

| पृष्ठायां | पङ्क्तौ | अशुद्धि: | शुद्धि: |
|---|---|---|---|
| १० | ७ | किं तर्हि सर्वमेव काव्यम् ? | किं तर्हि ? सर्वमेव काव्यम् । |
| ५४ | २८ | प्रियामृतप्रतिकूल्य | प्रियासुरतप्रातिकूल्य । |
| ५७ | २७ | आम्रियते | आम्रीयते । |
| १६१ | १७ | सख्य | सख्या । |
| ३३५ | २७ | रतेर्द्दविष्टोपनायक | रतेर्द्दविष्ठोपनायक । |
| ३३६ | २३ | व्याच्यार्थ | वाच्यार्थे । |
| ४४६ | १९ | तावन्त एव निर्व्वहणावयवा: इति सम्मेलनेन चतु:षष्टि | चतुर्द्दश निर्वहणावयवा: इति सम्मेलनेन पञ्चषष्टित्वेऽपि केचित् । |
| ४४६ | २० | स्वीकुर्वन्तस्तु | स्वीकुर्वन्तस्तु केचित् । |
| ५४५ | ८ | वन्दनीयायाम् | वन्दनीयाम् । |
| ५९३ | २२ | "रसस्य पुन:पुनरुद्दीपितत्वम्" इत्यस्मात् परम् "अङ्गिनोऽननुसन्धानम्" इति पाठ: पतित: । | |

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# साहित्यदर्पण-सारसङ्क्षेपः।

## मुखबन्धः।

इह खलु साहित्यशास्त्रे व्युत्पित्सूनां परिशीलित-काव्य-व्याकरण-तर्कादिशास्त्राणां छात्राणाम् अवश्यद्रष्टव्योऽयं दर्पणवत् साहित्यदर्पणः। एष चाष्टादशभाषारसिकेन महापात्रसान्धिविग्रहिकेण कविराजोपाधिकेन श्रीविश्वनाथकविना विरचितः, ध्वन्यालोककाव्यप्रकाशरसगङ्गाधरप्रभृतिनिरूपितपदार्थप्रतिपादको भूत्वाऽपि दृश्यकाव्यविषये केवलतन्निरूपकदशरूपकादिनिबन्धमधरीकरोति। प्रकाशवदेषोऽपि कारिकाविवृत्युदाहृतिभिस्त्रिविधोपकरणैः प्रतिपादितः। प्रायेण प्राञ्जलमेव प्रमेयाणामुपादानमत्र लक्ष्यते, अतः सुकुमारमतीनां नरपतिनन्दनानामपि सर्व्वथा सुखबोध्योऽयमिति मन्यन्ते मनीषिणः।

शास्त्रेऽस्मिन् काव्यस्य स्वरूपभेदानामुत्कर्षापकर्षयोरुपदेशः, रसभावतदुद्गमविरोधविकाशक्रमाणामुपपादनं, शब्दार्थशक्तिनियमः, दोषगुणरीत्यलङ्कारनिरूपणं, भाषाविभागप्रभृतयश्च वर्त्तन्ते। ग्रन्थमेनमनधीत्य साहित्यसमालोचनं चित्रसौन्दर्य्यदर्शनमिवान्धानां विफलम्। अतः स्वयमेव ग्रन्थकृता ग्रन्थावसाने अवादि,—"साहित्यदर्पणममुं सुधियो विलोक्य साहित्यतत्त्वमखिलं सुखमेव वित्त" इति।

अस्य ग्रन्थस्य कर्त्ता विश्वनाथस्तु महापात्रचन्द्रशेखरात्मजः महापात्रः ब्राह्मणविशेष इति केचित्, उपनामान्तरमित्यपरे। सन्धिविग्रहौ इति राज्याधिकारगुणविशेषौ, तयोः नियुक्तः सान्धिविग्रहिकः ["तत्र नियुक्तः" ( ४।४।६९ पा० ) इति सूत्रेण ठक् प्रत्ययः], कविराज इति कविश्रेष्ठत्वप्रतिपादकः। एष हि शालिवाहनशकस्य त्रयोदशशताब्द्या अन्तिमभागे आसीदिति केचिन्मन्यन्ते।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## प्रथमपरिच्छेदे—

प्रथमं तावत्—"ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते। ग्रन्थादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः॥" इत्यादिशास्त्रात् अवश्यवक्तव्यस्य प्रयोजनस्य निरूपणं, तेनैव च सम्बन्धाभिधेययोरपि समर्थनम्; तथा च ग्रन्थस्यास्य काव्यस्वरूपनिर्म्मितिरभिधेयं, काव्यसाधने अप्रधानकारणतया काव्यफललाभाभिन्ना सुखेन चतुर्व्वर्गफलप्राप्तिरेव प्रयोजनं, सम्बन्धश्च तयोः कार्य्यकारणत्वरूपः। ततश्च काव्यं रसभावतदाभासान्यतमव्यञ्जकं वाक्यं महावाक्यञ्च। प्रसङ्गतश्च तस्य शब्दार्थौ शरीरं, गाढ़ानन्दसञ्जनन-श्रेष्ठस्वभावतया जीवनाधायकत्वाद्रसादिरात्मा, काणत्वखञ्जत्वादयः शरीराणामिव दुःश्रवत्वादयः दोषाः काव्यानामपकर्षकाः, गुणालङ्काररीतयश्च उत्कर्षकारणभूताः। तत्र च गुणाः शरीराणां शौर्य्यादिवत्, अलङ्काराः कटककुण्डलादिवत्, रीतयः अवयवानां यथास्थानविन्यासविशेषवत्। शरीरोत्कर्षापकर्षाभ्यां यथा आत्मनः उत्कर्षापकर्षौ भवेतां, तथा काव्यात्मभूतस्य रसस्यापि दोषगुणादयोऽपकर्षोत्कर्षसम्पादकाः, इत्यादीनि च विवृतानि।

## द्वितीयपरिच्छेदे—

काव्यलक्षणघटकीभूतवाक्यलक्षणम्। तद्धि योग्यताऽऽकाङ्क्षाऽऽसत्तियुक्तपदसमूहः वाक्यम्। तात्पर्य्यविषयीभूतसम्बन्धेन तन्निरूपकाणां पदार्थानामेकतरस्मिन्नपरपदार्थसद्भावो योग्यता। आकाङ्क्षा—प्रतीतिपर्य्यवसानविरहः, पदार्थानामन्वयज्ञानजनकत्वेन श्रोतुरिच्छाऽभावविरहस्वरूपः इति फलितार्थः। आसत्तिः,—पदार्थोपस्थितिः प्रकृतानुपयोगिपदार्थोपस्थितिकालबाहुल्यान्यतमत्वेनाव्यवहितपदार्थोपस्थितिः। महावाक्यम्—उक्तलक्षणानां वाक्यानां समूहः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र पदम्—असमासाङ्गसुप्-तिङन्ता तन्नोपयुक्ता वा प्रकृतिः। अर्थः,—वाच्यलक्ष्यव्यङ्ग्यभेदेन त्रिविधः। "अस्मात् शब्दादयमर्थो बोद्धव्यः" इति ईश्वरेच्छाविषयकसङ्केतबोध्यया शब्दस्य प्रथमोद्भाविता स्वाभाविक्या शक्त्या व्याकरणादिना वा नियमिता अभिधा, तया बोध्यः अर्थः वाच्यः, अभिधेयार्थो वा। एवमेव मुख्यार्थस्यान्वयानुपपत्तिग्रहे तदर्थसम्बन्धी स्वाभाविकेतरः ईश्वरानुद्भावितः अपरः अर्थः रूढ़िप्रयोजनयोरन्यतरस्मिन् हेतौ सम्भवति यया प्रतीयते, सा लक्षणा नाम वृत्तिः, तया शक्त्या बोध्योऽर्थः लक्ष्यः।

लक्षणाभेदाः,—लक्षणा हि रूढ़िप्रयोजनभेदेन प्रथमं द्विविधा ; लक्षणाघटकवाक्यानां प्रसिद्धत्वे रूढ़िमूला, केनचित् निमित्तेन तदङ्गीकारे प्रयोजनमूला चेति। पुनश्च उपादान-लक्षणा-लक्षणलक्षणाभेदात् सैव चतुर्व्विधा। तत्रोपादान-लक्षणा—वाच्यार्थस्यान्वयसिद्ध्यर्थं लक्ष्यार्थस्य बोधने वाच्यार्थस्याप्युपादानमूला अजहत्स्वार्थाऽपरनामधेया, लक्षणलक्षणा तु—सर्व्वथा स्वार्थपरित्यागेनापरार्थमात्रबोधिका, जहत्स्वार्थाऽऽख्या इति। ततश्च चतुर्व्विधायास्तस्याः सारोपा-साध्यवसाना-भेदेन पुनरष्टविधत्वम्। तत्र प्रयुक्तशब्दप्रतिपादितनिरुक्तारोप-विशिष्टत्वे सति सारोपा, शब्दं विनैवाक्षेपादिना निरुक्तारोप-विषयस्य प्रतीयमानत्वे सति साध्यवसाना इति। ता अपि सादृश्येतरसम्बन्धहेतुकाः शुद्धाः, सादृश्यसम्बन्धहेतुकाश्चेत् गौण्यः ; तेन च षोड़श भेदाः जायन्ते लक्षणानाम्। एतेषु भेदेषु प्रयोजने दर्शितायाः अष्टविधभेदवत्या लक्षणायाः प्रयोजनरूपव्यङ्ग्यस्य गूढ़ागूढ़त्वेन प्रत्येकं द्विविधा इति पुनः षोड़श भेदाः ; तेषाञ्च धर्म्मिधर्म्मगतत्वेन द्वौ भेदौ, इति मिलित्वा द्वात्रिंशत्प्रकाराः फल-लक्षणाः। रूढ़िलक्षणा च पूर्व्वोक्ताष्टविधा एव ; एतेषां मेलनेन

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

च चत्वारिंशत्प्रकाराः लक्षणाः । पुनश्च ता अपि पद-वाक्य-गतत्वेन द्विविधाः, इति अशीतिर्लक्षणाभेदाः ।

व्यञ्जना,—— अभिधालक्षणातात्पर्य्याऽऽख्याभिस्तिसृभिः शक्तिभिः सङ्केतितारोपितान्वयबोधमात्ररूपान् अर्थान् बोधयित्वा वाच्यलक्ष्यतात्पर्य्यार्थेषु विश्रान्तेषु तदपरार्थप्रत्यायनहेतुभूता शक्तिरेव । "शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभावः" इति न्यायादुपरतायाः पुनरुत्थानाभावाद् वस्त्वलङ्काररसादिव्यङ्ग्य-बोधने न तासां क्षमत्वमिति व्यञ्जनाशक्तेरङ्गीकारः ।

व्यञ्जना अपि द्विधा भवति, शाब्दी आर्थी चेति । तत्रा-भिधालक्षणाभेदात् द्विविधा शाब्दी व्यञ्जना । अभिधामूला तु —अनेकार्थशब्दानां संयोगप्रकरणादिभिरेकस्मिन्नर्थे नियमिते अप्राकरणिकापरार्थप्रतीतेरुपायरूपा ।

संयोगादयः यथा,—

"संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ।
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥" इति ।

( एषु च स्वरस्य काव्ये विशेषबोधकता नास्ति, वेदे एव तस्याङ्गीकार इति बोध्यम् ) ।

प्रकरणादिनियमाभावे तु यावदर्थे वक्तृतात्पर्य्यं, तावन्त एवार्था वाच्याः । लक्षणामूला व्यञ्जना च—यत्प्रयोजनसिद्ध्यर्थं लक्षणाशक्तिस्वीकारः, तत्प्रयोजनप्रत्यायनरूपा ।

आर्थी व्यञ्जना—वक्तृबोद्धव्ययोः वाक्यवाच्यान्यसन्निधीनाञ्च तथा प्रस्तावदेशकालकाकुचेष्टादीनां वैलक्षण्यज्ञानेन जायमान-स्यार्थान्तरस्य बोधिका । अर्थानां वाच्यलक्ष्यव्यङ्ग्यत्वेन त्रैविध्यात् अस्याः अपि आर्थीव्यञ्जनायाः वाच्यलक्ष्यव्यङ्ग्यार्थभेदेन त्रैवि-ध्यम् । ननु शब्दबोध्यस्यार्थस्य यथा अर्थान्तरव्यञ्जकत्वं, तथा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अर्थान्तरोपस्थापकस्य शब्दस्यापि अर्थान्तरव्यञ्जकत्वं, तत्कथं व्यञ्जनायाः शब्दार्थगतत्वेन भेदावसरः? इति न वाच्यम्; अव्यवहितोपकारकत्वेन प्राधान्यादेकस्य व्यञ्जकत्वे तदितरस्या-प्राधान्यात् सहकारित्वमित्यनयोर्भेदः।

अर्थानां त्रैविध्यात् तद्बोधकशब्दानामपि त्रैविध्यं दर्शितम्। अभिधोपाधिकः शब्दः वाचकः, लक्षणोपाधिकः शब्दः लक्षकः, व्यञ्जनोपाधिकः शब्दो व्यञ्जकः इति।

तात्पर्य्यं नाम तुरीया वृत्तिः,—पदार्थानामन्वयबोधनहेतुः। अभिधालक्षणयोः एकैकपदार्थबोधनसामर्थ्यात् पदार्थान्वय-बोधनार्थमस्याङ्गीकारः।

## तृतीयपरिच्छेदे—

रसः,—काव्योपस्थापितविभावानुभावसञ्चारिभावयोगेन रत्यादिस्थायिभावः रूपान्तरपरिणतः परमानन्दचमत्काररूप-तामापन्नः नायकनिष्ठोऽपि ज्ञानसम्बन्धेन सामाजिकनिष्ठः सन्, अम्लसम्बन्धेन दुग्धस्य दधिभाव इव रस इति कथ्यते। यद्वा, —पाकसम्बन्धेन यथा ओदनरूपं प्राप्तस्य तण्डुलस्य ओदन-त्वेन व्यवहारः, तथा प्रतीतिसम्बन्धेन रसरूपं प्राप्तायाः रत्यादितादात्म्येनाध्यवसितायाः सामाजिकवासनायाः रस इति व्यवहारः। अलौकिकचमत्कारसाररूपस्य विलक्षण-व्यपदेशभाजः ब्रह्मानन्दसदृशपरमानन्दज्ञानस्वरूपस्य तस्या-स्वादस्तु तथाविधालौकिककाव्यार्थपरिशीलनेन रजस्तमसी अभिभूय सत्त्वस्याविर्भावात् ज्ञानान्तरं यथा स्वगोचरघटादिं प्रकाशयति, तथा रसः आत्मानं प्रकाशयतीत्यतस्य, यथा वा देहस्य स्वस्माद्भिन्नत्वेऽपि अहं स्थूल इत्यादि भेदोल्लेखाभावेन प्रतीतिः, तथा ज्ञातृज्ञानभेदाभावेन अलौकिकप्रत्यक्षेण समु-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ह्यालम्बनज्ञानतादात्म्येन च प्रपाणकरसन्यायादेकरूपत्वेनाव-गन्तव्यम्।

प्रथमं नाट्यकाव्यदर्शनश्रवणाभ्यां विभावानुभावयोरुप-स्थितिः, एवमाक्षेपेण झटित्येव स्थायिसञ्चारिभावयोरपि, ततः साधारणीकरणाख्यव्यापारेण सीतादयः मम रामस्य वेति विभावादिचतुष्टये प्रत्येकं साधारण्यप्रत्ययः, ततश्च व्यञ्जनया रसमसमानाकारप्रत्ययः, तदनु तत्सहकृतेन स्वादनाख्यव्यापारेण "रामोऽहं सीताविषयकरतिमान्" इत्याकारकः रत्याद्यभेदः स्वस्मिन् नायकाभेदमवगाहमानः साक्षात्कारः सम्पद्यते इति।

व्यस्तानामपि रत्यादिभावानामेकत्वन्तु प्रथममेकैकशः प्रतीयमानाः रत्यादयः भावाः व्यञ्जनाजन्यैकज्ञानविषयत्वेन पुनरेकरूपत्वं प्राप्ताः चिद्रूपत्वं प्राप्नुवन्तः एव रसरूपतामाप-द्यन्ते; वस्तुतस्तु ब्रह्ममीमांसायां यथा "चिदानन्दरूपोऽयं पुरुषः" इत्यनेन चिदानन्दयोरेकब्रह्मत्वमुपपादितं, तथाऽत्र चिदानन्दचमत्काराणामेकरसरूपत्वमित्यभिप्रायः। करुणरसा-दिषु शोकादेः स्थायिनः दुःखहेतुतया प्रसिद्धस्य, नायके इव सहृदयेऽपि दुःखजननस्यैवौचित्यात् कथं सहृदयाह्लादहेतुत्वम्? इत्यपि न शङ्का; सचेतनः कश्चिदपि न खलु कदाऽपि स्व-दुःखाय प्रवर्त्तते; करुणादिषु च रसेषु सर्व्वेषामेव साभिनिवेश-प्रवृत्तिदर्शनात् शृङ्काररसप्रधानकाव्येभ्यः इव करुणप्रधान-काव्येभ्योऽपि यदि केवलाह्लाद एव सहृदय-हृदय-प्रमाणकः, तदा काव्यानुरोधेन कारणस्य कल्पनीयत्वाल्लोकोत्तर काव्य-व्यापारस्यैवाह्लादप्रयोजकत्वमिव दुःखप्रतिबन्धकत्वमपि कल्प-नीयम्। तथात्वे करुणरसप्रधानरामायणादीनामपि दुःख-हेतुताप्रसङ्गप्रसरः अपसृतः, ततश्च लौकिकशोकहर्षादिभ्यः लौकिकशोकहर्षादयः यथा जायन्ते, काव्ये न पुनस्तथा; इह

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सर्व्वेभ्यो विभावादिभ्यः सुखमेव समुत्पद्यन्ते इति समाधानम्। तेन च चेतसः द्रवीभावात् निश्वासाश्रुपातादयोऽपि परमानन्दसमुत्थिता एव। रत्यादिवासनामन्तरेण न खलु रसास्वादः, इति सहृदयातिरिक्तानां सर्व्वेषां सामाजिकानां न पुनस्तादृशो रसाभिव्यक्तिः भवति ; रसबोधे साधारणीकृतेरङ्गीकारवीजन्तु रामादिरत्याद्युद्बोधहेतुभिः सीतादिभिः सामाजिकानां सजातीयरत्यादिसाजात्येन नायकाद्यभेदावगाहिरसबोधोपपत्तिकरणमेव। साधारण्याभिमानेन मनुष्यमात्रस्य विशालजलधिलङ्घनादावपि महानुत्साहोद्बोधः, तथा नायकमात्रसम्बन्धित्वेन प्रतीतस्यापि रत्यादेः स्वात्मगतत्वेनैव प्रतीतिः। तथा प्रथमतः विभावानुभावसञ्चारिभावा अपि साधारण्येनैव प्रतीयन्ते ; तेषामलौकिकत्वमपि भूषणायैव। कारणकार्य्यसहकारिरूपाणामपि विभावादीनां रसोद्बोधे कारणत्वेऽपि एक एव प्रतिभासः ; स च प्रपाणकरसे यथा खण्डमरिचादीनां सम्मेलनादपूर्व्वः कश्चिदास्वाद उपजायते, तथा विभावादीनां सम्मेलनादिहापि इत्यवधेयम्। यत्र च तेषां द्वयोरेकस्य वा सद्भावः, तत्र प्रकरणादिवशादन्यसमाक्षेपः विधेयः। नायकमात्रगतत्वे तु नानासामाजिकगतस्य रसस्याल्पतया, अलौकिकविभावादिजन्यत्वप्रतिकूलतया च, तथा नाट्यकाव्यदर्शनश्रवणादिप्रतिबन्धकतया च रसोऽयं न अनुकार्य्यगतः।

शिक्षितार्थस्य मुहुरनुष्ठानेन संस्कारातिशयात् काव्यार्थभावनेन सभ्यपदवाच्यनटस्य रसास्वादो भवत्येव, तदितरस्य तु नटस्य नैव रसास्वादः। रसस्य ज्ञानाभावकालिकावस्थायामवस्थानाभावात् नायं ज्ञाप्यः ; यो वा ज्ञाप्यो घटादिः, स प्रतीतिं विना कदाचिदवतिष्ठते, अयन्तु न तथेति भावः। तथा अयं यथासम्भवविशेषणविशेष्यभावापन्नविभावादिसमूह-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विषयकः न ज्ञाप्यः, रसप्रादुर्भावप्राक्क्षणे विभावादिज्ञानस्य पूर्व्ववर्त्तित्वमात्रेणौपचारिककारणत्वात्। न वाऽयं कार्य्यः, रसप्रतीतिकाले तत्कारणानां विभावादीनां प्रतीतेरभावात्; कारणज्ञानतत्कार्य्यज्ञानयोर्युगपददर्शनात् न हि चन्दनस्पर्श-ज्ञानं तज्जन्यसुखज्ञानञ्च एकदा सम्भवति; ततश्च रसः कार्य्यत्वा-भाववान्, सुखमयत्वे सति विभावादिसमूहविषयकत्वात् इत्यनु-मानम्। विभावादिज्ञानात् प्रागस्य ज्ञानाभावान्नाप्ययं नित्यः। लौकिकप्रत्यक्षे विषयस्य हेतुत्वस्वीकारेण भविष्यतस्तदसम्भवात् साक्षात्कारविषयानन्दबहुलप्रकाशरूपस्यास्य न वा भविष्य-त्त्वम्; वर्त्तमानस्य वस्तुनः कार्य्यज्ञाप्याऽन्यतरत्वनियमान्नायं रसः वर्त्तमानोऽपि; परमानन्दत्वप्रकारकसंवेदनविषयत्वात् स्वमात्रग्राह्यस्य रसस्य संसर्गावगाहिज्ञानविषयाभावत्वञ्च दर्शि-तम्। अयन्तु वेदान्तप्रसिद्धब्रह्मवत् स्वप्रकाशः अखण्डस्वरूप एव वेदितव्यः।

विभावाः,—ये पुनरिह लोके रामादिनायकगतरतिहासा-दिकानामुद्बोधहेतुभूताः सीतादयः रूपककाव्यनिवेशिता अलौकिकत्वमापन्नाः, ते विभावा इत्युच्यन्ते।

आलम्बनोद्दीपनाख्यौ विभावस्य द्वौ भेदौ। यानेव नायिकानायकप्रतिनायकादीनवलम्ब्य रसोद्गमः स्यात्, ते आलम्बनविभावाः। तत्र नायकः,—त्यागवान्, नानागुणसम्पन्नः, सत्कुलजातः, सुश्रीकः, रूपयौवनाध्यवसायवान्, क्षिप्रकारी, गूढ़ाभिप्रायज्ञः, तेजस्वी, सच्छीलश्च नायको भवति। तस्य च धीरोदात्त-धीरोद्धत-धीरललित-धीरप्रशान्तभेदेन चत्वारो भेदाः सम्भवन्ति। तेषाञ्च धीरोदात्तादीनां प्रत्येकं दक्षिण-धृष्टानुकूल-शठरूपत्वेन भेदात् षोड़शप्रकारो नायकः। तेषां पुनरुत्तमाधममध्यमत्वेनाष्टचत्वारिंशत् भेदाः।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अस्य शृङ्गारसहायाः,—प्रधानसहायः पीठमर्द्दाख्यः, उत्तमाधममध्यमभेदेन बहवोऽन्येऽपि विटादयः सहायाः सन्ति। अर्थचिन्तने सहायः मन्त्री, अन्तःपुरसहायाः वामनादयः, दण्डसहायाः सुहृदादयः।

दूता दूत्यश्च निसृष्टार्थ-मितार्थक-सन्देशहारकभेदात् त्रिधा। तत्र नायिकानायकमनोषितमर्थमुपलभ्य स्वबुद्ध्या कार्य्यसम्पादनकारी निसृष्टार्थः, अल्पार्थकथकः कार्य्यसम्पादनकारी मितार्थकः, स्वामिना यावदुक्तं सन्देशं तावदेव व्याहरति यः, स सन्देशहारकः।

सात्त्विकनायकस्य गुणाः,—शोभा-विलास-माधुर्य्य-गाम्भीर्य्य-धैर्य्य-तेजो-ललितौदार्य्यनामानः अष्टौ।

तत्र नायिका—नायकसामान्यगुणवती भवति, सा च प्रथमं स्वीया, अन्या, साधारणीभेदात्त्रिविधा। तासु च विनय-सरलता-गृहकर्म्मपरता-पातिव्रत्यादिगुणयुक्तायाः स्वीयायाः नायिकायाः मुग्धा, मध्या, प्रगल्भा चेति त्रयः भेदाः। तासु च तरुणयौवनोद्रेकात् मदनविकारमधिगता, रतावनिच्छुः, नात्यभिमानिनी, लज्जाऽवनतमुखी मुग्धा; सुरतकलाकौशलवती, प्रतिपन्नयौवनमदनोन्मादिनी, नातिलज्जाऽवनता मध्या; तथा सततप्ररूढ़कामविमोहिता, परिपूर्णयौवनवती, रतिमती, लज्जाहीना प्रगल्भेत्युच्यते। तास्वपि अन्त्ये द्वे धीरा, अधीरा, धीराधीरा चेति प्रत्येकं त्रैविध्येन षड्विधे कथिते; तत्रापि मध्या-धीरा सरोषोपहासवक्रवचनैः, अधीरा नियतरोदनैः, तथा धीराधीरा परुषवचनैः पतिसन्तापिनी भवति। प्रगल्भा-धीरा तु अन्तर्निगूढ़कोपाकारा, रतावुदासीना, वहिरनुरागप्रदर्शिनी; धीराधीरा सोल्लुण्ठनवचनैः पत्युः क्लेशकारिणी; अधीरा तु स्वामिनः तर्जनसन्ताड़नपरा कथ्यते।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अनन्तरोक्ता मध्या-प्रगल्भयोः षड्भेदा अपि प्रत्येकं नायक-प्रणयापेक्षया कनिष्ठज्येष्ठरूपत्वेन द्विधा भवन्ति, इति मध्या-प्रगल्भयोर्द्वादश भेदाः । मुग्धा तु एकैवेति स्वीया त्रयोदशभेद-भिन्ना वेदितव्या ।

परकीया तु परोढ़ाकन्यकाभेदेन प्रथमतो द्विधा ; तत्रापि परभर्त्तृगामिनी, उत्सवादिनिरता, विगतत्रपा परोढ़ा, एवं नवयौवनसम्पन्ना, लज्जाशीला, अनूढ़ाऽबला कन्यकेत्युच्यते । सुरतपण्डिता, नृत्यगीतादिकलाऽऽलापकुशला, सगुणनिर्गुणयो-स्तुल्यानुरागिणी, लिङ्गि-तस्करादिवल्लभा, धनिकानुरागिणी, मदनोन्मादिनी रमणी साधारणीत्युच्यते । सा चैकविधैव ।

तथा च त्रयोदश स्वीयाः, द्वे परकीये, एका साधारणीति मिलित्वा षोड़शभेदिता एता नायिकाः प्रत्येकं स्वाधीनभर्त्तृका-खण्डिता-अभिसारिका-कलहान्तरिता-विप्रलब्धा-प्रोषितभर्त्तृका-वासकसज्जा-विरहोत्कण्ठितारूपाभिरष्टाभिरवस्थाभिः साष्टा-विंशतिशतभेदाः ; पुनः प्रत्येकम् उत्तममध्यमाधमस्वरूपेण चतुरधिकाशीतियुतशतत्रयभेदभिन्नाः भवन्ति । एवमन्या-सङ्ख्यभेदानां सम्भवेऽपि विस्तरशङ्कया ते नात्र प्रदर्शिताः । आसाञ्च परस्परसाङ्कर्य्यमपि कुत्रचिद्दृश्यते ।

तारुण्ये चासां अष्टाविंशतिप्रकाराः सत्त्वजालङ्काराः समु-त्पद्यन्ते ; तत्र भाव-हाव-हेलाभेदेन त्रयोऽङ्गजाः, शोभा-कान्ति-दीप्ति-माधुर्य्य-प्रगल्भता-औदार्य्य-धैर्य्यभेदेन सप्त अयत्नजाः, (एते भावादयो दश नायकानामपि सम्भवन्ति) लीला-विलास-विच्छित्ति-विब्बोक-किलकिञ्चित-मोट्टायित-कुट्टमित-विभ्रम-ललित-मद-विहृत-तपन-मौग्ध्य-विक्षेप-कुतूहल-हसित-चकित-केलिभेदेन अष्टादश स्वभावजाश्च भवन्ति । ( विशेषलक्षणानि तु आकरे द्रष्टव्यानि, एवं सर्व्वत्र ) । तत्र मुग्धाकन्यकयोः

Jangamawadi Math, Varanasi
CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रियदर्शनमात्रेणैव व्रीड़ाप्रदर्शनादीनि पञ्चविधान्यनुरागेङ्गितानि ; तथा सर्व्वासामपि नायिकानां प्रियसविधे दीर्घकालावस्थानादिरूपाणि त्रयस्त्रिंशद्विधानि अनुरागेङ्गितानि भवन्ति। एवं लेख्यप्रेरण सस्नेहदर्शन-मृदुभाषण-दूतीप्रेरणैरासां भावाभिव्यक्तिर्भवति।

दूती-सखी-नटी-दासी धात्रेयी-प्रतिवेशिनी-बाला-प्रव्रजिता-कारु-शिल्पिप्रभृतयः स्वयञ्चेति दशविधा दूत्यः भवन्ति। कलाकौशलादयश्चाष्टौ तासां गुणा भवन्ति। एता अपि प्रत्येकम् उत्तमाधममध्यमभेदेन त्रिधा भवन्ति।

कामज-क्रोधज-व्यसनासक्तः, पापकर्म्मानुष्ठानरतः, धीरोद्धतः प्रतिनायक इत्युच्यते।

यथायथं शृङ्गारादिलक्षणप्रसङ्गनिरूपिता नायिकाद्यालम्बनस्य भ्रूविक्षेपकटाक्षपातादिचेष्टा, चन्द्र-चन्दन-रोलम्बझङ्कार-कोकिलकलरुतादयश्च शृङ्गाररसस्योद्दीपनादुद्दीपनविभावाः कथ्यन्ते। स्वकीयैरेवालम्बनोद्दीपनहेतुभिः सीताशशधरादिभिः नायकस्यान्तःप्ररूढ़ं रत्यादिकं वहिरुल्लासयन् कार्य्यमित्युच्यते, स एवानुभावः काव्यनाट्ययोः प्रयुज्यते।

पूर्वोक्ताङ्गज-स्वभावजालङ्कारवत् स्तम्भ स्वेद-रोमाञ्च स्वरभङ्ग वेपथु-वैवर्ण्य-अश्रुपात-प्रलयात्मानः स्त्रीणामष्टौ सात्त्विकाः भावाः अनुभावरूपा एव भवन्ति। स्थिरतया वर्त्तमाने रत्यादौ विभावानुभावापेक्षया रसानुगुण्येन रसरूपतया सङ्गच्छमाना बुद्बुदवत् झटिति प्रतीयमानत्वेन प्रादुर्भूताः विलम्बप्रतीतिकत्वेन तिरोभूताश्च निर्व्वेदादयस्त्रयस्त्रिंशद्भेदाः व्यभिचारिण उच्यन्ते। एकस्मिन् रसे स्थायिनोऽपि भावस्य रसान्तरे व्यभिचारित्वम् ; तद्यथा,—वीरशृङ्गारयोर्हासः, वीरे क्रोधः, शान्ते जुगुप्सा रसविशेषे स्थायिन्यपि व्यभिचारित्वमापद्यते।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तथा च हासादीनां स्थायित्वं व्यभिचारित्वञ्च तत्तद्रसेषु नियतावश्यकत्वानावश्यकत्वाभ्यां बोध्यम् । विरुद्धाविरुद्धभावैः कथमपि तिरोधातुमशक्यः, आत्मनि संस्कारात्मना वर्त्तमानः, अन्तःकरणवृत्तिरूपः रत्यादिः भावः स्थायीति कथ्यते । स च रति-हास-शोक-क्रोध-उत्साह-भय-जुगुप्सा विस्मय-शमभेदेन नवविधः यथाक्रमं शृङ्गारादिषु बोध्यः । एवञ्च शृङ्गार-हास्य-करुण-रौद्र-वीर-भयानक-बीभत्स-अद्भुत-शान्तभेदान्नवविधो रसः; मुनीन्द्रमते तु वत्सलोऽप्यधिको रस इति दशविधः । तत्र दशविधेषु रसेषु प्रधानभूतः सम्भोगेच्छायाः समुद्बोधेन जनितः, परोढ़ा-अननुरागिणी-वेश्यान्यनायिकालम्बनकः, दक्षिणादिनायकः, चन्द्राद्युद्दीपनकः, भ्रूक्षेपाद्यनुभावकः, रतिस्थायिको रसः शृङ्गारः ।

स च प्रथमतो विप्रलम्भसम्भोगभेदात् द्विविधः; तत्र विप्रलम्भः पुनः,—पूर्व्वराग-मान प्रवास-करुणात्मकत्वेन चतुर्व्विधः । पूर्व्वरागेऽपि,—अभिलाष-चिन्ता-स्मृति-गुणकथन-उद्वेग-सम्प्रलाप-उन्माद-व्याधि-जड़ता-मृतिरूपा दश कामकृता दशाः भवन्ति । रसविच्छेदकारितया मरणरूपेयं दशमदशा प्रायेण न वर्णनीया । यत्र तु मरणानन्तरमेव पुनः प्रत्युज्जीवनं वर्णनीयं, तत्र मरणवर्णने न दोषः । तत्र प्रथमतो नायिकाया रागमुक्त्वा नायकस्य रागः पश्चात् वाच्यः । असौ च नीली-कुसुम्भ-मञ्जिष्ठा-भेदेन त्रिधा भवति । मानोऽपि—प्रणयेर्ष्याजन्यत्वेन द्विधा भवति । प्रवासस्तु—कार्य्यशापादिजन्यः स्त्रीपुंसयोः भिन्नदेशवृत्तित्वरूपः । तत्र च अङ्गमालिन्य-एकवेणीधरशिरस्त्वाद्यवस्था जायन्ते । करुणः खलु,—नायिकानायकयोरेकतरस्मिन् लोकान्तरिते पुनर्लाभसम्भावनायां यदा तयोरेकः शोकाकुलो भवति, तदा जायते; इत्थञ्च पूर्व्वरागादिरूपतया विप्रलम्भाख्यः शृङ्गारः चतुर्विधः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

परस्परमनुरक्तौ विलासिनौ यत्रालिङ्गनचुम्बनादिकं कुरुतः, स एव सम्भोगशृङ्गारः। स च चुम्बनपरिरम्भणाद्यसङ्ख्यभेदेन सङ्ख्यातुमशक्यतया एकविधोऽपि पूर्व्वरागाद्यनन्तरजातत्वेन चतुर्विधो भवतीति समुदायेनाष्टविधः शृङ्गारः।

विकृताकारवेशाद्यालम्बनकः, वैकृताद्युद्दीपितः, वदनस्मेरताद्यनुभावितः, निद्रादिव्यभिचारिभावकः, हासस्थायिभावको रसः हास्यः। स च स्मित-हसित-विहसित-अवहसित-अपहसित-अतिहसितभेदात् षड्विधः।

शोकस्थायिभावकः, मृताद्यालम्बनकः, तद्गुणाद्युद्दीपितः, दैवनिन्दारोदनाद्यनुभावकः, दैन्यादिसञ्चारिभावकः, जड़तोन्मादादिव्यभिचारिभावको रसः करुणः। अयञ्च शोकस्थायिभावकतया रतिस्थायिभावकाद् विप्रलम्भाख्यशृङ्गारात् भिद्यते।

द्विषदालम्बनकः, तदपकारमुष्टिप्रहाराद्युद्दीपनकः, भ्रूविभङ्गाद्यनुभावकः, गर्व्वादिसञ्चारितः, रोमहर्षादिव्यभिचारिभावकः, क्रोधस्थायिभावको रौद्रः। अस्य च युद्धवीरात् भेदेन रक्तास्यनेत्रता कारणतामापद्यते।

विजेतव्याद्यालम्बनकः, तदीयचेष्टाद्युद्दीपनविभावकः, सहायान्वेषणाद्यनुभावकः, धृत्यादिसञ्चारिभावकः, उत्साहस्थायिभावको रसः वीरः। स च दानवीर-धर्म्मवीर-युद्धवीर-दयावीरभेदात् चतुर्विधः।

भीषकाकृतिपुरुषाद्यालम्बनकः, तदीय-विकटकर्म्माद्युद्दीपनकः, वैवर्ण्यपलायनाद्यनुभावितः, जड़तादिसञ्चारिभावकः, भयस्थायिभावको रसः भयानकः।

दुर्गन्धमांसरुधिराद्यालम्बनकः, कृमिपाताद्युद्दीपनकः, निष्ठीवननेत्रसङ्कोचनाद्यनुभावकः, मोहाऽपस्मारादिव्यभिचारिभावकश्च, जुगुप्सास्थायिभावकः बीभत्सः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विस्मयजनकवस्तु-जनाद्यालम्बनकः, तदीयगुणमहिम-लोकातिवर्त्तिकर्म्माद्युद्दीपितः, स्तम्भस्वेदाद्यनुभावितः, हर्षादि-सञ्चारिभावकः, विस्मयस्थायिभावकः अद्भुतो रसः ।

चयित्वज्ञानजन्याशेषवस्तुनिःसारताऽवबोध-परमात्मस्वरू-पाद्यालम्बनकः, पुण्याश्रम-तीर्थाद्युद्दीपनकः, रोमाञ्चाद्यनु-भावकः, निर्व्वेदादिव्यभिचारिभावकः, शमस्थायिभावको रसः शान्तो नाम ।

दयावीर-धर्म्मवीरादौ हि सर्व्वथा अहङ्कारोपशमो न दृश्यते, शान्तस्य तु सर्व्वाकारेणैवाहङ्काररराहित्यैकरूपत्वादित्यनयोः परस्परं भेदः । न चेद्दृशशान्तस्य मोक्षदशायामेव सम्भवात् तदानीं सञ्चार्य्यादेश्चासम्भवात्, कथं रसत्वम् ? इति शङ्कनीयम् ; युक्तवियुक्तदशायामवस्थितः यो हि शमः तादृशस्यैव शमस्य रस-रूपेण उत्पत्तेः, तत्र सञ्चार्य्यादेरवस्थाने विरोधाभावात् ।

स्फुटचमत्कारातिशयव्यञ्जकत्वादस्य वात्सल्यस्य रसान्तरात् पृथक्त्वमङ्गीक्रियते, तथा हि,—स्निग्धजनपुत्राद्यालम्बनकः, तदीयचेष्टाद्युद्दीपनविभावकः, आलिङ्गनाङ्गस्पर्शाद्यनुभावकः, हर्षगर्व्वादिव्यभिचारिभावकः, वत्सलतास्नेहस्थायिभावकः, मुनीन्द्रसम्मतः रसो वत्सलता नाम ।

एतेष्वपि रसेषु कैश्चित् सार्द्धं कस्यचित् विरोधो दृश्यते ; तथा हि,—करुण-वीभत्स-रौद्र-वीर-भयानकैः शृङ्गारस्य, भयानक-करुणाभ्यां हास्यस्य, हास्य-शृङ्गाराभ्यां करुणस्य, हास्य-शृङ्गार-भयानकैः रौद्रस्य, शान्त-भयानकाभ्यां वीरस्य, शृङ्गार-वीर-रौद्र-हास्य-शान्तैः भयानकस्य, वीर-शृङ्गार-रौद्र-हास्य-भयानकैः शान्तस्य, तथा शृङ्गारेण बीभत्सस्य च विरोधो दृश्यते ।

एषु केनचित् कस्यचित् विरोधे त्रिधा व्यवस्था भवति ; कयोश्चिदालम्बनैक्येन, कयोश्चिद् वा अव्यवधानेनेति । तथा हि,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

—शृङ्गारः वीरेण, सम्भोगो हास्य-रौद्र-बीभत्सैः, विप्रलम्भः, वीर-करुण-रौद्र-बीभत्स-भयानकैरालम्बनानामैक्येन विरुध्यते; अन्यत्र तु अविरोधः। वीर-भयानकौ च परस्परमालम्बनैक्येनाश्रयैक्येन च विरुध्येते। शान्तशृङ्गारावव्यवधानेनालम्बनैक्येन च विरुध्येते। तदन्येन चाविरोध एव। अद्भुतरौद्राभ्यां वीरः, अद्भुतेन शृङ्गारः, बीभत्सेन च भयानकः, त्रिधाऽपि न विरुध्यते। एवं रस-भाव-रसाभास-भावाभास-भावप्रशम-भावोदय-भावसन्धि-भावशवलताः, एताः सर्व्वा अपि रजस्तमोलेशविनिर्म्मुक्तमनसः समुद्रेककरत्वात् रसपदप्रतिपाद्या एव, भावादिषु तु रसनधर्म्म-योगित्वेन रसत्वमुपचरितम्।

तस्मिंश्च आपाततः प्राधान्येन अभिव्यक्ता निर्व्वेदादयः सञ्चारिणः, देवमुन्यादिविषयोऽनुरागः, किञ्चिदाभासमाना विभावादिभिरपरिपुष्टतया रसरूपतामनापद्यमानाश्च स्थायिनो रत्यादयः भावाः इत्युच्यन्ते।

रसभाववदाभासते इति व्युत्पत्त्या, रसगतभावगतदोष एव, रसभावयोरनौचित्यप्रवृत्तत्वे तदाभासः कथ्यते। विरुद्ध-कारणोन्मेषात् भावस्य नाशः भावप्रशमः। स च उत्पत्ति-कालावच्छिन्न एव। कारणयोगाच्च भावस्य स्फुटतयाऽऽवि-र्भावः भावोदयः। भावसन्धिः,—सन्धिः, अन्योऽन्यानभिभूतयो-रन्योऽन्याभिभावनयोग्ययोः सामानाधिकरण्यं, तच्च एकदेश-वृत्तित्वविशिष्टैककालवृत्तित्वरूपम्।

बाध्यबाधकभावापन्नानां उदासीनानां वा भावानामेकत्र व्यामिश्रणं भावशवलता। बाध्यत्वं हि विरोधिकारणसामग्री-व्याहतफलकत्वं, बाधकत्वञ्च विरोधि, तथा च,—अन्योऽन्य-विरोधिकारणकूटानां समवहितौ सत्यां परस्परफलानुत्पादा-नुत्पादकत्वरूपं तदुभयं वेदितव्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र रसाभासप्रयोजकानौचित्यन्तु, शृङ्गारे रतेरुपनायक-गुर्व्वादिपत्नी-बहुनायकगतत्वे, तथा शृङ्गारस्याधमपात्रतिर्य्यगादि-निष्ठत्वे, रौद्रे गुर्व्वादिगतकोपे, शान्ते हीननिष्ठे, हास्ये गुर्व्वाद्यालम्बने, वीरे ब्रह्मबधाद्युत्साहे, अधमपात्रगते च, भयानके च उत्तमपात्रगतत्वे बोध्यम्। एवं जातिदेशकाल-वर्णाश्रमवयोऽवस्थाप्रकृतिव्यवहारादेरप्यनौचित्यं स्वयमूहनीय-मिति तृतीयपरिच्छेदसङ्क्षेपः।

## चतुर्थपरिच्छेदे—

तच्च काव्यं ध्वनिगुणीभूतव्यङ्ग्यभेदेन प्रथमतो द्विविधं भवति। तत्रापि व्यञ्जनाप्रतिपाद्यार्थस्य वाच्यार्थादधिकचम-त्कारजनकत्वेन उत्तमकाव्यत्वम्। व्यङ्ग्यार्थस्य वाच्यार्थापेक्षया अचमत्कारित्वेन, वाच्यार्थसमानचमत्कारजनकत्वेन तन्न्यून-चमत्कारजनकत्वेन वा गुणीभूतव्यङ्ग्यकाव्यत्वम्।

लक्षणा-अभिधामूलकत्वेन ध्वनेर्द्वौ भेदौ। तत्र लक्षणा-मूलस्तु अविवक्षितवाच्यनामा, वाच्यार्थस्य अर्थान्तरसङ्क्रमणे-नात्यन्ततिरस्कारेण च बाधितस्वरूपत्वाल्लक्षणामूलत्वं, तेन च वाच्यार्थस्याविवक्षितत्वञ्च भवतीति नामबीजम्।

द्वितीयस्त्वभिधामूलो ध्वनिः विवक्षितान्यपरवाच्यनामा, विवक्षितम् अन्यपरं—व्यङ्ग्यनिष्ठं, वाच्यं—वाच्यार्थो यत्र इति व्युत्पत्त्यर्थः।

तत्राविवक्षितवाच्यध्वनेरपि वाच्यस्यार्थान्तरसङ्क्रमितत्वेना-त्यन्ततिरस्कृतत्वेन च भेदद्वयं सम्भवति। यत्र प्रकृतान्वये स्वयमनुपयुज्यमानः मुख्योऽर्थः अपरस्मिन्नर्थे परिणमति, तत्र उपादानलक्षणया मुख्यार्थस्यार्थान्तरसङ्क्रमितत्वादर्थान्तरसङ्क्र-मितवाच्यत्वम्; यत्र तु स्वार्थं सर्व्वथा परित्यजन् लक्षणलक्ष-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

णया अर्थान्तरे परिणमति, तत्र मुख्यार्थस्यात्यन्ततिरस्कृतत्वाद-त्यन्ततिरस्कृतवाच्यत्वम्।

विवक्षितान्यपरवाच्यध्वनेरपि असंलक्ष्यक्रमव्यङ्ग्य-संलक्ष्यक्रम-व्यङ्ग्यनामानौ द्वौ भेदौ। स्फुटे प्रकरणे झटिति प्रतीतेषु विभा-वादिषु सहृदयेन प्रमात्रा यत्र सूक्ष्मेणैकैककालेन एते प्रतीयन्ते, इति तेषां हेतुहेतुमतोः पौर्व्वापर्य्यक्रमं लक्षयितुं सम्यक् न शक्यतयाऽसौ असंलक्ष्यक्रमत्वेन व्यपदिश्यते।

यत्र तु प्रकरणं विचारवेद्यं, विभावादयश्च क्रमेण उन्नेयाः, तत्र सामग्रीविलम्बाधीनं चमत्कृतेर्मान्थर्य्यम्, इति संलक्ष्यक्रम-व्यङ्ग्यो नाम। तस्य च संलक्ष्यक्रमस्य शब्दार्थ-तदुभयशक्त्युद्भव-त्वेन त्रिधात्वम्। शब्दशक्त्या यत्रार्थान्तरं प्रकाशते, स शब्द-शक्त्युद्भवो ध्वनिः, स च वस्त्वलङ्काररूपत्वेन द्विधा, वस्तु-मात्रप्रतीतावेकः, अलङ्कारप्रतीतावपरः। अर्थशक्त्युद्भवस्य अर्थस्य वस्त्वलङ्काररूपत्वेन द्वैविध्यात्, पुनस्तयोरपि स्वतःसम्भवि-कवि-प्रौढ़ोक्तिसिद्ध-कविनिबद्धप्रौढ़ोक्तिसिद्धत्वेन त्रैविध्यात् षट्प्रकारः अर्थः, तथाविधैः षड्भिरर्थैः वस्तुमात्रव्यङ्ग्यत्वे षड्विधः, अल-ङ्कारव्यङ्ग्यत्वे च षट् इति मिलित्वा द्वादशप्रकारः।

तत्र न केवलं भणितिवशेन समुत्पन्नः, औचित्यात् वहिरपि सम्भाव्यमानसद्भावः अर्थः स्वतःसम्भवी, लोकप्रसिद्ध इत्यर्थः। "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि" इति न्यायबलेन वहिरसन्नपि वक्तृप्रतिभामात्रेण तथा परिकल्पितः प्रौढ़ोक्तिसिद्धः। कविनिबद्धप्रौढ़ोक्तिसिद्धस्य— कविनिबद्धनायकादिवक्तृप्रभृतिभिः तथात्वेन कल्पितः। षण्णामेषां पुनः वस्त्वलङ्कारयोर्व्यङ्ग्यत्वेन द्वैविध्येन द्वादशत्वसिद्धिरिति निष्कर्षः।

यत्र शब्दानामर्थानाञ्च नैकजातीयप्राचुर्य्यम्, अपि तु साम्यमेव, तत्र शब्दार्थोभयशक्त्युद्भवो ध्वनिः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ततश्च ध्वनेरष्टादशभेदाः,—अर्थान्तरसङ्क्रमितवाच्य-अत्यन्ततिरस्कृतवाच्यौ द्वौ, असंलक्ष्यक्रमव्यङ्ग्यश्चैकः, शब्दशक्त्युद्भवौ वस्त्वलङ्काररूपतया द्वौ; अर्थशक्त्युद्भवाः,—स्वतःसम्भवि-कविप्रौढ़ोक्तिसिद्ध-कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धैस्त्रिविधैर्वस्तुरूपार्थैः वस्तुव्यज्यमानत्वे त्रयः, अलङ्कारव्यज्यमानत्वे च त्रयः, एवमुक्तरूपैस्त्रिविधैरलङ्काररूपैरर्थैः वस्तुव्यङ्ग्यत्वे त्रयः, अलङ्कारव्यङ्ग्यत्वे च त्रय इति द्वादश; शब्दार्थोभयशक्त्युद्भवश्च एकः, इत्यष्टादश। तदेवं ध्वनेरष्टादशसु भेदेषु मध्ये शब्दार्थोभयशक्त्युत्थो ध्वनिर्वाक्यमात्रे भवन्नेकः, अन्ये पुनः सप्तदश ध्वनयः पदे वाक्ये च, इति चतुस्त्रिंशत्, मिलनेन पञ्चत्रिंशत् भेदाः।

अर्थशक्त्युद्भवस्य द्वादशभेदात्मकस्य ध्वनेः प्रबन्धगतत्वेन च पुनर्द्वादशविधत्वम्। असंलक्ष्यक्रमध्वनेरपि पदांश-वर्ण-रचना-प्रबन्धप्रकाश्यत्वेन चतुर्व्विधत्वम्, इति मिलित्वा षोड़श मिलनेन च एकपञ्चाशद्विधो ध्वनिरिति शुद्धो भेदः। शुद्धभेदैरेकपञ्चाशता च योजनेन बहवो भवन्ति भेदाः; प्रथमस्य सजातीयेनैकेन, विजातीयैः पञ्चाशता च संसृष्टौ एकपञ्चाशत्त्वम्; एवं द्वितीयस्य सजातीयेनैकेन विजातीयैरेकोनपञ्चाशता च संसृष्टौ पञ्चाशत्त्वम्; तथा तृतीयस्य सजातीयेनैकेन विजातीयैरष्टचत्वारिंशता च संसृष्टौ एकोनपञ्चाशत्त्वम्। चतुर्थस्य सजातीयेनैकेन विजातीयैः सप्तचत्वारिंशता च संसृष्टौ अष्टचत्वारिंशत्त्वम्। एवमपरेषामपि स्वयमूहनीयो भेदः। ( अर्थात् अर्थान्तरसङ्क्रमितवाच्यध्वनेः तत्सजातीयेनार्थान्तरसङ्क्रमितवाच्यध्वनिना संसृष्टौ एकः भेदः, अपरैः अत्यन्ततिरस्कृतवाच्यादिभिः पञ्चाशता विजातीयैः ध्वनिभिः संसृष्टौ पञ्चाशत् भेदः, अत एकपञ्चाशत्त्वम् ) एवं क्रमेण भेदवतां ध्वनीनां सङ्ख्यासमष्टिसंयोजने षड़्विंशत्यधिकत्रयोदशशतसङ्ख्या

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

(१३२६) जायन्ते, संसृष्टिसङ्कराणां चतुर्व्विधतया तस्य चतुर्भिर्गुणने त्रिशतचतुरधिकपञ्चसहस्रसङ्ख्या (५३०४) भवन्ति, अतः संसृष्टि-त्रिविधसङ्करयोरेतावन्तो भेदाः। तैः सह शुद्धानाम् एकपञ्चाशतः मेलने च पञ्चपञ्चाशदधिकत्रिशतोत्तरपञ्चसहस्रसङ्ख्या (५३५५) भवन्ति। एते एव ध्वनिभेदाः।

शुद्धाः,——— ५१ *

मिश्राः,——५३०४

समष्टिः,—५३५५

इतराङ्ग-काक्वाक्षिप्त-वाच्यसिद्ध-सन्दिग्धप्राधान्य-तुल्यप्राधान्य-अस्फुट-अगूढ़-असुन्दरभेदादष्टविधं गुणीभूतव्यङ्ग्यम्। तत्र,—

१। कुत्रचित् स्वेतरस्य रसादेरङ्गं रसान्तरमन्यविषयिकायाः रत्यादेर्वाङ्गं रसान्तरमिति, कुत्रचिद्वा वाच्यं साद्दश्यं वाक्यार्थान्वयोपपादकतया अङ्गभूतं वाक्यार्थस्येति रीत्या इतराङ्गम्।

२। स्वरविशेषेण झटिति वाच्यवत् प्रतीयमानं काक्वाक्षिप्तम्।

३। आपाततः प्रतीतस्य वाच्यस्य प्रतिसन्धानानुपपत्तिबाधकं वाच्यसिद्धत्वम्।

४। वाच्यव्यङ्ग्ययोः संशयितत्वे संशयप्राधान्ये वा सन्दिग्धप्राधान्यम्।

५। वाच्यव्यङ्ग्ययोः समानबलत्वे तुल्यप्राधान्यम्।

६। सहृदयैरपि झटित्यबोध्यम् अस्फुटम्।

७। स्फुटतया वाच्यवत् सर्व्वजनवेद्यम् अगूढ़म्।

८। चमत्कारिताशून्यम् असुन्दरम्।

* एतेषां व्यङ्ग्यस्य शुद्धभेदानां नामनिर्द्देशस्तु एकविंशत्यधिकत्रिशतपृष्ठतः प्रभृति तत्परवर्त्तिपृष्ठं यावत् द्रष्टव्यः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत्यष्टौ (८) गुणीभूतव्यङ्ग्यस्य भेदाः, एतेषान्तु पूर्व्वोक्त-पञ्चपञ्चाशदधिकत्रिशतोत्तरपञ्चसहस्र-भेद-भिन्नैर्ध्वनिभिर्योजने; त्रिषष्ठ्यधिकत्रिशतोत्तरपञ्चसहस्रभेदाः (५३६३) जायन्ते व्यङ्ग्यस्य; तद्वाच्चकत्वेन च काव्यस्यापि तावन्त एव भेदाः ।

## पञ्चमपरिच्छेदे—

किं नाम व्यङ्ग्यार्थबोधनसाधनीभूतायाः नवीनैर्वाङ्गी-कृतायाः अभिनवायाः व्यञ्जनाख्यवृत्तेरङ्गीकरणेन ? इति आशङ्कामपनेतुं प्रमाणादिना तस्याः अङ्गीकरणप्रयोजनं प्रति-पादयति । अभिधायां स्वप्रतिपाद्यार्थबोधनानन्तरं विरतायां, स्वार्थबोधनेन लक्षणायाञ्च विश्रान्तायां, तात्पर्य्याख्यायाञ्च वृत्तौ अन्वयबोधमात्रेण विरतायां, न तासां व्यङ्ग्यवस्त्वलङ्काररसादि-बोधने योग्यत्वम्; न पुनः रसादिः सङ्केतलभ्यः, काव्यात्म-भूतस्य स्वप्रकाशानन्दरूपस्य रसस्य "रसः" इति स्वशब्देनाप्य-भिधानं न सम्भवति, तथात्वे दोषापातात्; विभावाद्यभि-धानेनैव तत्सिद्धिरिति च न, तस्य विभावाद्यनन्तरभावित्वात् विभावादिरूपत्वानङ्गीकाराद्वा । बुद्धिर्यथा एकमर्थं विषयी-कृत्य नापरं विषयीकर्त्तुं शक्नोति, ज्ञानद्वयस्य यौगपद्यानङ्गी-कारात्; यथा वा पचनादिरूपा क्रिया गमनादिरूपं नान्यत् कर्म्म निष्पादयितुं शक्नोति, तथा एकः शब्दः एकमर्थं बोधयितु-मेव क्षमः, सकृदुच्चरितः शब्दः सकृदर्थं गमयतीत्यनुशासनात्, इति पुनरर्थप्रत्यायनशक्त्यभावाच्च न रसादिव्यङ्ग्यबोधने तासां योग्यता ।

किञ्च, पदार्थमात्रबोधरसिकैर्वैयाकरणैरन्यैरपि वाच्यार्थः ज्ञेयः, व्यङ्ग्यार्थस्तु सहृदयैकसंवेद्यः, इति बोद्धृभेदाच्च व्यङ्ग्यो नाभिधेयः । एकस्मिन् वाच्ये वक्तृप्रभृतिभेदाद् बहुव्यङ्ग्यार्थ-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रतीतिसम्भवेन सङ्ख्याभेदात्, तथा क्वचिन्निषेधरूपे वाच्ये विधिव्यङ्ग्यसम्भवः, क्वचिच्च विधिरूपे निषेधरूप इति स्वरूपभेददर्शनाच्च; तथा वाच्यार्थबोधे शब्दोच्चारणमात्रेणैवार्थप्रतीतेः, शब्दानामेव निमित्तत्वं, व्यङ्ग्यार्थबोधस्तु तथाविधप्रतिभानैर्मल्यादेरिति निमित्तभेदात् वाच्यार्थे बोधमात्रं, व्यङ्ग्यार्थे चित्तोल्लासादिकमिति कार्य्यभेदाच्च; सुखचमत्कारहीनतया वाच्यार्थप्रतीतिः, तदुभयवत्तया च व्यङ्ग्यार्थप्रतीतिरिति प्रतीतिभेदात्, वाच्यस्य प्रथमं प्रतीतिः, व्यङ्ग्यस्य वाच्यार्थबोधानन्तरमिति पौर्व्वापर्य्यभावभेदेन कालभेदाच्च, वाच्यस्य शब्दमात्राश्रयत्वं, व्यङ्ग्यस्य तु शब्दप्रकृतिप्रत्ययोपसर्गतदर्थवर्णसङ्घटनाश्रयत्वेनाश्रयभेदात्, एकस्मिन्नेव वाच्यार्थबोधे उद्देश्य एकः, व्यङ्ग्यार्थबोधे चान्य इति विषयभेदाच्च भिन्नोऽयं व्यङ्ग्यार्थः वाच्यार्थात्।

अपि च, अभिधा लक्षणा च प्रमाणान्तरसिद्धमेव वस्तु बोधयतः, इति नियमात्, रसादेस्तु बोधात् पूर्व्वं प्रमाणान्तरस्यासिद्धतया प्रागविद्यमानत्वात् न ताभ्यां रसादिबोधसम्भवः, "गङ्गायां घोषः" इत्यादौ लक्षणास्थलेऽप्युपात्तशब्दार्थानामन्वयबोधः भवितुमिच्छन्नेवानुपपत्त्या बाध्यते, ततो लक्षणायाः प्रवेशः, इह तु प्रतीतिकाले एव जायमानस्य अनुरणनात्मकव्यापारस्य पूर्व्वं प्रमाणासिद्धत्वात् व्यञ्जनैवैका गतिरिति समाधानम्। लक्षणाप्रयोजनस्यापि व्यङ्ग्यत्वमेवेति न लक्षणाबोध्यत्वं, तथात्वे प्रयोजनान्तरकल्पनेन अनवस्थापातप्रसङ्गः स्यात्। न च प्रयोजनविशिष्टे एव तीरादौ लक्षणेति वाच्यं, विषयप्रयोजनयोर्युगपत् प्रतीत्यसम्भवात्, न हि कारणज्ञानं कार्य्यज्ञानञ्च समकाले सम्भवतः, ज्ञानद्वयस्य यौगपद्यानङ्गीकारात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नाट्ये रामत्वेन वाधकालिकेच्छाप्रयोज्यज्ञानरूपाहार्य्यज्ञानविषये नटे, काव्ये तु रामे एव विभावादिभिः रत्याद्यनुमानं, ततस्तदनुमानोद्बोधितया सामाजिकानां वासनारूपप्रत्यासत्त्या साक्षात्कृतो रामादिरत्यादिः रसः, इति रसादेरनुमानप्रमाणमूलकसाक्षात्कारलभ्यत्वादेव अङ्गीक्रियतां, तदपि न ; यथा "पर्व्वतो वह्निमान् धूमात्" इत्यत्र वह्निव्याप्यधूमवान् पर्व्वत इति प्रतीतिः, तथा "शून्यं वासगृहम्" इत्यादि यत् काव्यं, तत्, शृङ्गाररसवत् तत्तद्विभावादिमत्त्वात्, इत्यनुमितौ शृङ्गाररसव्याप्यविभावादिमत् काव्यमिति परामर्शस्तु यद्यपि सुग्रह एव, तथाऽपि, एवंविधा परामर्शरूपा प्रतीतिरस्माकमास्वाद्यत्वेन नाभिमता, प्रोक्तपरामर्शस्य प्रत्यक्षस्मरणाद्यात्मकत्वरूपत्वमनुमितिवादिभिरङ्गीकृतमित्येषा नास्मन्मतसिद्धा, विभावादिप्रत्ययसत्त्वेऽपि अस्मदभीप्सितस्वप्रकाशानन्दानुत्पत्तेस्तदर्शनादयं हेतुर्व्यभिचारीति स्वाभीप्सितबोधौपायिकहेतोः पक्षधर्म्मतानुपपत्तेः ; ननु व्याप्तिः,—अव्यभिचरितत्वं, पक्षधर्म्मता—पक्षे विद्यमानता ; यथा "पर्व्वता वह्निमान् धूमात्" इत्यत्र यत्र यत्र धूमः, तत्र तत्र वह्निरिति अन्वयसहचारज्ञानजन्या, पक्षे पर्व्वते, वह्नेः व्याप्तिधीः भवति, पर्व्वतपक्षकवह्निसाध्यकव्याप्तिज्ञानं जायते, तथा अत्रापि "अहं तादृग्विभावाद्युपस्थानकरतिव्याप्यरामाद्याविर्भाववान्" इति सामाजिकानां व्याप्तिविशिष्टपक्षधर्म्मताग्रहे "अहं रामः, सीताविषयकरतिमान्" इत्येवं प्रतीतौ जायमानायाम् "अहं रसवान्" इति तुल्याकारिकैका प्रतीतिः जायते, ततश्च, पक्षे रसिकजने रसस्य विद्यमानताऽस्त्येव, तत् कथं पक्षधर्म्मताऽनुपपत्तिः ? इत्यपि पक्षः न साधीयान्, अनुमितौ तु, येन हेतुना यत् साध्यं साध्यते, तदेव साध्यमवश्यमेव यदि तेन हेतुना स्वाभिप्रेतसाध्यरूपतया न साध्यते, तदा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तस्य हेतोराभासत्वं स्वीक्रियते, नियतस्वाभीप्सितसाध्यसाधक-अव्यभिचरित-असिद्ध-अविरुद्ध-असत्प्रतिपक्षित-अबाधितहेतुका ह्यनुमितिः, इह तु साधयितुमिष्टात् स्वप्रकाशरूपात् सान्द्रानन्दमयादर्थात् भिन्नस्य रसादिप्रतीतिरूपार्थान्तरस्यास्मदनभीप्सितस्यानुमापनात् हेतोर्दुष्टतैव। न वा विशिष्टतादृशाभीप्सितार्थबोधौपयिकानुकूलहेतुरत्र वाच्यः, प्रतिपाद्यावस्थासहकृततादृशनिर्भरानन्दबोधजननानुकूलसाधनस्य शब्देनोपस्थापनासम्भवात्, प्रमाणान्तरस्यासम्भवाच्च। ततः प्रोक्तहेतोराभासत्वेन व्याप्तिग्रहनिरपेक्षायाः अर्थापत्तेर्विषय एव रसः भवतु, इत्यपि न, तस्याः पूर्व्वसिद्धज्ञानमूलकज्ञानमवलम्ब्य प्रवृत्तेः, नापि संस्कारजन्यत्वाद्रसादिबुद्धेः स्मृतित्वं, स्मृतौ तु, प्रत्यभिज्ञानरूपायां सोऽयमित्याकारकप्रतीतौ, साध्यं विना विद्यमानतया संस्कारजन्यज्ञानत्वरूपस्य हेतोर्दुष्टत्वमेव। तदेवमनुभवसिद्धस्य तत्तद्रसादिलक्षणार्थस्याशक्यापलापतया, तत्तच्छब्दाद्यन्वयव्यतिरेकतया अनुमानादिप्रमाणावेद्यतया, अभिधादिवृत्तित्रयाबोध्यतया च तुरीयवृत्तिरूपाया अस्या सिद्धिः। भेदाश्च पूर्व्वमेव दर्शिता इति दिक्।

## षष्ठपरिच्छेदे—

काव्यं तावत् ध्वनिगुणीभूतव्यङ्ग्यभेदेन द्विविधमिति चतुर्थाध्याये प्रथमं प्रदर्शितम्। तच्च पुनर्दृश्यश्रव्यत्वभेदेन द्विविधम्। तत्र नटैरङ्गादिभिरभिनीयमानं रामयुधिष्ठिरादिचरितात्मकं दर्शनश्रवणयोग्यं काव्यं दृश्यम्। तदपि मुखादौ चन्द्राद्यारोपवत् नटे रामादिस्वरूपारोपाद्रूपकनामकमुपरूपकसंज्ञकञ्च भवेत्। नटैरङ्ग वचन-वेशरचना-स्तम्भादिभिः रामयुधिष्ठिरादीनामवस्थाया अनुकरणमभिनयः इत्युच्यते, स च चतुर्व्विधः; अङ्गेन

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

निष्पन्नः,—आङ्गिकः, वचननिष्पन्नश्च—वाचिकः, वेशरचनाद्याहरणीयश्च—आहार्य्यः, सत्त्वोद्रेकाज्जनितः स्तम्भस्वेदादिरूपश्च—सात्त्विक इति ।

तत्र रूपकाणि नाटकादीनि दश—नाटकं,प्रकरणं, भाणः, व्यायोगः, समवकारः, डिमः, ईहामृगः, अङ्कः, वीथी, प्रहसनमिति च तेषां नामानि ।

उपरूपकाणि च नाटिकाद्यष्टादशभेदवन्ति भवन्ति ; तेषां नामानि यथा,—नाटिका, त्रोटकं, गोष्ठी, सट्टकं, नाट्यरासकं, प्रस्थानकम्, उल्लाप्यं, काव्यं, प्रेङ्खणं, रासकं, संलापकं, श्रीगदितं, शिल्पकं, विलासिका, दुर्म्मल्लिका, प्रकरणिका, हल्लीशः, भाणिका च इति ।

तत्र नाटकलक्षणं यथा,—यस्मिन् दृश्यकाव्ये वृत्तान्तः पुराणेतिहासादिप्रसिद्धः, वक्ष्यमाणमुखादिपञ्चसन्धिभिर्युक्तः, विलासादिगुणवान्, सुखदुःखादिसमुद्भूतनानारसपूर्णश्च भवति, अङ्काः पञ्चाऽन्यूनाः दशानधिकाश्च भवेयुः, यत्र च नायकः प्रसिद्धवंशीयः, राजर्षिः, धीरोदात्तादिलक्षणवान्, प्रतापी, दिव्यः, दिव्यादिव्यो वा, बहुगुणवान् भवेत्, तथा शृङ्गारवीररसयोरन्यतररसोऽङ्गी, अन्ये च रसाः अङ्गभूताः, निर्व्वहणाख्ये सन्धौ विस्मयकरं किमपि वर्णनीयं भवेत्, कार्य्यव्यापृताः पञ्च चत्वारो वा पुरुषाः प्रधानभूताः, रचनं क्रमेण अङ्कानां सूक्ष्मभूततया, केषाञ्चित् दैर्घ्येण ह्रस्वत्वेन वा गोपुच्छाग्रसमं, तत् नाटकमित्युच्यते ।

अङ्कलक्षणं—यत्र नायकस्याङ्कितं चरितं प्रत्यक्षवत् भासमानं भवेत्, यश्च रसभावसमुज्ज्वलः, स्फुटशब्दार्थः, विन्द्वादियुक्तः, तथा हास्योद्वेगादिजनकैः बहुभिः कार्य्यैरयुक्तः ; तत्र बीजस्य संहारो न कार्य्यः ; तथा नानाविधानसंयुक्तम्, अल्पपद्यञ्च तं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विदधीत, सन्ध्यादिकार्य्याणामविरोधेन अल्पदिननिर्व्वर्त्त्यकथया च युक्तः, त्रिभिः चतुर्भिर्वा पात्रैः युतः आसन्ननायकः यत्र निवेश्यः, सः अङ्क इति उच्यते। तत्राङ्के दूराह्वान-बध-युद्ध-राज्य-विप्लव-विवाह-भोजन-शापोत्सर्ग-मृत्यु-सुरतानां वर्णना न विधेया, यच्चान्यत् व्रीड़ाकरं दशनच्छेद्यादिकं, तत्, तथा नगराद्यवरोधनं, स्नानानुलेपनञ्च न वर्णनीयमेव। देवीपरिजनादीनाममात्य-बणिजाञ्च भावरसोद्भवैः प्रत्यक्षचरितैर्युक्तः, अवसाननिष्क्रान्त-निखिलपात्रश्च अङ्कः कर्त्तव्यः।

गर्भाङ्कलक्षणं—तत्रैव रङ्गद्वारप्रस्तावनादिसंयुक्तः, अङ्कमध्य-प्रविष्टः, बीजफलयुक्तः, अपरः अङ्क इव गर्भाङ्कः इत्युच्यते।

तत्र च नाटके—आदौ नटेषु सूत्रधारः पूर्व्वरङ्गं विदध्यात्, ततश्चापरः स्थापकाख्यः नटः सभापूजां, कवि-नामगोत्राभिधानं, नाटकनामकीर्त्तनञ्च विधाय प्रस्तावनया नाटकीयपात्रपदार्था-द्याक्षेपपुरःसरं रङ्गालयान्निष्क्राम्येत्। तत्रापि पूर्व्वरङ्गपदेन वर्णनीयपदार्थतः पूर्व्वं रङ्गविघ्नप्रशमनार्थं कुशीलवादिभिः क्रियमाणं कर्म्म उच्यते। तेषु प्रत्याहारादिकाङ्गभूयस्त्वेऽपि विघ्नोपशान्त्यर्थं नान्दी एव विधेया। सा च अष्टाभिर्द्वादशभिः पदैर्देवद्विजनृपादीनामाशीर्वचनसमन्वितस्तुतिरूपत्वेन नान्दी इति संज्ञिता।

यत्र नान्यस्ति रङ्गद्वारं नास्ति, तत्र तु तन्नतया सैव रङ्ग-द्वारम्; यत्र रङ्गद्वारमेवास्ति, न नान्दी, तत्र सा फलबलाद् मेया। यत्र त्वारम्भे बहवः श्लोकाः, तत्र श्लोकद्वयं नान्दी अपरञ्च रङ्गद्वारमित्यवधेयम्। इदानीन्तु पूर्व्वरङ्गस्य सम्यक् प्रयोगाभावात् एक एव सूत्रधारः सर्व्वं प्रयोजयतीति व्यवहारः एवं स च स्थापकाख्यो नटः दिव्यं वस्तु दिव्यो भूत्वा, मर्त्त्यं मर्त्त्यो भूत्वा, मिश्रञ्च दिव्यमर्त्त्ययोरन्यतरो भूत्वा सूचयेत्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तथा बीजं मुखं पात्रं वा सूचयेत् । इत्थं रङ्गप्रीतिजननानन्तरं भारतीवृत्त्याश्रयेण कश्चिद्दतुञ्च कीर्त्तयेत् ।

संस्कृतबहुलः, पुरुषप्रयोज्यः, वाक्यप्रधानो व्यापारः भारती वृत्तिः इत्युच्यते । प्ररोचना-वीथी-प्रहसन-आमुखभेदभिन्नानि तस्याश्च चत्वार्य्यङ्गानि । तत्रापि, प्रस्तुताभिनयेषु प्रशंसया श्रोतॄणां प्रवृत्त्युन्मुखीकरणं प्ररोचना । वीथीप्रहसने वक्ष्येते । ततश्च सूत्रधारसदृशः कश्चित् भारत्या वृत्त्या ऋतुं वर्णयित्वा रूपकादीनां कवेश्च नामादिकं सङ्कीर्त्तयेत्, ततः प्ररोचनया, वीथ्या, प्रहसनेन वा रङ्गं प्रसाद्य प्रस्तावनया वस्तु पात्रं वा समाक्षिप्य स निर्गच्छेत् इति दिक् ।

स्वकार्य्योत्थैः प्रस्तुतवृत्तोत्थापकैः वाक्यैः सूत्रधारेण सह नटीविदूषकादयः यत्र मिथः संलापं कुर्व्वन्ति, प्रस्तावनाऽपराभिधेयं तदेव आमुखमित्युच्यते । तच्च उद्घात्यक-कथोद्घात-प्रयोगातिशय-प्रवर्त्तक-अवलगितभेदेन पञ्चधा । अबोधिताभिप्रेतार्थकपदानां स्वाभीप्सितार्थबोधनार्थं यदपरैः स्वाभिप्रेतार्थमात्रप्रतिपादकपदैः अर्थान्तरे सङ्क्रमणं, स उद्घात्यकः । अत्रायमाशयः,—यत्र हि, पात्रं नटप्रयुक्तानि पदानि अप्रसिद्धतया तदभिप्रेतार्थं सम्यगनवबुध्यैव प्रयुक्तपदानामर्थं सम्यगवबोधयितुं स्वहृदयसंस्थितमर्थमाक्षिपत् स्वाभीप्सितार्थान्तरे सङ्क्रमय्य प्रविशति, स उद्घात्यक उच्यते इति । सूत्रधारवाक्य-तदभिधेयान्यतरनिमित्तकपात्रप्रवेशः कथोद्घातः । यदि एकत्र प्रयोगे अन्यः प्रयोगः प्रयुक्तः स्यात्, तेन च पात्रप्रवेशः भवेत्, तदा प्रयोगातिशयः । यत्र, प्रवृत्तकालाश्रयसूत्रधारकृतवर्णनामाश्रित्य पात्रप्रवेशः स्यात् तत्प्रवर्त्तकम् । यत्र, एकस्मिन् विषये सादृश्योद्भावनया पात्रप्रवेशरूपान्यकार्य्यप्रसाधनं भवेत्, तत् अवलगितम् । अत्र यथासम्भवं वक्ष्यमाणानि वीथ्यङ्गान्यपि योजनीयानि ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रस्तावनाऽन्ते इतिवृत्तरूपं वस्तु प्रयोजयेत्, तच्च वस्तु आधिकारिक-प्रासङ्गिकभेदात् द्विविधम्। कार्य्यस्य प्रधानफले प्रभुत्वम् अधिकारः, तस्य प्रभुः अधिकारी, अधिकारिणः इतिवृत्तम् आधिकारिकम् उच्यते। आधिकारिकेतिवृत्तस्य उपकरणनिमित्तभूतं प्रसङ्गेन निर्वृत्तं वस्तु प्रासङ्गिकम् उच्यते। एतस्मिंश्च चत्वारि पताकास्थानकानि यथायथं योज्यानि। यत्र अन्यस्मिन् प्रयोजने चिन्तिते तस्यार्थस्य सधर्मा अन्यार्थः अनभिसंहितपदार्थेन प्रयुज्यते, तत् पताकास्थानकं बोध्यम्। यत्र अतर्कितकारणेन अर्थसम्पत्तिः प्रयोजनान्तरापत्तिरूपा प्रीत्यनुकूलव्यापारवत्तया परमोपकारिणी भवेत्, तत् प्रथमं पताकास्थानम्। नानाविधरचनासमाश्रयवचनानां यत्र सातिशयश्लिष्टत्वं, तत् द्वितीयं पताकास्थानम्। यत्र फलरूपकार्य्यस्योपस्थापकम् अव्यक्तार्थं सम्बन्धयोग्येनाभिप्रायान्तरप्रयुक्तेन प्रत्युत्तरेणोपेतं विशेषनिश्चयप्राप्त्या सहितं वचनं, तत् तृतीयं पताकास्थानम्। यत्र काव्यप्रयोगार्हः सुसम्बन्धः अर्थद्वयवान् मुख्यफलार्थान्तरसूचकः वचनविन्यासः भवेत्, तत् चतुर्थं पताकास्थानम्।

अत्र नायकरसयोः प्रतिकूलं स्वरूपच्युतिकारकमितिवृत्तं परित्याज्यं, पुराणविरुद्धमपि तयोरनुकूलमादर्शभूतमितिवृत्तं स्वेच्छया कविना कल्पनीयम्। इह या कथा युद्धादिका अङ्के न दर्शनीया, सा यदि कवेरभिमता, तदा वाक्येन निर्वाह्या, न तदुपन्यासेन। संवत्सरसाध्या कथा तु दिनद्वयेन निर्वाह्या, अतिबहुला च कथा वक्ष्यमाणविष्कम्भकादिभिः सूचनीया। वत्सराधिककालसम्पाद्यं यत्, तत् वर्षान्यूनकालेन निर्वाह्यम्। एकदिननिर्वर्त्त्यस्य कथांशस्य वर्णनं दिनावसाने अङ्कविरामे विष्कम्भकादिभिः सम्पाद्यम्। विष्कम्भक-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रवेशक-चूलिका-अङ्कावतार अङ्कमुखाख्याः पञ्च अर्थोपक्षेपकाः अपि कार्य्याः ।

अङ्कादौ सङ्क्षेपेण अतीतानां भविष्यताञ्च कथांशानां सूचकः विष्कम्भकः ; एकेन मध्यमेन पात्रेण, द्वाभ्यां वा प्रयोजितश्चेत् स शुद्धः, नीच-मध्यमपात्रकल्पितश्चेत् सङ्कीर्णः । अस्य च प्रथमाङ्कादावपि सम्भवः, प्रवेशकस्य तु न तथेति भेदः । द्वयोरङ्कयोर्मध्ये प्राकृतया भाषया नीच-मध्यमपात्रप्रयोजितः पूर्व्वोक्तः कथांशश्चेत् स प्रवेशकः । नेपथ्यात्तया अर्थानां सूचनं चूलिका । अङ्कावसाने तदङ्कस्याङ्गभूतार्थसूचकरूपः पात्रैः सङ्क्षिप्य दर्शितः क्षुद्राङ्कः अङ्कावतारः । एकस्मिन्नङ्के निखिलाङ्कानां कार्य्यसूचनपुरःसरं बीजभूतविषयस्य यत्र सूचनं, तदङ्कमुखम् । एतेषां परस्परभेदाश्च लक्षणार्थसमालोचनया स्वयमेव बोध्याः । प्रथमाङ्के विष्कम्भकसन्निवेशस्य तु अयं विशेषः, यत् आमुखानन्तरं तदाकृष्टपात्रेण अपेक्षितं नीरसं विस्तरं वस्तु परित्यज्य सङ्क्षिप्य च तदभिधाय, तत्संसृष्टं सरसं वस्तु दर्शयितुं प्रयुज्यते कथांशः इति । पञ्चभिः अर्थोपक्षेपकैरपि नाटकीयप्रधाननायकस्य नायिकाया वा बधः न वाच्यः ; तत्तु रसे इतिवृत्तयोगः, इतिवृत्ते च रसयोगः यथा स्यात्, तथा रचयितव्यम् ; नैतयोः परस्परं विच्छेदः कार्य्यः ।

इह बीज-बिन्दु-पताका-प्रकरी-कार्य्यभेदेन पञ्चविधाः अर्थप्रकृतयः यथाविधि प्रयोज्याः । अर्थप्रकृतयस्तु प्रयोजनसिद्धिफलहेतवः । आदौ स्तोकमुत्पन्नं सत् क्रमेण बहुविधविस्तारवदवान्तरकार्य्यजनकं, फलप्रधानहेतुभूतञ्च बीजम् । अवान्तरकथाविच्छेदे अवान्तरार्थाच्छेदहेतुभूतः वाग्व्यापारैः बिन्दुः । निर्व्वहणपर्य्यन्तस्थायी, प्रधानस्योपकारकः, प्रसङ्गादागतः, परार्थं प्रयुज्यमानः कथांशः पताका । परप्रयोजनभूतस्य तत्फलञ्च

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

गर्भे, सन्धौ, विमर्षे वा समाप्तिर्भवेत्। एकदेशव्यापि प्रासङ्गिकं वृत्तं प्रकरी। अत्रापि नायकस्यैव फलं, न स्वस्येति बोध्यम्। यत्सिद्ध्यर्थम् उपाये प्रथमप्रवृत्तिः समाप्तिश्च, तथा यच्च आकाङ्क्षितं साधनीयञ्च, तत् कार्य्यम्।

तस्य च कार्य्यस्याङ्गभूताः अवस्थाः आरम्भ-यत्न-प्राप्त्याशा-नियताप्ति-फलागमभेदेन पञ्चविधाः। आभिः पञ्चविधाभिर-वस्थाभिर्योगात् इतिवृत्तस्य पञ्च भागाः यथासङ्ख्यं मुख-प्रतिमुख-गर्भ-विमर्ष-निर्व्वहणाख्याः पञ्च सन्धयः स्युः। तत्र मुख्यप्रयोजनवशात् अङ्गभूतानां कथांशानाम् अवान्तरार्थसम्ब-न्धात् सन्धिरित्याख्यायते। यत्र आरम्भे बहूनामर्थानां रसानाञ्च सम्भवः, सन्दर्भमूलकारणं बीजमेव अधिकृत्याभवत्, स मुख-सन्धिः; यत्र मुखसन्धिस्थितस्य बीजस्य ईषल्लक्ष्यः प्रकाशः, स प्रतिमुखसन्धिः।

प्रधानप्रयोजनस्य प्रधानोपाये किञ्चिल्लक्ष्यतया प्रकाशिते, यत्र पुनः पुनः क्वचित् तिरोभाववान्, क्वचिद्वा अनुसन्धानवान् सम्यक् प्रकाशः, स गर्भसन्धिः। यत्र गर्भसन्धिमपेक्ष्य प्रधान-फलोपायः प्रकाशितः, अभिसम्पातादिभिः सविघ्नश्च, स विमर्ष-सन्धिः। यत्र निजनिजस्थानोपक्षिप्ततया विकीर्णा मुखसन्ध्या-दयः बीजसंयुताः, इतिवृत्तभागाः एकप्रयोजनकत्वेन युज्यन्ते, तन्निर्व्वहणसन्धिः (उपसंहारः)।

तत्र मुखस्य सन्धेः द्वादशाङ्गानि—उपक्षेप-परिकर-परिन्यास-विलोभन-युक्ति-प्राप्ति-समाधान-विधान-परिभावना-उद्भेद-करण-भेद-नामानि।

प्रतिमुखस्य सन्धेः त्रयोदशाङ्गानि—विलास-परिसर्प-विधूतापन-नर्म्म-नर्म्मद्युति-प्रगमन-विरोध-पर्य्युपासन-पुष्प-वज्र-उपन्यास-वर्णसंहारभेदात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

गर्भसन्धेस्त्रयोदशाङ्गानि — अभूताहरण-मार्ग-रूप-उदाहरण-क्रम-सङ्ग्रह-अनुमान-प्रार्थना-क्षिप्ति-त्रोटक-अधिबल-उद्वेग-विद्रवनामकानि ।

विमर्शसन्धेरङ्गानि त्रयोदश — अपवाद-सम्फेट-व्यवसाय-द्रव-द्युति-शक्ति-प्रसङ्ग-खेद-प्रतिषेध-विरोधन-प्ररोचना-आदान-छादननामानि नाटके योज्यानि ।

तथा निर्व्वहणसन्धेरङ्गानि — सन्धि-विबोध-ग्रथन-निर्णय-परिभाषण-कृति-प्रसाद-आनन्द-समय-उपगूहन-भाषण-पूर्व्ववाक्य-काव्यसंहार-प्रशस्तिनामकानि चतुर्द्दश ज्ञेयानि ।

यद्यपि मुखस्य द्वादश, प्रतिमुखस्य त्रयोदश, गर्भविमर्षयोः प्रत्येकं त्रयोदश, निर्व्वहणस्य च चतुर्द्दश इति मिलित्वा पञ्चषष्टिः, तथाऽपि निर्व्वहणावयवप्रशस्तिमसन्यमानानां मते चतुःषष्टित्वमेव ; तथा प्रशस्तिं स्वीकुर्व्वतां, गर्भावयवस्वरूपायाः प्रार्थनाया अनङ्गीकारादपि चतुःषष्टिविधत्वमव्याहतमेव ।

एतेषां सन्ध्यङ्गानां निवेशनप्रयोजनं वाञ्छितार्थविधानम्, अलौकिकार्थप्राप्तिः, इतिवृत्तस्पष्टीकरणम्, अनुरागलाभः, प्रयोगस्य रहस्यार्थगोपनं, प्रकाश्यानां प्रकाशनमिति षड्विधम् । करचरणाद्यङ्गविहीनानां नराणां यथा कार्य्याक्षमत्वं, तथा मुखगर्भादिसन्धिरूपाङ्गशून्यानामपि रूपककाव्यानां प्रयोगायोग्यत्वम्, अतः अवश्यमेव एतेषां निवेशनमुचितम् ; रसाभिव्यक्तिमपेक्ष्यैव एषामङ्गानां सन्निवेशनं कार्य्यं, न तु शास्त्रस्थितिसम्पादनेच्छया अयोग्यावसरे एषां सन्निवेशः करणीयः इति ।

सर्व्वनाट्यस्य मातृवदुपजीव्यभूताः कौशिकी-सात्त्वती-आरभटी-भारतीनाम्न्यः चतस्रः वृत्तयो नाटके निवेशनीयाः ; तत्र मनोहरनेपथ्यवती, रमणीबहुला, प्रचुरनृत्यगीतोपशोभिता, शृङ्गाररसानुकूला, चारुविलासविशिष्टा, शृङ्गाराङ्गलक्षणाभि-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

व्यञ्जिका वा कौशिकी वृत्तिः शृङ्गारे रसे समाश्रयणीया ; अस्याश्च नर्म्म-नर्म्मस्फूर्ज्ज नर्म्मस्फोट नर्म्मगर्भाणि चत्वार्य्यङ्गानि।

सत्त्व-शौर्य्य दान-दया आर्ज्जवबहुला, विस्मयानन्दवती, अल्पशृङ्गारा, शोकरहिता च सात्त्वतीनाम्नी वृत्तिः वीरे रसे स्वीकार्य्या, अस्याश्च उत्थापक सङ्घात्य-संलाप-परिवर्त्तकाख्याश्चत्वारो भेदाः।

तथा मायेन्द्रजाल-युद्ध-क्रोधोद्भ्रान्तादिव्यापारानुकूला, वधबन्धौद्धत्यविधायिनी आरभटीनाम्नी वृत्तिः रौद्रबीभत्सयोः समुपेतव्या ; अस्याश्च वस्तूत्थापन-सम्फेट-सङ्क्षिप्ति-अवपातनाख्याः चत्वारः भेदाः।

संस्कृतबहुला वाक्प्रधानव्यापारवती भारतीनाम्नी वृत्तिः, तस्याश्च प्ररोचना-वीथी प्रहसन-आमुखानि चत्वार्य्यङ्गानि, तानि च पूर्व्वमुक्तानि। तत्र वीथ्यङ्गान्यपि उद्घात्यक-अवलगित प्रपञ्चत्रिगत-छल-वाक्केलि अधिबल-गण्ड-अवस्यन्दित-नालिकाऽसत्प्रलाप-व्याहार-मृदवरूपाणि त्रयोदश।

अथ नाट्योक्तयः,—पात्रान्तरैः श्रोतुमनर्ह्यं वस्तु स्वगतम्। पात्रान्तरादिसर्व्वजनश्रवणयोग्यं वचनं प्रकाशनामकं स्यात्। पराङ्मुखीभूय किञ्चिदपसृत्य अन्यगुप्तवस्तुप्रकाशनम् अपवारितम्। उत्थिताङ्गुलित्रयेण करेण जनानन्यानाच्छाद्य कथामध्ये यत् परस्परं गुह्यभाषणं तत् जनान्तिकम्। नाट्ये श्रोतृनटं विना श्रवणाभिनयं प्रदर्श्य अनुक्तमपि विषयं श्रुत्वेव किं ब्रवीषीति यत् प्रयुज्यते, तत् आकाशभाषितं कथ्यते। नाटके वेश्यानां दत्ता सिद्धा-सेनान्तं नाम कार्य्यं, वणिजां दत्तान्तबहुलानि नामानि दर्शयेत्। तथा चेटचेट्योश्च वसन्तादिषु वर्णनीयस्य कलहंसादिवस्तुनः नाम्ना नाम कार्य्यम्।

नाटकस्य रामाभ्युदयादिनामवत् सन्दर्भगर्भितार्थसूचक

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नाम कार्य्यम्। प्रकरणादौ तु मालतीमाधवादिवत् नायिका-नायकनाम्ना नाम कार्य्यम्। नाटिका-सट्टकादीनाञ्च रत्नावली-कर्पूरमञ्जर्य्यादिवत् नायिकानाम्ना नाम करणीयम्।

"गच्छामि" इत्यर्थे "साधयामि" इति प्रायशः दृश्यकाव्ये प्रयुज्यते। भृत्यैः राजा स्वामीति देवेति वा, नीचजनैः भट्टेति, राजर्षिभिः तथा विदूषकेण च वयस्येति, ऋषिभिः राजन्निति अपत्यप्रत्ययान्तपदेन पौरवपाण्डवेत्यादिना वा, विप्रैः विप्रः यथेच्छं नामभिः अपत्यप्रत्ययान्तपदेन विश्वामित्रकौशिकेत्यादिना वा वाच्यः, इतरैः क्षत्रियादिभिः विप्रः आर्य्येति, वाच्यः। राज्ञा विदूषकः वयस्येति नाम्ना वा वाच्यः। नटौ सूत्रधारौ परस्परमार्य्यनाम्ना, पारिपार्श्विकेन सूत्रधारः भाव इति, सूत्रधारेण तु स मारिषेति, अधमजनैः तत्सदृशः जनः हण्डे इति, उत्तमजनैः स्वसमानजनः वयस्येति, मध्यमजनैः तत्समः हंहो इति, अग्रजः आर्य्येति, देवलिङ्गी मुनिलिङ्गी सर्व्वः एव सर्व्वैः भगवन् इति वाच्यः। विदूषकेण राज्ञी तत्सहचरी ( चेटी ) च भवतीति ; सूतेन रथारोही आयुष्मन् इति ; अन्यैः वयोज्येष्ठः तातेति ; पुत्रः, शिष्यः, कनिष्ठभ्राता च वत्सेति, पुत्रकेति, तातेति, तत्तन्नाम्ना, तथा अपत्यप्रत्ययान्तपदेन वा वाच्यः। अवमजनैः सचिवः आर्य्येति ; विप्रैः अमात्येति, सचिवेति वा ; विद्वद्भिः वीतरागः तपस्वी च साधो इति वाच्यः ; तथा शिष्यप्रभृतिभिः पूज्यो जनः नामग्रहणमकृत्वा "भगवन्!" "महाभाग!" इत्यादि सम्मानसूचकेन सम्बोधनेन आमन्त्रयितव्यः ; आचार्य्यः उपाध्यायेति ; प्रजाभिः राजा महाराजेति स्वामीति वा वाच्यः। युवराजस्तु कुमार इति भर्त्तृदारक इति वा, अधमैस्तु राजकुमारः सौम्येति भद्रमुखेति च वाच्यः। अमात्यादिभिः राजकुमारी भर्त्तृदारिकेति कथनीया।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उत्तममध्यमाधमपात्रैः स्त्रियः तासां पत्युः पदमर्य्यादाऽनुसारतः तासामुत्तमत्वादिकं निश्चित्य सम्बोधनेनामन्त्रयितव्याः। (यथा —उत्तमेन उत्तमः वयस्येति, मध्यमेन मध्यमः हंहो इति, अधमेन अधमः हण्डे इति, तथा उत्तमेन उत्तमा स्त्री वयस्येति, मध्यमेन मध्यमा स्त्री हंहो इति, अधमेन अधमा स्त्री हण्डे इति वाच्या) एवं स्वसमाना स्त्री हलेति, किङ्करी हञ्जे इति, वेश्या अज्जुकेति कुट्टिनीति च ; सेवकैः पूज्या वृद्धा च अम्बेति वाच्या। पाषण्डाः स्वतन्त्रेतानुरूपसम्बोधनपदैः कापालिकेत्यादिभिः वाच्याः। शकादयश्च भद्रदत्तादिनामभिः वाच्याः। यस्य च यत् मालाकरणादिरूपं कर्म्म, यच्च शिल्पं विद्यते, या च जातिः, या वा विद्या, तदनुरूपनाम्ना स सम्भाष्यः। एतद्व्यतिरिक्ताः, यथोपयुक्तं शिष्टाचारविरुद्धं यथा न भवति तथा सम्भाषणीयाः।

अथ नाटकीयभाषाविभागः,—विदुषाम् उत्तममध्यमपात्राणां संस्कृता भाषा ; उत्तमसध्यमयोषितां शौरसेनी भाषा, किन्तु श्लोकेषु सङ्गीतेषु वा आसां महाराष्ट्री भाषा ; राजान्तःपुरचारिणां मागधी भाषा ; चेटानां, राजपुत्राणां, तथा धनवतां वैश्यानाञ्च अर्द्धमागधी भाषा, अन्तरान्तरा च स्वदेशभाषाऽपि प्रयोक्तव्या। विदूषकादीनां गौड़ीया भाषा ; अत्र देविनाम् अवन्तिका भाषा ; क्रीड़तां योधनागरिकादीनाञ्च वैदर्भी भाषा ; शकाराणां शकादीनाञ्च शकारदेशसम्बन्धिनी भाषा ; दैवप्रभाववतां बाह्लीकदेशीया भाषा ; द्रविड़ादिषु द्राविड़ी भाषा ; आभीरेषु आभीरी भाषा ; पुक्कसादिषु चाण्डाली भाषा ; काष्ठ-पत्रोपजीविषु तथा लौहपात्रादिनिर्म्माणोपजीविषु च आभीरी शाबरी वा भाषा प्रयोक्तव्या ; पिशाचानां पैशाची भाषा, उत्तममध्यमानां चेटीनां शौरसेनी,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

बालानां, वर्षवराणां, नीचानां, दैवज्ञानाम्, उन्मत्तानामातुराणाञ्च शौरसेनी, क्वचित् संस्कृता च; ऐश्वर्य्योन्मत्तानां दारिद्र्याभिभूतानां भिक्षूणां जैनबौद्धादीनाञ्च प्राकृती भाषा; सन्न्यासादिचिह्नधारिणीनां श्रेष्ठनारीणाञ्च संस्कृता भाषा, केषाञ्चिन्मते देवी-मन्त्रिसुता-वेश्यानां भाषाऽपि संस्कृता। नीचपात्राणां स्वदेशीया भाषा; प्रयोजनवशात् उत्तमादिपात्राणां भाषाविपर्य्ययोऽपि विधेयः।

योषित्-सखी-बाल-वेश्या-कितव-अप्सरसां क्वचित् वैदग्ध्यज्ञापनार्थं मध्ये मध्ये संस्कृता भाषा प्रयोक्तव्या।

नाटके — भूषण-अक्षरसङ्घात-शोभा-उदाहरण-हेतु-संशय-दृष्टान्त-तुल्यतर्क-पदोच्चय-निदर्शना-अभिप्राय-प्राप्ति-विचार-दिष्ट-उपदिष्ट-गुणातिपात-गुणातिशय-विशेषण-निरुक्ति-सिद्धि-भ्रंश-विपर्य्यय-दाक्षिण्य-अनुनय-माला-अर्थापत्ति-गर्हण-पृच्छा-प्रसिद्धि-सारूप्य-सङ्क्षेप-गुणकीर्त्तन-लेश-मनोरथ-अनुक्तसिद्धि-प्रियोक्तिभेदेन षट्त्रिंशल्लक्षणानि यथालाभं प्रयोज्यानि।

आशीः-आक्रन्द-कपट-अक्षमा-गर्व्व-उद्यम-आश्रय-उत्प्रासन-स्पृहा-क्षोभ-पश्चात्ताप-उपपत्ति-आशंसा-अध्यवसाय-विसर्प-उल्लेख-उत्तेजन-परीवाद-नीति-अर्थविशेषण-प्रोत्साहन-साहाय्य-अभिमान-अनुवर्त्तन-उत्कीर्त्तन-याञ्चा-परीहार-निवेदन-प्रवर्त्तन-आख्यान-युक्ति-प्रहर्ष-उपदेशनभेदात् त्रयस्त्रिंशत् नाट्यालङ्काराः।

गेयपद-स्थितपाठ्य-आसीन-पुष्पगण्डिका-प्रच्छेदक-त्रिगूढ़क-सैन्धव-द्विगूढ़क-उत्तमोत्तमक-उक्तप्रत्युक्तभेदेन दश लास्याङ्गानि यथालाभं प्रयोज्यानि।

एतत् पूर्व्वोक्तरूपं नाटकमेव सर्व्वपताकास्थानकैः दशभिरङ्कैश्च युतं चेत् महानाटकसंज्ञकं स्यात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रकरणं—कविस्वकपोलकल्पित-लोकप्रसिद्धचरित्रमात्रप्रकाशकं शृङ्गाररसप्रधानं विनाशिधर्म्मकामार्थतत्परधीरप्रशान्तविप्रामात्यवणिगन्यतमनायकयुक्तं नाटकसामान्यलक्षणान्वितं भवेत्। तच्च सत्कुलसम्भूता-वेश्या-तदुभयात्मकनायिकाभेदेन त्रिविधम्। तत्र कुलजा-वेश्योभयनायिकाकृततृतीयभेदो धूर्त्तद्यूतकारविटचेटादिसङ्कुलः स्यात्।

भाण-व्यायोग-समवकार-डिम ईहामृग-अङ्क-वीथी प्रहसनानां लक्षणानि आकरे द्रष्टव्यानि। तत्र वीथ्याः उद्घातक-अवलगित-प्रपञ्च-त्रिगत-छल-वाक्केलि-अधिबल-गण्ड-अवस्यन्दित-नालिक-असत्प्रलाप-व्याहार-मृदवाख्यानि त्रयोदशाङ्गानि निर्दिष्टानि। भाणादिवदुपरूपकभेदनाटिकादीनामपि लक्षणानि आकरे एव अनुसन्धेयानि।

श्रव्यकाव्यम् — श्रवणेन्द्रियमात्रग्राह्यं गद्यपद्यमयत्वेन द्विविधं श्रव्यकाव्यम्। तत्र पद्यं छन्दोबद्धवाक्यम्; तच्च मुक्तक-युग्मक-सन्दानितक-कलापक-कुलकभेदात् पञ्चविधम्। एकेन पद्येन प्रकृतार्थसमाप्तौ तदात्मकं पद्यं मुक्तकम्; द्वाभ्यां पद्याभ्यां तथात्वे युग्मकम्; त्रिभिश्च तादृशैः पद्यैः सन्दानितकम्; चतुर्भिः कलापकम्; पञ्चभिः तदधिकैर्वा श्लोकैः कुलकं स्मृतम्। महाकाव्य-काव्य-खण्डकाव्य-कोषकाव्यभेदेन च पद्यमयं काव्यं चतुर्विधम्।

तत्र महाकाव्यम् — इतिहासोद्भववृत्तैः सज्जनाश्रयैर्वा एकवृत्तैः नातिस्वल्प-नातिदीर्घाष्टाधिकसर्गबद्धं महाकाव्यम्; तत्रादौ आशीः-नमस्क्रिया-वस्तुनिर्देशः वा एकेनैव छन्दसा निबद्धः, सर्गसमाप्तौ छन्दोऽन्तरमवश्यं निवेश्यम्। क्वापि कश्चन सर्गः नानावृत्तमयः, सर्गान्ते च भाविसर्गस्य कथायाः सूचनम्; धीरोदात्तगुणान्वितः सद्वंशजातः क्षत्रियः सुरो वा एको

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नायकः, एकवंशोत्पन्नाः कुलीनाः बहवः राजानो वा नायकाः । शृङ्गारवीरशान्तान्यतमः रसः प्रधानम्, अन्ये रसा अङ्गभूताः । तथा नाटकोक्तमुख-प्रतिमुख-गर्भ-विमर्ष-निर्व्वहणाख्याः पञ्च सन्धयः प्रयोज्याः । तत्र धर्म्मार्थकाममोक्षात्मकाः चत्वारः वर्गाः, तेष्वपि एक एव वर्गः वर्णनीयः । कुत्रचित् दुर्ज्जनानां निन्दा, क्वचिद् वा साधूनां गुणप्रख्यापनं कर्त्तव्यम् ; सन्ध्या-सूर्य्य-इन्दु-रात्रि-प्रदोष-अन्धकार-वासर-प्रातः-मध्याह्न-मृगया-शैल-ऋतु-वन-सागर-सम्भोग-विप्रलम्भ-मुनि-स्वर्ग-पुर-यज्ञ-रणप्रयाण-विवाह-मन्त्र-पुत्रोदयादीनाम् अङ्गप्रत्यङ्गसहिता वर्णना च तत्र कार्य्या । कवि-वृत्त-नायकानामन्यतमस्यान्यस्य वा नाम्ना अस्य नाम कार्य्यम् । सर्गोपादेयकथया सर्गस्य नाम तु विधेयम् । ऋषिप्रणीतेऽस्मिन् महाकाव्ये सर्गस्य आख्यानसंज्ञा भवेत् । प्राकृतभाषया निर्म्मिते तु तस्य आश्वास-संज्ञा कल्पनीया ; एतत् पुनः स्कन्धक-गलितान्यतरच्छन्दसा निबद्धव्यम् । अपभाषाविरचिते तु अस्मिन् तदुचितानि छन्दांसि, कड़वकाख्याः सर्गाश्च करणीयाः ।

सर्गसन्ध्यादिविरहितं संस्कृताद्यन्यतमभाषामयमेकार्थप्रतिपादक-पद्यरचितं श्रव्यकाव्यं काव्यम् ।

एकार्थानुस्यूतसंस्कृतपद्यनिर्म्मितं काव्यं खण्डकाव्यमुच्यते ।

परस्परनिरपेक्षसजातीयैकार्थप्रतिपादकपदोपनिबद्धपद्य-समूहविरचितं कोषकाव्यम् । सजातीय-सन्निवेशविशेषवशेन रचितश्चेदतिसुन्दरं तत् ।

गद्यकाव्यम्—पद्यबन्धसमुज्झितं श्रव्यकाव्यं गद्यम् । तच्च मुक्तक-वृत्तगन्धि-उत्कलिकाप्राय-चूर्णकभेदाच्चतुर्व्विधम् । तत्र समासाघटितं मुक्तकं, वृत्तभागयुतं वृत्तगन्धि, दीर्घसमस्तपद-घटितम् उत्कलिकाप्रायम्, अल्पसमस्तपदोपनिबद्धं चूर्णकम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एवं रचनाविशेषवशेन चतुर्व्विधं तत्पुनः कथाऽऽख्यायिकाभेदेन द्विविधम्। एतयोर्लक्षणमाकरेऽनुसन्धेयम्।

गद्यपद्यमयं काव्यं चम्पूनाम्ना प्रसिद्धम्। गद्यपद्यमयी राजस्तुतिस्तु विरुदमिति कथ्यते। विविधभाषाविरचितं काव्यं करम्भकं स्यात्।

## सप्तमपरिच्छेदे—

इह पुनः काव्यं पुरुषसंस्थानस्थानीयं, तथा हि,—वाक्यं तदीयं शरीरं, रीतयः अवयवसन्निवेशविशेषाः, रसश्च तदन्तर्भूतः आत्मा। यथा शौर्य्यादयो गुणाः, काणत्वखञ्जत्वादयः मूर्खत्वादयश्च दोषाः यथाक्रमं पुरुषस्य उत्कर्षापकर्षहेतवः, तथा काव्यस्यापि गुणा तदुत्कर्षाधायकाः भवन्ति। दोषास्तु शब्दार्थौ द्वारीकृत्य रसादीनां प्रतीतिप्रतिबन्धकत्वेन प्रकर्षप्रतीतिप्रतिबन्धकत्वेन प्रतीतिविलम्बकत्वेन च काव्यस्यात्मभूतं रसमपकर्षयन्तः रसापकर्षकतया दोषशब्दवाच्याः भवन्ति।

ते पुनः पद-पदांश-वाक्य-अर्थ रसगतत्वेन पञ्चधा। तत्र पददोषाः,—दुःश्रव-त्रिविधाश्लील-अनुचितार्थ-अप्रयुक्तत्व-ग्राम्य-अप्रतीत-सन्दिग्ध-नेयार्थ-निहतार्थत्व-अवाचकत्व-क्लिष्टत्व-विरुद्धमतिकारित्व-अविमृष्टविधेयांशभाव-निरर्थकत्व-असमर्थत्व-च्युतसंस्कारताभेदेन षोडश। एतेषु निरर्थकत्व-असमर्थत्व-च्युतसंस्कारत्वव्यतिरिक्ताः त्रयोदश दोषा वाक्येऽपि सम्भवन्ति।

तत्र च दुःश्रव-अश्लील-नेयार्थ-निहतार्थता-अवाचकतारूपाः पञ्च दोषाः पदांशेऽपि भवन्ति। निरर्थकत्व-असमर्थत्व-च्युतसंस्कारत्वरूपाः त्रयो दोषास्तु पदे एव, न तु वाक्ये पदांशे वा सम्भवन्ति। दोषाणां पदादिगतत्वम् अन्वयव्यतिरेकाभ्यां पदादीनां परिवृत्तिसहत्वासहत्वाभ्यां वेदितव्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तथा हि,—यत्र दोषजनकीभूतपदानां परिवर्त्तने दोषस्य न सत्ता, किन्तु तत्पदस्थितौ एव तस्य सत्ता, तत्र पदान्वयव्यतिरेकेण दोषाणां पदगतत्वं बोध्यम् ।

यत्र च दोषजनकीभूतप्रकृतिप्रत्ययरूपपदांशपरिवर्त्तने न दोषः, किन्तु तादृशपदांशस्थितावेव तत्र दोषाणां पदांशगतत्वम् ।

पदपरिवृत्तावपि तदर्थस्यैव सत्तायां यत्र दोषस्य सत्ता, सोऽर्थदोषः, यश्चार्थप्रतीत्यनन्तरबोध्यः सोऽप्यर्थदोष एव ।

यत्र च द्वयोः बहूनां वा शब्दानामर्थानां वा अन्यतरस्य, एकस्य द्वयोर्वा स्थितिपरिवर्त्तनाभ्यां दोषस्य न स्थितिहानी, किन्तु सर्व्वेषामेव पदानामर्थानाञ्च, तत्र तस्य शब्दार्थसमष्टिगततया वाक्यगतत्वं बोध्यम् । तत्र च एते श्रुतिदुष्टत्वादयो ये त्रयोदश दोषाः, ते पददोषसजातीयाः वाक्यदोषाः ; तद्विजातीयवाक्यदोषास्तु वर्णप्रातिकूल्यादयः त्रयोविंशतिसङ्ख्यकाः ।

तत्र दुःश्रवत्वं, काव्यस्य कर्कशवर्णवत्पदरचिततया श्रोतॄणां श्रोत्रावच्छेदेन दुःखाधायकत्वम् । एकस्मिन्नेव वर्णे श्रुतिदुःखावहत्वस्याननुभावात् द्वित्रिवर्णानामेव दूषकत्वमवगन्तव्यम् ; माधुर्य्यबुभुत्सायाः सत्त्वे एव श्रुतेः दुःखावहत्वात् तद्विपरीतेषु वीररौद्रबीभत्सरसेषु, तथा क्रुद्धे वक्तरि, समुद्धते वाच्ये, वक्तरि बोद्धव्ये वा वैयाकरण-शुष्कतार्किकादौ च नास्य दोषत्वम् ; प्रत्युत गौणगुणत्वमेव । स्वाश्रयपदसम्बन्धित्वेन प्रत्यासन्नस्य शृङ्गारादिरसस्य माधुर्य्यप्रतीतिप्रतिबन्धकता एवात्र दूषकताबीजम् । वाक्ये तथाविधानां बहुशः प्रयोगे सति स्वाश्रयवर्णभूयिष्ठवाक्यसम्बन्धित्वेन श्रोतृवैरस्यापादकतया प्रत्यासन्नरसप्रकर्षप्रतीति-प्रतिबन्धकत्वेन चास्य वाक्यगतत्वमवगन्तव्यम् । पदैकदेशगामित्वे चास्य पदांशगतत्वम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अश्लीलत्वं — व्रीड़ादिजनकार्थान्तरप्रतीतिजन्यश्रोतृव्रीड़ा-जुगुप्सोत्पादकत्वं, श्रोतुः तज्जन्यामङ्गलज्ञापकत्वञ्च, व्रीड़ादि-जनकासत्यार्थप्रतीतिजन्यतद्विषयकस्मृतिहेतुत्वं वा अश्लीलत्वम्। व्रीड़ादिजनकपदज्ञानदशायां प्रकृतार्थबोधप्रकर्षविघातकत्व-मत्र दूषकताबीजम्। व्रीड़ाजुगुप्साऽमङ्गलव्यञ्जकत्वेन चास्य त्रैविध्यम्। अस्य तु सुरतारम्भगोष्ठीसमवेतस्त्रीकथावक्रोक्ति-च्छलोक्तिषु गुणत्वमेव।

अनुचितार्थत्वं—प्रकृतार्थापकर्षकत्वेन अयुक्तार्थप्रतिपादक-पदघटितत्वम्; तच्च वाच्यानौचित्य-अर्थासम्भव-असत्समर्थकत्व-रूपतया त्रिधा। प्रकृतार्थप्रकर्षविघातादेव तद्विषयभावप्रकर्ष-विघात एवात्र दूषकताबीजम्।

अप्रयुक्तत्वं—कोषादिषु तथाप्रसिद्धत्वेऽपि कविभिरनादृत-त्वम्। कवेरनादृतत्वज्ञानाच्च तद्गग्रसास्वादप्रकर्षविघातोऽत्र दूषकताबीजम्। श्लेषादावस्यादोषत्वम्।

ग्राम्यत्वं—हालिकादिसाधारणप्रयोज्यत्वेन लौकिकप्रसिद्धा-र्थकशब्दत्वम्। अस्य च नीचजनोक्तिष्वनुप्रासविशेषेषु विदू-षकादिभाषणेषु चादोषत्वमेव। ग्राम्यवक्तृप्रयोज्यत्वज्ञानात् रसप्रकर्षविघातोऽत्र दूषकताबीजम्।

अप्रतीतत्वं—शास्त्रविशेषरूपैकदेशमात्रप्रसिद्धत्वम्। वक्तृ-बोद्धव्ययोः तथाविधसाङ्केतिकपदज्ञानवत्त्वे आत्ममात्रबोधोद्देश्य-तया व्यवहृतत्वे चास्य गुणत्वमेव।

सन्दिग्धत्वं — श्लिष्टपदघटितत्वेन पदद्वयैकरूप्यादन्वय-प्रतियोगिसन्देहजनकसन्देहविषयपदत्वम्। अत्र वाच्यार्थविष-यकसंशयोदयात् शाब्दबोधजननविलम्बनेन रसप्रकर्षबोधविघातो दूषकताबीजम्। व्याजस्तुतिपर्य्यवसायित्वे चास्य गुणत्वमेव।

नेयार्थत्वं—रूढ़िप्रयोजनान्यतरहेतुविरहेण कर्[illegible]

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रयुक्तलक्ष्यार्थप्रकाशनम्। अत्र रूढ़िप्रयोजनव्यतिरेकनिश्चयेन कवेरशक्तिनिश्चयः, ततो लक्ष्योपस्थितिः, ततः शाब्दबोध इति तद्विलम्बेनैव रसबोधविलम्बनं दूषकताबीजम्।

निहतार्थत्वम् — उभयार्थकशब्दस्याप्रसिद्धार्थे प्रयोगः। पदार्थोपस्थितिदशायामविवक्षितस्य प्रसिद्धार्थस्योपस्थित्या विवक्षिताप्रसिद्धार्थोपस्थितिविलम्बनेन रसप्रतीतिविलम्बनमत्र दूषकताबीजम्। श्लेषादौ तु अस्यादोषता ज्ञेया।

अवाचकत्वं—वाच्यार्थबोधौपयिकपदं परिहृत्य,रूढ्याद्यसत्त्वे अयथा लाक्षणिकपदप्रयोगः।

क्लिष्टत्वं — पदार्थानुसन्धानाज्जायमानतात्पर्य्यार्थबोधविलम्बनेन पदार्थोपस्थितेः व्यवधानेन जनकत्वम्। अस्य समासगतत्वे पददोषता। वैयाकरणमुख्ये नीरसतार्किकादौ च वक्तरि बोद्धव्ये वा गुणत्वमेव। शाब्दबोधविलम्बनेन झटिति रसादिप्रतीतेः प्रतिबन्धकत्वं दूषकताबीजम्।

विरुद्धमतिकारित्वम् — अभिप्रेतार्थविपरीतार्थप्रतीतिकरत्वम्। विरुद्धार्थविषयकबुद्धेरुदयात् रसप्रतीतिप्रतिबन्ध एवात्र दूषकताबीजम्।

अविमृष्टविधेयांशभावः,—प्रयुक्तानां पदानां विधेयस्यैव प्राधान्येन निर्द्देश उचितः, "अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्" इति नियमात्, एतन्नियमस्यान्यथाकरणेन उद्देश्यविधेययोः विपरीतनिर्द्देशरूपः।

तच्च क्वचित् समासेन विधेयस्योद्देश्यप्रतीतिकारित्वं, क्वचिच्च न्यायविपर्य्यासेन रचनं, क्वचित् तच्छब्दस्य यच्छब्दाव्यवधानेन स्थितिः। प्रथमस्य पदगतत्वं, तदन्ययोर्वाक्यगतत्वम्; तथा "अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता। प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्॥" इत्युक्तलक्षणप्रसज्यप्रतिषेधस्य नञः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विधेयत्वानवगमे "प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता। पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥" इत्युक्तलक्षणपर्य्युदासवदुद्देश्यत्वप्रतीतिकारित्वे चायं दोषः, कुत्रचिद्वा तस्य समासे गुणीभावतया पर्य्युदासवदुपस्थापनात् निषेधस्य विधेयतया अनवगतिः इति प्रसज्यप्रतिषेधस्थले पर्य्युदासविधया नञः प्रयोगात् निषेधस्य विधेयतानवगमरूपः दोषः। किञ्च, "यत्तदोर्नित्यसम्बन्धः" इति न्यायात् यत्र यच्छब्दः, तत्र तच्छब्दः, तत्समानार्थकेदमेतददःशब्दान्यतमो वा यावन्न प्रयुज्यते, तावत् वाक्यस्य यच्छब्दोत्थापिता आकाङ्क्षा न पूर्य्यते। यत्र तु यच्छब्दानन्तरं प्रयुज्यमाना अपि तच्छब्दादयः न पृथक् पृथक् व्यवधानतः प्रयुक्ताः, न वा विलक्षणविभक्त्यन्ततया निर्दिष्टाः, किन्तु समानविभक्त्यन्ततया यच्छब्दसमीपप्रयुक्ततया च यच्छब्दोत्थाप्याया आकाङ्क्षाया अपूरणादनुवाद्यत्वप्रत्यायकाः, तत्र तेषामनुवाद्यत्वप्रतीतिकारित्वादेवाप्राधान्येन निर्देश इति विधेयाविमर्षदोषत्वम्। यच्छब्दव्यवधानस्थिता निकटस्था अपि भिन्नलिङ्गविभक्तियुक्ता वा तदादिशब्दास्तु निराकाङ्क्षत्वमवगमयन्ति, यत्र च पूर्व्ववाक्यगतयच्छब्दद्वयस्योत्तरवाक्यगतैकतदादिशब्देन सम्बन्धः,तत्रैकेनैव तदादिना निराकाङ्क्षत्वम्। एवं क्वचित्तच्छब्दयोरपि वक्तृतात्पर्य्यप्रत्यायकत्वादेकेनैव यच्छब्देन निराकाङ्क्षत्वम्; कुत्रचिच्च यत्तदोरन्यतरस्यार्थत्वेऽपि निराकाङ्क्षत्वमेव। एवञ्च यच्छब्दस्योत्तरवाक्यगतत्वेनोपादाने पूर्व्ववाक्ये सामर्थ्यात् तच्छब्दस्यार्थत्वम्। तच्छब्दस्य च प्रक्रान्तप्रसिद्धानुभूतार्थकत्वे यच्छब्दस्यार्थत्वं बोध्यम्।

निरर्थकत्वं—छन्दोभङ्गनिवृत्तये पादपूरणमात्रप्रयोजनकाऽव्ययादिद्योतकपदप्रयोगकृतवैयर्थ्यम्। अत्र वक्तरि निरर्थकपदवद्वाक्यप्रयोक्तृत्वज्ञानेन तदीयवाक्यात् प्रस्तुतविषयकार्थप्रकर्षबोधविघातो दूषकताबीजम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

असमर्थत्वं—सहकारिविशेषं विना अगृहीतशक्तिकत्वं, ज्ञापकाभावकृतम् अभीप्सितार्थबोधनाक्षमत्वं वा। शाब्दबोधानुत्पत्त्या तादृशतात्पर्य्यबोधानुदयात् तदुपजीवकरसानुत्पत्तिर्दूषकताबीजम् ।

च्युतसंस्कारत्वं—व्याकरणलक्षणहीनत्वम् । तादृशपदस्यासाधुत्वज्ञानेन शाब्दबोधविघटनाद्रसानुत्पत्तिरेवात्र दूषकताबीजम् । निरर्थकत्वासमर्थत्वच्युतसंस्कारत्वाख्यदोषाणां पदमात्रगतत्वेनैव लक्ष्ये सम्भवः ।

पददोषविजातीयवाक्यदोषाः,—प्रतिकूलवर्णता, लुप्तविसर्गता, आहतविसर्गता, अधिकपदता, न्यूनपदता, कथितपदता, हतवृत्तता, पतत्प्रकर्षता, सन्धिविश्लेषः, सन्ध्यश्लीलता, सन्धिकष्टता, अर्द्धान्तरैकपदता, समाप्तपुनरात्तता, अभवन्मतसम्बन्धता, अक्रमता, अमतपरार्थता, वाच्यानभिधानं, भग्नप्रक्रमता, प्रसिद्धित्यागः, अस्थानस्थपदता, अस्थानस्थसमासता, सङ्कीर्णता, गर्भितता, एते त्रयोविंशतिसङ्ख्यकाः वाक्यमात्रगता दोषाः । तत्र—

प्रतिकूलवर्णत्वं — प्रकृतरसविरोधिरसगतगुणवद्वर्णवत्त्वं, प्रकृतरसपरिपन्थिवर्णसमुदयघटितत्वं वा । तत्तद्रसप्रतिकूलवर्णविघटितत्वे तु तदुद्बुद्धरसानुदयात्, रसप्रतीतिविघातकत्वमत्र दूषकताबीजम् ।

लुप्तविसर्गत्वं—लोपप्राप्तनिखिलविसर्गत्वम् । अस्य पुनरेकत्र बहुशः प्रयोगे एव श्रोतृबोध्यरसस्यापाततः प्रतीतेरनाधायकत्वात् दोषत्वमिति बोध्यम् । अधिकविसर्गस्थितावपि दुःश्रवत्वमेव ।

आहतविसर्गत्वम्—ओत्वप्राप्तविसर्गत्वम् । पूर्व्ववदस्यापि एकत्र बहुशः प्रयोगे दोषत्वम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अधिकपदत्वं—पौनरुक्त्यभावेऽपि कथितपदार्थानतिरिक्तार्थ-पर्य्यवसायकपदवद्वाक्यत्वम्। तादृशाधिकपदतात्पर्य्यानुधावने रसास्वादविलम्बनमत्र दूषकताबीजम्। अस्य तु क्वचिद् वैचित्र्यविशेषलाभे गुणत्वम्; क्वचिच्च विशेषणदानेन वैचित्र्याधिक्यद्योतनार्थं विशेष्यपदप्रयोगेऽपि न दोषत्वम्। केचित्तु,—यत्र विशेषणस्यापि क्रियाविशेषणत्वं सम्भवति, तत्रापि विशेष्यपदप्रयोगः दोषावह इत्याहुः।

न्यूनपदत्वं—न्यूनस्य पदस्यार्थेन सहान्वये वक्तुरभीप्सिते सति तदुपादानेन सुसुखं प्रकृतार्थान्वयनिर्व्वाहे च सति तद-प्रयोगकृतानुपपत्त्युत्पादकवाक्यत्वम्। अध्याहार्य्यपदार्थचिन्तनेन रसप्रतीतिप्रतिबन्धकत्वमत्र दूषकताबीजम्। अत्यानन्दनिमग्नानां दुःखविह्वलानाञ्च उक्तौ अस्य गुणत्वमेव। एवं पदानां न्यूनत्वेऽपि उपात्तवाक्यजन्यया प्रतिपत्त्या यत्र "उत्तरा प्रतिपत्तिः पूर्व्वां प्रतिपत्तिं न वाधते" इति न्यायात् पूर्व्ववाक्य-प्रतिपत्तिः स्फुटमेवावभासते, न तत्रापि दोषत्वं, तथा च—"तिष्ठेत् कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यति" इत्यत्र "प्रभावपिहिता"इत्यनन्तरं "नैतत् यतः"इति पदानां न्यूनत्वेऽपि तत्पूर्व्ववाक्यबोधने समर्थतया न दोषः इति; तत्र, तत्तद्वाक्य-व्यङ्ग्यभावादीनामुत्कर्षानाधायकत्वाच्च नापि गुणत्वमस्येति बोध्यम्।

कथितपदत्वं—भङ्ग्यन्तरेण कथितार्थस्य पुनः कथनात्मक-पदवद्वाक्यत्वम्। पुनरुक्तपदतात्पर्य्यचिन्तनेन श्रोतुः रस-प्रतीतिप्रतिबन्धकत्वं दूषकताबीजम्। अत्र उद्देश्यप्रतिनिर्देश्य-स्थले उक्तपदप्रयोगात् अर्थान्तरप्रतीत्यभावेन झटिति प्रकृतार्थ-बोधोदयः, ततः रसादिधीरविलम्बेनैवेत्यत्र कथितपदत्वस्य गुणत्वमेवेति बोध्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उद्देश्यप्रतिनिर्देश्यभावस्य त्रिधा — एकविधेयार्थमुद्दिश्य विधेयान्तरे अनुकथनम्, एकोद्देशेन कथितस्योद्देश्यान्तरे अनुकथनम्, एकोद्देशेन विहितस्य विधेयान्तरे उद्देश्यतया अनुकथनञ्चेति। किञ्च—विषाद-विस्मय-क्रोध-दैन्य-लाटानुप्रास-अनुकम्पा-प्रसादन-हर्षावधारणादिव्यञ्जके अर्थान्तरसङ्क्रमित-वाच्यध्वनावप्यस्य गुणत्वम्।

अयोगान्ययोगव्यवच्छेदभेदेन अवधारणमपि द्विधा भवति। तथा वीप्सितपदानां लक्षणया अपरार्थव्यञ्जकत्वेऽपि गुणत्वमेव कथितपदत्वस्य ; तथाहि—"उत्सवस्य गृहे गृहे" इत्यादौ गृह-पदं सकलगृहे लाक्षणिकं, तथा "पीत्वा पीत्वा" अत्र द्विरुक्तं पीत्वेतिपदं पौनःपुन्यलक्षकं, तथा "रक्ष रक्ष" "याहि याहि" इत्यादौ रक्षरक्षेत्यादिपदं द्रुते लाक्षणिकमिति गुणत्वमेव।

हतवृत्तत्वं—वृत्तलक्षणान्वितत्वेऽपि तल्लक्षणानन्वितत्वेन प्रतीयमानत्वम्। तच्च लक्षणानुसारेण रचितानामपि पद-विशेषसान्निध्यादश्रव्यत्वेन, एवं पादान्तलघोरपि गुरुभावस्य सर्व्वत्र द्वितीयचतुर्थपादविषयत्वेन प्रथमतृतीयपादान्तलघो-र्गुरुत्वनियमस्य च केवलं वसन्ततिलकादिविशेषविषयकतया प्रथमतृतीयपादान्तलघोरप्राप्तगुरुभावत्वेन, विरोधिप्रकृतरस-वृत्तोपादानत्वेन च त्रिधा भवति।

पतत्प्रकर्षत्वं—सहसा सुदूरम् आरूढस्य रचनाप्रकर्षस्य पश्चात् क्रमशः शैथिल्यात् वृक्षाग्रात् पतनमिव तद्धानिरूपोऽप-कर्षविशेषः। तच्च द्विधा,—बन्धस्य पूर्व्वापेक्षया उत्तरत्र शैथिल्यात्, क्रमेण अनुप्रासपाताच्च। प्रकर्षपतनेन वैरस्याव-गमात् रसप्रकर्षविघातोऽत्र दूषकताबीजम्। यत्र एकस्यापि वीरादिरसवत्पद्यस्य पूर्व्वांशे शब्दात्तस्वरप्रकर्षसत्त्वेऽपि शेषां-शस्य सुकुमारार्थकत्वं, तत्र प्रयोजनमूलकपूर्व्वप्रकर्षपातस्य



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वैरस्यानापादकतया दूषकताबीजस्य असत्त्वेन गुणत्वमेवेति बोध्यम्।

सन्धिविश्लेषः,—स्थितेऽप्यनुशासने असत्कृतसन्धिराहित्यम्। अस्य च एकत्र बहुलप्रयोग एव दोषः, किन्तु अनुशासनमुल्लङ्घ्य वृत्तभङ्गभयेन सन्धिविश्लेषस्य तु सकृत् प्रयोगेऽपि।

सन्ध्यश्लीलत्वं—सन्धिसमुत्पन्नानां येषां शब्दानां जुगुप्सा-व्रीड़ाऽमङ्गलव्यञ्जकत्वं तादृशपदवद्वाक्यत्वं, पूर्व्वोक्तलक्षणस्या-श्लीलत्वस्य सन्धिगतत्वं वा।

सन्धिकष्टत्वं—सन्धिजन्यश्रुतिकटुवर्णविशिष्टपदवद्वाक्यत्वम्। झटिति सन्धिविश्लेषकरणाशक्यतया तत्तत्पदजन्यपदार्थबोधानु-दयात् प्रतीयमानरसास्वादविघातकत्वमेवात्र दूषकताबीजम्।

अर्द्धान्तरैकपदत्वं—तत्पद्यार्द्धघटकवाक्यान्वितत्वेन प्रयुक्त-स्यैकस्य पदस्य भिन्नवाक्यघटकापरपद्यार्द्धगतत्वम्। अर्द्धान्त-रोक्तपदस्य यथायथमुत्तरत्र पूर्व्वत्र वा वाक्ये साकाङ्क्षत्वनिरा-काङ्क्षत्वप्रतिसन्धानेन शाब्दबोधविलम्बनमत्र दूषकताबीजम्। तच्च उत्तरार्द्धादौ प्रथमार्द्धान्ते च सम्भवति।

समाप्तपुनरात्तत्वम् — आकाङ्क्षितान्वयबोधजननाद्विश्रान्त-तया निराकाङ्क्षस्यापि वाक्यस्य पुनर्विशेषणान्तरसम्बन्धलाभाय समुपात्तत्वम् ; यद्वा, — क्रियाकारकभावविनिष्पत्तिविधया समाप्तेऽपि वाक्यान्वये विशेष्यस्यापरगुणाधायकविशेषणान्वयार्थं पुनः विशेषणान्तरोपादानं समाप्तपुनरात्तत्वम्। अस्य च वाक्यसमापनानन्तरं वाक्यान्तरस्य उपादाने न दोषत्वं, किन्तु विशेषणमात्रस्य पुनरुपादाने एव। अत्राकाङ्क्षान्तरकल्पनाया आवश्यकत्वेन शाब्दबोधोदयविलम्बनात् झटिति रसोद्बोध-विघातो दूषकताबीजम्।

अभवन्मतसम्बन्धत्वं—वाक्यार्थबोधसमाप्त्या वाक्यानां पर-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्वरं निराकाङ्क्षत्वेन कविविवक्षितसम्बन्धासम्भवत्वम्; असम्भवश्च उपात्तपदस्य विभक्तिव्यत्ययं विना अन्वयस्य निराकाङ्क्षत्वे, समासासमासयोरेकान्तःपातितयाऽन्वयस्य निराकाङ्क्षत्वे, वाच्यव्यङ्ग्ययोर्विवक्षितान्वयस्याप्रतीयमानत्वे च बोध्यः। शाब्दबोधविघटकत्वेन रसाननुकूलत्वमेवात्र दूषकताबीजम्।

अक्रमत्वं—स्वपूर्ववर्त्तिपदार्थनिष्ठस्वार्थान्वयबोधकतानियमवतां चैवादिशब्दानां तत्पदाव्यवहितोत्तरपातितारूपक्रमाभावत्वम्। अस्य प्रत्यासत्तिकल्पनेन शाब्दबोधोदयविलम्बनात् रसास्वादविघात एवात्र दूषकताबीजम्।

अमतपरार्थत्वं—प्रकृतरसविरोधिरसव्यञ्जकतया प्रकृतरसाननुकूलार्थान्तरत्वम्। प्रकृतरसोद्बोधविघातकत्वमत्र दूषकताबीजम्।

वाच्यानभिधानं—अवश्यवाच्यानामप्यादिशब्दानां विवक्षितार्थदार्ढ्यद्योतनाय वक्तुमुचितत्वेऽपि तथाविधपदस्याकथनम्। अध्याहारादिना शाब्दबोधविलम्बनात् रसास्वादविलम्बनमत्र दूषकताबीजम्।

भग्नप्रक्रमत्वं—बहुषु वक्तव्येषु यया रीत्या प्रथममेकम् उपक्रम्यते, तदुत्तरवक्तव्यस्यापि प्रत्युत्थिताकाङ्क्षाविषयीभूतप्रक्रान्तप्रकारेण पश्चादनुक्तिरूपत्वम्। प्रकृति-प्रत्यय-वचन-कारक-उपसर्ग-पर्य्याय-सर्व्वनामादिभेदात् तदनेकविधम्। उपात्तप्रक्रमस्य सहसा भङ्गात् तात्पर्य्यार्थानुसन्धानेन शाब्दबोधविलम्बोदयात् सम्यक् रसानास्वादनमत्र दूषकताबीजम्।

प्रसिद्धित्यागः,—तत्तत्पदसमभिव्याहारसहकृततत्तदर्थपरतया शास्त्रव्यवहाराप्रसिद्धस्य शब्दस्य तत्तदर्थे प्रयोगः। रसादिप्रकर्षबोधप्रतिरोधोऽत्र दूषकताबीजम्।

अस्थानपदत्वं—स्वार्थानन्वितया स्ववाक्यीयक्रियया भिन्न-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वाक्योयपदेन वा स्वार्थान्वयव्यवधानाभावे सति, अयुक्तस्थान-पतित-पदान्तरोत्तरपातितानियमरहितपदत्वम्, अनाकाङ्क्षित-तया अन्वयायोग्यस्थाननिविष्टपदत्वं वा।

अस्थानस्थसमासत्वं — स्वगुणव्यञ्जकसमासस्य तद्रसा-व्यञ्जकस्थानपातः। तत्तद्रसापकर्षकत्वमेवात्र दूषकताबीजम्।

सङ्कीर्णत्वम्—एकस्मिन् वाक्ये वाक्यान्तरीयपदप्रवेशः। अस्य तु वैचित्र्यादिजनकत्वे गुणत्वम्। अत्र वाक्यान्तरीयपद-प्रवेशात् विवक्षितार्थस्य विलम्बेन प्रतीतिर्दूषकताबीजम्।

गर्भितत्वम्—एकस्मिन् वाक्ये वाक्यान्तरस्यानुप्रवेशः। वाक्या-न्तरानुप्रवेशात् विवक्षितार्थस्य विलम्बेन प्रतीतिरत्र दूषकता-बीजम्। क्वचित् वाक्यान्तरानुप्रवेशस्य चमत्कारातिशयजनकत्वे तु गुणत्वं ज्ञेयम्।

अथ अर्थदोषाः,—अपुष्टता, दुष्क्रमता, ग्राम्यता, व्याहतता, अश्लीलता, कष्टता, अनवीकृतता, निर्हेतुता, प्रकाशितविरुद्धता, सन्दिग्धता, पुनरुक्तता, ख्यातिविरुद्धता, विद्याविरुद्धता, साकाङ्क्षता, सहचरभिन्नता, अस्थानयुक्तता, अविशेषे विशेषार्थता, अनियमे नियमार्थता, विशेषे अविशेषार्थता, नियमे अनियमार्थता, विध्ययुक्तता, अनुवादायुक्तता, निर्मुक्तपुनरुक्तता च इत्येते त्रयोविंशतिसङ्ख्यकाः।

तत्र सन्दिग्धार्थत्वं, कष्टार्थत्वम्, अश्लीलार्थत्वं, ग्राम्यार्थत्वं, निर्हेत्वर्थत्वं, ख्यातिविरुद्धार्थत्वं, पुनरुक्तार्थत्वञ्च इत्येते सप्त अनित्या दोषाः; अन्ये षोड़श नित्याः दोषाः। दोषगतं नित्यत्वम् अनुकरणादन्येन प्रकारेण समाधातुमशक्यत्वरूपं, तदन्यादृशत्वमनित्यत्वम्; एवञ्च पूर्व्वोक्तानामपि पदवाक्यादिगत-दोषाणां समाधानाशक्यत्वशक्यत्वाभ्यां नित्यत्वानित्यत्वव्यवस्था स्वयमूहनीया।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अपुष्टत्वं—विशेष्यस्य उत्कर्षानाधायकविशेषणवत्त्वम्।

दुष्क्रमत्वम् — आकाङ्क्षितक्रमविलङ्घनेनोक्तपदार्थत्वम्। "प्राग्वाच्य उच्यते पश्चात् पश्चाद्वाच्योऽथवाग्रतः। कविना शक्तिवैकल्यात् योऽर्थस्तं दुष्क्रमं विदुः॥" इत्येतल्लक्षणकमिति निष्कर्षः।

ग्राम्यत्वम्—उक्तिभङ्गीराहित्ये सत्यविदग्धकथितार्थत्वम्। "स ग्राम्यः स्वरिरंसायां पामरैर्यत्र कथ्यते। वैदग्ध्यविक्रमलयं हित्वैव वनितादिषु॥" इत्युक्तलक्षणकमिति निष्कर्षः। तादृशोक्त्या सहृदयानां रसप्रकर्षविघातोऽत्र दूषकताबीजम्। अस्य च अधमोक्तिषु गुणत्वम्।

व्याहतत्वं—प्राक् प्रतिपादितोत्कर्षस्यापकर्षसम्पादनं, तथा प्राक् प्रतिपादितापकर्षस्योत्कर्षसम्पादनञ्च; निन्दायामेव तात्पर्य्यसत्त्वे निन्दितस्यैव पुरस्कारव्यञ्जकार्थत्वं, तथा स्तुतावेव तात्पर्य्यसत्त्वे स्तुतेरेव निन्दाव्यञ्जकार्थत्वं वा।

अश्लीलत्वम् — लज्जाजुगुप्साऽमङ्गलान्यतमरूपार्थव्यञ्जकवाक्यार्थत्वम्। शब्दाश्लीलवदस्यापि व्रीड़ाजुगुप्साऽमङ्गलव्यञ्जकतया त्रैविध्यमवधेयम्।

कष्टार्थत्वम् — आकाङ्क्षाऽऽसत्त्यादिशाब्दबोधकारणकलापसत्त्वेऽपि कष्टबोध्यार्थवत्त्वम्। अर्थस्य दुर्ब्बोध्यत्वेन अत्र शाब्दबोधस्य विलम्बनं विघातनं वा दूषकताबीजम्।

अनवीकृतत्वम्—उद्देश्यप्रतिनिर्द्देश्यत्वाभावे सति बहुशः प्रतिपादितस्यैकस्यैवार्थस्य भङ्गीभेदेन नवीकरणरहितार्थत्वम्। अनेकशः प्रतिपादयितव्यस्यार्थस्य, प्रतिपादकपदविन्यासस्य अनन्यथाभावेन एकाकारविन्यस्तपदैः प्रतिपादितत्वमिति निष्कर्षः। चर्व्वितचर्व्वणाद्वैरस्यापादनमेवात्र दूषकताबीजम्।

निर्हेतुत्वं—हेत्वभिधाने आकाङ्क्षोत्थापकसत्त्वेऽपि अनभि-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

हितहेतुकार्थवत्त्वम्। अस्य च प्रसिद्धार्थविषयकत्वे हेत्वपेक्षाविरहात् न दूषकत्वम्। हेत्वाकाङ्क्षोत्थापकत्वेन शाब्दबोधबाधकत्वमेवात्र दूषकताबीजम्।

प्रकाशितविरुद्धत्वं—वाक्यार्थपर्य्यालोचनाप्रकटीकृतप्रकृतोपयोगविरुद्धार्थकत्वम्। पर्य्यालोचितेन येन वाक्यार्थेन प्रकृतोपयोगविपरीतोऽर्थः व्यक्तीकृतः, तादृशार्थवत्त्वमिति निष्कर्षः।

सन्दिग्धत्वं—वक्त्रभिप्रेतव्यङ्ग्यार्थस्य शब्दान्निश्चितत्वेऽपि बोद्धुर्वक्तृतात्पर्य्यविषयत्वसन्देहात् संशयविषयत्वम्। अर्थद्वयस्य एकतरस्मिन् बोद्धुः तात्पर्य्यनिश्चयाभावादर्थनिश्चयप्रतिबन्धकत्वमत्र दूषकताबीजम्।

पुनरुक्तत्वं—कथितस्यापि अर्थस्य पुनः कथनम्। धनुर्ज्यादिशब्दस्थले आरूढ़त्वादिविशेषार्थबोधाय धनुरादिशब्दप्रयोगे अस्य गुणत्वमेव। अमी धनुर्ज्या-जघनकाञ्ची-करकङ्कणादयः महाकविप्रयोगे एव गुणत्वापादकाः, न त्वस्मदादिप्रयोगे। उक्तार्थस्यैव पुनः कथनेन वैरस्यापादनमेवात्र दूषकताबीजम्।

ख्यातिविरुद्धत्वं—लोक-कविसम्प्रदायप्रसिद्धिविपरीतत्वम्।

विद्याविरुद्धत्वं—अलङ्कारादिशास्त्रविपरीतार्थत्वम्।

साकाङ्क्षत्वम् — उपात्तपदार्थान्वयित्वभ्रमप्रयुक्तस्यार्थस्यानुपात्तपदार्थान्वयाकाङ्क्षत्वम्, अनन्वयित्वभ्रमेण प्रयुक्तस्य पदार्थस्यानुपपन्नपदार्थसाकाङ्क्षत्वं वा।

सहचरभिन्नत्वम्—उत्कृष्टैः सह निकृष्टस्य, निकृष्टैः सह उत्कृष्टस्य च एकान्वयित्वेन निर्देशः। भावादिप्रकर्षविघातोऽत्र दूषकताबीजम्।

अस्थानयुक्तत्वम्—अयुक्तस्थाने समापितवाक्यार्थत्वं (समापितपद्यार्थत्वं वा)। तच्च वाक्यार्थस्याधिक्योपयोगि समापनं, समापनोपयोगि चाधिक्यमिति द्विविधम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अविशेषे विशेषः,—सामान्याकारेण वक्तव्ये विशेषरूपेण अभिधानम्।

अनियमे नियमः,—अन्यव्यवच्छेदेन अवक्तव्ये तद्रूपेण कथितार्थत्वम्।

विशेषे अविशेषः,—विशेषाकारेण वक्तव्ये सामान्येन कथितार्थत्वम्।

नियमे अनियमः,—नियमेन वक्तव्ये अतथाकथितार्थत्वम्। ननु नियमद्योतकपदानभिधानं नियमपरिवृत्तिः, तदितरद्योतकपदानभिधानन्तु वाच्यानभिधानमिति भेदकल्पनेऽपि अनयोः शब्दार्थदोषतायां को नियामकः? इति चेन्न, शब्दपरिवृत्तिसहत्वासहत्वाभ्यां पूर्व्वैराद्दृतस्यापि शब्दार्थदोषविभागस्य एवं पर्य्यवसानात्; तथा हि,—यो दोषः शब्दपरिवृत्त्यसहः स शब्ददोष एव; यश्च पदार्थान्वयप्रतीतिपूर्व्वबोध्यः सोऽपि शब्ददोषः; यश्च अर्थप्रतीत्यनन्तरं बोध्यः सोऽर्थाश्रय इति।

विध्ययुक्तत्वं—विधेयत्वपर्य्याप्तयोग्ये विधेयतात्पर्य्यारोपणम्।

अनुवादायुक्तत्वं — प्रकृतविधेयस्य यद्धर्म्मविशिष्टानुवादः प्रतिकूलः, तादृशधर्म्मस्यानुवाद्यविशेषणत्वम्। अनुवाद्यविशेषणस्य प्रकृतविधिविरोधित्वं वा।

निर्मुक्तपुनरुक्तत्वं—क्रियाकर्म्मादिना उपसंहृतेऽपि वाक्यार्थे उक्तजातीयकारकस्य पुनरुपादानम्। आकाङ्क्षितस्य कारकस्य क्रियाऽन्वयेन आकाङ्क्षासमाप्तावपि पुनस्तत्कारकोपादानं वा।

अथ रसदोषाः,—रसस्य स्वशब्दवाच्यत्वं, स्थायिनः स्वशब्दवाच्यत्वं, सञ्चारिणः स्वशब्दवाच्यत्वं, विरोधिरसाङ्गीभूतविभावाद्युपादानम्, अनुभावस्य कष्टाक्षिप्तत्वं, विभावस्य कष्टाक्षिप्तत्वं, रसस्य अकाण्डे प्रथितत्वं, रसस्य अकाण्डे छेदः, रसस्य पुनःपुनरुद्दीप्तिः, अङ्गिनः अननुसन्धानम्, अनङ्गस्य कीर्त्तनम्,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अङ्गस्यातिविस्तृतिः, प्रकृतिविपर्य्ययः, अर्थानौचित्यञ्चेति चतुर्द्दशसङ्ख्यकाः।

रसस्य स्वशब्दवाच्यत्वं—रसविशेषवाचकशृङ्गारादिशब्देन रसवाचकशब्देन च रसानामुक्तिः। रसप्रकर्षबोधप्रतिबन्धकता एवात्र दूषकताबीजम्। स्थायिसञ्चारिभावयोरपि स्वशब्दवाच्यतायां पूर्व्ववदेव लक्षणम्। यद्यपि एतेषां पृथक् नाम्ना निर्द्देशः, तथाऽपि "स्वशब्दवाच्यता" इत्येव दोषस्य सामान्यतो नाम। तस्य च रस-स्थायिभाव-सञ्चारिभावगतत्वेन त्रयो भेदाः इति बोद्धव्यम्। स्ववाचकशब्देनोपादानञ्च स्वशब्दवाच्यत्वम्।

क्वचिच्च यत्र अनुभावविभावमुखेन प्रतिपादने विशदप्रतीतिर्नास्ति, यत्र वा विभावानुभावादिकृतपुष्टिराहित्यमेवानुकूलं सञ्चारिभावस्य, तत्र व्यभिचारिणः स्वशब्दवाच्यत्वं न दोषः; एवञ्च दोषाणां दूषकत्वादूषकत्वयोः रसापकर्षकत्वरूपदूषकताबीजसत्त्वासत्त्वकृतत्वात् यत्र रसप्रकर्षव्यञ्जनार्थमेव व्यभिचार्य्यादयः स्वशब्देन उपादीयन्ते तत्र अदूषकत्वमेवेति निष्कर्षः।

विरोधिरसाङ्गीभूतविभावाद्युपादानाख्यदोषस्यापि पूर्व्ववत् विभावस्थायिभाव-व्यभिचारिभावगतत्वेन भेदात् त्रैविध्यमेकपदेनैव दर्शितम्। यत्र तु प्रतिकूलरसाङ्गभूतानां विभावादीनां पर्य्यवसाने प्रकृतरसादिभिर्बाध्यत्वं, तत्र गुणत्वमेव। किञ्च प्रतिकूलरसीयासाधारणाङ्गपरिग्रह एव दोषः, न तु तत्साधारणाङ्गपरिग्रहः, उक्तरूपदूषकताबीजस्य तत्रासत्त्वात्।

अनुभावस्य कष्टाक्षिप्तत्वम्—आलम्बनोद्दीपनविभावयोरनुभावपर्य्यवसायकत्वेन रसस्य कष्टबोध्यत्वम्।

विभावस्य कष्टाक्षिप्तत्वं—विभावस्य यत्नप्रतिपाद्यत्वम्।

रसस्य अकाण्डे प्रथितत्वं—रसप्रकर्षप्रतिपादनायोग्यकाले विस्तरेण रसख्यापनम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रसस्य अकाण्डे छेदः,—रसस्य विस्तृतियोग्ये काले सहसा तद्विरतिः।

रसस्य पुनःपुनरुद्दीप्तिः,—प्रयोजनमन्तरेण एकस्यैव रसस्य भृशं समुद्बोधनम्।

अङ्गिनोऽननुसन्धानं—प्रधानभूतस्यैव वस्तुनः अकीर्त्तनम्।

अनङ्गस्य कीर्त्तनं—प्रकृतरसोपकारकवस्तुवर्णनपरिहारेण रसानुपकारकस्य वर्णनम्।

अङ्गस्यातिविस्तृतिः,—सङ्क्षेपतो वर्णनीयस्यापि अप्रधानस्यातिविस्तरेण वर्णनम्।

प्रकृतिविपर्य्ययः, — दिव्यत्व-अदिव्यत्व-दिव्यादिव्यत्वभेदभिन्नानां नायकानां धीरोदात्त-धीरोद्धतत्वादिरूपा उत्तममध्यमत्वादिरूपा च या प्रकृतिः, तस्या अनुचितवर्णनम्। नायकलक्षणं तद्भेदाश्च प्रागेव उक्ताः; एवं तेषां प्रकृत्यनुरूपतया वर्णनीयमवर्णनीयञ्च उक्तमलङ्कारशास्त्रे यथा,—"रतिर्हासश्च शोकश्च तथैवाश्चर्य्यमेव च। दिव्यानामुचितं वर्ण्यमदिव्योत्तमनेतृवत्॥ किन्तु सम्भोगशृङ्गारो वर्ण्यो नोत्तमदैवयोः। सद्यः फलप्रदः क्रोधः भ्रूकुट्यादिविवर्जितः॥ उत्साहः स्वर्गपातालगत्यब्धिलङ्घनादिषु। दिव्यानामेव नेतृणां वर्ण्यते उचितो बुधैः॥ ख्यातं लोकपुराणादौ यच्चान्यत् स्यादबाधितम्। वर्णनीयमदिव्यानामन्येषान्तूभयं बुधैः॥ पूज्यादौ तु तत्रभवन् भगवन्निति चोच्यते। भट्टारकेति राजादौ परमेशेति चोच्यते॥ इत्याद्युचितमेतेषां विरुद्धं दूषणं भवेत्॥" इति।

अन्यदर्थानौचित्यं—देश-काल-लोक-जाति-वयःप्रभृतीनामन्याय्यवर्णनम्। तत्र "देशोऽद्रिवनराष्ट्रादिः कालो रात्रिन्दिवर्त्तवः। चराचराणां भूतानां प्रवृत्तिर्लोकसंज्ञिता॥" इति। तत्र देशानौचित्यं यथा,—"कर्पूरपादपामर्शी सुरभिर्मलया-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

निलः। कलिङ्गवनसम्भूता मृगप्राया मतङ्गजाः। चोलाः कालागुरुश्यामाः कावेरीतीरभूमयः।" इति। अत्र मलये कर्पूरवृक्षस्य, कलिङ्गवने हस्त्युत्पत्तेः, चोलेषु कालागुरूणामसम्भवादनौचित्यम्। कालानौचित्यं यथा,—"पद्मिनी नक्तमुन्निद्रा स्फुटत्यह्नि कुमुद्वती। मधुरुत्फुल्लनिचुलो निदाघो मेघदुर्दिनः॥ श्रव्यहंसगिरो वर्षाः शरदो मत्तबर्हिणः। हेमन्तो निर्मलादित्यः शिशिरः श्लाघ्यचन्दनः॥" इति। लोकानौचित्यं यथा,—"आधूतकेशरी हस्ती तिग्मशृङ्गस्तुरङ्गमः। गुरुसारोऽयमेरण्डो निःसारः खदिरद्रुमः॥" इति। उक्तरूपानौचित्यस्य न केवलं रसापकर्षकत्वं दूषकताबीजम्, अपि तु काव्यस्य प्रवृत्तिनिवृत्त्युपदेशपरत्वव्याघातकत्वमपि। अस्यापि अलौकिकविभूत्यादिवर्णने क्वचिददोषत्वम्; यथा—"नित्यपद्मा नलिन्यः" इत्यादि।

"प्रत्यनीकौ रसौ द्वौ द्वौ तत्सम्पर्कं विपर्य्ययेत्।" इति नियमात् विरुद्धरसयोः समावेशे दोषः इत्युक्तं, विषयविशेषे तत्समावेशे अदोषश्चात्र दर्शितः। तथाहि,—प्रकृतरसेन तद्विरोधिरसस्य अतीतस्यापि व्यञ्जनया ज्ञाने, अनुभावादिसाम्यात् सादृश्यतया कथने, तथा प्रधानस्याङ्गतया परिपोषणे च नायं दोषः। सर्व्वेषामेव दोषाणामनुकरणरूपेण वर्णने अदोषत्वमेव। येषां दोषाणां क्वचिददोषताऽपि, ते अनित्याः; तदितरे च नित्याः।

अलङ्कारदोषाः,—उक्तकाव्यदोषेभ्यः पृथक्त्वेन अलङ्कारेषु दोषा न सम्भवन्ति; अतः पूर्व्ववर्णिता एव अलङ्कारगताश्चेत् अलङ्कारदोषतया कथ्यन्ते। तत्र उपमायां साधारणधर्म्मस्याप्रसिद्धिः, उपमानाप्रसिद्धिर्वा, तथा उपमायामुपमानस्य उपमेयजात्यपेक्षया अतिनिकृष्टत्वमत्युत्तमत्वं वा,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उपमेयपरिमाणापेक्षया उपमानपरिमाणस्यात्यल्पत्वमत्यधिकत्वं वा, अर्थान्तरन्यासे उत्प्रेक्षितार्थसमर्थनञ्च अलङ्कारगताऽनुचितार्थत्वम्।

यमकस्य पादत्रयगतत्वेन कथनमप्रयुक्तत्वं दोषः। उत्प्रेक्षायां यथाशब्दस्योत्प्रेक्षाद्योतकत्वेनोपादानमवाचकत्वम्। अनुप्रासे तद्घटकवर्णानां प्रकृतरसाविरोधिरसानुगुणवर्णघटितत्वस्य प्रतिकूलवर्णत्वम्। उपमायां साधारणधर्मस्याधिक्यमधिकपदत्वं, तस्य न्यूनत्वं न्यूनपदत्वम्। उपमानोपमेययोर्लिङ्गवचनभेदे कालपुरुषविध्यादिभेदे च यदि साधारणधर्ममन्यरूपमेकतरस्यैवान्वययोग्यं कुर्य्यात्, तदा सधर्मः यदन्वययोग्यस्तत्रैव तद्धर्मान्वयावगमात् तद्धर्मविशिष्टस्यैव उपमेयत्वमुपमानत्वं वा प्रतीयमानेन व्यङ्ग्येन धर्मान्तरेणैव प्रतीयते इत्यतः उपक्रान्तधर्मेण उपमारूपार्थस्य अनिर्व्वाहात् यत्र तथाविधप्रक्रान्तरहितवर्णनं, तत्र भग्नप्रक्रमत्वम्; यत्र लिङ्गवचनभेदेऽपि साधारणधर्मस्यान्यथाभावः, तत्र न दोषः, यथा "मुखं चन्द्र इवाभाति" इत्यादि।

अनुप्रासस्य रसाद्युत्कर्षानाधायकत्वेन मुख्यार्थानुपकारित्वमस्फुटार्थत्वम्। समासोक्तौ प्रकृतसाधारणविशेषणवशात् परार्थस्य प्रतीतावपि पुनस्तस्य शब्देन उपादानस्य, तथा अप्रस्तुतप्रशंसायामपि व्यञ्जनयैव प्रस्तुतार्थावगतेः पुनः शब्देन तदभिधानस्य च पुनरुक्तत्वम्।

अनुप्रासे अनुप्रासित-पदार्थयोः विवक्षितेऽन्वये लोकतः शास्त्रतः वा प्रसिद्धिविरहः ख्यातविरुद्धत्वम्।

कविसम्प्रदायख्याततायाः ख्यातविरुद्धतायाः गुणत्वम्। तत्र सम्प्रदायस्त्रिविधः, तथा चोक्तम्,—"असतोऽपि निबन्धेन सतामप्यनिबन्धनात्। नियमस्य पुरस्कारात् सम्प्रदायस्त्रिधा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कवेः॥" इति। असतो निबन्धनं यथा,—"रत्नानि यत्र तत्राद्रौ हंसाद्यल्पजलाशये। जलेभाद्यं नभोनद्यामम्भोजाद्यं नदीष्वपि॥ तिमिरस्य तथा मुष्टिग्राह्यत्वं सूचिभेद्यता। शुक्लत्वं कीर्त्ति-पुण्यादौ कार्ष्ण्यं चाकीर्त्त्यघादिषु॥ आकाशकर्त्तृकं नक्तं तमसो वर्षणं तथा। प्रतापे रक्ततोष्णत्वे रक्तत्वं क्रोधरागयोः॥ ज्योत्स्नापानं चकोराणां शैवालं सर्व्ववारिषु। केशराशोकयोः स्त्रीणां गण्डूषात् पादघाततः॥ मासान्तरेऽपि पुष्पाणि रोमालिस्त्रिवलिः स्त्रियाम्॥" सतामनिबन्धनं यथा,—"वसन्ते मालतीपुष्पं फलपुष्पे च चन्दने। कामिदन्तेषु कुन्दानां कुड्मलेषु च रक्तता॥ नारीणां श्यामता पातः स्तनयोः यच्च वा क्रियेः॥" नियमाख्यानं यथा,—"हिमवत्येव भूर्ज्ज-त्वक् चन्दनं मलये परम्। हेमन्तशिशिरौ त्यक्त्वा सर्व्वदा कमलस्थितिः॥ सामान्यग्रहणे शौक्ल्यं पुष्पाभ्रच्छत्रवाससाम्। ध्वजचामरहंसानां हाराणां वकभस्मनोः॥ कृष्णत्वं शैलवृक्षादि-मेघवारिधिवीरुधाम्। भिल्लानामसुराणाञ्च धूपपङ्कशिरो-रुहाम्॥ लौहित्यं धातुमाणिक्यजपारत्नविवस्वताम्। पद्म-पल्लवबन्धूकदाड़िमीकरजादिषु॥ पीतत्वं शालिमण्डूकवल्क-लेषु परागके। वर्षास्वेव शिखिप्रौढ़िर्मधावेव पिकध्वनिः॥" अन्यच्च,—"कमलासम्पदोः कृष्णहरितोर्नागसर्पयोः। पीतलोहि-तयोः स्वर्णपरागाग्निशिखादिषु॥ चन्द्रे शशैणयोः कामध्वज-मकरमत्स्ययोः। दानवासुरदैत्यानामैक्यमेवाभिसंहितम्॥" अपि च—"चिरन्तनस्यापि तथा शिवचन्द्रस्य बालता। मानवा मौलितो वर्ण्या देवाश्चरणतः पुनः॥ भुवनानि निबध्नीयात्त्रीणि सप्त चतुर्दश। चतस्रोऽष्टौ दश दिशः चतुरः सप्त चाम्बुधीन्। अष्टादश स्मृता विद्याश्चतस्रश्च चतुर्दश। ये स्थले ते जले जीवा भिन्दन्त्यर्कं रणे मृताः॥ महत्त्वमादौ सर्गान्ते सूक्ष्मता जगता

मपि। शैलादिर्भिद्यते शब्दान्नभः शतधनूपरि*॥ नाम तत्तदुपाधौ स्याच्छङ्करो वृषवाहनः। चिह्नत्वे च वृषाङ्कोऽयं ध्वजे सत्त्वाद् वृषध्वजः॥ शूली न सर्पी गिरिशः शशी न हरिणी विधुः। इन्दुमौलिर्महादेवो गङ्गामौलिर्न तु क्वचित्॥" इत्यादयः। आकरे तु "मालिन्यं व्योम्नि पापे" इत्यादिकं द्रष्टव्यम्।

अथ दोषाणां परस्परभेदाः,—दुःश्रवत्वे,—श्रुतिपरुषवर्णानामेव प्रयोगः; प्रतिकूलवर्णत्वे तु—रसापकर्षकत्वरूपदूषकताबीजसत्त्वेन वीरादिरसे सुललितवर्णप्रयोगोऽपीत्यनयोर्भेदः।

निहतार्थत्वे,—कोषादिप्रसिद्धानेकार्थस्यापि शब्दस्य कविभिरनादृतत्वात् अप्रसिद्धेऽर्थे प्रयोगः; अप्रतीतत्वे तु—एकार्थस्यापि शब्दस्य सार्वत्रिकप्रयोगाभाव इत्यनयोर्भेदः।

निहतार्थत्वे,—कोषादिप्रसिद्धानेकार्थस्यापि शब्दस्य तदर्थे विरलप्रयोगः; असमर्थत्वे तु—अनेकार्थस्यापि शब्दस्य यदर्थे सर्व्वथा प्रयोगासत्त्वेन शक्तिग्रहाभावः, तदर्थे प्रयोग इत्यनयोर्भेदः।

अप्रयुक्तत्वे,—तेन रूपेण कोषादिप्रसिद्धिसत्त्वेऽपि कविभिरप्रयुक्तस्य तदर्थबोधानुकूलशक्तिमतः शब्दस्य तदर्थे प्रयोगः; असमर्थत्वे तु—यदर्थे सर्व्वथा प्रयोगाभावः, (तत्तदर्थे व्याकरणादिप्रसिद्धिसत्त्वेऽपि) तदर्थबोधाननुकूलशक्तिमतां शब्दानां तदर्थे अशक्तिकृतः प्रयोग इत्यनयोर्भेदः।

असमर्थत्वे,—हन्त्यादीनां गमनार्थकत्वेन व्याकरणादौ पठितत्वेऽपि न तदर्थबोधने सामर्थ्यम्; अवाचकत्वे तु—शक्त्या तदर्थबोधकत्वाभावेऽपि प्रकरणादिपर्य्यालोचनया तदर्थावगतिरित्यनयोर्भेदः।

क्लिष्टत्वे,—एकस्मिन्नेव वाक्ये दुर्बोध्यशब्दप्रयोगात् अर्थबोध-

* धनुःशब्दवत् चतुर्हस्तपरिमाणवाचक-उकारान्तधनुशब्दोऽपि दृश्यते।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

व्याघातः ; सङ्कीर्णत्वे तु—वाक्यान्तरीयपदानां वाक्यान्तरे अनुप्रवेशात् विवक्षितार्थबोधव्याघात इत्यनयोर्भेदः।

विधेयाविमर्षे,—यदेव पदमविमृष्टं, तदेव दुष्टम् ; अभवन्मतसम्बन्धत्वे तु—प्रधानस्य प्राधान्येनाप्रतीतेः सर्व्वेषां तदङ्गतया अप्रतीतिरिति सर्व्ववाक्यार्थविरोधावभासः इत्यनयोर्भेदः।

विधेयाविमर्षे,—उद्देश्यविधेययोः पौर्व्वापर्य्यविपर्य्ययमात्रमेव ; विध्ययुक्ततायान्तु—तयोः पौर्व्वापर्य्यविपर्य्ययाभावसत्त्वेऽपि विवक्षितस्य आनन्तर्य्यस्यानभिधानमित्यनयोर्भेदः।

अधिकपदत्वे,—एकेन शब्देन प्रतिपादितस्यैव अर्थस्य भङ्ग्या शब्दान्तरेणापि पुनः प्रतिपादनम् ; पुनरुक्तत्वे तु—कथितस्यैवार्थस्य पुनः कथनमित्यनयोर्भेदः।

अधिकपदत्वे,—पदार्थयोरन्वयबोधदशायामेव अन्वयबाधावभासः ; अपुष्टत्वे तु—पदार्थान्वयप्रतीतेः पश्चात् विशेषणस्य प्रकृतार्थप्रकर्षसाधकत्वाभावपर्य्यालोचनया बाधप्रतिभास इत्यनयोर्भेदः।

अधिकपदत्वे,—शब्दज्ञानानन्तरमेव दोषप्रतिभासः, नियमव्यतिरिक्तार्थद्योतकपदप्रयोगश्च ; अनियमपरिवृत्तौ तु—अर्थप्रतीत्यनन्तरं दोषस्फूर्त्तिः, नियमार्थद्योतकपदाभिधानञ्चेत्यनयोर्भेदः।

न्यूनपदत्वे,—"यदि मय्यर्पिता दृष्टिः" इत्यादौ "त्वया" इत्यादिवाचकपदस्यैवानभिधानम् ; वाच्यानभिधाने तु—"व्यतिक्रमलवम्" इत्यादौ द्योतकपदस्यापीत्यनयोर्भेदः।

न्यूनपदत्वे,—वाचकपदस्यानभिधानम् ; नियमपरिवृत्तौ तु—"आपातसुभगी" इत्यादौ नियमद्योतकपदस्येत्यनयोर्भेदः।

न्यूनपदत्वे,—"यदि मय्यर्पिता" इत्यादौ "त्वया" इत्यादिशब्दस्यैवाध्याहारः ; साकाङ्क्षत्वे तु—प्रकृतवाक्यार्थान्वयबोधे

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आकाङ्क्षाया अनिरासादन्वयबोधार्थम् अर्थस्यैव इत्यनयो-र्भेदः ।

कथितपदत्वे,—पूर्व्वं यत्पदं कथितं तत्समानाकारकशब्द-स्यैव पुनः प्रयोगो दोषः ; अनवीकृतत्वे तु—वैचित्र्यविशेषासत्त्वे कथितपदस्य पर्य्यायान्तरेणापि पुनरुपादानेऽपि दोष इत्य-नयोर्भेदः ।

कथितपदत्वे,—उद्देश्यप्रतिनिर्द्देश्यव्यतिरिक्त एव विषयः ; भग्नप्रक्रमतायान्तु—दोषपरिहारार्थं "रावणः प्रत्यभाषत" इत्यत्र "रावणः प्रत्यवोचत" इति पाठकल्पनेऽपि न कथितपदताया आशङ्का, तस्या उद्देश्यप्रतिनिर्द्देश्यव्यतिरिक्तविषयकत्वात्, भग्न-प्रक्रमतायास्तु उद्देश्यप्रतिनिर्द्देश्यभावविषयेऽपि सम्भवादित्य-नयोर्भेदः ।

पतत्प्रकर्षतायां,—शब्दकृतानुप्रासादेः प्रकर्षस्य क्रमशः पातः ; व्याहतत्वे तु—प्रागुक्तयोः कस्यचिदुत्कर्षापकर्षयोः पश्चा-दर्थपर्य्यालोचनसापेक्षः तदन्यथाप्रतिपत्तिबोध इत्यनयोर्भेदः ।

समाप्तपुनरात्तत्वे—अन्वयबोधजननान्निराकाङ्क्षस्यापि विशे-ष्यस्य विशेषणान्तराकाङ्क्षया एकस्मिन् एव वाक्ये पुनर्विशेषणा-न्तरस्योक्तिः ; अर्द्धान्तरैकपदत्वे तु—पूर्व्वार्द्धगतवाक्यघटकैक-पदस्य परार्द्धगतवाक्यान्तरेऽनुप्रवेश इत्यनयोर्भेदः ।

समाप्तपुनरात्तत्वे,—अन्वयबोधजननान्निराकाङ्क्षस्यापि विशे-ष्यस्य विशेषणान्तरेण अन्वयार्थं पुनरनुषङ्गः ; निर्मुक्तपुनरुक्तत्वे तु—आकाङ्क्षितस्य कारकस्य क्रियाऽन्वयेन समाप्तावपि पुन-स्तत्कारकोपादानमित्यनयोर्भेदः ।

अस्थानस्थपदत्वे,—वाचकपदस्य यथोक्तक्रमाभावः ; अक्र-मतायान्तु—स्वार्थान्वितार्थकद्योतकपदस्य प्रत्यासत्तिरूप-क्रम-स्याभाव इत्यनयोर्भेदः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अस्थानस्थपदत्वे,—अयथास्थानस्थितस्य पदस्य यथास्थान-निवेशेन अन्वयबोधानन्तरं सम्बन्धप्रतीतिः; अभवन्मतसम्बन्धत्वे तु—कवेरभिमतस्यापि सम्बन्धस्य निराकाङ्क्षतया अयोग्यतया वा अनुपपत्तिरिति अन्वयज्ञानात् परमपि सम्बन्धप्रतीत्यभाव इत्य-नयोर्भेदः।

अनुचितार्थत्वे,—शब्दश्रवणानन्तरमेव विरुद्धार्थप्रतीतिः; प्रकाशितविरुद्धतायान्तु—वाक्यार्थपर्य्यालोचनसापेक्षं विरुद्धार्थ-व्यञ्जनमित्यनयोर्भेदः।

अमतपरार्थत्वे,—"राममन्मथशरेण ताड़िता—" इत्यादौ नियमेन वाक्यान्वयव्यतिरेकानुविधायित्वम्; अश्लीलत्वादौ तु—"हन्तुमेव—"इत्यादावर्थाश्लीलतायां हन-धात्वादेः पारिभाषिक-निर्घातादिबोधकत्वं नियमतो नोपपद्यते, परन्तु समभिव्याहृत-पदार्थतात्पर्य्यपर्य्यालोचनया तदर्थकत्वकल्पनेनेत्यनयोर्भेदः।

अक्रमत्वे,—शब्दस्य स्वार्थान्वितार्थकपदप्रत्यासत्तिरूप-क्रम-विपर्य्ययः; दुष्क्रमत्वे तु—पदार्थतात्पर्य्यपर्य्यालोचनावगम्यः अर्थस्य क्रमविपर्य्यय इत्यनयोर्भेदः।

नियमपरिवृत्तौ,—पदार्थान्वयप्रतीत्यनन्तरं दोषावभासः, नियमद्योतकपदानभिधानञ्च; वाच्यस्यानभिधाने तु—शब्दोच्चा-रणानन्तरमेव दोषप्रतीतिः, नियमव्यतिरिक्तार्थद्योतकपदानभि-धानञ्चेत्यनयोर्भेदः।

एवमन्येषामपि दोषाणां परस्परभेदाः लक्षणपर्य्यालोचनया सुधीभिः स्वयमूहनीया इत्यलमतिपल्लवितेन।

## अष्टमपरिच्छेदे—

अथ गुणाः उच्यन्ते,—लोके यथा आत्मनः उत्कर्षहेतुत्वात् शौर्य्यादयः गुणशब्दवाच्याः, तथा काव्ये विभावाद्यङ्गसमुदय-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

Jangamwadi Math, Varanasi
Acc. No. ........



सम्बन्धादङ्गित्वमाप्तस्य रसस्य उत्कर्षाधायकाः धर्म्माः माधुर्य्यादयः गुणा इत्युच्यन्ते। एषाञ्च—क्वचित् रसाभाववति काव्ये गुणाभिव्यञ्जक-शब्दार्थयोः सत्त्वेऽपि नीरसतया माधुर्य्यादेरननुभवात्, क्वचिच्च तदसत्त्वेऽपि रसवत्त्वेनैव तदभ्युपगमात् रसान्वयव्यतिरेकानुविधायितया रसधर्म्मत्वमवगन्तव्यम्। रसाभिव्यञ्जकावेव शब्दार्थौ गुणस्याप्यभिव्यञ्जकौ वेदितव्यौ। एवञ्च एषां वामनाद्युक्तं शब्दार्थधर्म्मत्वं परम्परया बोध्यम्; सा च स्वाश्रयाभिव्यञ्जकत्वरूपा ज्ञेया। ते च गुणाः माधुर्य्यमोजः प्रसाद इति त्रिविधाः।

तत्र माधुर्य्यं—शृङ्गार-करुण-शान्तरसोद्बोधनानन्तरं जायमानः रत्याद्यविषयकः सहृदयचित्तद्रवीभावरूपकेवलानन्दसन्दोहानुभवः। जनकत्वसम्बन्धेन रससम्बन्धितया चास्य रसधर्म्मत्वम् अक्षतमेव।

ननु काव्यप्रकाशकृता पुनर्माधुर्य्यलक्षणम् "आह्लादकत्वं माधुर्य्यं शृङ्गारे द्रुतिकारणम्" इत्युक्तम्; इह तु आह्लादः, कथमेतत्? इति चेन्न; आह्लादातिरिक्तस्य द्रवीभावस्य निर्व्वक्तुमशक्यतया आह्लाद एव तत्पर्य्यवसानमिति आह्लादाभिन्नत्वेन माधुर्य्यस्य तत्कार्य्यत्वाभावात्, आह्लादजनकत्वापेक्षया लघुनः आह्लादत्वस्यैव माधुर्य्यपदशक्यतावच्छेदकत्वसम्भवे गुरुधर्म्मे तत्कल्पनस्यानुचितत्वाच्च। एवञ्चाह्लाद एव माधुर्य्यपदार्थः इति निष्कर्षः। ननु द्रवीभावस्तावदाह्लाद एव, तस्य च रसाभिन्नतया कथं रसधर्म्मत्वम्? इति चेन्न; द्रवीभावस्य रत्यादिविषयसंवलितरसास्वादेन जायमानसहृदयचित्तार्द्रप्रायत्वरूपत्वस्वीकारादिति निपुणैर्विभाव्यम्।

तच्च माधुर्य्यं सम्भोगापेक्षया करुणे, तदपेक्षया विप्रलम्भे, तदपेक्षया च शान्ते उत्कर्षातिशयजनकम्। एवञ्च तत्तद्रसा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भासेष्वपि च क्रमादुत्तरोत्तरमुत्कर्षातिशयजनकत्वमस्य बोध्यम्। तत्र माधुर्य्याभिव्यक्तौ,—अग्रभागे स्वस्ववर्गान्त-ङादिपञ्चमवर्णैः संयुक्ताः ट-ठ-ड-ढभिन्नाः कादयो मान्ता वर्णाः, तथा विसर्ग-वर्णान्तरायुक्तौ अयुक्तान्तौ च रेफ-णकारौ, एवं निरुक्तवर्णबहुला असमासा अल्पसमासा वा बहुतरककशवर्णरहिता सुकुमा-रार्थप्रतिपादिका मधुरा रचना च कारणम्।

ओजः,—उत्साहाद्याकारानुविद्धचमत्कारोद्बोधेन समुत्पद्य-मानः उत्साहाद्यविषयकचमत्कारोद्बोधः, चित्तविस्फाररूपं दीप्तत्वं वा। एतच्च वीर-बीभत्स-रौद्ररसेषु क्रमेणोत्तरोत्तरम् उत्कर्षजनकम्। एवं तत्तद्रसाभासादिष्वपि उक्तक्रमेण उत्त-रोत्तरमस्य उत्कर्षजनकत्वं बोध्यम्। ओजसोऽभिव्यक्तौ,—वर्ग-स्याद्यतृतीयाभ्यां वर्णाभ्यां संयुक्तौ द्वितीयचतुर्थौ वर्णौ, उपरि अधः तदुभयत्र वा रेफयुक्ता विसर्गयुक्ताश्च वर्णाः, तथा ट-ठ-ड-ढ-श-षादिकाः माधुर्य्यव्यञ्जकातिरिक्ताश्च वर्णाः, एवं बहुल-समासा ओजोव्यञ्जकवर्णघटिता उद्भटाक्षरबहुला उद्भटार्थप्रति-पादिका रचना च कारणम्।

प्रसादः,—शुष्ककाष्ठसंलग्नानलवत् झटिति सहृदयानां मनसो अन्यव्यासङ्गनिराकरणेन निर्म्मलतापादकः गुणः। सर्व्वेषु च रसेषु अस्य सद्भावः। ओजोमाधुर्य्यवदस्य रचनाविशेषरूपो व्यञ्जको नास्ति, किन्तु श्रवणमात्रतोऽर्थबोधकाः सुललिताः शब्दा एव अस्य व्यञ्जकाः।

ननु गुणानामेषां रसधर्म्मत्वस्वीकारे प्राचीनसम्मतशब्दार्थ-धर्म्मत्वं कथमुपपद्यते? इति चेन्न; स्वाश्रयरसाभिव्यञ्जकत्व-रूपपरम्परासम्बन्धेन तदुपपत्तेः; तथा हि,—यथा शौर्य्यादे-रात्मधर्म्मस्य शरीरवृत्तित्वं, यथा वा स्थूलत्वादेः शरीरधर्म्मस्य आत्मवृत्तित्वं परम्परासम्बन्धेन, तथा अत्रापि।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र चिरन्तनोक्तानामपि श्लेषादिदशगुणानां माधुर्य्यादावेवान्तर्भावसम्भवात् न ते पृथगभिहिताः ; तथा हि,—तत्र श्लेषः, समाधिः, औदार्य्यं, प्रसाद इत्येतेषां चतुर्णां गुणानाम् ओजसि अन्तर्भावः। पृथक्पदत्वरूपमाधुर्य्यस्य यथोक्तमाधुर्य्येऽन्तर्भावः। पदानां झटित्यर्थावबोधरूपायाः अर्थापत्तेः प्रसादे अन्तर्भावः। ग्राम्यदुःश्रवतात्यागेन च सौकुमार्य्यं कान्तिश्चेति शब्दगतगुणद्वयस्य स्वीकारः कृतः। समतायाः मार्गाभेदस्वरूपत्वे दोष एवान्तर्भावः, अन्यथा तु उक्तगुणेष्वेव इति न पृथगुक्तिः।

ओजः,—स्वाभिप्रायत्वरूपम्; प्रसादः,—अर्थवैमल्यम्; माधुर्य्यम्—उक्तिवैचित्र्यम्; सौकुमार्य्यम्—अपारुष्यम्; उदारता—अग्राम्यत्वम्; इत्युक्तलक्षणकाः प्राचीनोक्ताः पञ्चविधाः अर्थगुणाः यथाक्रममपुष्टार्थत्वाधिकपदत्वानवीकृतत्वामङ्गलरूपाश्लीलत्वग्राम्यत्वदोषाणां निराकरणेनैव गुणत्वेनाङ्गीकृताः ; तथा वस्तुस्वभावस्फुटीकरणरूपा अर्थगता अर्थव्यक्तिः स्वभावोक्तिनामकालङ्कारस्वीकारेणैवाङ्गीकृता। दीप्तरसत्वरूपाया अर्थगतायाः कान्तेः रसध्वनिगुणीभूतव्यङ्ग्याभ्यां परिग्रहः कृतः। वैचित्र्यमात्ररूपार्थश्लेषगुणस्य, दोषराहित्यरूपायाः समतायाश्च न पृथग्गुणत्वं, समाधेरपि असाधारणशोभानाधायकत्वात् न गुणत्वम्; तेन प्राचीनोक्ता अर्थगुणाः उक्तगुणेभ्यः न पृथगिति सुधीभिर्द्रष्टव्यम्।

## नवमपरिच्छेदे—

अथ रीतिः,—यथा लोके विलक्षणमुखाद्यवयवसन्निवेशविशेषवशात् परस्परमङ्गानां शोभनसम्बन्धः शरीरस्य शोभाऽतिशयं जनयन् शरीरिणः उपकारकः, तथा गुणाभिव्यञ्जकवर्णादीनां यथास्थानं विनियोगः शब्दार्थशरीरस्य रसात्मकस्य

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

काव्यस्य आत्मभूतरसानां स्वाश्रयव्यङ्ग्यरसादिवृत्तिगुणाभिव्यञ्जकतया उत्कर्षाधायकः रीतिरित्युच्यते।

सा पुनः वैदर्भी, गौड़ी, पाञ्चाली, लाटी चेति चतुर्विधा। विदर्भ-गौड़-पाञ्चाल-लाटदेशोद्भवैः कविभिः सम्मतत्वाच्च अस्या यथायथं वैदर्भ्यादिसंज्ञा वेदितव्या।

तत्र वैदर्भी—माधुर्य्यव्यञ्जकवर्णघटिता सुकुमाराक्षरप्राया सुकुमारार्था अल्पसमासा समासरहिता वा रचना।

गौड़ी—ओजःप्रकाशकवर्णघटिता उद्भटार्थप्रतिपादिका बहुतरसमासयुक्ता रचना।

पाञ्चाली—पूर्व्वोक्तवैदर्भीगौड्योः व्यञ्जकवर्णव्यतिरिक्तवर्णघटिता पञ्चषसमस्तपदसमन्विता रचना।

लाटी—ओजोव्यञ्जकेतरैः वर्णैः घटिता अंशतः वैदर्भीलक्षणान्विता अंशतश्च पाञ्चालीलक्षणान्विता मिश्रा रचना। आसु च रीतिषु क्वचिद् वक्तृवाच्ययोः औद्धत्यसौकुमार्य्याभ्यां, प्रबन्धस्य स्वभावेन वा उपक्रान्तायाः प्रकृतेः रसाभिव्यञ्जिकाया वा रीतेर्विपरीता रचनादयः कार्य्याः।

केचित्तु,—"गौड़ी डम्बरबन्धा स्यात् वैदर्भी ललितक्रमा। पाञ्चाली मिश्रभावेन लाटी तु मृदुभिः पदैः॥" इत्येवं रीतीनां लक्षणान्याहुः।

अन्ये तु रीतेः षड्विधत्वमाहुः, यथा—"वैदर्भी चाथ पाञ्चाली गौड़ीयावन्तिकी तथा। लाटीया मागधी चेति षोढ़ा रीतिर्निगद्यते॥" इति।

## दशमपरिच्छेदे—

अथ अलङ्काराः।—अलङ्कारत्वं,—काव्यत्वाव्यापकत्वे सति शब्दार्थगतसौन्दर्य्यातिरेकजनकरसाद्युपकारकशब्दार्थधर्म्मत्वम्। अलङ्काराणाञ्च शोभाऽतिशयजनकत्वमङ्गदादिवत् वेदितव्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तथा हि,—यथा लोके देहिनां शरीरावयवेषु परिहिता अङ्गदादयः शरीरशोभाजननेन शरीरिणमुत्कर्षयन्तः अलङ्कारपदवाच्याः, तथा शब्दार्थशरीरस्य रसात्मकस्य काव्यशरीरिणः शब्दार्थयोः शोभाऽऽतिशय्याधायकतया आत्मभूतस्य रसस्य उत्कर्षातिशयजनकाः धर्म्माः अलङ्काराः इत्युच्यन्ते। काव्ये गुणानां रसधर्म्मतया नियतावश्यकत्वम्, अलङ्काराणान्त्वनियतावश्यकत्वमिति बोध्यम् ।

ते च शब्द-अर्थ-तदुभयगतत्वेन त्रिधा । शब्दपरिवृत्तिसहत्वासहत्वाभ्यामेषां यथायथं शब्द-अर्थ-तदुभयालङ्काररूपत्वम् ; तथा हि,—यत्र शब्दपरिवर्त्तनेन तत्पर्य्यायकशब्दान्तरोपादानेन च न तदलङ्कारसम्भावना, तत्र शब्दालङ्कारत्वम् ; यत्र च शब्दपरिवर्त्तनेन तत्पर्य्यायकशब्दान्तरोपादानेन च न तदलङ्कारव्याघातः, तत्रार्थालङ्कारत्वम् ; यत्र च अंशतः शब्दपरिवर्त्तनं, अंशतश्च न शब्दपरिवर्त्तनं, तत्रोभयालङ्कारत्वम् ।

शब्दार्थयोः प्रथमं शब्दस्य बुद्धिविषयत्वात् शब्दालङ्कारस्यैव प्राक् कथनौचित्ये शब्दार्थोभयालङ्कारस्यापि प्राचीनैः शब्दालङ्कारमध्ये एव परिगणितत्वात् ग्रन्थकृता स एव प्रथममभिहितः । स च एक एव पुनरुक्तवदाभासनामा ; तल्लक्षणन्तु—विभिन्नाकारसार्थकानर्थकशब्दगामित्वे सति एकार्थत्वेन आपाततः प्रतीयमानत्वमिति ।

शब्दालङ्काराश्च षट्,—अनुप्रासः, यमकं, वक्रोक्तिः, भाषासमः, श्लेषः, चित्रमिति । * तत्र च अनुप्रासः,—वर्णपदैकदेश-

---

* "अत्र शिष्याणामभ्यसनसौकर्य्यार्थं शब्दालङ्कृतयः काव्यवशेनोपन्यस्यन्ते, तथा हि,—

अनुप्रासोऽथ यमकं वक्रोक्तिस्तदनन्तरम् ।
भाषासमेन संयुक्तो श्लेषचित्रे तथा स्मृते ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पदानामन्यतमस्य कत्वादिरूपेण, एकस्थानोच्चार्य्यत्वरूपेण वा साद्दृश्येन पुनःपुनरावर्त्तनम्; स च छेक-वृत्ति-श्रुति-अन्त्य-लाटानुप्रासभेदात् पञ्चविधः।

तत्रापि छेकानुप्रासः,—अनेकव्यञ्जनस्य स्वरूपतः क्रमतश्च सकृत् साम्यम्।

वृत्त्यनुप्रासः,—अनेकव्यञ्जनस्य स्वरूपतः सकृत् साम्ये एकः, असकृत् साम्ये अपरः, स्वरूपतः क्रमतश्च असकृत् साम्ये चान्यः, एकव्यञ्जनस्य सकृत् साम्ये एकः, असकृत् साम्ये चापर इति पञ्चविधः।

श्रुत्यनुप्रासः,—तालुरदाद्येकस्थानोच्चार्य्यत्वेन व्यञ्जनसादृश्यम्। अन्त्यानुप्रासः,—यथासम्भवमनुस्वार-विसर्ग-स्वरयुक्तपद-पादान्तगतव्यञ्जनस्य तदाद्येन स्वरेण सह पुनरावर्त्तनम्। तात्पर्य्यमात्रतो लाटानुप्रासः,—भिन्नत्वे सति शब्दार्थपौनरुक्त्यम्। एवञ्च नव अनुप्रासभेदा वेदितव्याः।

यमकम्,—अर्थे सति विभिन्नार्थकस्य स्वरव्यञ्जनसमूहस्य पूर्व्वक्रमेण पुनः आवृत्तिः। तच्च पदपदार्द्धश्लोकावृत्तित्वेन पादाद्यावृत्तेश्चानेकविधतया प्रभूततमभेदम्। तत्र प्रथमं पाद-पादैकदेश-पद्य-पद्यार्द्धावृत्तित्वेन चतुर्व्विधम्। तत्रापि पादयमकस्य—प्रथमपादस्य द्वितीयाद्यन्यतमस्मिन्, द्वितीयादिसमुदये, द्वितीयतृतीयसमुदये, द्वितीयचतुर्थसमुदये च आवृत्तौ; एवं द्वितीयपादस्य तृतीयाद्यन्यतमस्मिन्, तृतीयादिसमुदये च; तथा तृतीयपादस्य चतुर्थे वा आवृत्तौ दशविधत्वम्। श्लोकार्द्धयमकस्य तु,—प्रथमार्द्धस्य द्वितीयार्द्धे आवृत्तौ एकः; प्रथमपादस्य द्वितीये, तृतीयस्य च चतुर्थे आवृत्तौ अपरः; द्वितीयस्य तृतीये, तृतीयस्य च चतुर्थे पादे आवृत्तौ अन्य इति त्रैविध्यम्। श्लोकयमकस्य विजातीयचतुष्पादावृत्त्या एकरूप

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

चतुष्पादावृत्त्या च द्वैविध्यं सम्भवति। एवमन्यथाऽपि यमकभेदाः स्वयमूहनीयाः।

वक्रोक्तिः,—प्रथमवक्तृवाक्यश्लेषस्य स्ववाक्यस्थकाकोर्वा साहाय्यात् प्रथमवक्तुर्वाक्यस्यान्याभिप्रायकत्वप्रत्यायकत्वेनाभिधानम्। सा च श्लेषमूलकत्व-काकुमूलकत्वनिबन्धनभेदाद् द्वैविध्यं भजते।

भाषासमः,—विविधास्वपि भाषासु एकाकारशब्दघटितवाक्यरचनम्।

श्लेषः,—एकप्रयत्नोच्चार्य्यत्वेन लुप्तभेदानां वर्णादीनाम् अनेकार्थपदकरणकानेकार्थाभिधानम्। स च प्रथमं वर्ण-प्रत्यय-लिङ्ग-प्रकृति-पद-विभक्ति-वचन-भाषागतत्वेनाष्टधा ; ततश्च तेषामपि यथासम्भवं सभङ्ग-अभङ्ग-तदुभयात्मकतया भेदाः स्वयं ऊहनीयाः।

अत्र केचिदाहुः,—सभङ्गः श्लेषः एव शब्दश्लेषविषयः, अभङ्गश्लेषस्तु अर्थश्लेषविषय इति ; तदन्ये न मन्यन्ते, तथा हि,—ध्वनिगुणीभूतव्यङ्ग्यदोषगुणालङ्काराणां शब्दार्थगतत्वेन व्यवस्था "तत्सत्त्वे तत्सत्ता अन्वयः, तदसत्त्वे तदसत्ता व्यतिरेकः" इति न्यायप्राप्तान्वयव्यतिरेकाभ्यां स्थिरीकृतेति इहापि यत्र शब्दपरिवर्त्तनेऽपि न श्लेषत्वखण्डना, तत्रार्थश्लेषः ; यत्र तु शब्दपरिवर्त्तनं न सहते, तत्र शब्दान्वयव्यतिरेकानुविधायित्वात् शब्दालङ्कारत्वमेव इति समाधानम्। यमकश्लेषादौ डलयोर्बवयोर्लरयोरभिन्नत्वमङ्गीकृतमिति ; तथा च,—"यमकादौ भवेदैक्यं डलयोरलयोर्बवोः। शषयोर्नणयोश्चान्ते सविसर्गाविसर्गयोः॥ सबिन्दुकाबिन्दुकयोः स्यादभेदप्रकल्पनम्॥" इति।

चित्रत्वं,—पद्माद्याकारजनकवर्णत्वम्। तस्य च खड्गाद्यनेकचित्रभेदात् बहुभेदाः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

काव्यरोगस्वरूपायाः प्रहेलिकायाः रसपरिपन्थितया नालङ्कारत्वम्। प्रहेलिका तु उक्तिवैचित्र्यमात्रस्वरूपा, च्युताक्षरा, दत्ताक्षरा, च्युतदत्ताक्षरा, बिन्दुमती, गूढ़चतुर्थपादादिका चेति बहुविधा।

अर्थालङ्काराश्च उपमादयः। *

---

* अत्र अन्तेवासिनामभ्याससौकर्य्यार्थं तेषां नामानि पद्याकारेण निबध्यन्ते, यथा ;—

अर्थालङ्कारतामाप्ता ये तावदुपमादयः।
सर्वेषां नामतस्तेषामुल्लेखः क्रियते क्रमात् ॥
तत्रादावुपमा तद्वदेकदेशविवर्त्तिनी।
उपमा चापरा नाम्ना कथिता रसनोपमा ॥
मालोपमा पुनश्चैका कथितोऽनन्वयः परः।
उपमेयोपमा तद्वत् स्मरणं रूपकं तथा ॥
अधिकारूढ़वैशिष्ट्यरूपकं परिणामकः।
सन्देहः भ्रान्तिमांश्चैव तथोल्लेखो ह्यपह्नुतिः ॥
निश्चयश्च तथोत्प्रेक्षा वैचित्र्याद्द विविधा स्मृता।
तथैवातिशयोक्तिश्च तुल्ययोगित्वदीपके ॥
प्रतिवस्तूपमा चैका दृष्टान्तः सनिदर्शनः।
व्यतिरेकः सहोक्तिश्च विनोक्तिरपरा मता ॥
समासोक्तिः परिकरस्तथा श्लेषोऽपि च स्मृतः।
अप्रस्तुतप्रशंसा च तथा व्याजस्तुतिः पुनः ॥
पर्य्यायोक्तं तथैवार्थान्तरन्यासो मतस्तथा।
काव्यलिङ्गं तथैवानुमानं हेतुः स्मृतोऽपरः ॥
अनुकूलं तथाऽऽक्षेपो विध्याभासो विभावना।
विशेषोक्तिर्विरोधश्च तथाऽसङ्गतिरेव च ॥
विषमश्च समश्चैव विचित्रमधिकं तथा।
अन्योऽन्यश्च विशेषश्च व्याघातश्चापरो मतः ॥
अन्यः कारणमालाऽऽख्यो मालादीपकमेव च।
एकावली तथा सारो यथासङ्ख्यमथापरम् ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

निरूपणीयेषु अर्थालङ्कारेषु मध्ये सादृश्यप्रतिभोत्थापितेषु स्मरणादिषु लक्षितव्येषु, तेषामुपजीव्यत्वेन उपमायाः प्राधान्यात् प्रथममुपमालङ्कार एव निरूपणीय इति स एव लक्षितः,—

उपमा,—वैधर्म्याविषयैकवाक्यविषयकत्वे सति इवादिवाच्यमुभयसम्बन्धिसाधर्म्यम्। अत्रेदमनुसन्धेयम्,—उपमायाम्—उपमानम्, उपमेयम्, औपम्यवाचिपदं, साधारणो धर्मश्च इति चत्वारः पदार्थाः सन्ति। साधारणधर्मवत्त्वेन प्रसिद्धः पदार्थः उपमानम्। उपमानधर्मवत्तया कविसंरम्भगोचरः पदार्थः उपमेयम्। "सादृश्यप्रतियोगि उपमानम्; सादृश्यानुयोगि उपमेयम्" इति केचित्। येन उपमानोपमेयगतमौपम्यं ज्ञायते तत् औपम्यवाचिपदम्। उपमानोपमेययोः सङ्गतो धर्मः साधारणो धर्मः इति तेषां लक्षणानि। यस्य धर्मस्य सम्बन्धात्, यत्पदस्य सामर्थ्यात्, येन सह यदुपमीयते, स साधारणो धर्मः, तत् औपम्यवाचि पदं, तदुपमानं, तच्चोपमेयम् इति तत्त्वम्। इयमेव चोपमा तत्तदुक्तिवैचित्र्येण नानाऽलङ्कारभावमवगाहते इत्यवधेयम्।

प्रथमं तावत् उपमायाः,—पूर्णा लुप्ता चेति द्वौ भेदौ। उपमानोपमेयसाधारणधर्मेवादीनां वाच्यत्वे पूर्णा। साऽपि

पर्य्यायः परिवृत्तिश्च परिसङ्ख्या तथोत्तरम्।
अर्थापत्तिः पुनश्चैका विकल्पोऽप्यपरो मतः॥
समुच्चयः समाधिश्च प्रत्यनीकमथापरम्।
प्रतीपं मीलितञ्चैव सामान्यं तद्गुणस्तथा॥
अतद्गुणस्तथा सूक्ष्मं व्याजोक्तिश्चापरा मता।
स्वभावोक्तिः पुनश्चैका भाविकोदात्तके तथा॥
रसवत्-प्रेय-ऊर्ज्जस्वि-समाहितमथापरम्।
भावोदयो भावसन्धिः भावमिश्रस्तथाऽपरः॥
संसृष्टिः सङ्करश्चेद्दालङ्कारिकसम्मतः॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

श्रौत्यार्थीभेदेन पुनः द्विविधा। तत्रापि श्रौती यथेववादीनाम् औपम्यवाचिनां शब्दानाम् इवार्थकवतेश्चोपादाने भवति ; अत्र श्रवणमात्रेणैव उपमानोपमेयवृत्तिसाधर्म्यप्रतीतेः अस्याः श्रौतीति संज्ञा ; तथा आर्थी तुल्यसमानसदृशादिपदानां तुल्यार्थवतेश्चोपादाने भवति ; पदार्थानुसन्धानापेक्षया सादृश्यप्रतीतेः अस्याः आर्थीति संज्ञेति तत्त्वम्। एवं द्विविधाप्यसौ पुनः तद्धित-समास-वाक्यगतत्वेन प्रत्येकं त्रिधा भूत्वा समुदायेन षट्प्रकारा पूर्णोपमेति वेदितव्यम्।

लुप्ता अपि प्रथमतः उपमान-उपमेय-साधारणधर्म्म-इवादि-लोपाच्चतुर्द्धा। तत्रापि धर्म्मलोपे—तद्धिते श्रौत्या असम्भवात् पूर्णावत् पञ्च ; तथा कर्म्माधिकरणविहिते द्विविधे क्यचि द्वौ, कर्त्तृविहिते क्यङि एकः, कर्म्मकर्त्त्रोर्णमुलि च द्वौ, इति मिलित्वा समुदयेन दश भेदाः धर्म्मलुप्तायाः बोध्याः। एवम् उपमानलोपे—वाक्यसमासगतत्वेन द्वौ भेदौ ; औपम्यवाचि-लोपे—क्विप्-समासगतत्वेन द्वौ भेदौ ; धर्म्मोपमानयोर्लोपे—वाक्यसमासगतत्वेन च द्वौ भेदौ ; धर्म्मौपम्यवाचिनोर्लोपे—क्विप्-समासगतत्वेन द्वौ भेदौ ; उपमेयलोपे—क्यज्गतः एको भेदः ; धर्म्मोपमेययोर्लोपे—क्यचि एको भेदः ; धर्म्मोपमानसादृश्यप्रति-पादकानां लोपे—समासगतत्वेन एको भेदः, इति मिलित्वा एकविंशतिः लुप्तोपमाभेदाः, पूर्णा च षड्विधेति समुदयेन सप्तविंशतिर्भेदाः उपमायाः। एषु च उपमाभेदेषु मध्ये अलुप्त-साधारणधर्म्मेषु ये पञ्च भेदाः उक्ताः, ते साधारणधर्म्मस्य एकरूप-त्वेन विम्बानुविम्बभिन्नत्व-शब्दमात्रभिन्नत्वाभ्याञ्च प्रत्येकं त्रैवि-ध्यात् पञ्चदशधा इति मिलित्वा समुदयेन सप्तत्रिंशदुपमाभेदाः।

∴ एकदेशविवर्त्तिन्युपमा,—अंशतः वाच्यगम्यात्मकोभयसाम्य-वती उपमा।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रसनोपमा,— यथोत्तरमुपमेयस्य उपमानत्वख्यापनरूपा उपमा ।

मालोपमा,—एकोपमेयपदविशिष्टा सती अनेकोपमानवती उपमा। एवञ्च आक्षेपोपमा-प्रतिनिर्द्दिश्योपमाप्रभृतीन् प्राचीनसम्मतानुपमाभेदान् वैचित्र्यातिशयानाधायकत्वेन न पृथक् लक्षयामास ।

अनन्वयः,—एकवाक्यगते एकस्मिन्नेव धर्म्मिणि उपमानोपमेयत्वरूपोभयधर्म्मवत्त्वाभिधानम्। अत्र एकस्यैव चोभयरूपतया उपमेयस्य अनन्यसदृशत्वप्रतीतिरूपः वैचित्र्यविशेषः समुपपद्यते ।

उपमेयोपमा,—पूर्व्ववाक्यप्रतिपादितसाधारणधर्म्ममेव साधारणधर्म्मीकृत्य पूर्व्ववाक्यप्रतिपादितेनोपमेयेन पूर्व्ववाक्यप्रतिपादितस्योपमानस्य उपमा ।

स्मरणं,—सदृशवस्तुज्ञानसमुद्बोधितसंस्कारसमुत्था पदार्थस्मृतिः। वैचित्र्यस्यैव अलङ्काररूपतया सामान्यतः चिन्तादिजन्यस्मृतेर्नालङ्काररूपतेति बोध्यम्। राघवानन्दमहापात्रास्तु विसदृशपदार्थानुभवात् पदार्थान्तरस्मरणेऽपि स्मरणालङ्कारमिच्छन्तः तदलङ्कारविषयतया "शिरीषमृद्वी—" इत्यादिश्लोकम् उदाहरन्ति ।

रूपकं,—प्रकृतगोपनशून्य-विषयरूपे उपमेये उपमानस्य तादात्म्याध्यवसायः। तच्च परम्परित-साङ्ग-निरङ्गभेदात् प्रथमतस्त्रिधा। तेष्वपि,यत्र—कुत्रचित् कस्यचित् तादात्म्याध्यवसायः, अन्यत्र कुत्रचित् कस्यचित् आरोपे निमित्तं भवति, तत् परम्परितरूपम्; तदपि श्लिष्टशब्दनिबन्धनं केवलं, श्लिष्टशब्दनिबन्धनं मालारूपम्, अश्लिष्टशब्दनिबन्धनं केवलम्, अश्लिष्टशब्दनिबन्धनं मालारूपञ्चेति चतुर्विधम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यत्र च अङ्गीपितस्य अङ्गिभूतोपमेयस्य उपमानतादात्म्याध्यवसायः, तदेव समस्तवस्तुविषयैकदेशविवर्त्तिभेदेन द्विविधं साङ्गमित्युच्यते। तत्रापि सर्व्वेषामेव आरोपणीयवस्तूनां शब्दजन्यप्रतिपत्तिविषयत्वे समस्तवस्तुविषयमित्युच्यते। यत्र तु कस्यचिदपि आरोपणीयस्य वस्तुनः अर्थवशलभ्यत्वं भवेत्, तदेव एकदेशविवर्त्तीत्युच्यते। तौ च साङ्गरूपकभेदौ आरोप्यवस्तुनः श्लिष्टाश्लिष्टपदनिबन्धनत्वेन पुनर्द्विधा भिन्नौ साङ्गरूपकस्यापि चतुर्विधत्वं प्रतिपादयतः।

यत्र अङ्गविरहितस्य वस्तुनः तादात्म्येनाध्यवसानं, तदेव माला-केवलरूपेण द्विधा भिन्नं निरङ्गं रूपकमुच्यते। एवञ्च चतुर्व्विधं परम्परितं, चतुर्व्विधं साङ्गं, द्विविधं निरङ्गञ्चेति मिलित्वा दश ; तथा क्वचिच्च उपमाने अधिकस्य कस्यचित् वैशिष्ट्यस्य आरोहणात् अधिकारूढ़वैशिष्ट्यरूपमप्येकं रूपकमिति एकादशविधं रूपकं बोध्यम्।

क्वचिच्च "मुखं तव कुरङ्गाक्षि--" इत्यादौ समासाभावेऽपि रूपकं दृश्यते। तथा क्वचित् "सौजन्याम्बुमरुस्थली—" इत्यादौ वैयधिकरण्येऽपि तत् सम्भवतीति बोध्यम्।

परिणामः,—प्रस्तुतप्रयोजनसाधनत्वेन प्रसिद्धिमति पदार्थे उपमाने उपमेयप्रतियोगिकाभेदः। रूपके सदृशवस्तुनस्तादात्म्यं विषये भासते, इह तु सजातीयफलसाधनतया विषयस्य तादात्म्यमारोप्यमाणे भासते इति विशेषः। आरोप्यमाणस्य आरोपविषयात्मतया परिणतबुद्धिविषयीकरणमेव अस्य परिणामसंज्ञाबीजम्। अयमपि रूपकवत् अधिकारूढ़वैशिष्ट्यरूपः सम्भवति, "अतैलपूराः सुरतप्रदीपाः" इत्यादौ अधिकस्य वैशिष्ट्यस्य आरोहणदर्शनात्।

सन्देहः,—उपमेये उपमानस्य कविप्रौढ़ोक्तिसिद्धः ( न तु

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वस्तुस्वभावसिद्धः) संशयः। स च शुद्ध-निश्चयगर्भ-निश्चयान्तभेदात् त्रिविधः। तत्रापि, यत्र संशये एव पर्य्यवसानं, स शुद्धः; यत्र आदावन्ते च संशय एव, मध्ये निश्चयः, स निश्चयमध्यः; यत्र तु आदौ संशयोऽन्ते च निश्चयः, स निश्चयान्तः। "स्थाणुर्वा पुरुषो वा" इत्यादौ वस्तुस्वभावसिद्धसंशये तु नायमलङ्कारः, प्रतिभोत्थितसंशयस्यैव एतदलङ्कारविषयत्वात्।

भ्रान्तिमान्,—सादृश्यमूला अतत्पदार्थे कविप्रौढ़ोक्तिसिद्धा तत्पदार्थबुद्धिः। "शुक्तिकायां रजतम्" इति अस्वरसोत्थापिता, "सङ्गमविरहविकल्पे—" इति असादृश्यमूला च भ्रान्तिर्नायमलङ्कारः।

उल्लेखः,—एकस्यैव वस्तुनः विविधप्रकारेण अवधारणम्। स च ग्रहीतृ-विषयभेदेन द्विविधः। न चास्य मालारूपकादिभिरेव चरितार्थतेति वाच्यम्; "प्रिय इति गोपवधूभिः—" इत्यादौ भगवति प्रियत्वादेर्वास्तवत्वं, रूपकादौ तु आरोप्यस्य अवास्तवत्वमिति परस्परपार्थक्यदर्शनात्। केचित्तु "ग्रहीत्रादिभेदेन नानात्वप्रत्ययरूपविच्छित्तिविशेषाधायकत्वेन पृथगप्ययमलङ्कारः नियमेनालङ्कारान्तरविच्छित्तिमूलः" इत्याहुः।

अपह्नुतिः,—उपमेयं स्वभिन्नत्वेनारोप्य उपमानस्य स्थापनम्। सा चेयं—क्वचिदारोपस्य अपह्नवपूर्व्वकत्वेन, क्वचित् अपह्नवस्य आरोपपूर्व्वकत्वेन च द्विधा।

प्रकारान्तरेणापि सम्भाव्यमाना इयमपह्नुतिः,—शब्देन सादृश्यादिना वा द्योतितस्य कस्यापि गोपनीयस्यार्थस्य श्लेषेण कालस्वभावादिना वा भिन्नत्वेन स्थापनरूपा बोध्या। तथा च,—समुदयेन मिलित्वेयमपह्नुतिः त्रिविधा भवति।

निश्चयः,—अप्रस्तुतमुपमानं भिन्नत्वेनाख्याय प्रस्तुतस्य उपमेयस्य तत्त्वेनावधारणम्। न चायं निश्चयान्तसन्देहविषयः, तत्र

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

संशयनिश्चययोरेकाश्रयत्वेनावस्थानात्; इह तु तयोर्व्यधिकरणत्वेनावश्यकत्वात्। नापि रूपकध्वनिः, "वदनमिदं न सरोजम्" इत्यादौ मुखस्य कमलत्वेनानिर्द्धारणात्। प्रस्तुतस्य अनिषेधाच्चापह्नुतिरपि नेति पृथगेवायमलङ्कारः सहृदयसंवेद्यः। रज्जौ सर्पधिया बिभ्यति पुरुषे "रज्जुरियं न सर्पः" इति विशेषज्ञस्योक्तिर्नायमलङ्कारः, वैचित्र्याभावात्।

उत्प्रेक्षा,—तादात्म्यसंसर्गकोपमानप्रकारकोपमेयविशेष्यकोत्कटैककोटिकः संशयः। सा च प्रथमतो वाच्यप्रतीयमानभेदेन द्विप्रकारा। तत्रापि उत्प्रेक्षावाचकेवादिशब्दप्रयोगे वाच्येत्यभिधीयते। प्रतीयमाना तु तादृशवाचकशब्दाप्रयोगे सति बोध्या।

उक्ता च द्विविधा उत्प्रेक्षा प्रत्येकं जाति-गुण-क्रिया-द्रव्याणामुत्प्रेक्ष्यत्वेन अष्टप्रकारा अपि पुनः जात्यादिरूपभावसम्भावना-जात्यादिप्रतियोगिकाभावसम्भावनाभेदेन प्रत्येकं द्विधा भूत्वा षोड़शप्रकाराः; पुनः उत्प्रेक्षाकारणस्य क्वचित् गुणस्वरूपतया, क्वचिच्च क्रियास्वरूपतया प्रत्येकं द्विधा भूत्वा द्वात्रिंशद्भेदा भवति। तत्रापि उक्तेषु षोड़शवाच्योत्प्रेक्षाभेदेषु स्वरूपतश्चतुर्भेदं द्रव्यं विहाय अपरे जात्यादीनां त्रयाणां ये द्वादश भेदाः, तेषां स्वरूप-फल-हेतुगतत्वेन प्रत्येकं त्रिविधत्वेन षट्त्रिंशद्भेदाः; द्रव्यस्य स्वरूपतः उक्तैः चतुर्भिर्भेदैर्मिलित्वा समुत्पन्नेषु चत्वारिंशद्भेदेषु मध्ये स्वरूपगायाः ये षोड़श भेदाः, ते उत्प्रेक्षाकारणस्य उपादानानुपादानाभ्यां द्वात्रिंशत्प्रकाराः, चतुर्विंशतिप्रकारफलहेतूत्प्रेक्षाभिः मिलित्वा वाच्योत्प्रेक्षायाः षट्पञ्चाशद्भेदा भवन्ति। प्रतीयमानायाः षोड़श भेदा अपि प्रत्येकं फलहेतुगततया द्विधा भूत्वा द्वात्रिंशद्भेदाः, तेन च वाच्यप्रतीयमानयोः समुदयेन अष्टाशीतिप्रकाराः भवन्ति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एवञ्च ताः अष्टाशीतिप्रकाराः उत्प्रेक्षाः विषयस्य उक्त्यनुक्तिभ्यां प्रत्येकं द्विधा भूत्वा समुदायेन षट्सप्तत्यधिकशतसङ्ख्यकाः भवन्तीति सुधीभिर्विभाव्यम् ।

सा चेयमुत्प्रेक्षा अन्येन केनचिदलङ्कारेणोत्थापिता चेत् अधिकं वैचित्र्यमावहति । इवादिवत् "मन्ये, शङ्के, ध्रुवं, प्रायः, नूनम्" इत्येवमादयः शब्दा अपि उत्प्रेक्षावाचका ज्ञेयाः ।

अतिशयोक्तिः,—सिद्धवन्निर्द्दिष्टोऽध्यवसायः । अध्यवसायश्च प्रकृतस्याधःकरणेन आरोप्यमाणस्य अभेदप्रतिपत्तिरूपः । सा चेयमतिशयोक्तिः,—भेदे अभेदः, अभेदे भेदः, सम्बन्धे असम्बन्धः, असम्बन्धे सम्बन्धः, कार्य्यकारणपौर्व्वापर्य्यविपर्य्ययश्चेत्येवंरूपेण पञ्चधा भवति । कार्य्यकारणयोः पौर्व्वापर्य्यविपर्य्ययश्च—कारणात् प्रथमं कार्य्यस्य भावे, द्वयोः समकालत्वेन च द्विधा भवति ।

तुल्ययोगिता,—प्रकृतानाम् अप्रकृतानां वा पदार्थानां गुणक्रियाद्येकधर्म्माभिसम्बन्धः ।

दीपकं,—साम्यवाचकपद-वैधर्म्योक्त्योरभावे सति प्रकृताप्रकृतयोरुभयोर्गुणक्रियादिरूपैकधर्माभिसम्बन्धः । यद्वा,—एकस्यैव कारकस्य अनेकक्रियाऽभिसम्बन्धो दीपकम् इति लक्षणभेदाद् द्विधा ।

प्रतिवस्तूपमा,—प्रतीयमानोपमानोपमेयभावयोर्वाक्यार्थयोरेकस्यापि सामान्यधर्म्मस्य पौनरुक्त्यनिरासाय विभिन्नाकारेण निर्द्देशः । इयञ्च क्वचित् "चकोर्य्य एव चतुराः—" इत्यादौ वैधर्म्येणापि सम्भवतीति बोध्यम् ।

दृष्टान्तः,—वाक्यद्वयनिष्ठयोरुपमानोपमेययोः सामान्यधर्म्मस्य प्रणिधानगम्यसाम्यत्वम् । अयमपि क्वचिद्वैधर्म्येण भवन् साधर्म्म्यवैधर्म्याभ्यां द्विधा भवति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

निदर्शना,—व्यञ्जनया वृत्त्या उपमानोपमेयभावबोधकः अबाधितो बाधितो वा पदार्थसम्बन्धः। असम्भवद्वस्तुसम्बन्ध-निदर्शना तु एकवाक्यानेकवाक्यगतत्वेन द्विविधा। इयञ्च क्वचित् "योऽनुभूतः कुरङ्गाक्ष्याः—" इत्यादावुपमेयवृत्तस्य उपमानेऽसम्भवेऽपि भवति। कुत्रचिच्च "क्षिपसि शुकं वृषदंशक-वदने—" इत्यादौ मालारूपाऽपि दृश्यते।

व्यतिरेकः,—उपमानादुपमेयस्य, आधिक्यस्य न्यूनताया वा अभिधानम्। स च उपमेयस्य उपमानादाधिक्ये चतुर्विंशति-प्रकारः, तथा उपमेयस्य उपमानान्न्यूनतायां चतुर्विंशतिप्रकारः, इति मिलित्वा अष्टचत्वारिंशत्प्रकारः व्यतिरेकः। तथा हि,—उपमेयस्य उपमानादाधिक्ये—उपमेयगतः उत्कर्षः, उपमान-गतोऽपकर्षस्य हेतुः ; तादृशयोर्द्वयोरप्युक्तौ एकः, तथा प्रत्येकं समुदयेन वा अनुक्तौ त्रिविधः, इति मिलित्वा चतुर्विधोऽपि उपमानोपमेययोः साम्यस्य शाब्दत्वेन आर्थत्वेन आक्षेपलभ्यत्वेन च प्रत्येकं त्रिधा भवन् द्वादशप्रकारोऽपि पुनः श्लेषाश्लेषमूलक-तया प्रत्येकं द्विधा भवन् चतुर्विंशतिप्रकारः। एवमुपमाना-दुपमेयस्य न्यूनतारूपः द्वितीयोऽपि—उपमेयगतापकर्षरूपस्य उपमानगतोत्कर्षरूपस्य च हेतोरुक्तावेकः, तथा प्रत्येकं समु-दयेन चानुक्तौ त्रिविधः, इति मिलित्वा चतुर्विधोऽपि उपमा-नोपमेययोः साम्यस्य शाब्दत्वेन, आर्थत्वेन, आक्षेपलभ्यत्वेन च प्रत्येकं त्रिधा भवन् द्वादशविधोऽपि पुनः श्लेषाश्लेषमूलकतया प्रत्येकं द्विधा भवन् चतुर्विंशतिप्रकारः, इति समुदयेन मिलित्वा अष्टचत्वारिंशत्प्रकारः अयं व्यतिरेक इति। केचित्तु "उप-मानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेकः" इत्याहुः, तन्न विचारसहमिति सुधीभिर्विभाव्यम्।

सहोक्तिः,—एकस्यापि वस्तुनः अभेदाध्यवसायमूल-कार्य-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कारणपौर्व्वापर्य्यविपर्य्ययान्यतरातिशयोक्तिमूलकतया सहार्थबलादुभयोरर्थयोरन्वयः। श्लेषाश्लेषघटिततया चेयं द्विधा भवन् पुनः प्रत्येकं माला-केवलरूपतया द्विधेति समुदयेन चतुर्विधेयं सहोक्तिरिति। "लक्ष्मणेन समं रामः" इत्यादौ तु अतिशयोक्तिमूलकत्वाभावेन वैचित्र्याभावात् नायमलङ्कार इति ध्येयम्।

विनोक्तिः, — एकपदार्थाशोभनत्वाभावादिप्रयोजकापरपदार्थव्यतिरेककथनम्। क्वचिच्च विनाशब्दप्रयोगाभावेऽपि आक्षेपतः तदर्थावगमे विनोक्तिर्भवति। एवं सहोक्तिरपि सहार्थशब्दप्रयोगाभावे तदर्थाक्षेपे सम्भवतीति बोध्यम्।

समासोक्तिः,—प्रस्तुताप्रस्तुतवस्तुसाधारणकार्य्यलिङ्गविशेषणकृतः प्रकृते अप्रकृतस्य वस्तुनः अवस्थाविशेषसमारोपः। विशेषणसाधारण्यन्तु विशेषणस्य श्लिष्टत्वेन, साधारण्येन च द्विधा भवति, इति तत्कृता समासोक्तिरपि द्विधा, पुनः कार्य्यलिङ्गयोस्तुल्यत्वे च द्विविधेति चतुर्विधा समासोक्तिः। सर्व्वत्रैव इह व्यवहारसमारोपो हेतुः। स च क्वचिल्लौकिके लौकिकस्य, शास्त्रीये शास्त्रीयस्य, लौकिके शास्त्रीयस्य, शास्त्रीये वा लौकिकस्य वस्तुनः व्यवहारसमारोप इति चतुर्द्धा ; लौकिकमपि वस्तु रसादिभेदादनेकविधम् ; शास्त्रीयमपि तर्कायुर्वेदादिप्रसिद्धतयाऽनेकविधमिति बहुप्रकारेयं समासोक्तिरित्याकरे द्रष्टव्यम्।

परिकरः,—प्रकृतार्थपरिपोषणाभिप्रायवद्विशेषणैः विशेष्यस्योत्कर्षोक्तिः। न चापुष्टार्थस्य दोषत्वाभिधानात् तन्निराकरणेनैव पुष्टार्थस्य स्वीकारो जातः इति वाच्यं, वैचित्र्यस्यैव अलङ्काररूपतया एकनिष्ठत्वेन बहूनां साभिप्रायविशेषणानामुपन्यासे वैचित्र्योत्पत्तेरस्यालङ्कारमध्ये एव गणनायाः सर्व्ववादिसम्मतत्वादिति विवेच्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अर्थश्लेषः,—विशेष्यभेदेन वाच्यैकार्थमात्रप्रतिपादकत्वे सति शक्तिलक्षणाभ्यामनेकार्थप्रतिपादनम्। शब्दैरेकस्मिन् विशेष्ये अभिधया अपरस्मिंश्च ( विशेष्ये ) लक्षणया अर्थद्वयप्रतिपादने अर्थश्लेष इति तात्पर्य्यम्।

अप्रस्तुतप्रशंसा, — प्राकरणिकपदार्थाक्षेपकमप्राकरणिकपदार्थाभिधानम्। सा च—क्वचित् सामान्यादप्रस्तुतात् विशेषः प्रस्तुतः, क्वचित् विशेषात् अप्रस्तुतात् सामान्यं प्रस्तुतं, क्वचित् अप्रस्तुतात् कार्य्यात् प्रस्तुतं निमित्तं, क्वचित् अप्रस्तुतात् निमित्तात् प्रस्तुतं कार्य्यं, क्वचित् समात् अप्रस्तुतात् समं प्रस्तुतमित्युक्तप्रकारेण प्रथमतः पञ्चप्रकारा। समादप्रस्तुतात् समस्य प्रस्तुतस्य गम्यत्वरूपा पुनः श्लेषमूलतया सादृश्यमात्रमूलतया च द्विधा ; तत्र श्लेषमूलाऽपि समासोक्तिवत् केवलविशेषणश्लेषे, श्लेषवत् विशेष्यविशेषणोभयश्लेषे च भवतीति द्विधा, इति स्थूलतया सप्त अप्रस्तुतप्रशंसाभेदाः। ते च पुनः प्रत्येकं साधर्म्म्यवैधर्म्म्यक्रतभेदद्वयेन द्विधेति चतुर्द्दशभेदाः ; तेऽपि पुनः प्रत्येकं वाच्यस्य सम्भवासम्भव-तदुभयरूपतया त्रिधा, इति समुदयेन द्विचत्वारिंशत्प्रकारेयमप्रस्तुतप्रशंसा।

व्याजस्तुतिः,—शक्त्या आपाततः प्रतीयमानाभ्यां निन्दास्तुतिभ्यां यथाक्रमं स्तुतिनिन्दाप्रतिपत्तिः। ननु निन्दाव्याजेन स्तुतिर्भवत्येव व्याजस्तुतिः, स्तुतिव्याजेन निन्दा तु व्याजनिन्दैव भवति, कथं व्याजस्तुतिरिति चेन्न, निन्दया स्तुतेर्गम्यत्वे व्याजेन स्तुतिर्व्याजस्तुतिरिति, तथा स्तुत्या निन्दाया गम्यत्वे व्याजरूपा स्तुतिर्व्याजस्तुतिरिति द्विविधसंज्ञाव्युत्पत्तिसम्भवात्। सा च निन्दया स्तुतेर्गम्यत्वेन, स्तुत्या निन्दाया गम्यत्वेन च द्विधा भवतीति बोध्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पर्य्यायोक्तम्—उक्तिवैचित्र्यविशेषेण व्यञ्जनावृत्तिप्रतिपाद्यार्थस्याभिधेयवत् स्फुटतया प्रतिपादनम् ।

अर्थान्तरन्यासः,—व्यापकधर्म्मावच्छिन्नादेः व्याप्यधर्म्मावच्छिन्नादिगोचरेण साधर्म्यवैधर्म्यान्यतरप्रकारकज्ञानेन संशय-अयोग्यत्वादिरूप-अनुपपत्तिनिराकरणपुरःसरं दृढ़प्रतिपत्तिविषयीकरणम् । अस्य च—सामान्यं विशेषस्य, विशेषो वा सामान्यस्य समर्थक इति, तथा कार्य्यं कारणस्य, कारणं वा कार्य्यस्य समर्थकमिति चत्वारो भेदाः, ते च पुनः प्रत्येकं साधर्म्यवैधर्म्याभ्यां द्विधेति समुदयेन अष्टौ भेदाः ।

काव्यलिङ्गं—वाक्य-पदान्यतरप्रतिपाद्यार्थस्य व्यञ्जनावृत्तिलभ्यहेतुत्वम् । तच्च हेतोर्वाक्यार्थत्व-पदार्थत्वभेदेन द्विधा भवति । केचित्तु वाक्यार्थगतेन काव्यलिङ्गेनैव गतार्थतया कार्य्यकारणभावे अर्थान्तरन्यासं नाद्रियन्ते, तदयुक्तम्; तथा हि,—इह हेतुस्त्रिधा भवति,—ज्ञापकः, निष्पादकः, समर्थकश्चेति । तत्र ज्ञापकोऽनुमानस्य विषयः, निष्पादकः काव्यलिङ्गस्य, समर्थकोऽर्थान्तरन्यासस्य इति तत्र उभयत्र हेतुगतवैषम्यात् पृथगेव कार्य्यकारणभावे अर्थान्तरन्यासः काव्यलिङ्गादिति ध्येयम् । "हि" शब्दाद्युपादानेन हेतोः स्फुटत्वे नायमलङ्कारः, वैचित्र्यस्यैवालङ्कारत्वात् ।

अनुमानम्—अलङ्कारादिकृतवैचित्र्यवशेन साधनगोचरव्याप्यत्वज्ञानात् साध्यस्य ज्ञानम् । धूमगत-वह्निव्याप्यत्वज्ञानात् वह्नेर्ज्ञानन्तु नास्यालङ्कारस्य विषयः, तत्र अलङ्कारसाधकवैचित्र्याभावात् । एतच्च स्वार्थपरार्थभेदेन द्विधा भवतीति बोध्यम् ।

हेतुः,—कार्य्येण कारणस्य अभेदेनाभिधानं, कारणे कार्य्यस्य तादात्म्यारोपो वा ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अनुकूलं—प्रतिकूलार्थबोधकतयाऽभिहितस्यापि फलतः अनुकूलताबोधकतया परिणामः। अस्य तु प्राचीनैरलङ्कार-मध्ये अपरिगणितस्यापि विच्छित्तिविशेषस्यैवालङ्कारत्वापादक-तया वैचित्र्याधायकत्वात् पृथगलङ्कारत्वमेवेति बोध्यम्।

आक्षेपः,—विवक्षितस्य विषयस्य अशक्यवक्तव्यत्वादिरूप-वैलक्षण्यसूचनाय निषेधवत् प्रकाशः, तथा अनभिमतस्य विषयस्य अत्यन्तपरिहार्य्यत्वादिरूपवैलक्षण्यसूचनाय विधि-रूपेण प्रकाशश्चेति द्विधा। तत्र निषेधाभासरूपः,—वक्ष्यमाण-विषयगतः उक्तविषयगतश्चेति द्विविधः। तयोरपि वक्ष्यमाण-विषये निषेधः साकल्येनांशतश्च सम्भवतीति द्वौ भेदौ; तथा उक्तविषयेऽपि क्वचिद् वस्तुस्वरूपस्य, क्वचिच्च वस्तुकथनस्य निषेध इति द्वौ भेदौ, इति समुदयेन मिलित्वा पञ्चविधोऽय-माक्षेपालङ्कारः।

विभावना—सामान्यतः किञ्चित्कारणसापेक्षत्वेऽपि प्रसिद्ध-कारणव्यतिरेकेण कार्य्योत्पत्तिः। सामान्यतोऽपेक्षितकारणस्य उक्तत्वे अनुक्तत्वे चासौ द्विधा भवति।

विशेषोक्तिः,—कारणसमावायसत्त्वेऽपि कार्य्यस्यानुत्पत्तिः। साऽपि विभावनावत् निमित्तस्य उक्तत्वानुक्तत्वाभ्यां द्विधा भवति। केचित्तु अस्या अचिन्त्यनिमित्तकृतमपरमपि एकं भेदं कल्पयन्ति; दर्पणकृद्भिस्तु अनुक्तनिमित्ते एव अचिन्त्यनिमित्तस्यान्तर्भावं प्रकल्प्य तस्य पृथगभिधानं न कृतमिति सुधीभिर्विभाव्यम्।

विरोधः,—वस्तुगत्या विरोधासत्त्वेऽपि आपाततः विरुद्ध-तया प्रतीतिः। स च—जातेर्जाति-गुण-क्रिया-द्रव्यैः विरोधे चतुर्द्धा, गुणस्य गुण-क्रिया-द्रव्यैर्विरोधे त्रिधा, तथा क्रिया-द्रव्याभ्यां क्रियाया विरोधे द्विधा, द्रव्यस्य च द्रव्येण विरोधे एकधेति मिलित्वा दशविधः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

असङ्गतिः,—विच्छित्तिविशेषजनकत्वे सति कार्य्यकारणयोर्वैयधिकरण्यम्। न च कार्य्यकारणयोः सहानवस्थानलक्षणेन विरोधेनैवास्य गतार्थतेति किमधिककल्पनयेति वाच्यं; ततो विलक्षणवैचित्र्याधायकत्वेनास्या विशिष्टत्वात्।

विषमं—जन्यजनकयोरुभयोर्गुणविरोधः; तथा तयोः क्रियाविरोधः; प्रक्रान्तस्य कर्म्मणः अभिमतफलानवाप्तिपूर्व्वकः अनिष्टस्य समुत्पादः, एकत्र वस्तुन्यत्यन्तमसम्भवतोः सम्मेलनञ्च। तच्च गुणयोः क्रिययोश्च कार्य्यकारणविरुद्धत्वे चतुर्विधं; पुनश्च इष्टार्थानाप्तिपुरःसरानिष्टार्थसम्प्राप्ति-विरुद्धसम्मेलनरूपतया द्विधेति षट्प्रकारम्।

समम्—"इदमनयोः श्लाघ्यम्" इति योग्यतावद्विषयस्य योग्यताप्रशंसनम्।

विचित्रम्—अभिमतविषयविपरीतानुष्ठानादपि अभिमतफलसाधनम्।

अधिकम्—आधाराधेययोरेकतरस्य महत्त्वातिशयप्रतिपादनम्। तच्च आश्रयाधिक्य-आश्रिताधिक्यभेदेन द्विधा।

अन्योन्यं—पदार्थयोरेकजातीयक्रियायां परस्परं कारणतयोपन्यासः। अत्र कारणयोः क्रिययोश्च शब्दैक्यं वैचित्र्यपरिपोषकमेव, न तु नियामकं, शब्दभेदेऽपि अस्यानुभवसिद्धत्वात्।

विशेषः,—प्रसिद्धाधिकरणपरिहारेण आधेयस्य विशेषेणावस्थानम्; एकस्य परिमितस्यापि वस्तुनः एकेनैव युगपदनेकत्रावस्थानम्; तथा कार्य्यान्तरारम्भकेण प्रयत्नेन दैवादप्रक्रान्तस्य सुकरस्य दुष्करस्य वा कर्म्मणोऽनुष्ठानमिति त्रिविधः।

व्याघातः,—कञ्चिदुपायविशेषमवलम्ब्य केनचिन्निष्पादितस्य वस्तुनः, केनचिदपरेण प्रतियोगिना तेनैवोपायविशेषेण



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अन्यथाकरणम्। स्वसाधितवस्तुव्याहृतिहेतुत्वाच्च अस्य व्याघातसंज्ञा। यद्वा, व्याघातः,—एकेन केनचिदुपायेन कथितं यत् कर्म्म, तदन्येन केनचित् तद्विरुद्धस्य कार्य्यस्य तेनैवोपायेन ततः सुकरतया अभिधानम्। अत्र वैचित्र्यविशेषस्य सत्त्वात् पूर्व्वोक्तात् पृथग्रूपेणास्योपन्यासः।

कारणमाला—उत्तरोत्तरं प्रति पूर्व्वपूर्व्वस्य कार्य्यीभूतपदार्थस्य कारणत्वेनाभिधानम्। यद्यपि कार्य्याणामपि उक्तक्रमेण मालारूपता सम्भवति, तथाऽपि कारणगुणवर्णनस्यैव कविसम्मततया "विवक्षापूर्व्विका हि शब्दार्थप्रतिपत्तिः" इति न्यायेन केवलं कारणमालाया एवाभिधानं बोध्यम्।

मालादीपकं—पूर्व्वपूर्व्वोक्तानां बहूनां धर्म्मिणाम् उत्तरोत्तरं प्रति हेतुत्वे सति सर्व्वेषामेकक्रियाऽभिसम्बन्धः। लोके यथा मालायां यथापूर्व्वं विन्यस्तकुसुमानाम् उत्तरोत्तरकुसुमाश्रयतया उपकारकत्वं, तथा इहापि पूर्व्वपूर्व्वस्य उत्तरोत्तरोपकारकतया मालाकारता वेदितव्या।

एकावली—पूर्व्वं पूर्व्वं प्रति यथोत्तरस्य वस्तुनः वीप्सया विशेषणभावेन स्थापनं निषेधो वा। सा च स्थापनापोहनभेदेन द्विधा भवति। कुत्रचित् विशेष्यमपि यथोत्तरं विशेषणतया स्थापितमपोहितञ्च दृश्यते।

सारः,—विशेष्यस्य उत्तरोत्तरमुत्कर्षाभिधानम्। केचित्तु "श्लोकसमाप्तिं यावत् उत्तरोत्तरमुत्कर्षप्रतिपादने सत्येव अस्य अलङ्कारस्य विषयः, न तु अंशतः, तथात्वे वैचित्र्यविशेषाप्रतिपत्तेः" इत्याहुः, तन्न मनोरमं, "लोकस्रजि द्यौर्दिवि चादितेया अप्यादितेयेषु महान् महेन्द्रः" इत्यादौ श्लोकार्द्धसमापनं यावत् उत्कर्षवर्णनसत्त्वेऽपि एतदलङ्कारविषयत्वस्य सर्व्वैरालङ्कारिकैरविवादं स्वीकृतत्वात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथासङ्ख्यं—प्रथमतो विनिर्द्दिष्टानामर्थानां पश्चात् विनिर्द्दिष्टैरर्थैः क्रमेण सम्बन्धः । केचित्तु इममेव अलङ्कारं क्रमेति नाम्ना अभिदधति । लक्षणे अर्थानामिति बहुत्वमविवक्षितं, तेन "ददर्श कृष्ण रामश्च व्रजे गोदोहनं गतौ । पीतनीलाम्बरधरौ शरदम्बुरुहेक्षणौ ॥" इत्यादिरपि अस्यालङ्कारस्य विषयः ।

पर्य्यायः,—एकस्य वस्तुनः अनेकस्मिन् वस्तुनि, अनेकेषां वा वस्तूनाम् एकस्मिन् वस्तुनि क्रमशः स्वकर्त्तृकं परकर्त्तृकं वा, भवनं करणं वा । स च,—एकस्यानेकत्र भवनम्, अनेकस्य एकत्र भवनम्, एकस्य अनेकत्र करणम्, अनेकस्य एकत्र करणमिति चतुर्धा भिद्यते ।

परिवृत्तिः,—सदृशेन, हीनेन, अधिकेन वा पदार्थेन किञ्चित् त्यक्त्वा कस्यचिदादानम् । सा च—समेन समस्य, न्यूनेन उत्तमस्य, उत्तमेन न्यूनस्य च विनिमयसम्भवात् त्रिधा भवति ।

परिसङ्ख्या—पृष्टात् अपृष्टात् वा उपादेयत्वेन निर्णीय उक्तात् पदार्थात् तत्सदृशापरवस्तुनः प्रतिषेधः । सा च—कथनस्य प्रश्नपूर्व्वकत्वाप्रश्नपूर्व्वकत्वाभ्यां द्विधा, तथा व्यवच्छेद्यस्य शाब्दत्वार्थत्वाभ्याञ्च द्विधा भवतीति मिलित्वा चतुर्विधा भवति ।

उत्तरम्—असति प्रश्ने प्रतिवचनार्थपर्य्यालोचनकृततत्कल्पनमेकम् ; तथा असकृत् प्रश्ने सति असकृदसम्भवनीयप्रतिवचनमित्यपरम् । एवं द्विविधमपि इदमुत्तरं प्रश्नप्रतिवचनयोरेकतरस्य द्वयोर्वा साभिप्रायकत्व-निरभिप्रायकत्वाभ्यां चतुर्विधं सत् समुदायेनाष्टविधम् ।

अर्थापत्तिः,—प्रकरणप्रतिपादितादर्थात् प्रकरणाप्रति-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पादितस्य अर्थस्य दण्डापूपन्यायेन प्रतीतिः। सा च प्राकरणिकात् अप्राकरणिकस्य, अप्राकरणिकाच्च प्राकरणिकस्य प्रतीतेर्द्विविधा। दण्डापूपन्यायश्च—"मूषिकेण दण्डो भक्षितः" इत्युक्ते तत्सहचरितस्य ततोऽपि सुखभक्ष्यस्य अपूपस्य मूषिककर्त्तृकभक्षणमर्थादायातमिति नियतसमानन्यायादर्थान्तरापतनम्।

विकल्पः,—समानशक्तिकयोर्वस्तुनोरलङ्कारकृतवैचित्र्याऽऽपादकः एकपक्षाश्रयणपर्य्यवसानो विरोधः। "दीयताऽऽमर्ज्जितं वित्तम्" इत्यादौ तु तादृशचातुर्य्याभावान्नायमलङ्कारः।

समुच्चयः,—प्रस्तुतस्य कार्य्यस्य एकस्मिन् साधके विद्यमानेऽपि खलेकपोतिकान्यायात् तदेककार्य्यानुष्ठानार्थं युगपदन्यस्यानेकस्य साधनस्य उपस्थापनमित्येकः प्रकारः; तथा उक्तन्यायात् गुणयोः क्रिययोर्गुणक्रिययोर्वा युगपत्समुपस्थितिरित्यपरः। एवं द्विविधोऽप्ययं समुच्चयः,—सद्योगे, असद्योगे, सदसद्योगे च भवतीति त्रिधा भिद्यते। खलेकपोतन्यायश्च—"वृद्धा युवानः शिशवः कपोताः खले यथाऽमी युगपत् पतन्ति। तथैव सर्व्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति॥" एतत्कारिकोक्तलक्षणकः।

समाधिः,—प्रक्रान्तकारणेन दुष्करस्य चिकीर्षितस्य कार्य्यस्य सिद्ध्यर्थं दैववशसम्पन्नेन अभिमतादन्येन साधनेन तत्कार्य्यस्य सौकर्य्यम्।

प्रत्यनीकं,—न्यक्कृतिपरमपि प्रतिपक्षं साक्षान्निरसितुमशक्तेन केनापि तस्यैव प्रतिपक्षस्य उत्कर्षप्रतिपादनफलकं तदाश्रितस्य तिरस्करणम्। अनीकेन सदृशं प्रत्यनीकमिति अन्वर्थमभिधानम्; तथा च,—यथा अनीकेऽभियोज्ये तत्प्रतिनिधौ

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भूतोऽपरः केनचिदभियुज्यते, तथा इह प्रतियोगिनि विजेये तदीयोऽन्यो विजीयते इत्यर्थः ।

प्रतीपम्,—उपमेयगतात्युत्कर्षप्रतिपादनार्थम् उपमानत्वेन कविलोकप्रसिद्धस्यापि वस्तुनः उपमेयताप्रकल्पनं, वैफल्याभिधानं वा। तच्च उपमानस्य उपमेयत्वप्रकल्पन-वैफल्याभिधानाभ्यां द्विधा भवति ।

प्रकारान्तरेण प्रतीपम्—उत्कर्षवत्त्वेन अभिमतस्य वस्तुनः अत्युत्कर्षाभिधानपुरःसरं साधिक्षेपमुपमानत्वकल्पनम् ।

मीलितं—स्वाभाविकेन आगन्तुकेन वा साधारणेन चिह्नेन कस्यचित् वस्तुनः केनचित् वस्तुना वस्तुस्थित्यैव बलीयस्त्वेन तिरोधानम् । तच्च सामान्यलक्षणस्य वस्तुनः साहजिकत्वाऽऽगन्तुकत्वाभ्यां द्विविधम् ।

सामान्यम्—अताद्दशस्यापि ताद्दशत्वप्रतिपादनार्थम् अपरित्यक्तस्वगुणस्यैव प्रस्तुतस्य कस्यचित् वस्तुनः स्ववृत्तिगुणसजातीयगुणवता केनचित् वस्तुना तादात्म्याभिधानम् ।

तद्गुणः,—समीपगतविजातीयोत्कृष्टगुणवद्वस्तुकृत-स्वकीयगुणतिरोधाने सति परकीयोत्कृष्टगुणसमासादनम् ।

अतद्गुणः, — उत्कृष्टगुण-पदार्थसन्निधिरूपकारणसत्त्वेऽपि अपकृष्टगुणेन वस्तुना उत्कृष्टगुणवस्तुनो गुणस्यानुपादानम् ।

सूक्ष्मम्—आकारेण इङ्गितेन वा संलक्षितस्य स्थूलमतिभिरसंलक्ष्यस्य कस्यचिदर्थस्य विदग्धचेष्टया सूचनम् ।

व्याजोक्तिः,—कार्य्यादिना व्यक्तीभूतस्यापि पदार्थस्वरूपस्य कारणान्तरोद्भावनच्छलात् निगूहनम् ।

स्वभावोक्तिः,—कविमात्रसंवेद्याकृत्रिमक्रियारूपवत्-शिशुपश्वादिपदार्थस्य तदेकाश्रययोः चेष्टास्वरूपयोः यथावद्वर्णनम् ।

भाविकं,—भूतस्य भाविनो वा अद्भुतपदार्थस्य वर्णनाविशेष-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वशेन प्रत्यक्षवद्भासमानत्वम्। "अनातपत्रोऽप्ययमत्र लक्ष्यते—" इत्यादौ प्रत्यक्षायमाणस्यैव वर्णनान्नायमलङ्कारः, वर्णनाविशेष-वशेन प्रत्यक्षायमाणत्वस्यैव एतद्विषयत्वादिति बोध्यम्।

उदात्तम्,—कस्यचिदलौकिकसमृद्धेर्व्यञ्जनया ज्ञापनम्; तथा महत्त्वव्यञ्जकं प्रस्तुतमहत्त्वसम्बन्धिचरितं वेति लक्षण-भेदात् द्विविधम्।

रसवदादयः;—शृङ्गाराद्यन्यतमो रसः, निर्व्वेदादित्रयस्त्रिं-शद्भेदात्मकः भावः, शृङ्गाराद्यन्यतमाभासः निर्व्वेदाद्यन्यतमा-भासश्च, एवमुक्तरूपस्य भावस्य प्रशमश्च, एते यदा गुणीभूत-रसान्तरादीनामुत्कर्षाधायकत्वेन अङ्गत्वं प्राप्नुवन्ति, तदा यथा-क्रमं रसवत्-प्रेयः-ऊर्ज्जस्वि-समाहितनामालङ्कारतामापद्यन्ते। तथा हि,—रसस्य इतराङ्गत्वे रसवत्, भावस्य इतराङ्गत्वे प्रेयः, तदाभासयोरितराङ्गत्वे ऊर्ज्जस्वि, भावप्रशमस्य इतराङ्गत्वे समाहितमिति।

भावोदयादयः,—भावस्य उद्गमावस्थारूपे उदये, उभयोः स्पर्द्धित्वेनोपनिबन्धरूपे सन्धौ, तथा बहूनां पूर्व्वोपमर्द्देन निबन्ध-रूपे मिश्रत्वे च गुणीभूतत्वमायाति सति यथाक्रमं भावोदय-भावसन्धि-भावशबलनामानोऽलङ्काराः भवन्ति।

एवञ्च रसवदादीनामलङ्काररूपतामनङ्गीकुर्व्वन्तः केचित्,—"वाच्यवाचकरूपालङ्करणमुखेन रसाद्युपकारका एव अल-ङ्काराः, रसादयस्तु वाच्यवाचकाभ्याम् उपकार्य्या एवेति न तेषामलङ्कारता भवितुं युक्ता" इत्याहुः। अपरे तु,—"रसाद्युपकारमात्रेण इह अलङ्कृतिव्यपदेशः भाक्तः चिरन्तन-प्रसिद्धया अङ्गीकार्य्य एव" इति वदन्ति। एवमत्र बहुधा मत-भेदः आकरे द्रष्टव्यः।

कथितास्चैते यमकोपमादयः अलङ्कारा यदि एकस्मिन्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वाक्ये पद्ये गद्ये वा परस्परसम्मिलनेन अवस्थिताः स्युः, तदा संसृष्टिसङ्करान्यतररूपालङ्कारान्तरतामुपलभमानाः तदन्यतर-नाम्ना व्यपदिश्यन्ते। तथा हि,—.

संसृष्टिः,—तिलतण्डुलन्यायेन स्फुटावगम्यभेदानां समनन्तरसुक्तानां शब्दार्थालङ्काराणां यथासम्भवमन्योन्यनिरपेक्षतया एकत्र समवस्थानम्। सा च शब्दालङ्कारगतत्वेन, अर्थालङ्कार-गतत्वेन, उभयालङ्कारगतत्वेन च त्रिधा भवति। उभयालङ्कारगता संसृष्टिरपि—शुद्धा संसृष्टिमिश्रा चेति द्विधा भवति।

सङ्करः,—नीरक्षीरन्यायेन अनासादितस्वतन्त्रभावानाम् अलङ्काराणाम् एकस्मिन् आश्रये परस्परमनुग्राह्यानुग्राहक-भावेण सम्मिश्रणम्। सङ्कीर्य्यमाणस्वरूपत्वाच्च अस्य सङ्करनाम्ना व्यपदेशः।

अयञ्च अङ्गाङ्गिभावेन, एकाश्रयस्थित्या, सन्देहमूलकतया च त्रिधा भवति। "अनुरागवती सन्ध्या—" इत्यादौ समासोक्तिर्विशेषोक्तेरङ्गमिति अङ्गाङ्गिभावविषयत्वम्।

"मुखचन्द्रं पश्यामि" इत्यादौ "मुखचन्द्रम्" इत्यत्र "मुखं चन्द्र इव" इति "मुखमेव चन्द्रः" इति च द्विधा समासस्य सम्भवेन उपमा-रूपकयोरुभयोरेव सामग्रीसत्त्वात् सन्देहसङ्कर-विषयत्वम्।

यत्र हि सन्देहे साधक-बाधकयोरन्यतरस्यावतारः, तत्र एकतरनिश्चयान्न सन्देहः; तथा हि,—"मुखचन्द्रं चुम्बति" इत्यत्र न सन्देहसङ्करस्य विषयः, चुम्बनस्य मुखान्वयानुकूलतया उपमायाः साधकत्वात्, चन्द्रान्वयप्रातिकूल्येन रूपकस्य बाधकत्वाच्च एकतरपक्षनिश्चयसम्भवात्। एवं "सुन्दरं वदनाम्बुजम्" इत्यत्र सौन्दर्य्यरूपसाधारणधर्म्मस्य प्रयोगात् "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" (२।१।५६ पा०) इत्यनुशासनात्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उपमितसमासासम्भवः उपमाबाधकः, तथा च मयूरव्यंसकादित्वात् क्वतः रूपकसमासः एव तत्साधक इति संशयासत्त्वात् नास्य सन्देहसङ्करविषयत्वम्।

एवं "कुरवका रवकारणतां ययुः" इत्यत्र एकस्मिन् पादरूपे आश्रये "रवका रवका" इत्येकं "वकार वकार" इति चैकमिति यमकयोः सत्त्वात् एकाश्रयानुप्रवेशक्वतः सङ्करो बोध्यः। एवमेवात्र अनेकधा अलङ्कारसमावेशवैचित्र्यमाकरे द्रष्टव्यम्।

---

## अथालङ्काराणां परस्परभेदाः।

---

पुनरुक्तवदाभासे,—भुजङ्गकुण्डल्यादिरूपविभिन्नाकार एव शब्दः घटकतया समुपादीयते; यमके तु—"नवपलाश-पलाशवनम्" इत्यादौ समानाकार एवेत्युभयोर्विशेषः।

पुनरुक्तवदाभासे,—आपाततः प्रतिभातार्थवशात् पुनरुक्तताप्रतीतिः, न तु पर्य्यवसानेऽपि तत्सत्त्वम्; शब्दश्लेषे तु—अभिधावृत्तिलभ्ययोरुभयोरेवार्थयोः पर्य्यवसानेऽपि समकक्षतया स्फुरणमित्यनयोर्भेदः।

लाटानुप्रासे,—"नयने तस्यैव नयने च" इत्यादौ निसर्गतः एकार्थयोः शब्दयोस्तात्पर्य्यमात्रेण अर्थभेदो भवति; यमके तु—सति सम्भवे प्रकृत्यैव भिन्नार्थयोरेकाकारयोः शब्दयोः प्रयोग इति अनयोर्भेदः।

वक्रोक्तौ,—गोपनीयस्य वस्तुनः प्रथमं स्वयमभिधानाभावात् अपरोक्तवाक्यस्यैव अन्यथाकरणम्; द्वितीयापह्नुतौ तु—"इह पुरोऽनिलकम्पितविग्रहा—" इत्यादौ प्रकटिताभिप्रायस्य निजवचनस्यैव स्वयमन्यथाकरणमित्यनयोर्विशेषः।

भाषासमे,—कविप्रयुक्तानां भाषाणां केवलमेकरूपत्वं, न

त्वर्थभेदः ; भाषाश्लेषे तु—न केवलं भाषाणामैकरूप्यम्, अपि तु अर्थभेदोऽपि इत्युभयोर्विशेषः।

श्लेषे,—अभिधाप्रतिपादितस्य अर्थद्वयस्यैव समकक्षत्वम् ; श्लेषगर्भरूपके तु—"विद्वन्मानसहंस—" इत्यादौ उद्देश्यविधेय-भावेन गुणप्रधानभावापेक्षितया तस्य असमकक्षत्वमित्यनयो-र्भेदः।

श्लेषे,—उभयोरेव अभिधाप्रतिपाद्यार्थयोरन्योऽन्यनिरपेक्ष-तया प्रधानत्वम् ; विरोधाभासे तु—"सन्निहितबालान्धकारा भास्वन्मूर्त्तिश्च" इत्यादौ आपाततः प्रतिभातस्य विरुद्धार्थस्य पर्य्यवसानेऽसत्त्वात् न उभयोरेव समकक्षत्वमित्यनयोर्भेदः।

शब्दश्लेषे,—अनेकेषां धर्म्मिणां पृथक्पृथग्धर्म्मसम्बद्धतया अवगमः ; तुल्ययोगितायान्तु—एकस्यैव धर्म्मस्य अनेकधर्म्मि-सम्बद्धतया प्रतीतिरित्युभयोरन्तरम्।

शब्दश्लेषे,—द्विविधस्यैव अर्थस्य अभिधावृत्तिप्रतिपाद्यत्वम् ; समासोक्त्यप्रस्तुतप्रशंसादौ तु—अर्थान्तरस्य व्यञ्जनावृत्तिलभ्यत्व-मिति शब्दश्लेषात्समासोक्त्यादेः विशेषः।

पदभङ्गकृतश्लेषे,—प्रकृति-विभक्ति-समासादीनां सर्व्वेषामेव वैलक्षण्यम् ; प्रकृतिश्लेषे तु—प्रकृतिमात्रस्य वैलक्षण्यं, विभक्ति-समासादीनान्तु अविलक्षणत्वमेवेत्यनयोर्भेदः।

प्रत्ययश्लेषे,—कृत्तद्धितादिप्रत्ययकृत एव उभयार्थप्रत्ययः ; विभक्तिश्लेषे तु—प्रत्ययान्तरासाध्यविच्छित्तिविशेषाऽऽपादकतया सुप्तिङात्मकप्रत्ययमात्रकृत एव इत्यनयोर्विशेषः।

उपमायाम्,—उपमानोपमेयगतसाधर्म्यस्य अभिधावृत्ति-प्रतिपाद्यत्वम् ; रूपक-परिणाम-प्रतिवस्तूपमा-दृष्टान्तप्रभृति-ष्वपरेषु सादृश्यमूलकालङ्कारेषु तस्य व्यञ्जनावृत्तिलभ्यत्वमित्ये-तेषाम् उपमालङ्कारात् विशेषः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उपमायां,—विरुद्धधर्म्म-कथनासहकृतसमानधर्म्मकथनम्; एकवाक्यगतव्यतिरेके तु—"अकलङ्कं मुखं तस्या न कलङ्की विधुर्यथा" इत्यादौ विरुद्धधर्म्मस्यापि उक्तिरित्यनयोर्भेदः।

उपमायाम्,—एकस्मिन् एव वाक्ये उपमानोपमेययोः साधर्म्यावगमः; उपमेयोपमायान्तु—"कमलेव मतिर्मतिरिव कमला—" इत्यादौ विभिन्नवाक्ये तयोः साधर्म्यप्रतीतिरित्यनयोर्भेदः।

उपमायां,—द्वयोरेव धर्म्मिणोरुपमानोपमेयत्वाभिधानम्; अनन्वये तु—"राजीवमिव राजीवम्—" इत्यादौ एकस्मिन्नेव धर्म्मिणि उपमानोपमेयत्वकल्पनमित्यनयोर्भेदः।

उपमायां,—तद्धिते वतेरुपादाने, यत्र—"सौरभमम्भोरुहवन्मुखस्य—" इत्यादौ "तत्र तस्येव" ( ५।१।११६ पा० ) इति पाणिनिसूत्रेण "तत्रेव" "तस्येव" इत्यर्थे वतिः, तत्र इवार्थे वतेरुपादानात् श्रौत्या विषयः; यत्र तु—"मधुरः सुधावदधरः—" इत्यादौ "तेन तुल्यम्—" ( ५ । १ । ११५ पा० ) इति पाणिनिसूत्रेण तुल्यार्थे वतिः, तत्र तुल्यार्थे वतेरुपादानात् आर्थ्या विषय इत्युभयोर्विशेषः।

रसनोपमायां,—पूर्व्वोपमायां यस्य उपमेयत्वम्, उत्तरोपमायां तस्यैव यथाक्रममुपमानत्वकल्पनम्; उपमेयोपमायान्तु—एकस्यामेवोपमायां द्वयोरेवोपमानोपमेययोः यथाक्रमम् उपमेयोपमानताप्रकल्पनमित्यनयोर्भेदः।

अनन्वये,—"राजीवमिव पाथोजम्" इत्यादौ शब्दस्य समानाकारकत्वाभावेऽपि उपमानोपमेययोः सामानाधिकरण्यमात्रेणैव एतदलङ्कारत्वनिर्वाहात् समानाकारकशब्दस्य न नियमतः प्रयोजकत्वम्; लाटानुप्रासे तु—समानाकारकशब्दस्यैव साक्षात् प्रयोजकत्वमित्युभयोर्विशेषः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उपमेयोपमायां—विभिन्नवाक्ये द्वयोरुपमानोपमेययोर्यथाक्रममुपमेयोपमानताकल्पनम्; अनन्वये तु,—एकस्मिन्नेव वाक्ये एकस्यैव धर्म्मिणः उपमानोपमेयत्वकल्पनमित्यनयोर्भेदः।

रूपके,—समानधर्म्मविशिष्टस्योपमानस्याभेदः उपमेये भासते; परिणामे तु—प्रस्तुतप्रयोजनसाधनत्वेनोपमेयस्य तादात्म्यमुपमानरूपे आरोप्यमाणे भासते इत्यनयोर्विशेषः। तथा,—

रूपके,—आहार्य्या एव सहृदभेदबुद्धिः, अनन्तरं साधर्म्म्यप्रतीतिरेव, न तु अभेदबुद्ध्यन्तरम्; परिणामे तु—वस्तुनोरेककार्य्यकारित्वरूपसाधर्म्म्येण अत्यन्ततिरस्कृतभेदयोरभेदप्रतीतिधारा इति वाऽनयोर्विशेषः।

रूपके,—प्रकृतस्य उपमेयस्य अप्रतिषेधेन तत्र उपमानतादात्म्याध्यासः; अपह्नुतौ तु—उपमेयप्रतिषेधपुरःसरम् उपमानतादात्म्यारोपणमित्यनयोर्भेदः।

रूपके,—चन्द्राद्यारोपविषयस्य मुखादेर्वाच्यत्वम्; अतिशयोक्तौ तु—"लतामूले लीनो हरिणपरिहीनो हिमकरः" इत्यादौ निगीर्णविषये मुखादौ निष्कलङ्कचन्द्रादिरूपोपमानतादात्म्यारोप इत्यनयोर्भेदः।

एकदेशविवर्त्तिनि रूपके,—साधर्म्म्यस्य उपमाने मुख्यतया स्थितिः; एकदेशविवर्त्तिन्यामुपमायान्तु—साधर्म्म्यस्य उपमेये मुख्यरूपेण अवस्थानमित्यनयोर्भेदः।

परिणामे,—आरोप्यस्य तादात्म्येन अन्वयात् "स्मितेनोपायनं दूरात्—" इत्यादौ उपायनादेः प्रस्तुतनायकसम्भावनोपयोगितया स्मितरूपेण विषयेण तादात्म्यं भासते; रूपके तु—आरोप्यस्य अवच्छेदकत्वमात्रेणान्वयात् "मुखचन्द्रं पश्यामि" इत्यादौ आरोप्यमाणचन्द्रादेरुपमेयशोभाऽऽविष्कारकत्वमात्रं, न तु प्रस्तुतदर्शनादावुपयोगः इत्यनयोर्भेदः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सन्देहे,—उपमेये उपमानस्य संशयः अलङ्कारत्वव्यवस्थापकः ; अतिशयोक्तौ तु—"मध्यं तव सरोजाक्षि—" इत्यादौ न तथा नियमः, अपि तु केवलं संशयमात्रमित्यनयोर्भेदः।

सन्देहे,—कोटिद्वयस्यैव समकक्षतया संशयप्रयोजकोभयकोट्योरेव तुल्यबलत्वम् ; उत्प्रेक्षायान्तु—अतुल्यबलतया तयोरेकस्यां कोटावौत्कट्यमित्यनयोर्भेदः।

भ्रान्तिमति,—प्रकृतविषयज्ञानाभावात् जायमानज्ञानस्यानाहार्य्यरूपत्वम् ; रूपके, उपमानोपमेयनिगरणरूपायामतिशयोक्तौ च—विषयज्ञानसत्त्वात् तयाराहार्य्यरूपत्वमित्येतयोः भ्रान्तिमतो विशेषः।

उल्लेखे,—आरोपणीयवस्तूनां तात्त्विकत्वं ग्रहीतृभेदभिन्नत्वञ्च ; मालारूपक-भ्रान्तिमदादौ तु—न तथेति विशेषः।

उल्लेखे,—तात्त्विकानामेव पदार्थानाम् एकस्मिन्नेव विषये सामान्यतोऽभिधानमात्रम् ; अभेदे भेदरूपायामतिशयोक्तौ तु—"अन्यदेवाङ्गलावण्यम्—" इत्यादौ लावण्यादेर्विषयस्य पृथक्त्वेनाध्यवसानमित्यनयोर्भेदः।

द्वितीयापह्नुतौ,—गोपनीयस्यापि कथञ्चन प्रथममभिधानमावश्यकम् ; व्याजोक्तौ तु—गोपनीयस्य प्रथमं स्वयंकृतमभिधानं नास्तीति एतयोर्विशेषः।

निश्चये,—सन्देहनिश्चययोः पृथगाश्रयवृत्तितया वैयधिकरण्यम् ; निश्चयान्तसन्देहे तु—प्रथमतो यस्यैव संशयः, अन्ते तस्यैव निश्चयदर्शनात् सन्देहनिश्चययोः सामानाधिकरण्यमिति एतयोर्विशेषः।

निश्चये,—आरोप्यमाणस्य निषेधपुरःसरं प्रकृतस्य स्थापनम् ; रूपकध्वनौ तु—प्रकृते विषये आरोप्यमाणस्य तादात्म्यनिर्धारणं, न तु निषेध इत्यनयोर्भेदः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

निश्चये—उपमानं प्रतिषिध्य उपमेयस्य स्थापनम्; प्रथमापह्नुतौ तु—उपमेयं प्रतिषिध्य उपमानस्य स्थापनमित्यनयोर्भेदः ।

उत्प्रेक्षायां—तादात्म्यसंसर्गकोपमानप्रकारक-उपमेयविशेष्यक-उत्कटैककोटिकः संशयः; रूपकभ्रान्तिमदतिशयोक्त्यादौ तु—तादात्म्यसंसर्गकोपमानप्रकारकोपमेयविशेष्यको निश्चय इति उत्प्रेक्षातः रूपकादीनां सामान्यतो भेदः ।

उत्प्रेक्षायां—सम्भावयितुः पुरुषस्य सम्भावनाविषयस्य प्रकृतस्यापि ज्ञानमस्ति; भ्रान्तिमदलङ्कारे तु—"मुग्धा दुग्धधिया—" इत्यादौ भ्रान्तानां वल्लवादीनां प्रकृतविषयस्य चन्द्रिकादेर्ज्ञानं नास्तीत्यनयोर्विशेषः ।

उत्प्रेक्षायां—वाक्यार्थप्रतीतिसमकाल एव आरोप्यमाणस्य वस्तुनः असत्यता प्रतीयते; अतिशयोक्तौ तु—प्रतीतस्यैव आरोप्यमाणस्य वाक्यार्थपर्य्यालोचनानन्तरमेव असत्यताप्रतीतिरित्यनयोर्विशेषः ।

प्रतीयमानोत्प्रेक्षायां—"तन्वङ्ग्याः स्तनयुग्मेन—" इत्यादौ स्तनयोर्लज्जाया असम्भवात् "लज्जयेव" इत्युत्प्रेक्षयैव वाक्यविश्रान्तिः; उत्प्रेक्षाध्वनौ तु—"महिलासहस्र—" इत्यादौ उत्प्रेक्षां विनाऽपि वाक्यविश्रान्तिरित्यनयोर्विशेषः ।

फलोत्प्रेक्षायाम्—उत्प्रेक्ष्यमाणस्य हेतुरेव निमित्तम्; हेतूत्प्रेक्षायान्तु—फलमेवेत्यनयोर्भेदः ।

अतिशयोक्तौ—आरोप्यमाणस्य निश्चितत्वेन निर्द्देशात् अध्यवसायस्य सिद्धत्वम्; उत्प्रेक्षायान्तु—आरोप्यमाणस्य अनिश्चितत्वेन निर्द्देशात् साध्यत्वमित्येतयोर्विशेषः ।

तुल्ययोगितायां—द्वयोः, प्रकृतयोः द्वयोर्वा अप्रकृतयोः ( न तु प्रकृताप्रकृतयोः ) पदार्थयोः, गुणक्रियाऽन्यतररूपैकधर्मेण



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सम्बन्धः; दीपके तु—प्रकृताप्रकृतयोः पदार्थयोः तादृशधर्म्मेण सम्बन्धः इति अनयोर्विशेषः।

दीपके—साम्यबोधकपदस्य इव-वदादेर्नियमतः अप्रयोगः; उपमायान्तु—"कमलमिव मुखं मनोज्ञम्" इत्यादौ तादृशशब्दस्य नियमेन प्रयोग इत्यनयोर्भेदः।

प्रतिवस्तूपमायां—प्रकृताप्रकृतान्वयिनः एकस्यैव धर्म्मस्य विभिन्नाकारेण निर्देशः; दीपके तु—तादृशस्य एकस्यैव धर्म्मस्य एकाकारेणैव इत्युभयोर्भेदः।

दृष्टान्ते—प्रणिधानगम्यसाम्यस्य उपमानोपमेयगतसामान्यधर्म्मस्य तद्भेदसमानाधिकरणतद्गतभूयोधर्म्मवत्त्वरूपं तुल्यत्वम्; प्रतिवस्तूपमायान्तु—तादृशस्य सामान्यधर्म्मस्य एकत्वमित्यनयोर्भेदः।

दृष्टान्तप्रतिवस्तूपमयोः,—न सामान्यविशेषभावः, न वा समर्थ्यसमर्थकभावः; अर्थान्तरन्यासे तु—सामान्यविशेषभावेण समर्थ्यसमर्थकत्वावगम इति दृष्टान्तप्रतिवस्तूपमाभ्याम् अर्थान्तरन्यासस्य विशेषः।

निदर्शनायां—विम्बप्रतिविम्बभावाक्षेपं विना वाक्यार्थस्य अपर्य्यवसानम्; दृष्टान्ते तु—स्वतः पर्य्यवसितेन वाक्यार्थेन सामर्थ्यात् विम्बप्रतिविम्बताप्रत्यायनमित्यनयोर्विशेषः।

निदर्शनायां—वाक्यार्थस्य सादृश्ये पर्य्यवसानम्; अर्थापत्तौ तु—दण्डापूपन्यायादर्थान्तरप्रतीतिमात्रमित्यनयोर्भेदः।

समासोक्तौ—( विशेषणसाम्यनिबन्धनायां ) क्वचिदेकदेशस्य रूपणेऽपि रूप्यरूपकभावस्य प्रकटसादृश्यतया अन्यानुकूल्यानपेक्षः स्वमात्रविश्रामः; एकदेशविवर्त्तिरूपके तु—स्फुटसादृश्यानां बहूनां रूपणस्य शाब्दत्वेऽपि एकदेशस्य आर्थत्वेन अस्फुटसादृश्यत्वात् परानुकूल्यापेक्षेति अनयोर्विशेषः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

समासोक्तौ—अप्रस्तुतः पदार्थः स्वावस्थासमारोपेण आच्छादितस्वरूपमेव प्रस्तुतं पूर्व्वावस्थातो विशेषयति ; रूपके तु—आरोपणीयमप्रकृतमेव वस्तु आत्मस्वरूपसन्निवेशेन केवलं प्रकृतस्य स्वरूपमेव आच्छादयतीत्येतयोर्विशेषः ।

समासोक्तौ—केवलस्य विशेषणस्य सादृश्यं प्रतीयते ; उपमाध्वनौ श्लेषे च—विशेष्यविशेषणयोरुभयोरेवेति विशेषः ।

अर्थश्लेषे—अभिधया एकार्थबोधकैरपि शब्दैः अभिधालक्षणाभ्यामनेकार्थप्रतिपादनम् ; शब्दश्लेषे तु—अभिधामात्रप्रतिपाद्यानेकार्थकशब्दैरनेकार्थाभिधानमित्यनयोर्भेदः ।

अप्रस्तुतप्रशंसायां—क्वचिदप्रसिद्धस्यापि वस्तुनः प्रतिबिम्बत्वेन उपादानम् ; दृष्टान्ते तु—सर्व्वत्र प्रख्यातस्यैव पदार्थस्य इति अनयोर्विशेषः ।

अप्रस्तुतप्रशंसायां—व्यवहारप्रतीतिर्न श्लिष्टशब्दप्रयोगमात्रेण, अपि तु विशेषणसाम्यानुसन्धानापेक्षया ; शब्दशक्तिमूलवस्तुध्वनौ तु—विशेषणसाम्यानुसन्धानापेक्षा नास्ति इत्यनयोर्भेदः ।

अप्रस्तुतप्रशंसायां—प्रस्तुतस्यार्थस्य व्यञ्जनावृत्तिलभ्यत्वम् ; समासोक्तिश्लेषयोस्तु—प्रकरणादिनियमाभावात् प्रस्तुताप्रस्तुतयोः द्वयोरेव वाच्यत्वमित्यप्रस्तुतप्रशंसातः अनयोर्विशेषः ।

पर्य्यायोक्तौ—कारणवत् कार्य्यस्यापि प्रस्तुतत्वम् ; कार्य्यात् कारणप्रतीतिरूपाप्रस्तुतप्रशंसायान्तु—कार्य्यस्य अप्रस्तुतत्वमित्यनयोर्भेदः ।

काव्यलिङ्गे—निष्पादको हेतुर्विषयः, कार्य्यकारणभावेऽर्थान्तरन्यासे—समर्थको हेतुर्विषयः ; अनुमाने तु—ज्ञापको हेतुर्विषय इति एतेषां हेतुगतविशेषात् परस्परं भेदः ।

अनुमाने—विषयिणः निश्चिततया प्रतीतिः ; उत्प्रेक्षायान्तु—अनिश्चिततयेत्युभयोर्भेदः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विभावनायां—कारणाभावेनोपनिबध्यमानत्वात् कार्य्यमेव बाध्यत्वेन प्रतीयते; विशेषोक्तौ तु—कार्य्याभावेणोपनिबध्यमानत्वात् कारणमेव बाध्यत्वेन प्रतीयते इत्यनयोर्विशेषः।

विशेषोक्तौ—सामान्यतः कारणस्य विद्यमानतायामपि सामान्यतः कार्य्यस्यानुत्पत्तिः; अतद्गुणे तु—उत्कृष्टगुणवद्वस्तुसन्निधिरूपविशेषकारणसत्त्वेऽपि तादृशगुणग्रहणरूपविशेषकार्य्याभाव इति उभयोः स्थूलविशेषकृतवैचित्र्यविशेषोपादनहेतुको भेदः।

विरोधे—हेतु-हेतुमतोरुभयोरपि परस्परं बाध्यत्वेन प्रतीतिः; विशेषोक्ति-विभावनयोस्तु—कार्य्यकारणयोरसत्त्वेन उपनिबध्यमानतया यथाक्रमं हेतु-हेतुमतोर्बाध्यत्वेनावगम इति परस्परं भेदः।

असङ्गतौ—कार्य्यकारणवैयधिकरण्यप्रदर्शनरूपविलक्षणवैचित्र्याधायकत्वेन कार्य्यकारणयोर्वैयधिकरण्यकल्पनम्; विरोधे तु—स्वतः समानाधिकरणयोरपि विरोधकल्पनमित्यनयोर्भेदः।

विषमे—कारणे यादृशो गुणो वर्त्तते, कार्य्ये तद्विरुद्धस्यैव गुणस्य उत्पत्तिः; अतद्गुणे तु—कार्य्यस्य स्वगुण-विरोधि-कारणगुणोत्पत्तिसम्भावनायां सत्यामपि तदनुत्पत्तिरित्यनयोर्भेदः।

विशेषे—एकस्य वस्तुनः अनेकत्र युगपदवस्थानम्; पर्य्याये तु—एकस्यैव अनेकत्र क्रमेणैव वृत्तिरित्यनयोर्भेदः।

कारणमालायाम्—पूर्व्वपूर्व्वस्य वस्तुनः परं परं प्रति हेतुत्वमात्रम्; मालादीपके तु—पूर्व्वपूर्व्वस्यार्थस्य उत्तरोत्तरत्र हेतुत्वं, सर्व्वेषामेकक्रियान्वयनियमश्च इत्यनयोर्भेदः।

परिवृत्तौ—एकवस्तुत्यागोपाधिकापरवस्तूपादानरूपो विनिमयः; पर्य्याये तु—अपरवस्तूपादानं प्रति अन्यवस्तुत्यागस्य नियमाभावः इत्यनयोर्भेदः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रतीयमानव्यपोह्यायां प्रश्नपरिसङ्ख्यायाम्—अन्यव्यपोहस्यैव विलक्षणवैचित्र्याधायकत्वेन तत्रैव कवेस्तात्पर्य्यम् ; द्वितीयोत्तरे तु—असकृत्प्रश्नपूर्व्वकमसकृदुत्तरमात्रं, न तु अन्यस्य कस्यचित् व्यपोह्योऽपीत्यनयोर्भेदः ।

प्रथमोत्तरे—उक्तेन साधनेन अनुक्तस्य साध्यस्य ज्ञानम् ; अनुमाने तु—उक्तेनैव साधनेन उक्तस्यैव साध्यस्य ज्ञानमित्यनयोर्भेदः ।

प्रथमोत्तरे—उत्तरस्य प्रश्नं प्रति कल्पकत्वरूपहेतुत्वं, न तु निष्पादकत्वमपि ; काव्यलिङ्गे तु—वाक्यपदार्थयोर्निष्पादकत्वरूपहेतुत्वमित्यनयोर्विशेषः ।

अर्थापत्तौ—ज्ञाप्यज्ञापकयोरव्यभिचरितसामानाधिकरण्यरूपव्याप्तेरस्वरूपेण नियतसामान्यन्यायेन अर्थान्तरप्रतीतिः ; अनुमाने तु—साध्यसाधनयोः तादृशव्याप्तिरूपसम्बन्धग्रहजन्यतादृशार्थज्ञानमित्यनयोर्भेदः ।

समुच्चये—कस्यचित् कार्य्यस्य निष्पत्त्यर्थं सर्व्वेषामेव कारणानां खलेकपोतिकान्यायात् साहित्येनावतारः ; समाधौ तु—एककार्य्यं प्रति समग्रे साधके विद्यमानेऽपि तत्कार्य्यसौकर्य्यार्थं काकतालीयन्यायेन दैवात् कारणान्तरस्य आपतनमित्युभयोर्विशेषः ।

द्वितीयसमुच्चये—नियमेन कार्य्यकारणकालनियमविपर्य्ययरूपातिशयोक्तिमूलकत्वम् ; दीपके तु—तन्मूलकत्वाभावः इति अनयोर्भेदः ।

सामान्ये—उभयोरेव पदार्थयोः समानगुणशालितया अन्योन्यभेदग्रहाभावः ; मीलिते तु—उत्कृष्टगुणशालिना वस्तुना निकृष्टगुणशालिनः तिरोधानमित्यनयोर्भेदः ।

तद्गुणे—सन्निकृष्टेन विजातीयोत्कृष्टगुणेन स्वापकृष्ट-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

गुणस्यैव तिरोधानं, न तु वस्तुनोऽपि ; मीलिते तु—वस्तुनोऽपीत्यनयोर्विशेषः।

व्याजोक्तौ—गोपनकारिभिन्नेन काव्यादिना अप्रकृतारोपविषयो व्यज्यते, न तु अभिधया प्रतिपाद्यते ; प्रथमापह्नुतौ तु—अपह्नवकारिणा प्रकृतगोपनेन अप्रकृतविषयोऽभिधीयते इत्यनयोर्विशेषः।

स्वभावोक्तौ—लौकिकवस्तुगत-कविमात्रसंवेद्य-सूक्ष्मधर्मस्वभावस्यैव यथावद्वर्णनम् ; भाविके तु—वस्तुविशेषस्य वर्णनाविशेषवशेन प्रत्यक्षवद्भासमानत्वमित्यनयोर्भेदः।

भाविके—भूतभाविपदार्थानां वर्णनाविशेषवशेन प्रत्यक्षवदाभासमानत्वम्; अतिशयोक्तौ तु—उपमेये उपमानाभेदारोपस्य सिद्धवन्निर्द्देश इत्यनयोर्भेदः।

भाविके—भूतभाविनोर्वस्तुनोर्भूतभावितयैव अवगमः; भ्रान्तिमति तु—अतत्पदार्थस्यापि तत्पदार्थतया बोध इति अनयोर्विशेषः।

एवमन्येऽपि भेदाः निपुणमतिभिरालङ्कारिकैः स्वयमूहनीया इत्यलमतिपल्लवितेन।

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्यस्य पौत्रः

एम, ए, उपाधिधारी

श्रीपञ्चाननभट्टाचार्य्यः।

---

# अशुद्धिशोधनम् ।

| पृष्ठायां | पङ्क्तौ | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ३२६ | ९ | वाक्यार्थस्य | रसभाववाक्यार्थानाम् । |
| ४६२ }<br>४६३ } | २९ पङ्क्तिमारभ्य }<br>१५ पङ्क्तेः टीकां }<br>यावत् | पतिर्यथा……<br>अधमया स्त्रिया | पतिर्यथेति । — उत्तमेन उत्तमा स्त्री वयस्या इति, मध्यमेन मध्यमा इष्टी इति, अधमेन । |
| ५९३ | २० | परिगृहीतविरुद्धरसाङ्ग विभावादित्वम्, | विरोधिरसाङ्गविभावाद्युपादानम् । |
| ५९३ | २३ | रसगतास्त्रयोदशदोषाः | रसगताश्चतुर्दश दोषाः । |
| ५९३ | २३—२४ | परिगृहीतविरुद्धरसाङ्ग-विभावादित्व | विरोधिरसाङ्गविभावाद्युपादान । |
| ७०१ | ५ | समानधर्मस्य | समानधर्मो वा । |
| ७१५ | २० | धर्मोवादिलोपे च द्वे | धर्मोपमानयोर्लोपे द्वे, धर्मोवादिलोपे च द्वे. |
| ७३७ | १६ | शोभाविस्कार | शोभाऽऽविष्कार । |
| ७४४ | ९ | त्वराविच्छित्ति | त्वरविच्छित्ति । |
| ७५२ | २६ | अतेवं बोध्यं,यथा हि— | केचित्तु द्वात्रिंशत्त्वमेव उपपादयन्ति, तथा हि— । |
| ७५५ | ९ | इति | इति, तदसत्, मूलकारविरोधात् । |

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

| पृष्ठायाः | पङ्क्तौ | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ७७१ | २ | असम्बन्ध | असम्बन्धे। |
| ८०४ | २—३ | स्वावस्थासमारोपिणा नवच्छादितं स्वरूपमेव | स्वावस्थासमारोपिणावच्छादितस्वरूपमेव। |
| ८४२ | २८ | वषयस्य | विषयस्य। |
| ८५८ | २२ | समधिककविसम्मतताभावात् | बहुभिरालङ्कारिकैरनादृतत्वात्। |
| ८७१ | ९ | समुच्चयप्रकारानियमेन | समुच्चयप्रकारा नियमेन |
| ८८४ | ७ | अप्रकृतनिषेधपूर्वकप्रकृत | प्रकृतनिषेधपूर्वकाप्रकृत। |
| ८९० | १६ | शृङ्गारहासाद्यन्यतमः | शृङ्गारहास्याद्यन्यतमः। |
| ८९० | १८ | कर्यास्त्रिंशद्भेदाः | चर्यास्त्रिंशद्भेदभिन्नाः। |

———

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# साहित्यदर्पणः ।

## प्रथमः परिच्छेदः ।

C. M. V. Sharma
Malapandai

### अवतरणिका ।—

ग्रन्थारम्भे निर्विघ्नेन प्रारिप्सितपरिसमाप्तिकामो वाङ्मयाधिकृततया वाग्देवतायाः साम्मुख्यमाधत्ते । (क)—

---

(क) प्रणम्य परमात्मानं श्रीजीवानन्दशर्म्मणा ।
साहित्यदर्पणव्याख्या विमलाऽऽख्या विरच्यते ॥

अथ प्रथमकारिकायां सरस्वत्याराधनेन स्वार्थनिर्वाहप्रयुक्तिपरतां प्रकटयितुं ग्रन्थकृदवतरणिकामाचष्टे, ग्रन्थारम्भ इति ।—ग्रन्थस्य "विषयो विशयश्चैव पूर्व्वपक्षस्तथोत्तरम् । निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥" इत्युक्तपञ्चाङ्गशालिनः "सम्बन्धप्रयोजनाद्दितशुश्रूषाजन्यश्रवणविषयशब्दसन्दर्भो ग्रन्थः" इत्युक्तस्वरूपस्य वा महावाक्यविशेषस्य । आरम्भे—आरम्भप्राक्काले । आद्यकृतिरूपस्य आरम्भस्य मङ्गलाचरणाधिकरणत्वबाधादियं लक्षणा, तत्प्रयोजनञ्च मङ्गलाऽऽरम्भयोरव्यवहितत्वबोधः । केचित् तु "आरम्भे भाविनि सतीत्यर्थः" इत्याहुः, तन्न ; तथा सति 'आरम्भप्राक्काले' इति पदादिव 'आरम्भे भाविनि सति' इत्यस्मादारम्भप्रागभावसमानकालीनत्वमात्रस्यैव बोधः, न तु सदाचारपरम्परापरिप्राप्तस्य आरम्भाव्यवहितप्राक्कालीनत्वस्य । न च कालान्तरीयस्य मङ्गलाचरणस्यापि अदृष्टद्वारा प्रकृतोपयोगित्वात् तयोः (मङ्गलाचरणग्रन्थारम्भयोः) अव्यवहितत्वस्य बोधोऽकिञ्चित्कर इति वाच्यम् ; तस्य प्राशस्त्येनात्यन्तोपयोगित्वकल्पनात् । निर्विघ्नेन—प्रतिबन्धकीभूतदुरदृष्टविनाशद्वारा । प्रारिप्सितस्य—चिकीर्षाविषयस्य । परिसमाप्तिः,—चरमवर्णपर्य्यन्तानुष्ठानम् ; तत्कामो ग्रन्थकृदिति शेषः । अत्र "ग्रन्थकृत्" इत्यभिधानाभावस्तु तस्य निरभिमानत्वं सूचयितुमिति बोध्यम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वाङ्मयानि अष्टादश विद्याः काव्यकलाः कामशास्त्रादीनि च, तदधिकृततया तदध्यक्षतया। वाग्देवतायाः,—सरस्वत्याः। साम्मुख्यम्—आराधनेन स्वार्थसाधनाऽनुकूलत्वम्। आधत्ते—सम्पादयति, करोति इति यावत्। अत्र प्रथमपुरुषाभिधानं "रामः स्वं याचते" "जीवत्यहो ! रावणः" इत्यादिवत् काल्पनिकं भेदमुररीकृत्य ; अन्यथा अस्मत्-कर्तृत्वेन उत्तमपुरुषः एव स्यात्। न च वृत्तिकार कारिकाकारयोर्वास्तवो भेद इति वाच्यम् ; "रसस्वरूपं निरूपयिष्यामः" इति प्रतिज्ञातुर्वृत्तिकारस्य कारिकया रसनिरूपणं तथात्वेऽसङ्गतं स्यात्। अत्रेदं बोध्यम्,—अत्र वाग्देव्या अभ्यर्थनं नितान्तमुपयुक्तं, तस्याः साम्मुख्यं विना वाङ्मात्रस्याप्युल्लासासम्भवः, ग्रन्थनिर्म्माण-तत्परिसमाप्ती तु पुनर्दूरे वर्त्तेताम्। तदाराधनं चानुषङ्गतोऽध्येतॄणां वक्तॄणां श्रोतॄणां व्याख्यातॄणाञ्च मङ्गलार्थम्। यथोक्तं महाभाष्यकारैः,—"मङ्गलादीनि हि शास्त्राणि प्रथन्ते, वीरपुरुषाणि च भवन्ति, आयुष्मत्पुरुषाणि च अध्येतारश्च सिद्धार्था यथा स्युः" इति। ननु किमर्थमिह मङ्गलाधानं; तस्य विघ्नध्वंसं प्रति समाप्तिं प्रति वा कारणत्वानुपपत्तेः, न हि नास्तिकादयो मङ्गलमाचरन्ति, समाप्तिः पुनस्तदीयानामपि ग्रन्थानाम् इति चेत्, विशिष्टशिष्टाचारपरम्पराप्राप्ततया तस्य सफलतायां सिद्धायां, तत्र च फलजिज्ञासायां सति प्रत्यक्षफलकत्वे परोक्षफलकल्पनायाः "उपस्थितं परित्यज्य अनुपस्थितकल्पने मानाभावः" इति न्यायादनुचितत्वेन उपस्थिततया परिसमाप्तिरेव फलं कल्पनीयम्। तथा च,—यत्र न मङ्गलाचरणं, तत्र जन्मान्तरीयं मङ्गलाचरणमेव हेतुः ; यत्र पुनः मङ्गले आचरितेऽपि न परिसमाप्तिः,तत्र विघ्नबाहुल्यं विघ्नप्राबल्यं वाऽन्तरायो वक्तव्यः। 'पशानुरूपो बलिः' इति न्यायेन बहुलतया प्रबलस्यैव मङ्गलस्याचरितस्य विघ्नध्वंसं प्रति कारणत्वात् इति। वस्तुतस्तु मङ्गलं हि उत्तेजकं, तच्च प्रतिबन्धकस्थलीये एव कार्य्ये कारणम् ; 'निर्विघ्नं समाप्यताम्' इति कामनया, खेष्टसाधनानाम् अंशे संशयरहितानां विशिष्टानां शिष्टानामाचारेण अनुमितया श्रुत्या विघ्नाभावप्रयोज्यां समाप्तिमेव विधत्ते। समाप्तिश्च स्वाभिलषितरीत्या प्रारिप्सितस्य चरमवर्णान्तं पूर्त्तिः; अत एव मङ्गले विहितेऽपि असमाप्तिर्युज्यते, विघ्नबाहुल्यसम्भवात्, फलबलेन मङ्गलापूर्वस्य एकविघ्नध्वंसकर्तृतायाः कल्पनात्। काम्यकर्मणि अङ्गवैकल्यम् अपूर्वानुत्पत्तिर्वा कल्प्यताम्, इति मङ्गलाचरणस्य अपूर्वद्वारा विशिष्टसमाप्तिफलकत्वमुपपन्नम्। तथा च प्रारिप्सितस्य अस्य ग्रन्थस्य आरम्भाव्यवहितपूर्ववर्त्तिनि क्षणे, "अस्य भवतु निर्विघ्ना परिसमाप्तिः" इत्यभिलषन् ग्रन्थकारः श्रीविश्वनाथकविराजः स्वयं स्वस्यान्येषामपि मङ्गलमनुषङ्गतो वर्द्धयितुं वाङ्मयस्य ग्रन्थस्य वागधिकृतत्वात् वाग्देव्या आशीःप्रार्थनं आधत्ते इति समुदितार्थः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**शरदिन्दुसुन्दररुचिश्चेतसि सा मे गिरां देवी।**
**अपहृत्य तमः सन्ततमर्थानखिलान् प्रकाशयतु॥१॥(ख)**

(ख) शरदिन्दिति।—सा वेदागमादिप्रसिद्धा, स्वाभिलषितार्थसम्पादनहेतुतया स्वाराध्यत्वेन वा; गिरां देवी सरस्वती मम चेतसि वर्त्तमाना सती तमोऽज्ञानमपहृत्य विनाश्य अखिलान् सर्वान् अर्थान् वाच्यलक्ष्यतात्पर्य्यव्यङ्ग्यरूपान् प्रतिपाद्यविषयान् सन्ततं यदा यदा अर्थज्ञानमुपयुक्तं तस्मिन् सर्व्वस्मिन् अपि समये इति भावः; यद्वा,—सा स्वतः प्रसिद्धा। यद्वा,—"अकारो विष्णुरुद्दिष्टः" इत्येकाक्षरकोषोक्तेः अः विष्णुः, तेन एन सह वर्त्तमाना, इति सा, विष्णुसहिता इत्यर्थः, गिरां वाग्-व्यापाराणां देवी अधिष्ठात्री मे मम उपलक्षणेन शिष्यादीनाञ्च चेतसि सन्ततं व्याप्तं तमोऽन्धकाररूपम् अज्ञानम् अपहृत्य अखिलान् निर्दुष्टत्वे सति गुणव्यञ्जकत्वालङ्कारोज्ज्वलकत्वादिनाऽङ्गवैकल्यहीनान् अर्थान् वाच्यादीन् प्रकाश-यतु प्रकटीकरोतु; यद्वा,—सन्ततमिति "तमः" इत्यस्य विशेषणं, निविड़मिति तदर्थः। सा कीदृशी? शरदिन्दोरिव सुन्दरी अतिविशदा रुचिर्दीप्तिर्यस्याः सा तथा, शरदः इन्दुश्चन्द्र इति शरदिन्दुः, शरत्कालीनचन्द्र इत्यर्थः। अस्य मेघाद्यावरणशून्यतया नितान्तं रमणीयस्य रुचैव (न तु लक्ष्मादिना) सादृश्ये भगवत्या रमणीयताऽतिशयः सूचितः। अथ च, इयं तथा तमोऽपहृत्य अर्थान् विषयान् प्रकाशयतु, यथा शरदिन्दुः तमः ध्वान्तं विनाश्य अर्थान् वस्तूनि प्रकाशयति तथेत्युपमा। वाङ्मयाधिष्ठातृत्वख्यापनाय 'गिरां देवी' इत्यनेन सरस्वत्या उपन्यासः। अत्र "सा" इत्यनेन सरस्वत्याः श्रवणं, 'चेतसि वर्त्तमाना' इत्यनेन मननं ध्यानञ्च लभ्यते इति त्रिविधं सरस्वत्याराधनमवोक्तं, तस्य विघ्नध्वंसद्वारा प्रारिप्सितपरिसमाप्तिरेव फलं, न तु विशिष्टं, यथा निष्पापस्य ब्रह्मलोकप्राप्तिरेव सन्ध्योपासनस्य फलं, न तु पापक्षय-पूर्व्वकब्रह्मलोकप्राप्तिः। तदुक्तं,—"सन्ध्यामुपासते ये तु नियतं शंसितव्रताः। विधूत-पापास्ते यान्ति ब्रह्मलोकमनामयम्॥" इति। अथवा,—देवी दुर्गा मे मम गिरामर्थान् चेतसि व्युत्पित्सूनां हृदि प्रकाशयतु। यद्वा—सा देवी दुर्गा गिरां वचसां प्राचाम-र्वाचामाचार्य्याणां वा सम्बन्धिनीनां सिद्धान्तोक्तीनां तमः तात्पर्य्याविज्ञानरूपं तात्पर्य्या-विष्करणाक्षमतारूपं वा अन्धकारमपहृत्य मे मम चेतसि अर्थान् पारमार्थिकदशायां सिद्धान्तरूपान् अभिधेयान् प्रकाशयतु। सा कीदृशी? शरदिन्दुसुन्दरः शरच्चन्द्रवत् शुभ्रकान्तिः, शरदिन्दुना निर्म्मलचन्द्रेण भालस्थितेन इति यावत्, सुन्दरः मनोहरः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अस्य ग्रन्थस्य काव्याङ्गतया काव्यफलैरेव फलवत्त्वम् इति (ग) काव्यफलान्याह,—

**चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि ।**
**काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते ॥ २ ॥ (घ)**

---

उभयत्र शिवः इत्यर्थौ वाच्यः; तत्र रुचिरभिलाषो यस्याः सा तथा, अन्यत् समानम्। एतत्पक्षे 'वाञ्छयाऽधिकृततया' इति कर्तृविशेषणम्। वाञ्छयाधिकृतो ग्रन्थकृदिति तदर्थः; अथवा,—"अवाग्देवताया:" इति गोपनीयदेवताया इत्यर्थः, इष्टदेवताया गोपनीयत्वमागमे सुप्रसिद्धम्। यद्वा,—निर्विघ्नेन इति विघ्नाभावद्वारेत्यर्थः। अभावश्च यथायथमत्यन्ताभावो ध्वंसश्च ग्राह्यः; अत्यन्ताभावपक्षे अन्वयव्यतिरेकानुविधायित्वरूपं जन्यत्वमादाय व्यापारत्वनिर्वाहः। एतन्मते सर्वत्रैव विशिष्टफलवत्त्वमित्यर्थसम्भव इति सर्वं समञ्जसम्।

(ग) 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायेन प्रवृत्त्यङ्गं प्रयोजनवत्त्वं दर्शयति, अस्येति।—अस्य प्रक्रम्यमाणस्येत्यर्थः। काव्याङ्गतया काव्यमङ्गं यस्य,तस्य भावस्तत्ता तया तथोक्तया। काव्यफलैरिति।—धान्येन धनवान् इतिवत् अभेदे तृतीया, काव्यफलाभिन्नफलवत्त्वमित्यर्थः। एतेन अस्य अङ्गित्वं,काव्यस्य पुनरङ्गत्वं सूचितम्। अतः अङ्गसाफल्येनैव अङ्गिनः साफल्यमिति। यथा दर्शपौर्णमासाङ्गानां प्रयाजादीनां दर्शपौर्णमासफलेनैव फलवत्त्वं, तथाऽस्यापीति भावः। ननु प्रयाजादीनामङ्गापूर्वजननद्वारा परमापूर्वे प्रत्युपकारः सम्भवतीति तत्र तथाऽस्तु, प्रकृते तु शास्त्रस्य काव्यगुणदोषादिज्ञापनोपक्षीणत्वेन चतुर्वर्गे प्रत्युपकारासम्भवात् कथं तत्साधनत्वम्? इति चेन्न, काव्यं हि स्वरूपं सत् न कारणं, किन्तु, कृतिज्ञप्त्यन्यतरविषयतया, इति अत्रास्योपकारः सम्भवतीति न कापि विप्रतिपत्तिः। ननु अस्य चतुर्वर्गातिरिक्तकाव्यगुणादिज्ञानरूपफलसत्त्वात् कथमेवकारार्थान्वयः? इतिचेन्न,'फलवत्त्वम्' इत्यत्र मतुपः प्रशस्तार्थत्वेनोत्कृष्टफलपरत्वात्। एवञ्च चतुर्वर्गफलसाधनत्वज्ञापनेन अत्र लोकानां सामिनिवेशप्रवृत्तिर्भविष्यतीति भावः। इति—इत्यस्मात् कारणात् इत्यर्थः।

(घ) काव्यफलप्रदर्शनपुरःसरं काव्यस्वरूपनिरूपणं प्रतिजानीते, चतुर्वर्गेति।—चतुर्वर्गो धर्मार्थकाममोक्षा एव फलं तस्य प्राप्तिः; सुखाद—अनायासात्; अल्पधियां—सुकुमारमतीनाम्, अपिना परिणतबुद्धीनाञ्च, यतो यस्मात् हेतोः काव्यात्। एवकारेण वेदादिशास्त्रव्यवच्छेदः। यद्वा,—'यतः' इति 'काव्यात्' इत्यस्य विशेषणम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

चतुर्वर्गफलप्राप्तिर्हि काव्यतः "रामादिवत् प्रवर्त्तितव्यं, न रावणादिवत्" इत्यादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशद्वारेण सुप्रतीतैव। (ङ)

उक्तञ्च,—"धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
करोति कीर्त्तिं प्रीतिञ्च साधुकाव्यनिषेवणम्॥"इति(च)

किञ्च,—काव्यात् धर्मप्राप्तिर्भगवन्नारायणचरणारविन्दस्तवादिना, "एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके च कामधुग् भवति" इत्यादिवेदवाक्येभ्यश्च सुप्रसिद्धैव। अर्थप्राप्तिश्च प्रत्यक्षसिद्धा; कामप्राप्तिश्चार्थद्वारैव। मोक्षप्राप्तिश्चैतज्जन्यधर्मफलाननुसन्धानात्, मोक्षोपयोगिवाक्ये व्युत्पत्त्याधायक-

---

एवञ्च प्राचीनसम्मतं नीरसकाव्यं चतुर्वर्गासाधनत्वात् न निरूपणीयमिति फलितम्; तेन—आयासं विना चतुर्वर्गसाधनत्वेन, तस्य काव्यस्य स्वरूपमिति स्वम् असाधारणं रूपम् इतरव्यावर्त्तको धर्मः, लक्षणमित्यर्थः, निरूप्यते ज्ञाप्यते।

(ङ) काव्यस्य चतुर्वर्गसाधनत्वमुपपादयति, चतुर्वर्गफलप्राप्तिर्हीति।—रामादिवत् रामादिनेव, चतुर्वर्गकामिणा पित्राज्ञापरिपालनादौ प्रवर्त्तितव्यम्; न रावणादिवत्—रावणादिनेव, परदारहरणादौ न प्रवर्त्तितव्यम् इत्यर्थः। कृत्यं विहितं कर्म, अकृत्यं निषिद्धं कर्म, तयोः प्रवृत्तिनिवृत्ती यत्नविशेषौ. तयोरुपदेशस्तज्जनकज्ञानं, स एव द्वारं व्यापारः तेन। तथाहि काव्यात् विहितकर्मणि कर्त्तव्यताज्ञानं, ततस्तत्र प्रवृत्तिः, ततः तदनुष्ठानं, ततो धर्मः, तस्मादर्थकामौ, 'धर्मादर्थश्च कामश्च' इति स्मरणात्; विहितकर्मफलत्यागात् निषिद्धाननुष्ठानाच्चापवर्गः, "युक्तः कर्मफलत्यागात् शान्तिं प्राप्नोति नैष्ठिकीम्" इति स्मरणात्; 'व्यापारेण व्यापारिणो नान्यथासिद्धिः' इति न्यायेन काव्यस्य धर्मादिजनकत्वमिति भावः।

(च) अत्र प्राचीनसंवादमाह, उक्तञ्चेति।—धर्मार्थकाममोक्षेषु लक्षणया तदुपायेषु विषयेषु, वैचक्षण्यं—विशिष्टज्ञानं, कलासु—नृत्यगीतादिचतुःषष्टिप्रकारासु च वैचक्षण्यं, कीर्त्तिं—ख्यातिं, प्रीतिं शोकापनोदपुरःसरं प्रसन्नताञ्च (कर्म) साधुकाव्यस्य निषेवणं—करणं ज्ञानञ्च, (कर्त्तृ) करोति—जनयति, यद्वा—'साधु' इति क्रियाविशेषणम्; तथा च काव्यनिषेवणं (कर्त्तृ) साधु यथा भवेत् तथा करोति इत्यर्थः। अन्यत् पूर्ववत्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

त्वाच्च । चतुर्वर्गप्राप्तिर्हि वेदशास्त्रेभ्यो नीरसतया दुःखादेव परिणतबुद्धीनामेव जायते, परमानन्दसन्दोहजनकतया सुखादेव सुकुमारबुद्धीनामपि पुनः काव्यादेव । (छ)

(छ) ननु काव्यं कर्त्तव्यत्वाकर्त्तव्यत्वज्ञानद्वारा कृत्याकृत्यप्रवृत्तिनिवृत्ती प्रति कारणमास्तां, धर्मादिं प्रति तु अन्यथासिद्धमेवेत्यत आह, किञ्चेति ।—काव्यादिति प्राप्तान्तपदचतुष्टयेनान्वेति । स्तवः,—गुणज्ञापनम् ; आदिना विष्णुजन्मादिज्ञापनं तद्वारेत्यर्थः ; एवञ्च एतस्य निर्विषयमात्रेण सर्वार्थसिद्धौ एकैकार्थसिद्धिहेतुहेतुभूतं शास्त्रान्तरनिर्विषयं मन्दप्रयोजनमिति सूचितम् । ननु शास्त्रान्तरापेक्षयाऽस्य अल्पत्वेऽपि एतत् कथं सङ्गटते? इत्याशङ्क्योत्तरयति, एक इति ।—एकोऽपीत्यर्थः । सुप्रयुक्तः,—रसवत्तया रचितः, सम्यक्—ताद्रूप्येण ज्ञातः ; अत्र वाकारौ बोद्धव्यः । स्वर्गे—परलोके । लोके—अस्मिन् मर्त्त्ये च, कामधुक्—सर्वार्थसाधकं भवति । इत्यादिवेदवाक्येभ्यः इत्यादिभ्यो वेदसदृशेभ्यो वाक्येभ्यः इत्यर्थः । 'इत्यादिवाक्येभ्यः' इति पाठान्तरे तु—आम्नानामित्यादिभ्यो वाक्येभ्य इत्यर्थः । सत्काव्यकृतिज्ञप्रत्यन्यतरस्य धर्मसाधनत्वं वेदप्रसिद्धमिति भावः । तदेव युक्त्या दर्शयन्नाह, प्रत्यक्षसिद्धेति ।—धनिस्तवादिना कवीनां धनप्राप्तिर्लोकप्रसिद्धैव इत्यर्थः । कामप्राप्तिश्चेति ।—काम्यते इति कामो विषयभोगः तस्य प्राप्तिः, "धर्मादर्थस्ततः कामः कामात् सुखसमुन्नतिः" इति स्मरणात् । एतज्जन्येति ।—काव्यजन्येत्यर्थः । धर्मस्याननुसन्धानादेव तदधीनोत्पत्तिकयोरर्थकामयोरुत्पत्तिसम्भावनैव नास्तीति तयोरनुपादानम् ; यद्वा,—धर्मप्रधानं फलं धर्मफलं, तेन अर्थकामयोरपि सङ्ग्रहः ; तस्य अननुसन्धानात्—अपारमार्थिकत्वेन साध्यत्वानिर्द्धारणात् । मोक्षोपयोगिवाक्यम्—उपनिषदादि, तत्र व्युत्पत्त्याधायकत्वात्—दृढतरज्ञानजनकत्वात् । ननु काव्यादुपनिषदादिव्युत्पत्तिः, ततस्तदर्थानुष्ठानं, ततो मोक्षप्राप्तिरित्यन्यथासिद्धिताद-वस्थ्यमेवेति चेत् ? सत्यम् ; उपनिषदादिज्ञानादपि मोक्षप्राप्तिरित्यभिप्रायेणाखोलापनात् । काव्यादेवेत्येवकारव्यवच्छेद्यं दर्शयितुमाह, चतुर्वर्गेति ।—वेदाः ऋग्यजुःसामाथर्वाख्याः, शास्त्राणि मीमांसादीनि । दुःखादेवेति सुखव्यवच्छेदः । परिणतबुद्धीनां वेदादिभ्यो धर्मादिप्राप्तिः सुखान्न भवति, सुकुमारमतीनान्तु दुःखादपि न भवतीति भावः । परमानन्दसन्दोहः,—रसास्वादसुखपरम्परा, तज्जनकतया—तत्साधकत्वेन । अपिना परिणतबुद्धिसमुच्चयः । काव्यादेवेति एवकारः शास्त्राणां व्यवच्छिनत्ति ; तथा च रसास्वादनार्थमपि प्रवर्त्तमानस्य कृत्याकृत्योपदेशपर्यवसन्नं सत्काव्यं चतुर्वर्गमपि जनयतीति भावः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ननु तर्हि परिणतबुद्धिभिः सत्सु वेदशास्त्रेषु काव्येषु किमिति यत्नः करणीयः? इत्यपि न वक्तव्यम्;—कटुकौषधोपशमनीयस्य रोगस्य सितशर्करोपशमनीयत्वे कस्य वा रोगिणः सितशर्करा-प्रवृत्तिः साधीयसी न स्यात्? किञ्च, काव्यस्योपादेयत्वमाग्नेय-पुराणेऽप्युक्तम्, (ञ)—

"नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा।
कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा॥" इति। (झ)

---

(ञ) ननु चतुर्वर्गार्थं प्रेक्षावन्तः वेदादीननादृत्य किमित्यनाप्तवाक्ये काव्ये प्रवर्त्तन्ताम्? इत्यभिप्रायेण शङ्कते, नन्विति।—तर्हि—काव्यस्य चतुर्वर्गसाधनत्व-स्वीकारेऽपि। यत्नः,—चतुर्वर्गार्थमुद्यमः। काव्यात् तावत् रसास्वादो दुःखं विना धर्मादिप्राप्तिश्च भवति; वेदादिभ्यस्तु दुःखेनैव धर्मादिप्राप्तिरिति वेदाद्यपेक्षया काव्यस्यादर इति सर्वं समीचीनम्। एतदेव लौकिकदृष्टान्तेन द्रढयति, कटुकेति।—कटुकेति तिक्ताद्युपलक्षणम्। सितशर्करेति।—सितशर्करा—अतिशुभ्रगुड़विकार-विशेषः, तया उपशमनीयत्वे प्रतिकार्य्यत्वे। ततश्च काव्यस्य अनाप्तवाक्यत्वेऽपि स्मृति-सदाचारवत् वेदानुमापकत्वेन प्रामाण्यमवगन्तव्यमिति भावः। काव्यस्य सयौक्तिक-मुपादेयत्वमुपपाद्य वाचनिकं तदुपपादयति,—किञ्चेति। आग्नेयपुराणे षट्त्रिंश-दधिकत्रिशततमे (३३६) अध्याये। अपिना किं पुनरन्यत्रेति लभ्यते।

(झ) तदेव वाक्यमवतारयति, नरत्वमिति।—लोके जगति प्रथममग्रतः तावत् मानवजन्म दुर्लभम् अशीतिलक्षयोनिभ्रमणान्ते तस्याधिगमादिति भावः। तत्रापि नरत्व तद्धर्मः दयादाक्षिण्यादिसहितसदसत्कार्य्यविवेकित्वं नितान्तं दुर्लभमिति; तत्र नरत्वे विद्या शास्त्रज्ञानं सुदुर्लभा अतिदुष्प्रापा। तत्र विद्यायामपि इत्यर्थः, कवित्वं काव्यरचयितृत्वं दुर्लभं दुष्प्रापम्। यदि कोऽपि विद्वान् कथञ्चित् एकं द्वौ वा श्लोकौ रचयितुं शक्नोति, किन्तु काव्यग्रन्थं प्रणेतुं नेत्याह, शक्तिरिति।—शक्तिः सामर्थ्यं, काव्यकरणज्ञानान्यतरजनकः संस्कारविशेषः, सुदुर्लभा अतिदुरापेत्यर्थः। 'व्युत्पत्ति-दुर्लभा तत्र विवेकस्तत्र दुर्लभः' इत्यादीति शेषः। ततश्च बहुतरपुण्यसापेक्षता काव्य-कृतिज्ञप्तिशक्तेरिति फलितम्। शक्त्यादीनां स्वरूपं यथोक्तं रुद्रटभट्टैः,—"मनसि सदा सुसमाधिनि विस्फुरणमनेकधाऽभिधेयस्य। अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः॥ प्रतिभेत्यपरैरुदिता सहजोत्पाद्या च सा द्विधा भवति। पुंसा सह जातत्वा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"त्रिवर्गसाधनं नाट्यम्" इति च। (ञ)

विष्णुपुराणेऽपि,—

"काव्यालापाश्च ये केचिद् गीतकान्यखिलानि च।

शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः॥" इति। (ट)

तेन हेतुना तस्य काव्यस्य स्वरूपं निरूप्यते। एतेनाभिधेयञ्च प्रदर्शितम्। (ठ)

---

दनयोस्तु ज्यायसी सहजा॥ स्वयमसौ संस्कारं परमपरं मृगयते यतो हेतुम्। उत्पाद्या तु कथञ्चिद् व्युत्पत्त्या जन्यते परया॥ छन्दोव्याकरणकलालोकस्थितिपदपदार्थविज्ञानात्। युक्तायुक्तविवेको व्युत्पत्तिरियं समासेन॥ विस्तरतस्तु किमन्यत् तत इह वाच्यं न वाचकं लोके। न भवति यत्काव्याङ्गं सर्वज्ञत्वं ततोऽन्येषा॥ अधिगतसकलज्ञेयः सुकविः सुजनस्य सन्निधौ नियतम्। नक्तंदिनमभ्यस्येदभियुक्तः शक्तिमान् काव्यम्॥' इति। अत्रेदं बोध्यम्;—"प्रतिभैव श्रुताभ्याससहिता कवितां प्रति। हेतुर्मृदम्बुसम्बद्धबीजव्यक्तिर्लतामिव॥" इत्युक्तदिशा प्रतिभाऽपरपर्य्याया शक्तिरभ्यासापरपर्य्यायाभ्याससहिता काव्योद्भावनं प्रति, लतोद्भवं प्रति बीजव्यक्तिरिव हेतुः, तत्र बीजव्यक्तिसमा प्रतिभा, मृदम्बुवच्च श्रुतादीनामभ्यासः इति दिक्।

(ञ) त्रिवर्गसाधनमिति।—त्रयाणां वर्गः धर्मार्थकामा इत्यर्थः, तस्य साधनं लाभोपाय इत्यर्थः। नाट्यम्—अभिनेयनाटकादि। इति चेति।—उक्तमिति पूर्वेणान्वेति।

(ट) पुनश्च काव्यस्योपादेयत्वं विष्णुपुराणप्रामाण्यात् द्रढ़यति, काव्यालापाश्चेति।—ये केचित् काव्यालापाः सरसशब्दार्थव्याहाराः, यानि च अखिलानि सन्त्राणि, गीतकानि सङ्गीतयः, विद्यन्ते इति शेषः, एते शब्दमूर्त्तिधरस्य वेदमयस्य, महात्मनः विष्णोः नारायणस्य, अंशाः स्वरूपविशेषा इत्यर्थः। अतः तत्सेवनफलस्य नारायणसेवासमफलत्व, तेन महापुण्यसम्भव इति भावः।

(ठ) तेन हेतुना—चतुर्वर्गफलसाधनत्वेनेति भावः। अभिधेयञ्च—अस्य ग्रन्थस्य वाच्यञ्च। एतेन—चतुर्वर्गफलप्राप्तिरित्यनेन अभिहितम्; चकारात् प्रयोजनसम्बन्धावपि समुच्चीयेते। सम्बन्धश्चात्र प्रयोजनाभिधेययोः कार्य्यकारणभावरूप इति। अयं भावः,—"सिद्धार्थं सिद्धसम्बद्धं श्रोतुं श्रोता प्रवर्त्तते। शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः॥" इति न्यायात् शास्त्रादौ सम्बन्धादीनामभिधानमुचितमितीदमभिधानम्। इति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत् किंस्वरूपं तावत् काव्यम् ? इत्यपेक्षायां कश्चिदाह,—"तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" इति। एतच्चिन्त्यम् ; (ड) तथाहि, यदि दोषरहितस्यैव काव्यत्वाङ्गीकारस्तदा,—

"न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो ! रावणः।
धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिका-विलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ?॥" (ढ)

---

(ड) तदिति।—तत्—निरुक्तप्रयोजनं काव्यम्। तावदिति वाक्यालङ्कारे। किं स्वरूपमिति।—किं स्वरूपं लक्षणं यस्य तथोक्तम्। इत्यपेक्षायाम्—इति शङ्कायाम्। आह—ब्रूते। कश्चित्—मम्मटभट्टः इत्यर्थः। अदोषौ—वक्ष्यमाणदोषवर्जितौ, सगुणौ—वक्ष्यमाणगुणसमन्वितौ। क्वापि पुनः अनलङ्कृती—अलङ्कारशून्यौ अस्फुटालङ्कारौ वा। शब्दार्थौ—शब्दश्च अर्थश्च तौ अर्थविशिष्टः शब्द इति भावः। तत्—काव्यमित्यर्थः। [ केचित्तु "शब्दार्थोभयपर्य्याप्तत्वं काव्यत्वम्" इत्याहुः, तन्न ; तथा सति, शब्दमात्रप्रत्यक्षत्वे काव्यं शृणोमीति न प्रयुज्येत, व्यासज्यवृत्तिधर्मस्य लौकिकप्रत्यक्षे स्वाश्रयप्रत्यक्षस्य कारणात् ]। एतत्—लक्षणमिति यावत्। चिन्त्यं—विचार्य्यं, दूष्यमिति यावत्।

(ढ) न्यक्कार इति।—राक्षसकुलं विनाशयति श्रीरामभद्रे रावणस्य हनुमन्नाटके स्वभर्त्सनोक्तिरियम्। मे मम, यत् अरयः शत्रवः, वर्त्तन्ते इति शेषः, अयमेव अरिसद्भाव एव, न्यक्कारः धिक्कारः, त्रिलोकाधिपतेर्विजितसर्व्वारेः शत्रुसद्भावस्य अनादरातिशयप्रतिपादनाय न्यक्कारत्वेन आरोपः। तत्रापि तेषु अरिषु सत्स्वपि, असौ रामः तापसः तपस्विभक्षकस्य मम अरिरयमिति द्वितीयो न्यक्कार इति शेषः। द्वेषातिशयख्यापनाय रामस्य अदःशब्देन निर्देशः, न तु नाम्नेति बोध्यम्। सोऽपि तथाविधोऽपि, अत्रैव लङ्कायामेव, न तु दूरे इति भावः, राक्षसकुलं निहन्ति, न तु निभृतं कुत्रापि अवतिष्ठते ; नापि द्वित्रान् राक्षसान् नाशयति, अपि तु तत्कुलम्, इति तृतीयो न्यक्कारः इति शेषः। रावणः जीवति ; अहो आश्चर्य्यम् !! एतादृशपरिभवेऽपि रावणस्य जीवनम् ? किमतः परमसम्भवं सम्भवनीयं स्यादिति भावः। शक्रजितं यः शक्रम् इन्द्रं जितवान् तं मेघनादमित्यर्थः ; धिक् धिक्, इन्द्रजेताऽपि नरवानराणां

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अस्य श्लोकस्य विधेयाविमर्शदोषदुष्टतया काव्यत्वं न स्यात्, प्रत्युत ध्वनित्वेनोत्तमकाव्यताऽस्याङ्गीकृता ; तस्मादव्याप्तिर्लक्षण-दोषः । ननु कश्चिदेवांशोऽत्र दुष्टः, न पुनः सर्व्व एवेति चेत् ; तर्हि यत्रांशे दोषः सोऽकाव्यत्वप्रयोजकः, यत्र ध्वनिः स उत्तम-काव्यत्वप्रयोजकः, इत्यंशाभ्यामुभयत आकृष्यमाणमिदं काव्य-मकाव्यं वा किमपि न स्यात् । न च कश्चिदेवांशं काव्यस्य दूषयन्तः श्रुतिदुष्टादयो दोषाः, किं तर्हि सर्वमेव काव्यम्? तथाहि,—काव्यात्मभूतस्य रसस्यानपकर्षकत्वे तेषां दोषत्वमपि नाङ्गीक्रियते ; अन्यथा नित्यदोषानित्यदोषत्वव्यवस्थाऽपि न स्यात् । यदुक्तं ध्वनिकृता, (ग)—

---

न किञ्चित् अनिष्टं साधितवान् इति पुनः पुनर्निन्दामि इत्यर्थः । प्रबोधितवता—प्रबुद्धेन [ 'बुधिर् बोधने' इत्यस्य भौवादिकस्य रूपमिदम् ; न तु 'बुध अवगमने' इत्यस्य दैवादिकस्य, तस्याऽनिट्त्वात् । यद्वा,—प्रबोधितं प्रबोधनमस्यास्तीति तथोक्तेन जागरितेनेत्यर्थः, यद्वा,—दैवादिकस्य णिजन्तबुधधातो रूपमिदं, तेन अस्माभिः अकाले निद्रात्यागं कारितवता इत्यर्थः ] कुम्भकर्णेन किम्? तेनापि न किमपि कार्यं साधितमिति भावः । स्वर्ग एव ग्रामटिका क्षुद्रग्रामः तस्या विलुण्ठनेन वृथा उच्छूनैः अयथा बलदर्पितैः इत्यर्थः, एभिः भुजैः बाहुभिः न तु द्वाभ्यां, विंशत्या इति शेषः, किम्? निष्प्रयोजना इमे बाहव इत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम्,—"सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीड़ितम्" इति लक्षणात् ।

(ग) विधेयाविमर्शेति ।—विधेयस्य साध्यस्य, अविमर्शः अप्राधान्येन निर्देशः, स एव दोषः तेन दुष्टतया दोषयुक्ततया । अत्र श्लोके विधेयस्य न्यक्कारस्य "अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत् । न ह्यलब्धास्पदं किञ्चित् कुत्रचित् प्रतितिष्ठति ।" इत्युक्तन्यायेन रचनावैपरीत्यात् अप्राधान्येन निर्देशः, तथा स्वर्गग्रामटिकेत्यत्र वृथात्वं विधेयं समासे गुणीभावात् अनुवाद्यताप्रतीतिकरमिति द्विविधो विधेयाविमर्शो द्रष्टव्यः । अत्र इष्टापत्तौ दोषमाह, प्रत्युतेति ।—प्रत्युत—वैपरीत्ये । ध्वनित्वेन—वाच्यार्थादधिकचमत्कारिव्यङ्ग्यार्थवत्तया ;—"इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः" इति लक्षणात् । अस्य—श्लोकस्य । उत्तमकाव्यता अङ्गीकृता—स्वीकृता । अत्र ईर्ष्याजन्यस्वावमानेन निर्वेदाख्यस्य सञ्चारिभावस्य व्यङ्ग्यतया ध्वनित्वमवगन्तव्यम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तस्मात्—उक्तदोषसद्भावेऽपि काव्यत्वाङ्गीकारात्। अव्याप्तिः,—लक्ष्ये लक्षणागमनरूपो दोषः। अयं भावः,—"सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभिः। कृत्तद्धितसमासैश्च द्योत्यो लक्ष्यक्रमः क्वचित्॥" इति ध्वनिकारोक्तदिशाऽत्र भूयसा अंशेन सुबादीनां स्फुटं व्यञ्जकत्वमुपलक्ष्यते। तथाहि—"मे यदरयः" इति अस्मत्सम्बन्धकथनात् मदीय-शत्रुसद्भावः कथमपि न युज्यते इति व्यज्यते, "अरयः" इत्यत्र बहुवचनं मम शत्रुसद्भावः एव नितान्तमनुचितः, किं पुनस्तत्रापि बाहुल्यमिति व्यनक्ति। "तत्राप्यसौ तापसः" इति तपःशब्दात् प्रयुक्तेन मत्वर्थीयाण्प्रत्ययेन पौरुषराहित्यमभिव्यज्यते। तत्रापीत्यनेन शत्रुसद्भावे अत्यन्तासम्भाव्यत्वं सूचितम्। "अत्रैव" इति यत्र मया अधिष्ठीयते, तदेव स्थानमस्य हननक्रियाया आधारभूतमिति व्यनक्ति। "निहन्ति" इत्यत्र निपातेन निर्मूलं हननं सूचितम्। "जीवति" इति वर्त्तमानप्रयोगेण तादृशहननक्रियासमानकालीना मदीया इयं जीवनक्रिया नितान्तमयुक्ता इति ध्वनितम्। तस्मादेवं कारकप्रकृति-निपातादिभिः यथोक्तम् असम्भवनीयमिदमुपस्थितमिति स्वस्य प्रतीकारासामर्थ्येन पौरुषाभावो व्यज्यते। तथा "रावणः" इति पदं लोकान् रावयति दुःखाक्रान्त्य रोदयति इति यौगिकार्थं परित्यजत् इदानीं स्वस्य अत्यन्तविपरीतार्थे सङ्क्रमितत्वं सूचयति। "शक्रजितम्" इति "अयं शक्रं जितवान्" इति लोकप्रचारिताख्यानं तापसनिर्ज्जितस्य न कथमपि बहुमानास्पदमिति व्यनक्ति। "स्वर्गग्रामटिका" इत्यनेन स्वर्गविजयजन्य-स्वपौरुषानुस्मरणस्य नितान्तमयुक्तत्वं व्यनक्ति। "वृथा" इत्यनेन च स्वगतपौरुषस्य निन्दा अभिव्यज्यते इति सुधीभिर्विभाव्यम्। एवं व्यञ्जकभूयस्त्वे प्रतीयमाने वाच्यातिशायी चमत्कारः समुल्लसति, तेनास्योत्तमकाव्यत्वमेव युक्तं, न तु काव्यत्ववैकल्यम् इति। ननु विधेयाविमर्शदोषस्तादांशिकः, तेन सर्वं काव्यं न दुष्टं, निर्द्दोषस्यैव गुणालङ्कारसद्भावे काव्यत्वमित्यभिप्रायेणाशङ्कते, नन्वित्यादिना।—अत्र—न्यक्कारो ह्ययमेवेति पद्ये इत्यर्थः। पूर्व्ववादिनस्तात्पर्य्यमुन्नीय दूषयति,—तर्हीति। अंशाभ्याम्—दुष्टादुष्टभागाभ्याम्। उभयतः,—काव्यत्वाकाव्यत्वाभ्याम्। आकृष्यमाणं—व्यावर्त्तमानम्। इदं—न्यक्कार इति पद्यम्। श्रुतिदुष्टादयः इत्यादिशब्दात् अपुष्टत्वादिग्रहणम्। तथाहि—तमेवार्थमवगच्छ इत्यर्थः। काव्यात्मभूतस्य—काव्यस्य रसात्मकवाक्यस्य, आत्मभूतस्य आत्मतां प्राप्तस्य। रसस्य—वक्ष्यमाणस्य शृङ्गारादिरूपस्य। अनपकर्षकत्वे—अपकर्षानाधायकत्वे। तेषां—श्रुतिदुष्टत्वादीनाम्। दोषत्वमपि—दोषावहत्वमपि। न अङ्गीक्रियते—न स्वीक्रि-यते। ननु दोषाः सर्वदैव दोषावहाः, ते कदाचित् न दोषावहा इति कथम्? इत्याशङ्क्याह, अन्यथेति।—अन्यथा—वैपरीत्ये इत्यर्थः। नित्यदोषाः च्युतसंस्कारता-दयः, अनित्यदोषाः श्रुतिदुष्टत्वादयः तेषां भावः, तस्य व्यवस्था निर्द्धारणम्। व

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः" ॥ इति (त)

किञ्चैवं काव्यं प्रविरलविषयं निर्विषयं वा स्यात्, सर्वथा निर्दोषस्यैकान्तमसम्भवात्। ननु ईषदर्थे नञः प्रयोग इति चेत्; तर्हि ईषद्दोषौ शब्दार्थौ काव्यमित्युक्तौ निर्दोषयोः काव्यत्वं न स्यात्। सति सम्भवे ईषद्दोषाविति चेत्; एतदपि काव्यलक्षणेऽवाच्यं, रत्नादिलक्षणे कीटानुवेधादिपरिहारवत्; न हि कीटानुवेधादयो रत्नस्य रत्नत्वं व्याहन्तुमीशाः, किन्तु उपादेयतारतम्यमेव कर्त्तुम्; तद्वदत्र श्रुतिदुष्टादयोऽपि काव्यस्य। (थ)

---

स्यात्—न भवेत्। रसापकर्षकत्वमात्रेणैव श्रुतिदुष्टत्वादयो दोषतामावहन्ति, यदा तु रसं नापकर्षयन्ति न वा उत्कर्षयन्ति तदा ते न दोषाः। तस्मात् ते अनित्यदोषाः। च्युतसंस्कारतादयस्तु सर्व्वदैव रसमपकर्षयन्तीति ते नित्यदोषा इति भावः। अत्र तु विधेयाविमर्शदोषः रसापकर्षकतया सर्वमेव पद्यं दूषयतीति नास्यांशिकत्वमिति फलितम्। उक्तमर्थं प्रमाणेन द्रढ़यति,—यदुक्तमिति।

(त) श्रुतिदुष्टादय इति।—ये च श्रुतिदुष्टादयः अनित्याः असर्वकालिकाः दोषा दर्शिताः, ते ध्वन्यात्मनि व्यङ्ग्यप्रधाने शृङ्गारे एव, हेयाः त्याज्या इति उदाहृताः उक्ताः; एवकारो अन्यव्यवच्छेदकः, तेन रौद्रवीरादिरसे उद्धतस्य वक्तुः श्रुतिकटुादिकं गुण एव, एतच्च उत्तरत्र स्फुटीकृतं ग्रन्थकृता।

(थ) ननु 'रसापकर्षका दोषाः' इति त्वदुक्त्याऽपि दोषाणां त्याज्यत्वे 'अदोषौ शब्दार्थौ काव्यम्' इति युक्तमेव, इत्याशङ्कापत्त्यन्तरमाह, किञ्चेत्यादिना।—एवं—निर्दोषस्य एव काव्यत्वाङ्गीकारे। काव्यम्—उपचारात्तल्लक्षणं, त्वदुक्तकाव्यलक्षणमिति यावत्। प्रविरलविषयं—स्वल्पलक्ष्यम्। निर्विषयं—निर्लक्ष्यमेव वा स्यादिति भावः। एकान्तम्—अत्यन्तम्। ननु यदि सर्व्वत्रैव दोषः सम्भवति, तदा "ईषद्दोषौ शब्दार्थौ काव्यम्" इति विवक्षणीयमित्यभिप्रायेणाह,—नन्विति। यदि निपुणतरकविना निर्दोषं काव्यं रचयितुं शक्यते, तदा तत्राव्याप्तिं दर्शयति, तर्हीति।—नञ ईषदर्थकत्वे अकाव्यम् इत्यर्थः। सति सम्भवे इति।—ततश्च सदोषाणां मध्ये ईषद्दोषावेव शब्दार्थौ काव्यमित्यर्थकरणे बलवद्दोषरहिताविव्यर्थः सम्पद्यते इति। एतत् दूषयति, एतदपीति।—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उक्तञ्च,—"कीटानुविद्धरत्नादिसाधारण्येन काव्यता ।
दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः ॥" इति । (द)

किञ्च,—शब्दार्थयोः सगुणत्व-विशेषणमनुपपन्नम् ; गुणानां रसैकधर्म्मत्वस्य "ये रसस्याङ्गिनो धर्म्माः शौर्य्यादय इवात्मनः" इत्यादिना तेनैव प्रतिपादितत्वात् । रसाभिव्यञ्जकत्वेन उप-

---

वत्त्वद्दोषरहितत्वमपीत्यर्थः । रत्नादीत्यादिपदेन सुवर्णादिग्रहणम् ; कीटानुवेधादीत्यादिपदेन मलिनत्वादिपरिग्रहः । परिहारो राहित्यम् । दृष्टान्तं विवृण्वन् प्रकृतमुपपादयति, न हीति ।—रत्नस्य—रत्नादेः । रत्नत्वं—रत्नादित्वम् । व्याहन्तुं—व्यावर्त्तयितुम् । ईशाः,—समर्थाः । उपादेयतारतम्यम्—उपादेयस्य रत्नादेस्तारतम्यमुत्कृष्टत्वापकृष्टत्वरूपं, तत्कृतं भेदमिति यावत् ; तद्वत्, अत्र—काव्ये । वर्त्तमाना अपि श्रुतिदुष्टादयः,—श्रुतिदुष्टत्वादयो दोषा इत्यर्थः, काव्यस्य काव्यत्वं व्याहन्तुं नेशाः, किन्तु उपादेयतारतम्यमेव कर्त्तुमित्यनेनान्वयः ।

(द) अत्रार्थे प्रमाणमुपदर्शयति, उक्तञ्चेति ।—कीटानुविद्धं कीटक्षतं यत् रत्नादि तस्य साधारण्येन साम्येन, यत्र स्फुटः सुव्यक्तः, रसादीनाम् [ आदिपदेन रसाभासादयो गृह्यन्ते ] अनुगमः अनुवर्त्तनं स्वत एवोपलब्धिः इति यावत् ; तत्र दुष्टेष्वपि काव्यता मता अङ्गीकृता [ यत्रेत्यत्र अन्यत्रेति पाठे—अदुष्टेषु इत्यर्थः ] तथा चोक्ताव्याप्तितादवस्थ्यमेवात्र दोष इति बोध्यम् । केचित्तु 'अदोषौ' इति च्युतसंस्कृत्यभवन्मतयोगक्लिष्टत्वादयो ये शाब्दबोधविघटकाः दोषास्तत्सामान्याभाववन्तौ इत्यर्थः, एते रसबोधप्रतिबन्धकाः, दोषान्तरन्तु काव्यापकर्षकमित्याहुः, तन्न ; व्यतिरेकध्वनेरुदाहरणे "धन्याऽसि या कथयसि प्रियसङ्गमेऽपि विश्रब्धचाटुकशतानि रतान्तरेषु । नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किञ्चिदपि स्मरामि ॥" इत्यत्र "शपामि" इति च्युतसंस्कृतिदोषसत्त्वात् "निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।" इत्यादावञ्जनस्य अत्यन्तासत्त्वबोधाभिप्रायेण प्रयुक्तस्य "दूरम्" इत्यस्य, समासे गुणीभूतेन नञर्थेन सहान्वयेनाभवन्मतयोगत्वदोषसत्त्वाच्चाव्याप्तेः । अध्याहार्य्यक्रियान्वयेन तदुपपत्तावप्यभिमतान्वयाभावेन तद्दोषतादवस्थ्यात् । काव्यप्रकाशकारेणैवानयोरुत्तमकाव्यत्वस्वीकारात् । "अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता । नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥" इत्यस्फुटाख्यगुणीभूतव्यङ्ग्योदाहरणे पूर्वार्द्धे भवच्छब्दार्थात्तशासम्भवरूपाभवन्मतयोगसत्त्वाच्चाव्याप्तेः । "नादृष्टे च न दृष्टे च भवति प्राप्यते सुखम्" इति पाठो युक्तः ।

चारतः उपपद्यते इति चेत्? तथाप्ययुक्तम्। तथाहि,—तयोः काव्यस्वरूपत्वेन अभिमतयोः शब्दार्थयोः रसोऽस्ति न वा? नास्ति चेत्? गुणवत्त्वमपि नास्ति; गुणानां तदन्वयव्यतिरेकानुविधायित्वात्। अस्ति चेत्, कथं नोक्तं रसवन्ताविति विशेषणम्? गुणवत्त्वाऽन्यथाऽनुपपत्त्या एतल्लभ्यत इति चेत्? तर्हि सरसावित्येव वक्तुं युक्तं, न सगुणाविति। न हि "प्राणिमन्तो देशाः" इति वक्तव्ये "शौर्य्यादिमन्तो देशाः" इति केनापि उच्यते। ननु "शब्दार्थौ सगुणौ" इत्यनेन गुणाभिव्यञ्जकौ शब्दार्थौ काव्ये प्रयोज्यावित्यभिप्राय इति चेत्, न—गुणाभिव्यञ्जकशब्दार्थवत्त्वस्य काव्ये उत्कर्षमात्राधायकत्वं, न तु स्वरूपाधायकत्वम् (ध)।

उक्तं हि,—"काव्यस्य शब्दार्थौ शरीरं, रसादिश्चात्मा, गुणाः शौर्य्यादिवत्, दोषाः काणत्वादिवत्, रीतयोऽवयवसंस्थानविशेषवत्, अलङ्काराः कटककुण्डलादिवत्" इति। एतेन "अनलङ्कृती पुनः क्वापि" इति यदुक्तं तदपि परास्तम्। अस्य हि अर्थः,—"सर्वत्र सालङ्कारौ क्वचित् तु अस्फुटालङ्कारावपि शब्दार्थौ काव्यम्" इति। तत्र सालङ्कारशब्दार्थयोरपि

(ध) इत्थम् अदोषाविति शब्दार्थविशेषणं दूषयित्वा सगुणाविति विशेषणं दूषयति, किञ्चेति।—न हि शब्दार्थेषु गुणानामवस्थानं, रसेष्वेव तदवस्थानस्य 'ये रसस्याङ्गिनः' इत्यनेन स्वयं प्रतिपादितत्वादिति भावः। रसाभिव्यञ्जकत्वेन—रसादिप्रकाशकत्वेन। उपचारतः,—परम्परया। उपपद्यते—युज्यते, सगुणत्वविशेषणमिति शेषः। तदन्वयेति।—तस्य रसस्य अन्वयः तत्सत्त्वे तत्सत्त्वं, व्यतिरेकः तदसत्त्वे तदसत्त्वं, तयोरनुविधायित्वात्—सदसद्भावशालित्वात्। अयं भावः,—यत्र यत्र गुणोऽस्ति, तत्र तत्र रसोऽस्तीति अन्वयः। यत्र यत्र रसो नास्ति तत्र तत्र गुणो नास्तीति व्यतिरेक इति। गुणवत्त्वेति।—गुणवत्त्वस्य—सगुणत्वस्य। अन्यथाऽनुपपत्तेः,—विना रससंश्लेषम् इत्यर्थः। एतत्—रसवन्ताविति विशेषणम्। उत्कर्षमात्राधायकत्वम्—उत्कर्षजनकत्वम्। स्वरूपाधायकत्वं—स्वस्य रूपं लक्षणं तस्य आधायकत्वं साधकत्वम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

काव्ये उत्कर्षमात्राधायकत्वात्। एतेन "वक्रोक्तिः काव्यजीवितम्" इति वक्रोक्तिजीवितकारोक्तमपि परास्तम्; वक्रोक्तेरलङ्काररूपत्वात् (न)। यच्च क्वचिदस्फुटालङ्कारत्वे उदाहृतम्।—

"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः।
सा चैवास्मि तथाऽपि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते॥" (प)

(न) उक्तमिति।—रसादिरित्यादिपदेन रसाभासभावतदाभासभावशान्तिभावोदयभावसन्धिभावशबलत्वादीनां ग्रहणम्। गुणाः,—माधुर्यौजःप्रसादाख्याः वक्ष्यमाणाः। दोषाः,—श्रुतिदुष्टत्वादयः। रीतयः,—वैदर्भीगौडीपाञ्चालीलाटीप्रभृतयः। अलङ्काराः,—अनुप्रासोपमादयः। एतेन—वक्ष्यमाणहेतुना। परास्तं—निराकृतम्। उत्कर्षमात्राधायकत्वात्—उत्कर्षमात्रजनकत्वात्, न तु स्वरूपाधायकत्वमिति शेषः। एतेन—उक्तहेतुना। वक्रोक्तिः,—वक्रा विचित्रा उक्तिः वैचित्र्यमित्यर्थः।

(प) य इति।—कौमारे रेवातीरे वेतसीतले कृतक्रीडायाः पुनः तत् स्थानं प्रति उत्सुकाया नायिकाया उक्तिरियम्। यः कौमारं हरति विवाहेन अपनयतीति कौमारहरः पतिः [ 'हरतेरनुद्यमनेऽच्' (३।२।९ पा०) इत्यच् ] स एव वरः अभिमतः, [ एतेन इदानीमपि अभिमतस्य पत्युः सत्तायाः प्रतिपादितत्वात् उपपत्यसन्निधानस्य स्रोत्कण्ठाकारणत्वं वारितम्। अत्र "एव, हि" इति शब्दद्वयोरुपादानमुपपतेरत्यन्तासम्भवित्वसूचनाय ] अत्रापि तत्तद्रतिकारणमस्तीत्यत आह, ता एवेति।—ता एव यासु तत्र क्रीडितं तत्सजातीया इत्यर्थः, चैत्रक्षपाः,—मधुयामिन्यः, वासन्तीनिशाः इति यावत्। उन्मीलिताभिर्विकसिताभिः, मालतीभिः पुष्पतरुविशेषैः, सुरभयः सौरभवाहिनः, प्रशस्तम् ऊढं गतिर्येषां तादृशाः प्रौढाः मन्दवहाः, 'अनुकूलो वहन् वायुः' इत्यादौ वहधातोर्गमनार्थता प्रसिद्धा। वायुगमनस्य प्राशस्त्यं हि मान्द्यम्; 'मन्दं मन्दं वहति पवनो रञ्जयन् हन्त चेतः' इत्यादि दर्शनात्। कदम्बानिलाः,—कदम्बानां धूलिकदम्बानां वायवः चैत्रे तेषामेव सद्भावादिति भावः। केचित् तु—कदम्बानिलाः कदम्बवनवाताः, वनानिलानां प्रौढत्वे वनवहिर्भूतानां मान्द्योपलम्भात् उद्दीपकत्वेन आह,—प्रौढा इति व्याचक्षुः; तन्न, तथात्वे कदम्बपर्य्यन्तानुधावनस्य

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एतच्चिन्त्यम् । अत्र हि विभावना-विशेषोक्तिमूलस्य सन्देह-सङ्करालङ्कारस्य स्फुटत्वम् । एतेन,—

"अदोषं गुणवत् काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वितं कविः कुर्व्वन् कीर्त्तिं प्रीतिञ्च विन्दति ॥" (फ)

---

निष्प्रयोजनकत्वात् अरण्यानिला इत्यनेनैव तदर्थलाभात् । न च मालतीसम्बन्धेनैवा-निलानां सौगन्ध्यलाभात् कदम्बसम्बन्धदर्शनं व्यर्थमिति वाच्यं, विलक्षणसौगन्ध्यलाभाय तस्य सार्थकत्वात् ; यथा 'रमणीकमनीयकपोलतलं परिपीतपटीररसैरलसः । अव-मञ्चति पञ्चशरानुचरो नवनीपवनीधुवनः पवनः ॥' नवेति—नवपुष्पितेत्यर्थः । अत्र चन्दनसम्बन्धेन सौगन्ध्यलाभेऽपि विलक्षणसौगन्ध्यलाभाय कदम्बसम्बन्धवर्णनम् । सा चैव—तदवस्थैव । अस्मि—भवामि, वर्त्ते इत्यर्थः । तथाऽपि—तादृशसामग्रीसत्त्वेऽपि । सुरतव्यापारलीलाविधौ—निधुवनव्यापारविधानार्थम । रेवेति ।—रेवायाः नर्म्मदायाः रोधसि तटे । वेतसीतरुतले चेतः,—चित्तम् । समुत्कण्ठते—तत्रैव विहर्त्तुमभिलष-तीत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ।

(फ) एतत्—अस्फुटालङ्कारत्वे उदाहरणं, चिन्त्यं—विचार्य्यं, दूष्यमित्यर्थः । विभावनेति ।—विभावना—विना हेतुं कार्य्योत्पत्तिरूपा, विशेषोक्तिः,—सति हेतौ फलाभावरूपा, ते मूलं यस्य तादृशस्य, ताभ्यां निरूपितस्य इत्यर्थः । सन्देहसङ्करालङ्कारस्य—किमत्र विभावना भवति, विशेषोक्तिर्वा ? इत्येवंरूपस्य अलङ्कारस्य । स्फुटत्वं—सुव्यक्तत्वम् । तथाहि उत्कण्ठायाः पत्याद्यभावरूपकारणं विनाऽपि उत्कण्ठारूपकार्य्य-कथनात् किमियं विभावना ? किं वा उत्कण्ठाभावस्य कारणस्य पत्यादेः सत्त्वेऽपि फलरूपस्य उत्कण्ठाभावस्य अकथनात् विशेषोक्तिः ? इति सन्देहः स्फुटतया प्रति-भाति । [ केचित् तु—"रेवातीरे कृतसङ्केतायाः नायिकायाः स्वगृहे सखीं प्रत्युक्ति-रियम् ; यः कौमारे अनूढ़ावस्थायां हरतीति कौमारहरः जार इत्यर्थः, स एव हि वरः विलक्षणरतिसमर्थतया अभिमतः इत्यर्थः ; (अन्यत् सर्व्वं पूर्व्ववत्) । एवञ्च रसस्य प्रधानत्वान्नालङ्कारतेति काव्यप्रकाशकारोक्तौ रसस्य रसाभासस्य इत्यर्थः, रतेरुपपतिगोचरत्वेन रसाभासस्यैव सम्भवात् इत्याहुः ; तन्न, व्यञ्जकाभावादुपपतेरला-लाभात् । वक्तृवैशिष्ट्यमेव व्यञ्जकमिति चेन्न, वक्तुस्तादृशवैशिष्ट्ये प्रमाणाभावात् ; प्रत्युत स एव हि वर इत्यनेन उपपतिरतेरत्यन्तासम्भवित्वमुक्तम् ] । एतेन—उक्तदोषसमूहैव । अदोषमिति ।—अदोषं दोषशून्य, गुणवत् सगुणम्, अलङ्कारैरलङ्कृतं सालङ्कारमित्यर्थः रसान्वितं काव्यं कुर्व्वन् कविः कीर्त्तिं यशः, प्रीतिम् आनन्दञ्च, विन्दति लभते ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत्यादीनामपि काव्यलक्षणत्वमपास्तम्। यत्तु ध्वनिकारेणोक्तं "काव्यस्यात्मा ध्वनिः" इति, तत् किं वस्त्वलङ्काररसादिलक्षणस्त्रिरूपो ध्वनिः काव्यस्यात्मा? उत रसादिरूपमात्रो वा? नाद्यः, प्रहेलिकादावतिव्याप्तेः। द्वितीयश्चेत्, ओमिति ब्रूमः (व)। ननु यदि रसादिरूपमात्रो ध्वनिः काव्यस्यात्मा, तदा,—

"अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि।
मा पहिअ! रत्तिअंधअ! सेज्जाइं मह णिमज्जहिसि॥"

इत्यादौ वस्तुमात्रस्य व्यङ्ग्यत्वे कथं काव्यव्यवहारः? इति चेन्न; अत्रापि रसाभासवत्तयैवेति ब्रूमः। अन्यथा "देवदत्तो ग्रामं याति" इति वाक्ये तद्भृत्यस्य तदनुसरणरूपव्यङ्ग्यावगतेरपि काव्यत्वं स्यात्। अस्त्विति चेत्? न, रसवत एव काव्यत्वाङ्गीकारात्। काव्यस्य प्रयोजनं हि रसास्वादसुखपिण्डदानद्वारेण वेदशास्त्रविमुखानां सुकुमारमतीनां राजपुत्रप्रभृतीनां विनेयानां रामादिवत् प्रवर्त्तितव्यं न रावणादिवत्, इत्यादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेश इति चिरन्तनैरप्युक्तत्वात् (भ)।

---

(व) इत्यादीनां—एतत्प्रभृतीनां वचनानामित्यर्थः। एतेन निर्दोषस्य सगुणालङ्कारस्य काव्यस्य प्रशस्तता, न तु सदोषादेः काव्यत्वाभाव इति सूचितम्। ध्वनिकारोक्तं दूषयति, यत्त्विति।—काव्यस्य आत्मा—स्वरूपाधायको धर्मविशेषः। ध्वनिः,—व्यङ्ग्यरूपोऽर्थः इत्यर्थः। प्रहेलिकादौ,—"तरुणालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः। गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः?॥" इत्यादौ इत्यर्थः। अत्र किञ्चिदूनजलकलसरूपं व्यङ्ग्यम्। ओमिति ब्रूमः,—स्वीकुर्मः इत्यर्थः;—('ओमुपक्रमे। प्रणवे चाभ्युपगमे चापाकृतौ च मङ्गले' इति मेदिनी)।

(भ) अत्ता इति।—"श्वश्रूरत्र निमज्जति अत्राहं दिवसे एव प्रलोकय। मा पथिक! रात्र्यन्धक! शय्यायां मम निमङ्क्ष्यसि॥" इति संस्कृतम्। रात्र्यन्धत्वेन कथितात्मानं कञ्चित् पथिकं प्रति कस्याश्चित् नायिकाया उक्तिरियम्। मच्छय्याप्रविष्टं त्वां मच्छ्वश्रूः यदि कथञ्चित् जानीयात् तदा "अहं रात्र्यन्धतया निजशय्यां न दृष्टवान्"

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तथा च आग्नेयपुराणेऽप्युक्तम् ;—

"वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्" इति । (म)

व्यक्तिविवेककारेणाप्युक्तं,—"काव्यस्यात्मनि सङ्गिनि रसादिरूपे न कस्यचिद्विमतिः" इति । ध्वनिकारेणाप्युक्तं,—"न हि कवेरितिवृत्तमात्रनिर्वाहेणात्मपदलाभः इतिहासादेरेव तत्सिद्धेः" इत्यादि । ननु तर्हि प्रबन्धान्तर्वर्त्तिनां केषामपि नीरसानां पद्यानां काव्यत्वं न स्यादिति चेत् ? न ; रसवत्पद्यान्तर्गतनीरसपदानामिव पद्यरसेन, प्रबन्धरसेनैव तेषां रसवत्ताऽङ्गी-

गोपनीयायं बोधयितुं "रात्र्यन्ध" इति पदं प्रयुक्तवती इति केचित् । हे रात्र्यन्धक ! पथिक ! अत्र अस्मिन् स्थाने, अत्ता श्वश्रूः, निमज्जति निमग्ना मृतप्राया स्वपिति इति यावत्, न शङ्काकारणमिति भावः ; अत्र अस्मिन् स्थाने, अहं शये इति शेषः ; दिवसे एव दिवालोके एव, प्रलोकय प्रकर्षेण पश्य, मम शय्यायां मा निमङ्क्ष्यसि । अत्र वस्तुमात्रस्य व्यङ्ग्यत्वे—स्वशय्यासात्रप्रवेशरूपस्य वस्तुनः एव व्यङ्ग्यत्वे इत्यर्थः । रसाभासेति ।—रतेरुपपतिविषयत्वात् अत्र शृङ्गारो रसः । तद्वत्त्वेव—तद्विशिष्टत्वेनैवेत्यर्थः । अन्यथा—अत्र शृङ्गाराभासरूपव्यङ्ग्यस्य काव्यत्वाधायकत्वास्वीकारे इत्यर्थः । देवदत्त इति ।—तथा च यथाकथञ्चिद् व्यङ्ग्यसद्भावे न काव्यव्यवहारः इति भावः । नीरसस्य काव्यत्वास्वीकारे हेतुमाह, रसास्वादेति ।—रसास्वादसुखानां पिण्डं—समूहः, तस्य दानद्वारेण—रसानुभवरूपसुखपरम्पराप्रदानेन इत्यर्थः । तथोक्तं,—"स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपभुञ्जते । प्रथमालीढमधुराः पिबन्ति कटुभेषजम् ॥" इति । वेदशास्त्रविमुखानां—काठिन्यात् तदर्थग्रहणासमर्थानामिति यावत् । सुकुमारमतीनां—कोमलबुद्धीनाम् । विनेयानां—शिक्षणीयानां राजपुत्रप्रभृतीनाम् । तथा च शब्दप्रधानेषु वेदेषु अर्थप्रधानेषु पुराणेतिहासप्रभृतिषु च आयासबहुलेषु विमुखानां सुकुमारमतीनां हि गुणीभूतशब्दार्थेषु रसास्वादप्रधानेषु प्रथमं तावत् रसास्वादसुखेच्छयैव प्रवृत्तिः, ततः काव्यार्थानां कृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशपरताऽवधारणमिति भावः । चिरन्तनैः,—प्राचीनैः पण्डितैः इत्यर्थः ।

(म) अत्रार्थे अग्निपुराणं प्रमाणत्वेनोपन्यस्यति,—तथेत्यादि । वागिति ।—वाचां वैदग्ध्यं वैचित्र्यं, प्रधानं यत्र तस्मिन् । एवकारेण अलङ्कारादिव्यवच्छेदः । अत्र—काव्ये । रस एव जीवितं—प्राणभूतः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कारात्। यत्तु नीरसेष्वपि गुणाभिव्यञ्जकशब्दार्थसद्भावाद् दोषाभावादलङ्कारसद्भावाच्च काव्यव्यवहारः, स रसादिमत्काव्यबन्धसाम्याद् गौण एव (य)। यत्तु वामनेनोक्तं,—"रीतिरात्मा काव्यस्य" इति, तन्न, रीतिः सङ्घटनाविशेषत्वात्, सङ्घटनायाश्च अवयवसंस्थानरूपत्वात्, आत्मनश्च तद्भिन्नत्वात्। (र)

यच्च ध्वनिकारेणोक्तम्,—

"अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ॥" इति।

---

(य) व्यक्तीति।—व्यक्तेः व्यञ्जनावृत्तेः विवेकी विवेचनमनुमानेन गतार्थतां प्रतिपाद्य निर्णयनं, तमधिकृत्य कृतो ग्रन्थो व्यक्तिविवेकं, तं करोतीति तेन तथाभूतेन। [ 'कर्मण्यण्' ( ३। २। १ पा० ) इत्यण् ] महिमभट्टेनेति यावत्। एतेन प्रतिवादिमान्यत्वमस्य सूचितम्। काव्यस्य सङ्गिनि नियतीपस्थितिके। आत्मनि रसादिरूपे तद्विषय इति यावत्। कस्यचित्—कस्यापि जनस्य। विमतिः,—विरुद्धा मतिर्मननं, अस्वरसः इति यावत्। न—नैवास्ति। इति। ध्वनिकारेण—ध्वन्यालोककर्त्रा आनन्दवर्द्धनाचार्य्येण। उक्तं—कथितं, लक्षणया निर्दिष्टमित्यर्थः। इतिवृत्तेति।—इतिवृत्तं नीरसप्रबन्धः, तन्मात्रस्य निर्वाहेण रचनेन। आत्मपदलाभः,—आत्मनः पदस्य कविपदस्य लाभः सार्थकतासिद्धिः, चरितार्थतेति यावत्। इतिहासादेः,—भारतादेः। तत्सिद्धेः,—आत्मपदलाभसिद्धेः। इति। तथा च ध्वन्यालोकः,—"कविना प्रबन्धमुपनिबध्नता सर्वात्मना रसपरतन्त्रेण भवितव्यम्; तत्रेतिवृत्ते यदि रसाननुगुणां स्थितिं पश्येत्, तां भङ्क्त्वाऽपि स्वतन्त्रतया रसानुगुणं कथाऽन्तरमुत्पादयेत्। न हि कवेरितिवृत्तमात्रनिर्वहणेन किञ्चित् प्रयोजनम्, इतिहासादेव तत्सिद्धेः"। इति। पद्यानामित्युपलक्षणं,—"पद्यं गद्यञ्च मिश्रञ्च तत्त्रिधैव व्यवस्थितम्" इत्यनेन गद्यानामपि काव्यत्वस्वीकारात्। तेषां—नीरसपद्यानां, स्वव्यञ्जकप्रतिपादकत्वसम्बन्धेन रसवत्त्वाऽङ्गीकारादिति भावः।

(र) वामनोक्तं दूषयति, यत्त्विति।—यत् पुनरित्यर्थः। वामनेन—काव्यालङ्कारसूत्रनिर्म्माता। उक्तम्,—'काव्यस्य आत्मा रीतिः वैदर्भ्यादिः' इति कथितम्। सङ्घटनाविशेषत्वात्—रचनाभेदत्वात्। सङ्घटनायाः,—रचनाविशेषस्य। अवयवसंस्थानरूपत्वात् —अवयवानां काव्यशरीराणां शब्दार्थानां, संस्थानं समुचितस्थानेषु न्यासः, तस्मात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र वाच्यात्मत्वं "काव्यस्यात्मा ध्वनिः" इति स्ववचनविरोधादेवापास्तम् । (ल)

तत् किं पुनः काव्यम् ? इत्युच्यते,—

**वाक्यं रसात्मकं काव्यम् ॥ ३ ॥**

रसस्वरूपं निरूपयिष्यामः । रस एवात्मा साररूपतया जीवनाधायको यस्य, तेन विना तस्य काव्यत्वानङ्गीकारात् । "रस्यते इति रसः" इति व्युत्पत्तियोगाद् भाव-तदाभासादयोऽपि गृह्यन्ते । तत्र रसो यथा,—

"शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥"(व)

अत्र हि सम्भोगशृङ्गाराख्यो रसः ।

---

(ल) पुनश्च ध्वनिकारोक्तमुल्लिख्य दूषयति,—यच्चेति । अर्थ इति ।—सहृदयानां सामाजिकानां, श्लाघ्यः प्रशंसनीयः, यः अर्थः काव्यस्य आत्मा व्यवस्थितः आत्मत्वेन निर्णीतः, तस्य अर्थस्य वाच्यप्रतीयमानाख्यौ अभिधेयव्यङ्ग्यनामानौ उभौ भेदौ स्मृतौ कथितौ इति । तत्र—तयोर्वाच्यप्रतीयमानयोर्मध्ये । वाच्यात्मत्वम्—अभिधेयस्वरूपत्वम् । [ वाच्यस्यात्मत्वमिति पाठे—वाच्यस्य—अभिधेयस्य अर्थस्य, आत्मत्वं—स्वरूपाधायकत्वम् ]। स्ववचनेति ।—"काव्यस्यात्मा ध्वनिः" इति स्वस्य यत् वचनं पूर्वोक्तं तेन, विरोधात् विसंवादात् एव । अपास्तं—निराकृतम् । य एकत्र एवं व्यवस्थाप्य अन्यत्र तदन्यथा व्यवस्थापयति, का तस्य वचने आस्था ? इति भावः ।

(व) तत्—तस्मात्, उक्तमतानां सदोषत्वादित्यर्थः । काव्यं पुनः किं स्वरूपं—किं लक्षणकम् ? इति उच्यते—निरूप्यते । वाक्यमिति ।—रसात्मकं वाक्यं काव्यमिति योजना । सर्वेषाम् आलङ्कारिकाणां काव्यलक्षणानि दोषप्रदर्शनपुरःसरं निरस्य ग्रन्थकृता स्वयं यदेतत्काव्यलक्षणमभिहितं, तत्रैवं विचार्यते केश्चित् ; तथाहि,—ननु एवं सति रसात्मकं वाक्यं काव्यमित्यनेन हि यत्र सर्वतः प्राधान्येन रसस्य सद्भावः, तदेव काव्यमित्युक्तं भवति, तथा च ध्वनिगुणालङ्कारप्रधानानां वाक्यानां प्राधान्येन रसवत्ताया अभावात् काव्यत्वं न स्यादिति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भावो यथा महापात्रराघवानन्दसान्धिविग्रहिकाणाम् ;—

"यस्यालीयत शल्कसीम्नि जलधिः, पृष्ठे जगन्मण्डलं,
दंष्ट्रायां धरणी, नखे दितिसुताधीशः, पदे रोदसी।
क्रोधे क्षत्रगणः, शरे दशमुखः, पाणौ प्रलम्बासुरो,
ध्याने विश्वमसावधार्म्मिककुलं, कस्मैचिदस्मै नमः॥"

अत्र भगवद्विषया रतिर्भावः। (श)

चेष्टमेव तादृशानामकाव्यत्वमिति वाच्य, तथा सति ध्वन्यलङ्कारादिमत्कविता-विरचननिपुणानां कवीनामाकुलीभावप्रसङ्गात्। सर्व्वत्रैव प्रथमतस्तावत् लक्ष्यं निर्द्दिश्यते, ततश्च लक्षणमिति हि समाचारः; लक्ष्यस्य लक्षणानुशयित्वे स्वस्वरूप-मेव व्याहन्येत। एवञ्च काव्यस्वरूपविद्भिर्महाकविसम्प्रदायैर्नगनदभूधरादीनां नीरसं स्वभावं काव्यरूपेण वर्णयद्भिः तादृशानामपि काव्यत्वमङ्गीकृतमेव। न च तेष्वपि परम्परया रससद्भावः सम्भवत्येवेति न कश्चित् दोषः इति वाच्यं, तादृशरससद्भावस्य "चैत्रो गच्छति" "अश्वो धावति" इत्यादिष्वपि सम्भवेन तत्र तस्याप्रयोजकत्वादिति चेत्, सत्यं, तेषु "दुर्गालङ्घितविग्रहः" इत्यादिष्वपि तत्तत्प्राधान्येऽपि "अत्ता एत्थ" इत्यादिष्विव रसवत्ताया अक्षतत्वात्। न चात्र 'गौश्चलति' इत्यादाविव यथाकथञ्चिदेव रसः कल्पयितुं शक्यते इति वाच्यं, तत्र तत्र "देवदत्तो ग्रामं गच्छति" इत्यादाविव रसवत्तायाः स्वयमप्यपाकृतत्वात्। "अत्ता एत्थ" इत्यादिष्विव वस्तुव्यङ्ग्यत्वेऽपि रसवत्त्वं, नान्यत्र; इत्यत्र तु सहृदयहृदयमेव प्रमाणम् इत्यलं बाहुल्येन। रस्यते—आस्वाद्यते इति व्युत्पत्त्या रसशब्देन रसतदाभास-भावतदाभासादयो गृह्यन्ते। रसमुदाहरति,—तत्रेति।—शून्यमिति।—वासगृहं शून्यं सख्यादिरहितं, विलोक्य दृष्ट्वा, बाला नवोढ़ा वधूः, शयनात् शय्यायाः, किञ्चित् ईषत् पूर्वाङ्गेनेति भावः, शनैः मन्दं निःशब्दं यथा तथा, उत्थाय निद्राव्याजं छलनिद्राम्, उपागतस्य सच्छलं निद्रितस्येत्यर्थः, पत्युः स्वामिनः मुखं सुचिरं बहुक्षणं, निर्वर्ण्य दृष्ट्वा, विश्रब्धं निःशङ्कं, यथा तथा परिचुम्ब्य जातपुलकां सरोमाञ्चां, गण्डस्थलीं पत्युरिति शेषः, आलोक्य दृष्ट्वा, लज्जया नम्रं मुखं यस्याः तादृशी, लज्जाऽवनतवदना सतीत्यर्थः, हसता प्रियेण पत्या, चिरं चुम्बिता। अत्र शय्यायाः किञ्चिदुत्थानं प्रियजागरणे झटिति तत्संवरणार्थम्, उत्थाने शनैस्त्वं जागरण-हेतुशब्दानुत्पत्त्यर्थं, विश्रब्धत्वं निद्रानिश्चयार्थं वेदितव्यम्। शार्दूलविक्रीड़ितं वृत्तम्।

(श) भावमुदाहरति,—भावो यथेति। यस्येति।—यस्य, शल्कः मत्स्यत्वक् तस्य सीम्नि पर्य्यन्तभागे, एकदेशे इति यावत्, जलधिः समुद्रः अलीयत लीनोऽभूत्। [एतेन

रसाभासो यथा,—

"मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्त्तमानः।
शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः॥"

अत्र हि सम्भोगशृङ्गारस्य तिर्य्यग्विषयत्वाद्रसाभासः। एवमन्यत्। (ष)

मीनावतारो दर्शितः;—अस्य च महाकायत्वेन न समुद्रे निवासक्षमता जाता, प्रत्युत स एव एकांश विलीनः। एवमाधारापेक्षयाऽऽधेयस्याधिक्यवर्णनादधिकम्। यस्येति सप्तम्यन्तमात्रेण सम्बध्यते]। पृष्ठे जगन्मण्डलं समस्तं भूमण्डलम्, अलीयतेति सर्वत्रान्वेति। [एतेन कूर्म्मावतारः प्रोक्तः;—यद्यपि कूर्म्मावतारो मन्दराचलं धर्त्तुमेवेति प्रसिद्धं, तथाऽपि येन पृष्ठे जगद्ध्रियते स कूर्मो न तस्माद्भिन्न इतीदमुक्तम्]। दंष्ट्रायां दशने धरणी पृथ्वी। [एतेन वराहावतारः सूचितः]। नखे दितिसुताधीशः दितेः सुताः दैत्यास्तेषामधीशः सम्राट् इति तथोक्तः, हिरण्यकशिपुरित्यर्थः। [एतेन नृसिंहावतारः कथितः;—नृसिंहेन हि नखद्वारा हिरण्यकशिपुर्विदारित इति प्रसिद्धम्]। पदे रोदसी द्यावापृथिव्यौ अवालीयेतामिति वचनविपरिणामो बोद्धव्यः। [एतेन वामनावतार उक्तः;—पदत्रयमितां भूमिं प्रतिगृह्णता भगवता वामनेन पदविन्यासमानद्वारा सर्वमधिकृतमिति प्रसिद्धम्]। क्रोधे क्षत्राणां राजन्यानां गणः। [एतेन भार्गवावतारः प्रकटितः;—पितुर्हत्या हैहयवंश्यैः क्षत्रैः कृतेति क्रुद्धेन रामेण तेषां समूलमुन्मूलितो वंश इति प्रसिद्धम्]। शरे दशमुखः रावणः। [एतेन रामावतारः सूचितः;—रामेण हि शरेण रावणो विनाशित इति प्रसिद्धम्]। पाणौ भुजे प्रलम्बः नाम असुरः। [एतेन बलावतारः कथितः;—मल्लयुद्धे बलदेवेन करतलप्रहारेण प्रलम्बो निहत इति प्रसिद्धम्]। ध्याने विश्वं जगत्। [एतेन बौद्धावतारः प्रोक्तः;—हिंसा मा भूदिति निर्व्यापारो बुद्धो हि समाहितो ध्यानमात्रनिष्ठोऽभूदिति प्रसिद्धम्]। असौ अधार्म्मिकाणां म्लेच्छानां कुलम्। [एतेन कल्क्यवतारः कथितः;—कलावन्ते म्लेच्छानसिना निघ्नन् कल्की पर्य्यटिष्यतीति प्रसिद्धम्]। कस्मैचित् अनिर्वचनीयस्वरूपाय अस्मै—तस्मै देवाय इति शेषः, नमः। शार्दूलविक्रीड़ितं वृत्तम्।

अत्र भगवान् परमात्मा विषयो यस्यास्तादृशी। रतिः अनुरागः। भावः भावशब्दवाच्यः;—"सञ्चारिणः प्रधानानि देवादिविषया रतिः। उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते॥" इति वक्ष्यमाणवचनात्।

(ष) रसाभासमुदाहरति,—रसाभासो यथेत्यादि। मधु इति।—द्वौ रेफौ यस्य

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

दोषाः पुनः काव्ये किंस्वरूपाः ? इत्युच्यन्ते,—

दोषास्तस्यापकर्षकाः ॥ ४ ॥

श्रुतिदुष्टापुष्टार्थत्वादयः काणत्वखञ्जत्वादय इव शब्दार्थद्वारेण देहद्वारेणेव व्यभिचारिभावादेः स्वशब्दवाच्यत्वादयो मूर्खत्वादय इव साक्षात् काव्यस्यात्मभूतं रसमपकर्षयन्तः काव्यस्यापकर्षका इत्युच्यन्ते। एषां विशेषोदाहरणानि वक्ष्यामः। (स)

गुणाः किंस्वरूपाः ? इत्युच्यन्ते,—

उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः ॥ ५ ॥

गुणाः शौर्य्यादिवत्। अलङ्काराः कटककुण्डलादिवत्। रीतयोऽवयवसंस्थानविशेषवत्। देहद्वारेणेव शब्दार्थद्वारेण तमेव काव्यस्यात्मभूतं रसमुत्कर्षयन्तः काव्यस्योत्कर्षकाः

---

वाचकशब्दे इति व्युत्पत्त्या द्विरेफो भ्रमरः, स्वां प्रियां भ्रमरीमित्यर्थः, अनुवर्त्तमानः अनुसरन्, सेवमान इति यावत्, कुसुममेव एकमद्वितीयं पात्रं तस्मिन्, मधु पपौ। अत्राप्रस्तुतस्य प्रियासहितस्य कस्यचित् पुरुषस्य मद्यपानं प्रतीयत इति समासोक्तिः; ("मधु मद्ये पुष्परसे" इति कोषः)। कृष्णसारः मृगविशेषश्च स्पर्शेन प्रियस्पर्शसुखेन निमीलिताक्षीं मुद्रितनयनां मृगीं हरिणीं, स्वप्रियामिति यावत्, अकण्डूयत गात्रकण्डूयनेन सिषेवे इत्यर्थः। स्वभावोक्तिरियम्। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः। अत्र—अस्मिन्नुदाहृते पद्ये। रसाभासः,—अनौचित्यप्रवृत्तो रस इत्यर्थः, शृङ्गारस्य उत्तमप्रकृतिकत्वात्, प्रकृते तिर्य्यग्जातिगतत्वेन अनुत्तमप्रकृतिकतया अनौचित्यमिति बोध्यम्;—"अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः" इति वक्ष्यमाणवचनात्। अन्यत्—भावाभासादिकमित्यर्थः; उदाहार्य्यमिति शेषः।

(स) ननु दोषाणां काव्यलक्षणाघटकत्वेऽपि परिहार्य्यत्वेन तत्स्वरूपज्ञानस्य आवश्यकत्वात् तदाकाङ्क्षामुत्थापयति, दोषा इति।—तस्य—काव्यस्य, उपचारात् काव्यत्वस्य रसस्येति यावत्। अपकर्षकाः,—लघयितारः। व्यभिचारिभावादेः,—वक्ष्यमाणानां व्यभिचारिभावाणां निर्वेदादीनाम्; आदिपदेन शृङ्गारादिरसपरिग्रहः। स्वशब्दवाच्यत्वादयः,—स्वशब्देन स्वप्रतिपादकशब्देन निर्वेदादिशब्देन वाच्यत्वम्—अभिधेयत्वं, कथनम् इत्यर्थः, तत्प्रभृतयः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत्युच्यन्ते। इह यद्यपि गुणानां रसधर्म्मत्वं, तथाऽपि गुणशब्दोऽत्र गुणाभिव्यञ्जकशब्दार्थयोरुपचर्य्यते । अतश्च "गुणाभिव्यञ्जकाः शब्दाः रसस्योत्कर्षकाः" इत्युक्तं भवतीति प्रागेवोक्तम् । एषामपि विशेषोदाहरणानि वक्ष्यामः । (ह)

इति श्रीमन्नारायणचरणारविन्दमधुव्रतसाहित्यार्णवकर्णधारध्वनिप्रस्थापनपरमाचार्य्य-
कविसूक्तिरत्नाकराष्टादशभाषावारविलासिनीभुजङ्गसान्धिविग्रहिकमहापात्र-
श्रीविश्वनाथकविराजकृतौ साहित्यदर्पणे काव्यस्वरूपनिरूपणं
नाम प्रथमः परिच्छेदः ॥ १ ॥

---

## द्वितीयः परिच्छेदः ।

---

वाक्यस्वरूपमाह ।—

**वाक्यं स्याद् योग्यताऽऽकाङ्क्षाऽऽसत्तियुक्तः पदोच्चयः॥६॥**

योग्यता—पदार्थानां परस्परसम्बन्धे बाधाऽभावः। पदोच्चयस्य एतदभावेऽपि वाक्यत्वे "वह्निना सिञ्चति" इत्याद्यपि वाक्यं

---

(ह) गुणादीनाह, उत्कर्षेति ।—गुणाः अलङ्काराः रीतयश्च उत्कर्षस्य हेतवः कारणानि तत्स्वरूपभूताः ; "तस्य" इति पूर्व्वताऽन्वेति । तथा च काव्यत्वं ये उत्कर्षयन्ति ते गुणादयः । एषाञ्च गुणानां शब्दार्थोत्कर्षणेन रसोत्कर्षकत्वमित्यर्थः ।

इत्यशेषशास्त्राटवीसञ्चारपञ्चानन-पण्डितकुलपतिना वि, ए, उपाधिधारिणा
श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां
पण्डितश्रीआशुबोधविद्याभूषण पण्डितश्रीनित्यबोधविद्यारत्नाभ्यां
प्रतिसंस्कृतायां विमलाख्यायां साहित्यदर्पणव्याख्यायां
प्रथमः परिच्छेदः ॥ १ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्यात्। आकाङ्क्षा—प्रतीतिपर्य्यवसानविरहः। स च श्रोतु-जिज्ञासारूपः। निराकाङ्क्षस्य वाक्यत्वे "गौरश्वः पुरुषो हस्ती" इत्यादीनामपि वाक्यत्वं स्यात्। आसत्तिः,—बुद्ध्यविच्छेदः। बुद्धि-विच्छेदेऽपि वाक्यत्वे इदानीमुच्चरितस्य देवदत्तशब्दस्य दिना-न्तरोच्चारितेन गच्छतीति पदेन सङ्गतिः स्यात्। अत्राऽऽकाङ्क्षा-योग्यतयोरात्मार्थधर्म्मत्वेऽपि पदोच्चयधर्म्मत्वमुपचारात्। (क)

(क) उपोद्घातसङ्गत्या वाक्यं निरूपयति, वाक्यमित्यादि।—प्रकृतसिद्ध्यनुकूल-चिन्ताविषयत्वमुपोद्घातः। प्रकृतञ्चात्र वाक्यलक्षणम्। पदोच्चयश्चात्र पदसमुदायार्थः। योग्यतया आकाङ्क्षया आसत्त्या च युक्तं वाक्यं वाक्यसंज्ञं स्यात्। तद्बोधस्त्वेवं स्यात्, तथाहि,—प्रथमतस्तावच्छब्दश्रवणात् परं श्रोतुरात्मनि तत्तच्छब्दप्रतिपाद्या अर्थाः प्रतिभासन्ते। ततश्चाकाङ्क्षायोग्यतादिमहिम्ना ते परस्परं विशिष्टान्वयबोधे च समु-द्यन्ति। आत्मनि शब्दश्रवणजन्या उपस्थितिश्चैषां स्मृतिरूपैव। असौ स्मृतिर्हि पूर्व्वमनु-भूतानां पदजन्योपस्थितिविषयपदार्थानां संस्कारेण योग्योद्बोधकसद्भावात् सम्पद्यते। तादृशसंस्कारस्य च उद्बोधे कस्यचिदन्यस्य उद्बोधकस्य अदर्शनात् तत्तच्छब्दश्रवणस्यैव हेतुत्वमङ्गीकरणीयम्। एकसम्बन्धिज्ञानस्य अपरसम्बन्धिस्मारकताया व्युत्पत्तिसिद्ध-त्वात्, निश्चितान्योऽन्यसम्बन्धयोः शब्दार्थयोरपि एकतरस्य शब्दस्य ज्ञानमन्यस्य संस्कारो-द्बोधने हेतुर्युक्तिसिद्ध एव। एवञ्च यदि शब्दानां पदार्थैः सार्कं सम्बन्धो न स्यात्, तर्हि अर्थस्मृतिरपि मा भूत्। स्मर्य्यन्ते च शब्दैस्तैस्तैस्ते तेऽर्थाः। तथा च वाक्यपदीये,—

"सति प्रत्ययहेतुत्वे सम्बन्ध उपपद्यते। शब्दस्यार्थैर्यतोऽतस्तत्सम्बन्धोऽस्तीति गम्यते॥"

न च परस्परसम्बन्धं विना शब्दार्थयोः प्रत्यायकत्वमुपपद्यते इति तयोः परस्परसम्बन्धे तदनुपपत्तिलिङ्गिका अनुमितिरेव प्रमाणम्। स च सम्बन्धो वृत्तिरूपः इति सुधीभि-र्विभाव्यम्। योग्यतामाह, पदार्थानामिति।—पदार्थानां—सुप्तिङन्तानि पदानि (पदे च पदानि च इति पदानि) तेषां येऽर्थाः प्रतिपाद्यास्तेषाम्। परस्परसम्बन्धे—परस्परान्वयबोधे। बाधाऽभावः,—अबाधकत्वं, सद्भाव इत्यर्थः, योग्यता। एवञ्च तात्पर्य्यविषयीभूतसम्बन्धेन तन्निरूपकाणां पदार्थानाम् एकतरस्मिन् अपरपदार्थान्वयः योग्यता इति फलितम्। प्राकादौ विद्यमानस्य वह्निकरणकत्वस्य सेकादौ येन केनचित् सम्बन्धेन सद्भावसम्भवात् "वह्निना सिञ्चति" इत्यादेर्वाक्यत्वप्रसक्तौ तद्वारणाय तात्पर्य्यविषयीभूतेति सम्बन्धविशेषणमवगन्तव्यम्। योग्यताया व्यावृत्तिं दर्शयति,



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पदोच्चयस्येत्यादि।—एतदभावे—एतस्या निरुक्तलक्षणाया योग्यताया अभावो विरह-स्तस्मिन् सत्यपि। वाक्यत्वे—पदोच्चयस्य वाक्यरूपताऽङ्गीकारे, "वह्निना सिञ्चति" इत्यादेरपि वाक्यं स्यात्। आकाङ्क्षामाह,—आकाङ्क्षेति। प्रतीतीत्यादि।—प्रतीतेः पदार्थोपस्थितेः पर्य्यवसानम् अन्वयबोधजनकत्वेनेच्छाविरहः तद्विरहः तदभावः। नन्वेवमाकाङ्क्षापदस्य अभावबोधकत्वे लक्षणापत्तिरित्यत आह, स चेति।—श्रोतुः जिज्ञासास्वरूपः,—ज्ञानेच्छारूपः; यतोऽभावाभावः प्रतियोगिस्वरूप एव, न तु अतिरिक्त कथ्यते इति भावः। अस्ति च "पयसा सिञ्चति" इत्यादौ पयसेति पदार्थस्य सिञ्चतीति पदार्थेन अन्वयबोधजनने श्रोतुरिच्छा। प्रतीतिपर्य्यवसानञ्च क्वचित् स्वाभाविकत्वेन क्वचिज्जनितान्वयबोधजनकत्वेन भवति; तत्राद्यमाह, निराकाङ्क्षेत्यादि।—अत्र "गौरश्वः" इत्यादिप्रथमान्तपदोपस्थितानां पदार्थानामभेदातिरिक्तसम्बन्धेनान्वयबोधोऽव्युत्पन्न इति पदार्थोपस्थितेरन्वयबोधजनने श्रोतुरिच्छाविरहो जायते। अत्र अभेदातिरिक्तसम्बन्धेन बाधसत्त्वेऽपि सत्तादिसम्बन्धेन बाधविरहरूपयोग्यताऽस्तीति बोध्यम्। द्वितीयं यथा,—"विमलं जलं नद्याः कच्छे महिषश्चरति" इति; अत्र नद्या इति पदार्थोपस्थितेर्जलमिति पदार्थेनान्वयबोधे सति "सिद्धे इच्छाविरहात्" इति न्यायेन "कच्छे" इत्यनेन श्रोतुरन्वयबोधे इच्छाविरहः। यदि पुनरुभयान्वयेच्छया प्रयुज्यते, तदा "नद्याः" इति काकाक्षिगोलकन्यायादनुषङ्गाद्वा "कच्छे" इत्यनेन सम्बन्धावगाहौतवक्तृतात्पर्य्यस्य श्रोतुरुभयान्वयबोधेच्छा सम्भवतीति ध्येयम्। आसत्तिमाह,—आसत्तिरिति। बुद्धेरिति।—बुद्धेः पदार्थोपस्थितेः, अविच्छेदः अव्यवधानम्, अव्यवहितपदार्थोपस्थितिरिति तात्पर्य्यार्थः। व्यवधानञ्च कालबाहुल्येन प्रकृतानुपयोगिपदार्थोपस्थित्या च सम्भवति। तत्राद्यमाह,—बुद्धीति। वाक्यत्वे—वाक्यत्वस्वीकारे। दिनान्तरेति अत्यन्तव्यवधानदर्शनार्थम्। सङ्गतिः,—सम्मेलनं, वाक्यव्यवहारोपयोगिमेलनं इति यावत्। द्वितीयं यथा,—"गिरिर्भुक्तमग्निमान् देवदत्तेन" इत्यत्र "गिरिरग्निमान्", "भुक्तं देवदत्तेन" इति वाक्यार्थबोधद्वयं प्रकृतम्। तत्र प्रथमानुयोगिन्याः "भुक्तम्" इति पदार्थोपस्थित्या, द्वितीयानुयोगिन्याः "अग्निमान्" इति पदार्थोपस्थित्या व्यवधानम्। ननु आकाङ्क्षायोग्यते आत्मार्थधर्म्मौ, कथं पदोच्चयधर्म्मत्वं लभेते ? इत्याशङ्क्याह,—अत्रेति। आकाङ्क्षायोग्यतयोः आत्मार्थधर्म्मत्वेऽपि—यथायथम् आत्मधर्म्मत्वेऽर्थधर्म्मत्वेऽपि। पदोच्चयधर्म्मत्वम्, उपचारात्—परम्परया इत्यर्थः। परम्परा चात्र यथाक्रमं स्वजन्यजनकत्व स्वाश्रयोपस्थापकत्वसम्बन्धरूपा बोध्या। आसत्तेरपि उक्तरूपायाः आत्मधर्म्मत्वात् एषैव रीतिरनुसरणीया इति। अयं भावः,—आकाङ्क्षाया आसत्तेश्च आत्मधर्म्मत्वे योग्यतायाः पुनरर्थधर्म्मत्वे यत् पदोच्चयधर्म्मत्वमुक्तं, तदुपचारादिति ध्येयम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**वाक्योच्चयो महावाक्यम् ॥ ७ ॥**

योग्यताऽऽकाङ्क्षाऽऽसत्तियुक्त इत्येव।

**इत्थं वाक्यं द्विधा मतम् ॥ ८ ॥**

इत्थमिति वाक्यत्वेन महावाक्यत्वेन च। (ख)

उक्तञ्च,—"स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते॥" इति।

तत्र वाक्यं यथा,—"शून्यं वासगृहम्" इत्यादि। महावाक्यं यथा,—रामायणमहाभारतरघुवंशादि। (ग)

पदोच्चयो वाक्यमित्युक्तं, तत् किं पदलक्षणम्? इत्यत आह,—

**वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः ॥ ९ ॥**

यथा—घटः। प्रयोगार्हा इति प्रातिपदिकस्य व्यवच्छेदः। अनन्वितेति—वाक्यमहावाक्ययोः। एकेति साकाङ्क्षानेकपद-

---

(ख) महावाक्यमाह, वाक्योच्चय इति।—वाक्यानाम् ( वाक्ययोर्वाक्यानाञ्च ) उच्चयः सङ्घातः, महावाक्यम्। योग्यताद्यभावे महावाक्यत्वस्वीकारे "चक्षुषा गृह्यतां, गगनं वर्त्तते" इत्येतयोः "भिक्षुरुपवसति, गृही भुङ्क्ते" इत्येतयोः तथा भिन्नदिनोच्चरितयोः "चक्षुषा गृह्यतां, घटो वर्त्तते" इत्येतयोरपि महावाक्यत्वं स्यात्, इत्यत आह,—योग्यतेत्यादि।

(ग) उक्तार्थं प्रमाणेन द्रढ़यति, स्वार्थेति।—स्वार्थबोधेन समाप्तानां निराकाङ्क्षाणां वाक्यानाम् [ वाक्ये च वाक्यानि चेति वाक्यानि तेषाम्। "सरूपाणामेकशेष एकविभक्तौ" ( १। २। ६४ पा० ) इत्येकशेषः ] अङ्गाङ्गित्वव्यपेक्षया गुणप्रधानभावेनाऽऽकाङ्क्षया। पुनः संहत्य—एकार्थप्रतिपादकत्वेन मिलिला, स्थितानाम् इति शेषः। एकवाक्यत्वं—महावाक्यत्वं, जायते। स्वार्थबोधसमाप्तत्वं पदोच्चयस्यापि बोद्धव्यम्; तेन—"स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया। पदानामेकपदता पुनः संहत्य जायते॥" इत्येवमेव पदोच्चयस्य वाक्यत्वं सम्पद्यत इति सिद्धम्। अन्यथा "शून्यं वासगृहं विलोक्य" इत्यादिभागस्यापि वाक्यत्वापत्तिरिति ध्येयम्। वाक्यार्थानां गुणप्रधानभावेन वैशिष्ट्यादेकत्वं तत्प्रतिपादकत्वेन वाक्यानामप्येकत्वमिति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वाक्यानाम्। अर्थबोधका इति क-च-ट-त-पेत्यादीनाम्। वर्णा इति बहुवचनमविवक्षितम् (घ)। तत्र,—

(घ) पदनिरूपणे प्रसङ्गसङ्गतिमुपपादयति, पदोच्चय इत्यादि।—तत्—तत्रेत्यर्थः। पदलक्षणमाह, वर्णा इति।—वर्णाः,—स्वरव्यञ्जनरूपाः। प्रयोगार्हाश्च ते अनन्वितैकार्थबोधकाश्चेति विग्रहः। तथाभूताः वर्णाः पदं—पदसंज्ञकाः स्युः। "नाऽपदं शास्त्रे प्रयुञ्जीत" इति निषेधात् विभक्तिरहितस्य न प्रयोगार्हतेत्यत आह, प्रयोगार्हाः इति।—प्रातिपदिकस्य—नाम्नः, एतदुपलक्षणं, धातोरपि, तस्यापि केवलस्याप्रयोगित्वादिति बोध्यम्। वाक्यमहावाक्ययोरिति व्यवच्छेद इत्यनेनान्वयः, एवमग्रेऽपि। तयोरन्वितार्थबोधकत्वात्। विशिष्टवाक्यार्थस्य विशेषणविशेष्यार्थातिरिक्तत्वेनैकत्वमित्यभिप्रायेणेदं लक्षणम्; अन्यथा एकार्थबोधका इत्यनेनैव वारणे सिद्धे अनन्वितेत्युपादानं व्यर्थं स्यात्। साकाङ्क्षेति।—साकाङ्क्षाणाम् अन्वयबोधाजनकानाम् अनेकेषां पदानां वाक्यानाञ्च व्यवच्छेद इत्यर्थः। तथा च अयोग्यानामनासन्नानां समुदायस्य अनन्वितार्थबोधकत्वेऽपि न पदत्वमित्यभिप्रायः। ननु एकवर्णद्विवर्णपदयोर्वर्णबहुत्वाभावात् तत्र अव्याप्तिः, अत आह,—वर्णा इति। अत्र प्रसङ्गेन वर्णोत्पत्तिप्रकारः निरूप्यते;—ज्ञानवता आत्मना स्वज्ञातपदार्थं शब्देन वक्तुमिच्छया तज्ज्ञापकशब्दसङ्घसमुत्पादयितुं नियोजिता बुद्धिः मानसं तत्र प्रवर्त्तयति, तच्च मूलाधारगतमग्निम् आलोड़यति। तादृशयासौ पावकः तदाहतः तत्रस्थं मारुतं प्रेरयति। तत्प्रेरितो वायुश्च मन्दमुपविचरन् परावागभिधं सूक्ष्मरूपं शब्दमुत्पादयति। अथ आ-नाभिमूलं प्रसरन्नसौ तद्देशसम्पर्केणाहतः पश्यन्त्यभिधं शब्दं जनयति। एतदुभययोः सूक्ष्मातिसूक्ष्मयोः सिद्धयोगिमात्रश्रुतिगम्यता, न त्वस्मदादीनां स्थूलश्रवणविषयता। ततोऽसौ वायुः हृदयदेशे परिचरन् तद्योगात् मध्यमाभिधं शब्दं सम्पादयति। स च मध्यमाख्यः अङ्गुल्यादिना श्रवणविवरपिधानेन अस्माभिरपि अव्यक्तसूक्ष्मध्वनिरूपेण अनुभवितुं शक्यते कदाचित्। ततोऽपि ऊर्द्धं कण्ठदेशं समुपगतोऽसौ मूर्द्धानमाहत्य तत्प्रतिघातेन ततः परावृत्तः वक्त्रम् अधिगम्य कण्ठताल्वाद्यष्टस्थानेषु समभिहतः वैखरीनामकं नानाजातीयं सुस्पष्टं शब्दं समुत्पादयति। स एव मानवव्यवहारार्हः;—"तुरीयं वाचो मनुष्या वदन्ति" इति महाभाष्यकाराः। अन्यत् सर्व्वमवदातम्। ननु "प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानाम्" इति नियमात् "घटोयं कर्म्मत्वम्" इत्याद्यन्वितार्थबोधकस्य "घटम्" इत्यादेः कथं पदत्वम्? न च "शक्तिमत्पदम्" इति मतानुसारेण "घट" इत्येकं पदम्, "अम्" इत्यपरं पदम्; अनयोः

अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधा मतः॥१०॥

एषां स्वरूपमाह।—

वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः।
व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः॥११॥

ताः,—अभिधाद्याः।

तत्र सङ्केतितार्थस्य बोधनादग्रिमाऽभिधा॥१२॥

उत्तमवृद्धेन मध्यमवृद्धमुद्दिश्य "गामानय" इत्युक्ते तं

---

प्रत्येकपदार्थोपस्थापकत्वेनानन्वितार्थबोधकत्वमव्रतमिति वाच्यं, तथा सति घट-मित्यादेः पदसमुदायत्वापत्त्या वाक्यत्वं स्यात्। न चेष्टापत्तिः; एवं सति "शून्यं वासगृहं विलोक्य" इत्यादि यत् वाक्योदाहरणं दत्तं, तदसङ्गतं स्यात्, तस्य तथा-विधवाक्यसमुदायत्वेन महावाक्यतयैवोदाहर्तुमुचितत्वात्। न च प्रत्ययार्थातिरिक्ता-नन्वितैकार्थबोधकत्वं विवक्षणीयमिति वाच्यं, तथाऽङ्गीकारेऽपि अभेदसम्बन्धेन नीलाद्य-न्वितोत्पलादिबोधकेषु "नीलोत्पलम्" इत्यादिपदेषु मुख्यार्थान्वितबोधकेषु लाक्षणिक-श्वेतादिपदेषु च अव्याप्तेरनुद्धारात्, समस्तस्य पदत्वास्वीकारे "चौरादजावसतिजन्म-भुवः प्रसन्नाः" इत्यादौ पदगतं क्लिष्टत्वदोषोदाहरणमसङ्गतं स्यात्। न चेतरपदार्थ-निरपेक्षं यदन्वितं तद्भिन्नमन्वितमिह विवक्षणीयमिति वाच्यं, तथात्वे "ग्रामं गच्छति" इत्यादिसमुदायस्य कर्तृपदसापेक्षान्वितबोधकस्य पदत्वापत्तेः। एवमेकेति न सङ्गच्छते, "घटौ" "घटाः" इत्यादिद्विवचनान्तादिपदेषु अनेकार्थबोधकत्वेनाव्याप्तेः। न चैकेति एकजातीयेत्यर्थः इति वाच्यं, "धवखदिरपलाशाः" इत्यादौ, युगपच्चन्द्रसूर्योपस्थापके "पुष्पवन्तौ" इति पदे च अव्याप्तितादवस्थ्यात्। अपि च पदघटकानां यावतां वर्णाना-मनन्वितैकार्थबोधकत्वम्, उत केषाञ्चित्? तत्र नाद्यः,—"सुन्दरस्य देवदत्तस्य धनम्" इत्यादौ विशेषणविभक्तेरनर्थकत्वात् "सुन्दरस्य" इत्यादिपदे अव्याप्तेः। नापि द्वितीयः,—"वह्निना सिञ्चति" इत्यादौ सर्वेषामनन्वितैकार्थबोधकत्वाभावेऽपि प्रत्येकं तथात्व-सम्भवादतिव्याप्तेः। एवञ्च पदलक्षणमेवं वाच्यम्—असमासाङ्गसुप्तिङ्न्तत्वोपयुक् प्रकृतिः पदम्। युगन्तेन केवलप्रकृतेः, असमासाङ्गेत्यनेन पितुःस्वसेत्यादौ पूर्वावयवस्य, राजदन्तेत्यादौ उभयोरपि, प्रकृतिरित्यनेन वाक्यमहावाक्ययोर्व्यवच्छेदः। समासाव-यवस्य पदत्वाङ्गीकारे "नीलोत्पलम्" इत्यादिपदस्य वाक्यत्वं स्यादिति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

गवानयनप्रवृत्तमुपलभ्य बालोऽस्य वाक्यस्य "सास्नादिमत्पिण्डानयनमर्थः" इति प्रथमं प्रतिपद्यते । अनन्तरञ्च "गां बधान" "अश्वमानय" इत्यादावावापोद्वापाभ्यां गोशब्दस्य "सास्नादिमानर्थः" आनयनपदस्य च "आहरणमर्थः" इति सङ्केतमवधारयति । (ङ) क्वचिच्च प्रसिद्धार्थपदसमभि-

(ङ) योग्यताघटकपदार्थानाह, अर्थ इति ।—पदप्रतिपाद्य इत्यर्थः । एषां—वाच्यलक्ष्यव्यङ्ग्यानामित्यर्थः । स्वरूपम्—असाधारणं लक्षणम् । आह—कथयति, प्रतिपाद्यं दर्शयतीति यावत् । अभिधया बोध्यः,—अभिधाजन्यबोधविषय वाच्यः इत्यर्थः, एवं लक्षणया बोध्यो लक्ष्यो लक्षणाजन्यबोधविषयो लक्ष्य इत्यर्थः, व्यञ्जनया बोध्यो व्यङ्ग्यो व्यञ्जनाजन्यबोधविषयो व्यङ्ग्य इत्यर्थश्च । अर्थबोधे शब्दस्य वृत्तीनाञ्च कारणत्वमिह विषयविषयिणोरभेदोपचाराद् बोध्यम् । कारणन्तु तद्वृत्तिज्ञानमेव शब्दस्य प्रकृतेः प्रत्ययस्य च शक्तयः अर्थबोधे सहकारिण्यः वृत्तयः ।

तत्र—अभिधादिषु मध्ये । सङ्केतितार्थस्य—कोषव्याकरणादिनियन्त्रितस्य इत्यर्थः; न तु सङ्केतग्रहविषयस्य अर्थस्य, सङ्केतस्य अभिधाया अभिन्नत्वेन आत्माश्रयत्वापत्तेः । सङ्केतग्रहोपायान् व्यवहारादीनाह, उत्तमेति ।—उत्तमेन वृद्धेन सङ्केतग्रहवता इति यावत्, (उत्तमवृद्धेन प्रयोजकप्रयोज्यभावप्रकटनाय वृद्धयोरुत्तममध्यमत्वकल्पनं बोध्यम्) । उपलभ्य—बुद्ध्वा । बालः,—अगृहीतसङ्केत इत्यर्थः । अस्य वाक्यस्य—"गामनय" इत्यस्येत्यर्थः । प्रथमं—शक्तिग्रहात् प्राक् । सास्नादिमदिति ।—सास्नाऽऽदिमत् यत्पिण्डं शरीरं तस्य आनयनमुपस्थापनम् इत्येवंविधोऽर्थः । तत्र सास्ना गलकम्बलः, आदिना लाङ्गूलककुत्खुरादीनां ग्रहणं, प्रतिपद्यते—बुध्यते । आवापोद्वापाभ्याम्—अन्वयव्यतिरेकाभ्यामित्यर्थः । तथा हि "गां बधान" इत्यत्र गोपदसत्त्वे सास्नादिमत्पदार्थबोधः, आनयपदव्यतिरेकेणाहरणपदार्थबोधाभावश्च । तथा "अश्वमानय" इत्यत्र गोपदव्यतिरेकेण सास्नादिमत्पदार्थबोधाभावः, आनयपदसत्त्वेन आहरणपदार्थबोधश्चेति अन्वयव्यतिरेकौ बोध्यौ । सङ्केतम्—अभिधां नाम शक्तिमित्यर्थः । सा च अतिरिक्तैव, न तु "अस्माच्छब्दादयमर्थो बोद्धव्यः" इतीश्वरेच्छारूपा; ईश्वरमगणयतां पामरादीनामपि शाब्दबोधदर्शनात् इति प्रसङ्गाच्च । अत एव आधुनिकैः सङ्केतितानां मैत्रचैत्रादिपदानामपि सङ्केतः सङ्गच्छते । न चात्र "अशौचव्यपगमे पिता नामधेयं कुर्यात्" इति शास्त्रात् सामान्यतश्चैत्रादीनामपीश्वरसङ्केतितत्वमिति वाच्यं, तत्र तथागतिसम्भवेऽपि यादृच्छिक-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

व्याहारात्। (च) यथा,—"इह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति" इत्यत्र (छ)।

क्वचिदाप्तोपदेशात्। यथा,—"अयमश्वशब्दवाच्यः" इत्यत्र। तच्च सङ्केतितमर्थं बोधयन्ती शब्दस्य शक्त्यन्तरानन्तरिता शक्तिरभिधा नाम। (ज)

---

सङ्केतितडित्थडवित्थादिपदानां सङ्केतासङ्गतिप्रसङ्गात्, तस्मात् पदार्थेषु वैशिष्ट्यं नाम सम्बन्धः कल्प्यते, घटपदाभिधेयोऽयमित्यादिप्रतीतिबलादिति साम्प्रदायिकाः।

(च) क्वचिदिति।—प्रसिद्धेति।—प्रसिद्धस्य गृहीतसङ्केतस्य पदस्य समभिव्याहारात् साहचर्य्यात्, समीपोच्चारितत्वादिति यावत्। प्रेक्षावद्भिः प्रायेण योग्यपदार्थोपस्थापकं पदं समीपे युज्यते इत्यादिसन्देहतः प्रसिद्धपदार्थान्वययोग्यपदार्थे शक्तिग्रहो भवतीति भावः। एवञ्च अशक्यार्थे योग्यतासत्त्वेऽपि वक्तृतात्पर्य्यविशेषस्यैव हेतुत्वकल्पनान्न तत्र शक्तिग्रहः। सङ्केतमवधारयतीति योज्यम्। एवमग्रेऽपि।

(छ) इहेति।—इह अस्मिन् ["अत्र" इति पाठान्तरेऽप्ययमेवार्थः]। प्रभिन्नकमलोदरे—प्रभिन्नं प्रफुल्लं यत् कमलं पद्मं तस्य उदरं मध्यभागः परागोद्गमस्थानमिति यावत्, तत्र, विकशितपद्ममध्ये इत्यर्थः, मधुकरः भ्रमरः मधूनि पिबति। अत्र "कमले मधु पिबति" इत्येषां पदानामन्वययोग्यार्थकत्वज्ञानेन मधुकरपदस्य भ्रमर एव शक्तिग्रहः। मक्षिकादौ तादृशयोग्यतासत्त्वेऽपि वक्तृतात्पर्य्यविशेषज्ञानाभावात् न शक्तिग्रहः। कमलाभ्यन्तरे भ्रमर एव पिबतीति जानता जनेन कमलपदसमभिव्याहारात्, मधुकरपदस्य सङ्केतो गृह्यते।

(ज) क्वचिदाप्तोपदेशादिति।—आप्तस्य विश्वस्तस्य, प्रामाणिकस्य इत्यर्थः। उपदेशात्—वचनात्। एतदुपलक्षणं व्याकरणादयोऽपि शक्तिग्रहोपाया द्रष्टव्याः। तदुक्तं,—"शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च। सान्निध्यतः सिद्धपदस्य वृद्धा वाक्यस्य शेषाद्विवृतेर्वदन्ति॥" इति। दाक्ष्यादिशब्दानां दक्षाद्यपत्येषु शक्तिग्रहः व्याकरणात्। गोसदृशपिण्डदर्शनात् गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थस्मरणे "अयं गवयः" इत्युपमानात्। "विनायको विघ्नराजद्वैमातुरगणाधिपाः" इति कोषात्। आप्तवाक्यादिषु उदाहृतं स्वयमेव ग्रन्थकृता। वाक्यस्य शेषाद् यथा,—"यवमयश्चरुर्भवति", "वाराही चोपानत्", "वैतसकटे प्राजापत्यं चिनोति" इत्यादौ यव-वराह-वेतसशब्दाः किं म्लेच्छयोगात् कङ्गु-वायस-जम्बूनां वाचकाः, उत आर्य्यप्रयोगात् दीर्घशूक-शूकर-वञ्जुलानाम्? इति विप्रतिपत्तौ "वसन्ते सर्व्वशस्यानां जायते

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च ॥ १३ ॥**

जातिः,—गोपिण्डादिषु गोत्वादिका। गुणः,—विशेषाधानहेतुः सिद्धो वस्तुधर्म्मः। शुक्लादयो हि गवादिकं सजातीयेभ्यः कृष्णगवादिभ्यो व्यावर्त्तयन्ति। द्रव्यशब्दा एकव्यक्तिवाचिनो हरिहरडित्थडवित्थादयः। क्रियाः,—साध्यरूपा वस्तुधर्माः पाकादयः। एषु हि अधिश्रयणावश्रयणान्तादिपूर्वापरीभूतो व्यापारकलापः पाकादिशब्दवाच्यः। एष्वेव हि व्यक्ते-

---

पत्रशातनम्। मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः॥" "वराहं गावोऽनुधावन्ति" "अप्सुजो वेतसः" इति वाक्यशेषरूपवेदविरोधिनी म्लेच्छप्रतीतिः स्मृतिरिव वेदविरुद्धा हेया, इत्याचार्य्यप्रयोगादेव दीर्घशूकादौ शक्तिग्रह इति। शक्तिः कपिलवीजरूपः संस्कारविशेष इत्यादौ विवृतम्।

उक्ता च अभिधा तावत् त्रिप्रकारा ;—समुदायमात्रशक्तिः, अवयवमात्रशक्तिः, समुदायावयवोभयशक्तिश्च। तत्र प्रथमाया उदाहरणं डित्यादिकम् ; इह कस्याश्चित् अवयवशक्तेरभावात् समुदायमात्रशक्त्या काष्ठमयहस्तिनो बोधः। पाठकादिः द्वितीयायाः ; तत्र प्रकृतिप्रत्ययमात्रवृत्तिलभ्यार्थयोः पाठतत्कर्तृत्वरूपयोः परस्परसम्बन्धेन योऽर्थो बोध्यते, तद्भिन्नस्य कस्यचिदपि अर्थस्यानुपलम्भेन सामुदायिकशक्तेरसत्त्वात्। पङ्कजादयः तृतीयायाः ; तत्रापि प्रकृतिप्रत्ययरूपपदावयवशक्तिलभ्यानां पङ्कजनन-कर्त्तॄणां परस्परम् अन्वये पङ्कजनिकर्त्तृरूपादर्थादतिरिक्तस्य अरविन्दत्वविशिष्टस्य बोधेन अतिरिक्तायाः समुदायशक्तेश्च आवश्यकतया तयोरुभयोरेव एकत्रावस्थितिः। पुनरेताः एव रूढि-योग-योगरूढिशब्दैः अपि कथ्यन्ते। अथाश्वगन्धादिषु का शक्तिः? इति शक्तिविदां प्रश्नः समाधीयते ; तथा हि,—"अश्वगन्धारसं पिबेत्" इत्यादौ स्वल्प-विशेषे केवलसमुदायशक्तिसम्बन्धः। "अश्वगन्धा वाजिशाला" इत्यादौ केवलयोगशक्ति-सम्बन्धः। केचित्तु—"अश्वगन्धादीनां न प्रथमोक्तभेदयोरन्तर्भावः कैवल्याभावात्, यदि तु योगरूढि यौगिकरूढिभेदात् भिन्नस्य सङ्करस्य प्रथमे भेदे पङ्कजादिशब्दानाम् अन्तर्भावः, अश्वगन्धादेश्च द्वितीये" इति वदन्ति। "यौगिकरूढिरूपः अयं चतुर्थोऽभिधा-प्रकारः" इत्यन्ये। "शब्दस्तु सर्व्वथाखण्ड एव, तत्र प्रकृतिप्रत्ययगतस्य विभागस्य सर्व्वथा काल्पनिकत्वेन योगशक्तेः सर्व्वत्रैव उपहततया रूढिरेवैकः शक्तिभेदः" इत्यपि केचित् वदन्तीति अभिधाविवेकसङ्क्षेपः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रुपाधिषु सङ्केतो गृह्यते; न व्यक्तौ। आनन्त्यव्यभिचार-दोषापातात्। (भ)

(भ) आनन्त्यव्यभिचारदोषप्रसङ्गशङ्कया व्यक्तिशक्तिवादमपहाय उपाधिशक्ति-वादमाह, सङ्केत इति।—द्रव्यं संज्ञाविषयः। संज्ञा च द्विविधा, चिरन्तनी आधुनिकी च। तत्राद्या हरिहरादिः, द्वितीया डित्थडवित्थादिः। जात्यादिपदार्थमाह,—जाति-रिति। गोपिण्डादिषु—गोव्यक्त्यादिषु। सिद्धः,—नित्यः; एतन्मते गुणानामपि नित्य-त्वम्; आविर्भावतिरोभावावेव उत्पत्तिविनाशप्रतीतिविषयौ। वस्तुधर्म्मः,—द्रव्यमात्र-वृत्तिः। विशेषाधानहेतुत्वमुपपादयति, शुक्लादयो हीति। साध्यरूपाः,—जन्य-स्वभावाः। एषु—साध्यरूपवस्तुधर्म्मेषु। अधिश्रयणेति।—अधिश्रयणादीत्यर्थः, अधि-श्रयणं चुल्ल्यां स्थाल्या आरोपणम्, आदिराद्यवयवी यस्य; अवश्रयणं चुल्लीतः स्थाल्याः अवरोपणम् अन्तोऽन्तावयवी यस्य तयोः कर्म्मधारयः। अत्र ("अधिश्रयणान्तादि" इत्यत्र) आदिशब्देन गृहनिर्गमन-नगरान्तरप्रवेशान्तप्रभृतीनां ग्रहणम्। व्यापारेति।—व्यापाराणां कार्य्याणां कलापः समुदायः, ("कलापो भूषणे बर्हे तूणीरे संहतेऽपि च" इत्यमरः)। पाकादीत्यादिना गमनादीनां ग्रहणम्। एषु एव—जात्यादिषु चतुर्षु मध्ये, [ निर्धारणार्थेयं सप्तमी ] ये व्यक्तेः उपाधयो धर्म्माः जातिगुण-क्रियारूपास्तेष्वेव इत्यर्थः। संज्ञाशब्दानान्तु व्यक्तावेव सङ्केतग्रहः। द्रव्यस्य शक्तिव्यति-रिक्तत्वाभावेन उपाधित्वाभावान्नानात्वाभावेन उक्तदोषद्वयाभावाच्च। अत एवोक्तं,—"द्रव्यशब्दा एकव्यक्तिवाचिनः" इति। केचित्तु "संज्ञाशब्दानां संज्ञायामेव सङ्केतग्रहः; उपस्थाप्योपस्थापकभावेनाविनाभावाद् व्यक्तेराक्षेपः" इत्याहुः, तन्न, संज्ञायाः शब्दानतिरिक्तत्वेन तस्य च उच्चारणभेदेन भिन्नतया निरुक्तदोषद्वयप्रस-ङ्गात्; एवञ्च डित्थडवित्थादिकं व्यक्तिस्वरूपमेव, न तु पदार्थान्तरमित्यवधेयम्। आनन्त्येति।—नानाव्यक्तिषु नानाशक्तिकल्पनागौरवमित्यभिप्रायः। ईश्वरेच्छापक्षे तद्विषयत्वस्य नानात्वकल्पनमेव गौरवमित्यवगन्तव्यम्। ननु दृष्टव्यक्तिषु एव शक्तिग्रहः, न तु अनन्तव्यक्तिषु, अतः कुतो गौरवम्? इत्याह,—व्यभिचारेति। सङ्केतग्रहकाले अदृष्टव्यक्तावपि बोधस्य कार्य्यस्य सत्त्वात् दृष्टव्यक्तिसङ्केतग्रहरूपकारणस्य असत्त्वाद् व्यभिचारदोष इति बोध्यं, कार्य्यस्य कारणाभाववद्वृत्तित्वं व्यभिचार इति व्यभिचार-लक्षणात्। ननु गुणद्रव्यक्रियाणां प्रतिव्यक्तिभिन्नत्वेन आनन्त्यव्यभिचाराभ्यां कथं शक्ति-ग्रहः? इति चेन्न; तन्मते गुणादीनामपि जातिवदेकत्वमेव। भेदप्रतीतिस्तु आश्रय-भेदादौपचारिकी। एतदसहमानास्तु अन्ये जातावेव शक्तिरिति वदन्ति। यथा

काव्यप्रकाशे "सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा" इति। एतन्मते गवादौ गोत्वादिरिव शुक्लादौ शुक्लत्वादिः, पाकादौ पाकत्वादिः, डित्थादौ डित्थत्वादिर्जातिरस्ति; डित्थादीनां प्रकृत्यवस्थाकालभिन्नत्वेन भिन्नत्वाङ्गीकारात् तद्वृत्तिडित्थत्वादिजातिस्वीकारः। एवञ्च शुक्लत्वादिजात्याश्रयस्य शुक्लादिगुणस्य एवाक्षेपः; पटादिपरत्वे तु लक्षणैवेति मन्तव्यम्। ननूपाधौ सङ्केतग्रहाङ्गीकारे "विशेष्यं नाऽभिधा गच्छेत् क्षीणशक्तिर्विशेषणे" इति न्यायात् "गामानय" इत्यादौ गोपदादिना कथं गवादिग्रहः? इति चेन्न; गवादेराक्षेपेण लाभात्। तदुक्तं,—"व्यक्त्यविनाभावात् तु जात्या व्यक्तिराक्षिप्यते" इति। यथा—"क्रियते" इत्यादौ कर्त्ता। "कुरु" इत्यादौ कर्म्मेत्यादि। आक्षेपो न अनुमानं, व्याप्त्यादिज्ञानव्यतिरेकेणापि व्यक्तेरनुभवात्; किन्तु स्मरणमेव, गोत्वादिप्रकारकगवादिस्मरणाभावेन गोत्वादिविशिष्टशब्दबोधानुपपत्तेः। अत एवोक्तं,—"जातिशक्तं पदं व्यक्तिमेवानुभावयति स्मारयति च" इति। जातिशक्तम्—उपाधिशक्तमित्यर्थः।

अत्रेदं विचार्य्यते,—जात्यादिषु सङ्केतग्रहे बहुदोषसम्भावनया व्यक्तौ शक्तेरङ्गीकारे तत्तद्दोषाणां वारणसम्भवेऽपि शक्त्यानन्त्यव्यभिचारयोः अवश्यम्भावात् तत्र सङ्केतः कथमपि न भवितुमर्हति। तत् कथमिति चेत्, शृणु,—प्रथमतस्तावत् व्यक्तिशक्तिवादिनं प्रति इयं पृच्छा,—उच्चारितात् शब्दात् सङ्केतग्रहः किं व्यक्तिनिचयेषु, कस्याञ्चिदेकस्यां व्यक्तौ वा? तत्र न तावत् प्रथमः कल्पः, कदाचित् केनचिदुच्चारितात् एकस्मात् शब्दात् सकलव्यक्तीनां युगपदुपस्थितेरत्यन्तासम्भवात्। नापि द्वितीयः; उच्चारितात् गोशब्दात् कस्याश्चिदेव गोव्यक्तेरुपस्थितावपि तदितरासां गोव्यक्तीनां ततः कथमपि भानासम्भवात्; दृश्यते च तज्ज्ञानम्। अपरञ्च व्यक्तौ सङ्केतस्वीकारे "मृगः श्वेतरूपवान् गतिक्रियावान् डवित्थाभिधः" इत्यर्थपरतया "मृगः श्वेतः चलः डवित्थः" इत्यभिधाने सर्वैरेव पदैरेकस्यैव मृगव्यक्तेरभिधानात् आवश्यकः पदार्थगतः कश्चिदपि भेदो न भवेत्, सर्व्वत्रव्यक्तेरेव पदशक्यत्वेन प्रकृते सर्वैरेव पदैरेकस्यैव मृगव्यक्तेरभिधानात्। एवञ्च पदार्थगतभेदाभावेन "घटः कुम्भः" इत्यादीनामिव प्रकृतस्थलीयपदानां तुल्यव्यक्तिवाचकतया सहप्रयोगः कथमपि न सम्भवेत्। उपाधौ सङ्केतस्वीकारे तु जातिगुणक्रियासंज्ञाशब्देषु प्रवृत्तिनिमित्तस्य भिन्नत्वात् तादृशप्रयोगे पर्य्यायत्ववारणसम्भवात् सहप्रयोगस्य न काप्यनुपपत्तिः। तेषु जातिः विविच्यते,—ब्राह्मणादिपदवाच्या लक्षणविशेषोन्नाविता प्रत्यक्षा ब्राह्मणत्वादिः जातिः ब्राह्मणादिपदानां वाच्या। नित्यत्वे सत्यनेकसमवेतत्वमिति तस्य निष्कृष्टलक्षणं, सा च अनुमितिगम्या घ्राणत्वादिः घ्राणादीनाम्। अत्र वाक्यपदीयकाराः,—"गौः स्वरूपेण न

गौः नाप्यगौः गौत्वाभिसम्बन्धात्तु गौः"। अस्याशयः ;—सामान्यान्वितः धर्मी, स्वरूपेण जात्यनुपेतव्यक्तित्वेन, गोपदवाच्यः गौः। अज्ञातगोत्वजातिकधर्मिस्वरूपमात्रेण इति एके। न गौः,—न गोव्यवहारसाधकः। नाप्यगौः,—न गोभिन्नत्वेन व्यवहार-निष्पादकः। एवं सति स्वरूपधर्मिविषयज्ञानाभावदशायां गोव्यक्तावेव गौरिति गोभेद-वानिति वा व्यवहारः सम्भवेत्। [ अगौः इत्यत्र "गोरतद्धितलुकि" ( ५।४।९२ पा० ) इत्यनेन न टच्प्रत्ययप्रसङ्गः, "नञः तत्पुरुषात्" ( ५।४।७१ पा० ) इति निषेधात् ]। गुणः शुक्लादिः, शुक्लादिपदेनाभिधया बोध्यते, उत्पन्नं हि गवादिकं वस्तु शुक्लादिना गुणेनैव व्यावर्त्त्यते। अतैवं निर्णयः। सञ्जातस्य द्रव्यस्य चणात् पश्चाद्धि गुणयोगः। उत्पन्नस्य हि उत्पत्तिचणे निर्गुणता स्यात्, द्रव्योत्पत्तिस्तु जातिसमन्वितैव द्रष्टा इति द्रव्योत्पत्तिचणेऽपि जातिमत्त्वं द्रव्यस्य, इति जातिगुणयोः वैषम्यम्। गुणलचणन्तु—"सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते। आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृति-र्गुणः॥" इति। अस्यायमर्थः,—प्रथमं द्रव्यमाश्रित्य कदाचित् ततो निवर्त्तते, कदाचिच्च तद्भिन्नेष्वपि दृश्यते यः, सः गुणः, एतेन जातेर्गुणता प्रतिषिद्धा। अथ क्रियायाम् उक्तलचणसत्त्वात् तस्याः अपि गुणत्वापत्तिः, साऽपि द्रव्यं कदाचित् आश्रयति, कदाचिज्जहाति, द्रव्यमपि निष्क्रियं कदाचिद्वर्त्तते, कदाचित् क्रियाऽन्वितं, द्रव्यान्तरञ्च सा कदाचित् आश्रयति इत्यतः आह ;—आधेयः,—उत्पाद्य इत्यर्थः। यद्वत् घटादीनां रूपादिकं पाकजतया उत्पाद्यम्, अक्रियाजमनुत्पाद्यं, यथा आकाशादेर्महत्त्वादिकं, क्रिया तु न नित्या, उत्पत्तिमत्त्वात्, अतस्तस्या द्विप्रकारप्रकृतिकत्वाभावात् गुणत्वा-भावः। ननु एवं द्रव्यस्यापि गुणत्वं प्राप्तम् ; अवयवि द्रव्यम् अवयवद्रव्याश्रितं भवति, असमवायिकारणसंयोगनिवृत्तौ च विनाशात् ततो निवर्त्तते। भिन्नजातीयेषु च हस्त-पादादिषु तथा दृश्यते। तदपि द्विविधं नित्यानित्यभेदेन, निरवयवस्य द्रव्यस्यात्मपर-माण्वादेर्नित्यत्वात्, अवयविद्रव्यस्य च घटपटादेरनित्यत्वादित्याह, असत्त्वप्रकृतिरिति। —द्रव्यस्वभावभिन्नः इत्यर्थः। [ अत्र 'पृथग्जातिषु' इति व्यस्तवाक्यम् ; समासवाक्यत्वे "जात्यन्ताच्छः बन्धुनि" ( ५।४।९ पा० ) इति छः प्रत्ययः स्यात्। तत्र जात्याश्रय-व्यक्तिषु दृष्टः जातिषु परिलक्ष्यते, इति "वोतो गुणवचनात्" ( ४।१।४४ पा० ) इति सूत्रे भाष्ये कैयटे च विशदीकृतम् ]। क्रिया च भावनात्मिका सम्पादयितुर्व्यापार-रूपा साध्या। तथा च कथितं,—"व्यापारो भावना सैवोत्पादना सैव च क्रिया" इति "यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते। आश्रितक्रमरूपत्वात् सा क्रियेत्यभि-धीयते॥" अस्यार्थः ;—यावत् सर्व्वमित्यर्थः, सिद्धम् उपस्थितध्वंसप्रतियोगिरूपम्, असिद्धं तद्विपरीतम्। वर्त्तमानभविष्यद्भेदेन तद् द्विविधं, तेन 'अपचत्' 'पक्ष्यति'

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ लक्षणा ।—

## मुख्यार्थबाधे तद्युक्तो ययाऽन्योऽर्थः प्रतीयते ।
## रूढेः प्रयोजनाद्वाऽसौ लक्षणा शक्तिरर्पिता ॥१४॥(ञ)

'पचति' इत्यादिकेषु असत्त्वरूपेण कथिता क्रिया इति तस्याः रूढिः प्रदर्शिता। यौगिकत्वमुच्यते, आश्रितेति।—आश्रितक्रमं रूपं यस्याः तत्त्वात्, अधिश्रयणादीनां तदीयावयवानां क्रमिकोत्पत्तिदर्शनात्। तत् समुदायः क्रियापदवाच्यः। किञ्च क्रमोत्पन्नावयवानां युगपदसत्त्वेऽपि यत्किञ्चिदवयववर्त्तमानतादशायां वर्त्तमानताप्रयोगः अवयवाऽवयविनोरभेदस्यारोपितत्वात्। भूतभविष्यत्त्वप्रयोगस्तु सर्वेषामवयवानामतीतभावित्वदशायामेव। तथोच्यते,—"गुणभूतैरवयवैः समूहः क्रमजन्मनाम्। बुद्ध्या प्रकल्पिताऽभेदः क्रियेति व्यपदिश्यते॥" तथा च भाष्यकाराः,—"क्रिया हि नाम इयम् अत्यन्तापरिदृष्टा पूर्वापरीभूताऽवयवा न शक्यते पिण्डीभूता निदर्शयितुम्" इति। व्यापारसङ्घात्मिकायाः क्रियायाः प्रेक्षणयोग्यत्वकथनेन तदवयवानां तद्विषयत्वं व्यतिरेकयोगादायातम्। एकबुद्ध्याश्रयतया च एकत्वव्यवहारः तस्याः सिद्धः। अथ शुक्लादिसञ्चरणादीनां प्रतिव्यक्तिभिन्नत्वात् व्यक्तिशक्तिवादे दर्शितयोः आनन्त्यव्यभिचाररूपयोः दोषयोरत्रापि सम्भव इति चेत् न, लाघवात् प्रत्यभिज्ञया च तेषामेकत्वाभ्युपगमात्। तथा चोक्तं,—"गुणक्रियायदृच्छानां वस्तुतः एकरूपाणाम् आश्रयभेदाद्भेद इव लक्ष्यते" इति। तथा च भेदज्ञानं भ्रम एव इति तात्पर्य्यम्। तथैव उत्पत्तिनाशज्ञानमपि तस्य ज्ञेयम्। वर्णनित्यत्वप्रसङ्गे अकारादिषु उत्पत्तिविनाशज्ञानस्य भ्रमत्वस्वीकारात्। तत् इत्थं चतुष्टयी शब्दानां प्रवृत्तिः निर्णीता। सर्वेषां जातिरेवार्थः। गुणक्रियाशब्दानां गुणक्रियागतायाः यदृच्छाशब्दानाञ्च बालाद्युच्चारिततत्तच्छब्दवृत्तेः तत्तत्समयभेदभिन्नार्थस्थितेः वा जातेरेवाभिधेयतासम्भवात्, इति जातिशक्तिनिरूपणसन्दर्भसङ्क्षेपः।

(ञ) अथेति।—अभिधानिरूपणानन्तरमित्यर्थः; लक्षणा निरूप्यत इति शेषः। मुख्येति।—मुख्योऽभिधया प्रतिपाद्यः साक्षात्सङ्केतविषयत्वेन प्रथममुपस्थीयमान इति यावत्, स चासावर्थश्च इति मुख्यार्थः, तस्य बाधोऽभिमततात्पर्य्यानुदयनिबन्धनतया तिरस्कारस्तस्मिन्। मुख्यार्थस्य अभिप्रेततात्पर्य्यानुकूलनिबन्धनविरहतया तिरस्कारे सतीत्यर्थः [सति सप्तमीयम्] तद्युक्तः,—तेन प्रसिद्धेन, यस्य वा मुख्यार्थस्य बाधे स्वप्रवृत्तिस्तथाभूतेन युक्तः सम्बद्ध इति तद्युक्तः। अन्यः,—मुख्यार्थतो भिन्न इत्यर्थः, गौण इति यावत्। अर्थः यया प्रतीयते साऽसौ रूढेः रूढिमुद्दिश्य प्रयोजनात् प्रयोजनमुद्दिश्य वा। अर्पिताशक्तिर्लक्षणा नाम। अयं भावः,—"कलिङ्गः साहसिकः" "गङ्गायां

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

घोषः” “काकेभ्यो दधि रक्ष्यताम्” “छत्रिणो यान्ति” इत्यादौ “कलिङ्गदेशः साहसग्राही” इत्यर्थः, प्रथममुपतिष्ठमानः सङ्केतितात्मा, अत एव अस्य मुख्येति व्यपदेशः, मुखे आदौ भव इति व्युत्पत्तिलभ्यत्वात्। अस्य च बाधे लक्षणायाः प्रवृत्तिः, बाधश्च तात्पर्य्यानुपपत्तिः। अत एवाहुः,—“लक्षणाशक्यसम्बन्धस्तात्पर्य्यानुपपत्तितः” इति। “कलिङ्गः साहसिकः” “गङ्गायां घोषः” इत्यादिषु कलिङ्गगङ्गादिपदानां मुख्यार्थेषु देशविशेषप्रवाहादिरूपेषु साहसिकघोषादिपदार्थानामन्वयानुपपत्तिरूपतात्पर्य्यव्याघातापरपर्य्यायो बाधो यत्र प्रतिसन्धीयते, तत्र यया कलिङ्गदेश-गङ्गातीरादीनां बोधः, सा मुख्यार्थसम्बन्धरूपा लक्षणा। तथा हि देशविशेषप्रवाहादिरूपमुख्यार्थसम्बन्धस्य जन-तीरादिषु गृहीतत्वाज्जनतीरादीनां तत्तत्सम्बन्धात्मना स्मरणं, तदनन्तरञ्च शाब्दबोधः। यदि तु मुख्यार्थस्य अन्वयानुपपत्तिरेव बाधरूपं लक्षणाबीजं स्यात्, तदा कदाचित् अन्वयानुपपत्तेरसत्त्वे तात्पर्य्यानुपपत्तेः सत्त्वेऽपि लक्षणा न स्यात्, तत्र तादृशबाधस्यासत्त्वात्, अतस्तात्पर्य्यव्याघातरूपे एव बाधे लक्षणाऽङ्गीकार्य्या। तदाहुः,—“यदि चान्वयानुपपत्तिर्लक्षणाबीजं स्यात्, तदा ‘गङ्गायां घोषः’ इत्यादौ क्वचिद्गङ्गाऽऽदिपदानां तीरादौ, क्वचिद् घोषादिपदानां मत्स्यादौ लक्षणेति नियमो न स्यात् इति”। इदमभिहितम् ;—‘गङ्गायां घोषः’ इत्यादौ ‘गङ्गातीराधिकरणको ग्रामविशेषः’ इत्यादितात्पर्य्येण अभिहितेऽपि घोषादिपदानां मकरादिषु लक्षणा, ‘गङ्गाप्रवाहाधिकरणको मकरः’ इत्यादितात्पर्य्येण अभिहिते च गङ्गादिपदानां तीरादिषु लक्षणाऽऽपद्येत, तावताऽपि अन्वयानुपपत्तिपरिहारात्। इदं तु बोध्यम् ;—क्वचित् तात्पर्य्यव्याघातोऽन्वयानुपपत्त्या, क्वचिच्चासम्भवेन, क्वचित् पुनः साक्षात्। यदि वाच्यार्थसम्बन्धः भवत्वतीरत्वादिना रूपेण गृहीतस्तदा भवत्वादिनैव भवादिबोधः ; यदि तु कलिङ्गभवत्वगङ्गातीरत्वादिना, तदा कलिङ्गभवत्वादिना। एवञ्च लक्ष्यताऽवच्छेदके न लक्षणेति सिद्धम्। तत्र तत्प्रकारकबोधस्य अन्यथाऽपि सम्भवात् इति। अत्र “मुख्यार्थबाधे तद्युक्तः” इति हेतुपूर्व्वकार्थविशेषणाङ्गीकरणेन लक्षणाप्रतिपाद्यार्थस्वरूपनिरूपणम् ; “ययाऽन्योऽर्थः प्रतीयते” इति लक्षणाया लक्षणम् ; ‘रूढेः प्रयोजनाद्वा’ इति लक्षणाया द्वैविध्यार्थम् ; तथा च रूढिमूला लक्षणा, प्रयोजनमूला लक्षणा चेति सिद्धम् ; तत्प्रतिपाद्योऽर्थश्च मुख्यार्थबाधोपस्थितमुख्यार्थसम्बन्धी मुख्यत्वानवच्छिन्नतया गौणत्वावच्छिन्न एव। यद्वा—मुख्यार्थबाधो मुख्यार्थसम्बन्धो रूढिप्रयोजनयोरन्यतरच्चेति त्रयं लक्षणायाः प्रवृत्तौ हेतुः। न चैवं लक्षणाविभागाभिधानं, तस्याः प्रवृत्तिप्रयोजकमात्रेण तत्तदभिधानात्। ‘शक्तिः’ इति पूर्व्वमभिहितस्य लक्षणायाः शक्तिस्वरूपत्वस्य स्मारकम्। ‘अर्पिता’ इति विशेषणं



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"कलिङ्गः साहसिकः" इत्यादौ कलिङ्गादिशब्दो देशविशेषादिरूपे स्वार्थेऽसम्भवन् यया शब्दस्य शक्त्या स्वसंयुक्तान् पुरुषादीन् प्रत्याययति, यया च "गङ्गायां घोषः" इत्यादौ गङ्गादिशब्दो जलमयादिरूपार्थवाचकत्वात् प्रकृतेऽसम्भवन् स्वस्य सामीप्यादिसम्बन्धसम्बन्धिनं तटादिं बोधयति, सा शब्दस्यार्पिता स्वाभाविकेतरा ईश्वरानुद्भाविता वा शक्तिर्लक्षणा नाम। पूर्वत्र हेतू रूढिः प्रसिद्धिरेव। उत्तरत्र "गङ्गातटे घोषः" इति प्रतिपादनादलभ्यस्य शीतत्वपावनत्वातिशयस्य बोधनरूपं प्रयोजनम्। हेतुं विनापि यस्यकस्यचित् सम्बन्धिनो लक्षणेऽतिप्रसङ्गः स्यादित्यत उक्तम्,—"रूढेः प्रयोजनाद्वाऽपि" इति। (ट)

---

पुनर्लक्षितलक्षणायास्तस्याः स्वरूपाभिधानपुरःसरमभिधावत् शक्तिस्वरूपत्वनिराकरणार्थम्। 'राजतुमावल्लभः' इत्यादौ शाब्द्यां व्यञ्जनायामतिप्रसङ्गवारणाय 'मुख्यार्थबाधे' इति। एवं सति असम्बद्धे लक्षणायां 'गङ्गायां घोषः' इत्यादौ गङ्गादिपदात् यमुनादितटस्याप्युपस्थितेरतिप्रसङ्गवारणाय 'तद्युक्तः' इति। मुख्यार्थेन सम्बद्धमर्थान्तरमेवानया निरूप्यत इति निदर्शयितुम् 'अन्योऽर्थः' इति।

(ट) रूढहेतुकायाः प्रयोजनहेतुकायाश्च लक्षणायाः प्रसिद्धलक्षणयोर्लक्ष्यं सङ्गमयन् कारिकां विवृणोति,—कलिङ्ग इत्यादिना। साहसिकत्वं चेतनधर्मः, तत्र अचेतने देशे अन्वयानुपपत्तिरिति दर्शयति, कलिङ्गादिशब्द इति।—देशविशेषे स्वार्थे वर्त्तमानः कलिङ्गादिशब्दः। असम्भवन्—साहसिकाद्यन्वययोग्यमर्थमभिधातुमशक्नुवन् इत्यर्थः। स्वसंयुक्तान्—स्वार्थसम्बद्धान्। प्रकृते—घोषनिवासादौ। असम्भवन्—अभिधया वर्त्तितुमशक्नुवन्। केचिदभिधां स्वाभाविकं शब्दव्यापारं वदन्ति, तन्मते लक्षणाया वैलक्षण्यमाह,—स्वाभाविकेतरेति। अन्ये तु ईश्वरेच्छाविषयत्वरूपामाहुस्तन्मते तु आह, ईश्वरानुद्भाविते ति।—ईश्वरेण अनुत्थापितेत्यर्थः, इदानीन्तनवक्तृभिरुत्थापितेति यावत्। पूर्वत्र—"कलिङ्गः साहसिकः" इत्यादौ। उत्तरत्र—"गङ्गायां घोषः" इत्यादौ। प्रतिपादनादिति।—प्रतिपादयतीति प्रतिपादनं वाक्यं, तदलभ्यस्य मुख्यशब्दघटितवाक्येन अप्रतिपाद्यस्य इत्यर्थः, तीरस्य विप्रकृष्टांशगतशीतत्वाद्यपेक्षया सन्निकृष्टांशगतशीतत्वादेराधिक्यमत्रातिशयः। एवञ्च "अतिशीतेऽतिपावने च तीरे घोषः" इति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

केचित् तु "कर्म्मणि कुशलः" इति रूढ़ावुदाहरन्ति। तेषामयमभिप्रायः,—"कुशं लाति" इति व्युत्पत्तिलभ्यः कुशग्राहिरूपो मुख्योऽर्थः प्रकृतेऽसम्भवन् विवेचकत्वादिसाधर्म्यसम्बन्धसम्बन्धिनं दक्षरूपमर्थं बोधयति। तदन्ये न मन्यन्ते; कुशग्राहिरूपार्थस्य व्युत्पत्तिलभ्यत्वेऽपि दक्षरूपस्यैव मुख्यार्थत्वात्। अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तम्। व्युत्पत्तिलभ्यस्य मुख्यार्थत्वे "गौः शेते" इत्यत्रापि लक्षणा स्यात्। "गमेर्डोः" (उणादि—२।६७) इति गमधातोर्डोप्रत्ययेन व्युत्पादितस्य गोशब्दस्य शयनकालेऽपि प्रयोगात्। (ठ)

---

व्यञ्जनाजन्यबोधो लाक्षणिकशब्दप्रयोगस्य प्रयोजनमिति भावः। 'काचिन्नैव लक्षणा शक्तितः' इति लक्षणाया निषेध उक्तः। अशक्तितः रूढ़िप्रयोजनविरहात्। यथा "कमले चरणाघातं मुखं सुमुखि! तेऽकरोत्" इत्यत्र निर्जितत्वं लक्ष्यते, एषा नेयार्थलक्षणा दोषतया वक्ष्यते। सा च कविप्रयोगानर्हत्वात् प्रकृतलक्षणस्य लक्ष्या न भवतीति तत्रातिव्याप्तिवारणाय चरमहेतुद्वयमुपन्यस्तम्। तदेव दर्शयति, हेतुमिति।—रूढ़िप्रयोजनयोरन्यतरमित्यर्थः। सम्बन्धिनः,—मुख्यार्थसम्बन्धिनः। लक्षणे—लक्षणायाम्।

(ठ) "कुशं ('कुशान्' इति पाठान्तरं) लाति गृह्णाति" इति कुशलः ['आतोऽनुपसर्गे कः' (३।२।३ पा०) इति कः] इति व्युत्पत्त्या—प्रकृतिप्रत्ययविभागकल्पनया। लभ्यः,—प्रतिपाद्यः। कुशग्राहिरूपः,—कुशग्रहणकर्तृरूपः। मुख्यः,—योगशक्त्या लभ्यत्वात् प्रधानभूतः। अर्थः,—अभिधेयः। प्रकृते—प्रसङ्गानुप्रसक्ते कर्म्मणि विषये। असम्भवन्—तात्पर्य्यप्रतिकूलतया योग्यतामनुपपद्यमानः। विवेचकेति।—विवेचकत्वादिः साधर्म्यं समानधर्म्मत्वं तस्य सम्बन्धस्तस्य सम्बन्धी तदभिन्नसम्बन्धवान् तं तथोक्तम्। दक्षेति।—दक्षश्चतुरस्तद्रूपमर्थं बोधयति—प्रत्याययति। तदन्ये—अस्मदादय इत्यर्थः। न मन्यन्ते—नैव स्वीकुर्व्वन्ति। कुतः? इत्याह,—कुशग्राहिरूपार्थस्येति। व्युत्पत्तिलभ्यत्वेऽपि—"कुशं लाति" इति व्युत्पत्त्या लभ्यस्तस्य भावस्तत्त्वं तस्मिन् सत्यपि। दक्षरूपस्य एव—अत्र एवशब्देन कुशग्रहणरूपार्थस्य व्यवच्छेदः, मुख्यार्थत्वात्। इदमत्र बोध्यम्;—यद्यपि "कुशति श्लेषयति आरम्भफलानि" इति व्युत्पत्त्या कुशलशब्दस्य दक्षरूपो मुख्योऽर्थस्तथाऽपि प्रौढ़वादेनेदमुक्तमिति। अत्र हेतुमाह, अन्यदिति।—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तद्भेदानाह,—

**मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये ।**
**स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा ॥ १५ ॥**

रूढ़ावुपादानलक्षणा यथा,—"श्वेतो धावति"। प्रयोजने यथा,—"कुन्ताः प्रविशन्ति"। अनयोर्हि श्वेतादिभिः कुन्ता-

---

व्युत्पत्तिलभ्यार्थप्रतीतौ प्रकारीभूतो धर्म्मः व्युत्पत्तिनिमित्तं यथा गोशब्दस्य गमनकर्तृत्वं, सङ्केतग्रहे प्रकारीभूतो धर्म्मः प्रवृत्तिनिमित्तं शक्यताऽवच्छेदकं यथा गोत्वजातिः। शब्दानां व्युत्पत्तिनिमित्तमेव प्रवृत्तिनिमित्तमिति तु न नियमः, पाचकादिशब्दस्य द्वयोरैक्यसत्त्वेऽपि गवादिशब्दस्य व्यभिचारात्। प्रकृते तु कुशग्राहित्वरूपव्युत्पत्तिनिमित्तस्यानेकपदार्थघटितत्वेन गुरुत्वात् तदपेक्ष्य लघुना दक्षत्वरूपाखण्डोपाधिनैव कुशलशब्दस्य सङ्केतग्रहः। ननु रूढ़िवत् व्युत्पत्तिरपि पदार्थोपस्थापिकेति रूढ़िविषयस्येव व्युत्पत्तिविषयस्यापि मुख्यत्वमास्तामिति चेन्न, रूढ्या प्रतिरुद्धायाः व्युत्पत्तेः पदार्थोपस्थापकत्वासम्भवात्। तदुक्तं भट्टैः,—"लब्धात्मिका सती रूढ़िर्भवेद् योगापहारिणी। कल्पनीया तु लभते नात्मानं योगबाधतः॥" इति। लब्धात्मिका—जनितपदार्थोपस्थापिका कोषपरम्पराप्रसिद्धा सती अनादिसिद्धा ; योगापहारिणी—व्युत्पत्तिलभ्यार्थस्य प्रतिबन्धिका ; कल्पनीया—लाघवप्रतिसन्धानवद्भिरिदानीन्तनैः कल्पनीया। आत्मानं—पदार्थोपस्थितिम् ; न लभते—न जनयति। योगबाधतः,—योगे बाधनात्। रूढ़ेस्तस्याः पदार्थोपस्थापकत्वस्य च कल्पनामपेक्ष्य क्लृप्तयोगस्यैव पदार्थोपस्थापकत्वमात्रं कल्प्यते इति भावः। व्युत्पत्तिलभ्यस्य मुख्यत्वस्वीकारे दोषमाह,—व्युत्पत्तिलभ्यस्येति। मुख्यार्थत्वे—मुख्यार्थत्वस्वीकारे, शयनकाले गमनकर्तृत्वरूपमुख्यार्थबाधः इति भावः। यदि पुनः उणादिप्रत्ययानां व्युत्पत्तेः प्रायिकत्वं कल्प्यते तदा "निषङ्गे सायकाः सन्ति" इत्यादौ लक्षणापत्तेर्दोषो द्रष्टव्यः। "षोऽन्तकर्मणीति" षोधातोर्ण्वुल् प्रत्ययनिष्पन्नस्य सायकशब्दस्य विनाशाभावकालेऽपि प्रयोगादिति। ये तु "कर्म्मणि कुशलः, लावण्यं, मण्डपः, कुण्डलम्, इत्यादौ दक्षत्वादेः प्रवृत्तिनिमित्तत्वात् व्युत्पत्तिनिमित्तस्य झटिति अप्रतीतेः बाधप्रतिसन्धानं विनाऽपि तत्प्रतीतेश्च 'कुशः कलच्' इति प्रत्यये कुशलपदस्य वैयाकरणैः साधनाच्च रूढ़िशक्तिरेवात्र" इति वदन्ति, तन्मते तैलपदमुदाहरणमिति बोध्यम्। तैलपदस्य तिलविकारद्रवे शक्तस्य सार्षपे निरूढ़लक्षणा इत्युद्योतकारादयः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

दिभिश्च अचेतनतया केवलैर्धावनप्रवेशनक्रिययोः कर्त्तृतयाऽन्वयमलभमानैरेतत्सिद्धये आत्मसम्बन्धिनोऽश्वादयः पुरुषादयश्चाक्षिप्यन्ते। पूर्व्वत्र प्रयोजनाभावाद्रूढ़िः। उत्तरत्र तु कुन्तादीनामतिगहनत्वं प्रयोजनम्। अत्र च मुख्यार्थस्य आत्मनोऽप्युपादानम्; लक्षणलक्षणायान्तु परस्यैव उपलक्षणमित्यनयोर्भेदः। इयमेव "अजहत्स्वार्था" इत्युच्यते। (ड)

(ड) लक्षणाया विशेषलक्षणमाह, मुख्यार्थस्येति।—'यया' इत्यध्याहार्य्यम्। मुख्यार्थस्येति तृतीयार्थे षष्ठी। "वाक्यार्थे" इत्यत्र सप्तम्यर्थो घटकत्वं, ततश्च मुख्यार्थस्य—मुख्यार्थेन; वाक्यार्थे अन्वयसिद्धयै—वाक्यार्थघटकान्वयबोधाय; यया इत्या इतरस्य—शक्यतावच्छेदकातिरिक्तधर्मावच्छिन्नस्य, आक्षेपः,—प्रत्यायनम्, एषा उपादानलक्षणा स्यात्। संज्ञाबीजमाह, आत्मनोऽपीति।—मुख्यार्थस्यापीत्यर्थः। उपादानात्—प्रत्यायनात्; मुख्यार्थविषयिणी प्रतीतिरुपादानम्। यद्वा,—उपादीयते गृह्यते मुख्यार्थोऽनेनेत्युपादानं तन्नाम्नी लक्षणा उपादानलक्षणेत्यर्थः। अत एव "उपादानं लक्षणञ्चेत्युक्ता शुद्धैव सा द्विधा" इति काव्यप्रकाशेऽप्युक्तम्। अत्र "वाक्यार्थे" इत्यनेन तात्पर्य्यविषयीभूतो वाक्यार्थो ग्राह्यः; अन्यथा इदमनर्थकम्। "छत्रिणो यान्ति" इत्यत्र छत्रिगमनकर्त्तृत्वरूपवाक्यार्थस्य घटकीभयान्वयबोधाय मुख्यार्थस्याक्षेपो युज्यते। "कदली कदली" इत्यादावुपादानलक्षणासंग्रहाय शक्यतावच्छेदकातिरिक्तेति। अत्र क्वचित् मुख्यार्थ एव धर्म्मान्तरेण प्रतीयते, यथा "कदली कदली" इत्यादौ द्वितीयकदलीपदं शैत्यरूपधर्मान्तरेण कदलीमेव बोधयति। क्वचित् मुख्यार्थस्तद्भिन्नश्च धर्मान्तरेण प्रतीयते; यथा,—"काकेभ्यो दधि रक्ष्यताम्" इत्यत्र काकपदेनान्नोपघातकत्वेन काककुक्कुरमार्जारा लक्ष्यन्ते। अत्र प्रयोजनाभावात् रूढ़िः। "छत्रिणो यान्ति" इत्यादौ छत्रिसार्थवाहित्वेन छत्रिणस्तद्भिन्नाश्च प्रतीयन्ते। छत्रिणां बाहुल्यमत्र प्रयोजनम्। क्वचिच्च मुख्यार्थांविशिष्टः प्रतीयते, यथा,—"श्वेतो धावति" "कुन्ताः प्रविशन्ति" इति। उक्तोदाहरणयोर्लक्षणं सङ्गमयति,—अनयोर्हीति।—"श्वेतो धावति" इत्यत्र "कुन्ताः प्रविशन्ति" इत्यत्र चेत्यर्थः। एतदुपलक्षणम्; तथा च, एवमन्यत्रापीत्यर्थः। अत एवाह,—'श्वेतादिभिः' 'कुन्तादिभिश्च' इति। अत्रादिपदोपादानं बहुवचनञ्च सङ्गच्छते। धावनादिप्रवेशनादिकर्त्तृतयाऽभिमतैः श्वेतादिपदैः कुन्तादिपदैश्चेत्यर्थः। अचेतनतया—जड़तया। केवलैः,—परानन्वितैः; अत एव धावनप्रवेशनक्रिययोरुपलक्षणेन धावनादिक्रियायां प्रवेशनादिक्रियायाञ्च कर्त्तृतयाऽन्वयम् अलभ-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये।
उपलक्षणहेतुत्वादेषा लक्षणलक्षणा ॥ १६ ॥ (ढ)

रूढ़िप्रयोजनयोर्लक्षणलक्षणा यथा,—"कलिङ्गः साहसिकः" इति "गङ्गायां घोषः" इति च। अनयोर्हि पुरुषतटयोर्वाक्यार्थेऽन्वयसिद्धये कलिङ्गगङ्गाशब्दावात्मानमर्पयतः। यथा वा,—

"उपकृतं बहु तत्र किमुच्यते
सुजनता प्रथिता भवता परम्।
विदधदीदृशमेव सदा सखे!
सुखितमास्स्व ततः शरदां शतम् ॥" (ण)

---

मानैः। एतत्सिद्धये—धावनादिप्रवेशनादिकर्तृत्वान्वयबोधाय। आत्मसम्बन्धिनः इति। —यथायथं समवायिनः स्वसंयोगिनश्चेत्यर्थः। अश्वादयः पुरुषादयश्च आक्षिप्यन्ते—प्रत्याय्यन्ते। पूर्वत्र—पूर्वस्मिन्, पूर्वमुदाहृते 'श्वेतो धावति' इत्यादावित्ति यावत्। प्रयोजनेति।—प्रयोजनस्य प्रयोजनीभूतज्ञानविषयस्य अभावो विरहोऽसम्भवो वा तस्मात् तथोक्तात्। रूढ़िः,—रूढ़िमूला लक्षणेत्यर्थः। उत्तरत्र—'कुन्ताः प्रविशन्ति' इत्यादावित्यर्थः, कुन्तादीनामतिगहनत्वं प्रयोजनं—प्रयोजनीभूतज्ञानविषयः; अत्रोति शेषः। अत्र—'श्वेतो धावति' 'कुन्ताः प्रविशन्ति' इत्यादावित्यर्थः। मुख्यार्थस्य—श्वेतादिरूपस्य कुन्तादिरूपस्य चेत्यर्थः। आत्मनः,—आत्मभूतस्यापि; उपादानं—ग्रहणम्। लक्षणलक्षणायाञ्च परस्य—स्वसंसर्गिणः एव, न तु स्वात्मन इत्येवम्, अनयोः,—उपादानलक्षणाया लक्षणलक्षणायाश्च भेदः। अस्याः संज्ञान्तरमाह,—इयमेवेति। अजहदत्यजन् स्वार्थौ मुख्यार्थौ यामिति अजहत्स्वार्था।

(ढ) लक्षणलक्षणामाह, अर्पणमिति।—वाक्यार्थे परस्यैव—मुख्यार्थभिन्नस्यैव, अन्वयसिद्धये स्वस्य अर्पणं—स्वार्थपरित्याग इत्यर्थः, यथा भवतीति शेषः, उपलक्षणहेतुत्वात्—मुख्यार्थातिविषयिण्याः प्रतीतेः, एषा लक्षणलक्षणा।

(ण) उपकृतमिति।—हे सखे! भवता बहु बहुलं यथा स्यात् तथेत्यर्थः, [उपकृतमिति क्रियाया विशेषणमिदम्] उपकृतं मम अनिष्टजातनिवृत्तये इष्टार्थसम्पत्तये च यतितमित्यर्थः, तत्र तस्मिन् उपकारविषये इत्यर्थः किमुच्यते? तत्र किमपि कथनीयं नावशिष्यत इति भावः, भवता परम् अत्यर्थं सुजनता सौजन्यं प्रथिता प्रकटिता; अनुपकारिण्योऽपि मम यत् बहु उपकृतं तत् तव सज्जनत्वमिति

अत्र अपकारादीनां वाक्यार्थेऽन्वयसिद्धये उपकृतादयः शब्दा आत्मानमर्पयन्ति । अत्र अपकारिणं प्रत्युपकारादिप्रतिपादनान्मुख्यार्थबाधः ; वैपरीत्यलक्षणः सम्बन्धः ; फलमप्यपकारातिशयः । इयमेव "जहत्स्वार्था" इत्युच्यते । (त)

**आरोपाध्यवसानाभ्यां प्रत्येकं ता अपि द्विधा॥१७॥ (थ)**

ताः,—पूर्वोक्ताश्चतुर्भेदलक्षणाः ।

**विषयस्यानिगीर्णस्यान्यतादात्म्यप्रतीतिकृत् ।**
**सारोपा स्यान्निगीर्णस्य मता साध्यवसानिका॥१८॥(द)**

---

वाक्यार्थः ; अतः हे सखे ! सदा ईदृशमेव सौजन्यमिति शेषः, विदधत् कुर्वन् ततः तस्मात्, तथोपकारविधानेन सौजन्यप्रकटनाद्धेतोरित्यर्थः, शरदां वत्सराणां ('शरद् स्त्री वत्सरेऽप्यृतौ' इति मेदिनी) शतं शतवत्सरपर्य्यन्तमिति यावत्, आस्स्व तिष्ठ, जीवेति यावत् । अत्यन्तापकारिणं प्रत्युक्तिरियम् । द्रुतविलम्बितं वृत्तम् ।

(त) अत्र अपकारादीनां—प्रकृतानामिति भावः, वाक्यार्थे—वक्तृतात्पर्य्यविषये इति भावः । उपकृतादयः आत्मानमर्पयन्ति—स्वार्थं परित्यज्य विपरीतमर्थमपकृतादिकं लक्षयन्तीत्यर्थः । फलं—प्रयोजनम् । अपकारातिशयः,—अपकारबाहुल्यम् । जहत्स्वार्थेति—जहत् स्वार्थो यां सा ।

(थ) इत्थं लक्षणाया द्वौ भेदावुक्त्वा पुनस्तयोरपि प्रत्येकं द्वैविध्यमाह, आरोपेति ।—ताः,—पूर्वोक्ताश्चतुर्भेदाः, चातुर्विध्यञ्च रूढ़िप्रयोजनाभ्याम् उपादानोपलक्षणाभ्याञ्चेति बोध्यम् । आरोपः,—आहार्य्याभेदप्रतीतिः, अध्यवसानं—सिद्धाभेदप्रतीतिः, ताभ्यां प्रत्येकं द्विधा, ततश्च सारोपा रूढ़िहेतुका उपादानलक्षणा, सारोपा रूढ़िहेतुका लक्षणलक्षणा, सारोपा फलहेतुका उपादानलक्षणा, सारोपा फलहेतुका लक्षणलक्षणा, साध्यवसाना रूढ़िहेतुका उपादानलक्षणा, साध्यवसाना रूढ़िहेतुका लक्षणलक्षणा, साध्यवसाना फलहेतुका उपादानलक्षणा, साध्यवसाना फलहेतुका लक्षणलक्षणा, इत्यष्टभेदा लक्षणा इत्यर्थः ।

(द) सारोपां साध्यवसानाञ्चाह, विषयस्येति ।—अनिगीर्णस्य शाब्दस्य, विषयस्य लक्ष्यस्य या अन्येन मुख्यार्थेन तादात्म्यप्रतीतिम् अभेदप्रतिपत्तिं करोति सा तथोक्ता सारोपा । या च निगीर्णस्य आर्थस्य, अन्यतादात्म्यप्रतीतिकृत् सा साध्यवसाना । मता—कथिता ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विषयिणा अनिगीर्णस्य विषयस्य तेनैव सह तादात्म्य-प्रतीतिकृत् सारोपा। इयमेव रूपकालङ्कारस्य वीजम्। रूढ़ौ उपादानलक्षणा सारोपा यथा,—"अश्वः श्वेतो धावति"। अत्र हि श्वेतगुणवान् अश्वोऽनिगीर्णस्वरूपः स्वसमवेतश्वेतगुण-तादात्म्येन प्रतीयते। प्रयोजने यथा,—"एते कुन्ताः प्रविशन्ति", अत्र सर्वनाम्ना कुन्तधारिपुरुषनिर्देशात् सारोप-त्वम्। रूढ़ौ लक्षणलक्षणा सारोपा यथा,—"कलिङ्गः पुरुषो युध्यते", अत्र पुरुषकलिङ्गशब्दयोराधाराधेयभावः सम्बन्धः। प्रयोजने यथा,—"आयुर्घृतम्", अत्र आयुष्कारणमपि घृतं कार्य्यकारणभावसम्बन्धसम्बन्ध्यायुस्तादात्म्येन प्रतीयते। अन्य-वैलक्षण्येनापि अव्यभिचारेण आयुष्करत्वं प्रयोजनम्।

यथा वा,—राजकीये पुरुषे गच्छति "राजाऽसौ गच्छति" इति। अत्र स्वस्वामिभावलक्षणः सम्बन्धः। यथा वा,—अग्र-मात्रेऽवयवभागे "हस्तोऽयम्", अत्र अवयवावयविभावलक्षणः सम्बन्धः। "ब्राह्मणोऽपि तक्षासौ", अत्र तात्कर्म्यलक्षणः सम्बन्धः। "इन्द्रार्थासु स्थूणासु अमी इन्द्राः", अत्र तादर्थ्य-लक्षणः सम्बन्धः। एवमन्यत्रापि। निगीर्णस्य पुनर्विषयस्य अन्यतादात्म्यप्रतीतिकृत् साध्यवसाना। अस्याश्चतुर्षु भेदेषु पूर्वोदाहरणान्येव। (ध)

---

(ध) उदाहरति, रूढ़ावित्यादि।—रूढ़ौ सत्यां सारोपा उपादानलक्षणा यथा—"अश्वः श्वेतो धावति" इत्यत्रेत्यर्थः। हि—यतः; ("हि हेताववधारे" इत्यमरः)। अत्र—"अश्वः श्वेतो धावति" इत्यत्रेत्यर्थः। "श्वेतो धावति" इत्यत्र यथा "श्वेतः" इति पदेन निगीर्णः, तथा अश्वः न निगीर्णः स्ववाचकशब्देनोपलब्धशरीरत्वात्, किन्तु स्वस्मिन् (अश्वे) समवेतः समवायसम्बन्धेन वर्त्तमानो यः श्वेतगुणः तेन तादात्म्यमभेदस्तेन प्रतीयते इति भावः। प्रयोजने यथा इति।—प्रयोजने सति सारोपोपादानलक्षणा यथेत्यर्थः। एते कुन्ताः,—भल्लापरनामानः शस्त्रविशेषाः। प्रविशन्ति—दुर्गं इति शेषः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**साद्दश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि।**
**साद्दश्यात्तु मता गौण्यस्तेन षोड़शभेदिताः ॥१९॥(न)**

ताः,—पूर्वोक्ता अष्टभेदा लक्षणाः। साद्दश्येतरसम्बन्धाः,—कार्य्यकारणभावादयः। अत्र शुद्धानां पूर्वोदाहरणान्येव। रूढ़ावुपादानलक्षणा सारोपा गौणी यथा,—"एतानि तैलानि हेमन्ते सुखानि"। अत्र तैलशब्दस्तिलभवस्नेहरूपं मुख्यार्थमुपादायैव सार्षपादिस्नेहेषु वर्त्तते। प्रयोजने यथा,—राजकुमारेषु तत्सद्दशेषु च गच्छत्सु "एते राजकुमाराः गच्छन्ति"। रूढ़ावुपादानलक्षणा साध्यवसाना गौणी यथा,—"तैलानि हेमन्ते सुखानि"। प्रयोजने यथा,—"राजकुमाराः गच्छन्ति"। रूढ़ौ लक्षणलक्षणा सारोपा गौणी यथा,—

---

अत्र सर्व्वनाम्ना—"एते" इत्यनेनेत्यर्थः। कुन्तेति।—कुन्तधारिणो ये पुरुषास्तेषां निर्द्देशस्तस्मात् तं निमित्तीकृत्येत्यर्थः; सारोपत्वम्। अत्र धार्य्यधारकः सम्बन्धः। "राजासौ गच्छति" इत्यत्र राजवत् परिच्छदाद्यतिशयबोधनं प्रयोजनम्। अवयवभागे—तत्स्वरूपभूते। अग्रमात्रे अग्रहस्ते इति वक्तव्ये इति शेषः। 'अयं हस्तः' इति हस्तशब्दो लाक्षणिकः। हस्तावयवेन हस्तव्यापारं सम्पादयतीति पराक्रमातिशयः प्रयोजनं व्यज्यते। अत्र तथा—प्रयोगप्राचुर्य्यमिति रूढ़िरित्यवगन्तव्यम्। "तक्षासौ" इत्यत्र तत्कर्मनैपुण्यातिशयः प्रयोजनम्। इन्द्रार्थासु—इन्द्राराधनार्थं निर्म्मितासु। स्थूणासु—स्तम्भविशेषेषु। अत्र इन्द्रवत् पूज्यत्वरूपं प्रयोजनम्। पूर्वोदाहरणानि—'श्वेतो धावति' 'घृतमानय' इत्यादीनि।

(न) एवं लक्षणाया अष्टविधत्वमुक्त्वा पुनर्द्वैविध्यमाह, साद्दश्येति।—ताः,—उक्तरूपाः। सकलाः,—अष्टभेदा अपि लक्षणाः। साद्दश्येति।—साद्दश्यादितरे भिन्नाः सम्बन्धाः हेतवो यासां ताः साद्दश्येतरसम्बन्धाः साद्दश्यभिन्नसम्बन्धवत्यः इत्यर्थः। शुद्धाः,—शुद्धाभिधेयाः। साद्दश्यात् सम्बन्धादिति शेषः, तु गौण्यः मताः कथिताः। याः साद्दश्यसम्बन्धहेतुका न भवन्ति ताः शुद्धाः, अन्याः पुनर्गौण्यः इति निर्गलितोऽर्थः। तेन—हेतुना। लक्षणाः षोड़शभेदिताः,—षोड़शभेदा जाता यासां ताः तथोक्ताः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"राजा गौड़ेन्द्रः कण्टकं शोधयति"। (प) प्रयोजने यथा,—"गौर्वाहीकः"। रूढ़ौ लक्षणलक्षणा साध्यवसाना गौणी यथा,—"राजा कण्टकं शोधयति"। प्रयोजने यथा,—"गौर्जल्पति"। (फ)

अत्र केचिदाहुः,—"गोसहचारिणो गुणा जड्यमान्द्यादयो लक्ष्यन्ते। ते च गोशब्दस्य वाहीकार्थाभिधाने निमित्ती-भवन्ति" इति। तदयुक्तम्; गोशब्दस्यागृहीतसङ्केतं वाहीकार्थ-मभिधातुमसामर्थ्याद् गोशब्दार्थमात्रबोधनाच्च। अभिधायाः विरतत्वात्, विरतायाश्च पुनरुत्थानाभावात्।

अन्ये च पुनः "गोशब्देन वाहीकार्थो नाभिधीयते; किन्तु स्वार्थसहचारिगुणसाजात्येन वाहीकार्थगता गुणा एव लक्ष्यन्ते"। तदपि अन्ये न मन्यन्ते, तथाहि,—अत्र गो-शब्दाद्वाहीकार्थः प्रतीयते न वा? आद्येऽपि गोशब्दादेव वा, तल्लक्षिताद्वा गुणात् अविनाभावद्वारा? तत्र न प्रथमः, वाहीकार्थेऽस्यासङ्केतितत्वात्। न द्वितीयः, अविनाभाव-लभ्यस्यार्थस्य शाब्देऽन्वये प्रवेशासम्भवात्, शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्य्यते। न द्वितीयः; यदि हि गोशब्दाद्वाहीकार्थो न प्रतीयते तदाऽस्य वाहीकशब्दस्य च सामानाधिकरण्यमसम-

(प) पूर्वोदाहरणानीति।—"अश्वः श्वेती धावति" इत्यादीन्युदाहरणा-नीत्यर्थः। राजेति।—राजा गौड़ेन्द्रः,—गौड़स्य तन्नाम्ना प्रसिद्धस्य देशस्येन्द्रो राजेति तथोक्तः। कण्टकं—क्षुद्रशत्रुम्। शोधयति—उद्धरति, निर्वैरं करोतीत्यर्थः। अत्र तीक्ष्णाग्रवृक्षाङ्गविशेषः कण्टकपदस्य मुख्यार्थः, तस्य शोधनासम्भवात् दुःखदत्वे तत्सदृशे क्षुद्रशत्रौ लक्षणा वर्त्तते। यत्तु—"क्षुद्रशत्रौ च कण्टकम्" इत्यभिधानं, तत् निरूढ़लक्षणाया ग्राहकं, न त्वभिधाया इति विभाव्यम्।

(फ) "गौर्वाहीकः" इति।—वाहीकः,—हलवाहकः। अत्र जड़त्वादिसाधर्म्यं सम्बन्धः। जड़त्वाद्यतिशयबोधनं प्रयोजनम्। गौर्जल्पति व्यक्तमुच्चरति गोर्व्यक्तोच्चारणं न सम्भवति, तस्मात् तत्साधर्म्यसम्बन्धी वाहीको लक्ष्यते।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ज्ञत्वं स्यात्। तस्मादत्र गोशब्दो मुख्यया वृत्त्या वाहीकशब्देन सह अन्वयमलभमानोऽज्ञत्वादिसाधर्म्यसम्बन्धाद्वाहीकार्थं लक्षयति। वाहीकस्याज्ञत्वाद्यतिशयबोधनं प्रयोजनम्। (व)

इयञ्च गुणयोगात् "गौणी" इत्युच्यते। पूर्वा तु उपचारा-

(व) अत्रेति।—"गौर्जल्पति" इत्यत्रेत्यर्थः। केचित्—अयथार्थज्ञाः इत्यर्थः। किमित्यपेक्षायामाह, गोसहचारिणः इति।—गोस्थायिनः इत्यर्थः। जाड्येति।—जाड्यं जड़त्वं, मान्द्यम् अपाटवं तदादयः तत्प्रभृतयः। गुणाः,—धर्म्माः। लक्ष्यन्ते—लक्षणया प्रतिपाद्यन्ते। ते—गुणाः। गोशब्दस्य—गोपदस्य। वाहिकार्थेति।—वाहीकार्थस्य अभिधाने अभिधया प्रतिपादने। निमित्तीभवन्ति—हेतुतामापद्यन्ते इति। तत् अयुक्तं —न युक्तं, युक्त्यासङ्गतमिति यावत्। तत्र हेतुमाह, अगृहीतेति।—न गृहीतः सङ्केतो येन तमगृहीतसङ्केतं वाहीकार्थम्; अभिधातुम्—अभिधया बोधयितुम्। गोशब्दस्यासामर्थ्यात्—सामर्थ्याभावात्। गोशब्देति।—गोशब्दार्थं एवेति गोशब्दार्थमात्रं, तस्य बोधनं बोधकत्वं तस्माच्चेत्यर्थः। अभिधायाः,—गोशब्देन तत्सङ्केतितमर्थं बोधयित्वेति शेषः। विरतत्वात्—गतशक्तित्वादित्यर्थः, "सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति" इति न्यायादिति भावः। विरतायाश्च—स्वव्यापारं प्रदर्श्य निवृत्ताया अभिधायाश्चेत्यर्थः, शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभावः इति न्यायादिति भावः। ननु श्लेषादावस्य नियमस्य व्यभिचारो दृश्यते, तत्र अनेकार्थस्य अभिधया प्रतिपादनादिति चेन्न, तत्र युगपदेव अनेकार्थानाम् अभिधया प्रतिपादनम्; इह तु प्रथमं गोशब्देन पशुमात्रबोधः, ततश्चान्वयानुपपत्तौ वाहीकार्थप्रतीतिरिति ध्येयम्। स्वार्थेति।—स्वार्थस्य गोःपदार्थस्य, गोत्वस्येत्यर्थः, सहचारिणो ये गुणाः जाड्यमान्द्यादयः, तत्सजातीयेन तत्समानजातित्वेन; वाहीकार्थगता गुणाः,—जाड्यमान्द्यादय इत्यर्थः। लक्ष्यन्ते—लक्षणाजन्यबोधविषयीक्रियन्ते। लक्षितात्—लक्षणाजन्यबोधविषयात्। गुणात्—जाड्यमान्द्यादेरित्यर्थः। अविनाभावेति।—अविनाभावः आक्षेपः, तद्द्वारा तेनेत्यर्थः। अविनाभावलभ्यस्य—आक्षेपलभ्यस्य अर्थस्य। शाब्देऽन्वये—शाब्दबोधे इत्यर्थः। प्रवेशासम्भवात्—अन्तर्भावासम्भवात्; शब्दप्रतिपाद्यानामेव शाब्दबोधो भवतीति भावः। शाब्दी—शाब्दबोधविषयिणी। आकाङ्क्षा—इच्छा। शब्देनैव—न तु आक्षेपेणेति भावः। प्रपूर्य्यते—पूरणं क्रियते। सामानाधिकरण्यम्—अभेदान्वय इत्यर्थः। स्वमतमाविष्करोति, तस्मादिति।—उक्तमतानां दोषकवलितत्वादित्यर्थः। वृत्त्या—शक्त्या, अभिधया इत्यर्थः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मिश्रणात् शुद्धा। उपचारो हि नामात्यन्तं विशकलितयोः शब्दयोः सादृश्यातिशयमहिम्ना भेदप्रतीतिस्थगनमात्रम्। यथा,—"अग्निर्माणवकयोः"। शुक्लपटयोस्तु नात्यन्तभेदप्रतीतिः। तस्मादेवमादिषु शुद्धैव लक्षणा।

**व्यङ्ग्यस्य गूढागूढत्वाद् द्विधा स्युः फललक्षणाः ॥२०॥**

प्रयोजने अष्टभेदा लक्षणा दर्शिताः, ताः प्रयोजनरूपव्यङ्ग्यस्य गूढागूढतया प्रत्येकं द्विधा भूत्वा षोड़शभेदाः। तत्र गूढः,—काव्यार्थभावनापरिपक्वबुद्धिविभवमात्रवेद्यः ; यथा,—"उपकृतं बहु तत्र" इति। अगूढः,—अतिस्पष्टतया सर्वजनसंवेद्यः ; यथा,—

"उपदिशति कामिनीनां यौवनमद एव ललितानि"।

अत्र "उपदिशति" इत्यनेन "आविष्करोति" इति लक्ष्यते। आविष्कारातिशयश्चाभिधेयवत् स्फुटं प्रतीयते। (भ)

---

(भ) या गौणी लक्षणा उक्ता तदर्थमाह, इयञ्चेति।—गौणीलक्षणेत्यर्थः। गुणयोगात्—वाच्यलक्ष्ययोः सादृश्यात्मकः सम्बन्धः गुणः, तद्योगात् तत्सद्भावात् गौणीत्यर्थः। [व्युत्पत्तिश्चेयं गुणेभ्य आगतेति गौणी "तत आगतः" (४।३।७४ पा०) इत्यण्। "टिड्ढाणञ्—" (४।१।१५ पा०) इति ङीप्। पूर्वा—असादृश्यमूला लक्षणा इत्यर्थः। उपचारामिश्रणात्—सादृश्याधीनारोपायोगात्, शुद्धा। विशकलितयोः,—विभिन्नयोः। भेदप्रतीतिस्थगनमात्रं—भेदज्ञानतिरोधानमेव। यथा, "अग्निर्माणवकः" इति।—माणवकः,—नवोपनीतः ब्रह्मचारीत्यर्थः, अग्निः। तयोः साम्प्रतं फललक्षणायाः पुनर्भेदं दर्शयति,—व्यङ्ग्यस्येति। उपदिशतीत्यादि।—"श्रीपरिचयाज्जड़ा अपि भवन्त्यभिज्ञा विदग्धचरितानाम्" इत्यस्य पूर्वार्द्धम्। तदयमर्थः,—जड़ाः अनभिज्ञा अपि श्रीपरिचयात् सम्पत्संयोगात् विदग्धचरितानां विदग्धाश्चतुरास्तेषां चरितानि व्यवहारास्तेषाम् अभिज्ञा भवन्ति। ("विदग्धश्चतुरे दग्धे" इति गोपालः।) कामिनीनां यौवनमद एव ललितानि लीलाविलासादीनि उपदिशति कर्त्तव्यतया आविष्करोतीत्यर्थः। अत्र "उपदिशति" इत्यनेन क्रियापदेनेति शेषः। आविष्करोति प्रकटयतीति लक्ष्यते। अयं भावः,—उपदेशस्य अचेतने यौवनमदे अ-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

धर्मिधर्मगतत्वेन फलस्यैता अपि द्विधा ॥ २१ ॥

एताः,—अनन्तरोक्ताः षोड़शभेदा लक्षणाः। फलस्य धर्मिगतत्वेन धर्मगतत्वेन च प्रत्येकं द्विधा भूत्वा द्वात्रिंशद्भेदाः। (म) दिङ्मात्रं यथा,—

"स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः,
वाताः शीकरिणः, पयोदसुहृदामानन्दकेकाः कलाः।
कामं सन्तु, दृढ़ं कठोरहृदयो रामोऽस्मि, सर्वं सहे,
वैदेही तु कथं भविष्यति हहा! हा देवि! धीरा भव॥"

अत्रात्यन्तदुःखसहिष्णुरूपे रामे धर्मिणि लक्ष्ये तस्यैवातिशयः फलम्। "गङ्गायां घोषः" इत्यत्र तटे शीतत्वपावनत्वादिरूपधर्मस्यातिशयः फलम्। (य)

---

भवात् मुख्यार्थबाधः, तस्मात् उपदेशशब्देन आविष्काररूपार्थो लक्ष्यते इति। तदेवं अष्टभेदाः फललक्षणाः षोड़शभेदा भवन्ति, रूढ़िलक्षणास्तु अष्टभेदा इति मिलित्वा चतुर्विंशतिभेदा लक्षणा बोध्याः।

(म) पुनश्च फललक्षणाभेदमाह, धर्मीति।—एवाः,—पूर्वोक्ताः फललक्षणाः षोड़शभेदाः फलस्य धर्मिधर्मगतत्वेन द्विधा भवन्तीति द्वात्रिंशद्भेदाः। तदेव फललक्षणा द्वात्रिंशद्भेदाः रूढ़िलक्षणाश्चाष्टौ मिलित्वा चत्वारिंशत्प्रकाराः लक्षणा बोद्धव्याः।

(य) स्निग्धेति।—सीताविरहे वर्षासु तात्कालिकं दृश्यं पश्यतो रामस्येयमुक्तिः। स्निग्धा सलिलवत्त्वात् सरसाऽसौ श्यामला मनोरमश्यामेत्यर्थः, तादृशी या कान्तिर्वर्णविभाविभवस्तया लिप्तं कृतलेपमुपचारात्तद्वत् अत्यन्तमाच्छुरितं वियत् आकाशं यैस्ते तथोक्ताः। ("वियद्विष्णुपदं वाऽपि पुंस्याकाशविहायसी" इत्यमरः) वेल्लन्त्यः (परभागवशात्) व्याजृम्भमाणाः (प्रहर्षवशात्) अथ च चलन्त्यो बलाकाः बकपङ्क्तयो येषु ते तथाभूताः, सञ्चरद्बकविशेषा इत्यर्थः, ("बलाका बकपङ्क्तिः स्यात्" इति कोषः) घनाः मेघाः, [एतेनाकाशस्य दुष्प्रेक्ष्यत्वं दिशामपि दुर्दर्शत्वं दुःसहत्वञ्च सूचितम्] तथा शीकराः अम्बुकणाः सन्त्येष्विति शीकरिणः, ("शीकरोऽम्बुकणाः स्मृताः" इत्यमरः) वाताः सञ्चरन्तीति शेषः। [अत्र च बहुवचनेन वायूनाम् अनियतदिग्गमनमभिव्यज्यते]। एवं सति तर्हि गिरिकन्दरेषु क्वापि निलीयास्यतामित्याह—पयोदः जलवर्षणपरः जलधरः, सुहृत् प्रावृट्काले आह्लादवर्द्धकतया



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**तदेवं लक्षणाभेदाश्चत्वारिंशन्मता बुधैः ॥२२॥ (र)**

**रूढ़ावष्टौ, फले द्वात्रिंशदिति चत्वारिंशल्लक्षणाभेदाः।**

**किञ्च,—**

---

मिवं येषां तेषां तथोक्तानाम् मयूराणामिति भावः, कलाः अस्फुटमधुराः, आनन्दस्य केका आनन्दवशादुच्चार्यमाणा केकाः इत्यर्थः ; ("केका वाणीमयूराणाम्" इत्यमरः)। एताश्च दुःसहं जलदव्यापारं स्मृतिपथमानयन्ति, स्वयञ्च दुःश्रवणा इति भावः। एवञ्च रतेरन्योऽन्याधिष्ठितत्वादुद्दीपनविभावसूचितो विप्रलम्भ इति ध्येयम्। विभावानां साधारण्यमभिधाय प्राणवल्लभासुरस्याधाय निजवृत्तान्तमाह,—कामं यथेष्टम् सन्तु वर्त्तन्ताम्। दृढ़ं सातिशयं कठोरमनवरतमनर्थपरम्पराणां सहनकर्त्तृतयाऽभेद्य हृदयं यस्य स तथोक्तः, रामः अस्मि अहमित्यर्थः। अस्मीति अहमित्यर्थेऽव्ययम्। अत्र रामशब्दार्थध्वनिविशेषोद्बोधनाय 'कठोरहृदयः' इति विशेष्याभिधानम्। अन्यथा रामपदं रघुकुलोत्पन्नत्वकौशल्यास्नेहाधारत्वबाललीलाचरितमैथिलीप्राप्त्यादिप्रयोजनान्तरपरिणतमर्थं कथं न ध्वनयेत्। तथा च स एवाहं रामः सकलानर्थपात्रतया प्रसिद्ध इति भावः। सर्वं कथितमुद्दीपकातिशयजनितं क्लेशमिति भावः, सहे। वैदेही जानकी पुनः कथं भविष्यति ? सामान्याभिप्रायेणैतत्, तेन कथञ्च करिष्यतीति लभ्यम्। अथ च भवनमेव एतस्या असम्भाव्यमित्युक्तप्रकारेण हृदिस्थापितां सीतां संस्मरणादिना प्रत्यक्षीकारिताम् उरोविदारणोन्मुखीं सोद्वेगमाह, हहा हा इति।—निपातसमुच्चयोऽयं खेदातिशयार्थः। हे देवि ! दिव्यस्वभावतया गम्भीरत्वादिशालिनीत्यर्थः। सीते ! धीरा धैर्यशालिनी भव मदन्तरेणास्मिन् समये नोत्कण्ठिता भव इति भावः। अत्र शार्दूलविक्रीड़ितं वृत्तम्।

अत्र—उदाहृते पद्ये। अत्यन्तदुःखसहिष्णुरूपे रामे धर्म्मिणि, लक्ष्ये—लक्षणया बोध्ये, तस्य—अत्यन्तदुःखसहिष्णुत्वस्यैव, अतिशयोत्कर्षद्योतनं फलम्। अयं भावः,—अत्र रामस्य वक्तृतयैव 'सहे' इति क्रियापदसन्निधाने 'रामः' इति पदार्थोऽपि 'कठोरहृदयः' इति विशेषणविशेषितो रामपदार्थः 'अत्यन्तदुःखसहिष्णुरामः' इति लक्ष्यते। इति। एतच्च उपलक्षणम् ; तथा च तरलपदार्थयोगविशेषस्य लेपनस्यामूर्त्ते आकाशे विकाशस्य बाधदर्शनात् अचेतने जलदे हृदयाचारविशेषस्य सौहार्दस्य बाधाच्चोभयत्राप्येषैव इति बोध्यम्।

(र) उपसंहरति, तदेवमिति।—तत्—तस्मात्, एवं प्रकारेणेत्यर्थः ; बुधैः—विद्वद्भिः ; चत्वारिंशत् लक्षणाभेदाः। मताः,—कथिताः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**पदवाक्यगतत्वेन प्रत्येकं ता अपि द्विधा ॥२३॥(ल)**

ताः,—अनन्तरोक्ताश्चत्वारिंशद्भेदाः। तत्र पदगतत्वेन यथा, —"गङ्गायां घोषः" इति। वाक्यगतत्वेन यथा,—"उपकृतं बहु तत्र" इति। एवमशीतिप्रकारा लक्षणा।

---

(ल) पुनश्च सर्वासामेव भेदं दर्शयति, पदेति।—ताः,—चत्वारिंशद्भेदा अपि लक्षणाः। पदवाक्यगतत्वेन—पदगतत्वेन वाक्यगतत्वेन च इत्यर्थः; प्रत्येकं द्विधा भवन्तीति शेषः। तदेवं मिलित्वा अशीतिप्रकारा लक्षणाः। कोमलमतीनां त्वरितावबोधनार्थं लक्षणायाः अशीतिभेदाः विन्यस्यन्ते। यथा;—(१) सारोपा उपादानलक्षणा रूढ़िविषया,—'अश्वः श्वेतो धावति'। (२) सारोपा उपादानलक्षणा प्रयोजनविषया,—'एते कुन्ताः प्रविशन्ति'। (३) सारोपा लक्षणलक्षणा रूढ़िविषया,—'कलिङ्गः पुरुषो युध्यते'। (४) सारोपा लक्षणलक्षणा प्रयोजनविषया,—'आयुर्घृतम्'। (५) साध्यवसाना उपादानलक्षणा रूढ़िविषया,—'श्वेतो धावति'। (६) साध्यवसाना उपादानलक्षणा प्रयोजनविषया,—'कुन्ताः प्रविशन्ति'। (७) साध्यवसाना लक्षणलक्षणा रूढ़िविषया,—'कलिङ्गः साहसिकः'। (८) साध्यवसाना लक्षणलक्षणा प्रयोजनविषया,—'गङ्गायां घोषः'। (९) गौणी सारोपा उपादानलक्षणा रूढ़िविषया,—'एतानि तैलानि हेमन्ते सुखानि'। (१०) गौणी सारोपा उपादानलक्षणा प्रयोजनविषया,—'एते राजकुमारा गच्छन्ति'। (११) गौणी सारोपा लक्षणलक्षणा रूढ़िविषया,—'राजा गौड़ेन्द्रः कण्टकं शोधयति'। (१२) गौणी सारोपा लक्षणलक्षणा प्रयोजनविषया,—'गौर्वाहीकः'। (१३) गौणी साध्यवसाना उपादानलक्षणा रूढ़िविषया,—'तैलानि हेमन्ते सुखानि'। (१४) गौणी साध्यवसाना उपादानलक्षणा प्रयोजनविषया,—'राजकुमाराः गच्छन्ति'। (१५) गौणी साध्यवसाना लक्षणलक्षणा रूढ़िविषया,—'राजा कण्टकं शोधयति'। (१६) गौणी साध्यवसाना लक्षणलक्षणा प्रयोजनविषया,—'गौर्जल्पति'। अत्राष्टप्रकारा प्रयोजनलक्षणा व्यङ्ग्यस्य गूढ़ाऽगूढ़त्वात् हेतोः षोड़शधा भवति। षोड़शप्रकारा च सा धर्म्मिधर्म्मगतभेदेन द्वात्रिंशत्प्रकारा भवति; तथाविधा चेयं रूढ़िलक्षणाभिरष्टाभिः सार्कं चत्वारिंशद्विधा सम्पद्यते; अथ प्रत्येकं पदवाक्यगतत्वेन द्विधा भूत्वा अशीतिप्रकारा जायते इति सङ्क्षेपः।

...Jangamwadi Math, Varanasi
Acc. No. ...... 5306......
CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ व्यञ्जना,—

**विरतास्वभिधाद्यासु ययाऽर्थो बोध्यतेऽपरः ।**
**सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च॥२४॥(व)**

"शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभावः" इति नयेनाभिधालक्षणातात्पर्य्याख्यासु तिसृषु वृत्तिषु स्वं स्वमर्थं बोधयित्वा उपक्षीणासु यया अपरः अन्योऽर्थो बोध्यते सा शब्दस्यार्थस्य प्रकृतिप्रत्ययादेश्च वृत्तिर्व्यञ्जनध्वननगमनप्रत्यायनादिव्यपदेशविषया व्यञ्जना नाम । (श) तत्र,—

**अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा॥२५॥(ष)**

अभिधामूलामाह,—

**अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते ।**
**एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साभिधाश्रया ॥२६॥ (स)**

---

(व) व्यञ्जनां निरूपयति, अथेति ।—अथ लक्षणानिरूपणात् परमित्यर्थः । अभिधाद्यासु—अभिधालक्षणातात्पर्य्याख्यासु तिसृषु वृत्तिषु । विरतासु—निवृत्तव्यापारासु सतीषु । यया—वृत्त्या । अपरः,—वाच्यलक्ष्यतात्पर्य्यार्थेभ्यः भिन्नः अर्थः । बोध्यते—प्रत्याय्यते । सा शब्दस्य अर्थादिकस्य च—वाच्यादेः प्रकृतिप्रत्ययादेश्च । वृत्तिः,—व्यापारविशेषः, व्यञ्जना ।

(श) व्यञ्जनेति ।—व्यञ्जनं ध्वननं गमनं प्रत्यायनञ्च आदि यस्य तादृशः यः व्यपदेशः संज्ञा स विषयो यस्यास्तथोक्ता ।

(ष) अभिधेति ।—अभिधा लक्षणा च मूलं यस्याः तथोक्ता शब्दस्य व्यञ्जना द्विधा, अभिधामूला एका लक्षणामूला अपरेति ।

(स) अनेकार्थस्येति ।—संयोगाद्यैः,—अनन्तरोक्तैः । अनेकार्थस्य अनेके एकभिन्नाः द्वौ बहवो वेत्यर्थः, अर्थाः यस्य तादृशस्य शब्दस्य । एकत्र—एकस्मिन् अर्थे । नियन्त्रिते—नियम्य प्रतिपादिते सति । अन्यधीहेतुः,—अन्यस्य अर्थान्तरस्य धीहेतुः बोधोपायः यः व्यापार इति शेषः, सा अभिधाश्रया—अभिधामूला व्यञ्जना । यत्र तु संयोगादिकं नास्ति, तत्र यावन्त एवार्था वाच्या इति बोध्यम् । प्रथममभिधाया

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आद्यशब्दाद् विप्रयोगादयः। उक्तं हि,—

"संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः" ॥ इति। (ह)

"सशङ्खचक्रो हरिः" इत्यत्र शङ्खचक्रयोगेन हरिशब्दो विष्णुमेवाभिधत्ते। "अशङ्खचक्रो हरिः" इति तद्वियोगेन तमेव। "भीमार्ज्जुनौ" इति अर्ज्जुनः पार्थः। "कर्णार्ज्जुनौ" इति कर्णः सूतपुत्रः। "स्थाणुं वन्दे" इति स्थाणुः शिवः। "सर्वं जानाति देवः" इति देवो भवान्। "कुपितो मकरध्वजः" इति मकरध्वजः कामः। "देवः पुरारिः" इति पुरारिः शिवः। "मधुना मत्तः पिकः" इति मधुर्वसन्तः। "यातु वो दयिता मुखम्" इति मुखं साम्मुख्यम्। "विभाति गगने चन्द्रः" इति चन्द्रः शशी। "निशि चित्रभानुः" इति चित्रभानुर्वह्निः। "भाति रथाङ्गम्" इति नपुंसकव्यक्त्या रथाङ्गं

---

संयोगादिनियन्त्रितमर्थं बोधयित्वा उपक्षीणायामभिधायां पर्य्यालोचनेन अपरार्थप्रतीतेरभिधामूलत्वमिति भावः।

(ह) संयोग इति।—संयोगः,—भिन्नानेकार्थशब्दबोध्यान्यार्थविशिष्टतया अवर्त्तमानत्वे सति तद्बोध्यविशिष्टतया अनुमतः सम्बन्धः। विप्रयोगः,—वियोगः। साहचर्य्यम्—अभिन्ने प्रतिपाद्येऽन्योन्यापेक्षत्वम्। विरोधिता—वैरम्। सहाऽसंस्थानञ्च, अर्थः,—चतुर्थाद्यभिधेयं प्रयोजनम्, ("अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः)। प्रकरणं—कथयितृ अवधारयितृ बुद्धिस्थत्वम्। लिङ्गं—बह्वर्थपदबोध्यान्यानवस्थितिः एकार्थनिष्ठः प्रत्यक्षशब्दबोध्यो धर्म्मः। अन्यस्य—तुल्यविभक्तिकस्य। शब्दस्य सन्निधिः,—अनेकार्थपदैकार्थमात्रवृत्तिसम्बन्ध्यर्थान्तरबोधकपदसहव्यवहारः। सामर्थ्यं—नियतशक्तिः। औचिती—औचित्यम्। देशः,—नियमितं स्थानम्। कालः,—निर्दिष्टसमयः। व्यक्तिः,—पुंस्त्वादिकम्। तथा स्वरादयः,—उदात्तानुदात्तस्वरितप्रभृतयः। शब्दार्थस्य अनवच्छेदे—अनिर्द्धारणे। विशेषस्मृतिहेतवः,—विशेषबोधकारणानि।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

चक्रम्। स्वरस्तु वेद एव विशेषप्रतीतिकृत् न काव्ये इति तस्य विषयो नोदाहृतः। (क)

(क) क्रमेण संयोगादीनां नियन्तृणान्युदाहरति,—सशङ्खचक्रः हरिरित्यादि। अभिधत्ते—अभिधया बोधयति। तद्वियोगेन—शङ्खचक्रविरहेणेत्यर्थः। तं—विष्णुमेव, न तु इन्द्रादिकमित्येवकारस्यार्थः; अभिधत्ते इति पूर्वेणान्वयः, शङ्खचक्रवति विष्णावेव कालविशेषे तद्विरहः सम्भवति,—("हरिश्चन्द्रार्कवाताश्वशुकभेकयमाहिषु। कपौ सिंहे हरेऽजेऽंशौ शक्रे लोकान्तरे पुमान्॥" इति मेदिनी)। साहचर्य्यमुदाहरति, भीमार्ज्जुनाविति।—अत्र हि भीमसाहचर्य्येण अर्ज्जुनः,—अर्ज्जुनशब्दः। पार्थः,—पृथापुत्त्रधनञ्जयबोधकः, न तु ककुभादिरित्यर्थः,—("अर्ज्जुनः ककुभे पार्थे कार्त्तवीर्यमयूरयोः। मातुरेकसुतेऽपि स्यात् पुंलिङ्गो धवलेऽन्यवत्॥" इति मेदिनी)। विरोधितामुदाहरति, कर्णार्ज्जुनाविति।—कर्णः,—कर्णशब्दः। सूतपुत्त्रः,—सूतपुत्त्राभिधायी, तेनैव सहार्ज्जुनस्य सततवैरित्वादिति भावः, न तु श्रवणेन्द्रियादिवाचकः,—("कर्णः पृथाज्येष्ठपुत्त्रे सुवर्णाली श्रुतावपि" इति मेदिनी)। अर्थमुदाहरति, स्थाणुमिति।—"अत्र भवच्छिदे" इति चरमांशो बोध्यः, स्थाणुं—शिवम्; शिववन्दनस्यैव भवच्छेदनफलकत्वादिति भावः, न तु शाखापल्लवादिहीनं शुष्कतरुकाष्ठम्, अन्यथा भवच्छेदरूपस्य प्रयोजनस्य अनुपस्थितौ तस्य नियामकत्वं न स्यात्,—("स्थाणुः शर्वोऽप्यथ द्रोणः" इत्यमरः)। प्रकरणमुदाहरति, सर्वमिति।—अत्र राज्ञ एव प्रक्रान्तत्वं, न तु कस्यचित् देवताविशेषस्य, इति देवशब्देन पुरोवर्त्ती नृपतिरेव बोध्यते,—("देवो मेघे सुरे राज्ञि" इति मेदिनी)। लिङ्गमुदाहरति, कुपित इति।—मकरध्वजपदं कर्म्मधारयबहुव्रीहिभ्यामनेकार्थकं चेतनधर्म्मस्य कोपस्य मकराकारध्वजे असम्भवात् कामस्यैव बोधकं, न तु समुद्रस्य इति भावः;—("सिन्धौ च मदने मकरध्वजः" इति कोषः)। अन्यशब्दसन्निधिमुदाहरति, देव इति।—अत्र देवशब्दसान्निध्यात् पुरारिशब्दः शिवमेवाभिधत्ते, न तु अन्यं कञ्चनेति बोध्यं,—("पुरारिः शङ्करे खले" इति कोषः)। सामर्थ्यमुदाहरति, मधुनेति।—मधुशब्दस्य वसन्तदैत्यविशेषाद्यनेकार्थाभिधायकत्वेऽपि वसन्तस्यैव कोकिलमादने सामर्थ्यात् मधुशब्दः वसन्तमेवाभिधत्ते, न तु मद्यविशेषमिति भावः,—("मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे। वसन्तदैत्यभिच्चैवे" इति मेदिनी)। औचितीमुदाहरति, यात्विति।—प्रियासुतप्रतिकूल्यजनितखेदं नायकं प्रति सख्याः उक्तिरियम्। दयिता—प्रिया। मुखं—सुरतानुकूलत्वरूपमानुकूल्यम्। यातु—प्राप्नोतु। अत्र मुखशब्दः औचित्यात्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इदञ्च केऽप्यसहमाना आहुः,—

"स्वरोऽपि काक्वादिरूपः काव्ये विशेषप्रतीतिकृदेव। उदात्तादिरूपोऽपि मुनेः पाठोक्तदिशा शृङ्गारादिरसविशेषप्रतीतिकृदेव, इत्येतद्विषये उदाहरणमुचितमेव" इति। तन्न, स्वराः काक्वादयः उदात्तादयो वा व्यङ्ग्यरूपमेव विशेषं प्रत्याययन्ति, न खलु प्रकृतोक्तमनेकार्थशब्दस्यैकार्थनियन्त्रणरूपं विशेषम्। किञ्च,—यदि यत्र क्वचिदनेकार्थशब्दानां प्रकरणादिनियमाभावादनियन्त्रितयोरप्यर्थयोः अनुरूपस्वरवशेनैकत्र नियमनं वाच्यं, तदा तथाविधस्थले श्लेषानङ्गीकारप्रसङ्गः; न च तथा। अत एवाहुः श्लेषनिरूपणप्रस्तावे—"काव्यमार्गे स्वरो न गण्यते" इति च नयः। इत्यलमुपजीव्यानां मान्यानां व्याख्यानेषु कटाक्षनिक्षेपेण। (ख) आदिशब्दात् "एतावन्मात्रस्तनी"

---

साम्मुख्यमेव, न तु वदनादिकमभिधत्ते, तस्यैव प्रकृतोपयोगित्वादिति बोध्यम्। देशमुदाहरति, विभातीति।—चन्द्रः,—चन्द्रमाः, न तु कर्पूरादिरिति भावः;—("चन्द्रः कर्पूरकाम्पिल्लसुधांशुस्वर्णवारिषु" इति मेदिनी)। कालमुदाहरति, निशीति।—चित्रभानुशब्दस्य वह्निसूर्य्याद्यनेकार्थाभिधायकत्वेऽपि प्रकृते पावकस्यैव वाचकत्वं, न तु सूर्य्यस्य, तस्य निशिदर्शनासम्भवादिति भावः;—("चित्रभानुः पुमान् वैश्वानरे चाहस्करेऽपि च" इति मेदिनी)। व्यक्तिमुदाहरति, भातीति।—अत्र रथाङ्गशब्दः नपुंसकलिङ्गत्वेन चक्रमेवाभिधत्ते, न तु चक्रवाकादिमिति भावः;—("रथाङ्गं न हयोश्चक्रे ना चक्राङ्गविहङ्गमे" इति मेदिनी)। स्वरस्त्विति।—उदात्तादिरूपः इत्यर्थः। विशेषप्रतीतिकृत्—विशेषस्य अन्यतरस्य अर्थस्य। प्रतीतिकृत्—बोधकः, यथा—"इन्द्रशत्रुर्विवर्द्धस्व" इत्यादौ स्वरभेदेन इन्द्रः शत्रुर्यस्येति बहुव्रीहिसमासे इन्द्रशत्रुशब्दः इन्द्र एव शासनकर्त्ता वृत्रस्येत्येवमर्थमभिहितवान्, न तु इन्द्रस्य शत्रुरिति तत्पुरुषसमासीयस्वराप्रयोगात् वृत्रस्य इन्द्रहन्तृत्वरूपमिति।

(ख) उदात्तादिरूपः,—उच्चैरुदात्तः, नीचैरनुदात्तः, मध्यमः स्वरितः। मुनेः,—भरतस्य। पाठोक्तदिशा—पाठोक्तरीत्या, भरतमुनिना शृङ्गारादौ यत्र यादृशः स्वरविशेषः उक्तः, तदनुसारेणेत्यर्थः; यथा,—"हास्यशृङ्गारयोः स्वरितोदात्तं, वीररौद्राद्भुतेषु उदात्तस्वरितं, करुणबीभत्सभयानकेषु अनुदात्तस्वरितमुपपादयेत्" इति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत्यादौ हस्तादिचेष्टादिभिः स्तनादीनां कमलकोरकाद्याकारत्वम् ।

एवमेकस्मिन्नर्थे अभिधया नियन्त्रिते या शब्दस्यान्यार्थबुद्धिहेतुः शक्तिः, सा अभिधामूला व्यञ्जना । यथा मम तातपादानां महापात्रचतुर्दशभाषाविलासिनीभुजङ्गमहाकवीश्वरश्रीचन्द्रशेखरसान्धिविग्रहिकाणाम्,—

"दुर्गालङ्घितविग्रहो मनसिजं सम्मीलयंस्तेजसा
प्रोद्यद्राजकलो गृहीतगरिमा विष्वग्वृतो भोगिभिः ।
नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढां रुचिं धारयन्
गामाक्रम्य विभूतिभूषिततनू राजत्युमावल्लभः ॥" (ग)

---

न च तथेति ।—स्वरभेदसत्त्वेऽपि महाकविभिः श्लेषाङ्गीकारात् श्लेषानङ्गीकारो न कर्त्तव्य इत्यर्थः । काव्यमार्गे—काव्यपद्धतौ । उपजीव्यानां—याननुपाश्रित्य जीवन्ति ते उपजीव्यास्तेषाम् । कटाक्षनिक्षेपेण—कुटिलदृष्टिपातेन ।

(ग) अभिधामूलामुदाहरति, दुर्गेति ।—दुर्गैः प्राकारपरिखादिभिः अलङ्घितः प्रतिरोद्धुमपारितः विग्रहः संग्रामः यस्य तादृशः, यः शत्रूणां दुर्गाणि भित्त्वाऽपि संग्राममातनोतीति भावः ; अथवा,—दुर्गैः परिखादिभिरलङ्घितोऽव्यवहितो विग्रहः शरीरं यस्य तथोक्तः ; शत्रुभिः समं दुर्गाद्यनपेक्ष्य यः स्वयं शरीरेण युद्धायोपक्रमते इति भावः ;—("विग्रहः कायविस्तारविभागे ना रणेऽस्त्रियाम्" इति मेदिनी) । तेजसा कान्त्या सौन्दर्य्येणेति यावत्,—( "तेजो दीप्तौ प्रभावे च स्यात् पराक्रमरेतसोः" इति मेदिनी ) । मनसिजं कामं सम्मीलयन् सङ्कोचयन्, खर्व्वीकुर्व्वन्नित्यर्थः । प्रोद्यत् प्रकर्षेण उद्यत्, राजकं राजसमूहं, लाति गृह्णाति, वशीकरोतीति प्रोद्यद्राजकलः, गृहीतः गरिमा गौरवं येन स गृहीतगरिमा, प्राप्तगौरव इत्यर्थः, भोगिभिः अनुजीविभिः —("भोगी सर्पानुजीविनोः" इति कोषः ) । विष्वक् समन्तात् वृतः परिवृतः । नक्षत्रेशे क्षत्रियश्रेष्ठे कृते क्षणो दत्तदृष्टिर्न भवति इति, तत्रापि तुच्छबुद्धिरिति भावः ; गिरिः हिमालयः गुरुः श्वशुरो यस्य तस्मिन् हरे इत्यर्थः, गाढां महतीं, रुचिम् अनुरागं, भक्तिमिति यावत्, धारयन् शिवोपासक इत्यर्थः ; तथा गां पृथ्वीं,—( "गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयी दृग्वाणदिग्वाग्भूष्वप्सु भूम्नि च ॥" इति मेदिनी ) । आक्रम्य पराक्रमेण स्वीकृत्य विभूतिभिः धनसम्पद्भिः भूषिता अलङ्कृता

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र प्रकरणेनाभिधया उमावल्लभशब्दस्य उमानाम्नी महादेवी तद्वल्लभभानुदेवनृपतिरूपेऽर्थे नियन्त्रिते व्यञ्जनयैव गौरीवल्लभरूपोऽर्थो बोध्यते। (घ) एवमन्यत्।

लक्षणामूलामाह,—

**लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम्।**
**यया प्रत्याय्यते सा स्याद्व्यञ्जना लक्षणाश्रया॥२७॥(ङ)**

"गङ्गायां घोषः" इत्यादौ जलमयाद्यर्थबोधनादभिधायां

---

तनुर्यस्य तथाविध,—("विभूतिर्भूतिरैश्वर्यम्" इति कोषः)। उमावल्लभः उमा तन्नाम्नी महादेवी, तस्याः वल्लभः पतिः भानुदेवो राजेन्द्रः इति शेषः, राजति शोभते।

(घ) प्रथममभिधयैव उक्तरूपे अर्थे प्रतिपादिते, पश्चादस्य वाक्यस्य अनेकार्थपदघटितत्वज्ञानाज्जायमानं वक्तृतात्पर्य्यज्ञानमभिधान्तरग्रहसहकृतमेव अर्थं व्यञ्जनया बोधयतीत्याह, व्यञ्जनयेति।—गौरीवल्लभरूपः शिवरूपः, अर्थः व्यङ्ग्यार्थः, तथाहि,—दुर्गया पार्वत्या लङ्घितः अर्द्धाङ्गत्वेन आक्रान्तः, विग्रहः शरीरं यस्य तथोक्तः, तेजसा तृतीयनयनोत्थेन वह्निनेत्यर्थः; मनसिजं मदनं सम्मीलयन् दहन्; शोभन्ती भाले विराजमाना राज्ञश्चन्द्रस्य कला षोड़शभागैकभागरूपः चन्द्रस्यांशः यस्य तादृशः;—("राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ" इति, "कला स्यान्मूलविद्धौ शिल्पादावंशमात्रके। षोड़शांशे च चन्द्रस्य कलना कालमानयोः॥" इति च मेदिनी), गृहीतगरिमा प्राप्तशरीरगौरवः, विश्वम्भरत्वादिति भावः, भोगिभिः भुजङ्गैः, विष्वक् सर्व्वतः वृतः पन्नगालङ्कृतः इत्यर्थः, नक्षत्राणाम् ईशश्चन्द्रस्तद्वत् कृतं (भक्तेषु) ईक्षणं दृष्टिपातो येन स तथोक्तः, सौम्यदृष्ट्या भक्तान् पश्यन्नित्यर्थः। गिरिगुरौ गिरीणां गुरु राजा तस्मिन् हिमाद्रौ इत्यर्थः, गाढ़ां महतीं रुचिं प्रीतिं,—("रुचिः स्त्री दीप्तौ शोभायामभिष्वङ्गाभिलाषयोः" इति मेदिनी) धारयन्, श्वशुरत्वादिति भावः; गां वृषमाक्रम्य विभूतिभिः भस्मभिर्भूषिता तनुर्यस्य तथोक्तः,—("भूतिविभूती भस्मसम्पदोः" इति कोषः) उमायाः पार्वत्याः वल्लभः पतिः शम्भुः राजति इत्येवंरूपो द्वितीयोऽर्थः व्यञ्जनया प्रतिपाद्यते।

(ङ) लक्षणामूलामुदाहरति, लक्षणामूलेति।—यस्य प्रयोजनस्य कृते बोधाय इत्यर्थः, लक्षणा प्रयोजनवतीति शेषः, उपास्यते आश्रियते; स्वीक्रियते इति यावत्, तत् तु प्रयोजनं यया प्रत्याय्यते बोध्यते, सा लक्षणाश्रया व्यञ्जना स्यात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विरतायां तटाद्यर्थबोधनाच्च लक्षणायां विरतायां यया शीतत्व-पावनत्वाद्यतिशयादिर्बोध्यते, सा लक्षणामूला व्यञ्जना।

एवं शाब्दीं व्यञ्जनामुक्त्वा आर्थीं व्यञ्जनामाह,—

**वक्तृबोद्धव्यवाक्यानामन्यसन्निधिवाच्ययोः ।**
**प्रस्तावदेशकालानां काकोश्चेष्टादिकस्य च ॥**
**वैशिष्ट्यादन्यमर्थं या बोधयेत् साऽर्थसम्भवा ॥२८॥ (च)**

व्यञ्जनेति सम्बध्यते ।

तत्र वक्तृवाक्यप्रस्तावदेशकालवैशिष्ट्ये यथा मम,—

"कालो मधुः कुपित एष च पुष्पधन्वा,
धीरा वहन्ति रतिखेदहराः समीराः ।
केलीवनीयमपि वञ्जुलकुञ्जमञ्जु-
र्दूरे पतिः कथय किं करणीयमद्य ? ॥" (छ)

---

(च) आर्थीं व्यञ्जनामाह, वक्त्रेति ।—वक्ता नाम येन कमपि उद्दिश्य किमपि उच्यते, बोद्धव्यः वक्रा यमुद्दिश्य उच्यते, वाक्यं पदसमुदायविशेषः तेषाम् । अन्य-सन्निधिः,—अन्यस्य वक्तृबोद्धव्याभ्यां भिन्नस्य, (यत्सन्निधौ बोद्धव्यो बोद्धव्यं वैशिष्ट्येन प्रतिपद्यते तस्य) सन्निधिः सन्निधानम् ; वाच्यं—पदार्थः, तयोः । प्रस्तावः प्रकरणं, देशो निर्जनवनादिः, कालो वसन्तादिः तेषाम् । काकुः वक्ष्यमाणस्वरूपो ध्वनि-विशेषः तस्याः । चेष्टा पद्मनिमीलनादिरादिर्यस्य तस्य चेष्टादिकस्य, आदिना लिङ्गादेः ग्रहणम् । च (इदं समुच्चयार्थम्) । वैशिष्ट्यात्—वैलक्षण्यज्ञानात् जायमाना, या शक्तिः, अन्यं भिन्नम् अर्थं बोधयेत्, सा अर्थः सम्भवो यस्याः तथोक्ता, आर्थी व्यञ्जनेति शेषः ।

(छ) काल इति ।—कालः समयः, मधुः वसन्तः, एष च पुष्पधन्वा कामः, कुपितः, धीराः मन्दाः, रतिखेदहराः सुरतपरिश्रमापहारकाः, समीराः वायवः, वहन्ति, वञ्जुलानाम् अशोकानां, कुञ्जेन लतादिपिहितस्थानेन, मञ्जुः मनोज्ञा, इयं केलीवनी क्रीड़ाकाननम्, अपि वर्त्तते, किन्तु पतिः दूरे वर्त्तते इति शेषः, तत् अद्य किं करणीयमिति यत्करणीयं तन्मे कथय । अत्र वक्त्र्याः कामुकत्वेन, वाक्यस्य उद्दीपन-विभावादिकामोद्रेकजनकतत्कालावधिपत्यलाभकर्त्तव्यानिश्चयविषयत्वेन, प्रस्तावस्य सुरत-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्रैतं देशं प्रति शीघ्रं "प्रच्छन्नकामुकस्त्वया प्रेष्यताम्" इति सखीं प्रति कयाचित् द्योत्यते।

बोद्धव्यवैशिष्ट्ये यथा,—

"निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरः
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।
मिथ्यावादिनि! दूति! बान्धवजनस्याज्ञातपीड़ागमे!
वापीं स्नातुमितो गताऽसि न पुनस्तस्याधमस्यान्तिकम्॥"(ज)

---

विषयत्वेन, देशस्य कालस्य च कामोद्रेकजनकत्वेन च उपलक्षणेन वाच्यस्य पत्यसन्निधिकामोद्रेककालीनकर्त्तव्यप्रश्नस्य स्वरहस्यवेदिवयस्यासमाधानीयत्वेन वैशिष्ट्यमिति बोध्यम्।

(ज) बोद्धव्यवैशिष्ट्ये उदाहरणमाह, निःशेषेति।—उपपतिमानेतुं प्रेषितां तच्च सम्भुज्य पुनः प्रत्यागतां लिप्तचन्दनाधररागलोपादीनि तच्चिह्नानि स्नानकर्म्मकथनच्छलेन गोपायन्तीं दूतीं प्रति कस्याश्चित् विदग्धनायिकायाः सोल्लुण्ठनोक्तिरियम्। रे मिथ्यावादिनि! "मया तत्र गत्वा प्रयत्नेन बहुधाऽऽराधितोऽपि स नायातः" इति मृषाभाषिणि! बान्धवजनस्य मादृशस्य अज्ञातः अविदितः, स्वाभीष्टसाधनाभिमुखतया इति भावः, पीड़ागमः विरहानलसन्तापजनितक्लेशानुभवः इति यावत्, यया तत्सम्बुधौ। हे दूति! न तु प्रियसखीति भावः, [अत्र दूतीति आमन्त्रणेन अस्या प्रतारणापरत्वं मिथ्याकथनशीलत्वञ्च व्यज्यते] त्वमितो मत्तः सकाशात् स्नातुं वापीं सरसीं गता असि, तस्य अनेकशः कृतापराधस्य, अत एव अधमस्य अन्यदीयमनोदुःखानभिज्ञतया परक्लेशदायककार्य्यपरायणस्य अन्तिकं समीपं न पुनः गता। अत्र पुनरिति एवार्थे, तेन नैव गताऽसि इत्यर्थो बोध्यते। तत्रैव हेतुमाह, निःशेषेति।—यत् तव (तवेति सम्बन्धिपदं स्तनतटादिभिः सर्व्वैरेवान्वेति) स्तनतटं न तु उरःस्थलमिति भावः। निःशेषं यथा तथा च्युतं चन्दनं यस्मात् तादृशं विशिष्टावगाहनेन चालनादिति भावः। व्यङ्ग्यपक्षे तु—मर्द्दनातिशय्येन नायककरावमर्शात् तथाभूतमिति व्यक्तमेव। एवमन्यत्र। अधरः अधरोष्ठः, न तु उत्तरोष्ठ इति भावः। निर्मृष्टः निःशेषेण मृष्टः चालितः रागो ताम्बूलजन्यं लौहित्यं यस्मात् तथोक्तः, अधरोष्ठस्यैव स्नानाले तत्र सलिलसम्बन्धाधिक्यात्, व्यङ्ग्यपक्षे तु—चुम्बनस्य अधरे एव कामशास्त्रसम्मततया उत्तरोष्ठे तस्य निषेधात् तथात्वं बोध्यम्। नेत्रे

अत्र तदन्तिकमेव रन्तुं गताऽसीति विपरीतलक्षणया लक्ष्यम् । तस्य च रन्तुमिति व्यङ्ग्यं प्रतिपाद्यं दूतीवैशिष्ट्याद् बोध्यते ।

अन्यसन्निधिवैशिष्ट्ये यथा,—

"उअ णिच्चल ! णिप्पंदा भिसिणीपत्तम्मि रेहइ बलाआ ।
णिम्मलमरगअभाअणपरिट्ठिआ संखसुत्ति व्व ॥" (भ)

अत्र बलाकाया निस्पन्दत्वेन विश्वस्तत्वं, तेनास्य देशस्य विजनत्वम्, अतः सङ्केतस्थानमेतत्, इति कयाऽपि सन्निहितं

---

नयने दूरम् अत्यर्थम् अनञ्जने कज्जलरहिते, इयं इदानीन्तनीत्यर्थः । तन्वी चौरा, तनुः शरीरं, पुलकिता लोमाञ्चिता, व्यङ्ग्यपक्षे तु—सुरतक्रीडाश्रमवशात् चौरस्य तदानीमनुभूताभिनवसुखस्मृतेरिदानीं पुलकस्य सञ्जातः । सर्व्वमेतत् स्नानफलमापाततः अभिधया प्रतिपाद्यते । किन्तु बोद्धव्यायाः दूत्या वैशिष्ट्येन तदन्तिकमेव गताऽसीति लक्षणया प्रतिपाद्यते, तथा च उक्तरूपसुरतज्ञापकचिह्नवयस्य नायकसमीपगमनं विना असम्भवात् तत्र तत्र लक्षणामन्तरेण अन्वयबोधासम्भवेन नञ्पदस्य एवार्थे लक्षणा, अन्ययोगव्यवच्छेदश्च तस्यार्थः ; तत्र च नञर्थस्य अभावस्य प्रतियोगितासम्बन्धः । तथा वापीं स्नातुमित्यत्रापि विपरीतलक्षणया गमनाभाव एव प्रतीयते, तथा च त्वमितो वापीं स्नातुं न गता, अपि तस्याधमस्यान्तिकमेव गतेति अन्वयबोधः । रन्तुमिति प्रयोजनं व्यञ्जनया प्रतीयते । इदन्तु तत्त्वम् ;—यद्यपि निःशेषच्युतचन्दनमित्यादि उपभोगस्य स्नानस्य च कार्य्यं समानमापाततः प्रतीयते, तथापि स्नाने स्तनतटस्यैव निःशेषच्युतचन्दनत्वं न, किन्तु सर्वस्यैवाङ्गस्य ; अधरोष्ठस्यैव निर्मृष्टरागत्वं न, किन्तु चोत्तरोष्ठस्यापि, नेत्रयोः दूरं प्रान्तभागे एव अनञ्जनत्वं न, अपि तु तयोरङ्गाङ्गसर्वावयवेषु अनञ्जनत्वमेव ; ततश्चैतानि उपभोगस्यैव चिह्नानीति दूत्या वैशिष्ट्याद् इयं व्यज्यते ।

(भ) अन्यसन्निधिवैशिष्ट्ये व्यङ्ग्यार्थव्यञ्जनामाह, उअ इति ।—"ऊह, निश्चल ! निस्पन्दा विसिनीपत्रे राजते बलाका । निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ॥" इति संस्कृतम् । अस्यायमर्थः,—हे निश्चल ! चलनाक्षम ! सङ्केतस्थानगमने निरुत्साहेत्यर्थः, निर्म्मलमरकतभाजने स्वच्छमरकतमणिपात्रे परिस्थिता शङ्खशुक्तिरिव शङ्खकपालमिव विसिनीपत्रे पद्मिनीदले इयं बलाका बकी, निस्पन्दा राजते, ऊह पश्य ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रच्छन्नकामुकं प्रत्युच्यते। अत्रैव स्थाननिर्जनत्वरूपं व्यङ्ग्यार्थ-वैशिष्ट्यं प्रयोजनम्। (ञ)

"भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते" इत्युक्तप्रकारायाः काकोर्भेदा आकरेभ्यो ज्ञातव्याः। (ट)

एतद्वैशिष्ट्ये यथा,—

"गुरुपरतन्त्रतया बत! दूरतरं देशमुद्यतो गन्तुम्।
अलिकुलकोकिलललिते नैष्यति सखि! सुरभिसमयेऽसौ?॥"

अत्र नैष्यति, अपि तर्हि एष्यत्येवेति काक्वा व्यज्यते। (ठ)

चेष्टावैशिष्ट्ये यथा,—

"सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्॥" (ड)

---

(ञ) अत्रैव—अस्मिन्नुदाहरण एव। प्रयोजनं—तृतीयव्यञ्जनायाः कारण-मित्यर्थः। [ "प्रयोजकम्" इति पाठान्तरम् ]।

(ट) भिन्नेति।—भिन्नः शोकहर्षादिभिर्विकृतीकृतः यः कण्ठध्वनिः सः। धीरैः,—विद्वद्भिः। काकुरिति—काकुशब्देनेत्यर्थः। अभिधीयते—कथ्यते। आक-रेभ्यः,—उपजीव्यप्राचीनाचार्य्यभरतादिप्रबन्धेभ्यः।

(ठ) काकुवैशिष्ट्ये उदाहरति, गुर्व्विति।—हे सखि! असौ मत्पतिरित्यर्थः; गुरूणां पित्रादीनां परतन्त्रतया अधीनतया, बत खेदे, दूरतरम् अतिदूरं देशं, गन्तुम् उद्यतः प्रवृत्तः, अतः अवश्यं गमिष्यत्येव, किन्तु अलिकुलैः भ्रमरसङ्घैः कोकिलैश्च ललिते सुन्दरे, मनोहरे इत्यर्थः, सुरभिसमये सुरभेर्वसन्तस्य समयः कालः तस्मिन्, वसन्तस्य ऋतोः प्रादुर्भाव इत्यर्थः,—( "सुरभिः शल्लकीमातृभिन्नुरागीषु योषिति' चम्पके च वसन्ते च" इति मेदिनी ) न एष्यति न आगमिष्यति? अपि तु एष्यत्येव। अपि तर्हि—अपि तु इत्यर्थः।

(ड) चेष्टावैशिष्ट्ये उदाहरणमाह, सङ्केतेति।—सङ्केतकाले सङ्केतकालज्ञाने मनो यस्य तादृशं, "कः सङ्केतसमयः?" इति जिज्ञासुमित्यर्थः, विटमुपपतिमित्यर्थः, —("विटोऽद्रौ लवणे षिङ्गे मूषिके खदिरेऽपि च" इति मेदिनी ) विदग्धया चतुरया नायिकयेत्यर्थः, ज्ञात्वा विदित्वा, हसद्भ्यां विकसद्भ्यां, नेत्राभ्याम् अर्पितः ज्ञापितः;



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र सन्ध्या सङ्केतकालः इति पद्मनिमीलनादिचेष्टया कयाचिद् द्योत्यते। एवं वक्त्रादीनां व्यस्तसमस्तानां वैशिष्ट्ये बोद्धव्यम्। (ढ)

**त्रैविध्यादियमर्थानां प्रत्येकं त्रिविधा मता॥२६॥(ण)**

अर्थानां वाच्यलक्ष्यव्यङ्ग्यत्वेन त्रिरूपतया सर्वा अपि अनन्तरोक्ता व्यञ्जनास्त्रिविधाः। तत्र वाच्यार्थस्य व्यञ्जना यथा,—"कालो मधुः" इत्यादि। लक्ष्यार्थस्य यथा,—"निःशेषच्युतचन्दनम्" इत्यादि। व्यङ्ग्यार्थस्य यथा,—"उअ णिच्चल" इत्यादि। प्रकृतिप्रत्ययादिव्यञ्जकत्वन्तु प्रपञ्चयिष्यते। (त)

---

आकूतः अभिप्रायः यस्मिन् तद् यथा तथा; यद्वा,—हसदिति पृथक्पदं पद्मविशेषणं, क्रियाविशेषणं वा; हसत् विकसत्, विकसितमिति यावत्, लीलापद्मं लीलायाः क्रीड़ायाः, क्रीड़ार्थं हस्तेन धृतमित्यर्थः, पद्मं कमलं, हस्तस्थं क्रीड़ाकमलमिति यावत्, निमीलितं सङ्कोचितम्। अत्र नयनव्यापारसूचितः नायिकायाः गुप्ताशयः चपदार्थापकक्रीड़ापद्माच्छादनेन विशदीकृतः इति दिक्।

(ढ) अत्र—उदाहृते पद्ये। कयाचित्—कामिन्या (कर्तृपदमिदम्)। पद्मनिमीलनादिचेष्टया—अत्र आदिना नेत्राकूतहासयोर्ग्रहणम् (अत्र साधने तृतीया)। सन्ध्या—सायम्। सङ्केतकालः,—सङ्केतस्य प्रियेण सह सङ्गमार्हस्य गुप्तस्थानस्य, उपचारात् तत्र गमनस्येत्यर्थः, कालः,—समयः। इति—इति वस्तु। द्योत्यते—बोध्यते। वक्त्रादीनां—वक्तृबोद्धव्यवाक्यादीनामित्यर्थः। व्यस्तसमस्तानां—व्यस्ताः पृथक् पृथग्भूताश्च समस्ताः सम्मिलिताश्चेति तेषां तथोक्तानाम्। वैशिष्ट्ये—विशिष्टत्वे, भेदे इति यावत्। बोद्धव्यं—ज्ञेयं, व्यङ्ग्यत्वमिति शेषः।

(ण) त्रैविध्यादिति।—इयं—व्यञ्जना आर्थीति शेषः। अर्थानां—वाच्यलक्ष्यव्यङ्ग्यानाम्। त्रैविध्यात्—त्रिप्रकारत्वात्। प्रत्येकं—प्रतिव्यक्ति। त्रिविधा—वाच्यव्यञ्जना, लक्ष्यव्यञ्जना, व्यङ्ग्यव्यञ्जना चेति त्रिप्रकारा। मता—कथिता।

(त) प्रकृतिप्रत्ययादीति।—प्रकृतिप्रत्ययादीनां व्यञ्जकत्वम्; आदिपदेन वचनादीनां ग्रहणम्। प्रपञ्चयिष्यते—प्रकाशयिष्यते, चतुर्थपरिच्छेदे असंलक्ष्यक्रमव्यङ्ग्यध्वन्युदाहरणे इति शेषः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः।**
**एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता ॥ ३० ॥(थ)**

यतः शब्दो व्यञ्जकत्वे अर्थान्तरमपेक्षते, अर्थोऽपि शब्दम्; तदेकस्य व्यञ्जकत्वे अन्यस्य सहकारिताऽवश्यमङ्गीकार्य्या। (द)

---

(थ) ननु शाब्द्यां व्यञ्जनायाम् अर्थस्य, आर्थ्यामपि शब्दस्य उपयोगित्वमस्त्येव, तत् कीदृशमनयोर्भेदकारणम्? इत्याशङ्क्याह, शब्देति।—अर्थः शब्देन बोध्यः प्रतिपाद्यः सन् व्यनक्ति अर्थान्तरं व्यञ्जनया बोधयति, शब्दोऽपि अर्थान्तरम् अन्यमर्थम्, आश्रयतीति तथाभूतः अन्यार्थोपस्थापकः सन्नित्यर्थः, व्यनक्ति व्यञ्जको भवतीति यावत्। एवमनुपपत्तिप्रदर्शनानन्तरं तत्रोपपत्तिमप्याह, एकस्येति।—तत्—तस्मात्, एकस्य—अनयोरन्यतरस्येत्यर्थः, व्यञ्जकत्वे—व्यञ्जनया बोधकत्वे, अन्यस्य—अपरस्य, सहकारिता—सहायकत्वमप्रधानकारणत्वमित्यर्थः। अप्रधानत्वञ्च व्यवहितोपकारित्वेन। एवञ्च यत्र यस्य अव्यवहितोपकारकत्वेन प्रधानत्वं, तत्र तत्सम्बन्धित्वेनैव तस्यां व्यवहार इति भावः। ननु नाटकादौ वेश्याऽभिनयादेरपि व्यञ्जकत्वसम्भवेन व्यञ्जकद्वैविध्यमात्रमुक्तमिति चेन्न, तत्रापि शब्दोपहितार्थस्यैव व्यञ्जकत्वाङ्गीकारात्। वेश्याऽभिनयादेस्तु चेष्टादिवैशिष्ट्यरूपसहकारित्वोपगमात् तत्र शब्दसत्त्वेऽपि वेश्याऽभिनयदर्शनस्य प्राधान्येनैव दृश्यत्वव्यवहारः। अत एव वक्ष्यति,—"श्रवणैः पेयमनेकैर्दृश्यं दीर्घैश्च लोचनैर्बहुभिः। भवदर्थमिव निबद्धं नाट्यं सीतास्वयंवरणम्॥" इति।

(द) तदेव विवृणोति, यत इत्यादिना।—स्पष्टम्। तत्रार्थस्य त्रैविध्येन व्यञ्जकत्वं त्रिविधम्; तत् क्रमेण यथा,—

"माए! घरोवअरणं अज्ज हु णत्थित्ति साहिअं तुमए।
ता भण किं करणिज्जं एमेअ ण वासरो ठाइ" ॥ १ ॥

["मातर्गृहोपकरणमद्य हि नास्तीति साधितं त्वया।
तद्भण किं करणीयमेवमेव न वासरः स्थायी॥"] इति संस्कृतम्।

अत्र वाच्योऽर्थः "बहिर्गन्तुं कथमपि भोजनाद्युपयोगितां निर्वोढुं च मामादिश" इति कामुक्या अभिप्रायं प्रकाशयति।

"साहेन्ती सहि! सुहअं खणे खणे दूणिआसि मज्झ कए।
सब्भावणेहकरणिज्जसरिसअं दाव विरइअं तुमए" ॥ २ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अभिधादित्रयोपाधिवैशिष्ट्यात् त्रिविधो मतः।
शब्दोऽपि वाचकस्तद्वल्लक्षको व्यञ्जकस्तथा ॥३१॥(ध)

अभिधोपाधिको वाचकः। लक्षणोपाधिको लक्षकः। व्यञ्जनोपाधिको व्यञ्जकः। किञ्च,—

तात्पर्य्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने।
तात्पर्य्यार्थं तदर्थञ्च वाक्यं तद्बोधकं परे ॥ ३२ ॥(न)

[ "साधयन्ती सखि ! सुभगं क्षणे क्षणे दूनासि मम कृते।
सद्भावस्नेहकरणीयसदृशं तावद्विरचितं त्वया ॥" ] इति संस्कृतम्।

अत्र "मम प्रियं रमयन्त्या त्वया शत्रुत्वमाचरितम्" इति लक्ष्योऽर्थः "त्वया सह रमणं येन कृतं स एव दुर्जनः खलु" इति व्यञ्जयति।

"उअ णिच्चल ! णिप्पंदा भिसिणीपत्तम्मि रेहइ बलाआ।
णिम्मलमरगअभाअणपरिट्ठिआ संखसुत्तिव्व" ॥ ३ ॥

[ "पश्य निश्चल ! निस्पन्दा बिसिनीपत्रे राजते बलाका।
निर्म्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ॥" ] इति संस्कृतम्।

इत्यत्र व्यङ्ग्योऽर्थो व्यञ्जक इति मूलकृतैव दर्शितम्। एवं शब्दस्यापि त्रैविध्येन व्यञ्जकत्वं त्रिविधम्; तत्र वाचकस्य व्यञ्जकत्वं यथा,—"दुर्गालङ्घितविग्रहः" इत्यादौ, लाक्षणिकस्य यथा,—"उपकृतं बहु…" इत्यादौ, व्यञ्जकस्य व्यञ्जकत्वं चतुर्थपरिच्छेदे दर्शयिष्यते।

(ध) अभिधादिव्यापारत्रयं निरूप्य तत्प्रयुक्तं शब्दस्यापि त्रैविध्यमाह, अभिधेति।—शब्दोऽपि अभिधादित्रयम् अभिधालक्षणाव्यञ्जनारूपत्रयमित्यर्थः, तदेव उपाधिः व्यापारविशेषः, तद्वैशिष्ट्यात् तद्वैचित्र्यात्, वाचकः, तद्वत् तद्रूपः, लक्षकः, तथा तादृशः व्यञ्जकश्च इति त्रिविधो मतः कथितः।

(न) सम्प्रति "अभिधया लक्षणया वा शब्दैः प्रत्येकमुपस्थापितानां पदार्थानां संसर्गो वाक्याद्भासमानः तात्पर्य्याख्यां वृत्तिमपेक्षते" इति प्राचीननैयायिकमतीया तात्पर्य्याख्यां वृत्तिमाह, तात्पर्य्याख्यामिति।—पदार्थानाम् अन्वयबोधने संसर्गप्रत्यायने तदर्थमिति यावत् [ निमित्तार्थे सप्तमी ] तात्पर्य्याख्यां तात्पर्य्यनाम्नीं वृत्तिं व्यापारं तथा तात्पर्य्यार्थं, तदर्थं, तस्य तात्पर्य्यार्थस्य बोधकं वाक्यञ्च परे प्राचीनाः नैयायिकाः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अभिधाया एकैकपदार्थबोधनविरमाद् वाक्यार्थरूपस्य पदार्थान्वयस्य बोधिका तात्पर्य्यं नाम वृत्तिः, तदर्थश्च तात्पर्य्यार्थः, तद्बोधकञ्च वाक्यमिति अभिहितान्वयवादिनां मतम् (प)।

इति श्रीमन्नारायणचरणारविन्दमधुव्रतसाहित्यार्णवकर्णधारध्वनिप्रस्थापनपरमाचार्य्य-
कविसूक्तिरत्नाकराष्टादशभाषावारविलासिनीभुजङ्गसान्धिविग्रहिकमहापात्र-
श्रीविश्वनाथकविराजकृतौ साहित्यदर्पणे वाक्यस्वरूपनिरूपणं
नाम द्वितीयः परिच्छेदः ॥ २ ॥

---

आहुः वदन्ति, [आहुरिति मतान्तरसूचनार्थम्]; नव्यास्तु इमामेव संसर्गमर्य्यादामाहुः।

(प) अभिधाया इति लक्षणाया उपलक्षणम्। अभिहितान्वयवादिनाम्—अभिहितानाम् अभिधया लक्षणया वा पदोपस्थापितानाम् अर्थानाम् अन्वयः सम्बन्धः तं वदन्तीति तथोक्तानां प्राचीननैयायिकानामित्यर्थः। मतं—सिद्धान्तः। "क्रियाकारकयोः प्रथमत एवान्वयबोधो जायते, ततः शक्तिग्रहः, पदविशेषसमभिहारात् पुनर्विशेषस्मृतिर्भवतीति किं तात्पर्य्याख्यया अन्यया वृत्त्या स्वीकारेण" इति तु अन्विताभिधानवादिनो मीमांसका वदन्ति इति बोध्यम्।

अत्रोच्यते।—"पदानां हि केवले पदार्थे एव लाघवदृष्ट्या शक्तिः कल्प्यते। गौरवादिदोषभिया सम्बन्धांशेऽपि तु नैव सा स्वीक्रियते, अन्वयभागस्य हि तात्पर्य्यलभ्यार्थतया वाच्यार्थभिन्नतया आकाङ्क्षायोग्यतासत्तियोगेन अपदार्थस्यापि प्रतीतिविषयत्वं स्यात्। शाब्दबोधस्य अपदार्थविषयकत्वे येन केनापि प्रकारेण बुद्ध्या विषयीकृतस्य तत्तत्पदेनानुपस्थापितस्य आकाशादेरपि तद्गोचरत्वमापद्यते इति तु न शङ्कनीयं, शाब्दबोधविषये अपदार्थस्यान्तर्भावेऽप्रयोजकत्वात्" इत्येवमभिहितान्वयवादिप्राचीननैयायिक-भाट्टमीमांसकानां सिद्धान्तः। तेषामेवंविधा तात्पर्य्यनिर्णयशैली; तथा हि,—"कटं निर्म्माति" इत्याद्युदाहरणाद्धि कटनिष्ठकर्म्मत्वानुकूला निर्म्मितिरित्यर्थः प्रतीयते। तत्र कटपदस्य कटोऽर्थः, कर्म्मत्वञ्च अम् प्रत्ययस्य, वृत्तित्वं न कस्यचिदप्यर्थः। एवमपदार्थरूपं हि वृत्तित्वं, तात्पर्य्यानुयोगात् एतयोः सम्बन्धरूपेण बोधे विषयी भवति। अत्र अन्विताभिधानवादिनां प्राभाकराणामाशयस्तु अन्यरूपः, तथा हि,—पदाधारा हि शक्तिः अन्वयस्वरूपवाक्यार्थेऽपि वर्त्तते, आवापोद्वापादिव्यवहारेण

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ज्ञातान्वयस्यैव विषयीकरणात् तत्र एव शक्तिग्रहात्। तथा हि,—"देवदत्त! गाः पालय" इति उत्तमवृद्धनिर्देशात् मध्यमवृद्धेन सच्चार्य्यमाणां सास्नादिसमन्वितां व्यक्तिं दृष्ट्वा तच्चेष्टादिव्यापारैः तद्वाक्यस्य अनुमित्या तदर्थबोधकतां निर्णीय, अनन्तरं "गाः पालय, अश्वं निःसारय" इति वाक्यप्रयोगे गोरक्षणमश्वतरनिःसारणञ्चालोक्य अन्वयव्यतिरेकाभ्यां क्रियापदार्थसमन्वितकारके कारकपदस्य कारकपदार्थविशिष्टायां क्रियायाञ्च क्रियापदस्य शक्तिं किञ्चिज्ज्ञो बालकः आकलयति। अथ पुनः प्रयोगावसरे प्रागेव तस्य समन्वितार्थबुद्धिरुत्पद्यते। न च प्रथमतः बालस्य वृद्धव्यवहारात् ज्ञानदशायां तथाबोधसत्त्वेऽपि पश्चात् गौरवभिया अन्वयांशः परित्यज्य एव इति वाच्यं, प्राक् गृहीताया अन्वयशक्तेरुपजीव्यतया तत्परित्यागासम्भवात्। वृत्तित्वादिविशेषरूपमव आकाङ्क्षादिभिः प्रकाश्यते, एवं वाक्यार्थो नापदार्थः इति। एतन्न मनोरमं, तथा हि,—प्रथमव्यवहारदशायाम् अन्वितत्वेन शक्तिग्रहे सत्यपि विशिष्टान्वयबोधे आकाङ्क्षादेः कारणताया अवश्याङ्गीकरणीयत्वात्, तथा च अंशकस्य भागं विशेषाकारेण तैरपि अवश्यं स्वीकार्य्यमिति दिक्।

इत्यशेषशास्त्राटवीसञ्चारपञ्चानन-पण्डितकुलपतिना बि, ए, उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां पण्डितश्रीआशुबोधविद्याभूषण-पण्डितश्रीनित्यबोधविद्यारत्नाभ्यां प्रतिसंस्कृतायां विमलाख्यायां साहित्यदर्पणव्याख्यायां द्वितीयः परिच्छेदः ॥ २ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## तृतीयः परिच्छेदः ।

अथ कोऽयं रसः ? इत्युच्यते,—

**विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा ।**
**रसतामेति रत्यादिः स्थायिभावः सचेतसाम् ॥३३॥**

विभावादयो वक्ष्यन्ते। सात्त्विकाश्चानुभावरूपत्वात् न पृथगुक्ताः। व्यक्तो दध्यादिन्यायेन रूपान्तरपरिणतो व्यक्तीकृत एव रसः, न तु दीपेन घट इव पूर्वसिद्धो व्यज्यते। तदुक्तं लोचनकारैः,—"रसाः प्रतीयन्त इति तु ओदनं पचतीतिवद्-व्यवहारः" इति। अत्र च रत्यादिपदोपादानादेव स्थायित्वे प्राप्ते पुनः स्थायिपदोपादानं रत्यादीनामपि रसान्तरेषु अस्थायित्व-प्रतिपादनार्थं, ततश्च हासक्रोधादयः शृङ्गारवीरादौ व्यभिचारिण एव। तदुक्तं,—"रसावस्थः परं भावः स्थायितां प्रतिपद्यते" इति। (क)

---

(क) काव्यलक्षणरूपैककार्य्यानुकूलत्वसङ्गत्या वाक्यनिरूपणानन्तरं रसं निरूपयितुमाह, अथेति।—काव्यनिरूपणानन्तरम्। अयं—काव्यलक्षणघटकः इत्यर्थः। विभावेनेति।—विभावेन अनुभावेन तथा सञ्चारिणा ; व्यक्तः,—प्रकटितः। रत्यादिः,—रतिहासादिरूपः स्थायिभावः। सचेतसां—सामाजिकानाम्। रसतां—रसरूपत्वम्। एति—प्राप्नोति, रसरूपेण परिणतिं गच्छतीत्यर्थः। रत्यादेर्नायकादिनिष्ठत्वेऽपि तादृशकाव्यार्थभावनया सामाजिकनिष्ठत्वं जायते इत्याशयः। यद्यपि "विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः" इत्यादिना सात्त्विकानामपि रसघटकत्वं निरूपितं, तदपि तेषाम् अनुभावरूपत्वात् न पृथक् निर्देशः इत्याह,—सात्त्विका इति।—स्तम्भस्वेदादय इत्यर्थः। दध्यादीति।—अत्रादिपदेन प्रपाणकरसादीनां परिग्रहः। रूपान्तरेति।—रूपान्तरं विभिन्नस्वरूपं परिणतः प्राप्त इत्यर्थः ; यद्वा,—रूपान्तरं परिणतं निष्पन्नं यस्य स तथा ; अग्न्याहितादिवत् क्तान्तस्य प्र-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

निपातः। यथा दुग्धमम्लयोगेन रूपान्तरपरिणतं सत् दधीत्युच्यते, यथा वा आमिक्षा कर्पूरखण्डमरिचादियोगेन रूपान्तरपरिणता प्रपाणकमुच्यते, तद्वत् रत्यादि स्थायिभावः विभावादियोगेन रूपान्तरपरिणतश्चिदानन्दचमत्कारस्वरूपं प्राप्तः इति परिणामवादिनां मतम्। वासनासनङ्गीकुर्व्वतां मतमाह, व्यक्तीकृत इति।—ज्ञान-विषयतामापन्न इत्यर्थः। एवकारेण वस्तुसत्त्वव्यवच्छेदः, चिरविनष्टस्यापि ज्ञान-विषयत्वसम्भवादिति भावः। रसस्य पूर्वसिद्धता नास्तीत्याह, न त्विति।—दीपो यथा पूर्वसिद्धान् घटादिपदार्थान् प्रकाशयति, न तथा विभावादयः रसमित्यर्थः। उक्तमर्थं सदृष्टान्तप्राचीनसंवादेन प्रमाणयति, तदुक्तमिति।—ओदनम्—अन्नं, न खलु ओदनं पच्यते, अपि तु तण्डुल एव; पक्वान्नस्यैव ओदनत्वात्; किन्तु तथापि "ओदनं पचति" इति यथा व्यवह्रियते, तद्वत् "रसाः प्रतीयन्ते" इति व्यवहारः। रत्यादिप्रतीतिविशेषस्यैव रसत्वादिति भावः। यद्यपि रत्यादीनां नायकादिनिष्ठतया पूर्वसिद्धत्वमस्त्येव, तथापि सामाजिकनिष्ठतया ज्ञानात् पूर्व्वम् इह असत्त्वं विवक्षितम्। सामाजिकनिष्ठः एव रसः; स च काव्यार्थभावनासमुद्भवस्तत्क्षणमनुभूयमान एव, तस्मान्नास्य पूर्वसिद्धत्वमिति विभाव्यम्। ननु "रतिर्हासश्च" इत्यादि वक्ष्यमाण-कारिकया रत्यादीनां स्थायित्वस्य प्रतिपादिततया अत्र स्थायिपदं निरर्थकमित्याशङ्क्य समाधत्ते, अत्र चेति।—रसलक्षणे चेत्यर्थः। रसान्तरेष्विति।—व्यभिचारित्वेन इति शेषः। रसावस्थ इति।—रसोऽवस्था अवस्थानं स्वरूपं यस्य तादृशः, रस-पदवीमापन्न इत्यर्थः, न तु कदाचिदनुभूयमानः; रसस्य व्यापकत्वादिति भावः; रत्यादिरिति शेषः। अत्र परमिति मान्तमव्ययम् एवकारार्थकं, रसेषु अवस्थान-स्थानात्। स्थायितां—स्थायी रत्यादिः रसः, न तु व्यभिचारी, तत्तां व्यापकत्व-मित्यर्थः। प्रतिपद्यते—लभते।

एवम्भूते चास्मिन् काव्यस्यात्मभूते रसे स्वरूपनिरूपणपरस्य मूलीभूतस्य "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति भरतसूत्रस्य व्याख्यानाख्याने विवद-मानानां रसविदां बहुधा मतभेदाः परिलक्ष्यन्ते, ते चात्र प्रकृतोपयोगितया सुकु-मारमतीनामन्तेवासिनां बोधसौकर्य्यार्थमुल्लिख्य विचार्य्यन्ते,—तेषु प्रथमतस्तावत् भट्ट-लोल्लटप्रभृतयः सूत्रमिदमेवं व्याचक्षते; तथाहि,—"रत्यादिस्थायिभावानां हि जन्यजनक-बोध्यबोधक-पोष्यपोषकभावरूपसंसर्गैर्यथाक्रमं विभावानुभावसञ्चारिभिः सह, संयोगात् सम्बन्धात्, रसस्य शृङ्गारादेः, निष्पत्तिः उद्भवो विकाशः पोषणञ्च आस्वाद इत्यर्थः; तथा हि, नाट्येनाभिनयेऽनुकरणीयस्य दुष्मन्तादेः ललनाकुलललामभूत-अलोकसामान्यरूपलावण्यवैरेख्येन शकुन्तलादिना आलम्बनविभावेन रत्यादि

स्थायिभावः समुत्पाद्यते, स एव तदीयाननुरूपरूपलावण्यसन्दर्शनोद्यानविहरण-वासन्तानिलाहतिप्रभृतिभिरुद्दीपनविभावैरुद्दीपनां गमितः, भ्रूविक्षेपकटाक्षपाता-दिभिरनुभावैश्च लोकानुभवगोचरतां नीतः, तथा व्यग्रतादिभिर्व्यभिचारिभावैः पोषितः रसपदवाच्यतां लभते। स एव च अभिनेतरि तौसादृश्यवशेनाध्यास्यमानः दर्शकानां चेतश्चमत्कुरुते" इति। तथा च अयं भावः,—अरजतीभूतायामपि शुक्तौ उभयगतचाकचक्यसन्दर्शनेनाज्ञानात् रजतत्वारोपे तस्या अपि अर्थक्रियाकारितया यथा तत्र प्रवृत्तिर्जायते, तथा शकुन्तलादिगोचरानुरागात्मिका दुष्मन्तादेः रतिरभि-नेतरि अवर्त्तमानाऽपि तस्य अभिनयपाटववशेन तत्स्थत्वेनावगम्यमाना रसिकसामा-जिक-चेतश्चमत्कुर्व्वती रसरूपतामाधत्ते। न च तद्भिन्नत्वसमानाधिकरणतद्गतभूयो-धर्म्मवत्त्वरूपसादृश्यस्य भेदगर्भत्वेन सादृश्यज्ञानकाले भेदबुद्धेरवश्यम्भावात् बाधसत्त्वे कथमभिनेतरि सादृश्यज्ञानप्रयुक्तः दुष्मन्तत्वाद्यारोपः सामाजिकानामिति वाच्यं, स्वरूपतो भेदस्य सत्त्वेऽपि अभिनेतुरभिनयपाटवरूपदोषवशेन तदानीं तस्य अप्रतीतेरित्येतदतिविशदमपि मतं नास्मभ्यं रोचते; एतन्मते अभिनेतर्य्येव रसोत्पत्तिकथनेन दर्शकेषु तदभावेन तेषां तत्तच्चित्तचमत्कारस्य कथमप्यसम्भवात्। न च कथमपि तत्प्रतीतिरेव चित्तचमत्कारानुविधायिनी, यत्रकुत्रचित् प्राकृतिक-शृङ्गारादिदर्शनादपि तदुत्पत्त्यापत्तेः। न च तदसत्वेऽपि कदाचित्स्वकीयानुभव-बलादारोपात् तथा भविष्यति इति वाच्यं, चन्दनानुलेपसमुत्थसुखसम्पत्तेरारोपित-चन्दनादावसम्भवदर्शनात्, यथाकथञ्चित् तथाकल्पनेऽनुभवविरोधाच्च।

श्रीशङ्कुकस्तु तत्सूत्रम् अन्यथा व्याचचाणः स्वमतमन्यथा प्रकटयति; तथाहि,— "रत्यादिस्थायिभावानां लावण्यवल्ललनादिरूपालम्बनविभावेन काननविहरणाद्युद्दीपन-विभावेन कटाक्षविक्षेपादिनाऽनुभावेन व्यग्रतादिव्यभिचारिभावेन च अनुमाप्यानुमापक-त्वात्मकसंसर्गेण रसस्य शृङ्गारादेः निष्पत्तिः अनुमित्यात्मिका उत्पत्तिरित्यर्थः। तथा चायं भावः,—लोके हि मिथ्याज्ञानसंशयादिभेदेन बहुधा प्रतीतिभेदः परिदृश्यते; यत्रोत्तरकाले बाधः समुत्पद्यते तदेव मिथ्याज्ञानमित्युच्यते; यत्र तु असौ धीर्विरुद्धो-भयकोटिका स्यात्, सैव संशयात्मिकेत्यभिधीयते। प्रकृते हि एतदुभयधीविलक्षणा गवये "गौरयम्" इतिवत् अभिनेतरि "दुष्मन्तोऽयम्" इति बुद्धिः प्रथमतस्तमेवाभि-नेतारं पक्षत्वेन विषयीकरोति। न च गवये गोबुद्धेरुत्तरकालिकबाधज्ञानबाध्यतया कथं तत्सादृश्येनाभिनेतरि दुष्मन्तादित्वेन अबाधिता प्रतीतिरिति वाच्यं, तत्र तत्र ज्ञाने क्वचित् पश्चाद्बाधदर्शनेऽपि प्रकृते अभिनेतृनैपुण्यदोषवशात् भेदग्रहाभावेन उत्तरकालेऽपि बाधानवतारस्य स्फुटत्वात्। ततश्च पक्षीभूतेऽभिनेतरि शिक्षाऽभ्यासकृताभिनय-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नैपुण्येन वास्तवरूपेणैव प्रदर्शितस्य "गात्रेषु चन्दनरसो हृदि शारदेन्दुरानन्द एवं हृदये मम यस्त्वमासीः। तत्त्वां निकामकमनीयमकाण्ड एव कालेन जीवितमिवोद्धरता हतोऽस्मि ॥" "सा पुनर्मम प्रथमदर्शनक्षणात् प्रभृति अमृतवर्त्तिरिव चक्षुषो-रतिशयानन्दमुत्पादयन्ती अयस्कान्तमणिशलाकेव लोहधातुरन्तःकरणमाक्रष्टवती" इत्यादिरसवत्काव्याभिनयस्य तात्त्विकत्वेनानुसन्धानात् तस्मिन्नेव अनुकृतिमहिम्ना समुत्पादितस्य भ्रूविक्षेप-रोमाञ्चादेरनुभावस्य उत्कण्ठादिव्यभिचारिभावादेश्चावि-र्भावदर्शनाच्च तत्तद्गोचररत्यादिसाधकं विभावादिहेतुत्रयं प्रतीयते। ततश्च तत्त्वतोऽतत्स्थत्वेनातत्साधकैरपि तत्स्थत्वेन दर्शितैस्तैर्लिङ्गैस्तस्मिन्नभिनेतरि एव पूर्वे रत्यादिः स्थायिभावः सामाजिकैरनुमीयते, तथा हि,—"दुष्मन्तोऽयं शकुन्तलागोचर-रतिमान् तदाद्यालम्बनविभाव-वसन्ताद्युद्दीपनविभाव-स्वेदरोमाञ्चाद्यनुभाव-व्यग्रतादि-सञ्चारिभावादिमत्त्वात्" इत्ययमनुमानप्रकारः। तत्र सामान्यव्याप्तिस्तु,—"यो यदा-ऽऽलम्बनविभाववत्त्वे सति यद्विषयकानुभावसञ्चारिभाववान् स तद्गोचररतिमान्" इति। एतया चानुमित्या गोचरीकृतो रत्यादिः रसपदवाच्यतामाधत्ते। तादृशानुमितिश्च सामाजिकानां भवतीति तेष्वेव रस इति व्यवह्रियते इति रतेरनुमितिरेव रस-निष्पत्तिरिति श्रीशङ्कुकस्याशयः। तदपि युक्त्यसहत्वेन मनो नास्माकं रमयति, सर्व्वस्यैव चित्रवस्तुनः प्रत्यक्षधीरेव चित्तचमत्कारविधायिनी, नानुमितिरिति सर्व्ववादिसिद्ध-सिद्धान्तस्य विरोधिन्यामस्यां कल्पनायामनुभवविरोधात्, सूत्रस्यास्य प्रतीत्यनुगतव्याख्या-सम्भवे प्रतीतिविरुद्धाभिनवकल्पनायां मानाभावाच्च।

तत्रैव भट्टनायकेनापि मतान्तरे दोषप्रदर्शनपुरःसरमस्य स्वमतानुसारि व्याख्यान-माख्यायते, तथाहि,—"अभिनेतृगतत्वेन रतिरनुमीयते इति तु न समीचीनं, तदानीं दुष्मन्तादेरसत्तया तद्वृत्तिरत्यादेरपि सुतरामसम्भवेन स्वरूपतोऽविद्यमानस्य अनुमिति-गोचरत्वासम्भवात्। भवतु वा रत्याः असत्या अप्यनुमितिः, तथाऽपि अभिनेतृगतत्वे-नानुमितायां अपि तस्याः सामाजिकेऽसत्त्वेन तच्चित्तचमत्कारानुपधायकत्वाच्च। अतो विभावादिभिः संयोगात्—भोज्यभोजकत्वसंसर्गात्, रसस्य—शृङ्गारादेः, निष्पत्तिः,—भुक्तिरिति तदर्थः। अयमाशयः,—शब्दस्य शक्त्याख्यव्यापारवत् काव्यादेरपि भावकत्व-भोजकत्वाभिधेयं व्यापारद्वयं स्वीक्रियते। तत्रादौ काव्यार्थबोधे सति तयोराद्यो भाव-कत्वाख्यो व्यापारः शकुन्तलाऽऽलम्बनविभावां दुष्मन्तादिरतिं तत्तद्विशेषधर्म्मपरिहारेण सामान्यतो रतित्वादिनैवोपस्थापयति, द्वितीयेन तु भोजकत्वाभिधेयेन तथैव साधा-रणत्वमापादितेन विभावादिना सहकृता रतिः सामाजिकैः उपभुज्यते इति तादृशी रतेर्भुक्तिरेव रसनिष्पत्तिः" इति। नैतदपि विचारसहम्; सिद्धान्तानुसारि

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अस्य स्वरूपकथनगर्भं आस्वादप्रकारः कथ्यते। (ख)—

सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः॥
लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः।
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः॥
रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते॥३४॥(ग)

---

रीत्यैव सर्व्वसमञ्जससम्भवे अतिरिक्तस्य अप्रसिद्धस्य यथोक्तव्यापारद्वयस्य कल्पनायां गौरवात् मानाभावाच्च। एतेष्वभिनवेष्वपि रसविदां मतविशेषेषु कथमपि परितृप्तिमलभमाना नवीनाः प्रतिभाप्रभयाऽभिनवयाऽभिनवस्यैव पन्थानमाविष्कुर्व्वन्तस्त्वेवमाहुः, तथाहि,—काव्यप्रणेत्रा अभिनेत्रा वा स्वकृतिनैपुण्येन विभावानुभावादिषु प्रकटीकृतेषु प्रथमतः दुष्मन्तादौ शकुन्तलादिगोचरायां रतौ व्यञ्जनामहिम्ना गृहीतायां, शिक्षापाटवकृतस्य तत्तद्विषयकसामाजिकभावनाविशेषरूपदोषस्य अलौकिकशक्तिमाहात्म्येन तस्मिन्नभिनेतर्य्येव, सादृश्यज्ञानरूपदोषवशेन रज्जौ सर्प इव समुद्भूयमानोऽनिर्वाच्यः साक्षिमात्रैकवेद्यः रत्यादिरेव रसरूपेण उत्पद्यते। सर्व्वत्र शुक्तिकादिदृष्टान्तेन दोषविशेषवशेन रजतादिरिव अन्योत्पत्तिः सुसमाधेया इति सर्व्वमवदातम्।

(ख) रत्यादिर्यत्स्वरूपं प्राप्य रसो भवति, तद्दर्शयन् तत्र आस्वाद एव प्रमाणमिति तन्निरूपणं प्रक्रमते, अस्येति।—रसस्येत्यर्थः। स्वरूपेति।—स्वरूपं लक्षणं, तस्य कथनं वर्णनं, गर्भे मध्ये, यस्य तादृशः। आस्वादप्रकारः,—अनुभवप्रणाली। कथ्यते—निरूप्यते।

(ग) सत्त्वोद्रेकादिति।—सत्त्वस्य वक्ष्यमाणरूपस्य, उद्रेकात् उद्गमात्। कैश्चित् न तु सर्वैरिति भावः। प्रमातृभिः,—विद्वद्भिः। अखण्डेति।—अखण्डः पूर्णः, स्वप्रकाशः स्वेन आत्मना प्रकाशते इति स्वप्रकाशः, न तु कोऽप्यस्य प्रकाशकः, यथा ज्ञानानन्तरं स्वगोचरं घटादिकं प्रकाशयति, तथा रसः एव आत्मानं प्रकाशयति इति भावः, आनन्दचिन्मयः आनन्दसंवलितविभावादिसंविदात्मकः। वेद्यान्तरेति।—वेद्यान्तरस्य अन्यस्य ज्ञेयस्य, स्पर्शेन सम्पर्केण, शून्यः अनवच्छिन्नप्रवाहः, रसाऽऽस्वादकाले अन्यज्ञानस्यासद्भावादिति भावः। अत एव ब्रह्मास्वादसहोदरः,—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत्युक्तप्रकारो वाह्यमेयविमुखतापादकः कश्चनाऽऽन्तरो धर्मः सत्त्वं, तस्योद्रेकः,—रजस्तमसी अभिभूय आविर्भावः। अत्र च हेतुस्तथाविधालौकिककाव्यार्थपरिशीलनम्। अखण्ड इत्येक एवायं विभावादिरत्यादिप्रकाशसुखचमत्कारात्मकः। अत्र हेतुं वच्यामः। स्वप्रकाशत्वाद्यपि वच्यमाणरीत्या। चिन्मय इति स्वरूपार्थे मयट्। चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्यायः। तत्प्राणत्वञ्च (घ) अस्मद्वृद्धप्रपितामहसहृदय-

ब्रह्मणः परमात्मनः, आस्वादस्य साक्षात्कारस्य, सहोदरः सदृशः, [ परमात्मज्ञानकाले ब्राह्ममात्रं प्रकाशते, रसे तु विभावादिकमपीति भेदात्सहोदरत्वमुक्तमिति बोध्यम् ]। लोकोत्तरेति।—लोकोत्तरः अलौकिकः, यश्चमत्कारः चित्तविकारः, स एव प्राणः जीवनभूतो यस्य तादृशः, नायकादीनां नायकादिरत्यादिषु लौकिकचमत्कारस्यैव सम्भवात्, अस्य तु सामाजिकनिष्ठस्य अलौकिकत्वमिति भावः। अयम्—उक्तस्वरूपो रसः। स्वाकारवत्—स्वदेहवत् अभिन्नत्वेन—तादात्म्येन, आस्वाद्यते—अनुभूयते ; यथा आत्मनो भिन्नोऽपि देहः "अहं स्थूलः अहं कृशः" इत्यादिभेदोल्लेखाभावेन प्रतीयते, तथा रसोऽपि नायकादिनिष्ठतया भिन्नोऽपि "रामोऽहं सीताविषयकरतिमान्" इत्येवमात्मनिष्ठतया ज्ञातृज्ञानभेदोल्लेखाभावेन आस्वाद्यते; घटादिज्ञाने जाते "अहं वेद्मि" इति यथा ज्ञातृज्ञानभेदः प्रतीयते, तथाऽत्र नेति भावः। सत्त्वं निरूपयति, रज इति।—अनुत्कृष्टमनोधर्मविशेषः रजः, निकृष्टमनोधर्मविशेषः तमः, ताभ्याम्। अस्पृष्टं—सम्पर्करहितम्। मनः,—मानसी धर्मविशेष इत्यर्थः। इह—रसनिरूपणप्रसङ्गे इत्यर्थः। सत्त्वं—सत्त्वोद्रेकादिति पूर्व्वोक्तसत्त्वपदार्थः। उच्यते—कथ्यते।

(घ) कारिकाऽर्थमेव विवृणोति, इत्युक्तेति।—उक्तप्रकारः,—कथितरूपः। वाह्येति।—वाह्येभ्यः लौकिकेभ्यः, मेयेभ्यः वेद्येभ्यः, या विमुखता वैमुख्यं, ज्ञानानुकूलव्यापाराभाव इति यावत्, तस्य आपादकः प्रयोजकः, ज्ञानानुकूलव्यापारस्य हृत्मनोयोगः, यस्मिन् सति वाह्यज्ञानं न तिष्ठति तथोक्त इति भावः। कश्चन—अनिर्दिष्टरूपः। आन्तरः,—मानसः। धर्म्मः,—गुणविशेषः। सत्त्वं नाम गुण इत्यर्थः। तस्य—तथोक्तस्वरूपस्य। रजस्तमसी—रजस्तमोनामानौ कामक्षोभादिवीजभूतौ मानसधर्म्मौ। अभिभूय—तिरस्कृत्य स्वकार्य्याक्षमे विधाय, नितान्तं निःसार्य्येति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

गोष्ठीगरिष्ठकविपण्डितमुख्यश्रीमन्नारायणपादैरुक्तम् । तदाह धर्म्मदत्तः स्वग्रन्थे,—

"रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते ।
तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः ॥
तस्मादद्भुतमेवाह कृती नारायणो रसम् ॥" इति (ङ)

यावत् । आविर्भावः,—प्रतिबन्धकाभावेन स्वकार्य्यक्षमत्वेनावस्थानम् । अत्र— सत्त्वोद्रेके इत्यर्थः । तथाविधेति ।—तथाविधः सत्त्वोद्रेकापादको योऽलौकिककाव्यार्थो लोकोत्तरविभावादिस्तस्य परिशीलनमत्यन्ताभिनिवेशः । अखण्डपदं विवृणोति, अखण्ड इति ।—विभावादिना पृथक् पृथगननुभूयमानः इति भावः । अयं—रस- इत्यर्थः । विभावादीति ।—विभावादयश्च रत्यादयश्चेति तेषां प्रकाशः संवित्, तेन यत् सुखं, तस्य चमत्कारोऽलौकिकतया अनुभवः, स एवात्मा यस्य तादृशः । ननु मिलिता विभावादयो रसः, तत्कथमस्य अखण्डत्वम् ? इत्यत आह, अत्रेति ।— अखण्डत्वे इत्यर्थः । हेतुं—कारणम् । वक्ष्यामः,—कथयिष्यामः, समूहालम्बनज्ञान- तादात्म्यमेव हेतुरुच्यते । यद्यपि विभावादीनां प्रत्येकस्य खण्डरूपतैव, तथाऽपि प्रपाणकरस इव समूहालम्बनविधया विभावादीनामभेदेन तदा प्रत्ययादेतस्य रस- स्याखण्डत्वं वक्ष्यते । चिन्मय इति ।—[ अत्र स्वरूपार्थे मयट्, न तु "तत्प्रकृतवचने मयट्" ( ५ । ४ । २१ पा० ) इति "अन्नमयो यज्ञः" इतिवत् प्राचुर्य्यार्थे ]। चित्त- विस्तार इति ।—लोकातीतार्थाकलनेन किमेतदिति ज्ञानधाराजनने चित्तस्य दीर्घ- प्रायत्वं चित्तविस्तारः । दृष्टहेतुभ्योऽसम्भविलज्ज्ञानेन हेत्वनुसन्धाने मनोव्यापारणमेव चित्तविस्तारः इति केचित् । विस्मयेति ।—विस्मयः विस्मयशब्दः अपरपर्य्यायः वाचकान्तरं यस्य सः तथोक्तः ; अथवा,—अपरपर्य्यायः अभिन्नः इत्याशयः । तत्प्राणत्वं —चमत्कारसारत्वम् । ( सारता च स्थिरांशत्वेन ज्ञेया )।

(ङ) तामेव धर्म्मदत्तकृतां वृद्धप्रपितामहोक्तिमाह, रसे इति ।—सर्वत्रापि— सर्वस्मिन्नपि, रसे, चमत्कारः,—चित्तविस्तार एव, सारः,—स्थिरांशः प्राण इति यावत्, ( "सारो बले स्थिरांशे च" इत्यमरः )। अनुभूयते—प्रतीयते । तत्— तस्मात् कारणादित्यर्थः ; चमत्कारेति ।—चमत्कार एव सारः यत्र तस्य भावस्तत्त्वं तस्मिन् सति इत्यर्थः । सर्व्वत्र—सर्व्वोऽपि, रसः । अद्भुतः,—लोकोत्तर- स्वरूपः ; यद्वा,—तस्य रसस्य चमत्कारसारत्वं तस्मिन् सति सर्व्वत्र सर्व्वस्मिन् अपि काव्ये रसः अद्भुतो विलक्षणो ग्राम्यत्वाद्यविषयः, स्थित इति शेषः । तस्मात्—एवं



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

केश्चिदिति प्राक्तनपुण्यशालिभिः। यदुक्तं,—"पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिम्" इति। (च) यद्यपि "स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः" इत्युक्तदिशा रसस्यास्वादानतिरिक्तत्वमुक्तं, तथापि "रसः स्वाद्यते" इति काल्पनिकं भेदमुररीकृत्य कर्म्मकर्त्तरि वा (छ) प्रयोगः। तदुक्तं,—"रस्यमानतामात्रसारत्वात् प्रकाशशरीरादनन्यः (ज) एव हि रसः" इति। एवमन्यत्रापि एवंविधस्थलेषु उपचारेण (झ) प्रयोगा

---

स्थितौ सर्व्वत्राद्भुतरससम्भवात्, नारायणः,—नारायणनाम्ना ख्यातः कश्चिदित्यर्थः, कृती—विद्वान्, ("कृती कुशल इत्यपि" इत्यमरः)। रसं—रसमात्रमेवेत्यर्थः, अद्भुतम् एव—अद्भुताख्यमेव, आह—ब्रवीति। अत्र अद्भुतशब्दो न रसविशेषवाचकः, तत्त्वतस्तु सुखमनुभूयमाने रत्याद्यंशनिचये यथायथं शृङ्गारादिव्यपदेशः, तस्य अननुभवे अद्भुतव्यपदेशः इति बोध्यम्।

(च) प्राक्तनपुण्यशालिभिः,—ऐहिकपुण्यस्य एतच्छरीरसुखजननासम्भवादिति भावः। पुण्यवन्त इति।—पुण्यवन्तः,—प्राक्तनपुण्यशालिनः, योगिवत्—योगिन इव, रससन्ततिं—रसस्य सन्ततिः अव्यवच्छिन्नतयाऽनुभवस्तामित्यर्थः; पक्षे—रससन्ततिं परमात्मतत्त्वविस्तारमित्यर्थः, "रसो वै सः" इत्यादिश्रुतौ परमात्मनो रससंज्ञया उल्लिखितत्वादिति भावः; प्रमिण्वन्ति—अनुभवन्ति।

(छ) काव्यार्थेति।—काव्यार्थस्य संभेदात् परिशीलनात्; अथवा—काव्यार्थसम्भेदात् विभावादिमेलकात्। आत्मानन्देति।—आत्मनः स्वस्य आनन्दसमुद्भवः सुखसमुत्पत्तिः, काव्यार्थपरिशीलनजनितानन्दानुभवः स्वाद इति फलितार्थः; अथवा—आत्मा बुद्धिः, आनन्दः सुखं, तयोः समुद्भवो विषयान्तरतिरोधानेनाविर्भावः। काल्पनिकम्—आरोपितम्। उररीकृत्य—अङ्गीकृत्य; रसास्वादयोः कर्म्मक्रियाभावेनोल्लेखो भेदग्रहणमन्तरेण न सम्भवतीति भावः। कर्म्मकर्त्तरि वेति।—रसः स्वयमेव स्वाद्यते, स्वाभिन्नत्वादविषय इति भावः।

(ज) रस्यमानतेति।—रस्यमानता आस्वादः, तन्मात्रस्य न त्वतिरिक्तस्य, सारत्वात् सामाजिकानामुपादेयत्वात्, प्रकाशशरीरात्—संवित्स्वरूपात्, अनन्यः—अभिन्नः, ज्ञानस्वरूपतापन्नः एव रत्यादिः सहृदयसभ्यानां शुद्धानन्दचमत्कारस्वरूपोपादेयत्वात् रस इति निष्कर्षः।

(झ) उपचारेण—आरोपेण, प्रकाशशरीरादनन्य एवेति कथनेन इति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ज्ञेयाः। ननु एतावता रसस्याज्ञेयत्वमुक्तं भवति; व्यञ्जनायाश्च ज्ञानविशेषत्वाद् द्वयोरैक्यमापतितम्। ततश्च, (ञ)—

"स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः।
यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारकात्॥"

इत्युक्तदिशा घटप्रदीपवद् व्यङ्ग्यव्यञ्जकयोः पार्थक्यमेवेति कथं रसस्य व्यङ्ग्यतेति चेत्, सत्यमुक्तम्; अत एवाहुः,—"विलक्षण एवायं कृतिज्ञप्तिभेदेभ्यः स्वादनाख्यः कश्चित् व्यापारः" इति। अत एव हि रसनास्वादनचमत्कारणादयो विलक्षणा एव व्यपदेशा इति अभिधादिविलक्षणव्यापारमात्रप्रसाधनग्रहिलैः अस्माभिः रसादीनां व्यङ्ग्यत्वमुक्तं भवतीति। (ट)

---

(ञ) एवञ्च तादृग्ज्ञानानन्तरं रसास्वादः कथं जायतामुपायाभावादित्यभिप्रायेण शङ्कते, नन्विति।—एतावता—रसस्य विभावादिसमुदायप्रकारस्य रसत्वाङ्गीकारेण। अज्ञेयत्वं—ज्ञानाविषयत्वम्। ननु व्यञ्जनयैव रसास्वादो जायतामित्यत आह, व्यञ्जनायाश्चेति।—विभावादिसमुदायसामर्थ्यस्य चेत्यर्थः। ज्ञानविशेषत्वात्—विशिष्टवैशिष्ट्यज्ञानरूपत्वात्, द्वयोः,—व्यङ्ग्यव्यञ्जनयोरित्यर्थः। यदि रसः ज्ञानविशेषरूपो व्यञ्जना च ज्ञानविशेषरूपा, तदा उभयोस्तुल्यतेति कथं साध्यसाधकत्वम्? इति भावः। ततश्च—द्वयोरैक्यापाताच्च, "कथं रसस्य व्यङ्ग्यता" इति वक्ष्यमाणग्रन्थेनास्यान्वयः।

(ट) द्वयोः पार्थक्ये एव व्यङ्ग्यव्यञ्जकभावः सम्भवतीत्याह, स्वज्ञानेनेति।—सिद्धे अर्थे वस्तुनि सति व्यञ्जकः ज्ञापकः, स्वं व्यञ्जकत्वेनाभिमतं, तस्य ज्ञानेन, अन्यस्य सिद्धस्य अपरस्य अर्थस्य धीहेतुः ज्ञानकारणं व्यङ्ग्यप्रतीतिकरः इत्यर्थः। यथा दीपः स्वज्ञानेन अन्येषां घटपटादीनां ज्ञानहेतुर्भवति। अन्यथाभावे—सिद्धार्थज्ञापकत्वे, अस्य—व्यञ्जकस्य, कारकात्—जनकात् हेतोः को विशेषः? जनको हि कार्य्यमुत्पाद्य प्रकाशयतीति भावः। अयं भावः;—जनको हेतुः असिद्धं वस्तु उत्पादयति, ज्ञापकस्तु सिद्धमेव वस्तु ज्ञापयतीति। इत्युक्तदिशा—एवमुक्तरीत्या, घटप्रदीपवत्—यथा घटं प्रदीपो व्यनक्ति, तद्वत् व्यञ्जको व्यङ्ग्यं व्यनक्ति; अतस्तयोः पार्थक्यं—भिन्नत्वमेव, न तु एकरूपत्वमिति भावः। अत एव—उक्तात् विसंवादादेवेत्यर्थः; आहुः,—कथयन्ति, अभिनवगुप्ताचार्य्यमतानुसारिण इति शेषः। भट्टलोल्लटादयस्तु,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रसस्य व्यङ्ग्यत्वमेव स्वीकुर्व्वन्ति। तथा हि—रामादौ व्यञ्जनया प्रतीयमानो रत्यादि-ज्ञानसम्बन्धेन सामाजिकवृत्तिः रसः, तच्च ज्ञानं "रामः सीताविषयकरतिमान्" इत्याद्याकारकमेव। यथा चिरविनष्टस्यापि यागादेः स्वजन्यापूर्व्वसत्त्वेनैव स्वर्गा-व्यवहितपूर्व्ववर्त्तित्वं कल्प्यते, तथा रत्यादेरतीतस्यापि स्वगोचरज्ञानसत्त्वेनैव सामा-जिकवृत्तित्वं कल्प्यते इत्यवधेयम्। लाघवाद्ग्रन्थकृत् एतस्मिन्नेव सिद्धान्ते "अभिधादि-विलक्षणम्—" इत्यादिग्रन्थेन स्वरसं प्रकाशयिष्यति। अयं—रससाक्षात्कारानुकूलः, कृतिज्ञप्तिभेदेभ्यः,—कृतिः करणं, ज्ञप्तिः ज्ञानानुकूलव्यापारः, तद्भेदेभ्यः तद्विशेषेभ्यः, विलक्षणः,—विभिन्नः, स्वादनाख्यः,—स्वादनाऽभिधेयः, कश्चित्—अनिर्द्दिष्टः, सहृदयानुभवसिद्धः इति यावत्, व्यापारः,—शक्तिविशेषः, येन रसः स्वाद्यते इति भावः। अत एव—विलक्षणव्यापारस्वीकारादेव, विलक्षणाः,—कृतिज्ञप्तिभिन्ना इत्यर्थः, व्यपदेशाः,—व्यवहाराः, उक्तव्यापारस्येति भावः। एवञ्च यथा संयुक्तसमवायेन सुखादिसाक्षात्कारः, तथा आस्वादनाख्यव्यापारेण वक्ष्यमाण-स्ववासनासाक्षात्कारः इति भावः। यथा "भूतलं रजतवत्" इति ज्ञानं शुक्त्यंशे लौकिकं, रजतांशे त्वलौकिकं, तथा रससाक्षात्कारोऽपि वासनांशे लौकिको रत्याद्यंशे उपनीतभानात्मकालौकिक इत्यवधेयम्। ननु वासना तावत् इच्छादिवत् गुणविशेषः एवास्तु, तथा सति संयुक्तसमवायेनैव तद्ग्रहो भविष्यति, किं स्वाद-नाख्यव्यापारेणेति चेत् न, तस्या गुणविशेषत्वे प्रमाणाभावात्। न च लाघवमेव तत्र मानमिति वाच्यं, तत्र सत्तागुणत्वसम्बन्धकल्पने गौरवात्। न च तस्या अदृष्ट-रूपत्वमस्त्विति वाच्यं, तथात्वे साक्षात्कारानुपपत्तेः। नापि ज्ञानेच्छारूपत्वं, प्राक्-नीत्यनेन स्थिरत्वलाभात् ज्ञानेच्छायास्तृतीयक्षणे नाशात्। नापि संस्काररूपत्वं, तस्यातीन्द्रियत्वेन प्रत्यक्षासम्भवात् रसस्य स्मृतित्वापत्तेश्च। ननु तथापि "वासना-वानहम्" इति ज्ञानाकारः स्यादिति चेत् न, प्रथमं नाट्यकाव्यदर्शनश्रवणाभ्यां विभावानुभावयोरुपस्थितिः। एवमाक्षेपेण झटित्येव व्यभिचारि-स्थायिभावयोरुप-स्थितिः। क्वचिच्छब्देनापि तयोरुपस्थितिः। सा च दोषतया वक्ष्यते। ततो वक्ष्यमाणसाधारणीकरणाख्यव्यापारेण सीतादयो मम रामस्य वेति विभावादिचतु-ष्टये प्रत्येकं साधारण्यप्रत्ययः, तदनन्तरं व्यञ्जनया रससमानाकारप्रत्ययः, ततः तत्सहकृतेन स्वादनाख्यव्यापारेण "रामोऽहं सीताविषयकरतिमान्" इत्याकारक-स्ववासनायां रत्याद्यभेदं स्वस्मिन् नायकाभेदमवगाहमानः साक्षात्कारः सम्पद्यते। "भूतलं रजतवत्" इति भ्रमे शुक्तित्वादिकमिव वासनात्वादिकमत्र न भासते इति भावः। "प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते" इति "उत्साहादिसमुदा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ननु तर्हि (ठ) करुणादीनां रसानां दुःखमयत्वाद्रसत्वं न स्यादित्युच्यते,—

करुणादावपि रसे जायते यत् परं सुखम्।
सचेतसामनुभवः प्रमाणं तत्र केवलम् ॥३५॥ (ड)

साधारण्याभिमानतः" इति च वक्ष्यमाणबलादवसीयते। अस्मिन् मते पदार्थान्तरस्य वासनायाः स्वादनादिव्यापारस्य च कल्पने गौरवमसहिष्णुराह, अभिधादीति।—अभिधादिभ्यः अभिधालक्षणातात्पर्याख्येभ्यः, विलक्षणः विभिन्नः, यः व्यापारः व्यञ्जनेत्यर्थः, तन्मात्रस्य प्रसाधने स्थापने, ग्रहिलैः प्रयासिभिः। मात्रपदेन स्वादनादिव्यवच्छेदः। अस्माभिः,—नवीनालङ्कारिकैरित्यर्थः। व्यङ्ग्यत्वं—व्यञ्जनाजन्यबोधविषयत्वम्। यदि ज्ञानसामान्यबुद्धौ व्यञ्जनाया रसस्य च ऐक्यमापतेत्, तथाऽपि ज्ञानविशेषेण ज्ञानविशेषस्यापि व्यञ्जनं दृश्यते; यथा प्रदीपसामान्यज्ञानेन घटादिज्ञानं व्यज्यते, तद्वत् व्यञ्जनया रसो व्यज्यते इति व्यञ्जनाया वक्तृतात्पर्यरूपज्ञानविशेषरूपाया रसस्य आनन्दचिन्मयस्य पार्थक्यमेव सिद्ध्येदिति तु प्राथिकम्; क्वचित् असिद्धार्थानामपि व्यञ्जनात्। यथा—"सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया। हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्॥" इति सन्ध्या सङ्केतकाल इति प्रच्छन्नकामुकं प्रति पद्मनिमीलनेनैव कयाचित् व्यज्यते; इत्यत्र सन्ध्यायाः सङ्केतकालत्वेन असिद्धत्वेऽपि व्यञ्जनागम्यत्वमिति सुधीभिर्विभाव्यम्।

(ठ) ननु तर्हि—रसस्य आनन्दचिन्मयत्वाङ्गीकारे इत्यर्थः।

(ड) नन्वित्यादिना कृतायाः शङ्कायाः समाधानमाह, करुणेति।—करुणादौ अपि शोकभयादिस्थायिभावके इति भावः, आदिपदेन रौद्रभयानकादीनां परिग्रहः। रसे यत्परमत्यन्तं केवलं वा सुखं जायते, तत्र तस्मिन् सुखे सुखानुभवविषये इति यावत्, सचेतसां सहृदयानां विचारशीलानामनुभवः केवलं प्रमाणम्। नन्वित्यादिना समुत्थापितायामाशङ्कायां ग्रन्थकृदुक्तसमाधानं सुकुमारमतीनामवबोधे पर्य्याप्तममन्यमानैरस्माभिः तत् सविस्तरमालोच्य ग्रन्थकृदाशयः स्फुटीक्रियते; तथाहि,—अथ सर्व्वत्रैव रसस्य आनन्दमयत्वाङ्गीकारे शृङ्गारादौ रसे स्थायिभावस्य रत्यादेः यथा नायके दुष्मन्तादौ निर्म्मलालौकिकानन्दसम्पादकता, तथा सचेतसि सामाजिकेऽप्यस्तु, युक्तिपरतन्त्रा वयं तत्र न किमपि पृच्छामः, परन्तु शोकादेर्दुःख-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सम्पादकत्वस्य सर्व्वानुभवपाधिकतया तत्स्थायिभावके करुणादौ कथं तस्य सहृदयचित्तचमत्कारापरपर्य्यायाऽऽनन्दोत्पादकत्वं युज्यते? न च वस्तुभूतस्यैव शोकादेर्लोके दुःखोत्पादकत्वदर्शनात् नायके दुष्मन्तादौ तस्य वास्तविकतया तथात्वेऽपि सामाजिके तस्य कल्पितत्वेन नार्थक्रियाकारित्वमिति वाच्यं, वस्तुतोऽसर्पीभूतेऽपि रज्ज्वादौ अज्ञानकल्पितादवस्तुभूतादपि सर्पादेः त्रासकम्पाद्युत्पत्तिदर्शनात् कल्पितस्यापि अर्थक्रियाकारित्वस्य अपलपितुमशक्यत्वात्, करुणादौ सामाजिके शोकादेः कल्पितत्वेन दुःखाद्यजनकत्वे शृङ्गारादावपि तत्र रत्यादेः कल्पिततया सर्व्वानुभवसिद्धस्य आनन्दस्य अनुत्पत्त्यापत्तेर्दुरुद्धरत्वाच्चेति चेत्, सत्यम्; सहृदयानाम् अनुभवैर्यदि शृङ्गारादिप्रधानकाव्यवत् करुणाप्रधानकाव्यादावपि तुल्यरूपेण आनन्दमात्रं विषयीक्रियते, तदा फलबलेन काव्यादेरेवमभिनवा काचित् शक्तिः कल्प्यते, यस्याः सममेव सहृदयानाम् आह्लादोत्पादकत्वं दुःखोत्पत्तिप्रतिबन्धकत्वञ्च स्यादिति सर्व्वत्र कार्य्यानुरोधित्वात् कारणं कल्पनीयम्। अथ तेषामनुभवैस्तत्रापि आनन्दवत् दुःखमपि विषयीक्रियते, तदा तादृशं प्रतिबन्धकमकल्पनीयमेव, यथायथकारणवशेन उभयोरेवोत्पत्तौ बाधकाभावात्, अनुभवानुसारित्वात् कल्पनीयाः। ननु करुणादिरसस्य सुखवत् दुःखस्याप्युत्पादकत्वे तत्प्रधानकाव्यस्य अनिष्टसाधकतया कृतौ कवीनां श्रुतौ च सामाजिकानां कथं प्रवृत्तिः? प्रवृत्ताविष्टसाधनताज्ञानस्य कारणतया, तदभावात्; प्रत्युत निवृत्तिकारणस्य अनिष्टसाधनताज्ञानस्यैव सत्त्वादिति चेत् न, तत्रापि अनिष्टापेक्षया इष्टस्याधिक्यसम्भवेन सांसारिकेष्टत्वेन प्रवृत्तिसम्भवात्; तथाहि,—सततविषयविषविषमीकृतचेतसः पञ्चतापिनः संसारिणो यथा वह्निःप्रपञ्चं दुःखसाधनं जानन्तोऽपि आपाततः समधिकसुखसाधनतया तदेव कामयन्ते, तथा सामाजिका अपि तादृशं काव्यमिति। आनन्दमात्रकारणत्वपक्षे तु सामाजिकादिप्रवृत्तिर्निर्बाधैव। न चैतल्लोकानुभवविरुद्धकल्पनमिति मन्तव्यं, भक्तिमतां भगवद्गुणानुकीर्त्तनाकर्णनेन अविरलधारेणाश्रुमोचनदर्शनात्, न चास्ति तत्र लेशतोऽपि दुःखस्यानुभूतिरिति सर्व्वानुभवसिद्धात् युक्तिरेव प्रमाणम्। अथ करुणादौ सामाजिकस्य स्वस्मिन् शोकादिमद्रामायभेदाध्यासेऽपि यदि सुखाद्यनुभूतिरप्रत्यूहा स्यात्, तदा स्वप्नावस्थायामपि तथाऽध्यासे सुखमेव समुत्पद्यत, न चैतत्; तत्र दुःखस्यैव सर्व्वानुभवसिद्धत्वादिति चेन्न, इदमेव हि काव्यस्यालौकिकं माहात्म्यं, यत् दुःखोत्पत्तिनिदानमपि शोकादिकं न केवलमेकान्ततः दुःखमेवोत्पादयति, अपि तु सर्वसहृदयहृदयानुभूतिसाक्षिकं परमानन्दसन्दोहमपीयूषस्तुतिप्रपञ्चितेन।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आदिशब्दाद्बीभत्सभयानकादयः। तथापि असहृदयानां सुखमुद्रणाय पक्षान्तरमुच्यते,—

**किञ्च तेषु यदा दुःखं न कोऽपि स्यात्तदुन्मुखः। (ढ)**

न हि कश्चित् सचेतनः (ण) आत्मनो दुःखाय प्रवर्त्तते। करुणादिषु च सकलस्यापि साभिनिवेशप्रवृत्तिदर्शनात् सुखमयत्वमेव।

अनुपपत्त्यन्तरमाह, (त)—

**तथा रामायणादीनां भविता दुःखहेतुता ॥३६॥**

करुणरसस्य दुःखहेतुत्वे करुणरसप्रधानरामायणादिप्रबन्धानामपि दुःखहेतुत्वप्रसङ्गः स्यात्।

ननु कथं दुःखकारणेभ्यः सुखोत्पत्तिः ? इत्याह,—

**हेतुत्वं शोकहर्षादेर्गतेभ्यो लोकसंश्रयात्।**
**शोकहर्षादयो लोके जायन्तां नाम लौकिकाः॥**
**अलौकिकविभावत्वं प्राप्तेभ्यः काव्यसंश्रयात्।**
**सुखं सञ्जायते तेभ्यः सर्वेभ्योऽपीति का क्षतिः॥३७॥ (थ)**

---

(ढ) किञ्चेति।—किञ्च—अपरञ्च। तेषु—करुणबीभत्सभयानकादिषु। यदा—यदीत्यर्थः दुःखं—शोकादिकार्य्यमेव स्यात्। तदित्यादि ; तदुन्मुखः,—करुणादिरसव्यञ्जककाव्यादिश्रवणादौ प्रवृत्तः ; कोऽपि न स्यादित्यन्वयः। करुणादीनां सुखसम्पर्कत्वादेव सर्वेषां तदभिलाषिणी प्रवृत्तिरिति भावः।

(ण) सचेतनः,—सामाजिकः सत्पुरुषसम्बन्धाद्रसास्वादक इत्यर्थः।

(त) अनुपपत्त्यन्तरम्—अनिष्टापत्त्यन्तरमित्याशयः।

(थ) हेतुत्वमिति।—लोकसंश्रयात्—लोकः चराचरवस्तुजातं, तस्य संश्रयात् संसर्गात् स्वभावाद्वा। शोकहर्षादेः,—शुगानन्दप्रभृतेः। हेतुत्वं—कारणत्वम्। गतेभ्यः,—प्राप्तेभ्यः वनवासादिभ्यः इति यावत्। लोके—जगति, लौकिकाः,—तत्तल्लोकनिष्ठाः ; शोकहर्षादयः जायन्तामित्यन्वयः ; नाम—सम्भावनायाम्। यथा रामवनवासे रामस्य दुःखं लौकिकमिति भावः। काव्यसंश्रयात्—काव्यसम्बन्धात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ये खलु रामवनवासादयो लोके "दुःखकारणानि" इत्यु-च्यन्ते, त एव हि काव्यनाट्यसमर्पिता अलौकिकविभावन-व्यापारवत्तया कारणशब्दवाच्यत्वं विहाय अलौकिकविभाव-शब्दवाच्यत्वं भजन्ते; तेभ्यश्च सुरते दन्तघातादिभ्य इव सुखमेव जायते। अतश्च "लौकिकशोकहर्षादिकारणेभ्यो लौकिकशोकहर्षादयो जायन्ते" इति लोक एव प्रतिनियमः। काव्ये पुनः "सर्वेभ्योऽपि विभावादिभ्यः सुखमेव जायते" इति नियमान्न कश्चिद्दोषः।

कथं तर्हि हरिश्चन्द्रादिचरितस्य काव्यनाट्ययोरपि दर्शन-श्रवणाभ्यामश्रुपातादयो जायन्ते? (द) इत्युच्यते,—

**अश्रुपातादयस्तद्वद् द्रुतत्वाच्चेतसो मताः ॥ ३८ ॥**

तर्हि कथं काव्यतः सर्वेषामीदृशी रसाभिव्यक्तिर्न जायते! इत्यत आह, (ध)—

---

अलौकिकविभावत्वं—विलक्षणकारणत्वम्। प्राप्तेभ्यः,—अधिगतेभ्यः। तेभ्यः सर्वेभ्यः —लौकिकशोकहर्षनिमित्तेभ्यः वनवासादिभ्योऽपि। सुखं—सुखमेवेत्यर्थः। सञ्जायते —समुद्भवति। इति—इत्येवं कल्पनायामित्यर्थः। का क्षतिः,—का हानिः? [illegible] कापीत्यर्थः।

(द) त एव हीत्यादि।—त एव—वनवासादयो दुःखकारणानि इत्यर्थः। काव्येति।—काव्यनाट्ययोः समर्पिताः अभिनिवेशिताः सन्तः। अलौकिकेति।— अलौकिकं विलक्षणं यत् विभावनं रत्यादेरास्वादाङ्कुरयोग्यतानयनं, तदेव व्यापारः, तद्वत्तयेत्यर्थः। कारणशब्दवाच्यत्वं—कारणशब्दप्रतिपाद्यत्वम्। विहाय—त्यक्त्वा। अलौकिकेति।—अलौकिकः विलक्षणो यः विभावादिशब्दः, तद्वाच्यत्वं—तत्प्रति-पाद्यत्वम्। भजन्ते—प्राप्नुवन्ति। प्रतिनियमः,—स्थितिः। कथं तर्हीति।—तर्हि —करुणादीनां सुखमयत्वस्वीकारे। अश्रुपातादयः,—अश्रुपातदीर्घनिःश्वासप्रभृतयः। आदिपदेन निःश्वासादीनां परिग्रहात्। जायन्ते—प्रवर्त्तन्ते इत्यर्थः।

(ध) अश्रुपातेति।—चेतसः चित्तस्य, द्रुतत्वात् हर्षोद्रेकेण गलितप्रायत्वात् अश्रुपातादयः आविर्भवन्तीति शेषः। तदश्रुपातादिकम् आनन्दसंवलितमेवेति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**न जायते तदास्वादो विना रत्यादिवासनाम्॥२९॥(न)**

**वासना च इदानीन्तनी प्राक्तनी च रसास्वादहेतुः। तत्र यदि आद्या न स्यात्, तदा श्रोत्रियजरन्मीमांसकादीनामपि सा स्यात्। यदि द्वितीया न स्यात्, तदा यद्रागिणामपि केषाञ्चिद्रसोद्बोधो न दृश्यते, तन्न स्यात्। (प) उक्तञ्च धर्म्मदत्तेन,—**

---

तर्हि—यद्येवं सर्वमपि काव्यमाह्लादहेतुः तदा। कथं—केन रूपेण। काव्यतः,—काव्यात्। सर्व्वेषां—साधारणानामित्यर्थः। ईदृशी—एवंविधाऽऽह्लादहेतुभूतेति यावत्। रसाभिव्यक्तिः,—रसास्वादः। न—नैव। जायते—उद्भवति। इत्यतः,—इत्येवमाशङ्कावशात्। आह—उत्तरयति।

(न) परमते रसबोधहेतुत्वे अन्वयव्यतिरेकौ प्रमाणमाह, नेति।—रत्यादिवासनां—रत्यादितादात्म्येन प्रतीयमानां वासनाम्। विना—ऋते। तदास्वादः,—तस्य रसस्य आस्वादः। न जायते न भवति, रत्यादिवासनावन्त एव रसमास्वादयन्ति, नान्ये इति भावः। वासनापदेनात्र संस्कारविशेषः बोध्यते।

(प) यया वासनया वासितान्तःकरणा रसास्वादं लभन्ते, सा वासना पुनर्द्विविधेत्याह, इदानीन्तनीति।—एतज्जन्मसञ्चिता। प्राक्तनी च—पूर्व्वजन्मार्ज्जिता च। मिलितैव रसास्वादं प्रति हेतुरिति भावः। तत्र— तयोर्द्विविधयोर्वासनयोर्मध्ये। आद्या—इदानीन्तनी वासनेत्यर्थः। न स्यात्—रसास्वादहेतुत्वेनाभिमता न भवेत्। तदा—तर्हि। श्रोत्रियेति।—श्रोत्रियाः वैदिका ये जरन्तो वृद्धा मीमांसकाः कर्म्मजड़ास्ते आदौ येषां तेषामपि। सा—रसाभिव्यक्तिरित्यर्थः। [स इति पाठान्तरे तु—रसास्वाद इत्यर्थः] स्यात्—भवेत्। यदि वा द्वितीया—प्राक्तनीत्यर्थः। न स्यात्—रसास्वादहेतुत्वेनाभिमतेति शेषः। तदा—तर्हि। रागिणाम्—अनुरागवतामपि। केषाञ्चित्—जनानाम्। रसोद्बोधो न दृश्यते इति यत्, तत् न स्यात् इत्यन्वयः। तदिति।—सामान्याभिप्रायेण नपुंसकम्। ननु श्रोत्रियादीनां प्राक्तनवासनासत्त्वे किं प्रमाणमिति चेन्न, तदभावे प्रमाणासत्त्वेनैव तत्सिद्धेः। न च फलाभाव एव तत्र मानमिति वाच्यम्, इदानीन्तनवासनाव्यतिरेकस्यैव फलाभावप्रयोजकत्वोपगमेनोपपत्तौ तदभावस्य तत्प्रयोजकत्वकल्पनाया अन्याय्यत्वात्। वस्तुतस्तु इदानीन्तनवासनायां प्रमाणं नास्ति। न च रागाद्यन्यथाऽनुपपत्तिरेव मानमिति वाच्यं, तस्या रागादिं प्रत्यजनकत्वात् इष्टसाधनताज्ञानादिनैव तत्सिद्धेः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"सवासनानां सभ्यानां रसस्यास्वादनं भवेत् ।
निर्वासनास्तु रङ्गान्तः काष्ठकुड्याश्मसन्निभाः ॥" इति(फ)।

ननु कथं रामादिरत्याद्युद्बोधकारणैः सीतादिभिः सामाजिकरत्याद्युद्बोधः ? (ब) इत्युच्यते,—

**व्यापारोऽस्ति विभावादेर्नाम्ना साधारणीकृतिः ।**
**तत्प्रभावेण यस्यासन् पाथोधिप्लवनादयः ॥**
**प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते ॥४०॥ (भ)**

---

(फ) सवासनानामिति ।—सवासनानां वासनया इदानीन्तन्या प्राक्तन्या चेत्युभयविधया मिलितया सह वर्त्तन्ते ये तेषां तथाभूतानाम् । सभ्यानां—सहृदयानाम् । रसस्य आस्वादनम्—अनुभवः भवेत् । निर्वासनाः,—निरस्तवासनास्तु सामाजिकाः । रङ्गान्तः,—रङ्गभूमिमध्ये । काष्ठं—नीरसदारु, कुड्यं—भित्तिः, अश्म—प्रस्तरं, तत्सन्निभाः,—काष्ठादिवत् रसबोधरहितास्तिष्ठन्तीत्यर्थः ।

(ब) नन्विति ।—रामादीति ।—रामादीनां रत्यादेः उद्बोधः तस्य कारणैः हेतुभिः सीतादिभिः । सामाजिकरत्याद्युद्बोधः,—सामाजिकरत्यादिवासनोद्बोधः, तेषां तं प्रति असाधनत्वादिति भावः ।

(भ) सामाजिकानां सजातीयरत्यादिसाजात्येनापि नायकाद्यभेदावगाहित्वग्रहोपपत्तौ वक्ष्यमाणसमाधानमकिञ्चित्करम् इत्यतः मनुष्यसामाजिकानां सुदुर्लभप्रतिवीरालम्बनोत्साहोद्बोधोऽत्यन्ताऽसम्भवीति तमुपपादयितुं वीररसं दर्शयन् समाधत्ते, व्यापार इति ।—विभावादेः व्यापारः,—सामर्थ्यविशेषः इत्यर्थः ; अस्ति यः नाम्ना साधारणीकृतिः,—स्वाश्रयं साधारणं नायकसामाजिकसम्बन्धिनं करोति उभयसम्बन्धित्वेन प्रतिपादयतीति साधारणीकृतिः साधारणीकरणम्, सामाजिकस्य नायकादेश्चान्योऽन्यमभिन्नत्वप्रत्यायनमिति यावत्, उच्यते इति शेषः । तत्प्रभावेण—तेषां विभावादीनां प्रभावेण सामर्थ्येन, तज्जन्यसाधारण्याभिमानेनेत्यर्थः । यस्य—रामस्य हनुमतः वा । पाथोधिप्लवनादयः,—समुद्रतरणादयः समुद्रलङ्घनादयो वा, आसन् । आदिपदेन रावणनिग्रहादेर्ग्रहणम् । प्रमाता—विद्वान् सामाजिकः । तदभेदेन—तेन रामेण हनुमता वा यः अभेदः भेदाभावः, तादात्म्यमिति यावत्, तेन तदभिन्नतया इत्यर्थः । स्वात्मानं—स्वस्वरूपं, प्रतिपद्यते—प्राप्नोति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ननु कथं मनुष्यमात्रस्य समुद्रलङ्घनादावुत्साहोद्बोधः ? इत्युच्यते,—

**उत्साहादिसमुद्बोधः साधारण्याभिमानतः ।**
**नृणामपि समुद्रादिलङ्घनादौ न दुष्यति ॥४१॥(म)**

रत्यादयोऽपि साधारण्येनैव प्रतीयन्त इत्याह,—

**साधारण्येन रत्यादिरपि तद्वत् प्रतीयते ॥४२॥(य)**

रत्यादेरपि ह्यात्मगतत्वेन प्रतीतौ सभ्यानां व्रीडाऽऽतङ्कादिर्भवेत्, परगतत्वेन तु अरस्यताऽऽपातः । (र)

विभावादयोऽपि प्रथमतः साधारण्येन प्रतीयन्त इत्याह,—

**परस्य न परस्येति ममेति न ममेति च ।**
**तदास्वादे विभावादेः परिच्छेदो न विद्यते॥४३॥(ल)**

---

(म) उत्साहादीति ।—विभावादेः साधारणीकरणव्यापारवशात् नृणामपि साधारण्याभिमानतः हनुमत्प्रभृतिभिः समं तदानीं भेदज्ञाननिवृत्तिपुरःसरं साधारणता—ज्ञानतः, समुद्रादिलङ्घनादौ उत्साहादिसमुद्बोधः उत्साहादीनां सम्यक् उदयः, न दुष्यति उपपद्यते ।

(य) साधारण्येनेति ।—रत्यादिः सीताविषयकरामादेरनुरागादिरपि तद्वत् समुद्रलङ्घनादिवत् साधारण्येन रामाद्यभेदाध्यवसायेन प्रतीयते ज्ञायते सामाजिकैरिति शेषः ।

(र) तत्र हेतुमाह, हि—यत इत्यर्थः । रत्यादेः अपि—किं पुनः रसस्य ? आत्मगतत्वेन—आत्ममात्रनिष्ठत्वेन, प्रतीतौ—अनुभवे, सभ्यानां—सहृदयानां, व्रीडाऽऽतङ्कादिः,—व्रीडा लज्जा, आतङ्कः भयं तदादिः भवेत् । परगतत्वेन—परनिष्ठत्वेन, रामादिनिष्ठत्वेनेति यावत् । तु—किन्तु । अरस्यताऽऽपातः,—रसास्वादोच्छेदः स्यात् । तस्मात् नायकादिभिः सह साधारणताप्रत्ययानन्तरमेव नृणां रसास्वादो जायते इति भावः ।

(ल) परस्येति ।—तदास्वादे—तस्य रसस्य आस्वादे आस्वादनदशायां इत्यर्थः, विभावादेः,—आलम्बनोद्दीपनादेः, परस्य न परस्य इति, मम इति न ममेति च परिच्छेदः,—अवबोधः । न विद्यते—न भवति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ननु तथापि कथमेवमलौकिकत्वमेतेषां विभावादीनाम्? इत्युच्यते,—

**विभावनादिव्यापारमलौकिकमुपेयुषाम् ।**
**अलौकिकत्वमेतेषां भूषणं न तु दूषणम् ॥४४॥ (व)**

आदिशब्दादनुभावनसञ्चारणे । तत्र विभावनं रत्यादेर्विशेषेण आस्वादाङ्कुरणयोग्यतानयनम् । अनुभावनमेवम्भूतस्य रत्यादेः समनन्तरमेव रसादिरूपतया भावनम् । सञ्चारणं तथाभूतस्यैतस्य सम्यक् चारणम् । (श)

विभावादीनां यथासङ्ख्यं कारणकार्य्यसहकारित्वे कथं त्रयाणामेव रसोद्बोधे कारणत्वम्? इत्युच्यते,—

**कार्य्यकारणसञ्चारिरूपा अपि हि लोकतः ।**
**रसोद्बोधे विभावाद्याः कारणान्येव ते मताः ॥४५॥ (ष)**

---

(व) नन्वेतदहष्टचरमित्याह, विभावनेति ।—अलौकिकं—लोकविलक्षणं, विभावनादिव्यापारम् उपेयुषां—प्राप्तवताम्, एतेषां—विभावादीनां काव्यनिवेशितानां सीतादीनाम्, अलौकिकत्वं—लोकोत्तरचमत्कारकारिताशालित्वं, भूषणम्—अलङ्कृतिः, सहृदयानाम् आस्वादाह्लादादिति भावः, न तु दूषणं, परानुरागजननादिति भावः ।

(श) विभावनपदार्थं विवृणोति, विभावनमिति ।—रत्यादेः,—रत्यादिस्थायिभावस्य, विशेषेण—अतिशयेन । आस्वादेति ।—आस्वादस्य अङ्कुरणयोग्यता—अङ्कुरवत् सूक्ष्मरूपेण आविर्भवनानुरूपत्वं, तस्या आनयनं प्रापणमित्यर्थः । अनुभावनपदार्थं विवृणोति, अनुभावनमिति ।—एवम्भूतस्य—आस्वादाङ्कुरभूतस्य, सूक्ष्मरूपेण आस्वादयोग्यतां प्रति नीतस्येत्यर्थः, रत्यादेः,—स्थायिभावस्य, समनन्तरं—तदानीमेव, रसादिरूपतया—रसाद्यात्मना, भावनं—प्रकाशनम् । तथाभूतस्य—रसादिरूपेण भावितस्य इत्यर्थः । एतस्य—रत्यादेः, चारणं—प्रसारणं, विस्तृतिकरणमिति यावत् ।

(ष) कार्य्येति ।—लोकतः,—लोकव्यवहारदृष्ट्या, विभावाद्याः,—विभावानुभावव्यभिचारिणः कार्य्यकारणसञ्चारि(सहकारि)रूपाः । [ अत्र कारणशब्दस्य परनिपातः "अल्पाच्तरम्" ( २।२।३४ पा० ) इत्यनेन बोध्यम् ]। तथा च कारणकार्य्यसञ्चारि(सहकारि)रूपा इत्यर्थः । अपि—व्यपदिश्यन्त इति शेषः । ते—विभा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ननु तर्हि कथं रसास्वादे तेषामेकः प्रतिभासः ? इत्युच्यते,(स)—

**प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते।**
**ततः सम्मिलितः सर्वो विभावादिः सचेतसाम्॥**
**प्रपाणकरसन्यायाच्चर्व्यमाणो रसो भवेत्॥४६॥ (ह)**

यथा खण्डमरिचादीनां सम्मेलनादपूर्व इव कश्चिदास्वादः प्रपाणकरसे सञ्जायते, विभावादिसम्मेलनादिहापि तथेत्यर्थः।

ननु यदि विभावानुभावव्यभिचारिभिर्मिलितैरेव रसः, तत् कथं तेषामेकस्य द्वयोर्वा सद्भावेऽपि स स्यात् ? इत्युच्यते,—

**सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत्।**
**झटित्यन्यसमाक्षेपे तदा दोषो न विद्यते॥४९॥ (क)**

---

वादय इत्यर्थः। रसोद्बोधे—रसास्वादे, कारणान्येव—हेतव एव, न तु कारणकार्य्यसञ्चारिरूपाः ; मताः,—आलङ्कारिकैः स्वीकृता इति भावः।

( स ) पूर्वं कारणसद्भावः पश्चात् कार्य्यनिष्पत्तिरिति स्थितिः। तत् कथं रसास्वादे विभावादीनां यौगपद्यम् ? इत्याह, नन्विति।—तेषां—कारणीभूतविभावादीनाम्, एकः,—अभिन्नः इत्यर्थः, प्रतिभासः,—स्फुरणं,विभावाद्युल्लितरत्यादेरनुभवस्य पौर्व्वापर्य्यव्यपगमादिति भावः।

( ह ) प्रतीयमान इति।—विभावादिः,—विभावानुभावसञ्चारिणः, प्रथमं—रसोद्बोधात् प्रागित्यर्थः, प्रतीयमानः, प्रत्येकं, हेतुः,—रसास्वादकारणम् उच्यते। ततः,—पश्चात्, रसोद्बोधकाले ; सम्मिलितः,—मिश्रितः, सर्वः,—विभावादिः, विभावानुभावव्यभिचारिभावसंवलितरत्यादिरित्यर्थः, प्रपाणकरसन्यायात् प्रपाणकरस इव चर्व्यमाणः आस्वाद्यमानः सन्, सचेतसां—सामाजिकानां, रसः भवेत् रसरूपेण परिणमेदित्यर्थः।

( क ) सद्भाव इति।—विभावादेः,—विभावादिमध्ये, द्वयोः एकस्य वा सद्भावः,—समावेशः, चेत्—यदि, भवेत्, तदा, झटिति—शीघ्रम, अन्यसमाक्षेपे—अन्यस्य अन्ययोः अन्येषां वा समाक्षेपे अध्याहारे, दोषो न विद्यते—नास्ति, न भवेदित्यर्थः ; यत्र विभावोऽस्ति अनुभावसञ्चारिरत्यादयो न सन्ति, तत्र तेषामध्याहारः, यत्र विभावानुभावौ स्तः, सञ्चारिरत्यादयः न सन्ति, तत्रापि तेषामध्याहारः, यत्र तु अनुभावसञ्चारिणौ स्तः, तत्र पुनः अन्येषां पूर्ववत् समाक्षेपः। एवं सर्वत्र।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अन्यसमाक्षेपश्च प्रकरणादिवशात् ; यथा,—

"दीर्घाक्षं शरदिन्दुकान्ति वदनं, बाहू नतावंसयोः
सङ्क्षिप्तं निविडोन्नतस्तनमुरः, पार्श्वे प्रमृष्टे इव ।
मध्यः पाणिमितो, नितम्बि जघनं, पादावरालाङ्गुली
छन्दो नर्त्तयितुर्यथैव मनसः श्लिष्टं तथा स्वं वपुः" ॥ (ख)

अत्र मालविकामभिलषतोऽग्निमित्रस्य मालविकारूपविभाव-मात्रवर्णनेऽपि सञ्चारिणामौत्सुक्यादीनामनुभावानाञ्च नयन-विस्फारादीनामौचित्यादेवाक्षेपः । एवमन्याक्षेपेऽपि ऊह्यम् ।(ग)

"अनुकार्य्यगतो रसः" (घ) इति वदतः प्रत्याह,—

(ख) उदाहरति, दीर्घाक्षमिति ।—मालविकाया वर्णनमिदम् । नर्त्तयितुः,—नृत्याचार्य्यस्य गणदासस्येत्यर्थः, मनसि, यथैव—यदनुरूपमेव, छन्दः,—अभिप्रायः, ("छन्दोऽभिप्राये आशयः" इत्यमरः) श्लिष्टं—संहतं, तथैव, स्वं—स्वकीयं, वपुः,—शरीरं, श्लिष्टम् ; (देहलीदीपकन्यायेनास्य अन्वयः) ; यादृशाङ्गसौष्ठवे सति नर्त्तनं मनोज्ञं भवति, तथाकृतमित्यर्थः । पुत्तलिकानृत्यप्रदर्शकः पुत्तलिकाया अङ्गानि यथा स्वेच्छावशात् द्रष्टॄणां मनोहराणि करोति,तथैव करणीयमिति भावः। तथाहि वदनं—मुखं, दीर्घे—आयते, अक्षिणी—लोचने यस्य तादृशं, तथा शरदिन्दोरिव कान्तिर्यस्य तथाभूतं, बाहू भुजौ, अंसयोः स्कन्धयोः, नतौ विनतौ, उरः,—वक्षःस्थलं,निविडौ घनौ, उन्नतौ वृद्धिं प्राप्तौ स्तनौ यत्र तादृशम्, अत एव सङ्क्षिप्तम्—अल्पायतनं, पार्श्वे प्रमृष्टे—लिप्ते, इव,तत्रत्यानामस्थ्नामलक्ष्यत्वादिति भावः; मध्यः कटिदेशः, पाणिमितः वितस्तिःवेष्टनेन परिमित इत्यर्थः ; जघनं नितम्बि नितम्बविशिष्टं, ["नितम्बि"इत्यत्र"अमितम्ब" इति पाठे—विपुलस्येत्यर्थः ] तथा पादौ चरणौ, अराला भुग्ना, [ उदग्राङ्गुली इति पाठान्तरे तु—उदग्रा उन्नताग्रा ] अङ्गुलयः ययोस्तथाभूतौ । शार्दूलविक्रीडितं वृत्तम् ।

(ग) अन्याक्षेपे—विभावाक्षेपे इत्यर्थः । यथा,—"परिच्छिदितमृणालीम्लानमङ्गं प्रवृत्तिः कथमपि परिवारप्रार्थनाभिः क्रियासु । कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीमभिनवकरिदन्तच्छेदकान्तः कपोलः ॥" अत्र नायिकायाः सम्भोगशृङ्गारस्य आलम्बनविभावो नायकः, तच्चेष्टादिकमुद्दीपनविभावश्च, इत्येतयोः समाक्षेपौ द्रष्टव्य इति ।

(घ) रसस्य नायकादिनिष्ठतां परिहरति, अनुकार्य्येति ।—अनुकार्य्यः,—नायकादिः, तद्गतः,—तन्निष्ठः, न तु सामाजिकवृत्तिरिति भावः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पारिमित्याल्लौकिकत्वात् सान्तरायतया तथा।
अनुकार्य्यस्य रत्यादेरुद्बोधो न रसो भवेत् ॥४८॥ (ङ)

सीतादिदर्शनादिजो रामादिरत्याद्युद्बोधो हि परिमितो लौकिको नाट्यकाव्यदर्शनादेः सान्तरायश्च। तस्मात् कथं रसरूपतामियात्? रसस्य एतद्धर्म्मत्रितयविलक्षणधर्म्मकत्वात्॥ अनुकर्तृगतत्वञ्च अस्य (च) निरस्यति।

---

(ङ) पारिमित्यादिति।—पारिमित्यात्—परिमितत्वात, अनुकार्य्यमात्रगतत्वेन अल्पत्वादिति यावत्, अस्य तु बहुसामाजिकनिष्ठत्वेन व्यापकत्वमिति भावः; लौकिकत्वात्—तत्तल्लोकनिष्ठत्वात, अस्य तु अलौकिकत्वमिति भावः; सान्तरायतया—प्रतिकूलतया। अनुकार्य्यस्य—नायकादेः, रत्यादेरुद्बोधः,—नायिकादिविषयक इति शेषः, रसः न भवेत्। यदि अनुकार्य्यगत एव रसः, तदा सामाजिकाः कथं काव्यदर्शनश्रवणेषु व्यग्रा भवेयुः? तेषामभीष्टरसास्वादप्रत्याशाविरहादिति भावः।

(च) नाट्यकाव्यदर्शनादेः (अत्रादिपदेन श्रवणपरिग्रहः) एतद्धर्म्मत्रितयविलक्षणधर्म्मकत्वात्—एते—पारिमित्य-लौकिकत्व-सान्तरायत्वाख्या ये धर्मास्तेषां त्रिरवयवा न्यस्य तत् त्रितयं ["सङ्ख्याया अवयवे तयप्" (४।२।४२ पा०) इति तयप्] तस्मात् विलक्षणः विपरीतः धर्म्मः यस्य तस्य भावः तत्त्वं तत्तस्मात्, पारिमित्यलौकिकत्वसान्तरायत्वरूपधर्म्मत्रयभिन्नापारिमित्यालौकिकत्वनिरन्तरायत्वरूपधर्म्मशालित्वादिति भावः। अत्र विलक्षणत्वं तदभावव्याप्यत्वमेव। एवञ्च यद्धर्म्माभावव्याप्यो यद्वृत्तिधर्म्मस्तद्धर्म्मस्तद्भेदव्याप्य इति नियमः सम्पद्यते। यथा,—पटवृत्तिधर्म्मः पटत्वं घटत्वरूपधर्म्माभावव्याप्यो भवति, एवं घटवृत्तिधर्म्मो घटत्वमपि पटत्वरूपधर्म्माभावव्याप्यो भवति; तथा—अनुकार्य्यवृत्तिधर्म्मः पारिमित्याद्यपरपर्य्यायोऽनुकार्य्यत्वरूपः, असावपि अननुकार्य्य(रस)त्वरूपापारमित्याद्यपरपर्य्यायधर्म्माभावव्याप्यो बोध्य इति स्थितम्। यथाश्रुतं तु न सम्यक्। तथाहि,—यद्धर्म्मो यद्वृत्तिधर्म्मभिन्नस्तद्धर्म्मस्तद्भेदव्याप्य इति नियमो नोपपद्यते। घटत्वं घटवृत्तिधर्म्मान्तरविलक्षणं, न तु घटभेदव्याप्यमिति व्यभिचारात्। यदि तु यद्वृत्तित्वावच्छिन्नप्रतियोगिताको भेदो विवक्ष्यते तदा नायं दोष इत्यवधेयम्। ननु यद्येवमनुकार्य्यनिष्ठो रसो न स्वीक्रियते, तर्हि अनुकर्तृनिष्ठ एवायं स्वीक्रियताम्? इत्याशङ्क्यानुकर्तृगतत्वञ्चास्य निराकरोति, अनुकर्त्रिति।—अनुकर्त्ता—नटः, तद्गतः तस्य भावः तत्। अस्य—रसस्येत्यर्थः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शिक्षाऽभ्यासादिमात्रेण राघवादेः सरूपताम्।
दर्शयन् नर्त्तको नैव रसस्यास्वादको भवेत्॥४९॥(छ)

किञ्च,—

काव्यार्थभावनेनायमपि सभ्यपदास्पदम्॥५०॥ (ज)

यदि पुनर्नटोऽपि काव्यार्थभावनया रामादिस्वरूपतामात्मनो दर्शयेत्, तदा सोऽपि सभ्यमध्य एव गण्यते।

नायं ज्ञाप्यः स्वसत्तायां प्रतीत्यव्यभिचारतः॥५१॥(झ)

यो हि ज्ञाप्यो घटादिः, स सन्नपि कदाचिदज्ञातो भवति। न ह्ययं तथा; प्रतीतिमन्तरेण अभावात्। (ञ)

---

(छ) शिक्षेति।—नर्त्तकः,—नटः, शिक्षा—गुरुसकाशादुपदेशग्रहणम्, अभ्यासः,—शिक्षितार्थस्य मुहुरनुष्ठानेन संस्कारातिशयः, एत्येतावादी यस्य (नैपुण्यादेः) तन्मात्रेण। अत्र मात्रपदेन काव्यार्थभावनस्य व्यवच्छेदो बोध्यः। राघवादेः,—रामादेः, सरूपतां—तुल्यतां, दर्शयन्—नाट्येन प्रकटयन्, रसस्य आस्वादकः नैव भवेत्।

(ज) ननु यदि नटोऽसौ सहृदयो भवति, तदाऽपि किं तस्य रसास्वादो न स्यात्? इत्याशङ्क्याह,—किञ्चेति। काव्येति।—अयं—अनुकर्त्ता, नट इत्यर्थः। अपि काव्यार्थभावनेन—काव्यार्थस्य परिशीलनेन, सभ्यपदास्पदं—सभ्यानां सहृदयानां, पदं स्थान, प्रतिष्ठेति यावत्, तस्यास्पदमाश्रयभूत इति तथोक्तम् [अजहल्लिङ्गत्वात् क्लीबत्वेन निर्देशः] भवतीति शेषः; सभ्यवत् रसास्वादभाक् जायत इति भावः।

(झ) रसस्य स्वप्रकाशत्वं पूर्व्वमुक्तं, तदेवान्यधर्मत्वखण्डनेन द्रढ़यति, नायमित्यादि।—अयं—रसः, न ज्ञाप्यः,—ज्ञापयितुं शक्यः, जन्यज्ञानविषयो वा। रसस्य जन्यताऽभावोऽग्रिमकारिकया निरूपयिष्यते, नातो जन्यज्ञानविषयः। ईश्वरज्ञानविषयत्वस्य केवलान्वयितया साध्याऽप्रसिद्धिरतो जन्येति। स्वसत्तायां—स्वस्य रसस्य सत्तायां विद्यमानतायां, स्वावस्थाने इत्यर्थः; [अत्र षष्ठ्यर्थे सप्तमी] प्रतीतेः,—ज्ञानस्य, अव्यभिचारतः,—नियमादित्यर्थः, प्रतीतिं विना स्वावस्थानस्याभावात् इति हृदयम्। अन्येषान्तु ज्ञाप्यानां प्रतीतेः पूर्व्वमपि सत्ताऽस्ति, अस्य तु प्रतीतिकाल एवेति ज्ञाप्यलक्षणायोग इति भावः।

(ञ) यो हि—अत्र वीप्सा वेदितव्या, तथाच, यो यो हीत्यर्थः। ज्ञाप्यो

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**यस्मादेष विभावादिसमूहालम्बनात्मकः ।**
**तस्मान्न कार्य्यः ॥ ५२ ॥ (ट)**

यदि रसः कार्य्यः स्यात्, तदा विभावादिज्ञानकारणक एव स्यात्। ततश्च रसप्रतीतिकाले विभावादयो न प्रतीयेरन्। कारणज्ञानतत्कार्य्यज्ञानयोर्युगपददर्शनात् । न हि चन्दन-स्पर्शज्ञानं तज्जन्यसुखज्ञानञ्च एकदा सम्भवति। रसस्य च विभावादिसमूहालम्बनात्मकतयैव प्रतीतेर्न विभावादिज्ञान-कारणकत्वमित्यभिप्रायः । (ठ)

---

घटादिर्लौकिकं पदार्थजातमास्त, सः,—अत्रापि वीप्सा बोद्धव्या ; तथा च स स ज्ञाप्यः पदार्थ इति निष्कृष्ट, सन्नपि—अव स्थितोऽपि, कदाचित्—ज्ञानसामग्र्य-भावदशायाम्, अज्ञातः स्यात् ; तथा च यो यो ज्ञाप्यः, स प्रतीतिं विना कदाचिदव-तिष्ठते, यथा घटादिरित्यभिप्रायः । अत्र ज्ञानाभावकालिकावस्थानाऽभाव एव हेतुः प्रतीतिपथमुपपन्नः । ज्ञानञ्चात्र स्वविषयकमीश्वरज्ञानातिरिक्तमवगन्तव्यम् । नातो हेत्वप्रसिद्धिः । ज्ञाप्यत्वाभावस्य साध्यस्य व्यतिरेकी ज्ञाप्यत्वमेव, निरुक्तहेतुव्यतिरेकश्च ज्ञानाभावकालिकावस्थानं, तयोः सहचारग्रहेण साधने साध्यव्याप्तिं ग्राहयित्वा पक्ष-धर्म्मत्वं ग्राहयति। न त्वयमिति ।—अयं—रसः, तथा—सन्नपि कदाचिदज्ञातः न स्यात् । तत्रापि हेतुमाह, प्रतीतिमिति ।—प्रतीतिमन्तरेण—प्रतीतिं विना तदभाव-प्रसङ्गात् ।

(ट) यस्मादिति ।—यस्मात् एषः,—रसः, विभावादिसमूह एव आलम्बनम् आत्मा यस्य तादृशः, तस्मात्, न, कार्य्यः,—जन्यः ।

(ठ) विभावादीति।—विभावादिज्ञानं कारणं यस्य तथाभूतः । न प्रतीयेरन् —न बुध्येरन्, न हि कारणं कार्य्यञ्च युगपत् ज्ञायेते इति भावः। आपत्तेरनुगुणं बाधं दर्शयति, रसस्य चेति ।—आनन्दरूपस्य विभावादिसमूहालम्बनात्मकप्रतीतिरूपस्येत्यर्थः। एवञ्च विभावादिज्ञानकारणकत्वरूपस्यापाद्यस्याभावे सिद्धे तेनैव कार्य्यत्वरूपविशेष्या-भावकृतो निरुक्तापादकस्य विशिष्टाभावः सिध्यति इति भावः। तदुक्तं काव्यप्रकाश-टीकाकृता चण्डीदासेन,—“कार्य्यं सुखं स्वकरणैः सह नैकस्यां संविद्यवभासमानं दृष्टम् । एतच्च सुखं विभावादिसंवलितं भासते, तस्मान्न कार्य्यम् ॥” इति । एवञ्च विभावादिज्ञानस्य रसं प्रति यत्कारणत्वमुक्तं तत्पूर्ववर्त्तित्वमात्रेणौपचारिकमिति ध्येयम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नो नित्यः पूर्वसंवेदनोज्झितः ।

असंवेदनकाले हि न भावोऽप्यस्य विद्यते ॥५३॥ (ड)

न खलु नित्यस्य वस्तुनोऽसंवेदनकालेऽसम्भवः ।

न चानादिरनन्तोऽयमनित्यः सम्भवेद्रसः ।

अस्य भानमभानञ्च चर्वणावशतः परम् ॥५४॥ (ढ)

चर्वणायां सत्यां निवृत्तायाञ्च रसस्य तदा भानमभानञ्चाविरुद्धम् ।

---

(ड) ननु यदि रसो न कार्य्यः, तर्हि किं नित्यः ? इति चेत् नेत्याह, नो इति ।—नित्यः "रसः" इति शेषः, नो—न भवति । कुतः ? इति तं विशिष्य दर्शयति, पूर्वसंवेदनोज्झित इति ।—पूर्व्वं विभावादिज्ञानात प्राक् (प्राक्तनं) यत् संवेदनं तस्मात् उज्झितः,—त्यक्तः । यद्ययं नित्योऽभविष्यत्, तर्हि विभावादिज्ञानात्पूर्वमप्यभविष्यदिति भावः । ननु विभावादिज्ञानं तद्ग्राहकमिति तत्प्रागयं सम्भवेदिति चेत् ? सत्यम् ; किन्तु तस्य नित्यत्वस्वीकारे दोषान्तरतादवस्थ्यमित्याह, असंवेदनकाले इति ।—अप्रतीतिचर्या, विभावादिज्ञानाभावावसर इति यावत्, अस्य—रसस्य, भावः,—सत्ता, अपि, न विद्यते ; नित्यवस्तु हि सर्वकालिकं स्यात्, अतोऽस्य विभावादिप्रतीतिमात्रकालिकप्रतीतिशरीरत्वमित्यपि नास्य नित्यत्वमिति भावः ।

(ढ) ननु तस्मादयमनित्यः ? इति चेन्न, अनिर्वचनीयत्वापगमादित्याह, न चेति ।—अयं रसः, अनादिः,—कार्य्यशून्यत्वात् न आदिः उत्पत्तिकालो यस्य तथाभूतः, अनन्तः,—आवरणभङ्गानन्तरं पुनरपि तथैव प्रकाशमानत्वादन्तत्वाभाववान् । एतेनास्य मायाया इवानादित्वमात्रेण सान्तत्वं निवारितम् ; अत एव अनित्यः न सम्भवेत्—स्यात । ननु कथं तर्हि विभावादिसंवेदनस्य आदौ अन्ते च अयं न प्रकाशते ? इति चेत् चर्वणैवात्र हेतुरित्याह, अस्येति ।—अस्य—रसस्य, भानं—विभावादिसंवेदनसमये प्रतीतिः, अभानं—विभावादिसंवेदनासमये प्रतीत्यभाव इत्यर्थः, च, परं—केवलं, चर्व्वणावशतः,—चर्व्वणाया वशत इच्छातः, चर्व्वणायां सत्यां रसस्य भानम्, असत्यां पुनरभानमिति भावः । चर्वणा चास्वादनावस्थेति बोध्यम् । न हि समाधिसद्भावे परमात्मा प्रतीयते, समाध्यसद्भावे च न परमात्मा प्रतीयते इत्यनेन परमात्मनोऽनित्यत्वं साधितुं शक्यते इति भावः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नापि भविष्यन् साक्षादानन्दमयप्रकाशरूपत्वात्।
कार्य्यज्ञाप्यविलक्षणभावान्नो वर्त्तमानोऽपि॥५५॥(थ)
विभावादिपरामर्शविषयत्वात् सचेतसाम्।
परानन्दमयत्वेन संवेद्यत्वादपि स्फुटम्॥
न निर्व्विकल्पकं ज्ञानं तस्य ग्राहकमिष्यते।
तथाऽभिलापसंसर्गयोग्यत्वविरहान्न च।
सविकल्पकसंवेद्यः॥५६॥(त) (1) (सः)

सविकल्पकज्ञानसंवेद्यानां हि वचनप्रयोगयोग्यता, न तु रसस्य। तथा,—

(थ) अस्य रसस्य भविष्यत्त्वं निराकरोति, नापीति।—साक्षादानन्दमयप्रकाशरूपत्वात्—आनन्दप्रधानप्रकाशरूपतया अनुभूयमानत्वात्, भविष्यन्, अपि, न। न च तर्हि वर्त्तमानः स्यादित्याह, कार्य्येति।—कार्य्यज्ञाप्ययोर्विलक्षणभावात्—वैलक्षण्यात्, अयं रसः, वर्त्तमानः अपि न, किन्तु ततो विलक्षण इति भावः।

(त) रसग्रहस्य निर्विकल्पकज्ञानस्वरूपत्वाभावं साधयति, विभावादीति।—निर्गतो विकल्पः विभिन्नकल्पः विशिष्टप्रकारः इत्यर्थः यस्मिन् तादृशं, निरवच्छिन्नमित्यर्थः, सम्बन्धानवगाहीति यावत्। विभावादीनां परामर्शो ज्ञानं, विशिष्टवैशिष्ट्यावगाही ग्रह इति यावत्, विषयः यस्य तस्य भावः तत्त्वं तस्मात्, तथा सचेतसां सहृदयानां, स्फुटं परानन्दमयत्वेन—परमानन्दत्वप्रकारकसंवेदनविषयत्वादित्यर्थः, संवेद्यत्वात्—ज्ञेयत्वात्, अपि तस्य—रसस्य, ग्राहकं—प्रतिपादकं, विषयतानिरूपकमित्यर्थः; ज्ञानं, न, इष्यते। अत्र रसग्रहो निर्विकल्पस्वरूपः। न हि विभावादिनिष्ठप्रकारतायाः परमानन्दत्वनिष्ठप्रकारतायाश्च साधारण्येन निरूपकं रसग्रहत्वं, न च तस्य निष्प्रकारात्मकनिर्विकल्पस्वरूपत्वं सम्भवतीति बोध्यम्। एतेन स्वमात्रग्राह्यस्य रसस्य निर्विकल्पकज्ञानरूपत्वमपि न सिध्यतीति सूचितम्। रसग्रहस्य सविकल्पकज्ञानस्वरूपत्वाभावमपि साधयति, तथेति।—तथा अभिलापः,—वचनं, तस्य संसर्गः,—सम्बन्धः, तद्योग्यत्वविरहात्—वक्तुमशक्यत्वादित्यर्थः, सविकल्पकस्य—सम्बन्धावगाहिन इत्यर्थः, ज्ञानस्येति शेषः, संवेद्यः,—विषयीभूत इत्यर्थः, न सम्भवतीति शेषः। सविकल्पकज्ञानगम्यानां हि

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

साक्षात्कारतया न च ।

परोक्षस्तत्प्रकाशो नापरोक्षः शब्दसम्भवात् ॥५७॥ (थ)

तत् कथय कीदृगस्य तत्त्वमेवमश्रुतादृष्टपूर्वनिरूपणप्रकारस्य ?

इत्याह, (द)—

तस्मादलौकिकः सत्यं वेद्यः सहृदयैरयम् ॥५८॥ (ध)

तत् किं पुनः प्रमाणं तस्य सद्भावे ? इत्याह,—

प्रमाणं चर्वणैवात्र स्वाभिन्ने विदुषां मतम् ॥५९॥ (न)

---

वचनगम्यत्वमस्ति, रसस्य तु न तथेति भावः; किन्तु प्रागुक्तहेतुद्वयासङ्गतेरस्य सविकल्पकज्ञानविषयत्वमस्त्येव, अथापि सविकल्पकवेद्यान्तरादस्य वैलक्षण्यसाधने तात्पर्यं वेदितव्यम्। स्वप्रकाशत्वेनापि ज्ञानान्तरग्राह्यात्सविकल्पकादस्य वैलक्षण्यं बोध्यम्। गुरुनये तु,—सविकल्पकज्ञानानां स्वेनैव ग्रह इति नैतद्वैलक्षण्यम्।

(थ) साक्षादिति।—साक्षात्कारतया—साक्षादनुभवयोग्यतया, आस्वादनाख्यव्यापारस्य मनःसन्निकर्षत्वाङ्गीकारेण तज्जन्यत्वादिति भावः, तस्य—रसस्य, प्रकाशः, न, परोक्षः,—प्रत्यक्षविलक्षणः; न हि परोक्षवस्तुनः साक्षात्कारो भवतीति भावः। ननु तत्स्यादयं प्रत्यक्षः इति चेत्, प्रत्यक्षोऽपि नेत्याह, नापरोक्ष इति।—अपरोक्षः,—प्रत्यक्षश्च तस्य रसस्य प्रकाश इति शेषः, न, शब्दसम्भवात्—शब्दैः काव्यार्थसूचकैः सम्भवात् उत्पत्तेः; अस्य काव्यजन्यविभावादिज्ञानजन्यत्वनियमात् इति निष्कर्षः। अनेन प्रत्यक्षान्तरवैलक्षण्यमेव साधितं, न तु प्रत्यक्षभिन्नत्वं, प्रागुक्तविरोधात्; न हि शब्दप्रमाणगम्यानां प्रत्यक्षत्वमिति भावः।

(द) तत्—तस्मात् कारणात्। एवं—निरुक्तप्रकारेण, पूर्वम् अश्रुतः अदृष्टश्च इति अश्रुतादृष्टपूर्व्वः, निरूपणप्रकारः,—इतरभेदानुमापको धर्म्मो यस्य तादृशस्य, अस्य—रसस्य, कीदृक्—कथम्भूतं, तत्त्वं—याथार्थ्यं, स्वरूपमित्यर्थः, कथय। इति—इत्यपेक्षायाम्, आह—उत्तरति।

(ध) तस्मादिति।—उक्तविरोधात्, उपदर्शितलौकिकज्ञानानन्दवैलक्षण्यात् इत्यर्थः। अयं—रसः, सहृदयैः,—सामाजिकैः, अलौकिकः,—अलोकसिद्धः, जगद्विलक्षण इत्यर्थः, सत्यम्; अत्र सत्यम् एवकारार्थं, अलौकिक एवेत्यर्थः। अन्यथाश्रवणदर्शनयोरलौकिकवस्तुसिद्धौ गुण एव, न तु दोष इति भावः।

(न) प्रमाणमिति।—स्वाभिन्ने—स्वः स्वीयचर्वणव्यापारस्तस्मादभिन्नस्तस्मिन्नित्यर्थीते

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

चर्वणा—आस्वादनम्। तच्च "स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः" इत्युक्तप्रकारम्। ननु यदि रसो न कार्य्यः तत् कथं महर्षिणा "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति लक्षणं कृतम्? इत्युच्यते, (प)—

**निष्पत्त्या चर्वणस्यास्य निष्पत्तिरुपचारतः॥९०॥(फ)**

यद्यपि रसाभिन्नतया चर्वणस्यापि न कार्य्यत्वं, तथापि तस्य कादाचित्कतया उपचरितेन कार्य्यत्वेन कार्य्यत्वमुपचर्य्यते। (ब)

**अवाच्यत्वादिकं तस्य वक्ष्ये व्यञ्जनरूपणे॥९१॥ (भ)**

तस्य—रसस्य। आदिशब्दादलक्ष्यत्वादि। ननु यदि

---

चर्वणास्वरूपे; अत्र—अस्मिन् रसे, विदुषां, चर्वणा—आस्वादनम्, एव, प्रमाणं, मतम्। अत्र प्रमाणम्;—"चर्वणैव भगवती स्वसंवित्स्वरूपादभिन्ने तस्मिन् प्रमाणम्" इति।

(प) ननु यदीति।—अस्याः विप्रतिपत्तेः "तस्मान्न कार्य्यः" इत्यनन्तरमेवोत्थापयितुमौचित्येऽपि, सिद्धान्तस्य चर्वणग्रहसाध्यत्वाच्चर्वणनिरूपणानन्तरमेवोत्थापनमुचितमिति बोध्यम्। महर्षिणा—भरताचार्य्येणेत्यर्थः। कृतं—सूचितम्। इत्याशङ्कायाम्, उच्यते—कथ्यते।

(फ) निष्पत्त्येति।—चर्वणस्य—आस्वादनस्य, निष्पत्त्या, अस्य—रसस्य, उपचारतः,—परम्परया, स्वाश्रयग्राह्यत्वसम्बन्धेनेत्यर्थः, निष्पत्तिः,—सिद्धिः, प्रतीयते इति शेषः।

(ब) कादाचित्कतया—चर्व्वणस्याविर्भावतिरोभावाभ्यां कदाचिद्भवतया, उपचरितेन—आरोपितेन, कार्य्यत्वेन—कार्य्यरूपेण, कल्पितकार्य्यत्वेनेत्यर्थः, न तु वास्तवेनेति भावः। [ "इत्थम्भूतलक्षणे" ( २।३।२१ पा० ) इति तृतीया ] कार्य्यत्वं—कार्य्यरूपताम्, उपचर्य्यते—आरोप्यते। वस्तुतस्तु चर्वणा रसाभिन्ना एव, यदा हि रस आस्वाद्यते तदैव चर्वणानिष्पत्तिः, यदा नास्वाद्यते तदा न निष्पद्यते इति आविर्भावतिरोभावाभ्यां चर्वणारूपस्य रसस्य निष्पत्तिरिति ध्येयम्।

(भ) अवाच्यत्वादिकमिति।—तस्य—रसस्य, अवाच्यत्वादिकम्—अभिधादिव्यापारावेद्यत्वादिकं, व्यञ्जनरूपणे—व्यञ्जनायाः प्रामाण्यनिरूपणप्रस्तावे, पञ्चमपरिच्छेदे इति भावः, वक्ष्ये—कथयिष्यामि।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मिलिता रत्यादयो रसाः, तत् कथमस्य स्वप्रकाशत्वं, कथं वा अखण्डत्वम् ? इत्याह, (म)—

**रत्यादिज्ञानतादात्म्यादेव यस्माद्रसो भवेत् ।**
**अतोऽस्य स्वप्रकाशत्वमखण्डत्वञ्च सिध्यति॥६२॥(य)**

यदि रत्यादिकं प्रकाशशरीरादतिरिक्तं स्यात्, तदैवास्य स्वप्रकाशत्वं न सिध्येत् । न च तथा ; तादात्म्याङ्गीकारात् । यदुक्तम् ;—"यद्यपि रसानन्यतया चर्वणाऽपि न कार्य्या, तथापि कादाचित्कतया कार्य्यत्वमुपकल्प्य तदेकात्मन्यनादिवासना-परिणतिरूपे रत्यादिभावेऽपि व्यवहारः" इति ; "सुखादि-तादात्म्याङ्गीकारे च अस्माकीं सिद्धान्तशय्यामधिशय्य दिव्य-वर्षसहस्रं प्रमोदनिद्रामुपेयाः" इति ; "अभिन्नोऽपि स प्रमात्रा वासनोपनीतरत्यादितादात्म्येन गोचरीकृतः" इति च । ज्ञानस्य स्वप्रकाशत्वमनङ्गीकुर्व्वतामुपरि वेदान्तिभिरेव निपातनीयो दण्डः । तादात्म्यादेव अस्य अखण्डत्वम् ।

रत्यादयो हि प्रथममेकैकशः प्रतीयमानाः सर्व्वेऽप्येकीभूताः स्फुरन्त एव रसतामापद्यन्ते । तदुक्तम् ;—

---

(म) रसस्य स्वप्रकाशत्वमखण्डत्वं चोपपादयति, ननु यदीति ।—मिलिताः,—विभावादिभिः सह वर्त्तमानाः; रत्यादयः,—स्थायिभावाः, रसाः । तत्—तर्हि, स्वप्रकाशत्वं—स्वस्वरूपज्ञानविषयत्वं, रत्यादीनां तदसम्भवात् इति भावः । अखण्डत्वम्—एकरूपत्वम् ।

(य) अस्य स्वप्रकाशत्वमखण्डत्वञ्च यत् पूर्व्वमुक्तं तदेवोपपादयति, रत्यादिरिति ।—यस्मात् रत्यादिः ज्ञानतादात्म्यादेव—ज्ञानाभिन्नत्वादेव रसो भवेत्, आनन्दसंवलितज्ञानरूपतां प्राप्तस्यैव रत्यादे रसत्वमिति भावः । अतः,—तस्मादेव हेतोः, अस्य—रसस्य, स्वप्रकाशत्वं—स्वयम्प्रकाशमानस्वरूपत्वम्, अखण्डत्वं—पूर्णत्वञ्च सिध्यति । यत् यत् ज्ञानमयं वस्तु तत्तत् स्वप्रकाशमखण्डञ्च भवतीति अस्यापि स्वप्रकाशत्वम् अखण्डत्वञ्चेति भावः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः।
प्रतीयमानाः प्रथमं खण्डशो यान्त्यखण्डताम्॥" इति। (र)

(र) तदेवोपपादयति, यदीति।—यदि रत्यादिकं—स्थायिभावः, प्रकाशशरीरात्—प्रकाशः विभावादिसंवित् स एव शरीरं स्वरूपं यस्य तस्मात् तथोक्तात्, अतिरिक्तं—भिन्नं स्यात्, तदा एव, अस्य—रसात्मनो रत्यादिकस्येत्यर्थः, स्वप्रकाशत्वम्, उपलक्षणेन अखण्डत्वञ्च, न—नैव, सिध्येत्। न च तथा—रसात्मनो रत्यादिकस्य प्रकाशशरीरादतिरिक्तत्वम् इति भावः। कुतः? इत्याह,—तादात्म्याङ्गीकारात्—विभावादिसंविदोऽभिन्नत्वाङ्गीकारादित्यर्थः। उक्तमर्थं द्रढयति, यदुक्तमिति।—यद्यपि सिद्धान्तपक्ष इति शेषः, रसानन्यतया—रसाभिन्नतया, चर्वणा अपि—आस्वादनमपि, किं पुनः रस इति भावः, कार्य्या—कार्य्यरूपा, न—नैवास्ति, तथापि कादाचित्कतया—कदाचिदनुभवनीयतया, कार्य्यत्वं—जन्यत्वम्, उपकल्प्य—लक्षणया स्वीकृत्य, तदेकात्मनि—चर्वणामात्रस्वरूपे, अत एव अनादिवासनापरिणतिरूपे—आविर्भूतज्ञानरूपे, रत्यादिभावेऽपि व्यवहारः कार्य्यत्वस्य इति शेषः, इति। ननु परिणामवादिमते रत्यादेर्ज्ञानतादात्म्यं स्वप्रकाशत्वञ्चोपपद्यतां, "स्वप्रकाशानन्दचिन्मयः" इत्यनेन रसस्यानन्दमयत्वं "चमत्कारप्राणः" इत्यनेन चमत्कारमयत्वञ्च यदुक्तं, तदसङ्गतम्; विजातीयानां चिदानन्दचमत्काराणाम् एकरूपत्वासम्भवात्। अत आह, सुखादीति।—सुखादितादात्म्याङ्गीकारे—आनन्दप्रकाशरूपत्वाङ्गीकारे सति, च आम्नायीम्—अस्मत्सम्बन्धिनीम्, आलङ्कारिकसम्प्रदायसम्बन्धिनीमित्यर्थः, सिद्धान्तरूपां—तत्त्वतो निश्चितार्थरूपां, शय्यामधिशय्य—अधिश्रित्य, आकल्प्यावलम्ब्य वेत्यर्थः; दिव्यवर्षसहस्रं—[ मानवानाम् एकेन वत्सरेण देवानामेकं दिनं, तथा षष्ट्यधिकत्रिशतसङ्ख्यकाब्दे एकः संवत्सरः, एवं क्रमेण दिव्यवर्षाः ज्ञातव्याः, तेषां सहस्रं ] चिरकालावधीत्यर्थः, प्रमोदनिद्रं—प्रमोदेन हर्षेण, सुखेनेत्यर्थः, निद्रामुपेयाः,—प्राप्नुहि इति। अस्मत्सिद्धान्ताश्रयेण न कोऽपि वादी त्वां जेतुं शक्नोतीति स्वपक्षीयं प्रत्युक्तिरियमिति भावः। अभिन्नोऽपि—स्वस्मादिति शेषः, तथा च ज्ञानाभिन्नोऽपीत्यर्थः, सः,—रसः, प्रमावा—[ इति भावप्रधानो निर्द्देशः, तेन ] चर्व्वणारूपप्रमया इत्यर्थः, वासनया—संस्कारेण, उपनीतः,—उपस्थापितो यो रत्यादिस्तस्य तादात्म्यम्—अभेदः तेन गोचरीकृतः,—विषयीकृतः। इति च। ननु ज्ञानस्य अनुव्यवसायेनैव ग्रहो भवति, तत् कथं स्वप्रकाशत्वम्? इति वदतः नैयायिकान् आक्षिपति, ज्ञानस्येत्यादिना।—वेदान्तिभिः,—वेदान्तास्तत्सिद्धान्तः सोऽस्ति प्रतिपाद्यत्वेन मात्यत्वेन वा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"परमार्थतस्त्वखण्ड एवायं वेदान्तप्रसिद्धब्रह्मतत्त्ववद्वेदितव्यः" इति च ।

अथ के ते विभावानुभावव्यभिचारिणः ? इत्यपेक्षायां विभावमाह,—

**रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः ॥६३॥ (ख)**

ये हि लोके रामादिगतरतिहासादीनामुद्बोधकारणानि सीतादयस्त एव काव्ये नाट्ये च निवेशिताः सन्तः, "विभाव्यन्ते —आस्वादाङ्कुरप्रादुर्भावयोग्याः क्रियन्ते, सामाजिकरत्यादिभावा एभिः" इति विभावा उच्यन्ते । तदुक्तं भर्त्तृहरिणा,—

---

एषामिति तैस्तथोक्तैरित्यर्थः । ज्ञानस्य स्वप्रकाशत्वम् अनङ्गीकुर्व्वताम्—अस्वीकुर्व्वताम्, उपरि—मते, दण्डः,—दोषः, निपातनीयः,—उपन्यसनीयः ; ज्ञानस्य अनुव्यवसायेन, तस्यापि ज्ञानान्तरेण ग्रहः, इत्यनवस्थारूपोऽत्र दोषः वेदितव्यः । वेदान्तमते "ज्ञानमय आत्मा स्वप्रकाशः" इति भावः । तादात्म्यादेव—ज्ञानाभिन्नत्वादेव इत्यर्थः । ननु चर्वणतोऽभिन्ने रसे लक्षणया साक्षादेव कार्य्यत्वं प्रतीयते, तत् कथं निरुक्तपरम्परया व्यवहर्त्तव्यम् ? इति चेत्, उच्यते, रत्यादय इति ।—रत्यादिविषयावच्छेदे इत्यर्थः । "विभावादिसंयोगाद्रत्यादिः रसः जायते" इत्यत्र रसे साक्षाद्रत्यादौ रसद्वारैव निष्पत्तिः प्रतीयते इति भावः । रत्यादय इति ।—अत्रादिपदेन विभावानुभावसञ्चारिणः गृह्यन्ते । प्रथमं—रसतापत्तेः प्रागित्यर्थः, एकैकशः,—पृथक्त्वेन, प्रतीयमानाः,—बोधविषयीक्रियमाणाः, पश्चात् सर्व्वेऽपि—विभावादयः, एकीभूताः,—व्यञ्जनाजन्यैकज्ञानविषयत्वेन एकरूपत्वं प्राप्ताः सन्तः, स्फुरन्तः,—चिद्रूपत्वं प्राप्नुवन्तः एव, रसताम्, आपद्यन्ते—प्राप्नुवन्ति, रसरूपेण परिणमन्तीत्यर्थः । उक्तमर्थं प्रमाणेन द्रढयति, तदुक्तमिति ।—विभावाः, अनुभावाः, सात्त्विकाः, व्यभिचारिणश्च, प्रथमं—रसोत्पत्तेः प्राक्, खण्डशः,—विभिन्नत्वेनेत्यर्थः, प्रतीयमानाः,—बोधविषयीक्रियमाणाः सन्तः, अखण्डतां—पूर्णतां, एकरूपत्वमित्यर्थः, यान्ति—प्राप्नुवन्ति ।

(ख) अतोऽयं—रसः, अखण्डः,—पूर्णः, एकरूप इति यावत् । रत्यादीति ।—लोके—तत्तल्लौकिकवृत्तित्वदशायां, ये रत्यादीनामुद्बोधकाः—उद्बोधकारणानि सीतादयः ; काव्यनाट्ययोः, निवेशिता इति शेषः, ते विभावाः, उच्यन्ते इति शेषः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान्।
प्रत्यक्षानिव कंसादीन् साधनत्वेन मन्यते॥" (व) इति।

तद्भेदावाह,—

**आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ॥६४॥(श)**

स्पष्टम्। तत्र,—

**आलम्बनो नायकादिस्तमालम्ब्य रसोद्गमात्॥६५॥(ष)**

---

(व) उक्तमर्थं द्रढ़यति, ये हीति।—हि—यतः, लोके—जगति, ("लोकस्तु भुवने जने" इत्यमरः)। रामादीति।—रामादिगताः,—रामादिनिष्ठा ये रति-हासादयस्तेषाम्; अत्रादिपदेन सीतादीनां ग्रहणम्; तथा च रामसीताऽऽदिनिष्ठानां रत्यादीनामिति भावः; उद्बोधकारणानि—कार्य्योन्मुखताकारणभूता इत्यर्थः। सीता-ऽऽदयः,—अत्रादिपदेन रामादीनां ग्रहणम्। [अत एवात्र पुंलिङ्गत्वेन निर्देशो युज्यते]; तथा च रामादिनिष्ठरत्याद्युद्बोधकारणभूताः सीताऽऽदयः, सीताऽऽदिनिष्ठ-रत्याद्युद्बोधकारणभूता रामादयश्चेति पर्य्यवसितोऽर्थः। ते एव—रामादय एव, काव्ये नाट्ये नाटके च, निवेशिताः सन्तः; विभाव्यन्ते—विशेषेण भाविताः क्रियन्ते। आस्वादाङ्कुरप्रादुर्भावयोग्याः,—आस्वादः रसात्मनाऽवस्थानं, तस्याङ्कुरः अङ्कुरवत् स्फुरणं, तस्य प्रादुर्भावयोग्याः प्रकाशयोग्याः। सामाजिकरत्यादिभावाः,—सामाजिकाः सहृदयास्तेषां तन्निष्ठा ये रत्यादिभावाः, एभिः,—विभावादिभिरिति भावः, क्रियन्ते। इति—एवंविधया व्युत्पत्त्या व्युत्पन्नाः, विभावाः तत्पदवाच्या उच्यन्ते। उक्तमर्थं प्राचां संवादेन द्रढ़यति, तदिति।—तत्—तथा, उक्तं, भर्त्तृहरिणा—तदाख्येन आचार्य्येण। भावनाबलेनाप्रत्यक्षानपि प्रत्यक्षभूतानिवार्थान् कुरुते इत्याह, शब्दोपहितेति।—शब्दोपहितरूपान्—काव्यनाट्यप्रकाशितस्वरूपान्, बुद्धेः,—व्यञ्जनाजन्यबोधस्य, विषयतां—गोचरतां, गतान्—प्राप्तान्, तान्—प्रसिद्धानित्यर्थः; कंसादीन् वीररस-स्यालम्बनाभिप्रायेणोक्तमिदम्। प्रत्यक्षानिव—परिदृश्यमानानिव, साधनत्वेन—वीररसनिष्पादकत्वेन, मन्यते—विवेचयति, सहृदय इति शेषः।

(श) आलम्बनेति।—तस्य—विभावस्य, आलम्बनोद्दीपनाख्यौ उभौ भेदौ स्मृतौ।

(ष) आलम्बन इति।—आलम्बनः,—तत्पदवाच्य इत्यर्थः। नायकादिः,—अत्र



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आदिशब्दान्नायिकाप्रतिनायिकादयः। अत्र यस्य रसस्य यो विभावः, स तत्स्वरूपवर्णने वक्ष्यते।

तत्र नायकः,—

त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही।
दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता ॥६६॥ (स)

दक्षः,—क्षिप्रकारी। शीलं—सद्वृत्तम्। एवमादिगुणसम्पन्नो नेता नायको भवति। तद्भेदानाह,—

धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च।
धीरप्रशान्त इत्ययमुक्तः प्रथमश्चतुर्भेदः ॥६७॥ (ह)

---

आदिपदेन नायिकादीनां ग्रहणम्। ननु नायकादेरालम्बनपदवाच्यत्वं कथम्? इत्याह, तमितिः।—तं—नायकादिम्, आलम्ब्य—आश्रित्य, रसोद्गमात्—रसस्योद्गमः स्फुरणं भवतीति हेतोरिति भावः। इदमुक्तं भवति,—नायकादिमालम्ब्य रसोद्गमो भवति; अतः नायकादिरालम्बनपदवाच्यः, आलम्ब्यते रसोद्गमायेति तस्य व्युत्पत्तिसिद्धार्थत्वात् इति।

(स) त्यागीति।—त्यागी—दानशीलः, कृती—वीरः, कृतकार्य्यः इत्यर्थः; यद्वा,—कृती—विद्वान्, पुण्यात्मा वा, कुलीनः,—सत्कुलोत्पन्नः, सुश्रीकः,—समृद्धिमान्, सुतुशोभासम्पन्नो वा। रूपयौवनोत्साही—रूपं सौन्दर्य्यं, यौवनं तारुण्यम्, उत्साहः कर्म्मण्यध्यवसायः, तद्वान् रूपादित्रितयवान् इत्यर्थः, दक्षः,—क्षिप्रकारी, अनुरक्तलोकः,—लोकरञ्जकः। तेजोवैदग्ध्यशीलवान्—तेजः,—"अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत्। प्राणात्ययेऽप्यसहनं तत्तेजः—"इत्युक्तः प्रतापः, वैदग्ध्यं निगूढ़ाभिप्रायज्ञत्वं, शीलं सद्वृत्त तद्वान् तद्विशिष्टः, तेजस्वी, विदग्धः, सुशीलश्चेत्यर्थः, नेता—नायकः, भवतीति शेषः।

(ह) धीरेति।—धीरोऽसावुदात्तः उदार इति धीरोदात्तः; धीरश्चासावुद्धतः प्रगल्भः, अविनीतो वा इति धीरोद्धतः; धीरश्चासौ ललितः मनोरमः, विलासपरो वेति धीरललितः; धीरश्चासौ प्रशान्तः निर्मुक्तरागादिस्वभाव इति धीरप्रशान्तश्चेत्ययं प्रथमः आलम्बनभेदात्मा विभावः, चतुर्भेदः, उक्तः,—कथितः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र धीरोदात्तः,—

**अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।**
**स्थेयान्निगूढ़मानो धीरोदात्तो दृढ़व्रतः कथितः॥६८॥ (क)**

अविकत्थनः,—अनात्मश्लाघाकरः। महासत्त्वः,—हर्षशोकाद्यनभिभूतस्वभावः। निगूढ़मानः,—विनयच्छन्नगर्व्वः। दृढ़व्रतः,—अङ्गीकृतनिर्व्वाहकः; यथा रामयुधिष्ठिरादिः।

अथ धीरोद्धतः,—

**मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः।**
**आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः॥६९॥ (ख)**

यथा भीमसेनादिः।

अथ धीरललितः,—

**निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात्॥७०॥ (ग)**

कला—नृत्यादिका; यथा रत्नावल्यादौ वत्सराजादिः।

---

(क) अविकत्थन इति।—अविकत्थनः,—आत्मश्लाघावर्जितः, क्षमावान्—क्षमी सहनशीलः, अतिगम्भीरः,—अतिदुरवगाहस्वभावः, महत् सत्त्वं बलं यस्य असौ महासत्त्वः,—महाबलः, ("सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः" इति मेदिनी)। स्थेयान्—कर्म्मणि स्थिरतरः, महासङ्कटेऽपि कार्य्यादविचलः इत्यर्थः, निगूढ़मानः,—निरभिमानः, दृढ़व्रतः,—आफलोदयं प्रारब्धकार्य्यात्यागीत्यर्थः, धीरोदात्तो नाम नायकः, कथितः।

(ख) मायापर इति।—मायापरः,—कपटनिरतः, प्रचण्डः,—उग्रः, चपलः,—चञ्चलः, अहङ्कारः,—ममेत्यभिमानः, दर्पः,—आत्मगौरवं, तद्भूयिष्ठः,—प्रायेण तद्विशिष्ट इत्यर्थः, आत्मश्लाघानिरतः,—निजगुणकीर्त्तनपरायणः। अन्यत् स्पष्टम्।

(ग) निश्चिन्त इति।—निश्चिन्तः,—चिन्तारहितः, मृदुः,—कोमलस्वभावः, अनिशं—निरन्तरं, पुनः पुनर्वा; कलापरः,—नृत्यगीतादिनिरतः। धीरललितः स्यात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ धीरप्रशान्तः,—

**सामान्यगुणैर्भूयान्द्विजादिको धीरशान्तःस्यात्॥७१॥(घ)**

यथा मालतीमाधवादौ माधवादिः। एषाञ्च शृङ्गारित्वे भेदानाह,—

**एभिर्दक्षिणधृष्टानुकूलशठरूपिभिस्तु षोड़शधा॥७२॥(ङ)**

तत्र तेषां धीरोदात्तादीनां प्रत्येकं दक्षिणधृष्टानुकूलशठत्वेन षोड़शप्रकारो नायकः।

**एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः॥७३॥(च)**

द्वयोस्त्रिचतुःप्रभृतिषु नायिकासु तुल्यानुरागो दक्षिणनायकः। यथा,—

"स्नाता तिष्ठति कुन्तलेश्वरसुता, वारोऽङ्गराजस्वसुः
द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याऽद्य च।
इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते
देवेनाऽप्रतिपत्तिमूढ़मनसा द्वित्राः स्थितं नाड़िकाः"॥(छ)

---

(घ) सामान्येति।—सामान्यगुणैः,—त्यागी कृतीत्यादिना निरुक्तैः त्यागित्वकृतित्वादिरूपैः नायकसामान्यगुणैरित्यर्थः, भूयान्—अतिशयितः, द्विजादिकः,—न तु शूद्रो म्लेच्छो वेति भावः। धीरशान्तः,—धीरोदात्तादित्रितयभिन्नः नायकः धीरप्रशान्त इत्यभिप्रायः। धीरप्रशान्तस्थाने "धीरशान्तः" इति पाठस्तु छन्दोऽनुरोधात् वेदितव्यः।

(ङ) एभिरिति।—निरुक्तस्वरूपैरित्यर्थः। दक्षिणेति।—दक्षिणादिरूपिभिः धीरोदात्तादिभिः, तु पुनः, षोड़शधा षोड़शप्रकाराः स्युरित्यर्थः; तथा च,—दक्षिणधीरोदात्तः, दक्षिणधीरोद्धतः, दक्षिणधीरललितः, दक्षिणधीरप्रशान्तः; एवं धृष्टादिपदयोजनेन षोड़शप्रकारका नायका भवन्तीति भावः। शृङ्गारे षोड़शप्रकारको नायकः, रसान्तरे तु चतुष्प्रकारक इति ज्ञेयम्।

(च) एष्विति।—एषु—दक्षिणादिषु मध्ये, तु—पुनः, अनेकमहिलासु—अनेकासु नायिकासु विषये, समरागः,—समोऽविषमो रागोऽनुरागो यस्य तादृशः, दक्षिणः,—तत्संज्ञकः नायकः, कथितः।

(छ) स्नातेति।—अन्तःपुरचारिणः कस्याप्याप्तस्येयमुक्तिः। कुन्तलेश्वरसुता—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कृतागा अपि निःशङ्कस्तर्जितोऽपि न लज्जितः।
दृष्टदोषोऽपि मिथ्यावाक् कथितो धृष्टनायकः॥७४॥(ज)

कुन्तलाः जनपदविशेषाः, तेषामीश्वरः राजा, ("स्वामी त्वीश्वरः पतिरीशिता" इत्यमरः) तस्य सुता तनया, स्नाता—ऋतुस्नातेत्यर्थः, तिष्ठति—वर्त्तते, अतः अवश्य-गम्या सेति भावः। अङ्गराजस्वसुः,—अङ्गस्य देशविशेषस्य राजा अङ्गराजः, ["राजाहः सखिभ्यष्टच्" (५।४।९१ पा०) इति टच्] तस्य स्वसा भगिनी तस्याः, वारः,—सुरतार्थं नियमितो दिवसः। कमलया—तन्नाम्न्या कयाचित् राजपत्न्या, द्यूतैः,—राज्ञः सह द्यूतक्रीड़नैरित्यर्थः, इयम्—उपस्थिता, रात्रिः जिता—पणत्वेन गृहीतेति भावः। अद्य देवी च—महाराज्ञी अपि, ("देवी कृताभिषेकायाम्" इत्यमरः) प्रसाद्या—अनुनेया, देवेनेति शेषः, स्वयं कृतापराधत्वादिति भावः। इति—इत्थम्, [अत एवं सम्पद्यते,—"ऋतौ भार्य्यामुपेयात्" इत्यादिनिगमनिर्देशैः, ऋतुस्नाता या काऽपि धर्म्मवनिता सम्मानार्हा, किं पुनः महत्सत्त्वनरनाथवर्य्यकुन्तलाधिपतेः तनया ? साधारणानामपि निरूपितसमयः (नियमयन्त्रित इति भावः) तावत् अनवमान्यः, किं पुनः अङ्गराजभगिनीसमादराकाङ्क्षितन्याय्यविचारानुमतः प्रियसङ्गमसमयः; तथा साधारणैः साकं सामान्यपराजयेऽपि पराजितस्य विजयिवशवर्त्तित्वं, किं पुनः कमला-सुषमया कमलया सार्द्धं द्यूतपणेन विशेषपराजय इत्याशयः। इत्थं क्रमशः कार्य्य-गौरवाणां साङ्कर्य्ये सम्पन्नेऽपि महामानमाननीयायाः देव्याः समाराधनमेव तावदुप-पन्नकरणीयवर्गेषु बलवत् इति सूक्ष्मपरामर्शः] मया—अन्तःपुरचारिणा, कञ्चुकिना इति भावः, अन्तःपुरसुन्दरीः ["अभितः परितः समयानिकषाहाप्रतियोगेऽपि" (वा०) इति द्वितीया] प्रति, विज्ञाय—यस्या यद्द यत् वक्तव्यं तद्द विदित्वा, विज्ञापिते—निवेदिते सति, देवेन—महाराजेन, ("देवो मेघे सुरे राज्ञि स्यान्नपुंसकमिन्द्रिये" इति मेदिनी); अप्रतिपत्तिमूढ़मनसा—इतिकर्त्तव्यताव्याकुलचित्तेन सता, द्वित्राः,—द्वे वा तिस्रो वेति तथोक्ताः, [बहुव्रीहिसमासे "सर्वनामसङ्ख्ययोरुपसंख्यानम्" (वा०) इति "संख्यायाः अल्पीयस्याः" एतद्वृत्तियोजनया द्विशब्दस्य पूर्व्वनिपाते सिद्धम्] नाड़िकाः,—घटिकाः, व्याप्य, ["कालाध्वनोरत्यन्तसंयोगे" (२।३।५ पा०) इति द्वितीया] स्थितं तूष्णीमिति शेषः। शार्दूलविक्रीड़ितं वृत्तम्।

(ज) कृतागा इति।—कृतापराधः अपि, किं पुनरकृतापराध इत्यर्थः; ("आगोऽपराधे पापे स्यात्" इति मेदिनी); निःशङ्कः,—निर्भयः; तर्जितः,—निर्भर्त्सितः, अपि, न लज्जितः,—न सङ्कुचित इत्यर्थः; दृष्टदोषः,—दृष्टः दोषो यस्य

JNANA SIMHASAN JNANAMANDIR
LIBRARY.
Jangamwadi Math, VARANASI.
Acc. No. ......... 5306
CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा मम,—

"क्षीणं वीक्ष्य मुखं विचुम्बितुमहं यातः समीपं, ततः
पादेन प्रहृतं तया, सपदि तं धृत्वा सहासे मयि ।
किञ्चित् तत्र विधातुमक्षमतया वाष्पं त्यजन्त्याः सखे !
ध्यातश्चेतसि कौतुकं वितनुते कोपोऽपि वामभ्रुवः ॥" (झ)

**अनुकूल एकनिरतः ॥ ७५ ॥ (ञ)**

एकस्यामेव नायिकायामासक्तोऽनुकूलनायकः । यथा,—

"अस्माकं सखि ! वाससी न रुचिरे, ग्रैवेयकं नोज्ज्वलं,
नो वक्रा गतिरुद्धतं न हसितं, नैवास्ति कश्चिन्मदः ।

---

तादृशः, अपि, मिथ्यावाक्—मृषावादी, "नाहमेवं रूपः" इति भाषणशील इत्यर्थः । अन्यत् स्पष्टम् ।

(झ) क्षीणमिति ।—प्रवासं सखायं प्रति कस्यचिदुक्तिरियम् । हे सखे ! अहं कृतापराधोऽपीति शेषः, मुखं तस्या इति शेषः, क्षीणं—रक्तं, मदपराधादिति भावः, वीक्ष्य अपीति शेषः, विचुम्बितुं—तदधरामृतमास्वादितुं, समीपं तस्या इति शेषः, यातः,—गतः, ततः,—अनन्तरं, तया—कुपितया मत्कान्तया, पादेन—चरणेन, प्रहृतं—मयि पादप्रहारो दत्त इत्यर्थः ; सपदि—तत्क्षणात्, यदैव पादप्रहारः कृतः तदैवेत्यर्थः, तं—पादं, धृत्वा—गृहीत्वा, मयि, सहासे—हसति सतीत्यर्थः, तत्र—तस्मिन् पादमोचनविषये, किञ्चित् विधातुं—कर्तुमक्षमतया, वाष्पम्—अश्रु, त्यजन्त्याः,—मुञ्चन्त्याः, वामभ्रुवः,—सुन्दर्याः, मत्प्रियाया इत्यर्थः, कोपोऽपि किं पुनरनुराग इत्यर्थः, चेतसि—मनसि, ध्यातः,—चिन्तितः सन्, कौतुकम्—आनन्दं, वितनुते—विस्तारयति, वर्द्धयतीति यावत् । अत्र प्रथमपादेन कारिकायाः प्रथमपादोक्तं, द्वितीयपादेन द्वितीयपादोक्तं लक्षणं वेदितव्यम् । शार्दूलविक्रीडितं वृत्तम् । "तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितं किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते । इत्युक्ते क्व तदित्युदीर्य सहसा तत् सम्प्रमार्ष्टुं मया साश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम् ॥" इत्युदाहरणं पुस्तकान्तरे दृश्यते इति बोध्यम् ।

(ञ) अनुकूल इति ।—एकस्यां नायिकायां, न तु द्वयोः ततोऽधिकासु वा नायिकासु, निरतो अनुरक्तोऽनुकूलो नायकः स्यादित्यर्थः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

किन्त्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः प्रियो नान्यतः
दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःखितम् ॥" (ट)

शठोऽयमेकत्र बद्धभावो यः ।
दर्शितबहिरनुरागो विप्रियमन्यत्र गूढ़माचरति॥७६॥(ठ)

यः पुनरेकस्यामेव नायिकायां बद्धभावो द्वयोरपि नायिकयोर्बहिर्दर्शितानुरागोऽन्यस्यां नायिकायां गूढ़ं विप्रियमाचरति स शठनायकः। यथा,—

---

(ट) अस्माकमिति।—सौभाग्यं व्यञ्जयन्त्याः कस्याश्चित् सखीं प्रत्युक्तिरियम्। हे सखि! अस्माकम्, [अत्र बहुवचनं स्वात्मनि प्रियप्रेमाधिक्यात्सौभाग्यातिशयव्यञ्जनार्थम्] वाससी—वसने, परिधेयमुत्तरीयञ्चेत्यर्थः; न रुचिरे—न मनोहरे, ग्रैवेयकं—ग्रीवाभूषणं, न उज्ज्वलं—रत्नजटिततया शोभाशालि नास्तीत्यर्थः, गतिः,—चलनं, नो वक्रा—वक्रभावयुक्ता, सविलासा गतिः नास्ति इति भावः, हसितं—हासः, न उद्धतम्—उत्कटं नास्ति, कश्चित् मदोऽपि—सौभाग्ययौवनादिगर्वजनितो मनोविकारोऽपि, नैव अस्ति, किन्तु—तथापि, अन्ये जना अपि, किं पुनः स्वकीया इति भावः; अस्याः, प्रियः, सुभगोऽपि—सुन्दरोऽपि, दृष्टश्रुतमात्रोऽन्यासामपि सुन्दरीणां मनसि रिरंसोत्पादनहेतुरिति यावत्; यद्वा,—मनोज्ञोऽपीत्यर्थः; अन्यतः,—एतस्याः दूरतः, अन्यस्यां महिलायां वा; दृष्टिं न निक्षिपति, इति एवं मामुद्दिश्येति शेषः, वदन्ति; इयता—अनेन कथनेन, विश्वं—जगत्, दुःखितं—दुःखेनावस्थितम्, इति, मन्यामहे—तर्कयामः; केवलमहं प्रियवाल्लभ्येन सुखमनुभवामि, नापरा इत भावः। यद्वा,—इयता—मिथ्यावादेन, विश्वं—सर्व्वमपि आत्मीयपरकीयाभिजननिचयं, दुःखितं—दुष्टचित्तम् इति मन्यामहे—समाकलयामि, प्रायोऽन्यसौख्यद्विकातरा एव, न परस्यानन्देनानन्दानुभवितारः मानववर्गाः इति निष्कर्षः। शार्दूलविक्रीड़ितं वृत्तम्।

(ठ) शठेति।—यः,—नायकः, एकत्र—एकस्यां नायिकायां, बद्धभावः,—बद्धः,—गाढ़मर्पितः, भावः,—अनुरागो येन तादृशः, निश्चतानुराग इत्यर्थः, अत एव अन्यत्र—अन्यस्यां नायिकायाम्; दर्शित इति।—दर्शितः,—भूषणदानादिसाम्येन प्रकटितः, बहिरनुरागः,—बाह्योऽनुरागः, सौरतातिरिक्तविषयकं प्रेम येन तादृशःसन्, गूढ़ं—गुप्तं, विप्रियम्—अनिष्टम्, आचरति, सोऽयं शठसन्नामा नायक इति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"शठाऽन्यस्याः काञ्चीमणिरणितमाकर्ण्य सहसा
यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः।
तदेतत् क्वाचक्षे ? घृतमधुमयत्वद्बहुवचो-
विषेणाघूर्णन्ती किमपि न सखी मे गणयति॥" (ड)

**एषाञ्च त्रैविध्यादुत्तममध्याधमत्वेन।**
**उक्ता नायकभेदाश्चत्वारिंशत् तथाऽष्टौ च॥७७॥(ढ)**

---

(ड) शठेति।—नायकं प्रत्युपालब्धुं प्रेषितायाः कस्याश्चित् नायिकासख्या उक्तिरियम्। हे शठ!—धूर्त्त! अन्यस्याः,—नायिकायाः, काञ्चीमणिरणितं—रशना-ध्वनिम्, आकर्ण्य—श्रुत्वा, आश्लिष्यन्—आलिङ्गन् एव, मत्सखीमिति शेषः, सहसा—झटिति, आलिङ्गनारम्भावसर एवेत्यर्थः, प्रशिथिलः,—अत्यन्तं विश्लथः, भुजग्रन्थिः,—बाहुबन्धनं यस्य तादृशः, यत् अभवः, मत्सख्या आलिङ्गनसमये अन्यनायिकाया रशना-रणितश्रवणेन तां प्रति मनसः प्रवृत्तेरालिङ्गनभङ्गं यत् त्वं कृतवानसि इत्यर्थः, तदेतत्—तव अप्रियकरणमित्यर्थः, क्व—कुत्र, कस्य पुरस्तादिति यावत्, आचक्षे ?—कथयामि ?—न कुत्रापि तत्कथनयोग्यं किञ्चित् स्थानं लभे इति भावः। घृतेति।—घृतमधुमयं—घृतमधुरूपं, (घृतमधुवदापाततो मधुरं भासमानमपि अन्ततः अनिष्टकरमिति भावः; घृतमधु यथा प्रथमतः स्वाद्वमृतं, पश्चाद्विषवदनिष्टोत्पादकं, तथा त्वद्वचनमपि प्रथमतस्तु तावद्रमणीयं, पश्चात् मनःपीड़ाद्यनिष्टाचरणेन अनर्थोत्पादकत्वात् विषतुल्य-मित्याशयः) यत् त्वद्बहुवचः,—तव बहुधाऽनुनयनार्थं कथनं, तदेव विषं, तेन [घृतञ्च मधु चेत्यनयोः समाहारो घृतमधु तत्स्वरूपं यस्य तद्घृतमधुमयम्। चिन्मयमित्यादि-वत् स्वरूपार्थे मयट्] आघूर्णन्ती—परिभ्राम्यच्छरीरा, मे सखी किमपि—हितमहितं वा, न गणयति—न अवधारयति, किं कार्य्यं कर्त्तव्यं किं वा न कर्त्तव्यमिति न निश्चिनोतीति भावः। सुरतावसरे स्वारस्यातिदर्शनेन यत् त्वया घृतमधुपानदानायितं तत्प्रतिकारो झटिति विधेयः इति तात्पर्य्यम्। शिखरिणी वृत्तं,—"रसै रुद्रैश्छिन्ना यमनसभलाः गः शिखरिणी" इति तल्लक्षणात्।

(ढ) एषामिति।—नायकानामित्यर्थः, षोड़शभेदानाम्, उत्तममध्याधमत्वेन—उत्तममध्यमाधमत्वेन [अत्र भावप्रत्ययस्य प्रत्येकं सम्बन्धः] हेतुना, त्रैविध्यात्—त्रिरूपत्वात्, चत्वारिंशत् तथा अष्टौ च—अष्टचत्वारिंशदित्यर्थः, नायकभेदा उक्ताः,—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एषाम्—उक्तषोड़शभेदानाम्। अथ प्रसङ्गादेतेषां सहायानाह,—

**दूरानुवर्त्तिनि स्यात् तस्य प्रासङ्गिकेतिवृत्ते तु।**
**किञ्चित्तद्गुणहीनः सहाय एवास्य पीठमर्दाख्यः॥७८॥(थ)**

तस्य नायकस्य बहुव्यापिनि प्रसङ्गसङ्गते इतिवृत्तेऽनन्तरोक्तै-र्नायकसामान्यगुणैः किञ्चिदूनः पीठमर्द्दनामा सहायो भवति। यथा रामचन्द्रादीनां सुग्रीवादयः।

अथ शृङ्गारसहायाः,—

**शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्याः स्युः।**
**भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाःशुद्धाः॥७९॥(त)**

आदिशब्दात् मालाकार-रजक-ताम्बूलिक-गान्धिकादयः।

तत्र विटः,—

**सम्भोगहीनसम्पद्**
**विटस्तु धूर्त्तः कलैकदेशज्ञः।**

---

कथिताः। अत यद्यपि प्रायः द्वितीयपादस्य सर्वेषामुत्तममध्यमाधमत्वेनेति सर्वेषा-मुत्तमाधममध्यमत्वेनेति वा पाठौ लभ्यते, तथापि स च्छन्दोलक्षणाननुगततयोपेक्ष्यत इति बोध्यम्।

(थ) दूरेति।—दूरानुवर्त्तिनि—बहुव्यापिनि, अतिविस्तारिणि इत्यर्थः, प्रास-ङ्गिके—प्रसङ्गक्रमेण उत्थापिते, इतिवृत्ते—कर्त्तव्यकर्मणि, किञ्चित्तद्गुणहीनः,—प्रायेण नायकवत् गुणवान् इत्यर्थः, तस्य, अस्य—नायकस्य, पीठमर्दाख्यः,—पीठमर्द्दो नाम, सहायः स्यात्।

(त) शृङ्गार इति।—अस्य—नायकस्य, भक्ताः,—अनुरक्ताः, तथा नर्मसु—परिहासोक्तिषु विषये, ("द्रवकेलिपरीहासाः क्रीड़ा लीला च नर्म च" इत्यमरः) निपुणाः,—चतुराः, अत एव कुपितानां वधूनां मानं भञ्जत इति तथोक्ताः, [नन्द्यादि-त्वात् ल्युः] अथापि शुद्धाः,—व्यभिचारादिदोषविहीनाः, विटचेटविदूषकाद्याः,—अद्यपदेन मालाकारादीनां ग्रहणम्; शृङ्गारे सहायाः,—सहचारिणः, स्युः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वेशोपचारकुशलो

वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम् ॥८०॥ (थ)

चेटः,—प्रसिद्ध एव ।

अथ विदूषकः,—

कुसुमवसन्ताद्यभिधः कर्म्मवपुर्वेशभाषाद्यैः ।

हास्यकरःकलहरतिर्विदूषकः स्यात्स्वकर्म्मज्ञः ॥८१॥(द)

स्वकर्म—भोजनादि ।

---

(थ) सम्भोगेति ।—सम्भोगेन—सम्यक् भोगेन, सुखाद्युपभोगेनेत्यर्थः, हीनाः,—नष्टाः, सम्पदः यस्य तादृशः ; यद्वा,—सम्भोगे हीना—उपभोगानर्हा, सम्पद्—सम्भोगोपायसाधनजातं यस्य तथोक्तः, सम्भोगसाधनाभावात् अकिञ्चित्कर इत्यर्थः, क्लीव इति केचित् । धूर्त्तः,—प्रतारणापटुः, कलैकदेशज्ञः,—यत्किञ्चित्कलानिपुणः, नृत्यादिकलानाम् एकदेशं जानाति, न तु समुदायम् इत्यर्थः । वेशोपचारकुशलः,—[ वेशेषु—वेश्याजनाश्रयेषु, यः उपचारः,—व्यवहारः, तत्र कुशलः,—दक्षः ; अथवा,—वेशस्य—परिच्छदस्य, उपचारे—करणे, कुशलः,—निपुण इति विग्रहान्तरम् ] वेश्याजनव्यवहाराभिज्ञः, नेपथ्यकलाचतुरो वेत्यर्थः । ( "वेशो वेश्यागृहे गृहे । नेपथ्ये च" इति मेदिनी ) । वाग्मी—सुवक्ता, मधुरः,—मनोरञ्जनकृत्, अथ गोष्ठ्यां—सभायां, ( "गोष्ठी सभासंलापयोः स्त्रियाम्" इति मेदिनी । शृङ्गारे पुनर्गोष्ठीलक्षणमेवं परिष्कृतं वात्स्यायनमुनिना ; तथाहि,—"वेश्याभवने सभायाम् अन्यतमस्योदवसिते वा समानविद्याबुद्धिशीलवित्तवयसां सह वेश्याभिः अनुरूपैरालापैरासनबन्धो गोष्ठी" इति । अन्यतमोदवसितशब्दाभ्यां नागरगृहे यथाक्रमं वेदितव्ये, कामिनीसम्बद्धकलाज्ञानादिसिद्धिलाभार्थं वाराङ्गनानामपि गोष्ठ्यामन्तर्भावः इति ) । बहुमतः,—बहुजनप्रियः, विटः,—[ वारवनितावरनागरिकादीनाम् अन्योऽन्यसन्देशान् विटति, सुगुप्तं कथयति, इति विटः । विटशब्दे इत्यस्मात् के रूपमिदम् ] शृङ्गारे सहायः भवेदिति शेषः ।

(द) अनवद्यशृङ्गाराङ्गं विदूषकमाह, कुसुमेति ।—कुसुमवसन्तादिनाम्ना, कर्मणा, वपुषा—शरीरेण, शारीरकचेष्टाविशेषेण इत्यर्थः, वेशेन—परिच्छदेन, तथा भाषाद्यैः,—वचनाद्यैः, हासकरः,—लोकानां हास्यकृत्, कलहे रतिः,—अनुरागो यस्य तादृशः, स्वकर्म्मज्ञः,—स्वस्य निजकर्म्मणः, सर्व्वत्र भोजनाद्यभिरुचिप्रकटनकारितहास्योत्पादनरूपं जानातीति तथाभूतः, विदूषकः स्यात् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अर्थचिन्तने सहायमाह,—

## मन्त्री स्यादर्थानां चिन्तायाम् ॥ ८२ ॥ (ध)

अर्थाः,—तन्त्रावापादयः। यत्तु अत्र सहायकथनप्रस्तावे,—"मन्त्री स्वं वोभयं वाऽपि सखा तस्यार्थचिन्तने" इति केनचित् लक्षणं कृतं, तदपि राज्ञोऽर्थचिन्तनोपायलक्षणप्रकरणे लक्षितव्यं, न तु सहायकथनप्रकरणे नायकस्य। "अर्थचिन्तने मन्त्री सहायः" इत्युक्तेऽपि नायकस्यार्थत एव सिद्धत्वात्। (न)

यदपि उक्तं,—"मन्त्रिणा ललितः, शेषा मन्त्रिस्वायत्त-सिद्धयः" इति, तदपि स्वलक्षणकथनेनैव लक्षितस्य धीर-ललितस्य मन्त्रिमात्राऽऽयत्तार्थचिन्तनोपपत्तेर्गतार्थम्। न च

---

(ध) मन्त्रीति।—अर्थानां—कार्य्याणां, चिन्तायां—विचारे, कार्य्यचिन्तन-व्यापारे इति भावः, मन्त्री सहायः स्यात्।

(न) अर्थशब्दार्थं बोधयति, अर्था इति।—अर्थाः,—प्रयोजनानि, (ते च राज्ञां) तन्त्रावापादयः।—आदिपदेन दुष्टनिग्रह साधुरक्षण कोषवर्धन-करसङ्ग्रहादीनां ग्रहणम्। तत्र तन्त्रणं तन्त्रं, स्वाधीनतया स्वदेशे क्रियमाणं किमपि कर्म्म यत्तत्सर्वं तन्त्रशब्दवाच्यम्। आवापः,—आ समन्तादवपन्ति कर्त्तव्यताबीजमत्रेत्यावापः [ "टु वप् बीजतन्तुसन्ताने" "हलश्च" (३।३।१२१ पा०) इति घञ् ]। दशरूपकारमतं निरा-करोति, यत्त्विति।—मन्त्री—अमात्यः, स्वं वा—स्वयं वा, नायको वेत्यर्थः, उभयं—तदुभयं वा ; मन्त्री आत्मा वा सहाय इत्यर्थः ; तस्य—नायकस्य, अर्थचिन्तने—कार्य्याणां विचारणे, सखा—सहायः, स्यात्—भवेत्, इति—एवं, केनचित्—दश-रूपकृता, यत् लक्षणं कृतम् ; तत्—सहायकथनमपि, राज्ञो नृपतेः, अर्थचिन्त-नोपायलक्षणप्रकरणे—कार्य्यविचाराणामुपायेषु लक्षयितव्येषु इति भावः। लक्षितव्यं, न तु—न पुनः, सहायकथनप्रकरणे नायकसामान्यस्य इति शेषः, लक्षितव्यमिति पूर्व्वतोऽन्वेति। नन्वत्र को दोषः? इत्याशङ्कायामाह,—नायकस्येत्यादि। एवं चेत् तदा स्वमित्यादिग्रहणं निःसार्थकं भवेत्, तदनुपादानेऽपि तल्लाभात्। स्वयं चिन्तापक्षे स्वस्य सहकारित्वरूपसहायत्वानुपपत्तिः इत्यर्थचिन्तायां करणान्तरप्रसङ्गाच्चेति भावः, प्राग्लक्षणनिरूपितसखिशब्दोऽत्रोपायार्थद्योतकः, न तु सहायकार्थकः, इत्यवसेयम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अर्थचिन्तने तस्य मन्त्री सहायः, किन्तु स्वयमेव निष्पादकः ; तस्यार्थचिन्तनाद्यभावात् । (प)

अथान्तःपुरसहायाः,—

तद्वदवरोधे ।

वामनशण्ढकिरातम्लेच्छाऽऽभीराः शकारकुब्जाद्याः ।

मदमूर्खताभिमानी दुष्कुलतैश्वर्य्यसंयुक्तः ।

सोऽयमनूढ़ाभ्राता राज्ञः श्यालः शकार इत्युक्तः॥८३॥(फ)

आद्यशब्दात् मूकादयः । तत्र शण्ढ-वामन-किरात-कुब्जादयः, यथा रत्नावल्याम्,—

(प) मन्त्रिणेति ।—ललितः,—धीरललितः, मन्त्रिणा आयत्तसिद्धिरिति शेषः, शेषाः,—धीरोदात्तादयः, मन्त्रिस्वायत्तसिद्धयः,—मन्त्रिषु स्वेषु च आयत्ता सिद्धिर्येषां तथाभूताः, मन्त्रिसहिताः कार्य्यं पश्यन्तीति भावः । स्वतीति ।—“निश्चिन्तो धीरललितः कलाऽऽसक्तः सुखी मृदुः” इति धीरललितलक्षणनिर्दिष्टेन तस्यार्थचिन्तनाद्यभावतया मन्त्रिमात्राऽऽयत्तार्थसिद्धिः स्फुटा एव प्रतिभासते इति भावः । गतार्थं —ज्ञातार्थं, पुनस्तस्य कथनं व्यर्थमिति भावः ।

(फ) अन्तःपुरसहायानाह, तद्वदिति ।—अवरोधे—अन्तःपुरे, (“शुद्धान्तश्चावरोधः” इत्यमरः) वामनादयः तद्वत् नायकस्य सहायाः बोद्धव्याः इत्याशयः । तत्र वामनाः,—खर्वाकृतिकाः, शण्ढाः,—छिन्नोपस्थाः, क्लीवा वा ; किराताः,—पर्य्यन्तसञ्चारिणो वनचरविशेषाः, म्लेच्छाः,—सदाचाररहिता अस्पृश्यजातीयाः, आभीराः,—पशुपोषकाः, शकाराः,—वक्ष्यमाणलक्षणाः, कुब्जाः,—कुब्जलितविकाः इति बोध्यम् । अथ शकारमाह, मदेति ।—मदश्च मूर्खता चाभिमानश्चेति सन्त्यस्येति तथोक्तः । तत्र मद औद्धत्य, मूर्खताऽविवेकः, अभिमानः स्वस्मिन् वृथा सर्वज्ञत्वबुद्धिः ; यद्वा,—मदमूर्खताभ्यां कृतोऽभिमानः सोऽस्यास्तीति तथोक्तः । दुष्कुलेति ।—दुष्टं कुलं यस्य तस्य भावस्तत्ता दुष्कुलता, सा च ऐश्वर्य्यञ्च ताभ्यां संयुक्तः ; यद्वा,—दुष्कुलतया ऐश्वर्य्यं तेन संयुक्तः । अनूढ़ेति ।—अनूढ़ायाः,—अविवाहितायाः, रक्षितायाः उपपत्न्या इत्यर्थः, भ्राता—सोदरः । अत एव, श्यालः, (“श्यालाः स्युर्भ्रातरः पत्न्याः” इत्यमरः) शकारः, इति—एवम्, उक्तः,—तन्नामाऽन्तःपुरसहायः कथित इत्यर्थः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"नष्टं वर्षवरैर्मनुष्यगणनाऽभावादपास्य त्रपाम्
अन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः।
पर्य्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः" ॥

शकारो मृच्छकटिकादिषु प्रसिद्धः। अन्येऽपि यथादर्शनं ज्ञातव्याः। (व)

अथ दण्डसहायाः,—

दण्डेषु सुहृत्कुमाराटविकाः सामन्तसैनिकाद्याश्च ॥८४॥(भ)

दुष्टनिग्रहो दण्डः। स्पष्टम्।

---

(व) कांश्चिदुदाहरति, नष्टमिति।—मन्दुराया वसन्तकस्य वानरवेषेण निःसृते वर्णनमिदम्। मनुष्यगणनाऽभावात्—मनुष्येषु अगण्यत्वादित्यर्थः, त्रपां—लज्जाम्, अपास्य—त्यक्त्वा, वर्षवरैः,—क्लीवैः, त्रासात्—भयात्, [ इदं परतोऽप्यन्वेति ] नष्टं—पलायितम्, अदृश्यत्वं प्राप्तमित्यर्थः। अयं, वामनः,—खर्वाकृतिः पुरुषः, कञ्चुकिनः,—वृद्धस्य अन्तःपुरद्वारपालविशेषस्य, ( "सौविदल्लाः कञ्चुकिनः" इत्यमरः ) यत् कञ्चुकं वारणं, वर्म इति यावत्, तस्य, अन्तः,—अभ्यन्तरे, विशति—प्रविशति; पर्य्यन्ताश्रयिभिः,—पर्य्यन्ते ( दूरे ) सञ्चारिभिः, किरातैः,—व्याधैः, निजस्य स्वस्य नाम्नः,—"किरं पर्य्यन्तम् अतन्ति सञ्चरन्ति इति व्युत्पत्त्यनुकूलायाः संज्ञाया इत्यर्थः, सदृशम्—उचितं कर्म, कृतं, पर्य्यन्ताश्रयणं कृतमित्यर्थः; कुब्जाः,—वातरोगेण, अत्यन्तं वृद्धतया वा उन्नतपृष्ठाः, आत्मेक्षणाशङ्किनः,—आत्मनः ईक्षणं दर्शनम्, आशङ्कन्ते इति तथोक्ताः सन्तः, नीचतयैव—नतभावेनैव, शनकैः,—मन्दं मन्दं, यान्ति—गच्छन्ति। अत्र स्वभावोक्तिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम्। एवम् अन्येऽपि—म्लेच्छाऽऽभीरादयः नायककार्य्यविशेषसहायाः अन्तःपुरे ज्ञेयाः इति।

(भ) दण्डेष्विति।—दण्डेषु—दुष्टनिग्रहव्यापारेषु, सुहृदः,—मित्राणि, स्वसमवयस्का राजान इति यावत्, कुमाराः,—स्ववशवर्त्तिनां राज्ञां पुत्राः, यद्वा,—सुहृदां—मित्राणां, कुमारा इत्यर्थः। सुहृत्त्वस्वम्बितेन हितप्रदर्शकत्वं, कुमारत्वेन च सोत्साहत्वं बोधितव्यम्। आटविकाः,—अटव्यां वने चरन्तीति तथोक्ताः, वनचारिण इत्यर्थः, सामन्ताः,—स्ववशवर्त्तिनो ( "सामन्तो मण्डलेश्वरः" इति विश्वः ) राजानः, सैनिकाद्याश्च सहायाः भवन्तीति शेषः।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ धर्मसहायाः,—

**ऋत्विक्पुरोधसः स्युर्ब्रह्मविदस्तापसास्तथा धर्मे ॥८५॥(म)**

ब्रह्मविदः,—वेदविदः, आत्मविदो वा । तत्र च,—

**उत्तमाः पीठमर्द्दाद्याः ॥ ८६ ॥ (य)**

आद्यशब्दात् मन्त्रिपुरोहितादयः ।

**मध्यौ विटविदूषकौ ।**

**तथा शकारचेटाद्या अधमाः परिकीर्त्तिताः ॥८७॥(र)**

आद्यशब्दात् ताम्बूलिक-गान्धिकादयः । अथ प्रसङ्गाद् दूतानां विभागगर्भलक्षणमाह,—

**निसृष्टार्थो मितार्थश्च तथा सन्देशहारकः ।**

**कार्य्यप्रेष्यस्त्रिधा दूतो दूत्यश्चापि तथाविधाः ॥८८॥(ल)**

---

(म) ऋत्विगिति ।—धर्मे—धर्मकार्य्ये, ऋत्विजः,—पुरोहितविशेषाः, पुरोधसः,—पुरोहिताः, ब्रह्मविदः,—वेदार्थज्ञानिनः, ब्रह्मात्मैक्यज्ञातारो वेत्यर्थः, तथा तापसाः,—दान्तश्चत्युपासनाऽऽराधितपरमेश्वराः, एते सर्वे सहायाः, स्युः,—भवेयुः । एतेन राज्ञा सदा धर्मतत्त्वज्ञैः साकं कार्य्यमकार्य्यं वा निर्णीय दण्ड्येषु दण्डविधाने, अन्येषु दयाप्रदर्शने भवितव्यमिति सूचितं भवति । अत एव मनुनोक्तम्,—"शुचिना सत्यसन्धेन यथाशास्त्रानुसारिणा । प्रणेतुं शक्यते दण्डः सुसहायेन धीमता ॥......त्रैविद्यवृद्धान् विदुषश्तिष्ठेत्तेषाञ्च शासने । वृद्धांश्च नित्यं सेवेत विप्रान् वेदविदः शुचीन् ॥" इत्यादि [ ७म अध्या० ३१—३८ सङ्ख्यकश्लोकाङ्कपर्य्यन्तम् ] ।

(य) उत्तमा इति ।—पीठमर्दाद्याः पूर्वोक्ताः, उत्तमाः,—श्रेष्ठाः, सहाया इति शेषः ।

(र) मध्याविति ।—विटविदूषकौ—विटो विदूषकश्च, मध्यौ—सहायाविति शेषः ; तथा—एवं, शकारचेटाद्याः,—शकारचेट ताम्बूलिक गान्धिककिरातादयः, अधमाः,—निकृष्टाः, सहायाः, परिकीर्त्तिताः,—कथिताः ।

(ल) दूतानाह, निसृष्टार्थ इति ।—कार्य्यप्रेष्यः,—कार्य्येषु प्रेष्यः नियोज्यः, दूतः,—तत्संज्ञः सहायः इत्यर्थः ; त्रिधा त्रिप्रकारो भवतीति शेषः ;—निसृष्टार्थः, मितार्थः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तथा सन्देशहारकः इति। इदमुक्तम्;—निसृष्टः,—न्यस्तः, अर्थः,—प्रयोजनं, कार्य्यभारो वा, यत्र स निसृष्टार्थः। मितः;—परिमितः, प्रमाविषयीभूतो वा अर्थो यस्य तथोक्तः। सन्देशं—येन केनापि यं कमप्युद्दिश्य स्वाभिप्रायाविष्करणायोक्तं वाक्यविशेषं, हरति—निर्द्दिष्टस्थलं प्रापयितुं स्वीकरोतीति तथोक्तः। इत्यन्वर्थसंज्ञका एते। अत एवैषां साधारणा गुणाः,—नैपुण्यं, प्रागल्भ्यं, देशकालेङ्गिताकारज्ञत्वं, प्रधर्षणावसरज्ञत्वं, सहनशीलता, त्वरितप्रवृत्तिः, सदध्यवसायप्रयत्ननियोगाश्च इति वेदितव्याः। अत्राहुर्युक्तिकल्पतरुकाराः,—"परिङ्गितज्ञः परवाग्व्यङ्ग्यार्थस्यापि तत्त्ववित्। सदोत्पन्नमतिर्धीरो दूतः स्यात्पृथिवीपतेः॥ दूतञ्चैव प्रकुर्व्वीत सर्व्वशास्त्रविशारदम्। इङ्गितज्ञं तथा सभ्यं दक्षं सत्कुलसम्भवम्॥ अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित्। वपुष्मान् वीतभीः वाग्मी दूतो राज्ञः प्रशस्यते॥ दूत एव ह्यसम्भक्तो भिनत्त्येव हि सङ्गतान्॥" इति। अन्येऽपि —"आत्मवान् मित्रवान् युक्तो भावज्ञो देशकालवित्। असाध्यमप्ययत्नेन कार्य्यं संसाधयेन्नरः॥" इति, "आत्मनियमितसकलगुणवर्गत्वात् आत्मवान्, सुहायरचनेन मित्रवान्। राजकार्य्यसदाचारानुवर्त्तनेन युक्तः स्वधर्म्मकर्म्मनिरतः" इति च। एवं दूतं सप्रभेदं लक्षयित्वा दूतीं लक्षयति,—दूत्य इति।—दूत्यश्चापि तथाविधाः; निसृष्टार्थाः, मितार्थाः तथा सन्देशहारिकाः चेत्यर्थः। अत्र चकारसत्त्वेऽपि अपिशब्दग्रहणात् प्रकारान्तरवत्योऽपि दूत्यः। तथा च, एताः;—निसृष्टार्था, परिमितार्था, सन्देशहारिका, स्वयंदूती, मूढ़दूती, भार्य्यादूती, मूकदूती, वातदूती, इति अनेकधा भवन्ति; तत्र नायिकानायकयोः यथावन्मनोऽभिलषितमवधार्य्य स्वविचारेण प्रयोजनसिद्धिमुद्भावयित्री निसृष्टार्था। प्रयोजनाभियोजनयोः एकमवयवांशमपि विज्ञाय अवशिष्टं स्वयमेवोद्भावयित्री परिमितार्था। सन्देशमात्रं येन केनाऽपि यं कं प्रति आत्मनिदेशप्रकाशनाय प्रस्ताव्यविशेषं तल्लिखितपत्रमपि सङ्क्रमयित्री सन्देशहारिका। दौत्यकार्य्यन्तताऽपि स्वयमेव नायकाभिगमनरता स्वयंदूती। मुग्धभावात् स्वीयां नायकाङ्गसङ्गलीलां सह शयनादौ प्रकाशयित्री, मूढ़दूती। केनापि च्छलेन स्वरूपं पिदधाना स्वभावं दूतीद्वारेण या प्रकाशयति सा भार्य्यादूती। नायकाङ्गनां बालां कपटभावेन सन्तोष्य निःसंशयं तद्धृदयप्रविष्टा नायकव्यापारान् सम्यग् जिज्ञासितुमवगन्तुं मूकेव प्रवृत्तिनव्यापारा बालिकां कुमारिकाम् अगुणदोषज्ञां तथाविधां किङ्करीञ्चापि प्रेषयित्री तेषां भूषणवस्त्राङ्गादिषु गूढ़सन्दर्भं नखाद्यङ्कं वा अङ्कयित्री मूकदूती। प्राक्सिद्धहेतुनियन्त्रितान्यानवधार्य्य श्लिष्टं पदविन्यासम् औदासीन्येन निश्वासयित्री वातदूती, इति विस्तरभयादुपरम्यते।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र कार्य्यप्रेष्यो दूत इति लक्षणम् । तत्र,—

उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् ।
सुश्लिष्टं कुरुते कार्य्यं निसृष्टार्थस्तु स स्मृतः ॥८९॥ (व)

उभयोरिति—येन प्रेषितो यदन्तिके प्रेषितश्च ।

मितार्थभाषी कार्य्यस्य सिद्धिकारी मितार्थकः ।
यावद्भाषितसन्देशहारः सन्देशहारकः ॥९०॥ (श)

अथ सात्त्विकनायकगुणाः,—

शोभा विलासो माधुर्य्यं गाम्भीर्य्यं धैर्य्यतेजसी ।
ललितौदार्य्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः ॥९१॥ (ष)

तत्र,—

शूरता दक्षता सत्यं महोत्साहोऽनुरागिता ।
नीचे घृणाऽधिके स्पर्द्धा यतः शोभेति तां विदुः ॥९२॥ (स)

---

(व) निसृष्टार्थमाह, उभयोरिति ।—उभयोः भावम्—आशयम्, उन्नीय—उन्नाय्य, स्वयम् उत्तरं—सिद्धान्तं, वदति, कार्य्यञ्च सुश्लिष्टं—सुसङ्गतं, कुरुते, सः, तु—पुनः, निसृष्टार्थः, स्मृतः,—कथितः ।

(श) मितार्थमाह, मितार्थेति ।—मितं परिमितम् अर्थं भाषते इत्येवंशीलः मितार्थभाषी, अथ च कार्य्यस्य—प्रयोजनस्य, सिद्धिकारी—सम्पन्नताकर्त्ता, मितार्थकः,—मितः परिमितोऽर्थः साध्यत्वेन प्रयोजनं यस्य तथोक्तः । सन्देशहारकमाह, यावदिति ।—यावद्भाषितं—प्रभुणा यावत् कथितं, सन्देशं वार्त्तामित्यर्थः, हरतीति तथाभूतः, सन्देशहारकः,—तन्नामा दूतः स्मृत इत्यर्थः ।

(ष) सात्त्विकनायकगुणानाह, शोभेति ।—सत्त्वजाः,—सत्त्वगुणाज्जाताः, ते च ;—शोभा, विलासः, माधुर्य्यं, गाम्भीर्य्यं, धैर्य्यं, तेजः, ललितम्, औदार्य्यञ्च, इति, अष्टौ, पौरुषाः,—नायकावलम्बिनः, गुणाः कथिताः इति शेषः । स्तम्भस्वेदादीनां सात्त्विकत्वेऽपि ते नायिकानायकयोः साधारणाः, एते तु तावत् नायकस्यैव, न तु नायिकायाः, इति विशेषोऽवगन्तव्यः ।

(स) तत्र शोभामाह, शूरतेति ।—शूरता—शौर्य्यं, दक्षता—क्षिप्रकारिता,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्रानुरागिता यथा,—

"अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत्।
उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित्॥"

एवमन्यत्रापि। (ह) Shanti shennatmeny Hiremath

अथ विलासः,—

धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः॥९३॥(क)

यथा,—"दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम्।
कौमारकेऽपि गिरिवद्गुरुतां दधानः
वीरो रसः किमयमेत्युत दर्प एषः?"॥ (ख)

चातुर्य्यं वा; सत्यं—यथार्थभाषणं, महोत्साहः,—कार्य्येषु उद्यमातिशयः; अनुरागिता—साधारणेऽप्यनुकूलोऽभिनिवेशः, अनुजीविप्रियता वा; नीचे—क्षुद्रे, दुर्बले वेत्यर्थः, घृणा—दया, अधिके—बलीयसि, स्पर्द्धा—जिगीषा, एते गुणाः, यतः,—यस्याः भवन्ति तां शोभा इति [ अत्र लिङ्गार्थे प्रथमा ] विदुः।

(ह) अनुरागितामुदाहरति, अहमिति।—अजराजगुणवर्णनमिदम्। प्रकृतिषु—प्रजासु, मन्त्रिप्रभृतिषु वा, सर्वो जनः, अहमेव महीपतेः,—अजस्य, मतः,—सम्मत इति अचिन्तयत्। तस्य समदर्शितामाह, उदधेरिति।—उदधेः,—समुद्रस्य, निम्नगाशतेषु—नदीसमूहेषु इव, अस्य—अजस्य, क्वचित्—क्वापि जने इत्यर्थः, विमानना—तेषाम् असामर्थ्येन, आत्मगर्वेण वा तिरस्कृतिः; न अभवत्। यथाहि विभिन्नदेशीयासु उत्तम-मध्यमापकृष्टासु नदीषु नदीपतेः साधारण्येन न दाचिण्य-प्रसङ्गविभेदः परिदृश्यते, तद्वदेव वसुधाऽधिराजस्याजस्यापि सचिवादिषु प्रजासु वा क्वचिदपि लोके अवमाननासञ्चारः नैवादृश्यत इति निष्कर्षः। सुन्दरी वृत्तम्;—"अयुजोर्यदि सौ जगौ युजोः सभरा ल्गौ यदि सुन्दरी तदा" इति तल्लक्षणात्। रघुवंशस्येदं पद्यम्। एवमन्यत्रापीति।—अन्यत्र—शूरतादौ, अपि एवमुदाहरणान्याकलनीयानि इत्याशयः।

(क) विलासलक्षणमाह, धीरेति।—विलासे सति दृष्टिर्धीरा—अचञ्चला, गतिः, चित्रा—मनोज्ञा, वचः,—वचनं, सस्मितम्—ईषद्धास्यसहितं भवतीति शेषः।

(ख) विलासमुदाहरति, दृष्टिरिति।—कुशस्य संग्रामभूमौ उद्धतागमनं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## सङ्क्षोभेष्वप्यनुद्वेगो माधुर्य्यं परिकीर्त्तितम् ॥९४॥ (ग)

ऊह्यमुदाहरणम् । (घ)

## भीशोकक्रोधहर्षाद्यैर्गाम्भीर्य्यं निर्विकारता ॥९५॥ (ङ)

---

दृष्टा रामस्य सविस्मयवचनमिदम् । दृष्टिः कुशस्येति शेषः, तृणीकृतः,—तृणवत् तुच्छीकृतः, जगत्त्रयस्य—त्रयाणां जगतां, सत्त्वं—माहात्म्यम्, उत्साह इत्यर्थः, सारः,—बलञ्च यया तादृशी, ("सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः । आत्मत्वे व्यवसायाऽसुचित्तेष्वस्त्री तु जन्तुषु ॥" इति "सारो बले स्थिरांशे च मज्ज्ञि पुंसि जले धने" इति च मेदिनी ) तथा धीरोद्धता—धीरा मन्थरा, उद्धता उद्भटा सगर्वा चेत्यर्थः, गतिः, धरित्रीं—पृथ्वीं, नमयतीव—अधो नयतीव ; एतेन गतेश्चिवलं नैकरूपत्वञ्च सिद्धम् । अयं—कुशः, कौमारकेऽपि—बाल्यावस्थायामपि, गिरिवत्—पर्वत इव, गुरुतां—महत्त्वं, दधानः,—बिभ्रत्, अत एव वीरो रसः किम् ? उत—अथवा, एष दर्पः,—गर्व्वः, वपुराश्रित्येति भावः, एति—आगच्छति ? [ "एषः" इत्यत्र "एव" इति पाठान्तरम् ] अत्र नायकस्य उत्साहदर्पयोरतिशयसूचनाय वीररसत्वेन दर्पत्वेन चोल्लेखः समाहृतः । वसन्ततिलकं वृत्तं,—"ज्ञेयं वसन्ततिलकं तभजाः जगौ गः" इति लक्षणात् । उत्तररामचरितस्येदं पद्यम् ।

(ग) माधुर्य्यमाह, सङ्क्षोभेष्विति ।—सङ्क्षोभेषु—सम्यक् क्षोभानुकूलव्यापारेषु, अपि, अनुद्वेगः,—उद्वेगराहित्य, माधुर्य्यं, परिकीर्त्तितं—कथितम् ।

(घ) ऊह्यमिति ।—उदाहरणम् ऊह्यम्—अतः अन्यतोऽन्वेषणीयम् । यथा रामविलासे,—

"तन्निपीय कटु कर्णपदव्या खेदमाप न मनागपि रामः ।
शूलपाणिरिव घोरमुदग्रं कालकूटपटलं किल पूर्वम् ॥" इति ।

अत्रार्थः ;—पूर्वं—पूर्वस्मिन् काले, किल—ऐतिह्ये, शूलपाणिः,—शिवः, उदग्रं—दुष्परिणामम्, अन्यत्र—तीक्ष्णं, घोरं—भयङ्करम् अन्यत्र—दुःसहम् ; कटु—अप्रियम्, अन्यत्र—कर्कशं, तत्, वचः, कालकूटपटलमिव, रामः,—रामचन्द्रः, कर्णपदव्या—कर्णद्वारा, निपीय—यथेष्ट पीत्वा, अन्यत्र—स्पष्टं श्रुत्वा, अपीति शेषः, मनागपि—अल्पमपि, खेदं न आप—न प्राप । अत्र हि कालकूटपानसदृशदुर्वाक्यश्रवणस्य क्षोभहेतुत्वेऽपि रामस्य गम्भीरत्वेनैवावस्थानोक्तेर्माधुर्य्यम् ।

(ङ) गाम्भीर्य्यमाह, भीति ।—भीः,—भयं, शोकः,—स्वजनधनवियोगजं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"आहूतस्याभिषेकाय विसृष्टस्य वनाय च।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः॥" (च)

**व्यवसायादचलनं धैर्य्यं विघ्ने महत्यपि॥ ९६॥ (छ)**

यथा,—

"श्रुताप्सरोगीतिरपि क्षणेऽस्मिन् हरः प्रसङ्ख्यानपरो बभूव।
आत्मेश्वराणां न हि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति॥"(ज)

**अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत्।**
**प्राणात्ययेऽप्यसहनं तत् तेजः समुदाहृतम्॥**

---

दुःखं, क्रोधः,—कोपः, हर्षः,—आनन्दः, इत्यादिभिर्हेतुभिरपि निर्विकारता—अविकृतत्वं, गाम्भीर्य्यम्।

(च) गाम्भीर्य्यमुदाहरति, आहूतस्येति।—अभिषेकाय—अभिषेकं कारयितुमित्यर्थः, [अत्र तुमुनोऽप्रयोगे चतुर्थी] आहूतस्य—कृताह्वानस्य, वनाय—वनं गन्तुं, विसृष्टस्य—आज्ञप्तस्य, च, तस्य—रामस्य, स्वल्पोऽपि, आकारविभ्रमः,—आकृतिवैपरीत्यं, मुखनेत्रादिषु प्रसादवैरस्यम् इति यावत्, मया, न, लक्षितः,—दृष्टः। अत्र राज्यप्राप्तौ हर्षविषयत्वं, राज्याप्राप्तौ पुनः शोकविषयत्वं न रामस्यासीदिति तस्य गाम्भीर्य्यम्।

(छ) धैर्य्यं निर्वक्ति, व्यवसायादिति।—महति विघ्ने सत्यपि, व्यवसायात्—उद्योगात्, आरब्धकर्मण इत्यर्थः, अचलनम्—अप्रच्यवनम्, अपराङ्मुखतेत्यर्थः, धैर्य्यम्।

(ज) उदाहरति, श्रुतेति।—अस्मिन् क्षणे—वसन्ताविर्भावसमये, हरः,—प्रभुः श्रुता अप्सरसां गीतिर्येन तादृशः, अप्सरसां गीतिमाकर्णयन्नपीत्यर्थः, प्रसङ्ख्यानं—ब्रह्मतत्त्वान्वेषणं, तत्र परः,—कृतावधानः, समाधिनिष्ठ इति यावत्, बभूव; हि—यतः, विघ्नाः,—अन्तरायाः, आत्मेश्वराणां—जितेन्द्रियाणां, मनःसन्निरोधसमर्थानामिति यावत्, जातु—कदाचिदपि, समाधिभेदे—योगभञ्जने, प्रभवः,—समर्थाः न भवन्ति। अत्रोपेन्द्रवज्रेन्द्रवज्रयोरुपजातिः वृत्तम्;—"उपेन्द्रवज्रा प्रथमे लघौ सा" इति, "स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति, "अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति च लक्षणात्। कुमारसम्भवस्येदं पद्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वाग्वेशयोर्मधुरता तद्वच्छृङ्गारचेष्टितं ललितम् ।
दानं सप्रियभाषणमौदार्य्यं शत्रुमित्रयोः समता॥९७॥(झ)

एषामुदाहरणानि ऊह्यानि । (ञ)

अथ नायिका त्रिविधा स्वाऽन्या साधारणस्त्रीति ।
नायकसामान्यगुणैर्भवति यथासम्भवैर्युक्ता ॥ ९८ ॥ (ट)

---

(झ) तेजो निर्वक्ति, अधीति ।—प्राणात्ययेऽपि—जीवनव्यपगमेऽपि, परेण—अन्येन, प्रयुक्तस्य—कृतस्य, अधिक्षेपः,—तिरस्कारः, अपमानः,—अनादरः तौ आदौ यस्य तस्य, (आदिनाऽपकारादेः ग्रहणम्) यत्, असहनम्—अक्षमा, तत् तेजः, समुदाहृतं—कथितम् । ललितमाह, वागिति ।—वाग्वेशयोः,—वाचि वेशे च, मधुरता—मनोहरता, तद्वत्—तथा, शृङ्गारस्य—विलासादेः, चेष्टितं—पयोधरमर्द्दनादिरूपा चेष्टेत्यर्थः, ललितं, स्यात् इति शेषः । औदार्य्यमाह,—सप्रियभाषणं—प्रियवचनसहितं, दानं, शत्रुमित्रयोः,—शत्रौ मित्रे च, समता—समदर्शित्वञ्च, औदार्य्यं, स्यादिति शेषः ।

(ञ) एषामिति ।—तेजोललितौदार्य्याणामित्यर्थः, उदाहरणानि—लक्ष्याणि, ऊह्यानि—गवेषणीयानीत्यर्थः । तानि च यथा रामविलासे ।—"विस्फारस्फुरदोष्ठपल्लवमतिखिन्नातिकान्तं क्रुधा, किञ्चिल्लोहितलोचनाम्बुजयुगेनाकुञ्चितभ्रूलतम् । युक्तं तस्य दुरुक्तमुत्तरयितुं तेजोभरादुद्यतं, नेत्रान्तेन निवार्य्य लक्ष्मणममुं प्रोचे स्वयं राघवः ॥" "वीक्ष्य तस्य रुचिरं कलेवरं सन्निशम्य्य मधुरञ्च भाषितम् । सारसारमुपलभ्य विभ्रमं दास्यमस्य कलयन्ति सुभ्रुवः ॥" "दत्ते सहासवचनं सप्रियवचनञ्च भूपालः । रिपुरपि लभते मानं निरीतिभावं धरा तस्मात् ॥" इत्येतानि । [ अस्यार्थः,—विस्फारम्—अत्यन्तं, स्फुरत्—सञ्चलत्, ओष्ठपल्लवं यस्य तथाविधं लक्ष्मणमित्याशयः । तस्य—भार्गवस्य, दुरुक्तमुत्तरयितुं—दुर्वाक्योत्तरप्रदानाय उद्यतम् इति भावः ; नेत्रान्तेन—नेत्रप्रान्तसङ्कोचरूपेङ्गितेन इत्यर्थः, निवार्य्य—निषिध्य, अमुं—भार्गवं, राघवः स्वयमुवाचेत्यर्थसङ्क्षेपः । अन्यत् स्पष्टम् ] ।

(ट) इदानीं नायिकाः निरूप्यन्ते, अथेत्यादि ।—स्वा—स्वकीया, अन्या—परकीया, साधारणस्त्री—सर्वोपभोगयोग्या, गणिका इति यावत् ; इति त्रिविधा—त्रिप्रकारा, नायिका नायकसामान्यगुणैः यथासम्भवैः युक्ता भवति, न नायकीयसर्व-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नायिका पुनर्नायकसामान्यगुणैस्त्यागादिभिर्यथासम्भवैर्युक्ता भवति ; सा च स्वस्त्री, अन्यस्त्री, साधारणस्त्रीति त्रिविधा ।

तत्र स्वस्त्री,—

**विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया ॥९९॥(ठ)**

यथा,—"लज्जापज्जत्तपसाहणाइं परभत्तिणिप्पिवासाइं
अविणअदुम्मेधाइं धण्णाणं घरे कलत्ताइं ॥" (ड)

**साऽपि कथिता त्रिविधा मुग्धा मध्या प्रगल्भेति॥१००॥**

तत्र,—

**प्रथमावतीर्णयौवनमदनविकारा रतौ वामा ।**
**कथिता मृदुश्च माने समधिकलज्जावती मुग्धा॥१०१॥(ढ)**

---

गुणैरिति भावः। एतेन दत्ततेजांसि न हि नायिकानां वर्णनीयानि, इत्याशयेनैव दत्तादयः सात्त्विकाः गुणवर्गाः नायकस्यैव प्राग् व्याख्याता इति बोध्यम् ।

(ठ) विनयेति ।—विनयः,—शिष्टाचारः, आर्जवं—निष्कपटतयाऽवस्थानम्, इत्येवमादिभिर्युक्ता, आदिपदेन शौचादीनां ग्रहणम् । गृहकर्मपरा—गार्हस्थ्यविधानरता, पतिव्रता—पत्यनुरागिणी, स्वीया भवति ।

(ड) उदाहरति, लज्जेति ।—[ "लज्जापर्याप्तप्रसाधनानि परभर्तृनिष्पिपासानि। अविनयदुर्मेधानि धन्यानां गृहे कलत्राणि ॥" ] इति संस्कृतम् । अस्यार्थः ; —धन्यानां—पुण्यवतां जनानां, गृहे, कलत्राणि—स्त्रियः, एतादृशानि भवन्ति ; यथा ;—लज्जायै पर्य्याप्तानि—समर्थानि, प्रसाधनानि—अलङ्काराः, येषां तादृशानि, परभर्तृषु—परपुरुषेषु इत्यर्थः, निष्पिपासानि—तृष्णारहितानि, निरभिलाषाणीत्यर्थः, तथा अविनये—अशिष्टव्यवहारे, दुर्मेधानि—मेधारहितानि, अविनयानभिज्ञानि इत्यर्थः, अप्रमत्तानीति यावत् ।

(ढ) मुग्धां निर्वक्ति, प्रथमेति ।—प्रथमम्, अवतीर्णः,—उद्गतः, यौवनस्य—मदनस्य च विकारो यस्याः ; यद्वा,—प्रथमावतीर्णौ—नवोत्पन्नौ, यौवनमदनविकारौ —तारुण्यमन्मथविलासौ यस्याः, तथोक्ता ; रतौ—सुरतव्यापारे, वामा—प्रतिकूला । [ तत्रा च "सकम्पा चुम्बने वक्त्रं हरत्येषोपगूहिता । पराहत्य चिरं तल्प आस्ते रन्तुञ्च वाञ्छति ॥" इत्याप्तलक्षणा ] ; माने—भर्त्तारं प्रति कोपे, मृदुः,—क्षणादेव प्रसाद-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र प्रथमावतीर्णयौवना यथा मम तातपादानाम्,—

"मध्यस्य प्रथिमानमेति जघनं, वक्षोजयोर्मन्दता
दूरं यात्युदरञ्च, रोमलतिका नेत्रार्जवं धावति ।
कन्दर्पं परिवीक्ष्य नूतनमनोराज्याभिषिक्तं क्षणात्
अङ्गानीव परस्परं विदधते निर्लुण्ठनं सुभ्रुवः ॥" (घ)

तत्र प्रथमावतीर्णमदनविकारा यथा मम प्रभावतीपरिणये,—

"दत्ते सालसमन्थरं भुवि पदं, निर्याति नान्तःपुरात्
नोद्दामं हसति, क्षणात् कलयते ह्रीयन्त्रणां कामपि ।

---

प्रकटनशीलेत्यर्थः,—[ तच्च "अन्यां निषेवमाणेऽपि यदि कुर्यात स्म प्रिये । रोदित्यथापतः स्वस्थमनुनीता च तुष्यति ॥" इत्युक्तदिशा सिद्धम् ] तथा, सलधिकलज्जावती—अतिलज्जाशीला इत्यर्थः, मुग्धा, कथिता ।

(घ) प्रथमावतीर्णयौवनामुदाहरति, मध्यस्येति ।—कन्दर्पं—कामदेवमित्यर्थः, ("कन्दर्पो दर्पकोऽनङ्गः कामः" इत्यमरः) नूतनं यन्मनोराज्यं—मनसो मनोनामकस्य प्रदेशस्य राज्यं, तत्राभिषिक्तं तथाभूतमित्यर्थः ; मनोराज्यं प्रशासितुं सद्योऽभिषिक्तमिति भावः ; अथवा,—नूतनं यथा स्यात् तथा मनोराज्ये मनःस्वरूपे शासनीयप्रदेशे, अभिषिक्तम् अभिषेकमापन्नम् । परिवीक्ष्य—दृष्ट्वा, क्षणात्—क्षणमात्रेण, सुभ्रुवः,—सुन्दरभ्रूयुक्तायाः कामिन्याः, अङ्गानि (कर्त्तृपदमिदम्) परस्परम्—अन्योऽन्यं, निर्लुण्ठनं—बलादपहरणं, विदधते—कुर्वन्ति इव ; तथा हि, जघनं (कर्त्तृ॰) मध्यस्य—मध्यदेशस्य, कटिदेशस्येत्यर्थः, प्रथिमानं—स्थुलत्वं, विशालत्वमित्यर्थः, एति—प्राप्नोति, अधिकरोतीति यावत् ; मध्यदेशे या विशालता आसीत्, सा जघनेन लुण्ठिता, जघनस्य या क्षीणता आसीत्, सा मध्यदेशेनेति भावः । वक्षोजयोः,—स्तनयोः, ("वक्षोजः स्तनः कुचः पयोधरः" इति कोषः) मन्दता—क्षीणता, दूरम्—अत्यर्थं यथा स्यात् तथा, उदरं—कुक्षिं, याति—प्राप्नोति ; उदरे या स्थूलताऽऽसीत् सा स्तनाभ्यां लुण्ठिता, अतः ताभ्यां त्यक्ता या क्षीणता सा उदरेण गृहीतेति निष्कृष्टम् ; तथा—रोमलतिका—रोमावली, नेत्रयोः आर्जवं—सारल्यं, (गृहीतुं) धावति—प्राप्नोतीत्यर्थः ; अतः नेत्रयोः या सरलताऽऽसीत् सा रोमावल्या लुण्ठिता ; रोमावल्या या कुटिलताऽऽसीत् सा इदानीं नेत्राभ्यामित्यर्थः, सरला रोमावली जाता, नेत्रे च कुटिले इति निष्कर्षः । राज्ञः प्रथमाभिषेकसमये सानन्दाः सोन्मादमिव प्रजाः परस्परं लुण्ठन्तीति प्रसिद्धिः । शार्दूलविक्रीडितं वृत्तम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

किञ्चिद्भावगभीरवक्रिमलवस्पृष्टं मनाग् भाषते
सभ्रूभङ्गमुदीक्षते प्रियकथामुल्लापयन्तीं सखीम् ॥" (त)

रतौ वामा यथा,—

"दृष्टा दृष्टिमधो ददाति, कुरुते नालापमाभाषिता,
शय्यायां परिवृत्य तिष्ठति, बलादालिङ्गिता वेपते।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते,
जाता वामतयैव सम्प्रति मम प्रीत्यै नवोढ़ा प्रिया ॥" (थ)

---

(त) प्रथमावतीर्णमदनविकारामुदाहरति, दत्ते इति।—सालसमन्थरं—सालसं मन्थरं—मन्दञ्च इति यथा तथा, भुवि, पदं, दत्ते—निक्षिपति, अन्तःपुरात् न निर्य्याति—निर्गच्छति, उद्दामम्—उत्कटं यथा तथा; न हसति, क्षणात्—क्षणमात्रेण, कामपि—अनिर्व्वचनीयां, ह्रीयन्त्रणां—लज्जाजनितां वेदनां, लज्जापारवश्यमित्याशयः, कलयते—व्यनक्ति; किञ्चित्—ईषत्, अल्पमित्यर्थः, भावेन—आशयेन, निगूढ़ाभिप्रायेणेति यावत्, गभीरः,—दुरवगाहः यः, वक्रिमलवः,—कौटिल्यभावलेशः, तेन स्पृष्टं यथा तथा, मनाक्—अल्पं, भाषते—कथयति; तथा प्रियस्य—पत्युः, कथाम्, उल्लापयन्तीम्—उद्घोषयन्तीं, सादरं कथयन्तीमित्याशयः; सखीं सभ्रूभङ्गम्, उदीक्षते—निरीक्षते। कर्त्तृपदं प्रभावतीत्यूहनीयम्। शार्दूलविक्रीड़ितं वृत्तम्।

(थ) रतिवामामुदाहरति, दृष्टेति।—नवोढ़ा—अभिनवविवाहिता, प्रिया, दृष्टा—निरीक्षिता सती, मयेति शेषः, अधः,—नीचैः, दृष्टिं—नेत्रवृत्तिं, ददाति—विधत्ते, अधोमुखी भवतीत्यर्थः; आभाषिता—आलपने कृतप्रयत्नेति भावः, मयेति शेषः, आलापं न कुरुते—उत्तरं न ददातीत्यर्थः; शय्यायां—शयनीयोपरि, परिवृत्य—विमुखीभूय, तिष्ठति—वर्त्तते; बलात्—बलमाश्रित्य, [ल्यबर्थे पञ्चमी] आलिङ्गिता—आश्लिष्टा सती, वेपते—कम्पते; सखीषु—स्वसहचरीषु, वासभवनात्—शयनीयदेशात्, निर्य्यान्तीषु—निर्गच्छन्तीषु सतीषु, निर्गन्तुं—बहिर्गन्तुमेव, ईहते—चेष्टते; अतः, सम्प्रति—नवसङ्गमे, वामतयैव—प्रतिकूलतयैव, मम, प्रीत्यै—आनन्दाय, जाता। नवपरिणीता हि नायिका मुग्धा भवन्ति, तासाञ्च लज्जाऽऽधिक्यं प्रकृत्यनुकूलतयाऽतितरां शोभते, अन्यथा प्रकृतिप्रतिकूलतया स्वरूपतश्च्यवनमेव स्यात्, किं पुनः शोभाचर्चेति भावः। शार्दूलविक्रीड़ितं वृत्तम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मानेे मृदुर्यथा,—

"सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्य्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलाऽलकैरश्रुभिः ॥" (द)

समधिकलज्जावती यथा,—"दत्ते सालसमन्थरम्" इत्यत्र श्लोके । अत्र समधिकलज्जावतीत्वेनापि लब्धाया रतिवामताया विच्छित्तिविशेषवत्तया (ध) पुनः कथनम् ।

अथ मध्या,—

**मध्या विचित्रसुरता प्ररूढस्मरयौवना ।**
**ईषत्प्रगल्भवचना मध्यमव्रीड़िता मता ॥ १०२ ॥**

---

(द) माने मृदुमाह, सेति ।—अमरुशतकस्येदं पद्यम् । सा बाला, पत्युः प्रथमापराधसमये, (अपराधोऽन्यनायिकासङ्गमस्वरूपः) सखीषु साधुरिति सख्यं—["तत्र साधुः" (४।४।९८ पा०) इति यत्] सखीजनोचितं प्रेम, तेन (सख्येन) य उपदेशस्तं तथोक्तं विना । सविभ्रमेति ।—सविभ्रमं—सस्मरविकारं यथा तथा याऽङ्गवलना—अङ्गानां कम्पनं, नेत्रभ्रूगण्डादीनां स्वमतसंसूचनाय परिचालनं, पिचित्रस्पन्दनादिभिः किञ्चित् तिर्य्यक्करणमित्याशयः, तया सविभ्रमाङ्गवलनया सह, वक्रोक्तिसंसूचनं—वक्रोक्तिभ्यः संसूचनं, संवलितेऽर्थरहस्यमिति यावत्; तत् तथोक्तं, नो—नैव, जानाति; केवलं स्वच्छैः,—अतिनिर्म्मलैः । अच्छेति ।—अच्छयोः,—निर्म्मलयोः, कपोलयोः,—गण्डयोर्मूलात् गलितैः ("स्वच्छैरच्छकपोलमूलगलितैः" इत्यनेन पत्रावलीविन्यासाञ्जनाद्यभावात् नेत्राम्बुगण्डयोः निर्म्मलता पर्य्यवसिता स्यात्)। लुठदिति ।—लुठन्तः,—इतस्ततश्चलन्तः, लोलाः,—चञ्चलाः, अलकाः,—चूर्णकुन्तलाः येषु तादृशैः, अश्रुभिः,—वाष्पैः, पर्य्यस्ते—पूर्णे, नेत्रोत्पले यस्यास्तथाभूता सती, [एतेन अजस्रातिक्रन्दनं नायिकायाः सूचितम्]। रोदित्येव । शार्दूलविक्रीड़ितं वृत्तम् ।

(ध) विच्छित्तिविशेषवत्तया—वैचित्र्यविशेषसम्पादकत्वेनेत्यर्थः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र विचित्रसुरता यथा,—

"कान्ते तथा कथमपि प्रथितं मृगाक्ष्या
चातुर्य्यमुद्धतमनोभवया रतेषु।
तत्कूजितान्यनुवदद्भिरनेकवारं
शिष्यायितं गृहकपोतशतैर्यथाऽस्याः" ॥ (प)

प्ररूढ़स्मरा यथाऽत्रैव उदाहरणे। प्ररूढयौवना यथा मम,—

"नेत्रे खञ्जनगञ्जने, सरसिजप्रत्यर्थि पाणिद्वयं,
वक्षोजौ करिकुम्भविभ्रमकरीमत्युन्नतिं गच्छतः।
कान्तिः काञ्चनचम्पकप्रतिनिधिर्वाणी सुधास्पर्द्धिनी,
स्मेरेन्दीवरदामसोदरवपुस्तस्याः कटाक्षच्छटा" ॥ (फ)

---

(न) प्रसङ्गप्राप्तां मध्यां नायिकां वर्णयति, मध्येति।—विचित्रं—नैपुण्यरम्यं, सुरतं यस्याः सा, प्ररूढ़े—अत्यर्थमुत्पन्ने, स्मरयौवने—कन्दर्पतारुण्ये, यस्याः तथाविधा, ईषत्—किञ्चित्, प्रगल्भं—धार्ष्ट्ययुक्तं, वचनं यस्याः सा, मध्यमं व्रीड़ितं—लज्जा, यस्याः तथाविधा, अल्पलज्जाऽन्विता इत्याशयः। मध्या—मध्यमावस्था, नायिका मता, अत एव पुस्तकान्तरे,—"मध्यात्तयौवनानङ्गा मोहान्तः सुरतक्षमा" इति पाठः परिदृश्यते।

(प) विचित्रसुरतामुदाहरति, कान्ते इति।—उद्धतेति।—उद्धतः,—उत्कटः, मनोभवः,—कामः, यस्याः तथाभूतया, मृगाक्ष्या—हरिणलोचनया, रतेषु—सुरतक्रीड़ासु, कान्ते—पत्यौ विषये; अथवा,—कान्ते! इति सम्बोधनपदम्। [एतेन कस्यचित् कां प्रति प्रमदाजनोचितं वयस्यासौरतवर्णनमिति सूचितम्] तथा—तेन प्रकारेण, कथमपि—समुन्नतेन व्यवसायेन, चातुर्य्यं—सुरतरणपाण्डित्यं, प्रथितं—प्रकटीकृतम्, अनन्तानङ्गभङ्गिभाववैचित्र्येण प्रदर्शितमिति यावत्; यथा अनेकवारम्—असकृत्; तत्कूजितानि—तस्याः कूजितानि—अव्यक्तशब्दविशेषास्तानि, अनुवदद्भिः,—सुरतकूजनाऽव्यवहितानन्तरं तथैवानुकुर्व्वद्भिः इत्याशयः, गृहकपोतशतैः,—गृहस्थितैः अनेकैः कपोतैः, अस्याः,—विचित्रसुरतप्रवीणायाः नायिकाया इत्यर्थः, शिष्यायितं—शिष्यवत् आचरितम्। गृहकपोताः पुनः पुनः सुरतकूजनानि श्रुत्वा तथैव पुनः पुनः शिष्यवत् आवर्त्तयन्ति स्मेति भावः। वसन्ततिलकं वृत्तम्।

(फ) प्ररूढ़यौवनामुदाहरति, नेत्रे इति।—तस्याः,—कामिन्याः, नेत्रे—नयने,



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एवमन्यत्रापि। (ब)

अथ प्रगल्भा,—

**स्मरान्धा गाढ़तारुण्या समस्तरतकोविदा।**
**भावोन्नता दरव्रीड़ा प्रगल्भाऽऽक्रान्तनायका॥१०३॥(भ)**

खञ्जनगञ्जने—खञ्जनयोः खञ्जननेत्रयोरित्यर्थः, गञ्जने तिरस्कारकारिणी; पाणिद्वयं—भुजयुगलं, सरसिजयोः,—कमलयोः, प्रत्यर्थि—सौन्दर्य्येण तिरस्कारितया शत्रुभूतमिति यावत्, ("अभिघाति परा ऽराति प्रत्यर्थि-परिपन्थिनः" इत्यमरः) कमलापेक्षयाऽपि अतिसुन्दरमिति भावः; वक्षोजौ—स्तनौ, करिकुम्भयोः, विभ्रमकरौ—विशिष्टभ्रम-कारिणोम्, अत्युन्नतिं गच्छतः,—महौन्नत्यं प्राप्नुतः, कान्तिः,—सौन्दर्य्यं, रूपमिति यावत्; काञ्चनचम्पकस्य—स्वर्णचम्पकनामपुष्पविशेषस्य, प्रतिनिधिः,—प्रतिरूपभूता, वाणी—वचनं, सुधास्पर्द्धिनी—अमृतजयिनी, ["सुधास्यन्दिनी" इति पाठान्तरे तु—सुधाधारा-वतीत्यर्थः;] कटाक्षच्छटा—वक्रदृष्टिपातपरम्परा, स्मेराणि—विकसितानि यानि इन्दीवराणि—नीलकमलानि तेषां (तत्कृतं) दाम—रज्जुः, माला वा, तस्य सोदरं—सदृशतया सहोदरभ्रातृवत् प्रतीयमानं वपुः,—स्वरूपं यस्यास्तादृशी ("इन्दीवरन्तु नीलेऽस्मिन्" इत्यमरः)। शार्दूलविक्रीड़ितं वृत्तम्।

(ब) एवमिति।—एवं—लक्षणानुसारेण, अन्यत्र—अन्यस्मिन् स्थाने, किञ्चित्-प्रगल्भवचनामध्यमव्रीड़ितयोरुदाहरणं स्वयमूह्यम्। किञ्चित्प्रगल्भवचना यथा,—"सुभग! कुरवकस्त्वं किं ममाऽऽलिङ्गनोत्कः? किमु मुखमदिरेच्छुः केसरो नो हृदिस्थः। त्वयि नियतमशोके युज्यते पादघातः, प्रियमिति परिहासात् पेशलं काचिदूचे॥" मध्यम-व्रीड़िता यथा,—"किञ्चिदाकुञ्चयत्यास्यं मन्दहासाऽतिसुन्दरम्। दरमुद्रितनेत्रान्ता चुम्बतीशे नितम्बिनी॥" इति। [पुस्तकान्तरे तु—"अथ यौवनवती मध्या यथा,—"आलापान् भ्रूविलासो विरलयति रसन्नाहुविक्षेपपातं, नीवीग्रन्थिं प्रथिम्ना प्रतनयति मनाङ्मध्यनिम्नो नितम्बः। उत्पुष्यत्पार्श्वमूर्च्छत्कुचशिखरमुरो नूनमन्तः स्मरेण, स्पृष्टा कोदण्डकोट्या हरिणशिशुदृशो दृश्यते यौवनश्रीः॥ एवं मध्याभावादिकमूह्यम्" इति पाठः]।

(भ) प्रगल्भां कथयति, स्मरान्धेति।—स्मरान्धा—मन्मथोद्रेकेण विनष्टदृष्टिः, प्रवृद्धकामेन हिताहितज्ञानशून्येत्यर्थः; गाढ़तारुण्या—अत्युन्नतयौवना, समस्तरतकोविदा—सर्व्वविधसुरतव्यापारपण्डिता, भावोन्नता—भावैः,—सात्त्विकभावैः, उन्नता—सौन्दर्य्योत्कर्षमवाप्ता इत्याशयः। दरव्रीड़ा—अल्पलज्जाशीला। अन्यत् स्पष्टम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्मरान्धा यथा,—

"धन्याऽसि, या कथयसि प्रियसङ्गमेऽपि
विस्रब्धचाटुकशतानि रतान्तरेषु।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः! शपामि, यदि किञ्चिदपि स्मरामि" ॥ (म)

गाढ़तारुण्या यथा,—

"अत्युन्नतस्तनमुरो नयने सुदीर्घे,
वक्रे भ्रुवावतितरां वचनं ततोऽपि।

(म) स्मरान्धामुदाहरति, धन्येति।—सखीनां मध्ये सुरतकालिकवहिर्वाक्यालापकारिणीं काञ्चिदुपहसन्त्याः कस्याश्चिदुक्तिरियम्। या, त्वं, प्रियसङ्गमे—प्रियेण वल्लभेन सह मिलनकालेऽपि, रतान्तरेषु—सुरतव्यापारमध्येषु, अपि, विस्रब्धचाटुकशतानि—विश्वस्तप्रियवाक्यसमूहानि, कथयसि, सा त्वं, धन्या—प्रशस्ता, असि। अत्र आपाततः प्राणनाथसमागमे एव उदात्तानन्दपाथोधितरङ्गपूराप्लुतहृदयतया न तथा इन्द्रियान्तरस्फुरणं सम्पद्यते, येन तथाविधं वक्तुं शक्नुयात्; तचापि न आद्यन्तांशे, अपि तु मध्यसुरते, तदा तस्य स्मरणमप्यशक्यं, किं पुनः कथनम्? इत्यसाधारणमेव तव वाक्यरचनाऽवहितत्वमिति त्वमेका सुकृतिनी इत्याशयः प्रतिभासते। हे सख्यः! प्रियेण, नीवीं—नाभितलवसनग्रन्थिं, प्रति, करे, प्रणिहिते—प्रेरणारम्भीकृते, नीवीग्रन्थिमोचनार्थं करप्रेरणाभिलाषे कृते सति इत्यर्थः। [अत्र आदिकर्मणि निष्ठाप्रत्ययः, अन्यथा अनभिप्रेतालापत्वम् अभिप्रायगौरवव्याघातश्च स्यात्] तु किन्तु, यदि किञ्चिदपि स्मरामि, तदा, शपामि—शपथं करोमि ["अत्र परस्मैपदमशिष्टम्" इति तर्कवागीशाः]। न किमपि स्मरामीत्यर्थः। श्रीमतीनामग्रे सशपथं कथ्यते, यदि तत्समये किञ्चिदपि स्मरामि। अतः तथाविधे समये क्व मम तथाविधेन्द्रियप्रपञ्चनम्? इति भावः। [अत्र यद्यपि "शप उपालम्भे" (वा०) इति आत्मनेपदप्राप्तिप्रसङ्गः तथा सत्यपि शपथप्रकाशनाद्याक्रोशाऽविवक्षया न तत्प्राप्तिः इति नागेशः]। अत्रानुरूपमेकं पद्यं यथा,—"धन्यास्ताः सखि! योषितः प्रियतमे सर्वाङ्गलग्नेऽपि या, प्रागल्भ्यं प्रथयन्ति मोहनविधावालम्ब्य धैर्यं महत्। अस्माकन्तु तदीयपाणिकमलेऽप्युन्मोचयत्यंशुकं, कोऽयं का वयमत्र किं नु सुरतं नैव स्मृतिर्जायते॥" इति। वसन्ततिलकं वृत्तम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मध्योऽधिकं तनुरनूनगुरुर्नितम्बो
मन्दा गतिः किमपि चाद्भुतयौवनायाः" ॥ (य)

समस्तरतकोविदा यथा,—

"क्वचित्ताम्बूलाक्तः क्वचिदगुरुपङ्काङ्कमलिनः
क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपदः।
वलीभङ्गाभोगैरलकपतितैः शीर्णकुसुमैः
स्त्रियाः सर्वावस्थं कथयति रतं प्रच्छदपटः" ॥ (र)

---

(य) गाढतारुण्यामुदाहरति, अत्युन्नतस्तनमिति।—अद्भुतयौवनायाः,—उद्दामयौवनायाः कामिन्याः, उरः,—वक्षःस्थलम्, अत्युन्नतौ स्तनौ यत्र तादृशं, नयने—नेत्रे, सुदीर्घे—अतिविशाले, भ्रुवौ, वक्रे—कुटिले, वचनं, ततोऽपि—भ्रूभ्यामपि, अतितराम्—अत्यर्थं, वक्रमित्यर्थः, मध्यः,—कटिदेशः, अधिकं, तनुः,—क्षीणः, नितम्बः, अनूनगुरुः,—अतिविशालः, किमपि—किमप्यनिर्वचनीयं यथा स्यात् तथा, मन्दा—मत्तगजेन्द्रगतिसदृशीति यावत्, गतिः,—गमनम् [ एतेनास्याः अतिमन्थरगमनस्य निरूपणमनुकरणं चाप्यशक्यमिति सूच्यते ]। वसन्ततिलकं वृत्तम्।

(र) शय्यास्तरणवर्णनेन नायिकाया विविधरतिज्ञानं सूचयन्नुदाहरति, क्वचिदिति।—प्रच्छदपटः,—शय्याऽऽस्तरणवसनमित्यर्थः, क्वचित्—कस्मिंश्चिद्भागे, ताम्बूलाक्तः,—अधरताम्बूलरागरञ्जितः इत्यर्थः, [ एतेन अधोमुखायाः ऊर्द्धोत्तोलितनितम्बायाः मार्ज्जाररतिः दर्शिता ]; क्वचित्—तदपरस्मिन् कस्मिंश्चिद्देशे, अगुरुणः,—स्तनद्वयोपरिलिप्तस्य चन्दनविशेषस्य "कालागुरुणः" इत्यर्थः, पङ्कः तस्याङ्काः,—चिह्नानि, तैर्मलिनः,—कलुषितः, [ एतेन अधोमुखायाः समभावेन स्थितायाः नायिकायाः धेनुकरतिः सूचिता ]; क्वचित्—ततो भिन्ने कस्मिंश्चित् तदीये स्थले, चूर्णानि—स्वभावरतेषु नायकमुखावलोकनादिजनितलज्जाऽपनोदनार्थं दीपनिर्वापणार्थोत्क्षिप्तानि सुगन्धद्रव्याण्युद्गिरति, उद्वमतीति यावत्, चूर्णोद्गारी [ एतेन स्वाभाविकरतिः सूचिता ]; क्वचित्—ततोऽपि भिन्नेऽशे, सालक्तकानि—अलक्तकरागरञ्जितानि, पदानि—चरणानि, उपचारात् तन्न्यासजन्यानि चिह्नानि यत्र स सालक्तकपदः, [ एतेन सङ्कुचितचरणयुगलायाः उत्तानस्थिताया रतिविशेषः सूचितः ]; वलीभिः,—त्रिवलीभिः, कृता ये भङ्गाः,—निम्नोन्नतानि, तेषामाभोगाः,—परिपूर्णताः, तैः वलीभङ्गाभोगैः [ अनेनापि अधोमुखसमभावस्थितायाः शय्यास्तरणे उदरस्थत्रिवलीचिह्नसम्भवात्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भावोन्नता यथा,—

"मधुरवचनैः सभ्रूभङ्गैः कृताङ्गुलितर्ज्जनै-
रलसवलितैरङ्गन्यासैर्महोत्सवबन्धुभिः।
असकृदसकृत्स्फारस्फारैरपाङ्गविलोकितै-
स्त्रिभुवनजये सा पञ्चेषोः करोति सहायताम्" ॥ (ल)

स्वल्पव्रीड़ा यथा,—"धन्याऽसि या कथयसि" इत्यत्रैव।

आक्रान्तनायका यथा,—

"स्वामिन्! भङ्गुरयालकं, सतिलकं भालं विलासिन्! कुरु,
प्राणेश! त्रुटितं पयोधरतटे हारं पुनर्योजय।

---

रतिविशेषः सूच्यते ]; तथा अलकेभ्यः,—चूर्णकुन्तलेभ्यः, पतितैः,—स्खलितैः, शीर्ण-कुसुमैः,—रतिविमर्द्दनात् इतस्ततः विच्छिन्नपुष्पैः इत्यर्थः, [ अनेन पुरुषोपरिस्थितायाः अधोमुखायाः अलकेभ्यः पुष्पपातसम्भवात् पुरुषायितरतिः सूच्यते। अत्र सर्व्वत्र "इत्थं-भूतलक्षणे" (२।३।२१ पा०) इति तृतीया, तैरेतैरुपलक्षितः इत्यर्थः ] स्त्रियाः,—एवंविधप्रच्छदपटतया विविधसुरतनिपुणाया नायिकायाः इत्यर्थः, सर्वावस्थं—सर्व-प्रकारं, रतं—रतिं, कथयति—प्रकटयति, सूचयतीति यावत्। शिखरिणी वृत्तम्।

(ल) मधुरवचनैरिति।—सा कान्ता, पञ्चेषोः,—पञ्च इषवो बाणा यस्य तादृशस्य कामस्येत्यर्थः, त्रिभुवनजये—त्रिलोकीविजयं साधयितुं, मधुरवचनैः,—मिष्टभाषितैः, भ्रुवोः भङ्गाः,—तरङ्गाः, उपचारात् तच्चाञ्चल्यानि तैः सह वर्त्तन्ते इत्येवम्भूतैः, कृताः अङ्गुल्या तर्जनाः, येषु तैः, सरसचित्राङ्गुलिपरिचालनसङ्केतादिभिः इत्यर्थः; अलसवलितैः,—मृदुमन्दव्यापारितैः; [ अलसवलितैरित्यत्र "रभसरचितैः" इति पाठे—रभसेन—प्रमदेन, रचितैः,—सञ्चालितैः इत्यर्थो ज्ञेयः ] महोत्सवबन्धुभिः,—महोत्सवस्य बन्धुभिः, महोत्सवजनकैरित्यर्थः, परमप्रीतिकरैरिति यावत्; अङ्ग-न्यासैः,—शरीरसञ्चालनैः, तथा असकृदसकृत्—वारंवारं, स्फारस्फारैः,—अत्यायतैः, अपाङ्गविलोकितैः, [ "कर्त्तृकरणयोः तृतीया" (२।३।१८ पा०) इति करणे तृतीया ] तथा च, मधुरवचनादिद्वारेत्यर्थो निष्कृष्टः, सहायतां—साहाय्यम्, आनु-कूल्यमिति यावत्; करोति। हरिणीवृत्तं,—"न समर स ला गः षड्वेदैर्हयैर्हरिणी मता" इति तल्लक्षणात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत्युक्त्वा सुरतावसानसमये सम्पूर्णचन्द्रानना
स्पृष्टा तेन तथैव जातपुलका प्राप्ता पुनर्मोहनम्" ॥ (व)

मध्याप्रगल्भयोर्भेदान्तराण्याह,—

**ते धीरा चाप्यधीरा च धीराऽधीरेति षड्विधे ॥१०४॥**

ते—मध्या-प्रगल्भे ।

तत्र,—

**प्रियं सोत्प्रासवक्रोक्त्या मध्या धीरा दहेद्रुषा ।**
**धीराऽधीरा तु रुदितैरधीरा परुषोक्तिभिः ॥१०५॥ (श)**

तत्र मध्या-धीरा यथा,—

"तदवितथमवादीर्यन्मम त्वं प्रियेति
प्रियजनपरिभुक्तं यद्दुकूलं दधानः ।

---

(व) स्वामिन्निति ।—सम्पूर्णचन्द्रानना—पूर्णचन्द्रसदृशसुन्दरमुखी रमणी, सुरतावसानसमये—सुरतान्ते, हे स्वामिन् !—प्राणप्रिय ! अलकं—चूर्णकुन्तलं, भङ्गुरय —भङ्गीयुक्तं कुरु, हे विलासिन् ! भालं—ललाटं, सतिलकं—तिलकालङ्कृतं, कुरु, हे प्राणेश ! प्राणनाथ ! पयोधरतटे—पयोधरयोः स्तनयोः तटः उपरिदेशः, तटवदुन्नतत्वात् पयोधरतट इति निर्द्देशः ; तत्र, त्रुटितं—छिन्नं, हारं, पुनर्योजय—पुनः सन्धेहि, इति, उक्त्वा, तेन—स्वामिना, तथैव—उक्तप्रकारेणेत्यर्थः, तत्तत्कार्य्यकरणेनेति भावः, स्पृष्टा, अत एव जातपुलका—सञ्जातरोमाञ्चा सती, पुनः मोहनं प्राप्ता—पुनः सुरतामोदज्ञानं लब्धवतीव स्थिताऽऽसीदिति भावः। शार्दूलविक्रीड़ितं वृत्तम् ।

(श) प्रियमिति ।—मध्या—मध्यमां शैशवयौवनयोरन्तरालामवस्थां प्राप्ता, धीरा, सोत्प्रास-वक्रोक्त्या—सपरिहासश्लिष्टवचनेन, प्रियं—कान्तं, रुषा—क्रोधेन, [ अत्र इत्थम्भूतलक्षणे तृतीया ] दहेत्—सन्तापयेत्, दग्धमिव कुर्य्यादिति भावः । धीराऽधीरा—किञ्चिद्धैर्य्यशालिनी नायिकेत्यर्थः, तु—पुनः, रुदितैः,—रोदनैः, अश्रुपातपूर्व्वकं विलापैरिति यावत् ; "प्रियं रुषा दहेत्" इति पूर्व्वेणान्वेति । अधीरा—सर्वथा त्यक्तधैर्य्या नायिका पुनः, परुषोक्तिभिः,—परुषैर्वचनैः, "प्रियं रुषा दहेत्" इति पूर्व्वतोऽन्वेति । अत्रोक्तसंज्ञात्रयेऽपि मध्याऽन्वेति इति ज्ञातव्यम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मदधिवसतिमागाः कामिनां मण्डनश्रीः
व्रजति हि सफलत्वं वल्लभालोकनेन" ॥ (ष)

मध्यैव धीराऽधीरा यथा,—

बाले ! नाथ ! विमुञ्च मानिनि ! रुषं, रोषान्मया किं कृतं ?
खेदोऽस्मासु, न मेऽपराध्यति भवान् सर्वेऽपराधा मयि ।
तत् किं रोदिषि गद्गदेन वचसा ? कस्याग्रतो रुद्यते ?
नन्वेतन्मम, का तवास्मि ?—दयिता, नास्मीत्यतो रुद्यते"॥ (स)

---

(ष) तदिति।—एकां सम्भुज्य तत्परिहितवसनं परिधाय गृहागतं स्वामिनं प्रति कस्याश्चित् सोत्प्रासवक्रोक्तिरियम्। "त्वं मम प्रिया" इति यत्, अवादीः,—उक्तवानसि, तत्, अवितथं—सत्यं, यत्—यस्मात्, प्रियजनेन—अन्यकामिनीजनेन, परिभुक्तं—परिहितं, दुकूलं—वसनं, तदीयमिति भावः, दधानः,—धारयन् सन्, स त्वमिति शेषः, मम, अधिवसतिम्—आलयम्, आगाः,—प्राप्तवानसि। एतद्दुकूलपरिधानेन विलक्षणा शोभा जाता, तद्दर्शनेन महती मे प्रीतिरिति स्फुटम् अवितथवादित्वं तवेति भावः। हि—यतः, कामिनां, मण्डनेन—भूषणेन, कृता श्रीः,—अलङ्कारशोभा इत्यर्थः, वल्लभालोकनेन—वल्लभा प्रिया, तत्कर्तृकालोकनेन प्रियजनकर्तृकदर्शनेनेत्यर्थः, सफलत्वं—कृतार्थत्वं, व्रजति—प्राप्नोति। अत्र च, अ—सम्बोधने, अधिक्षेपे वा ; वितथमिति मिथ्या, यद्यस्मात् मम तापाय, प्रतिनायिकापरिहितवस्त्रं परिधाय मम गेहं आगाः ; यद्यहं ते प्रिया स्यां, तदा मत्तापजनकं कर्म्म न कुर्याः। एतत् तावत् सतां मण्डनं न भवति ; यदि तवैतन्मण्डनं, तदा तज्जन्यशोभां या प्रिया भवति, तामेवावलोकय, ममाऽऽलोकनया किं प्रयोजनम् ? इति श्लेष एवात्र वक्रोक्तिः। शिशुपालवधस्येदं पद्यम्। मालिनी वृत्तं,—"ननमयययुतेयं मालिनी भोगिलोकैः" इति तल्लक्षणात्।

(स) बाल इति।—नायकस्य नायिकायायोक्तिप्रत्युक्तिरूपमेतदुदाहरणम्। हे बाले ! (इति नायकोक्तिः) नाथ !—स्वामिन् ! (इति नायिकायाः प्रत्युक्तिः) हे मानिनि !—मानवति ! रुषं—क्रोधं,विमुञ्च—परित्यज, (इति नायकोक्तिः) रोषात्—क्रोधात्, क्रोधमाश्रित्य इत्यर्थः, ["ल्यब्लोपे कर्म्मण्यधिकरणे च" इति वार्त्तिकेन ल्यपो लोपे ल्यबर्थे पञ्चमी ] मया, किं कृतम् ?—किमननुष्ठेयम् अनुष्ठितम् ? न किमपि ते अहितं कृतमिति भावः, ( इति नायिकायाः प्रत्युक्तिः) अस्मासु खेदः,—क्लेश इत्यर्थः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इयमेवाधीरा यथा,—

"सार्द्धं मनोरथशतैस्तव धूर्त्त ! कान्ता
सैव स्थिता मनसि कृत्रिमहावरम्या ।
अस्माकमस्ति न हि कश्चिदिहावकाशः
तस्मात् कृतं चरणपातविड़म्बनाभिः" ॥ (ह)

प्रगल्भा यदि धीरा स्याच्छन्नकोपाकृतिस्तदा ।
उदास्ते सुरते तत्र दर्शयन्त्यादरान् बहिः॥१०६॥(क)

कृतः इति शेषः, (इति नायकस्योक्तिः) भवान्, मे—मह्यं, न, अपराध्यति, [ "राधीक्ष्योर्यस्य विप्रश्नः" (१।४।३९ पा०) इति सम्प्रदानम् ] सर्वे अपराधा मयि वर्त्तन्ते इति शेषः, (इति नायिकायाः प्रत्युक्तिः) तत्—तदा, गद्गदेन—अर्द्धस्फुटेन, वचसा, किं—कथं, रोदिषि ? (इति नायकोक्तिः) कस्य, अग्रतः,—समक्षं, रुद्यते ? (इति नायिकाया प्रत्युक्तिः) ननु—भोः ! एतत्—रोदनं, मम अग्रत इति शेषः, (इति नायकोक्तिः) भवतः तावदहं काऽपि न भवामि, मम रुषा कथं खेदः ? इत्यभिप्रायेणाह, का तवेति।—अस्मि—अहं, तव का ? (इति नायिकायाः प्रत्युक्तिः) दयिता—प्रिया, प्रियभार्य्या इति यावत्, मम त्वमिति शेषः, (इति नायिकोक्तिः) नास्मि—अहं तव न दयिता, प्रेमपात्रमिति यावत्, भवामि, इत्यतः रुद्यते मयेति शेषः, (इति नायिकायाः प्रत्युक्तिः)। शार्दूलविक्रीड़ितं वृत्तम्।

(ह) इयमेव—मध्यैव अधीरा तामुदाहरति, सार्द्धमिति।—परनायिकारतं पतिं कृतापराधतयाऽऽगत्य स्वचरणपतितमालोक्य कस्याश्चिदुक्तिः। हे धूर्त्त!—कितव! सैव—यस्यां त्वमनुरक्तः सा किल, कृत्रिमेण—कल्पितेन, स्वाभाविकेतरेणेत्यर्थः, न तु अनुरागनिबन्धनेनेति भावः, हावेन—भावविशेषेण, रम्या—मनोहारिणी, कान्ता—प्रिया, मनोरथानाम्—"एवं तया सह विहरिष्यामि, एवं तया सहाऽऽलपिष्यामि, एवं तया समं रहो भविष्यामि" इत्यादिरूपाणां, शतैः, सार्द्धं—सह, तव मनसि स्थिता; हि—यतः, इह—तव मनसीत्यर्थः, अस्माकं, कश्चित्, अवकाशः,—स्थानं, नास्ति, तस्मात्, चरणपातविड़म्बनाभिः,—पादपतनरूपैर्वञ्चनमात्रार्थैर्व्यापारैः, कृतम्—अलं, न त्वया मृषैव पादयोः पतित्वाऽस्मासु खेदः कार्य्य इत्यर्थः। वसन्ततिलकं वृत्तम्।

(क) प्रगल्भेति।—प्रगल्भा—प्रौढ़ा नायिका, धीरा यदि, तदा छन्ना—तिरो-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र—प्रिये। यथा,—

"एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद् दूरतः,
ताम्बूलाऽऽनयनच्छलेन रभसाऽऽश्लेषोऽपि संविघ्नितः।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्याऽन्तिके,
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः"॥ (ख)

धीराऽधीरा तु सोल्लुण्ठभाषितैः खेदयत्यमुम्॥ १०७॥ (ग)

अमुं—नायकम्।

---

हिता, कोपाकृतिः,—कोपस्य आकृतिः,—कोपसूचको मुखरागादिः यस्याः तादृशी स्यात्, निगूढ़रोषा भवेदित्यर्थः, [ अत्र तथाविधा सा इति कर्तृपदमध्याहार्य्यम् ] तत्र —प्रिये, वहिः, आदरान्, दर्शयन्ती, सुरते—प्रियेण समं विलासादौ, उदासे—उदासीना, अनुरागहीना इति यावत्, भवति।

(ख) उदाहरति, एकत्रेति।—चतुरया—विदग्धाया कयाचित् कामिन्या, कान्तं—प्रियं, विदेशादागतमिति शेषः, प्रति, उपचारतः,—वाह्यपरिचर्य्यया, प्रीति-हेतुव्यापारान् विधाय इत्यर्थः, कोपः,—क्रोधः, कृतार्थीकृतः,—सफलीकृतः, सम्भोग-प्रतिरोधः क्रोधस्य फलं, तेनैव कान्तो वशीकृत इति भावः; तथाहि, दूरतः,—दूरात्, दूरे एव पतिं दृष्ट्वेत्यर्थः, प्रत्युद्गमात्—समुपस्थितकान्तस्य सम्मानार्थमासनादुत्थानव्याजेन इत्यर्थः, एकत्र—एकस्मिन् स्थाने, आसनसंस्थितिः,—आसने उपवेशनीये, पीठादौ इति यावत्, संस्थितिः,—सहावस्थानम्, उपवेशनसम्बन्ध इति यावत्, परिहृता—परित्यक्ता; ताम्बूलस्य आनयनमेव छलं—व्याजः, तेन, रभसाश्लेषः,—वेगादालिङ्गनं, सहर्षमालिङ्गनमपि वा, ("रभसो वेगहर्षयोः" इत्यमरः) संविघ्नितः,—सम्यक् प्रतिरुद्धः इत्यर्थः, तथा, अन्तिके—समीपे, विजनत्वाभावोपपत्तये इत्याशयः, परिजनम्—अनुचरवर्गं, व्यापारयन्त्या—प्रेरयन्त्यां, नायकपरिचर्य्यार्थं व्यापारीकुर्वत्या सत्या इत्यर्थः, आलापोऽपि—सम्भाषणमपि, न मिश्रितः,—नोत्तरेण युक्तः कृत इत्यर्थः। शार्दूलविक्रीडितं वृत्तम्। अमरुशतकस्येदं पद्यम्।

(ग) धीरेति।—धीराऽधीरा—किञ्चिद्धीरा किञ्चिदधीरा नायिका, तु—पुनः, सोल्लुण्ठभाषितैः,—उल्लुण्ठा आक्षेपाः तैः सहितानि भाषितानि तैस्तथोक्तैः, (साधनैः) प्रियवक्तासमानैरप्रियैरित्याशयः, अमुं—नायकं, खेदयति—तिरस्करोतीत्यर्थः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा मम,—

"अनलङ्कृतोऽपि सुन्दर! हरसि मनो मे यतः प्रसभम्।
किं पुनरलङ्कृतस्त्वं सम्प्रति नखरक्षतैस्तस्याः?॥" (घ)

**तर्जयेत्ताड़येदन्या॥ १०८॥**

अन्या—अधीरा। यथा,—"शोणं वीक्ष्य मुखम्" इत्यत्रैव। अत्र च सर्वत्र "रुषा" इत्यनुवर्त्तते। (ङ)

**प्रत्येकं ता अपि द्विधा।**
**कनिष्ठज्येष्ठरूपत्वान्नायकप्रणयं प्रति॥ १०९॥** (च)

ताः,—अनन्तरोक्ताः षड्भेदा नायिकाः। यथा,—

"दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादराद्
एकस्या नयने पिधाय विहितक्रीड़ाऽनुबन्धच्छलः।

(घ) अनलङ्कृत इति।—हे सुन्दर! यतः,—यदा, अनलङ्कृतः,—न अलङ्कृतः, न केनाप्याऽऽभूषणादिनाऽऽभूषितोऽपि इति यावत्, त्वं, मे—मम, मनः, प्रसभं—बलेन, हरसि, तदेति शेषः, सम्प्रति, तस्याः,—प्रतिनायिकायाः, नखरक्षतैः,—नखाघातैः, अलङ्कृतः,—शोभितः, त्वं किं पुनः? मनो हरसीत्यत्र किं वक्तव्यम्? इति भावः।

(ङ) अधीरा लक्षयति, तर्जयेदिति।—अन्या—धीरातो भिन्ना, अधीरा नायिकेत्यर्थः, रुषेति शेषः, तर्जयेत्—भर्त्सयेत्, तथा, ताड़येत्—आहन्यात्, कान्तमिति पूर्वतोऽन्वेति। तथा च,—या रुषाऽऽकान्तं तर्जितुं ताड़ितुमपि वा प्रभवति, सा अधीरा नायिकेति निष्कर्षः। अन्यपदार्थमाह, अन्येति।—उदाहरति, यथा शोणमिति।—इदमत्र बोध्यम्;—"शोणं वीक्ष्य मुखम्" इत्यादि धृष्टनायकोदाहरणे प्रागुक्तम्। अतोऽत्रेदं न व्याख्यायते, किन्तु "पादेन प्रहृतम्" इत्यादिना नायिकाया स्फुटमधीरात्वमिति। अत्र, सर्वत्र—लक्षणपञ्चके इत्यर्थः। अन्यत् स्पष्टम्।

(च) प्रत्येकमिति।—कनिष्ठेति।—नायकप्रणयं प्रति—कान्तप्रेमापेक्षया, कनिष्ठज्येष्ठरूपत्वात्—अल्पमहत्त्वरूपात् इत्यर्थः। ताः,—पूर्वोक्ताः, धीरमध्याऽधीरमध्याधीराऽधीरमध्या-धीरप्रगल्भाऽधीरप्रगल्भा-धीराधीरप्रगल्भाः षड्विधाः नायिका इति भावः, द्विधा—द्विविधाः, स्युरिति शेषः। नायके अल्पप्रणयाः कनिष्ठा नायिकाः, अनल्पप्रणयाः पुनर्ज्येष्ठा इति एता द्विविधा इति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ईषद्वक्रितकन्धरः सपुलकः प्रेम्णोल्लसन्मानसाम्,
अन्तर्हासलसत्कपोलफलकां धूर्त्तोऽपरां चुम्बति॥" (छ)

मध्याप्रगल्भयोर्भेदास्तस्माद् द्वादश कीर्त्तिताः।
मुग्धा त्वेकैव तेन स्युः स्वीयाभेदास्त्रयोदश ॥११०॥
परकीया द्विधा प्रोक्ता परोढ़ा कन्यका तथा॥१११॥(ज)

तत्र,—

यात्रादिनिरताऽन्योढ़ा कुलटा गलितत्रपा॥११२॥(झ)

---

(छ) एकत्रैव ज्येष्ठा-कनिष्ठे उदाक्रियेते, दृष्ट्वेति।—धूर्त्तः,—चतुरः पतिः, एकस्मिन् आसने—शय्यायां, संस्थिते एकासनोपविष्टे ["एकासनमास्थिते" इति पाठान्तरे स एवार्थः] प्रियतमे—भार्य्ये, दृष्ट्वा, पश्चात्—पृष्ठतः, उपेत्य—शनैरागत्य, आदरात्—सम्मानात्, प्रणयप्रदर्शनव्याजेनेत्यर्थः, एकस्याः,—स्वल्पप्रणयायाः प्रियायाः इत्यर्थः, नयने, पिधाय—करतलाभ्यामाच्छाद्य, विहितं—कृतं, क्रीड़ाऽनुबन्धः,—क्रीड़ारम्भः एव छलं—व्याजः, येन तादृशः, ईषत्—अल्पं, वक्रिता—वक्रीकृता, ["तारकादिभ्य इतच्" (वा०) इति इतच्] कन्धरा—ग्रीवा, येन तथोक्तः, तथा सपुलकः,—सञ्जातरोमाञ्चः सन्, प्रेम्णा—प्रणयेन, उल्लसत्—प्रसीदत्, मानसं—चित्तं, यस्यास्ताम्; ["प्रेमोल्लसन्मानसाम्" इति पाठेऽपि स एवार्थः] अन्तर्हासेन—आन्तरिकेण विकासेन, निगूढ़प्रेमजनितचित्तोल्लासेनेति यावत्, लसन्तौ कपोलफलकौ—गण्डस्थले, यस्यास्तादृशीम्, अपराम्—अतिप्रणयिनीं, कामिनीं, चुम्बति। अत्र च यस्याः नयने पिहिते साऽपि प्रिया, किन्तु प्रणये किञ्चित् न्यूना, यस्याः पुनः मुखं चुम्बितं, सा ततो नायकस्य प्रणये ज्येष्ठेति बोध्यम्। अमरुशतकस्येदं पद्यम्। शार्दूलविक्रीड़ितं वृत्तम्।

(ज) एवं स्वीयाभेदानभिधाय परकीयां प्रस्तौति, परकीयेति।—परकीया नायिका इति शेषः, परोढ़ा—परेण ऊढ़ा परिणीता, तथा कन्यका—अजातोद्वाहा, ("कन्या त्वजातोपयमा" इत्यमरः) इत्येवं द्विधा—द्विविधा, भवतीत्यर्थः। वक्ष्यमाणलक्षणायाः कन्यकायाः पित्राद्यधीनपरिणयतया परकीयात्वं, परोढ़ायास्तु स्पष्टमिति बोध्यम्।

(झ) परोढ़ामाह, तत्रेति।—तत्र—तयोर्मध्ये, यात्रादिनिरता—यात्रा—उत्सवः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"स्वामी निश्वसितेऽप्यसूयति, मनोजिघ्रः सपत्नीजनः,
श्वश्रूरिङ्गितदैवतं, नयनयोरीहालिहो यातरः।
तद्दूरादयमञ्जलिः, किमधुना दृग्भङ्गिभावेन ते ?
वैदग्धीमधुर ! प्रबन्धरसिक ! व्यर्थोऽयमत्र श्रमः॥" इति (ज)

इत्यादिषु निरता—आसक्ता। अत्रादिशब्देन बहिरवस्थानाट्टालिकादिशिखरमारुह्य सविलासं राजमार्गावलोकन-लम्पटयौवनस्थप्रतिवेशिभवनगमन स्वाङ्गसौष्ठवादिप्रकाशनादीनां ग्रहणम्। अत एव कुलटा—व्यभिचाराय कुलानि परगृहाणि अटतीति तथोक्ता, परप्रसङ्गकामनया भ्रमणशीलेत्यर्थः, [ शकन्ध्वादित्वात् साधु ] गलित—नष्टा, त्रपा—लज्जा, यस्यास्तथाभूता, अन्योढ़ा—परोढ़ा, कथ्यते इति शेषः।

(ज) उदाहरति, स्वामीति।—निश्वसिते—निश्वासपरित्यागे सति, स्वामी, अपि, असूयति—असूयां करोति, इयं परपुरुषाप्राप्त्या निश्वसितीति बुद्ध्या मह्यमीर्ष्यतीति भावः; सपत्नीजनः, मनोजिघ्रः ( मनसः घ्राणजप्रत्यक्षाऽसम्भवेन अभिप्रायवेदने लक्षणा, तस्य याथार्थ्यं प्रयोजनम्। एवमग्रयोरपि विशिष्टवाक्ययोः ज्ञेयम् ) मनसि कं परं नायकमियं चिन्तयति ? इति पर्य्यवेक्षते इति भावः। श्वश्रूः,—पत्युर्माता, इङ्गितस्य—इङ्गितस्य भावस्य, अभिप्रायसूचकचेष्टाविशेषस्य इत्यर्थः, ( "इङ्गितं इङ्गतो भावः" इत्यमरः ) दैवतम्—अधिष्ठात्री देवी, तदभिज्ञा इत्यर्थः ; यातरः,—पत्युः ज्येष्ठानां कनिष्ठानाञ्च भ्रातृणां पत्न्य इत्यर्थः, ( "भार्य्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्" इत्यमरः ) नयनयोः,—नेत्रयोः, ईहा—चेष्टा, कटाक्षविक्षेपादिकं चेष्टितमित्यर्थः, तां लिहन्तीति तथोक्ताः, नेत्रेङ्गितानां, चेष्टाविशेषसूचनीयार्थानाञ्च बोद्ध्र्य इत्यर्थः, नेत्रलक्ष्यैकलक्ष्या भूत्वा स्थिता इति भावः ; वैदग्धीमधुरेति।—वैदग्ध्या चातुर्य्येण, मधुरः मनोहरः, तत्सम्बुद्धौ। हे प्रबन्धरसिक !—प्रबन्धः सुरतव्यापारः, तत्र रसिकः निपुणः, तत्सम्बुद्धौ ; यद्वा,—वैदग्ध्या मधुरः प्रबन्धो यस्य तत्सम्बोधने तथा, अत्र पक्षे रसिक इति पृथक् सम्बोधनम्। [ "वैदग्धीमधुरप्रबन्धरसिक" इति समस्तपाठे तु वैदग्ध्या—सुरतनैपुण्येन, मधुरः,—मनोहरः, प्रबन्धः,—सुरतप्रयोगः तत्र रसिकः,—रसयुक्तः ]। तत्—तस्मात्, उक्तात् अन्तरायादित्यर्थः, दूरात्, अयम्, अञ्जलिः, रचित इति शेषः ; अधुना, ते—तव, दृग्भङ्गिभावेन—कटाक्षपातनेत्यर्थः किम् ? अत्र—मत्प्राप्तिविषये, स्वाम्याद्याकीर्णे देशे वा इत्यर्थः, अयं श्रमः,—मत्प्राप्तिसाधनव्यापारः, व्यर्थः,—विफलः। [ न

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र हि मम परिणेताऽन्नाच्छादनादिदातृतया स्वाम्येव, न तु वल्लभः। त्वन्तु वैदग्धीमधुरत्वेन प्रबन्धरसिकतया च मम वल्लभोऽसीत्यादिव्यङ्ग्यार्थवशादस्याः परनायकविषया रतिः प्रतीयते। (ट)

कन्या त्वजातोपयमा सलज्जा नवयौवना॥११३॥(ठ)

अस्याश्च पित्राद्यायत्तत्वात् परकीयात्वम्। यथा मालतीमाधवादौ मालत्यादिः।

धीरा कलाप्रगल्भा स्याद्वेश्या सामान्यनायिका।
निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि।
वित्तमात्रं समालोक्य सा रागं दर्शयेद् बहिः॥
काममङ्गीकृतमपि परिक्षीणधनं नरम्।
मात्रा निष्क्रामयेदेषा पुनः सन्धानकाङ्क्षया।

---

अहमिदानीं तव मनोरथं पूरयितुं शक्नोमि, किन्तु यदा कदा वा कथमपि मनोरथं पूरयिष्यामि, कञ्चित् कालं चमस्वेति अधुनाऽऽदिपदसाचिव्येन व्यज्यत इति बोध्यम्]। शार्दूलविक्रीड़ितं वृत्तम्।

(ट) ननु स्वप्राप्तिसाधनव्यापारव्यर्थत्वकथनेनास्याः परनायकरत्यभावः प्रतीयते, तेन च कुलटात्वाभाव उपपन्न इति कथमस्याः परनायिकात्वम्? अत आह,—अत्र हीति। परिणेता—विवाहकर्त्ता, स्वामी—शरीरमात्रस्य प्रभुरित्यर्थः। वल्लभः,—प्राणप्रियः। अस्याः,—निरुक्तचेष्टितायाः। स्पष्टमन्यत्।

(ठ) कन्येति।—कन्या तु—पुनरित्यर्थः। न जात उपयमः,—विवाहो यस्याः सा, अनूढ़ेत्यर्थः, ("विवाहोपयमौ समौ" इत्यमरः), अत एव सा सलज्जा—लज्जां विहातुमशक्तेति भावः, नवयौवना—नवं यौवनं यस्याः तादृशी, परकीया भवतीति शेषः। उदाहरणन्तु नैषधीये चरिते यथा,—"अनैषधायैव जुहोति तातः किं मां कृशानौ न शरीरशेषाम्। ईष्टे तनूजन्मतनोः स नूनं मत्प्राणनाथस्तु नलस्तथाऽपि॥" अत्र विवाहात्पूर्व्वं दमयन्त्याः नलेऽनुरागः।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तस्कराः पण्डका मूर्खाः सुखप्राप्तधनास्तथा ।
लिङ्गिनश्छन्नकामाद्या आसां प्रायेण वल्लभाः ॥
एषाऽपि मदनायत्ता क्वापि सत्यानुरागिणी ।
रक्तायां वा विरक्तायां रतमस्यां सुदुर्लभम् ॥ ११४ ॥(ङ)

(ङ) साधारणीं प्रस्तौति, धीरेति ।—धीरा—धैर्य्यवती, कलासु—नृत्यगीतादिविद्यासु, प्रगल्भा—प्रवीणा । [ कलाश्चात्र चतुःषष्टिसङ्ख्यकाः, ताः खिलशुक्रनीतिशास्त्रे २ अध्याये यथोक्ताः,—(१) नर्त्तनम्, (२) वादनम्, (३) वस्त्रालङ्कारसन्धानम्, (४) अनेकरूपाविर्भावकृतिज्ञानम्, (५) शय्याऽऽस्तरणसंयोगे पुष्पादिग्रथनम्, (६) द्यूताद्यनेकक्रीड़ाभिरञ्जनम्, (७) अनेकासनसन्धाने रतिज्ञानम्, (८) मकरन्दाऽऽसवादीनां कृतिः, (९) शल्यगूढाहृतौ ज्ञाने सिराव्रणवेधनम्, (१०) हीनादिरससंयोगे अन्नादिसम्पाचनम्, (११) वृक्षादिप्रसवारोपपालनादिकृतिज्ञानम्, (१२) पाषाणधात्वादिद्रुतिस्तम्भनम्, (१३) यावदिक्षुविकाराणां कृतिज्ञानम्, (१४) धात्वौषधीनां संयोगक्रियाज्ञानम्, (१५) धातुसाङ्कर्य्यपार्थक्यकरणम्, (१६) धात्वादीनां संयोगपूर्व्वविज्ञानम्, (१७) क्षारनिष्कासनज्ञानम्, [ एतत्कलादशकम् आयुर्वेदागमे विशदीकृतम् ] (१८) पदादिविन्यासतः शस्त्रसन्धानविक्षेपः, (१९) सन्ध्याघाताकृष्टिभेदैर्मल्लयुद्धम्, (२०) अभिलक्षिते देशे यन्त्राद्यस्त्रनिपातनम्, (२१) वाद्यसङ्केततः व्यूहरचनादिकम्, (२२) गजाश्वरथगत्या युद्धसंयोजनम्, [ एतत्कलापञ्चकं धनुर्वेदे विशदीकृतम् ] (२३) विविधासनमुद्राभिः देवतातोषणम्, (२४) गजाश्वादेः सारथ्यं गतिशिक्षा च, (२५) मृत्तिकासत्क्रिया, (२६) काष्ठसत्क्रिया, (२७) पाषाणसत्क्रिया, (२८) धातुभाण्डादिसत्क्रिया, (२९) उद्याने चित्रा खनिः, (३०) तड़ागवापीप्रासादसमभूमीकरणम्, (३१) घट्याद्यनेकयन्त्राणां वाद्यानां करणम्, (३२) हीनमध्यादिसंयोगवर्णादैरञ्जनम्, (३३) जलवाय्वग्निसंयोगनिरोधादिकरणम्, (३४) नौकारथादियानानां कृतिज्ञानम्, (३५) सूत्रादिरज्जुकरणे विज्ञानम्, (३६) अनेकतन्तुसंयोगैः पटबन्धज्ञानम्, (३७) रत्नानां वेधादि सदसज्ज्ञानम्, (३८) स्वर्णादीनां याथात्म्यविज्ञानं, कृत्रिमस्वर्णरत्नादिक्रियाज्ञानञ्च, (३९) स्वर्णाद्यलङ्कारकरणम्, (४०) लेपादिसत्कारकरणम्, (४१) चर्म्मणां मार्द्दवादिक्रियाज्ञानम्, (४२) पशुचर्म्माङ्गनिर्हारक्रियाज्ञानम्, (४३) दुग्धदोहादि घृतादिविज्ञानम्, (४४) कञ्चुकादिसीवनविज्ञानम्, (४५) बाह्वादिभिः जले सन्तरणम्, (४६) मार्जने

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

गृहभाण्डादिविज्ञानम्, (४७) वस्त्रसम्मार्ज्जनम्, (४८) चौरकर्म्मकरणम्, (४९) तिलमांसादितैलनिष्कासनम्, (५०) सीराद्याकर्षणे ज्ञानम्, (५१) वृक्षाद्यारोहणम्, (५२) मनोऽनुकूलसेवायाः कृतिज्ञानम्, (५३) वेणुतृणादिपात्राणां कृतिज्ञानम्, (५४) काचपात्रादिकरणविज्ञानम्, (५५) संसेचनम्, (५६) जलानां संहरणम्, (५७) लौहाभिसारशस्त्रास्त्रकृतिज्ञानम्, (५८) गजाश्ववृषभोष्ट्राणां पल्ययनादिकरणम्, (५९) शिशोः संरक्षणे ज्ञानम्, (६०) शिशोः धारणे ज्ञानम्, (६१) शिशोः क्रीड़ने ज्ञानम्, (६२) अपराधिजने सुयुक्तताड़नविज्ञानम्, (६३) नानादेशीयवर्णानां सम्यक् लेखनम्, (६४) ताम्बूलरक्षादिकृतिविज्ञानम् इति। शैवतन्त्रोक्तास्तु श्रीधरस्वामिभिः ९४५ संख्यकेऽध्याये श्रीमद्भागवतटीकायां सन्निवेशिताः, ता भिन्नविधाः अस्मत्कृत-द्वात्रिंशत्पुत्तलिकासिंहासनग्रन्थटीकायां सम्यक् निरूपिताः]। वेश्या सामान्यनायिका, स्यात्। ननु कथमस्याः सामान्यात्वम्? (सर्वोपभोग्यत्वम्) इत्याशङ्क्याह, निर्गुणान-पीति।—किं पुनर्गुणिन इत्यर्थः। न द्वेष्टि—द्विष्टान् मनुते, गुणिषु—गुणवत्सु अपि, किं पुनर्निर्गुणेष्विति भावः। [विषये सप्तमीयम्] न रज्यति—अनुरक्ता न भवति। तत् किं करोति? इत्याशंसायामाह, वित्तमात्रमिति।—केवलं धनं, तदपि स्वां प्रति दीयमानमेवेति बोध्यम्। समालोक्य—सम्यगालोच्य, बहिः,—कृत्रिममित्यर्थः, न त्वन्तः, रागम्—अनुरागं, सा—वेश्या, दर्शयेत्; कामं—यथेष्टम्, अङ्गीकृतं—वल्लभत्वेन स्वीकृतम्, अपि, किं पुनरनङ्गीकृतमिति भावः। परि—सर्व्वतोभावेन, क्षीणं धनं यस्य तादृशं नरं, पुनः,—धनोपलब्ध्यनन्तरं, सन्धानस्य—सुरतार्थं सन्निधानस्य, समागमस्येति यावत्; काङ्क्षा—अभिलाषः, तया। (प्रपञ्चितोऽस्याशयः वात्स्यायनीये, वैशिकाधिकरणे यथा,—"सक्तन्तु पूर्वोपकारिणमप्यल्पफलं व्यलीकेना-नुपालयेत्। असारन्तु निष्प्रतिपत्तिकमुपायतोऽपवाहयेत्॥ अन्यमवष्टभ्य" इति, "वर्त्त-मानं निष्पीड़ितार्थमुत्सृजन्ती पूर्व्वसंसृष्टेन सह सन्दध्यात्; स चेदवसितार्थो वित्तवान् सानुरागश्च ततः सन्धेयः॥" इति च) माता—वैशिककृत्याद्यावीहारा, एषा—वेश्या, निष्कासयेत्—गृहाद्बहिष्कारयेत्। आसाम्—ईदृशीनां वेश्यानां, तस्कराः,—चौराः। पण्डकाः,—नपुंसकाः, ("तृतीया प्रकृतिः शण्ढः क्लीवं पण्डो नपुंसकम्" इत्यमरः) रन्तुमसमर्था अपि ते आसां वाह्यभ्यकामनया स्वस्य पौरुषत्वख्यापनार्थं वा प्रभूतं ददाति। यत्तु ग्रन्थकृद्भिः,—"पण्डकी वातरोगपाण्ड्वादिः" इति व्याख्यातं तल्लिपिकर-प्रमाद इति अनुमेयं, तेषां तद्वाख्ये न कापि समीचीनोपपत्तिरवगम्यते; कोषादि-ष्वपि पण्डकशब्दस्य पाण्ड्वादिपर्य्यायत्वेनादर्शनात्। वस्तुतस्तु "पण्डकी वातशण्ढादिः" इति पाठो युक्ततया प्रतिभाति; तथा चोक्तं चरकसंहितायां शारीरे अतुल्यगोत्रीयाख्ये

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

द्वितीयाध्याये,—"वायुग्निदोषात् वृषणौ तु यस्य नाशं गतौ वातिकशण्ढकः सः" इति। [ "षड़ि-गतौ" अच्; यद्वा,—"पण-व्यवहारे स्तुतौ च" अमन्तात् ड इति रूपसिद्धिः ]। मूर्खाः, तथा सुखेन प्राप्तं धनं यैः ते, लिङ्गिनः,—अजितेन्द्रियत्वेऽपि वेशमात्रेण ब्रह्मचारिणः, छन्नकामाद्याः,—छन्न—गुप्तं, कामयन्ते—रतिमभिलषन्ति, ये ते, ते हि लोकापवादभिया रहसि गमनशीलाः, रहस्यरक्षार्थं भूरि प्रयच्छन्ति च इत्याशयः; यद्वा,—छन्नकामाः,—छन्ना गुप्ताः, कामाः काम्यमानाः, सुरतनिपुणतयाऽभिमता इति यावत्, ये ते गुप्तनायका इत्यर्थः; [ काम्यन्ते इति कामाः इति कर्म्मणि घञ् ] ते तु रमणसामर्थ्याधिक्यात् तासां वल्लभो मूला धनदातुरगोचरे किमप्यदत्त्वैव रमन्ते इति दिक्। प्रायेण, वल्लभाः,—प्रियाः, भवन्तीन्ति शेषः। ( एतत्तु वात्स्यायनीये सप्रपञ्चं निरूपितं, यथा हि,—"स्वतन्त्रः, पूर्वे वयसि वर्त्तमानः, वित्तवान्, अपरोक्षवृत्तिः, अधिकरणवान्, अक्लेशाधिगतवित्तः, सङ्घर्षवान्, सन्तायः, सुभगमानी, श्लाघनकः, पण्डकश्च पुंशब्दार्थी, समानस्पर्द्धी, स्वभावतः त्यागी, राजनि महामात्रे वा सिद्धः, दैवप्रमाणः, वित्तावमानी, गुरूणां शासनातिगः, सजातानां लक्ष्यभूतः, सवित्तः, एकपुत्रः, लिङ्गी, प्रच्छन्नकामः, शूरः, वैद्यश्च" इति )। ननु कथं तर्हि वसन्तसेनादीनामनुरक्तत्वं श्रूयते ? इत्याशङ्क्याह, एषेति।—क्वापि—कस्मिंश्चित् चारुदत्तादौ नायके इत्यर्थः। एषा—वेश्या, अपि, मदनायत्ता—कामार्त्ता सती, सत्यानुरागिणी—वास्तविकानुरागशालिनी भवतीति शेषः। ननु प्रायेणैषा धनमात्रेण वाह्यानुरागप्रकटनशीला, तथापि कथमेषा सेव्यते ? कुतो वा नेतो लोको विरज्यते ? इत्याशङ्क्याह, रक्तायामिति।—अस्यां—वेश्यायां, रक्तायाम्—अनुरक्तायां सत्याम्, विरक्तायाम्—अननुरतायां वा सत्यां, रतं—रमणानन्दः, सुदुर्लभम्—अत्यन्तं दुर्लभं भवति; कलानिपुणाया अस्या रमणस्यातीव प्रमोदवर्द्धकतया वित्तवन्मात्रलभ्यत्वादिति भावः। यद्वा,—अस्याः रमणस्य प्रमोदवर्द्धकत्वेऽपि कपटनिपुणतया, विमलानन्दसम्भोगः सुदुर्लभः इति भावः। ( एतच्च कथनं वस्तुःस्थितिमवलोक्यैव; वस्तुतस्तु तत्त्वतो विचारे;—"रतमस्यां सुदुर्लभम्" इत्युक्तिः कवीन्द्रवर्य्यैरनादरणीया एव, तथा हि कामसूत्रकाराः,—"धर्म्ममर्थञ्च कामञ्च प्रत्ययं लोकमेव च। पश्यत्येतस्य तत्त्वज्ञो न च रागात् प्रवर्त्तते॥ अधिकारवशादुक्ता ये चित्रा रागवर्द्धनाः। तदनन्तरमत्रैव ते यत्नाद्विनिवारिताः॥ तदेतद्ब्रह्मचर्य्येण परेण च समाधिना। विहितं लोकयात्रायै न रागार्थोऽस्य संविधिः॥" इति, एवञ्च धर्म्मानुसन्धाने तु परकीयासङ्गोऽपि दूषित एव, अत एव कामसूत्रकारैरुक्तम्;—"संदृश्य शास्त्रतो योगान् पारदारिकलक्षितान्। न याति छलनां कश्चित् स्वदारान्

पण्डकः,—वातरोगपाण्ड्वादिः। छन्नं प्रच्छन्नं ये कामयन्ते ते छन्नकामाः। तत्र रागहीना यथा,—नटकमेलकादौ मदनमञ्जर्य्यादिः। रक्ता यथा,—मृच्छकटिकादौ वसन्तसेनादिः। पुनश्च,—

**अवस्थाभिर्भवन्त्यष्टावेताः षोड़शभेदिताः।**
**स्वाधीनभर्त्तृका तद्वत् खण्डिताऽथाभिसारिका॥**
**कलहान्तरिता विप्रलब्धा प्रोषितभर्त्तृका।**
**अन्या वासकसज्जा स्याद्विरहोत्कण्ठिता तथा॥११५॥(ढ)**

तत्र,—

**कान्तो रतिगुणाकृष्टो न जहाति यदन्तिकम्।**
**विचित्रविभ्रमासक्ता सा स्यात् स्वाधीनभर्त्तृका॥११६॥(ण)**

यथा "अस्माकं सखि! वाससी" इत्यादि।

---

प्रति शास्त्रवित्॥ पाक्षिकत्वात् प्रयोगाणामपायानाञ्च दर्शनात्। धर्म्मार्थयोश्च वैलोम्यात् नाचरेत्पारदारिकम्॥ तदेतद्दारगुप्त्यर्थमारब्धं श्रेयसे नृणाम्। प्रजानां दूषणायैव न विज्ञेयोऽस्य संविधिः॥" इति)।

(ढ) आसामपि प्रकारान्तरतो भेदान्निर्द्दिशति, अवस्थाभिरिति।—एताः,—पूर्वोक्ता मुग्धादयः, षोड़शभेदिताः,—षोड़शविधभेदयुक्ताः नायिकाः, अवस्थाभिः,—स्वाधीनभर्त्तृकत्वादिरूपैः उपाधिभिरित्यर्थः, अष्टौ—अष्टविधाः, भवन्ति। तथा च तत्र त्रयोदश स्वकीयाः, द्वे परकीये, एका च सामान्या; इति मिलिताः षोड़श नायिकाः वक्ष्यमाणदिशा स्वाधीनभर्त्तृकाद्यष्टभेदभिन्ना भवन्तीति निष्कृष्टम्। अन्यत् स्पष्टम्।

(ण) स्वाधीनभर्त्तृकामाह, कान्त इति।—कान्तः,—भर्त्ता, रतिगुणाकृष्टः,—सुरतनैपुण्यवशीभूतः सन्, यदन्तिकं—यस्याः अन्तिकं सन्निधानं, सङ्गमिति यावत्, न जहाति—त्यजति, अत एव विचित्रः,—नानाविधः, विभ्रमः,—विलासशैली, तत्रासक्ता, सा स्वाधीनभर्त्तृका—स्वाधीनः,—स्ववशीभूतः, भर्त्ता पतिर्यस्याः तथोक्ता स्यात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पार्श्वमेति प्रियो यस्या अन्यसम्भोगचिह्नितः ।
सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता॥ ११७॥(त)

यथा "तदवितथमवादीः" इत्यादि ।

अभिसारयते कान्तं या मन्मथवशंवदा ।
स्वयं वाऽभिसरत्येषा धीरैरुक्ताऽभिसारिका॥ ११८॥ (थ)

क्रमाद् यथा,—

"न च मेऽवगच्छति यथा लघुतां
करुणां यथा च कुरुते स मयि ।
निपुणं तथैनमुपगम्य वदेः
अभिदूति काचिदिति सन्दिदिशे ॥" (द)

---

(त) खण्डितां लक्षयति, पार्श्वमिति ।—यस्याः प्रियः,—पतिः, अन्यस्याः,—परस्याः, सपत्न्याद्यन्यतमाया नायिकाया इति यावत्, सम्भोगेन चिह्नितः सन्, पार्श्वं—समीपदेशम्, एति—प्राप्नोति, अत एव ईर्ष्यया—अक्षान्त्या, सपत्नीसौभाग्यासहिष्णुतयेति यावत् ; ("अक्षान्तिरीर्ष्या" इत्यमरः ) कषायिता—दूषितान्तःकरणा, सा धीरैः, खण्डिता—छिन्ना, प्रियत्वदूरीकरणेन मारितेति यावत्, इति कथिता ।

(थ) अभिसारिकापदस्य व्युत्पत्तिलभ्यमर्थद्वयमेव लक्षणद्वयमाह, अभिसारयते इति ।—स्पष्टम् ।

(द) तत्र प्रथमामुदाहरति, न चेति ।—काचिन्नायिका दूतीमनुशास्ति, सः,—दयित इत्यर्थः, यथा—येन प्रकारेण, मयि—दीनायां तदनुरक्तायां नायिकायामिति भावः [ विषये सप्तमीयम् ] ; करुणां—दयां, कुरुते, यथा, च, मे—मम, तदेकजीविताया इति भावः ; लघुताम्—अधीरताकृतं तुच्छत्वं, न, अवगच्छति—जानाति, तथा—तेन प्रकारेण, एनं—दयितमिति भावः ; उपगम्य निपुणं यथा भवेत्तथा, वदेः,—निवेदय इत्यर्थः ; [ विध्यर्थे प्रार्थने वा लिङ् ]। इति—इत्थं प्रकारेण, काचित्—काऽपि नायिकेत्यर्थः, दूतीम् अभि—अभिमुखागतां दूतीं प्रति इत्यर्थः, [ "लक्षणेनाभिप्रती आभिमुख्ये" ( २।१।१४ पा० ) इत्यव्ययीभावे नपुंसकह्रस्वत्वम् ] सन्दिदिशे—सन्दिष्टवती [ कर्त्तरि लिट्। स्वरितेत्त्वादात्मनेपदम् । अन्ये तु,—"कयाचित्" इति कर्त्तृपदं, "काचित्" इति कर्मपदं "सन्दिदिशे" इति च कर्मणि

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"उत्क्षिप्तं करकङ्कणद्वयमिदं, बद्धा दृढं मेखला,
यत्नेन प्रतिपादिता मुखरयोर्मञ्जीरयोर्मूकता।
आरब्धे रभसान्मया प्रियसखि! क्रीड़ाऽभिसारोत्सवे
चण्डालस्तिमिरावगुण्ठनपटक्षेपं विधत्ते विधुः॥" (ध)

संलीना स्वेषु गात्रेषु मूकीकृतविभूषणा।
अवगुण्ठनसंवीता कुलजाऽभिसरेद् यदि॥
विचित्रोज्ज्वलवेशा तु बलन्नूपुरनिस्वना।
प्रमोदस्मेरवदना स्याद् वेश्याऽभिसरेद् यदि॥
मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना।
आविद्धगतिसञ्चारा स्यात् प्रेष्याऽभिसरेद्यदि॥११९॥(न)

---

लिट् इति मन्यन्ते। अत्र व्याख्यायाम् "अभिदूति" इति निरर्थकत्वमावहत् कवेर-सामर्थ्यं द्योतयतीति विभाव्यम्]। शिशुपालवधस्य नवमे सर्गे षट्पञ्चाशत्तमं पद्य-मिदम्। प्रमिताक्षरा वृत्तं,—"प्रमिताक्षरा सजससैः उदिता" इति तल्लक्षणात्।

(ध) द्वितीयामुदाहरति, उत्क्षिप्तमित्यादि।—हे प्रियसखि! इदं करकङ्कण-द्वयम्, उत्क्षिप्तम्—उत्क्षिप्य परिहितम्; (यथा रणनं मा भूदित्याशयेनेति सर्वत्रैवो-न्नेयम्) मेखला—रशना, दृढं—गाढं यथा भवेत् तथा बद्धा—संयमिता, यत्नेन —उपायेन, मुखरयोः,—रणतोः, मञ्जीरयोः,—नूपुरयोः. मूकता—निःशब्दकारित्वं, प्रतिपादिता, इत्थ. मया, रभसात्—उल्लासात्, क्रीड़ाऽभिसारोत्सवे, आरब्धे— प्रक्रान्ते सति, चण्डालः,—अन्यस्य ईप्सितकार्य्यविघातकतया चाण्डालसदृशक्रूरस्वभाव इति भावः, अत एव विधः,—[विध्यति परमर्म्मेति तथोक्तः; "व्यधेः कुः" (उ०) इति कुः] चन्द्रः इत्यर्थः, तिमिरमेव अवगुण्ठनपटः तस्य क्षेपम्—अपसारणमित्यर्थः; विधत्ते—करोतीत्यर्थः। गूढ़मभिसर्त्तुकामाया मम सहसा चन्द्रोदयात् सर्वं वैफल्यं जातमिति भावः। शार्दूलविक्रीडितं वृत्तम्।

(न) प्रसङ्गादभिसरणक्रममाह, संलीनेति।—कुलजा—कुलीना, कन्या, परोढ़ा वेति भावः.(स्वकीयायास्तु अभिसरणासम्भवात् नाभिसारिकात्वम् इति बोध्यम्) यदि अभिसरेत्, तदा, स्वेषु गात्रेषु—स्वावयवेषु, संलीना—अतिसङ्कुचितशरीरेत्यर्थः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्राद्ये "उत्क्षिप्तम्" इत्यादि। अन्ययोरूह्यमुदाहरणम्। (प) प्रसङ्गादभिसारस्थानानि कथ्यन्ते,—

तथा मूकीकृतं—उपायेन निःशब्दीकृतं, विभूषणं यया तादृशी, एवम् अवगुण्ठनसंवीता—अवगुण्ठनाऽऽवृतदेहा, भवेदिति शेषः। अत्रोपलक्षणेन शुभ्रमाल्यानुलेपनादिभिरपि संवृतत्वं बोध्यम्; तत्रान्धकारे नीलवसनादिसंवीता, ज्योत्स्नायां शुभ्रयूथिकादिमाल्यसितचन्दनाद्यनुलिप्तदेहा इत्याशयः। क्रमेणोदाहरणं यथा,—"क्षितं वसनमर्पितं वपुषि नीलचेलभ्रमान्मया मृगमदाशया मलयजद्रवः सेवितः। करेण परिबोधितः स्वजनशङ्कया दुर्जनः परं परमपुण्यतः सखि न लङ्घिता देहली॥" इति, तथा,—"मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः। क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः॥" इति। अथ यदि, वेश्या, अभिसरेत, तदा, विचित्रः,—नानावर्णः, उज्ज्वलः,—भासुरः, वेशः,—वसनभूषणादिकं नेपथ्यविधानं, यस्याः सा तथाभूता, चलन्नूपुरनिस्वना—चलन् उच्चलन्, नूपुरयोः निस्वनो यस्याः सा, शब्दायमाननूपुरा इत्यर्थः, [ "चलन्नूपुरनिस्वना" इत्यत्र "रणन्नूपुरकङ्कणा" इति पाठे,—रणन्ती—शब्दायन्ती, नूपुरकङ्कणे यस्याः सा इत्यर्थो बोध्यः] प्रमोदेन—आनन्देन, स्मेरं—विकसत्, वदनं यस्यास्तादृशी, हर्षोत्फुल्लमुखीति यावत्, स्यात्। अथ यदि, प्रेष्या—दासी, अभिसरेत्, तदा, मदेन—हर्षेण, गर्वेण वा, स्खलितः,—अन्यथाभूतः, संलापो यस्याः सा; विभ्रमेण—विलासेन, उत्फुल्ले—विकसिते, लोचने यस्याः तथोक्ता, आविद्धा—उद्धता, गतिः यत्र तादृशः सञ्चारः,—सङ्केतस्थानगमनं यस्याः तथाभूता, मदोद्धतगतिरित्यर्थः, स्यात्। अत्र प्रेष्यायाः साक्षान्नायिकात्वेनानुक्तत्वेऽपि "इतरा अप्यसङ्ख्याताः" इत्यादिना नायिकात्वं सूचितमित्यवधेयम्।

(प) तत्रेति।—तासु, अभिसारिकासु मध्ये इत्यर्थः, आद्ये—परोढाकन्यकारूपकुलजाभिसरणविषये इत्यर्थः। "उत्क्षिप्तं करकङ्कणद्वयमिदम्........" इत्यादि उदाहरणम्। अयं भावः,—अभिसरणे परोढायाः कन्यकायाश्च सदृशमेवोदाहरणम्, उभयोः कुलीनत्वात् इति। अन्ययोः,—वेश्याप्रेष्ययोः, उदाहरणमूह्यं—गवेषणीयम्। ते यथा क्रमेण.—"लीलाचोलचमत्कृति प्रविचलत्काञ्चीलताझङ्कृति न्यञ्चत्कञ्चुकबन्धबन्धुरचलद्वक्षोजकुम्भोन्नति। स्फूर्जद्दीधितिविस्फुरत्प्रविचलच्चामीकरालङ्कृति क्रीडाकुञ्जगृहं प्रयाति कृतिनः कस्यापि वाराङ्गना॥" इति "ताम्बूलाक्तं दशनमसकृद्दर्शयन्तीह चेटी घोटीङ्खेषाविकृतविरुतं हेतुहीनं हसन्ती। स्थानस्थानस्खलितपदविन्याससांभाषणाणा यूनामग्रे वसति कुटिलं नर्त्तितोच्चैर्नितम्बम्॥" इति च। एवं दृष्टादीनामपि अभिसारोदाहरणमूह्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्षेत्रं वाटी भग्नदेवालयो दूतीगृहं वनम्।
मालयश्च श्मशानञ्च नद्यादीनां तटी तथा॥
एवं कृताऽभिसाराणां पुंश्चलीनां विनोदने।
स्थानान्यष्टौ तथा ध्वान्तच्छन्ने कुत्रचिदाश्रयः॥१२०॥(फ)
चाटुकारमपि प्राणनाथं रोषादपास्य या।
पश्चात्तापमवाप्नोति कलहान्तरिता तु सा॥१२१॥(ब)

यथा मम तातपादानाम्,—

"नो चाटुश्रवणं कृतं, न च दृशा हारोऽन्तिके वीक्षितः,
कान्तस्य प्रियहेतवे निजसखीवाचोऽपि दूरीकृताः।

(फ) अभिसरणस्थानान्याह, क्षेत्रमिति।—क्षेत्रं—शस्यस्थानं, वाटी—गृहोद्यानं, भग्नः,—खण्डितः, अत एव जनसञ्चारशून्यः, असौ देवालयः इति तथोक्तः, दूत्याः,—सन्धानकर्म्मदक्षायाः, कुट्टिन्या वा, गृहं, वनं प्रसिद्धं, मालयं—पुष्पोद्यानं, ("मालञ्च" इति वङ्गभाषा) ["मालयश्च", इत्यत्र "मालिकौकः" इति पाठे—मालिकानां—मालाकाराणामोकः,—स्थानमित्यर्थः। "मालापं च" इति पाठान्तरे तु, मा—नास्ति, आलापः,—सङ्कथा यत्र तत् निर्जनस्थानमित्यर्थोऽवगन्तव्यः; "मालापञ्चः" इति पाठे तु मालानां पञ्चः,—ग्रन्थनादिना व्यक्तीकरणं यस्मात्तथोक्तः, आलय इति शेषः, तथा च मालाकारगृहमिति निष्कृष्टोऽर्थः]। श्मशानं प्रसिद्धं, तथा नद्यादीनां, तटी—प्रान्तभूमिः, ("गाभा" इति वङ्गभाषा)। अत्रादिपदेन गुहानिर्झरणादीनां ग्रहणम्। एवं, कृतोऽभिसारो याभिस्तासां, पुंश्चलीनां—कुलटानां, विनोदने, अष्टौ, स्थानानि—क्षेत्रादीनि, बोध्यानि; तथा ध्वान्तच्छन्ने—अन्धकारावृते, कुत्रचित्—कस्मिंश्चित् प्रदेशे, आश्रयः,—स्थानं, ज्ञेय इति शेषः। [आश्रय इत्यत्र "आश्रये" इति पाठान्तरे दृश्यते, तदा पुंश्चल्योऽभिसरन्तीति शेषः इति बोध्यम्]।

(ब) कलहान्तरितामाह, चाटुकारमिति।—चाटुकारं—प्रियवक्तारम्, अपि, प्राणनाथं—जीवितेशम्, उपस्थितमपीति शेषः, या, रोषात्—क्रोधात्, अपास्य—विसृज्य, त्यक्त्वा इति यावत्, पश्चात्तापम्—अनुतापम्, अवाप्नोति, सा कलहान्तरिता नाम नायिका मता।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पादान्ते विनिपत्य तत्क्षणमसौ गच्छन् मया मूढ़या
पाणिभ्यामवरुध्य हन्त ! सहसा कण्ठे कथं नार्पितः ?"॥(भ)

**प्रियः कृत्वाऽपि सङ्केतं यस्या नाऽऽयाति सन्निधिम्।**
**विप्रलब्धा तु सा ज्ञेया नितान्तमवमानिता॥१२२॥(म)**

यथा,—

"उत्तिष्ठ दूति ! यामो यामो यातस्तथाऽपि नाऽऽयातः ।
याऽतः परमपि जीवेत् जीवितनाथो भवेत् तस्याः ॥" (य)

**नानाकार्य्यवशाद् यस्या दूरदेशं गतः पतिः ।**
**सा मनोभवदुःखार्त्ता भवेत् प्रोषितभर्त्तृका॥१२३॥(र)**

(भ) उदाहरति, नो इति।—रोषात् नायकं निराकृत्य पश्चात्तापयुतायाः स्वजनं प्रत्युक्तिरियम्। मूढ़या—मन्दबुद्ध्या मया, चाटुश्रवणं नो कृतं—सामवचनं नो श्रुतं, प्रियस्येति शेषः, अन्तिके—समीपे, हारः, प्रियेण सन्तोषणार्थं दत्त इति शेषः, दृशा—चक्षुषा, च—अपि, न वीक्षितः,—दृष्टः, सोऽप्यवज्ञात इति यावत्, कान्तस्य —प्रियस्य, प्रियहेतवे—प्रियाचरणार्थं, निजसखीनां, वाचोऽपि—अनुनयवचनान्यपि, दूरीकृताः,—न श्रुता इत्यर्थः ; तत्क्षणं—तस्मिन् क्षणे, पादान्ते—मम चरणतले, विनिपत्य हन्त ! [ खेदसूचकमव्ययमिदम् ], गच्छन्, असौ—मत्प्रियः, सहसा, पाणिभ्याम्, अवरुध्य, कण्ठे—अत्र व्यञ्जनया कण्ठसमीपत्वात् वक्षसि इत्यर्थो बोध्यः, कथं, न अर्पितः ?—न स्थापितः ? अथवा,—कण्ठे—गलदेशे, कथं नार्पितः ? हार इति शेषः। शार्दूलविक्रीड़ितं वृत्तम्।

(म) विप्रलब्धामाह, प्रिय इति।—सङ्केतम्—आगमनावेदनं, विप्रलब्धा—प्रतारिता। अन्यत् सर्वं स्पष्टम्।

(य) उदाहरति, उत्तिष्ठेति।—हे दूति ! उत्तिष्ठ, यामः,—गच्छामः; गृहमिति शेषः, यामः,—प्रहरः, ("द्वौ यामप्रहरौ समौ" इत्यमरः) उपचारात् सङ्केतकाल इत्यर्थः; यातः,—व्यतीतः, तथापि न आयातः,—नागतः, कान्त इति शेषः ; अतः परम्—अनन्तरम्, अपि—सम्भावनायां, या नारी जीवेत्, तस्याः,—नार्य्याः, जीवितनाथः,—प्राणेश्वरः, भवेत् स इति शेषः। आर्य्या वृत्तम्।

(र) प्रोषितभर्त्तृकालक्षणमाह, नानेति।—"नानाकार्य्यवशात्" इति अप-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"तां जानीथाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम्।
गाढ़ोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वाऽन्यरूपाम्॥"(ल)

---

सम्भ्रमयोरप्युपलक्षणम्। तेनोक्तोदाहरणे न अव्याप्तिप्रसङ्गः। मनोभवः,—अनङ्गः। अन्यत् स्पष्टम्।

(ल) उदाहरति, तामिति।—कुबेरशापात् प्रोषितस्य यक्षस्य मेघं प्रत्युक्तिरियम्। सहचरे—सहचारिणि, प्रेमवशात् सर्वत्रैव तया सह विहरणपर्यटनादिकारिणीति यावत्; [अनेन वियोगासहिष्णुत्वं द्योतितम्] मयि, दूरीभूते—परतन्त्रतया तया विश्लिष्य दूरं स्थिते इति भावः, सति, चक्रवाकीं—चक्रवाकस्याङ्गनां, ["जातेरस्त्रीविषयादयोपधात्" (४।१।६३ पा०) इति ङीष्] इव (यथा सहचरे चक्रवाके दूरीभूते चक्रवाकी भवति, तथा) एकाम्—असहायां, परिमिता—अल्पजीविताविशेषतयाऽल्पा, कथा—जीवितवृत्तान्तो यस्यास्ताम्; यद्वा,—मद्वियोगदुःखादल्पभाषिणीं, तां—मत्प्रियां, मे—मम, सम्प्रति किञ्चिदपि तस्याहार्य्यं कर्त्तुमक्षमस्येति यावत्, द्वितीयं जीवितं जानीथाः ["जानीयाः" इति पाठान्तरम्]। ननु तव मां गन्तुमादिशसि, किन्तु कथं तां ज्ञास्यामि? ईदृश्यां दशायामाकारस्य वैपरीत्यसम्भवादित्याशङ्क्य परिज्ञानोपायं विवृणोति, गाढ़ेति।—गाढ़ा—प्रबलविरहवेदनया विपुला, उत्कण्ठा—मत्समागमविषयाभिलाषो यस्यास्तथाभूतां, बालां—षोड़शीं मत्प्रियाम्, अत एव एषु—वर्त्तमानेषु, गुरुषु—विरहवेदनाधिक्यतया दीर्घत्वेन प्रतीयमानेषु, दिवसेषु गच्छत्सु सत्सु, शिशिरेण—शिशिरकालजनितोपद्रवेण, मथितां—म्लानामित्यर्थः, पद्मिनीं वा—कमलिनीमिव (वा शब्दः इवार्थः, "वा स्याद्विकल्पोपमयोरिवार्थे च समुच्चये" इति विश्वप्रकाशः; उत्तरार्द्धे द्वितीयान्तपदेषु प्रथमान्तपाठः क्वचित् पुस्तकेषु दृश्यते, तदा पुनः इव शब्द एव न 'वा'शब्दसन्निवेशवत् क्लिष्टकल्पना; "अथवा वद्वा यथा तथैवैवं साम्ये" इत्यमरः) अन्यरूपां जातां—रूपान्तरं प्राप्तां, मन्ये—उत्प्रेक्षे। एतावता नेयमन्येति शङ्कितव्यम्। मन्दाक्रान्ता वृत्तं, "मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनौ गौ ययुग्मम्" इति तल्लक्षणात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कुरुते मण्डनं यस्याः सज्जिते वासवेश्मनि।
सा तु वासकसज्जा स्याद्विदितप्रियसङ्गमा॥१२४॥(व)

यथा राघवानन्दानां नाटके,—

"विदूरे केयूरे कुरु, करयुगे रत्नवलयै-
रलं, गुर्वी ग्रीवाऽऽभरणलतिकेयं, किमनया?।
नवामेकामेकावलिमयि! मयि त्वं विरचयेः
न पथ्यं नेपथ्यं बहुतरमनङ्गोत्सवविधौ॥" (श)

आगन्तुं कृतचित्तोऽपि दैवान्नाऽऽयाति यत्प्रियः।
तदनागमदुःखार्त्ता विरहोत्कण्ठिता तु सा॥१२५॥(ष)

(व) वासकसज्जामाह, कुरुते इति।—यस्याः, वासवेश्मनि—शय्यागृहे, सज्जिते—शय्यापुष्पप्रदीपादिभिः मण्डिते सति, मण्डनं कुरुते, सखीजन इति शेषः, वासगृहं सज्जयित्वा सखीजनः यस्याः मण्डनादिकं करोतीत्यर्थः, सा विदितः,—ज्ञातः, प्रियसङ्गमः यया तादृशी सती वासकसज्जा स्यात्।

(श) उदाहरणं प्रस्तौति, विदूरे इति।—मण्डयन्तीं सखीं प्रति कस्याश्चिदुक्तिरियम्। केयूरे—भुजयोर्मध्ये धार्य्ये अङ्गदापरनामधेये आभरणे इत्यर्थः, विदूरे—दूरवर्त्तिनी, कुरु, करयुगे, रत्नवलयैः, अलं—न कार्य्यमित्यर्थः, इयं ग्रीवाभरणलतिका—कण्ठभूषाविशेषः, गुर्वी—अतिमहती, अनया किम्?—न किमपि प्रयोजनमिति भावः, एतामपि धर्त्तुं न प्रभवामीत्याशयः; अयि सखि! त्वं, मयि—मदर्थं, नवां—नवगुम्फिताम्, (अन्यथा परिरम्भणेन झटिति त्रुटिता स्यात्); एकां—केवलाम्, एकावलीम्—एकयष्टिकहारं, विरचयेः,—विरचितां कुरु, (अन्यथा बहुयष्टिको हारः स्तनोपपीड़परिरम्भणेऽन्तरायः स्यात्)। अनङ्गोत्सवविधौ—कामोत्सवव्यापारे, बहुतरं, नेपथ्यम्—अलङ्करणं, न पथ्यं—न इष्टम्, उपयुक्तमिति यावत्। यथा वा,—"अङ्गेष्वाभरणं करोति बहुशः पत्रेऽपि सञ्चारिणि, प्राप्तं त्वां परिशङ्कते, वितनुते शय्यां चिरं ध्यायति। इत्याकल्पविकल्पतल्परचनासङ्कल्पलीलाशत व्यासक्ताऽपि विना त्वया वरतनुर्नैषा निशां नेष्यति॥" इति। शिखरिणी वृत्तम्।

(ष) विरहोत्कण्ठितामाह, आगन्तुमिति।—यत्प्रियः,—यस्याः कान्तः, आगन्तुम्—आयातुं, कृतचित्तोऽपि—विज्ञापितसङ्कल्पोऽपि, दैवात्—कार्य्यवशात्, न

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"किं रुद्धः प्रियया ? कयाचिदथवा सख्या ममोद्वेजितः ?
किंवा कारणगौरवम् किमपि ? यन्नाद्यागतो वल्लभः।
इत्यालोच्य मृगीदृशा करतले विन्यस्य वक्त्राम्बुजं
दीर्घं निश्वसितं, चिरञ्च रुदितं, क्षिप्ताश्च पुष्पस्रजः॥"(स)

इति साष्टाविंशतिशत-
मुत्तममध्याधमस्वरूपेण।
चतुरधिकाऽशीतियुतं
शतत्रयं नायिकाभेदाः॥ १२६ ॥ (ह)

---

आयाति—नागच्छति; तदिति।—तस्य—कान्तस्य, अनागमेन—असमागमेन, दुःखं, तेन आर्त्ता—पीड़िता, अत एव विरहेण उत्कण्ठिता—शारीरमानसतापान्विता सा विरहोत्कण्ठिता नाम नायिका मतेति शेषः।

(स) उदाहरति, किमिति।—सङ्केतस्थायाः कस्याश्चित् प्रियाऽनागमने वितर्कोऽयम्। प्रियया—मत्तोऽप्यधिकप्रेमवत्या, अन्यया तत्पत्न्या वा किं रुद्धः? अथवा, कयाचित्, मम सख्या—वयस्यया, दूत्या इति भावः, उद्वेजितः,—क्लेशितः, मम दोष-मुद्भाव्य "अस्यां त्वया एवं दैयम् आचरितव्यञ्च" इत्यादिप्रकारेण वा उद्वेगं प्रापितः? किम् इति शेषः। ("उद्वेगः क्तिमिते क्लेशे भये मन्थरगामिनि" इति शब्दार्णवः) किं वा—अथवा, किमपि—अनिर्दिष्ट, कारणगौरवं—प्रयोजनगुरुता, जातम्? यत्—येन हेतुना, अद्य, वल्लभः,—प्रियः, न आगतः; इति आलोच्य—इत्येवं विचार्य्य, आत्मापराधवृक्षस्य फलमेतत् इत्येवं ततः परं निश्चित्येति भावः; मृगीदृशा —व्याकुलतया हरिणीसदृशचञ्चलनेत्रयेति भावः, करतले, वक्त्रं—वदनमेवाम्बुजं कमलं, विन्यस्य—संस्थाप्य, दीर्घं यथा तथा निश्वसितं, चिरं—बहुक्षणं, रुदितञ्च, पुष्पस्रजः,—कुसुमदामानि, क्षिप्ताः,—परित्यक्ताश्च। शार्दूलविक्रीडितं वृत्तम्।

(ह) इतीति।—इति—निरुक्तप्रकारेण, अष्टाविंशत्या सहितं शतं, तत्संख्यका इत्यर्थः। उत्तममध्याधमस्वरूपेण, प्रत्येकं त्रिविध्यन इति शेषः चतुरधिकाऽशीति-युतं शतत्रयं नायिकानां भेदा ज्ञेया इति। तथाहि,—स्वीया तावत् मुग्धा, मध्या, प्रगल्भा चेति त्रिविधा; तत्र मुग्धा एकरूपैव। मध्याप्रगल्भे तु धीरा, अधीरा, धीरा-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ऽधीरा चेति त्रैविध्येन षड्विधे। एताश्च षड्विधाः पुनः ज्येष्ठाः कनिष्ठाश्चेति द्वैविध्येन द्वादशविधाः। ततश्च एकया मुग्धया मिलितास्त्रयोदश भेदाः (१३) सम्पद्यन्ते, एता एव स्वीयाः। परकीया—परोढ़ा, कन्यका चेति द्विविधा। सामान्या चैकविधा इति त्रयो भेदाः (३) पुनर्मिलिताः षोड़श (१६)। एताश्च प्रत्येकं स्वाधीनभर्त्तृकाः, खण्डिताः, अभिसारिकाः, कलहान्तरिताः, विप्रलब्धाः, प्रोषितभर्त्तृकाः, वासकसज्जाः, विरहोत्कण्ठिताश्च इति अष्टावस्थाविशेषैः प्रत्येकम् अष्टविधत्वेन, परस्परं सङ्गुणने (१६×८=१२८) अष्टाविंशत्युत्तरशतविधाः सम्पद्यन्ते। अथवा—चतुरधिकशतं भेदाः स्वीयायाः (१३×८=१०४), परकीयायाः षोड़श (२×८=१६), गणिकायाः (१×८=८) अष्टौ, एतासां संयोजने अष्टाविंशत्यधिकशतभेदाः (१०४+१६+८ =१२८) नायिकानाम्। एताः पुनः उत्तममध्यमाधमभेदेन चतुरधिकाशीत्युत्तरशतत्रयभेदाः (१२८×३ =३८४)। पुनः दिव्य-अदिव्य-दिव्यादिव्यभेदेन द्विपञ्चाशदधिकैकादशशतं भेदाः (३८४×३ =११५२)। अत्रेदं ज्ञातव्यम् ;—लज्जाऽऽतिशय्यप्राधान्यात् मुग्धायाः, लज्जामन्मथाऽऽतिशय्यप्राधान्यात् मध्यायाः, प्रौढ़िभावप्राधान्यात् प्रगल्भायाः, धैर्य्यप्राचुर्य्याद्धीरायाः, अधैर्य्यप्राचुर्य्यादधीरायाः, उभयप्राचुर्य्याद् धीराऽधीरायाः, प्रेमज्यैष्ठ्यातिशय्येन ज्येष्ठायाः, प्रेमकानिष्ठ्यातिशय्येन कनिष्ठायाः, गुप्तोपचारप्राचुर्य्येण परोढ़ायाः, मुग्धावत् लज्जाद्यातिशय्येन कन्यकायाः ; गणिकायाश्च वित्ताऽऽहरणातिशय्येन अष्टविधा नायिका यद्यपि समुदिता भवन्ति, तथापि—"प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं, धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः। यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिताः, गन्तव्ये सति जीवित ! प्रियसुहृत्सार्थः किमु त्यज्यते ? ॥" इत्यादि उदाहरणान्तरकालमेव देशान्तराऽध्यवसायशालिनि प्राणवल्लभेऽपि स्वतन्त्रा नवमी प्रवत्स्यद्भर्तृका भवितुमर्हा स्यात्। प्रोषितभर्त्तृका-विप्रलब्धा-विरहोत्कण्ठितादौ तस्याः नान्तर्गमः, प्रियसन्निधाने तदयोगत्वात्, नान्तर्गमश्च कलहान्तरितायां, विवादाभावात् अतिरस्कृतत्वाच्च। न च खण्डितायामपि अन्तर्गमः तस्याः, तदा प्रियतमे अन्योपभोगलक्षणदर्शनाभावात्, प्रियतमायाः क्रोधाभावप्रकाशपरिलक्षितत्वात्, काकुकातराऽवलोकनख्यापितहृदयस्य यथार्थपक्षपातप्रकाशनत्वाच्च। न वासकशय्यायामस्या अन्तःस्थितिः, 'प्रचलति प्राणेश्वरे भूषणाऽऽभूषितकरणाद्यभावात् अतिक्लेशोद्गमप्रसङ्गाच्च ; कियत्परमेव वियोगोत्पत्तेः स्वामिनि स्वाधीनत्वविशेषाच्च न स्वाधीनभर्त्तृकात्वम्। नाभिसारिकायामस्याः अन्तर्गतिः, उन्नतोत्साहाभावात् अन्तःक्लेशावलोकनाच्च। एतल्लक्षणञ्चापि "पतिर्देशान्तरं यस्याः यास्यत्येवोत्तरक्षणे। प्रवत्स्यत्पतिका सा स्यात् प्रयाणच्छेदनोद्यमा ॥" इति। विवेचितमिदं रसपयोधिगभीरता-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इह च "परस्त्रियौ कन्यकोढ़े सङ्केतात् पूर्वं विरहोत्कण्ठिते, पश्चाद्विदूषकादिना सहाभिसरन्त्यावभिसारिके, कुतोऽपि सङ्केतितस्थानमप्राप्ते नायके विप्रलब्धे, इति त्र्यवस्थैवानयोः अस्वाधीनप्रिययोरवस्थान्तरायोगात्" इति कश्चित्। (क).

क्वचिदन्योन्यसाङ्कर्य्यमासां लक्ष्येषु दृश्यते॥१२७॥ (ख)

यथा,—

"न खलु वयममुष्य दानयोग्याः
पिबति च पाति च याऽसकौ रहस्त्वाम्।
विट! विटपममुं ददस्व तस्यै
भवति यतः सदृशोश्चिराय योगः॥ (ग)

---

निरूपके: इति। विप्रलम्भशृङ्गारनिरूपणावसरे भाविनः प्रवासस्य कथने व्यक्तीभविष्यति चैतत्।

(क) मतान्तरं निर्दिशति, इहेति।—परस्त्रियौ—परकीये नायिके, कन्यकोढ़े—कन्यका अन्योढ़ा चेति द्विप्रभेदे भवत इत्यर्थः। [परस्त्रिया इति पाठान्तरे तु अभेदे तृतीयेति स्वीकृत्य परस्त्रीत्वाभिन्ने इत्यर्थः] ते च सङ्केतात्—अभिप्रायाविष्करणात्, पूर्वं—प्राक्, विरहोत्कण्ठिते—विरहावस्थायामुत्कण्ठाशालिन्यौ भवतः; पश्चात्—सङ्केतानन्तरं, विदूषकादिना—सह सम्मिल्य इति शेषः, अभिसरन्त्यौ—अभिसारं कुर्वत्यौ सत्यौ, अभिसारिके—"अभिसारिका" इति संज्ञाभागिन्यौ भवतः। अथ कुतोऽपि—कस्मादपि प्रतिबन्धात्, उपस्थितादवश्यमनुष्ठेयान्तरादित्यर्थः; नायके—कान्ते, सङ्केतितस्थानम्—अभिप्रायाविष्करणेनानुज्ञातं क्रीड़ानिकेतनम्, अप्राप्ते—अनागते सति, विप्रलब्धे—वञ्चिते, विप्रलब्धेतिसंज्ञाभागिन्यौ इत्यर्थः। इति—अस्मात् कारणात्, त्र्यवस्था—त्रिविधामवस्थामापन्ने इत्यर्थः, एव भवतः। ननु अवस्थान्तरमनयोरपि कुतो नेत्याह, अनयोरिति।—स्पष्टम्।

(ख) आसां—निरुक्तप्रकाराणां, चतुरधिकाशीत्युत्तरशतत्रयभेदानां नायिकानाम् इत्यर्थः। अन्योऽन्यसाङ्कर्य्यं—परस्परं लक्षणमेलनम्। लक्ष्येषु—उदाहरणेषु, क्वचित्—न तु सर्वत्र इति भावः, दृश्यते।

(ग) नेति।—सपुष्पपल्लवां वृक्षशाखां प्रियायै प्रयच्छन्तं नायकं प्रति नायिकायाः उक्तिरियम्। हे विट!—धूर्त! वयम् अमुष्य—विटपस्य, दानयोग्याः,—दान-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तव कितव ! किमाहितैर्वृथा नः
क्षितिरुहपल्लवपुष्पकर्णपूरैः।
ननु जनविदितैर्भवद्व्यलीकै-
श्चिरपरिपूरितमेव कर्णयुग्मम्॥ (घ)
मुहुरुपहसितामिवालिनादै-
र्वितरसि नः कलिकां किमर्थमेनाम्।

---

पात्राणि, न खलु—नैव, या असकौ—असौ, [ "अव्ययसर्वनाम्नामकच् प्राक् टेः" (५।३।७१ पा०) इति स्वार्थे अकच्] कान्ता, रहः,—विजने, त्वां पिबति—चुम्बतीत्यर्थः, पाति—रक्षति, अन्यरमणीभोगतः वारयति इत्यर्थः, तस्यै अमुं विटपं—सपुष्पपल्लवां शाखां, यद्वा,—पल्लवम् ; ( "विटपो न स्त्रियां स्तम्बशाखाविस्तारपल्लवे। विटाधिपे ना" इति मेदिनी ) ददस्व—प्रयच्छ ; यतः,—दानात् सदृशोः,—समनुरूपयोः युवयोः, चिराय योगः,—सम्मेलनं भवति। अयं भावः,—अयं विटपः ( विटं शाखां पातीति तथोक्तः ) सा च विटपा [ विटं त्वां पिबति पातीति वा तथोक्ता "आतोऽनुपसर्गे कः" (३।२।३६ पा०) इति कः ] तस्मात् युवयोरिवाऽनयोरपि योगः साम्प्रतम् इति। माघस्य सप्तमसर्गे श्लोकचतुष्टयमिदं विद्यते। सर्व्वत्रैव पुष्पिताग्रा वृत्तम् ;—"अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा" इति तल्लक्षणात्।

( घ ) तवेति।—हे कितव !—धूर्त्त ! ("कितवस्तु पुमान् मत्ते वञ्चके कनकाह्वये" इति मेदिनी) वृथा—निरर्थकम्, आहितैः,—स्थापितैः ; तत्कार्य्यस्य अन्यथा सिद्धत्वादिति भावः ; तव—त्वत्सम्बन्धिभिः, क्षितिरुहाणां—वृक्षाणां, पल्लवाः, पुष्पाणि चेति तान्येव कर्णपूराः,—अवतंसास्तैः, [ कर्णं पूरयन्तीति कर्णपूराः, "कर्म्मण्यण्" ( ३।२।१ पा० ) इत्यण् ] नः,—अस्माकं, किं—न किमपि साध्यमिति भावः। [ गम्यमानसाधनक्रियाऽपेक्षया कर्णपूराणां करणत्वात् तृतीया ; तथोक्तम् ;—"न केवलं श्रूयमाणैव क्रियानिमित्तं कारकभावस्य, अपि तु गम्यमानाऽपि" इति ] परन्तु ननु—भोः ! जनेषु विदितानि तैः [ अत्र सप्तमीसमासः, "क्तेन च पूजायाम्" ( २।२।१२ पा० ) इत्यस्य "क्तस्य च वर्त्तमाने" ( २।३।६७ पा० ) इत्यनेन प्राप्तस्य षष्ठीसमासस्य बाधकत्वात् ] भवतः,—तव, व्यलीकानि—असत्यान्यप्रियाणि वचनानि तैः ; कर्णयोर्युग्मं—कर्णयुगलं, चिरेण परिपूरितं—पूर्णमेव ; अतः तस्य पूरितस्य पूरणायोगादलमेतैरिति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वसतिमुपगतेन धाम्नि तस्याः
शठ ! कलिरेष महांस्त्वयाऽद्य दत्तः ॥ (ङ)
इति गदितवती रुषा जघान
स्फुरितमनोरमपक्ष्मकेसरेण ।
श्रवणनियमितेन कान्तमन्या
सममसिताम्बुरुहेण चक्षुषा च ॥" (च)

इयं हि वक्रोक्त्या परुषवचनेन कर्णोत्पलताड़नेन च धीरमध्यताऽधीरमध्यताऽधीरप्रगल्भताभिः सङ्कीर्णा । एवमन्यत्रापि ऊह्यम् । (छ)

इतरा अप्यसङ्ख्यास्ता नोक्ता विस्तरशङ्कया॥१२८॥(ज)

---

(ङ) मुहुरिति ।—अलीनां—भ्रमराणां, नादाः,—झङ्कारास्तैः मुहुः,—पुनः पुनरित्यर्थः, उपहसिताम्—उपहसितामिव स्थिताम्, एनां कलिकां—कोरकम्, अल्पं कलिं कलहञ्च ("कलिका कोरकः पुमान्" इत्यमरः "कलहे च युगे कलिः" इति च वैजयन्ती) [ "अल्पे" (५।३।८५ पा०) इति कः । स्त्रीप्रत्ययस्तु श्लेषार्थे सर्वत्र अविवक्षित एव ] हे शठ !—गूढ़विप्रियकारिन् ! किमर्थं नः,—अस्मभ्यं, वितरसि ? यतः तस्याः,—स्वप्रियायाः, [ अत्र साक्षादनभिधानं स्वप्रतिकूलत्वं द्योतयति ] धाम्नि—भवने,("धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः" इति मेदिनी ) वसतिं—वासम्, उपगतेन—प्राप्तेन, स्थितिं कृतवतेति यावत्, त्वया अद्य एषः,—वर्त्तमानः, महान् कलिः,—कलहो दत्तः, भवद्दत्ते एव बृहत्परिसरे कलौ स्थिते किं प्रयोजनं तस्य कल्यान्तरेणेत्याशयः ।

(च) इतीति ।—इति—इत्थं, गदितवती—उक्तवती, अन्या—पूर्वोक्ता भिन्ना कामिनीत्यर्थः, रुषा—कोपेन, स्फुरिता मनोरमाः पक्ष्माणीव केसराः, पक्षे,—पक्ष्माण्येव केसराः,—किञ्जल्काः, यस्य तादृशेन, श्रवणनियमितेन—कर्णस्थितेन, आकर्णायतेन, च, असिताम्बुरुहेण—नीलोत्पलेन, चक्षुषा, च, समं—युगपदेव, कान्तं, जघान—आहतवती, हस्तस्थितनीलोत्पलेन कटाक्षेण च ताड़यामासेत्यर्थः ।

(छ) इयं हीति ।—उदाहृतचेष्टिता नायिका किलेत्यर्थः, वक्रोक्त्या—किट-शब्दस्य नानार्थकल्पनारूपया विचित्रोक्त्या, इत्याशयः । अन्यत् स्पष्टम् ।

(ज) ननु किमेता एव नान्यविधेत्याह, इतरा अपीति ।—पद्मिनीहस्तिनीप्रभृतयः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ताः,—नायिकाः।

अथाऽऽसामलङ्काराः,—

**यौवने सत्त्वजास्तासामष्टाविंशतिसङ्ख्यकाः।**
**अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः॥**
**शोभा कान्तिश्च दीप्तिश्च माधुर्य्यञ्च प्रगल्भता।**

---

अन्या अपि नायिकाः, असङ्ख्याः,—अमिताः, सन्ति, अत्र "किन्तु" इति ऊहनीयं, ताः, विस्तरशङ्कया—ग्रन्थबाहुल्यभयेन, न, उक्ताः,—कथिताः; यथा हि,—"पुनश्च ताः त्रिधा ज्ञेया दिव्यादिव्योभयात्मना। चतुर्धा चोद्धतोदात्ता ललिता शान्तिका तथा॥ अचला च चलायातायाता याथावरेत्यपि। पुनश्चतुर्धा कथिताः पूर्वैर्भोजादिभिर्बुधैः॥ पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनीति च। पुनः चतुर्धा कथिताः कामशास्त्रेषु जातितः॥ कफिनी वातला पित्त-ला प्रकृत्या पुनः त्रिधा। अथोक्तानाञ्च भेदानां लक्षणोदाहृती ब्रुवे॥ दिव्याः शच्यादयः प्रोक्ता अदिव्याः मालतीमुखाः। दिव्याऽदिव्या इति प्रोक्ता जानकीरुक्मिणीमुखाः॥ गर्वशालिन्युद्धता स्यात् उदात्ता गूढमानिनी। ललिता साध्यमानेहा शान्ता निर्मानमानसा॥ उदात्तैव भवेद्धीराऽथाधीरा तूद्धता मता। ललिता तु भवेन्मुग्धा शान्ता स्वीयोत्तमा मता॥ भुक्ताऽन्येन पुरा पश्चादूढा-न्येनाचला मता। भुक्ता शक्तिसुतेनोढा राज्ञा सत्यवती यथा॥ गते भर्त्तरि यद्यन्यं श्रिता, सा तु चला मता। यथा तारा रविसुतं श्रिता वालिनि मारिते॥ याताऽयाता तु युगपदूढाऽनेकैस्तु भर्त्तृभिः। यथा पाण्डुसुतैरूढा द्रुपदस्य कुमारिका॥ ऊढैकेन तु सन्त्यक्ता क्रमाद्याथावरा मता। यथा बहुवरैरूढा माधवी चोपलात्मजा॥ पद्मिनी चन्द्रवदना शिरीषमृदुला तथा। शङ्खिनी स्याद्दृढमध्या कोपिन्यल्पस्तनी तथा॥ दीर्घपादा द्रुतगतिः कुटिलाक्षी च पिङ्गला। हस्तिनी बहुभुक् क्रूरा निस्त्रपा पिङ्गकुन्तला॥ कम्बा स्थूलाधरा गौरशरीरा मन्दगामिनी। कफिनी दृढरागा स्यात् श्यामा सुस्निग्धलोचना॥ वातला तु कठोराङ्गी चञ्चला कृष्णपाणिजा। श्याम-धूम्रवर्णा च बहुभोज्या प्रलापिनी॥ पित्तला शोणनयना गौराङ्गी कुशला रते। सा चतुर्धा पुनरपि नायिका प्रतिनायिका॥ यथा द्रुपदजा प्रोक्ता वेणीसंहारनाटके। हेतुरीर्ष्यारुडादीनां सपत्नी प्रतिनायिका॥ दुर्योधनस्य दयिता तत्र भानुमती यथा। तस्याः कैश्चिद्गुणैर्हीना पूज्या चैवोपनायिका। समा न्यूनाऽपि वा किञ्चित् कनीयस्यनु-नायिका॥" इति दिक्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

औदार्य्यं धैर्य्यमित्येते सप्तैव स्युरयत्नजाः ।
लीला विलासो विच्छित्तिर्विव्वोकः किलकिञ्चितम् ।
मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः ।
विकृतं तपनं मौग्ध्यं विक्षेपश्च कुतूहलम् ॥
हसितं चकितं केलिरित्यष्टादशसञ्ज्ञकाः ।
स्वभावजाश्च भावाद्या दश पुंसां भवन्त्यपि ॥१२९॥(झ)

पूर्वे भावादयो धैर्य्यान्ता दश नायकानामपि सम्भवन्ति, किन्तु सर्वेऽप्यमी नायिकाश्रिता एव विच्छित्तिविशेषं पुष्णन्ति। (ञ)

(झ) यौवने इति ।—तासां—निरुक्तप्रकाराणां नायिकानां, यौवने—यौवनावस्थायाम्, अष्टाविंशतिसञ्ज्ञकाः अलङ्काराः। तत्र सत्त्वजाः,—सत्त्वगुणजाताः, रजस्तमसी अभिभूयोज्जृम्भमाणं मानसवृत्तं निमित्तीकृत्य सम्भूताः इति यावत् ; भवन्ति इति शेषः ; तत्र—तेषु मध्ये, अङ्गजाः,—अङ्गेषु जायन्त इति तथोक्ताः। [ "सप्तम्यां जनेर्डः" ( ३।२।९७ पा० ) इति डः ] ते च, भावहावहेला इति त्रयः। अथ, अयत्नजाः,—अयत्नात् जायन्ते इति यत्नमन्तरेणैव जायमाना इत्यर्थः, अकृत्रिमा इति भावः। ते च शोभाकान्तिदीप्तिमाधुर्य्यप्रागल्भ्यौदार्य्यधैर्य्याख्याः सप्त, एवं, स्वभावाज्जायन्ते इति तथोक्ताः, ("स्वरूपञ्च स्वभावश्च" इत्यमरः) ते च लीलाविलासविच्छित्तिविव्वोककिलकिञ्चितमोट्टायितकुट्टमितविभ्रमललितमदविकृततपनमौग्ध्यविक्षेपकुतूहलहसितचकितकेलिनामानोऽष्टादश भवन्ति इति भावः। ["विकृतम्" इत्यत्र "विहृतम्" इति पाठान्तरम् ]।

(ञ) "भवन्त्यपि" इति 'अपि'शब्दस्य योजनां दर्शयन् विवृणोति, पूर्वे इति ।—अत्र 'एषु'इति पदमध्याहार्य्यम् ; परिगणितेषु यौवनालङ्कारेषु मध्ये इत्यर्थः, भावादयः,—भावमारभ्य, धैर्य्यान्ताः,—धैर्य्यमित्यन्तं पठिताः, दशालङ्काराः। पुंसां—नायकानाम्, अपि, न केवलं नायिकानामित्यर्थः ; सम्भवन्ति, किन्तु, एते, सर्वे अपि, नायिकाऽऽश्रिताः,एव विच्छित्तिविशेषं—विलक्षणवैचित्र्यम् इत्यर्थः, पुष्णन्ति—पुष्टिं नयन्तीति ; अत एव "अथ आसामलङ्काराः" इत्युपक्रम्य कविराजैर्नायिकालङ्कारत्वेनैव वर्णिताः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र भावः,—

**निर्विकारात्मके चित्ते भावः प्रथमविक्रिया ॥१३०॥ (ट)**

जन्मतः प्रभृति निर्विकारे मनसि उद्बुद्धमात्रो विकारो भावः ।

यथा,—

"स एव सुरभिः कालः स एव मलयानिलः ।
सैवेयमबला किन्तु मनोऽन्यदिव दृश्यते ॥" (ठ)

अथ हावः,—

**भ्रूनेत्रादिविकारैस्तु सम्भोगेच्छाप्रकाशकः ।**
**भाव एवाल्पसंलक्ष्यविकारो हाव उच्यते ॥१३१॥ (ड)**

---

(ट) भावमाह, निर्व्विकारेति ।—निर्व्विकारात्मके—अविकृते, चित्ते—मनसि, प्रथमविक्रिया—प्रथमः विकारः, भावः । ["निर्विकारात्मकात् सत्त्वाद्भावस्तत्राद्यविक्रिया" इति पाठान्तरे—सत्त्वात्—मानसधर्म्मविशेषात्, तत्र—तेषु अलङ्कारेषु, आद्या—प्रथमा, विक्रिया—विकारः, सम्भोगेच्छायाः प्राक् प्रकृतिविपर्य्यास इति यावत्]। स्पष्टमन्यत् ।

(ठ) उदाहरति, स एवेति ।—स एव—अनेकशोऽनुभूतः, सुरभिः कालः,—वसन्त ऋतुः, स एव—बहुशः सेवितः, मलयानिलः,—उपचारान्मलयाचलसम्भूतचन्दनगन्धवह इति भावः, सैव—यथा सुरभिर्मलयानिलश्चोभौ सेवितौ, सा एव इयम्, अबला, किन्तु, मनः, अन्यदिव—कौमारकालिकावस्थातो भिन्नमिव, दृश्यते—प्रतीयते । यौवनाविर्भावात् मनसः अन्यथाभावः संवृत्त इति भावः । अत्र मुग्धात्वेन भाव्यमानाया अपि नायिकाया मनसः किञ्चिद्विपरीतत्वसम्भाव्यमानतोक्त्या स्फुटं लक्षणसमन्वयः ।

(ड) हावमाह, भ्रूनेत्रादीति ।—भ्रूनेत्रादीनां विकाराः,—विपर्य्यासास्तैः, कौमारे चाञ्चल्यादिरहितानां नेत्रादीनां चाञ्चल्यादिरूपप्रकृतिविपर्य्यासैरित्यर्थः, सम्भोगे—चुम्बनालिङ्गनादिरूपे, या इच्छा तां प्रकाशयतीति तथोक्तः, अल्पम्—अस्पष्ट, संलक्ष्यः,—प्रकटनीयः, विकारः,—परिवर्त्तनं यस्य तादृशः, ईषल्लक्ष्यस्वभाव इति यावत्, भावः एव,—निरुक्तलक्षण इत्यर्थः, (एतेन हेलालक्षणातिव्याप्तिः वारिता) हावः, उच्यते ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"विवृण्वती शैलसुताऽपि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः।
साचीकृता चारुतरेण तस्थौ मुखेन पर्य्यस्तविलोचनेन॥" (ढ)

अथ हेला,—

हेलाऽत्यन्तसमालक्ष्यविकारः स्यात् स एव च॥१३२॥(ण)

स एव—भाव एव। यथा,—

"तह से झत्ति पउत्ता बहुए सव्वङ्गविब्भमा सअला।
संसइअमुद्धभावा होइ चिरं जह सहीणं पि॥" (त)

---

[ "हेवाकस्तु सशृङ्गारी हावोऽक्षिभ्रूविलासकृत्" इति पाठान्तरे तु नेत्रभ्रुकुट्यादीनां विलासहेतुः सशृङ्गारः स्वभावविशेषो हेवाकः हाव इत्यर्थः ]।

(ढ) हावमुदाहरति, विवृण्वतीति।—शैलसुता—शैलस्य—पर्वतस्य, हिमालयस्येति यावत्, सुता—पुत्री, पार्व्वतीत्यर्थः, (अत एव "काली हैमवतीश्वरी" इत्यमरोक्तं सङ्गच्छते) अपि, स्फुरद्बालकदम्बकल्पैः,—स्फुरतः विकसतः, बालकदम्बात् ईषदूनानि तैस्तथोक्तैः, विकसिताभिनवकदम्बसदृशैरित्यर्थः, उद्गतपुलकैरिति भावः; अङ्गैः,—अवयवैः, भावं—रत्याख्यं मनोविकारविशेषं, विवृण्वती—प्रकटयन्ती, पर्य्यस्तविलोचनेन—शिवे परिक्षिप्तनेत्रेण, विभ्रान्तनेत्रेण इति यावत्, अत एव चारुतरेण—अतिमनोहरेण, मुखेन, साचीकृता—ईषत् वक्रीकृता सती, तस्थौ। अत्राङ्गानां बालकदम्बत्ववर्णनेन पुलकस्याल्पत्वं, तेन च भावस्याल्पत्वं प्रतीयते। उपेन्द्रवज्रेन्द्रवज्रयोरुपजातिः वृत्तम्। कुमारसम्भवस्येदं पद्यम्।

(ण) हेलामाह, हेलेति।—अत्यन्तं समालक्ष्यः, विकारो यत्र तादृशः, स एव—निरुक्तलक्षणः हावरूपो भाव एव, हेला, स्यात्। [अत्र पुस्तकान्तरे—"स एव हेला सुव्यक्तशृङ्गाररससूचिका" इति, "हाव एव स्पष्टभूतो विकारभूतत्वात् सुव्यक्तशृङ्गाररससूचको हेला" इति वृत्तौ च पाठान्तरमुपलभ्यते]।

(त) हेलामुदाहरति, तह इति।—[ "तथा तस्या झटिति प्रवृत्ता बध्वाः सर्वाङ्गविभ्रमाः सकलाः। संशयितमुग्धभावा भवन्ति चिरं यथा सखीनामपि॥" इति संस्कृतम् ] अस्यार्थः ;—तस्याः, बध्वाः,—नवोढ़ायाः बालायाः, झटिति—सहसा, सकलाः,—समग्राः, सर्वाङ्गेषु, विभ्रमाः,—विलासाः, तथा, प्रवृत्ताः,—सञ्जाताः, यथा, सखीनां—सहचरीणाम् अपि, किमन्येषामिति भावः, चिरं—चिराय, संशयित-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ शोभा,—

**रूपयौवनलालित्यभोगाद्यैरङ्गभूषणम्।**

**शोभा प्रोक्ता ॥ १३३ ॥ (थ)**

तत्र यौवनशोभा,—

"असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात् परं साऽथ वयः प्रपेदे ॥"(द)

एवमन्यत्रापि।

अथ कान्तिः,—

**सैव कान्तिर्मन्मथाप्यायितद्युतिः ॥१३४॥**

---

मुग्धभावाः,—सन्दिग्धशैशवाः, "अहो सुकुमाराङ्गीयं कथं यौवनाक्रान्तेव परिलक्ष्यते" इति भावनायाः सहसा समुद्भावका इति यावत्, भवन्ति। अत्र मुग्धतायाः सखीनामपि संशयापादकत्वकथनेन स्फुटमत्यन्तलक्ष्यमनोविकारविशेषत्वं नायिकायाः इति बोध्यम्।

(थ) शोभामाह, रूपेति।—रूपञ्च, यौवनञ्च, लालित्यं—सौन्दर्य्यम्, अङ्गानां सुकुमारत्वम् इति यावत्; ("ललितं त्रिषु सुन्दरम्" इत्यमरः) च, भोगाद्याश्चेति तैः [अत्र इत्थम्भूतलक्षणे तृतीया; यद्वा—करणे एव तृतीया] अङ्गभूषणम्—अङ्गानां करचरणादीनां भूषणं शोभमानत्वमित्यर्थः; शोभा—तन्नामा भावः, प्रोक्ता ["रूपोपभोगतारुण्यैः शोभाऽङ्गानां विभूषणम्" इति पाठान्तरेऽपि रूपं—सौष्ठवविशेषः, उपभोगः,—ताम्बूलादिसेवनं, तारुण्यं—यौवनञ्च, तैस्तद्द्वारा अङ्गानां विभूषणं शोभेत्यर्थः]।

(द) रूपशोभायाः प्रसिद्धत्वात् यौवनशोभामुदाहरति, असम्भृतमिति।—अथ—शैशवादनन्तरं, सा—पार्वती, अङ्गयष्टेः,—अङ्गं यष्टिरिवेति तस्याः, असम्भृतम्—अनाहृतं, मण्डनं—भूषणम्, अनासवाख्यम्—आसवाख्यारहितम्, आसवव्यतिरिक्तमित्यर्थः, मदस्य—मत्ततायाः, करणं—साधनं, कामस्य—मदनस्य, पुष्पव्यतिरिक्तं—पुष्पभिन्नम्, अस्त्रं, बाल्यात् परं वयः,—यौवनमित्यर्थः, प्रपेदे—प्राप। यौवनेनैव युवतयः प्रसाध्यन्ते काम्यन्ते चेति भावः। उपेन्द्रवज्रेन्द्रवज्रयोरुपजातिः वृत्तम्। कुमारसम्भवस्थेदं पद्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मन्मथोन्मेषेणातिविस्तीर्णा (ध) शोभैव कान्तिरुच्यते ।

यथा,—"नेत्रे खञ्जनगञ्जने" इत्यादि ।

अथ दीप्तिः,—

कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते॥१३५॥(न)

यथा मम चन्द्रकलानामनाटिकायां चन्द्रकलावर्णनम्,—

"तारुण्यस्य विलासः समधिकलावण्यसम्पदो ह्रासः ।
धरणितलस्याभरणं युवजनमनसो वशीकरणम् ॥" (प)

अथ माधुर्य्यम्,—

सर्वावस्थाविशेषेषु माधुर्य्यं रमणीयता ॥ १३६ ॥

यथा,—

"सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।

---

(ध) कान्तिमाह, सैवेति ।—सैव—शोभैव, मन्मथेन—कामेन, आप्यायिता—वर्द्धिता, द्युतिः यस्याः तथाभूता, कान्तिरुच्यते इति शेषः । [क्वचित् पुस्तकेषु "मन्मथोन्मेषेण" इति पङ्क्तिर्नास्ति, ततः परम् "उन्मीलद्वदनेन्दुदीप्तिविसरैर्दूरे समुत्सारितं भिन्नं पीनकुचस्थलस्य च रुचा हस्तप्रभाभिर्हतम् । एतस्याः कलविङ्ककण्ठकदलीकल्पं मिलत्कौतुकादप्राप्ताङ्गसुखं रुषेव सहसा केशेषु लग्नं तमः ॥" इत्युदाहरणविशेषो दृश्यते । कलविङ्कः,—पक्षिविशेषः, तत्कण्ठसदृशं कृष्णमिति भावः । स्पष्टमन्यत् ] ।

(न) दीप्तिमाह, कान्तिरिति ।—अतिविस्तीर्णा—समधिकविसरणशीला । स्पष्टमन्यत् ।

(प) दीप्तिमुदाहरति, तारुण्यस्येति ।—तारुण्यस्य—यौवनस्य, विलासः,—स्फुरणं, लक्षणया तथाभूता इति भावः, एवमुत्तरत्रापि ; समधिकं यत् लावण्यं,—"मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥" इत्युक्तं किमपि सौन्दर्य्यं, तदेव सम्पत् तस्याः ह्रासः,—ह्रासं, विकास इत्यर्थः, धरणितलस्य—पृथिव्याः, आभरणम्—अलङ्कारः, तथा युवान एव जनाः तेषां मनसः,—चित्तस्य, वशीकरणम् । अत्र चन्द्रकलायां तारुण्यविलासादीनामतिशयद्योतनं लक्षणायाः प्रयोजनम् । आर्य्या वृत्तम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम्? ॥" (फ)

अथ प्रगल्भता,—

**निःसाध्वसत्वं प्रागल्भ्यम् ॥ १३७ ॥ (ब)**

यथा,—

"समाश्लिष्टाः समाश्लेषैश्चुम्बिताश्चुम्बनैरपि।
दष्टाश्च दंशनैः कान्तं दासीकुर्वन्ति योषितः ॥" (भ)

---

(फ) माधुर्यमुदाहरति, सरसिजमिति।—शकुन्तलायाः वल्कलधारणेऽपि शोभातिशयमनुभवतः दुष्यन्तस्य स्वयं परामर्शोऽयम्। सरसिजं—कमलम् ("अब्जं सरसिजं पद्मम्" इति कोषः) शैवलेन—जलाच्छादिकया जलनील्या, ("जलनीली तु शैवालं शैवलः" इत्यमरः) अनुविद्धं—व्याप्तं, सम्बद्धम् इति यावत्, अपि, रम्यं—मनोहरं, हिमांशोः,—चन्द्रस्य, लक्ष्म—चिह्नम्, कलङ्क इति यावत्, ("चिह्नं लक्ष्म च लक्षणम्" इत्यमरः) मलिनमपि—स्वभावतो दूषितमपीति भावः, लक्ष्मीं—शोभां, तनोति—विस्तारयति। इयं—पुरो दृश्यमाना, जगत्त्रयसुन्दरीणां मुख्येति भावः, तन्वी—कृशाङ्गी, शकुन्तलेत्यर्थः, वल्कलेन—वृक्षत्वचा, अतितुच्छवस्तुनेति यावत्, अपि—किं पुनरुत्कृष्टवस्तुनेति अपिशब्दार्थः। अधिकमनोज्ञा—अत्यन्तं मनोरमा; हि—तथा हि, मधुराणां—स्वभावतो रमणीयानाम्, आकृतीनाम्—आकाराणां किमिव, न, मण्डनं—भूषणम्? अपि तु सर्वमेव तुच्छं महद्वा वस्तु मण्डनं भवतीत्यर्थः। अभिज्ञानशाकुन्तलस्येदं पद्यम्। मालिनी वृत्तम्।

(ब) प्रागल्भ्यमाह, निःसाध्वसत्वमिति।—निःसाध्वसत्वं—निर्भीकत्वम्, असङ्कुचितत्वमिति यावत्, ("भीतिर्भीः साध्वसं भयम्" इत्यमरः)। प्रागल्भ्यं—प्रौढत्वमित्यर्थः। मनःक्षोभपूर्व्वकोऽङ्गसादः साध्वसम्, तदभावः प्रागल्भ्यमिति भावः।

(भ) प्रागल्भ्यमुदाहरति, समाश्लिष्टा इति।—योषितः,—नार्य्यः, (कान्तेनेति सर्व्वत्र योज्यम्) समाश्लिष्टाः,—समालिङ्गिताः सत्यः, समाश्लेषैः,—गाढालिङ्गनदानैः, चुम्बिताः सत्यः, चुम्बनैः,—मुखस्य कपोलफलकस्य चोपरि सम्बन्धविधानैः, दष्टाश्च सत्यः, दंशनैः,—दशनाघातव्यापारैः कान्तं—प्रियं, दासीकुर्व्वन्ति—अधीनीकुर्व्वन्ति इत्यर्थः। पथ्यावक्त्रं वृत्तं,—"युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितम्" इति तल्लक्षणम्। ["तथा व्रीडाविधेयापि तथा मुग्धाऽपि सुन्दरी। कलाप्रयोगचातुर्य्यसभास्वाचार्य्यतां गता ॥" इत्युदाहरणान्तरं पुस्तकान्तरे दृश्यते]।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ औदार्य्यम्,—

औदार्य्यं विनयः सदा ॥१३८॥ (म)

यथा,—

"न ब्रूते परुषां गिरं, वितनुते न भ्रूयुगं भङ्गुरं,
नोत्तंसं क्षिपति क्षितौ श्रवणतः, सा मे स्फुटेऽप्यागसि ।
कान्ता गर्भगृहे गवाक्षविवरव्यापारिताक्ष्या वहिः,
सख्या वक्त्रमभि प्रयच्छति परं पर्य्यश्रुणी लोचने ॥" (य)

अथ धैर्य्यम्,—

मुक्तात्मश्लाघना धैर्य्यं मनोवृत्तिरचञ्चला ॥१३९॥(र)

---

(म) औदार्य्यमाह, औदार्य्यमिति ।—सदा—सर्व्वस्मिन् काले, विनयः,—नम्रता, शिष्टाचार इति यावत्, औदार्य्यम्—उदारत्वं नाम अलङ्कार इत्यर्थः ।

(य) उदाहरति, नेति ।—सा—धीराऽधीरा कान्ता, मे—मम, आगसि—अपराधे, ("पापापराधयोरागः" इत्यमरः) स्फुटे—व्यक्तेऽपि, अन्यस्या उपभोगरूपेऽपराधे प्रकाशीभूतेऽपीत्यर्थः, परुषां—कर्कशां, गिरं—वाचं, न ब्रूते—न कथयति ; भ्रूयुगं—भ्रूद्वयं, भङ्गुरं—कुटिलं, न वितनुते—न करोति ; तथा श्रवणतः,—कर्णाभ्याम्, उत्तंसम्—अवतंसं, कर्णभूषणमित्यर्थः, क्षितौ—धरण्यां, न क्षिपति, (क्षेपणं हि क्रोधचिह्नम्) परं—केवलम् [ इदमव्ययम् ] गर्भगृहे—वासगृहाभ्यन्तरे, स्थिता सतीति शेषः, वहिः गवाक्षविवरेण व्यापारिते—पर्य्यवेक्षणार्थं चालिते, क्षिप्ते इति यावत्, अक्षिणी यया तादृश्याः सख्याः, वक्त्रं—वदनम्, अभि—लक्ष्यीकृत्य इत्यर्थः, [ "अभिरभागे" (१।४।९१ पा०) इति द्वितीया ] पर्य्यश्रुणी—अश्रुपूर्णे लोचने, प्रयच्छति—पातयतीत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ।

(र) धैर्य्यमाह, मुक्तेति ।—मुक्ता—त्यक्ता, आत्मश्लाघना—निजगुणाविष्करणं, यस्यां तादृशी, अचञ्चला—अचपला, मनोवृत्तिः धैर्य्यम् । [ "चापलाविहिता धैर्य्यं चिद्वृत्तिरविकत्थना" इति पाठान्तरं तु,—चापलेन—चपलतया, अविहिता—न कृता, तथा अविकत्थना—आत्मनः श्लाघारहिता तादृशी या चिद्वृत्तिर्मनोवृत्तिः, तत् धैर्य्यमित्यर्थः ; अत एव वृत्तौ "चापलानुपहता मनोवृत्तिरात्मगुणानाख्यायिका धैर्य्यम्" । तथा चोक्तम् ;—"शीलानुल्लङ्घनं धैर्य्यं कीर्त्यतेऽत्र मनीषिभिः" इति तदयमीदृशः पुस्तकान्तरादप्युपलभ्यते ] ।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी
दहतु मदनः किंवा मृत्योः परेण विधास्यति ? ।
मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं, न त्वेवायं जनो न च जीवितम् ॥" (ल)

अथ लीला,—

**अङ्गैर्वेषैरलङ्कारैः प्रेमभिर्वचनैरपि ।**
**प्रीतिप्रयोजितैर्लीलां प्रियस्यानुकृतिं विदुः॥१४०॥(व)**

---

(ल) उदाहरति, ज्वलतु इति।—रात्रौ रात्रौ—[ वीप्सायां द्विर्भावः ] प्रतिरात्रमित्यर्थः, गगने—आकाशे, अखण्डाः,—समस्ता अविकला वा ( वियोगिजनानां संहारार्थमुद्यतवैभवाः ) कला यस्येति अखण्डकलः,—सम्पूर्णः, उद्धतप्रभावो वा इत्यर्थः, शशी—चन्द्रमाः, ज्वलतु—विरहिजने अग्नितुल्यकिरणान् विस्तारयतु इत्यर्थः ; मदनः,—कामः, दहतु—भस्मीकरोतु, मृत्योः परेण—मरणातिरिक्तमित्यर्थः, किंवा विधास्यति —करिष्यति ? मृत्युपर्य्यन्तविधानमेव तद्विक्रमस्य चरमसीमेति भावः ; मम तु दयितः,—पतिः, तातः,—पिता च, श्लाघ्यः,—प्रशंसनीयः ; दयितपक्षे—अभिमतः, पितृपक्षे—माननीय इत्यर्थः ; केचित्तु—मम तु तातः पिता, दयितः प्रियः, श्लाघ्यश्च इति पदत्रयं विहाय व्याचख्युः । जननी—माता, अमलान्वया—विशुद्धवंशीया, कुलं—स्वामिकुलं, पितृकुलं, मातृकुलञ्चेत्यर्थः, अमलिनं—कलङ्करहितम्, अयं जनः,—( आत्मानमुद्दिश्येदमुक्तमिति ) अहमित्यर्थः, न तु एव—न स्थिरः, जीवितञ्च न, स्थिरमिति शेषः । अतः अस्थिरस्य देहस्य जीवनस्य च कृते पितृमातृभर्त्तृकुलानि किमिति कलङ्कनीयानीति भावः । [ इदमुक्तम् ;—"न जातु कामान्न भयान्न लोभात् धर्मं त्यजेज्जीवितस्यापि हेतोः । धर्मो नित्यो जीवितं चाप्यनित्यं देहोऽनित्यो हेतुरस्याप्यनित्यः ॥" "धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः" इत्याद्युक्त्या धर्मः कदाऽपि न परिहातव्यः इति ] । हरिणी वृत्तं,—"न समरसला गः षड्वेदैर्हयैर्हरिणी मता" इति तल्लक्षणात् ।

(व) लीलां लक्षयति, अङ्गैरिति ।—प्रीतिप्रयोजितैः,—प्रीत्या—हर्षेण, प्रेम्णा इति यावत्, प्रयोजितैः,—अनुष्ठानादिभिः स्वीकृतैरित्यर्थः, अङ्गैः,—करचरणादिसञ्चालनैरित्यर्थः, वेषैः,—नेपथ्यैः, अलङ्कारैः,—आभूषणैः, प्रेमभिः,—प्रेमवद्भिः, प्रेम

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"मृणालव्यालवलया वेणीबन्धकपर्द्दिनी।
हरानुकारिणी पातु लीलया पार्वती जगत्॥" (ग्र)

अथ विलासः।

यानस्थानाऽऽसनाऽऽदीनां मुखनेत्रादिकर्मणाम्।
विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना॥१४१॥(घ)

यथा,—

"अत्रान्तरे किमपि वाग्विभवातिवृत्त-
वैचित्र्यमुल्लसितविभ्रममायताक्ष्याः।
तद्भूरिसात्त्विकविकारमपास्तधैर्य्य-
माचार्य्यकं विजयि मान्मथमाविरासीत्॥" (ङ)

सूचकैरिति यावत्, वचनैः,—उक्तिभिश्च, प्रियस्य—नायकस्य, अनुकृतिम्—अनुकरणं, लीलां विदुः। ["लीला प्रियाऽनुकरणं वाग्भिर्गत्याऽथ चेष्टितैः" इति पाठान्तरेऽप्ययमेवार्थः]।

(ग्र) लीलामुदाहरति, मृणालेति।—मृणालमेव व्यालः,—पन्नगः, वलयं—कङ्कणं, यस्याः तादृशी, वेणीबन्धः,—संयतकेशपाश एव, कपर्दः,—जटाजूटः, तच्छालिनी, अत एव लीलया हरस्य—शम्भोः, अनुकारिणी पार्वती जगत् पातु—रक्षतु। ["इयं चेष्टाऽनुरागेण तथाऽनुकुरुते प्रियम्। मुक्ताऽसूयां सपत्न्योऽपि वीक्षन्ते सस्पृहं यथा॥" इत्युदाहरणान्तरं पुस्तकान्तरे]।

(घ) विलासमाह, यानेति।—इष्टस्य—प्रियस्य, सन्दर्शनादिना (आदिनाऽऽगमनश्रवणादीनां ग्रहणम्) यानं—गमनं, स्थानं—स्थितिः, आसनम्—उपवेशनं, तान्यादौ येषां तेषां, यानप्रभृतीनामित्यर्थः, तथा, मुखनेत्रादिकर्मणां, विशेषः,—वैचित्र्यं, विलासः स्यात्। ["तात्कालिको विशेषस्तु विलासोऽङ्गक्रियाऽऽदिषु" इति पाठान्तरेऽप्ययमेवार्थः]।

(ङ) उदाहरति, अत्रेति।—मालत्याः भावं दृष्टवती माधवस्य सख्युः सखीसमीपे तद्वर्णनमिदम्। अत्र—अस्मिन्, अन्तरे—अवसरे, आयताक्ष्याः,—दीर्घनेत्रायाः, मालत्याः, किमपि—अनिर्दिष्टमित्यर्थः; वाचां विभवं—सामर्थ्यम्, अति-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ विच्छित्तिः,—

स्तोकाऽप्याऽऽकल्परचना
विच्छित्तिः कान्तिपोषकृत् ॥ १४२ ॥ (ह)

यथा,—

"स्वच्छाम्भःस्नपनविधौतमङ्गमोष्ठ-
स्ताम्बूलद्युतिविशदो विलासिनीनाम् ।
वासस्तु प्रतनु विविक्तमस्त्वितीयान्
आकल्पो यदि कुसुमेषुणा न शून्यः ॥ (क)

वृत्तम्—अतिक्रान्तं, वैचित्र्यं—गमनादिचातुरी यस्य तथोक्तम्, अवचनीयवैचित्र्यमित्यर्थः । उल्लसितेति ।—उल्लसिताः,—प्रकटिताः, विभ्रमाः,—विलासविशेषाः यत्र तादृशं, भूरीति ।—भूरयः,—बहवः, सात्त्विकाः,—स्तम्भस्वेदादयः, विकाराः, यस्मिन् ; यद्वा,—ते—प्रसिद्धाः, भूरीणां—बहूनां, सात्त्विकानां—सात्त्विकभावानां, विकाराः,—अनुभावाः, यस्मात् तथाभूतम्, अपास्तं—निरस्तं, धैर्य्यं—धीरता यस्मात् तत्, धैर्य्यविध्वंसकमित्यर्थः ; विजयि—विजयशीलं, तत्—स्तम्भस्वेदादिकारणतया प्रसिद्धं, मान्मथं—मदनसम्बन्धि, आचार्य्यकम्—आचार्य्यकर्म्म, शिक्षकताकार्य्यमित्यर्थः ; आविरासीत्—प्रकटीबभूव । वसन्ततिलकं वृत्तम् । मालतीमाधवस्य पद्यमिदम् ।

(ह) विच्छित्तिमाह, स्तोकेति ।—स्तोकाऽपि—अल्पाऽपि, कान्तिपोषकृत्—सौन्दर्य्यवर्द्धिनी, आकल्परचना—अलङ्काररचना, वेशविन्यास इति यावत्, विच्छित्तिः,—तदाख्यो भाव इति यावत्, [ विपूर्व्वकात् छिदेः क्तिः ] मतेति शेषः । [ "स्तोकभूषणयोगेन विच्छित्तिरतिरम्यता" इति पाठान्तरम् ] ।

(क) उदाहरति, स्वच्छेति ।—विलासिनीनां—कामिनीनाम्, अङ्गं, स्वच्छेन—विमलेन, अम्भसा—जलेन, स्नपनेन—स्नानेन, विधौतं—विशेषतः क्षालितम् ; ओष्ठः, ताम्बूलानां, द्युत्या—रागेण, विशदः,—रञ्जितः इति भावः, वासस्तु—वस्त्रं पुनः, प्रतनु—अतिसूक्ष्मं, तथा विविक्तं—पूतं, निर्म्मलमिति यावत्, ( "विविक्तौ पूतविजनौ" इत्यमरः ) इति—एवम्प्रकारः, इयान्—एतावान् एव इत्यर्थः, आकल्पः,—भूषणम्, अस्तु—पर्य्याप्तं भवतु इत्यर्थः, नाऽन्यैः प्रयोजनमित्याशयः ; यदि स आकल्पः, कुसुमेषुणा—कामेन, उपचारात् मदनोन्मेषजनितभावविशेषेण, शून्यः,—रहितः, न

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ विव्वोकः,—

विव्वोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः॥१४३॥ (ख)

यथा,—

"यासां सत्यपि सद्गुणानुसरणे दोषानुवृत्तिः परा
याः प्राणान् वरमर्पयन्ति न पुनः सम्पूर्णदृष्टिं प्रिये।
अत्यन्ताभिमतेऽपि वस्तुनि विधिर्यासां निषेधात्मकः
तास्त्रैलोक्यविलक्षणप्रकृतयो वामाः प्रसीदन्तु ते॥" (ग)

अथ किलकिञ्चितम्,—

स्मितशुष्करुदितहसित-
त्रासक्रोधश्रमादीनाम्।

---

स्यादिति शेषः। यत्किञ्चिदाभरणमस्तु, किन्तु तत् मदनाविर्भावजनितभावव्यञ्जकं भवितुमर्हतीति निर्गलितार्थः। प्रहर्षिणी वृत्तं,—"त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम्" इति तल्लक्षणात्। शिशुपालवधस्येदं पद्यम्।

(ख) विव्वोक इति।—अतिगर्वेण—अहङ्कारातिशयेन, इष्टे—प्रियेऽपि, वस्तुनि—विषये, अनादरः,—अयत्नः, विव्वोकः।

(ग) उदाहरति, यासामिति।—कश्चित् कामिनं प्रति तदभिलषितकामिनी-सख्यराशीर्वचनमिदम्। सद्गुणानुसरणे—सद्गुणानाम् अनुसरणे—परैरुद्भावने, सत्यपि, यासां—नारीणां, परा—केवला, दोषानुवृत्तिः,—दोषाणाम् अनुवृत्तिः,—स्वयं पुनःपुनरुद्भावनमित्यर्थः, प्रतीपदर्शिनीत्वात् गुणेष्वपि केवलं दोषग्रहणमिति भावः; याः वरं प्राणान् अर्पयन्ति—परित्यजन्तीत्यर्थः, प्रिये—पत्यौ, सम्पूर्णदृष्टिं न पुनः अर्पयन्तीति शेषः; मानग्रहिला हि प्राणपरित्यागेऽपि न खिद्यन्ति, परं मानं विहाय नायकचित्तसन्तोषमुत्पादयितुं नोत्सहन्त इति भावः। अत्यन्ताभिमते—अतिप्रियेऽपि, वस्तुनि—विषये, सम्भोगव्यापारे इति यावत्, यासां निषेधात्मकः विधिः,—व्यापार इत्यर्थः; अत एव त्रैलोक्ये—त्रैलोक्यमध्ये, विलक्षणा—विचित्रा इत्यर्थः, प्रकृतिर्यासां तथाविधाः ताः, वामाः,—नार्यः, ("प्रतीपदर्शिनी वामा वनिता महिला तथा" इत्यमरः) ते—तव, प्रसीदन्तु—प्रसन्ना भवन्तु। अनुकूलेऽपि पदार्थे प्रतिकूलविचाराः विलक्षणप्रकृतित्वे बीजस्वरूपाः इति निष्कर्षः। शार्दूलविक्रीडितं वृत्तम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

साङ्कर्य्यं किलकिञ्चित-
मभीष्टतमसङ्गमादिजाद्धर्षात् ॥ १४४ ॥ (घ)

यथा,—

"पाणिरोधमविरोधितवाञ्छं भर्त्सनाश्च मधुरस्मितगर्भाः ।
कामिनः स्म कुरुते करभोरूर्हारि शुष्करुदितञ्च सुखेऽपि ॥"(ङ)

अथ मोट्टायितम्,—

तद्भावभाविते चित्ते वल्लभस्य कथादिषु ।
मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकम् ॥ १४५ ॥ (च)

---

(घ) किलकिञ्चितमाह, स्मितेति ।—अभीष्टतमस्य—प्रियतमस्य, सङ्गमादिजात्—मिलनादिजनितात्, हर्षात्—आनन्दात्, स्मितस्य—मृदुहासस्य, शुष्करुदितस्य—अनश्रुरोदनस्य, हसितस्य, त्रासस्य—भयस्य, क्रोधस्य—कृत्रिमकोपस्य इति भावः, श्रमस्य—आयासस्य, एवमन्यस्य च, साङ्कर्य्यं—सम्मिलनं, किलकिञ्चितम् । ["क्रोधाश्रुहर्षभीत्यादेः सङ्करः किलकिञ्चितम्" इति पाठान्तरम् ] ।

(ङ) उदाहरति, पाणिरोधमिति ।—करभः,—करिशावकः, ("करभः करिशावकः" इत्यमरः ) । करभशब्देनात्र लक्षणया करिशुण्डो बोध्यः । यद्वा—प्रसारितहस्ततलस्य कनिष्ठाङ्गुल्यूर्द्ध्वप्रदेशः करभः ( "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः ) तद्वत् ऊरू यस्याः इति करभोरूः । [ ऊरूत्तरपदादौपम्ये" ( ४।१।६९ पा० ) इत्यूङ् ] कान्ता इत्यर्थः, सुखेऽपि—सुखसमयेऽपि, अधरपानादौ सुखातिशयसूचके वर्त्तमानेऽपीति यावत्, अविरोधिता—अनिवारिता, वाञ्छा—प्रियमनोरथो यत्र तद् यथा तथा, कामिनः,—कान्तस्य, पाणिरोधं—पाणेः रोधः अवरोधः, वस्त्राक्षेपणादिप्रवृत्तनायककरप्रतिबन्धः; अथवा,—नीविमोचने व्यापृतस्य प्रियपाणेर्निवारणम् इत्याशयः ; तं, मधुरं स्मितं—मृदुहसितं, गर्भे यासां तथाविधाः भर्त्सनाश्च, तथा हारि—मनोहरं, शुष्करुदितञ्च—अनश्रुरोदनम्, अकारणकृत्रिमरोदनमिति यावत्, कुरुते स्म—चकारेत्यर्थः । ["लट् स्मे" (३।२।११८ पा०) इति स्मयोगे परोक्षे लट् ] कामिनीनां प्रकृतिरेषा यदभीष्टस्याप्यनिष्टवत्प्रतिषेधपूर्व्वकम् एव सुरतसुखास्वादनम् इति निष्कर्षः । स्वागतावृत्तं,—"स्वागता रनभगैर्गुरुणा च" इति तल्लक्षणात् । शिशुपालवधस्येदं पद्यम् ।

(च) मोट्टायितमाह, तदिति ।—चित्ते—मनसि, तस्य—वल्लभस्य, भावेन—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"सुभग ! त्वत्कथाऽऽरम्भे कर्णकण्डूतिलालसा।
उज्जृम्भवदनाम्भोजा भिनत्त्यङ्गानि साऽङ्गना॥" (छ)

अथ कुट्टमितम्,—

**केशस्तनाधरादीनां ग्रहे हर्षेऽपि सम्भ्रमात्।**
**प्राहुः कुट्टमितं नाम शिरःकरविधूननम्॥१४६॥(ज)**

यथा,—

"पल्लवोपमितिसाम्यसपक्षं दष्टवत्यधरबिम्बमभीष्टे।
पर्य्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण॥"(झ)

---

प्रेम्णा, भावितं—समुल्लासितमिति तद्भावभावितं तस्मिन्, सति, वल्लभस्य—प्रियस्य, कथादिषु कर्णकण्डूयनादिकं मोट्टायितमिति प्राहुः। तथोक्तम्;—"श्रुत्वा कथां प्रियजनस्य तु सन्निधौ वा कर्णोदरस्थितचलत्तनुतर्जनीकम्। यद्वाऽङ्गभङ्गमपि जृम्भित-मङ्गनानां मोट्टायितं तदुदितं स्मरशास्त्रविद्भिः॥" इति।

(छ) उदाहरति, सुभगेति।—हे सुभग ! सा अङ्गना—कामिनी, तव कथायाः आरम्भे सति, कर्णकण्डूतिलालसा—कर्णकण्डूयनतत्परा, तथा उज्जृम्भम्—उद्गता जृम्भा यत्र तथाभूतं वदनमेव अम्भोजं—पद्मं, यस्याः तथाभूता सती, अङ्गानि भिनत्ति—स्वाङ्गमोटनं करोतीत्यर्थः।

(ज) कुट्टमितमाह, केशेति।—केशस्तनाधरादीनां ग्रहे—ग्रहणे, कृते, प्रियेणेति भावः, तथा हर्षे—आनन्देऽपि, प्रियस्पर्शादिनेति भावः, सम्भ्रमात्—भयादिवेत्यर्थः, यत् शिरःकरविधूननं—शीर्षहस्तकम्पनं, तत् कुट्टमितं प्राहुः।

(झ) उदाहरति, पल्लवेति।—अभीष्टे—प्रिये, नायके इति यावत्, पल्लवेन या उपमितिः,—उपमानं, तया यत् साम्यं—सादृश्यं, तेन सपक्षम्—उभयोरपि पल्लवैकोपमानत्वसाधर्म्यात् सुहृत्स्वरूपमित्यर्थः, अधरबिम्बं दष्टवति सति, तरुण्याः,—कामिन्याः, तारम्—उच्चैः क्रोशत्, लोलम्—अतिचञ्चलं, मुखरमित्यर्थः, वलयं यत्र तादृशेन, करेण—हस्तेन, सरुजेव—सपीड़ेनेव, पर्य्यकूजि—परिकूजितम्। [भावे लुङ्] सुहृद्दुःखाद्दुःखायन्ते सुहृद इति भावः। अधरदंशनकारके प्रिये वलयालङ्कृतेन पाणिना कर्त्रा निषेधानन्तरमेव मणितमिव कृतम् इति भावः। शिशुपालवधस्येदं पद्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ विभ्रमः,—

**त्वरया हर्षरागादेर्दयिताऽऽगमनादिषु ।**

**अस्थाने भूषणादीनां विन्यासो विभ्रमो मतः ॥१४७॥(ञ)**

यथा,—

"श्रुत्वाऽऽयान्तं बहिः कान्तमसमाप्तविभूषया ।

भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः ॥" (ट)

अथ ललितम्,—

**सुकुमारतयाऽङ्गानां विन्यासो ललितं भवेत् ॥१४८॥(ठ)**

यथा,—

"गुरुतरकलनूपुरानुनादं सुललितनर्त्तितवामपादपद्मा ।

इतरदनतिलोलमादधाना पदमथ मन्मथमन्थरं जगाम ॥"(ड)

---

(ञ) विभ्रममाह, त्वरयेति ।—दयितस्य—प्रियस्य, आगमनादिषु विषये, हर्षरागादेः,—आनन्दानुरागादेः, हेतोः, त्वरया—हर्षादिजन्यवेगेनेत्यर्थः, अस्थाने—अयोग्यस्थाने, यत्र यद्भूषणमुचितं तदितरस्थाने इत्यर्थः ; भूषणादीनां, विन्यासः,—परिधानमित्यर्थः, विभ्रमः मतः । अत्र प्रथमेनादिपदेन उत्सवादेः, द्वितीयादिपदेन दयिताऽभिसरणादेः, तृतीयेनादिपदेन लाक्षादेर्ग्रहणम् ।

(ट) उदाहरति, श्रुत्वेति ।—बहिः,—बाह्यदेशे, कान्तम्, आयान्तं, श्रुत्वा, असमाप्तविभूषया—अशेषितालङ्करणया, कयाचित् इति शेषः, भाले—ललाटे, अञ्जनं दृग्धार्य्यमिति भावः, दृशोः,—चक्षुषोः, लाक्षा—अलक्तकरागः चरणरञ्जनीति भावः, कपोले—गण्डे, तिलकः ललाटभूषणमिति भावः, कृतश्च ।

(ठ) ललितमाह, सुकुमारतयेति ।—सुकुमारतया—सुकोमलतया, अङ्गानां, विन्यासः,—विशेषेण न्यासः, मृदुसञ्चालनम् इति यावत्, ललितं भवेत् । ["सुकुमाराङ्गविन्यासो मसृणो ललितं भवेत्" इति पाठान्तरम् ] ।

(ड) उदाहरति, गुर्विति ।—अथ—अनन्तरं, 'सा' इति पदमध्याहार्य्यम् । गुरुतरः,—गम्भीरः, कलः,—मधुरास्फुटः, नूपुरस्य, अनुनादः,—अनुध्वनिः यस्मिन् कर्म्मणि तत् यथा भवेत् तथा, सुललितम्—अतिमनोहरं यथा तथा, नर्त्तितं—निचितमित्यर्थः, वामं—सव्यं, पादपद्मं—चरणकमलं, यया तादृशी, तथा इतरत्—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ मदः,—

मदो विकारः सौभाग्ययौवनाद्यवलेपजः॥१४९॥(ढ)

यथा,—

"मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति।
अन्याऽपि किं न खलु भाजनमीदृशीनां
वैरी न चेद्भवति वेपथुरन्तरायः॥" (ण)

अथ विकृतम्,—

वक्तव्यकालेऽप्यवचो व्रीड़या विकृतं मतम्॥१५०॥(त)

---

अन्यत्, दक्षिणमित्यर्थः, पदम्, अनतिलोलं—नातिचपलं, यथा तथा, आदधाना—अर्पयन्ती सती, मन्मथमन्थरं—मदनजड़ं, कामावेशजनितमृदुमन्दमित्यर्थः, यथा तथा जगाम। शिशुपालवधस्येदं पद्यम्।

(ढ) मदमाह, मद इति।—सौभाग्ययौवनादिना—भर्तृप्रियत्व तारुण्यादिना, यः अवलेपः,—गर्वः, तज्जः विकारः मदः। ["मधुपानमदप्रायः तारुण्यातिशयोद्भवः। विकारो यौवने स्त्रीणां तं वदन्ति मदं बुधाः॥" इति पाठान्तरम्]।

(ण) उदाहरति, मा गर्वमिति।—कामपि सौभाग्यगर्ववतीं प्रति कस्याश्चिदुक्तिः। कान्तस्य—प्रियस्य, स्वहस्तेन लिखिता, मञ्जरी—रचनाविशेष इत्यर्थः, मम कपोलतले—गण्डदेशे, चकास्ति—राजते, इति कृत्वा गर्व्वं मा उद्वह—अभिमानं न कुरु; अत्र गर्वो नोचित एव इत्याशयः। जगत्येका त्वमेव न सुभगा, अपराऽपि अस्तीत्याशयेनाह, अन्येति।—चेत्—यदि, वैरी—मञ्जरीविन्यासव्याघातकत्वेन विपक्ष इव, वेपथुः,—कम्पः, कान्तस्पर्शजनितः सात्त्विकभावविशेष इत्यर्थः, अन्तरायः,—विघ्नस्वरूपः, न भवति, तदा अन्या—अपराऽपि नारी, ईदृशीनां—प्रियस्वहस्तलिखितमञ्जर्य्यादीनां श्रीमद्गण्डाङ्कितमञ्जर्य्यां सदृशीनामिति भावः, भाजनं—पात्रं, न खलु—नैव भवति किम्? भवत्येवेत्यर्थः। [ईदृशीनामिति बहुवचनेन सौभाग्यातिशयः सूचितः]। वसन्ततिलकं वृत्तम्।

(त) विकृतमाह, वक्तव्येति।—वक्तव्यकाले—वचनावसरेऽपि, व्रीड़या—लज्जया, अवचः,—अकथनं, विकृतं मतम्। [अत्र "विहृतम्" इति पाठान्तरं दृश्यते, तद्यथा,—"प्राप्तकालं न यद् ब्रूयात् व्रीड़या विहृतं हि तत्" इति]।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"दूरागतेन कुशलं पृष्टा नोवाच सा मया किञ्चित्।
पर्य्यश्रुणी तु नयने तस्याः कथयाम्बभूवतुः सर्वम्॥" (थ)

अथ तपनम्,—

तपनं प्रियविच्छेदे स्मरावेशोत्थचेष्टितम्॥१५१॥(द)

यथा मम,—

"श्वासान् मुञ्चति, भूतले विलुठति, त्वन्मार्गमालोकते,
दीर्घं रोदिति, विक्षिपत्यत इतः क्षामां भुजावल्लरीम्।
किञ्च प्राणसमान! काङ्क्षितवती स्वप्नेऽपि ते सङ्गमं
निद्रां वाञ्छति, न प्रयच्छति पुनर्दग्धो विधिस्तामपि॥"(ध)

---

(थ) उदाहरति, दूरागतेनेति।—दूरागतेन—प्रवासात् प्रत्यागतेन, मया कुशलं पृष्टा सा किञ्चित् न उवाच, तु—किन्तु, तस्याः,—प्रियायाः, पर्य्यश्रुणी—अश्रुपूर्णे, नयने, सर्वं—मम प्रवासे यथा तया यावद् दुःखं सोढं, तत् सकलं दुःखातिशयम्, आगमने हर्षातिशयञ्चेति भावः, कथयाम्बभूवतुः। आर्य्या वृत्तम्।

(द) तपनमाह, तपनमिति।—प्रियविच्छेदे—कान्तविरहसमये, स्मरावेशोत्थचेष्टितं—स्मरस्य—कामस्य, यः आवेशः,—उद्रेकः, तेन उत्थम्—उत्पन्नं, चेष्टितं—व्यापारः, तपनं मतमिति शेषः।

(ध) उदाहरति, श्वासानिति।—प्रवासिनं प्रति नायिकासख्युक्तिरियम्। हे प्राणसमान! [एतेन प्राणान् विना यथा जीवनं, तथा त्वया वियोगे तस्या अपि जीवनमजीवनमिति निवेदनसार्थक्यं द्योत्यते] सा तव कान्ता इति अध्याहार्य्यं, श्वासान्—दीर्घनिश्वासान्, मुञ्चति—त्यजति, भूतले—धरण्यां, विलुठति—आत्मानं निक्षिपतीत्यर्थः; तव मार्गं—पन्थानम्, आलोकते—अवलोकयति, दीर्घं—बहुकालं व्याप्य, रोदिति, अत इतः,—इतस्ततः इत्यर्थः, क्षामां—विरहक्षीणामित्यर्थः, भुजावल्लरीं—बाहुलतिकां, विक्षिपति, किञ्च स्वप्नेऽपि ते तव सङ्गमं काङ्क्षितवती—अभिलषितवती सती, निद्रां वाञ्छति, पुनः—किन्तु, दग्धः,—निर्दयः, विधिः तां—निद्रामपि; न प्रयच्छति—न ददाति; त्वां चिन्तयन्तीं निद्राहतकाऽपि न तां सुखयति इति भावः। शोकचिन्तोद्रेके निद्रां नानुभवितुं शक्यत इति च प्रसिद्धम्। शार्दूलविक्रीडितं वृत्तम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ मौग्ध्यम्,—

**अज्ञानादिव या पृच्छा प्रतीतस्यापि वस्तुनः।**
**वल्लभस्य पुरः प्रोक्तं मौग्ध्यं तत् तत्त्ववेदिभिः॥१५२॥(न)**

यथा,—

"के द्रुमास्ते क्व वा ग्रामे सन्ति केन प्ररोपिताः।
नाथ! मत्कङ्कणन्यस्तं येषां मुक्ताफलं फलम्?॥" (प)

अथ विक्षेपः,—

**भूषाणामर्द्धरचना वृथा विष्वगवेक्षणम्।**
**रहस्याख्यानमीषच्च विक्षेपो दयितान्तिके॥१५३॥(फ)**

यथा,—

"धम्मिल्लमर्द्धमुक्तं कलयति तिलकं तथा ऽसकलम्।
किञ्चिद्वदति रहस्यं चकितं विष्वगवलोकते तन्वी॥" (ब)

---

(न) मौग्ध्यमाह, अज्ञानादिवेति।—प्रतीतस्य—प्रसिद्धस्य, ज्ञातस्य वा, अपि वस्तुनः, अज्ञानादिव, वल्लभस्य—प्रियस्य, पुरः,—अग्रतः, या पृच्छा—जिज्ञासा, तत् तत्त्ववेदिभिः मौग्ध्यं प्रोक्तम्।

(प) उदाहरति, के इति।—हे नाथ! मम कङ्कणयोः न्यस्तम्—अलङ्कार्य्यरूपेण निवेशितं, मुक्ताफलं येषां द्रुमाणामिति शेषः, फलं, ते द्रुमाः के?—किं नामानः इत्यर्थः; क्व—कस्मिन् वा ग्रामे सन्ति? केन वा मालिकेनेति शेषः, प्ररोपिताः,—प्ररोहं प्रापिताः सन्ति? अत्र शुक्तिकाभवानामपि मुक्तानां वृक्षविशेषस्य फलत्वेनाभिमननात् स्फुटं तथाऽभिधायिन्या मुग्धात्वम्।

(फ) विक्षेपमाह, भूषाणामिति।—दयितस्य—प्रियस्य, अन्तिके—समीपे, भूषाणाम्—अलङ्कृतीनाम्, अर्द्धरचना—असमाप्तविन्यासः, वृथा—निरर्थकं, निष्कारणमिति यावत्, विष्वक्—समन्तात्, अवेक्षणम्—अवलोकनम्, ईषत्—मन्दं मन्दम्, अनुच्चैरिति यावत्, रहस्यस्य—गोपनीयस्य, आख्यानं—कथनञ्च, विक्षेपः मत इति शेषः।

(ब) उदाहरति, धम्मिल्लमिति।—तन्वी—कृशाङ्गी, धम्मिल्लं—बद्धकेशसमूहं,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ कुतूहलम्,—

**रम्यवस्तुसमालोके लोलता स्यात् कुतूहलम्॥१५४॥(भ)**

यथा,—

"प्रसाधिकाऽऽलम्बितमग्रपादमाक्षिप्य काचिद् द्रवरागमेव।
उत्सृष्टलीलागतिरा गवाक्षादलक्तकाङ्कां पदवीं ततान॥" (म)

अथ हसितम्,—

**हसितन्तु वृथाहासो यौवनोद्भेदसम्भवः॥१५५॥ (य)**

---

("धम्मिल्लाः संयताः कचाः" इत्यमरः) अर्द्धमुक्तं, तथा तिलकं, शकलं—खण्डितं, ("भित्तं शकलखण्डे वा" इत्यमरः। अत्र केचित् "असकलं" पठन्ति, तेषां मते—अपूर्णमित्यर्थः) कलयति—करोति, किञ्चित् रहस्यं वदति, तथा विष्वक्—सर्वतः, चकितं—ससम्भ्रमं, यथा तथा, अवलोकते—पर्य्यवेक्षते इत्यर्थः। अत्र केशपाशार्द्धबन्धनाद्ययथावत्प्रसाधनादिना नायिकायाः यौवनेन विक्षिप्तत्वं स्फुटं प्रतिभासते। उद्गीतिश्छन्दः, लक्षणं चोक्तं यथा,—"आर्य्याशकलद्वितयं व्यत्ययरचितं भवेद् यस्याः। सोद्गीतिः किल गदिता तद्वद् यत्यंशभेदसंयुक्ता॥" इति।

(भ) कुतूहलमाह, रम्येति।—रम्यं—मनोज्ञं वस्तु, तस्य समालोके—सम्यक् दर्शने, [ अत्र विषये सप्तमी ] लोलता—सतृष्णता, औत्सुक्यमिति यावत्, कुतूहलं स्यात्।

(म) उदाहरति, प्रसाधिकेति।—काचित्—पुरसुन्दरीति भावः, प्रसाधिकया—अलङ्कारिण्या, आलम्बितं—गृहीतं, द्रवरागम्—अशुष्कलाक्षारसमेव इत्यर्थः, अग्रपादं—पादाग्रभागम्, आक्षिप्य—आकृष्य, उत्सृष्टा—त्यक्ता, लीलागतिः,—विलासमन्दगमनं यया तादृशी सती, त्वरितगतिरित्यर्थः, आ गवाक्षात्—गवाक्षपर्य्यन्तं, [ "पञ्चम्यपाङ्परिभिः" ( २।३।१० पा० ) इति पञ्चमी ] पदवीं—मार्गम्, अलक्तकाङ्काम्—अलक्तको लाक्षारसः, तस्याङ्कश्चिह्नं यस्यां तां तथोक्तां, ततान—चकारेत्यर्थः। अत्र हरदर्शनाय अजदर्शनाय वा कस्याश्चिद्रागातिशयः कुतूहलम्। कुमारसम्भवस्य रघुवंशस्य च सप्तमे सर्गे पद्यमिदमुपलभ्यते। उपजातिः वृत्तम्।

(य) हसितमाह, हसितमिति।—यौवनोद्भेदसम्भवः,—यौवनप्रकाशजः, वृथा—निरर्थकः, हासः, हसितं मतमिति शेषः [ अत्र भावे क्तः ]।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"अकस्मादेव तन्वङ्गी जहास यदियं पुनः।
नूनं प्रसूनबाणोऽस्यां स्वाराज्यमधितिष्ठति ॥" (र)

अथ चकितम्,—

कुतोऽपि दयितस्याग्रे चकितं भयसम्भ्रमः॥१५६॥(ल)

यथा,—

"तस्यन्ती चलशफरीविघट्टितोरू-
र्वामोरूरतिशयमाप विभ्रमस्य।
क्षुभ्यन्ति प्रसभमहो! विनाऽपि हेतो-
र्लीलाभिः किमु सति कारणे तरुण्यः॥" (व)

---

(र) उदाहरति, अकस्मादिति।—इयं, तन्वङ्गी—कृशाङ्गी, अकस्मात्—विना हेतुमेव इत्यर्थः, यत् पुनः जहास—हसितवती, (अत्र तदिति अध्याहार्य्यं,) तत् तेन, तस्मात् वा, नूनं—मन्ये इत्यर्थः, प्रसूनबाणः,—पुष्पशरः, कामः इत्यर्थः, अस्यां—कृशाङ्ग्यां, स्वाराज्य—स्वर्गराज्यवत्सुखम्, अधितिष्ठति—अनुभवति, कुरुते वा इत्यर्थः। [अत्र "अधिगच्छति" इति पाठान्तरम्] अत्र कान्तायाः सत्त्वोद्रेकेण हसितमवधार्य्य कविना कामस्वाराज्याधिष्ठितत्वेनोत्प्रेक्षायाश्रङ्कितमिति बोध्यम्।

(ल) चकितमाह, कुत इति।—दयितस्य—प्रियस्य अग्रे, कुतोऽपि—अनिर्दिष्टा-दपि कारणात्, अप्रत्यक्षितकारणादिति यावत्, भयसम्भ्रमः,—भयेन सम्भ्रमः,—व्यग्रता, अतिचाञ्चल्यमित्यर्थः, चकितं मतमिति शेषः।

(व) उदाहरति, तस्यन्तीति।—चलाभिः,—चपलाभिः, शफरीभिः,—प्रोष्ठीभिः, ("प्रोष्ठी तु शफरी द्वयोः" इत्यमरः) विघट्टितौ—परामृष्टौ, ताड़ितौ इति यावत्, ऊरू—जानूपरितनौ भागौ यस्याः सा; अत एव तस्यन्ती—त्रासं गच्छन्ती, वामोरूः,—वामौ अतिसुन्दरौ ऊरू यस्याः तथोक्ता, ("वामौ वल्गुप्रतीपौ द्वौ" इत्यमरः) ["संहितशफलक्षणवामादेश्च" (४।१।७० पा०) इत्यूङ्] विभ्रमस्य—विलासस्य, शोभाविशेषस्य इति यावत्, अतिशयम् आप—प्राप्तवती। अहो!—आश्चर्य्यं, तरुण्यः,—युवत्यः, हेतोः,—कारणात्, विनाऽपि, लीलाभिः,—शृङ्गार-चेष्टाजनितभावविशेषैः, प्रसभं—सहसा, क्षुभ्यन्ति—क्षोभं गच्छन्ति, भयव्याकुला



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ केलिः,—

**विहारे सह कान्तेन क्रीडितं केलिरुच्यते॥१५७॥(श)**

यथा,—

"व्यपोहितुं लोचनतो मुखानिलैरपारयन्तं किल पुष्पजं रजः।
पयोधरेणोरसि काचिदुन्मनाः प्रियं जघानोन्नतपीवरस्तनी॥"(ष)

अथ मुग्धाकन्ययोरनुरागेङ्गितानि,—

**दृष्टा दर्शयति व्रीडां सम्मुखं नैव पश्यति।**
**प्रच्छन्नं वा भ्रमन्तं वा तिर्य्यक् तं पश्यति प्रियम्॥**
**बहुधाऽऽपृच्छ्यमानाऽपि मन्दमन्दमधोमुखी।**
**सगद्गदस्वरं किञ्चित् प्रियं प्रायेण भाषते॥**

---

भवन्ति इति यावत्; कारणे सति—विद्यमाने, किमु वक्तव्यमिति शेषः; (किमु सुतरामिति एके)। प्रहर्षिणी वृत्तम्। भारवेः पद्यमिदम्।

(श) केलिमाह, विहारे इति।—विहारे—विहारकाले, कान्तेन सह क्रीड़ितं परिहासविशेषः, केलिः उच्यते; अथवा,—कान्तेन सह क्रियमाणे विहारे सति, यन्नायिकायाः क्रीड़ितं सा केलिः इत्यर्थः।

(ष) उदाहरति, व्यपोहितुमिति।—उन्नतौ—उन्नतां प्राप्तौ, पीवरौ—पुष्टौ च स्तनौ यस्याः सा उन्नतपीवरस्तनी, ["स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" (४।१।५४ पा०) इति ङीष्] काचित्—कान्ता, लोचनतः,—स्वचक्षुषः, पुष्पजं रजः,—परागम्, उन्नतशाखातः पुष्पपातनसमये उच्चक्षुषि संलग्नमिति भावः; मुखस्यानिलाः,—वायवः, फूत्कारास्तैस्तद्वारेत्यर्थः, व्यपोहितुम्—अपसारयितुम्, अपारयन्तम्—अशक्नुवन्तं, चक्षुषि मुखमारुतप्रदानार्थं प्रियाऽऽस्यपङ्कजसमीपे स्वकीयवदनयोगेन चुम्बनलोभासंवरणात्, किल—निश्चयार्थकमव्ययम्; प्रियं—कान्तम्, उन्मनाः,—भावान्तरेण उत्कण्ठिता सती, पयोधरेण—स्तनेन, उरसि—वक्षसि, जघान—आहतवती। आदेशपथवर्त्तिनी हि नायकस्य अनादिष्टचुम्बनकरणात् कृतागस्तया तत्प्रहारः समुचित एव; इति भावः। "दासे कृतागसि भवत्युचितः प्रभूणां........प्रहारः" इत्यादिना तत्प्रकटनात् उन्नतपीवरस्तनरूपदृढप्रहरणेन वक्षोरूपमर्मस्थाने मारया-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अन्यैः प्रवर्त्तितां शश्वत् सावधाना च तत्कथाम्।
शृणोत्यन्यत्रदत्ताक्षी प्रिये बालाऽनुरागिणी॥१५८॥(स)

अथ सकलानामपि नायिकानामनुरागेङ्गितानि,—

चिराय सविधे स्थानं प्रियस्य बहु मन्यते।
विलोचनपथञ्चास्य न गच्छत्यनलङ्कृता॥
काऽपि कुन्तलसंव्यानसंयमव्यपदेशतः।
बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत् स्फुटम्॥
आच्छादयति वागाद्यैः प्रियस्य परिचारकान्।
विश्वसित्यस्य मित्रेषु बहु मानं करोति च॥
सखीमध्ये गुणान् ब्रूते स्वधनं प्रददाति च।
सुप्ते स्वपिति दुःखेऽस्य दुःखं धत्ते सुखे सुखम्॥

माप्त इत्यर्थः। [ हननस्थानतया अधिकरणत्वेन उरसीत्यत्र सप्तमी ]। भारवेरष्टमसर्गे पद्यमिदं लभ्यते।

(स) मुग्धाकन्ययोरनुरागसूचकचेष्टितानि वर्णयन्नाह, दृष्टेति।—प्रिये अनुरागिणी, बाला—मुग्धा, कन्या वा, दृष्टा—प्रियेण अवलोकिता सती, व्रीडां—लज्जां दर्शयति, सम्मुखं स्थितेति शेषः, न पश्यति—नावलोकते एव, प्रियमिति शेषः, प्रच्छन्नं—निभृतस्थितं, वा, भ्रमन्तं—विचरन्तं वा, तं प्रियं, तिर्य्यक्—वक्रदृष्ट्या इत्यर्थः, पश्यति। [ "वा तिर्य्यक् तम्" इत्यत्र "वाऽतिक्रान्तम्" इति पाठे,—अतिक्रान्तं—दूरं गच्छन्तमित्यर्थोऽवसेयः ] बहुधा—पुनः पुनः, आपृच्छ्यमानाऽपि—जिज्ञास्यमानाऽपि, प्रियेणेति शेषः, अधोमुखी सती, प्रायेण—बाहुल्येन, प्रियं—कान्तं, सगद्गदस्वरम्—अव्यक्तास्फुटशब्दं, तथा मन्दमन्दं—शनैः शनैः यथा स्यात्तथा, किञ्चित् वाक्यमिति शेषः, भाषते—वदति। ( अत्र कामसूत्रकाराः,—"पृष्टा च किञ्चित् सस्मितमव्यक्ताक्षरमनवसितार्थञ्च मन्दं मन्दमधोमुखी कथयति" इति ) तथा सावधाना —अवहिता सती, अन्यैः प्रवर्त्तितां—प्रस्तुतां, तस्य—प्रियस्य, कथां—वार्त्ताम्, अन्यत्रदत्ताक्षी—वस्त्वान्तरार्पितनयना सती, शश्वत्—सततं, शृणोति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्थिता दृष्टिपथे शश्वत् प्रिये पश्यति दूरतः।
आभाषते परिजनं सम्मुखं स्मरविक्रियम् ॥
यत्किञ्चिदपि संवीक्ष्य कुरुते हसितं मुधा।
कर्णकण्डूयनं तद्वत् कवरीमोक्षसंयमौ ॥
जृम्भते स्फोटयत्यङ्गं बालमाश्लिष्य चुम्बति।
भाले तथा वयस्याया रचयेत् तिलकक्रियाम् ॥
अङ्गुष्ठाग्रेण लिखति सकटाक्षं निरीक्षते।
दशति स्वाधरं चाऽपि ब्रूते प्रियमधोमुखी ॥
न मुञ्चति च तं देशं नायको यत्र दृश्यते।
आगच्छति गृहं तस्य कार्य्यव्याजेन केनचित् ॥
दत्तं किमपि कान्तेन धृत्वाऽङ्गे मुहुरीक्षते।
नित्यं हृष्यति तद्योगे वियोगे मलिना कृशा ॥
मन्यते बहु तच्छीलं तत्प्रियं मन्यते प्रियम्।
प्रार्थयत्यल्पमूल्यानि सुप्ता न परिवर्त्तते ॥
विकारान् सात्त्विकानस्य सम्मुखीनाऽधिगच्छति।
भाषते सूनृतं स्निग्धमनुरक्ता नितम्बिनी।
एतेष्वधिकलज्जानि चेष्टितानि नवस्त्रियाः ॥
मध्यव्रीड़ानि मध्यायाः स्रंसमानत्रपाणि तु।
अन्यस्त्रियाः प्रगल्भायास्तथा स्युर्वारयोषितः ॥१५९॥(छ)

(छ) अथ सर्वासां नायिकानामनुरागसूचकचेष्टितानि वर्णयन्नाह, चिरायेति। —प्रियस्य, सविधे—समीपे, चिराय—दीर्घकालं, ("चिराय चिररात्राय चिरस्याद्या"

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्थिरार्थकाः" इत्यमरः) स्थानम्—अवस्थानं, बहु मन्यते, अनलङ्कृता—अभूषिता सती, अस्य—प्रियस्य, विलोचनपथं—दृष्टिपथं, (चकारात् क्रीड़ाकालादौ अन्यासां कुटुम्बिनीनां समागमे वा इत्याद्यर्थो बोध्यः) न गच्छति; काऽपि—कामिनी, (एवं परत्र क्रियापदेन सह काऽपीति युज्यते इति बोध्यम्) कुन्तलानां—केशानां, संव्यानस्य—उत्तरीयस्य परिधानवस्त्रस्य वा, ("चिकुरः कुन्तलो बालः" इति "संव्यानमुत्तरीयञ्च" इति चामरः) संयमः,—यथोचिततया न्यासः, स एव तस्य वा व्यपदेशः,—छलं, तस्मात्, तमाश्रित्येत्यर्थः, [ल्यपो लोपे पञ्चमी] बाहुमूलं—कक्षभागं, तथा स्तनौ, एवं नाभिपङ्कजं—पङ्कजवन्मनोरमनाभिदेश-मित्यर्थः, स्फुटं—सुव्यक्तं यथा तथा, दर्शयेत्। वागाद्यैः,—मिष्टवचनप्रयोगादिभिः, (आद्यपदादन्नवस्त्रादिदानानामपि ग्रहणम्); प्रियस्य, परिचारकान्—भृत्यान्, आच्छादयति—वशीकरोति इत्यर्थः, उपर्य्युपरि प्रियस्य वृत्तान्तजिज्ञासादिरूपवाक्य-वर्षणैः आवृणोतीव इति तात्पर्य्यम्; अस्य—प्रियस्य, मित्रेषु—सुहृत्सु, विश्वसिति, बहुमानं—समादरं, करोति च। (उक्तञ्च कामसूत्रकारेण,—"परिजनानवष्टभ्य तांस्तांश्च लीला दर्शयति, तन्मित्रेषु विश्वसिति, वचनं चैषां बहु मन्यते, करोति च, तत्परिचारकैः सह प्रीतिं, सङ्कथां, द्यूतमिति च करोति......" इति) सखीमध्ये गुणान्, प्रियस्येति शेषः, ब्रूते; स्वधनं—निजं धनं, प्रददाति च, प्रियायेति शेषः। सुप्ते—निद्रिते सति, प्रिये इति शेषः, स्वपिति—निद्राति; अस्य—स्वामिनः, दुःखे दुःखं, सुखे सुखं, धत्ते—अनुभवति। प्रिये, दूरतः,—दूरात्, पश्यति सति, शश्वत्—निरन्तरं, तस्य दृष्टिपथे, स्थिता सती, सम्मुखं—सम्मुखागतं, परिजनं, स्मरविक्रियं—सकामावेशं यथा तथा, आभाषते—कथयति; (उक्तञ्च कामसूत्रकारैः,—"दूरे स्थिता पश्यतु मामिति मन्यमाना परिजनं समदनविकारमाभाषते" इति) यत्किञ्चित्—अतिसामान्यमित्यर्थः, अपि—अहासकारणमपीत्यर्थः, संवीक्ष्य—दृष्ट्वा, मुधा—निरर्थकं, हसितं कुरुते—हसतीत्यर्थः। (उक्तञ्च कामसूत्रकृता,—"यत्किञ्चिद्दृष्ट्वा विहसितं करोति" इति) कर्णकण्डूयनं, तद्वत्—तथा, कबरीमोचसंयमौ—केशमोच-बन्धने करोति इति शेषः। जृम्भते, अङ्गं स्फोटयति—अङ्गमर्द्दं करोति, बालं—बालकम्, आश्लिष्य—आलिङ्ग्य, चुम्बति, (उक्तञ्च कामसूत्रे,—"बालस्याङ्कगतस्यालिङ्गनं चुम्बनञ्च करोति" इति) तथा वयस्यायाः,—सख्याः, भाले—ललाटे, तिलकक्रियां रचयेत्, ("परिचारिकायाय तिलकं रचयति" इति तु कामसूत्रकाराः); अङ्गुष्ठाग्रेण—पादस्याङ्गुष्ठाग्रेणेति भावः, लिखति—भूमौ मृत्तिकामुत्पाटति; सकटाक्षं, निरीक्षते—अवलोकयति, स्वाधरं—निजमधरं, दशति, अधोमुखी सती प्रियं ब्रूते च।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

दिङ्मात्रं (क) यथा मम,—

"अन्तिकगतमपि मामियमन लोकयतीव हन्त ! दृष्ट्वाऽपि।
सरसनखक्षतमण्डितमाविष्कुरुते भुजामूलम् ॥ (ख)

यत्र नायकः,—प्रियः, दृश्यते, तं देशं—स्थानं, न मुञ्चति—न त्यजति च, केनचित्, कार्य्यव्याजेन—कर्म्मच्छलेन, तस्य—कान्तस्य, गृहम् आगच्छति; कान्तेन दत्तं, किमपि—यत्किञ्चिदपि वस्तु, अङ्गे धृत्वा—परिधाय इत्यर्थः, मुहुरीक्षते; तस्य—प्रियस्य, योगे—सहवासे, नित्यं—सततं, हृष्यति—आनन्दमनुभवति, वियोगे, प्रियस्येति शेषः, मलिना—विवर्णा, कृशा च भवतीति शेषः। तच्छीलं—तस्य कान्तस्य शीलं—चरित्रं, बहु मन्यते, तत्प्रियं—तस्य प्रियं, प्रियाभीष्टं वस्तुजातमित्यर्थः, प्रियं मन्यते। अल्पमूल्यानि, वस्तूनि इति तात्पर्य्यं, प्रार्थयति—याचते; सुप्ता सती न परिवर्त्तते—प्रियस्य विमुखीभूय पार्श्वपरिवर्त्तनं न करोतीत्यर्थः। अस्य सम्मुखीना—सम्मुखवर्त्तिनी सती, सात्त्विकान् विकारान्—स्तम्भस्वेदादीन्, अधिगच्छति—प्राप्नोति, अनुभवतीत्यर्थः। ["यथामुखसम्मुखस्य दर्शनः खः" (५। २। ६ पा०) इत्यनेन "सर्वं मुखम्" इत्यर्थे सर्वमुखशब्दयोः सम्मुखेति निपातितं दर्शनेऽर्थे खे, स्त्रियां पुनः टापि कृते रूपमिदं सिद्धम्]। अनुरक्ता—अनुरागवती, नितम्बिनी, स्निग्धं—सस्नेहं यथा तथा, सूनृत—सत्यमधुरं, भाषते। एतेषु—चेष्टितेषु मध्ये, नवास्त्रयाः,—नवोढ़ायाः, चेष्टितानि—कार्य्याणि, अधिका लज्जा येषु तादृशानि भवन्तीति शेषः; मध्यायाः,—नायिकायाश्चेष्टितानीति शेषः, मध्या व्रीड़ा—लज्जा यासु तादृशानि अल्पलज्जानीत्यर्थः, अन्यस्त्रियाः,—परकीयाया इत्यर्थः, प्रगल्भायाः,—प्रौढ़ायाः, तथा वारयोषितः,—साधारण्या इत्यर्थः, चेष्टितानि, स्रंसमाना—गलिता इत्यर्थः, त्रपा—लज्जा, येषु तादृशानि भवन्तीति शेषः।

(क) दिङ्मात्रं—किञ्चित्।

(ख) अन्तिकेति।—हन्त—हर्षे। इयं—कामिनी, अन्तिकगतं—समीपवर्त्तिनं, मां दृष्ट्वा अपि, अन—नैव, [अत्र "अनोपमा ते बुद्धिः" इत्यादिप्रयोगदर्शनात् अनेत्यव्ययं निषेधार्थमिति बोध्यम्]। लोकयति—पश्यति इव। ["अवलोकयतीव हन्त! दृष्ट्वाऽपि" इति पाठान्तरन्तु न साधु, अपस्मारस्यानुल्लासात्] तथा सरसेन—आर्द्रेण, नखक्षतेन—नखाघातेनेत्यर्थः, मण्डितम्—अलङ्कृतम्, आभूषितमिति यावत्, भुजामूलं—बाहुमूलम्, आविष्कुरुते—प्रकटयति, प्रकाशयति, दर्शयतीति यावत्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तथा,—

लेख्यप्रस्थापनैः स्निग्धैर्वीक्षितैर्मृदुभाषितैः ।
दूतीसम्प्रेषणैर्नार्य्या भावाभिव्यक्तिरिष्यते ॥१६०॥ (ग)

दूत्यश्च,—

दूत्यः सखी नटी दासी धात्रेयी प्रतिवेशिनी ।
बाला प्रव्रजिता कारुः शिल्पिन्याद्याः स्वयं तथा ॥१६१॥(घ)

कारुः,—रजकीप्रभृतिः। शिल्पिनी—चित्रकारादिस्त्री। आदिशब्दात् ताम्बूलिक-गान्धिकस्त्रीप्रभृतयः। तत्र सखी यथा,—"श्वासान् मुञ्चति" इत्यादि।

---

(ग) लेख्येति।—लेख्यस्य—प्रणयव्यञ्जकपत्रस्य, प्रस्थापनैः,—प्रेषणैः, (लेख्यप्रस्थापने उदाहरणं यथा,—"विज्ञप्तिरेषा मम जीवबन्धो ! तवैव नेयाः दिवसाः कियन्तः। सम्प्रत्ययोग्यास्थितिरेष देशः करा यदिन्दोरुपतापयन्ति ॥" इति, एवमन्यान्युदाहरणानि शकुन्तलादौ ज्ञेयानि) स्निग्धैः,—सस्नेहैः, वीक्षितैः,—अवलोकितैः, तथा मृदुभाषितैः,—कोमलमधुरवचनैः, अथवा लज्जया भयात् वा मृदुमन्दस्वरेण स्वाभिप्रायप्रकटनैः, तथा दूतीसम्प्रेषणैः, नार्य्याः,—कामिन्याः, भावस्य—प्रेम्णः, अभिलाषस्य वा, अभिव्यक्तिः,—प्रकटनम्, इष्यते।

(घ) दूतीराह, दूत्य इति।—सखी—सहचरी, नटी—नर्त्तकी, दासी—किङ्करी, धात्रेयी—धात्रीकन्या, प्रतिवेशिनी—प्रतिवेशवासिनी, समीपस्थगृहवासिनीति यावत्, बाला—अनुद्भूतमदनविकारसम्पर्का कन्या, प्रव्रजिता—सन्न्यासिनी ; उपलक्षणमिदं, तेन श्रमणा-चपणा रक्तपट्टिकाऽऽदीनां तद्विशेषाणामपि ग्रहणम्। कारुः,—रजक तक्षक-तन्तुवाय नापित चर्म्मकाराणां स्त्री ; तथा च,—"तक्षा च तन्तुवायश्च नापितो रजकस्तथा। पञ्चमश्चर्म्मकारश्च कारवः शिल्पिनो मताः ॥" इति, शिल्पिनी आद्या यासां ताः शिल्पिन्याद्याः, शिल्पिनी च,—चित्रिणी रङ्गिणीत्येवमनेकविधा। (आद्यपदेन ताम्बूलिकादिस्त्रीणां ग्रहणम्) तथा स्वयं—नायिका, दूती स्यात्। [अत्र वात्स्यायनः यथा,—"विधवेक्षणिका दासी भिक्षुकी शिल्पकारिका। प्रविशत्याशु विश्वासं दूतीकार्य्यञ्च विन्दति ॥" गृहं प्रविशतीति योजना]।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्वयंदूती यथा मम,—

"पन्थिअ ! पिआसिओ विअ लच्छिअसि जासि ता किं अस्सत्तो।
ण मणा वि वारओ इध अत्थि घरे घणरसं पिअंताणं ॥" (ङ)

एताश्च नायिकाविषये नायकानामपि दूत्यो भवन्ति ।

दूतीगुणानाह,—

**कलाकौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृतिः ।**
**माधुर्य्यं नर्मविज्ञानं वाग्मिता चेति तद्गुणाः ॥**
**एता अपि यथौचित्यादुत्तमाधममध्यमाः॥१६२॥ (च)**

एताः,—दूत्यः ।

---

(ङ) स्वयंदूतीमुदाहरति, पन्थिअ इति ।—"पान्थ ! पिपासित इव लक्ष्यसे यासि तत् किमन्यत्र ? न मनागपि वारक इहास्ति घनरसं पिबताम् ॥" इति संस्कृतम्। हे पान्थ !—पथिक ! पिपासितः,—तृष्णार्त्तः, पक्षे—सम्भोगाभिलाषी इव, लक्ष्यसे—दृश्यसे, तत्—तदा, किं—कथम्, अन्यत्र यासि—गच्छसि ? इह—अस्मिन् स्थाने, घनस्य—मेघस्य, रसस्तं जलमित्यर्थः, ("मेघपुष्पं घनरसः" इत्यमरः) अन्यत्र—निविड़रसं सम्भोगसुखमित्यर्थः, ( अत्रार्थे पिबताम् इत्यस्य अनुभवतामित्यर्थः ) ; यद्वा, —घनो दृढ़ीभूतोऽसौ रस आस्वादस्तं, घनो रसो यत्र वेति तमधरमित्यर्थः ; पिबताम् —आस्वदतां, जनानां, मनाक्—अल्पम्, एकवारमपि इत्यर्थः, वारकः,—निषेद्धा, न अस्ति। गीतिः वृत्तम् ; तल्लक्षणं यथा,—"गाथाद्वितीयतुर्य्यावष्टादशमात्रकौ यदा भवतः । मात्राषष्टिशरीरा प्रोक्ता सा गीतिरिह फणिपतिना ॥" इति ।

(च) कलेति ।—कलाः,—नृत्यगीतादिकाः, तत्र कौशलं—दक्षता, उत्साहः, —श्रेयान् यत्नः, भक्तिः,—प्रभौ अनुरागः, चित्तज्ञता—अभिप्रायज्ञानं, स्मृतिः,—कर्त्तव्यार्थस्मरण, माधुर्य्यं—मनोहरत्वं, नर्मविज्ञानं—परिहासाभिज्ञता, तथा वाग्मिता —वाक्पाटवमित्यर्थः, एते तस्याः,—दूत्याः, गुणाः, किन्तु एताः,—दूत्यः अपि, यथौचित्यात्—यथायोग्यम्, उत्तमाधममध्यमा भवन्तीति शेषः ; एतैः समस्तैर्गुणैर्युक्ता दूती उत्तमा, पञ्चभिः चतुर्भिः वा गुणैः युक्ता मध्यमा, एकेन द्वाभ्यां वा युक्ता अधमा । एवं दूतादयः अपिशब्दसामर्थ्यात् ज्ञातव्याः । [ अत्र दूतीकर्म्माख्याने वात्स्यायनो यथा,— "विवेषं ग्राहयेत् पत्यौ रमणीयानि वर्णयेत् । चित्रान् सुरतसम्भोगानन्यासामपि

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ प्रतिनायकः,—

**धीरोद्धतः पापकारी व्यसनी प्रतिनायकः॥१६३॥(छ)**

यथा,—रामस्य रावणः ।

अथोद्दीपनविभावाः,—

**उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये ॥१६४॥ (ज)**

ते च,—

**आलम्बनस्य चेष्टाद्या देशकालादयस्तथा॥१६५॥(झ)**

चेष्टाद्या इति आद्यशब्दाद्रूपभूषणादयः । कालादीत्यादिशब्दात् चन्द्र-चन्दन-कोकिलालाप-भ्रमरझङ्कारादयः ।

---

दर्शयेत् ॥ नायकस्यानुरागञ्च पुनश्च रतिकौशलम् । प्रार्थनाञ्चाधिकस्त्रीभिरवष्टम्भञ्च वर्णयेत् ॥" इति ।

(छ) प्रतिनायकमाह, धीरोद्धत इति ।—धीरोद्धतः,—"मायापरः" इत्यादिना नायकलक्षणे प्रागुक्तः, पापकारी—शपाशयः । व्यसनं द्विविधं,—कामजं कोपजञ्च, तद्योगात् व्यसनी—मृगयाद्यष्टादशविधदोषाविष्टः। [अत एवोक्तं मनुना,—"कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः । वियुज्यतेऽर्थधर्म्माभ्यां क्रोधजेष्वात्मनैव तु ॥ मृगयाऽक्षो दिवा स्वप्नः परीवादः स्त्रियो मदः । तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः ॥ पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥" अक्षः,—द्यूतक्रीड़ा, तौर्य्यत्रिकं—नृत्यगीतवाद्यानि । पैशुन्यम्—अविज्ञातपरदोषाविष्करणम् । साहसं—साधोर्बन्धनादिना निग्रहः । द्रोहः,—जिघांसा । ईर्ष्या—परगुणाऽसहिष्णुता । असूया—परगुणेषु दोषाविष्करणम । अर्थदूषणम्—अर्थहानिकरं व्यसनम् ; अन्यत् दशविधं विद्याव्यसनम् इति मनूक्तिसङ्क्षिप्ताशयः ]। प्रतिनायकः,—प्रतियोगिनायकः ।

(ज) उद्दीपनविभावमाह, उद्दीपनेति ।—ये रसम् उद्दीपयन्ति—उद्रिक्तं कुर्वन्ति, परिपोषातिशयं नयन्ति इति यावत्, ते उद्दीपनविभावाः ।

(झ) आलम्बनस्य—नायिकादेः । चेष्टा—नेत्रादिविक्षेपः, आद्यः येषां ते, तथा देशकालादयः, उद्दीपनविभावाः इति शेषः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र चन्द्रोदयो यथा मम,—

"करमुदयमहीधरस्तनाग्रे गलिततमःपटलांशुके निवेश्य ।
विकसितकुमुदेक्षणं विचुम्बत्ययममरेशदिशो मुखं सुधांशुः ॥"(ञ)

यो यस्य रसस्य उद्दीपनविभावः, स तत्स्वरूपवर्णने वक्ष्यते ।

अथानुभावाः,—

**उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन् ।**
**लोके यः कार्य्यरूपः सोऽनुभावः काव्यनाट्ययोः ॥१६६॥(ट)**

यः खलु लोके सीतादिचन्द्रादिभिः स्वैः स्वैः आलम्बनोद्दीपनकारणैः रामादेः अन्तः उद्बुद्धं रत्यादिकं बहिः प्रकाशयन् कार्य्यमित्युच्यते, स काव्यनाट्ययोः पुनः अनुभावः ।

कः पुनः असौ ? इत्याह,—

**उक्ताः स्त्रीणामलङ्कारा अङ्गजाश्च स्वभावजाः ।**
**तद्रूपाः सात्त्विका भावास्तथा चेष्टाः परा अपि ॥१६७॥(ठ)**

---

(ञ) उदाहरति, करमिति ।—अयं सुधांशुः,—चन्द्रः ( नायकश्च ) गलितं—च्युतं, तमसां—तिमिराणां, पटलमेव ( तदेव ) अंशुकं—वसनं यस्मात् तादृशे, उदयमहीधरः,—उदयाद्रिः एव ( तदेव ) स्तनः,—पयोधरः, तस्य अग्रे—उपरीत्यर्थः, करं—किरणं (हस्तञ्च), निवेश्य—अर्पयित्वा, ( करेण पयोधराग्रं समालम्ब्येति हृदयम् ) अमरेशदिशः,—पूर्वदिशः (अङ्गनायाश्च) विकसितं—प्रफुल्लं, कुमुदं—कैरवमेव (तदेव) ईक्षणं—नयनं, यत्र तादृशं मुखम्—अग्रं, प्रारम्भसमारम्भलक्ष्म इत्यर्थः, ( वदनञ्च ) विचुम्बति । अत्र चन्द्रकृतदिग्वधूमुखचुम्बनदर्शनमुद्दीपनम् । पुष्पिताग्रा वृत्तम्,—"अयुजि न युगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा" इति तल्लक्षणात् ।

(ट) अनुभावमाह, उद्बुद्धमिति ।—स्वैः स्वैः,—निजैः निजैः, कारणैः, उद्बुद्धम्—उत्थितप्रायं, भावं, बहिः प्रकाशयन्—अनुमापयन्, लोके—लोकव्यवहारे, यः कार्य्यरूपः, स काव्यनाट्ययोः अनुभावः ।

(ठ) अनुभावस्वरूपमाह, उक्ता इति ।—स्त्रीणाम् अङ्गजाः,—भावादयः त्रयः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तद्रूपाः,—अनुभावस्वरूपाः। तत्र च यो यस्य रसस्य अनुभावः, स तत्स्वरूपवर्णने वक्ष्यते।

तत्र सात्त्विकाः,—

विकाराः सत्त्वसम्भूताः सात्त्विकाः परिकीर्त्तिताः॥१६८(ड)

सत्त्वं नाम स्वात्मविश्रामप्रकाशकारी कश्चन आन्तरो धर्मः। (ढ)

सत्त्वमात्रोद्भवत्वात् ते भिन्ना अप्यनुभावतः॥१६९॥(ण)

"गोवलीवर्दन्यायेन" इति शेषः। (त) के ते? इत्याह,—

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः॥१७०॥

---

स्वभावजाः,—लीलादयोऽष्टादश, अलङ्काराः उक्ताः। शोभाकान्त्यादीनां रत्यादिप्रकाशकत्वाभावात् नानुभावरूपता। चेष्टाः,—नायकस्य नेत्रविक्षेपादयः। पराः,—सात्त्विकविकारभिन्नाः इति सङ्क्षेपः।

(ड) सात्त्विकभावमाह, विकारा इति।—सत्त्वं—रजस्तमोगुणवर्जितमनोधर्मविशेषः, तस्मात् सम्भूताः,—समुत्पन्नाः, विकाराः,—चित्तस्य अन्यथात्वरूपा धर्मा इत्यर्थः, सात्त्विकाः, परिकीर्त्तिताः,—उक्ताः।

(ढ) सत्त्वं विवृणोति, सत्त्वं नामेति।—स्वस्य आत्मनि—स्वरूपे एव विश्रामो यस्य सः स्वात्मविश्रामः,—रसादिः इत्यर्थः, तस्य प्रकाशकारी—अभिव्यञ्जक इत्यर्थः, कश्चन, आन्तरः,—मानसः, धर्मः,—गुणः। प्रागुक्तमपि सत्त्वलक्षणं शिष्याणां विविधव्युत्पत्त्यै प्रकारान्तरेण पुनरुक्तम्।

(ण) सत्त्वेति।—सत्त्वमात्रात्—केवलात् सत्त्वात् उद्भवः येषां ते तत्त्वात्, अनुभावतः,—अनुभावात्, भिन्नाः,—पृथगपीत्यर्थः।

(त) गोवलीवर्दन्यायेन—धेनुवलीवर्दयोर्गोत्वाविशेषेऽपि यथा कश्चिद्धर्मांशमादाय भेदः, तथा सत्त्वादीनां निर्वेदादीनाञ्च भावरूपतयाऽविशेषेऽपि सात्त्विकासात्त्विकत्वाभ्यां भेद इति भावः। एवञ्च,—"विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः" इत्यादौ सात्त्विकभावस्य पृथगुपन्यासेन अनुभावातिरिक्तत्वशङ्कानिरासार्थं पृथगभिहितमेतदिति वेद्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र,—

स्तम्भश्चेष्टाप्रतीघातो भयहर्षाऽऽमयादिभिः ।
वपुर्जलोद्गमः स्वेदो रतिघर्मश्रमादिभिः ॥
हर्षाद्भुतभयादिभ्यो रोमाञ्चो रोमविक्रिया ।
मदसम्मदपीड़ाद्यैर्वैस्वर्य्यं गद्गदं विदुः ॥
रागद्वेषश्रमादिभ्यः कम्पो गात्रस्य वेपथुः ।
विषादमदरोषाद्यैर्वर्णान्यत्वं विवर्णता ॥
अश्रु नेत्रोद्भवं वारि क्रोधदुःखप्रहर्षजम् ।
प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः॥ १७१॥(घ)

यथा मम,—

"तनुस्पर्शादस्या दरमुकुलिते हन्त नयने,
उदञ्चद्रोमाञ्चं व्रजति जड़तामङ्गमखिलम् ।

---

(घ) स्तम्भादीन् व्याकरोति, स्तम्भ इति ।—भयं—व्याघ्रादिदर्शनजन्यः कम्पहेतुस्त्रासः, हर्षः,—पुत्रादिजन्मजनितोऽन्तःकरणोल्लासः, आमयः,—ज्वरादिव्याधिः, इत्यादिभिः कारणैः, चेष्टायाः, प्रतीघातः,—निश्चलीभावः, स्तम्भः इत्यर्थः। रतिः,—सुरतक्रिया, घर्मः,—निदाघः, श्रमः,—अध्ययनादिव्यापारजन्यः खेदः, आयास इत्यर्थः, इत्यादिभिः कारणैः, वपुषः,—शरीरात्, जलोद्गमः,—जलनिर्गमः, स्वेदः। हर्षः,—आनन्दः, अद्भुतम्—अदृष्टदर्शनाश्रुतश्रवणादिः, भयम् इत्यादिभ्यः कारणेभ्यः, रोम्णां विक्रिया—विकारः, रोमाञ्चः। मदः,—मत्तत्वं, सम्मदः,—सम्यक् आनन्दः, पीड़ा—रोगः, तत्प्रभृतिभिः हेतुभिः, गद्गदम्—अस्पष्टभाषणं, वैस्वर्य्यं—स्वरभङ्गं विदुः। रागः,—अनुरागः, द्वेषः,—वैरं, श्रमः,—परिश्रमः, इत्यादिभ्यः कारणेभ्यः, गात्रस्य कम्पः वेपथुः। विषादः,—विषण्णता, मदः,—मद्यपानजो विकारः, रोषः,—क्रोधः, तत्प्रभृतिभिः कारणैः, वर्णान्यत्वम्—अन्यवर्णप्राप्तिः, विवर्णता। क्रोधः,—कोपः, दुःख—मानसः क्षोभः, प्रहर्षः,—प्रकृष्टानन्दः, एभ्यः जातं नेत्रोद्भवं वारि—जलम्, अश्रु तत्पदवाच्यम्। सुखदुःखाभ्यां—सुखेन दुःखेन वा इत्यर्थः, चेष्टायाः,—शारीरव्यापारस्य, ज्ञानस्य च निराकृतिः,—अपगमः, प्रलयः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कपोलौ घर्म्माद्रौ, ध्रुवमुपरताशेषविषयं,
मनः सान्द्रानन्दं स्पृशति झटिति ब्रह्म परमम् ॥" (द)

एवमन्यत्। (ध)

अथ व्यभिचारिणः,—

विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः।
स्थायिन्युन्मग्ननिर्मग्नास्त्रयस्त्रिंशच्च तद्भिदाः॥१७२॥(न)

(द) उदाहरति, तन्विति।—नायकाङ्गस्पर्शजनितस्य सात्त्विकभावस्य वर्णनमिदम्। अस्याः,—कान्तायाः इत्यर्थः, तनुस्पर्शात्—नायकशरीरस्पर्शात्, उपचारात् तज्जनितादानन्दात् हेतोः, नयने—नेत्रे, हन्त—आश्चर्य्यम्, दरमुकुलिते—ईषन्मुकुलिते, कुड्मलाकारतां प्राप्ते इत्यर्थः, ("दराव्ययं मनागर्थे" इति मेदिनी) अखिलं—समग्रम्, अङ्गम्, उदञ्चन्तः,—उद्गच्छन्तः, रोमाञ्चाः, यत्र तथाभूतं सत्, जड़तां—जड़त्वं, व्रजति—गच्छति। ["नयने उदञ्चत्" अत्र "ईदूदेद्द्विवचनं प्रगृह्यम्" (१।१।११ पा०) इति द्विवचनस्य प्रगृह्यसंज्ञायां ततः "प्लुतप्रगृह्या अचि नित्यम्" (६।१।१२५ पा०) इति प्रकृतिभावे प्रगृह्यनिमित्तकोऽसन्धिः ; स च असकृत्प्रयोगे एव दोषाश्रयः]। कपोलौ—गण्डदेशौ, घर्म्माद्रौ—स्वेदाम्बुसिक्तौ, जातौ इति शेषः। किं बहुना, मनः, उपरताः,—विरताः, अशेषाः,—समग्राः, विषयाः,—वाह्येन्द्रियव्यापाराः यस्मात्, तादृशं सत्, झटिति—सहसा, सान्द्रानन्दं—घनानन्दस्वरूपं, परमं ब्रह्म—परब्रह्म, स्पृशति—परमब्रह्मसाक्षात्करणजनितसुखमिव सुखमनुभवति, परमानन्दरसमास्वादयति इत्यर्थः, ("वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः" इति रसानुभवलक्षणे ग्रन्थकृतोक्तत्वात्) ध्रुवं—निश्चितम्। अत्र स्तम्भस्वेदरोमाञ्चप्रलयाः उदाहृताः। शिखरिणी वृत्त,—"रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति तल्लक्षणात्।

(ध) एषां विविक्तान्युदाहरणानि गवेषणीयानीत्याह, एवमिति।—यथा उदाहृते पद्ये स्तम्भस्वेदादयः कतिपये सात्त्विका भावा दर्शिताः, तथाऽन्येऽनुदाहृता अपि विविक्ता अन्वेष्ट्या इति भावः। तथा च—"बाले! नाथ! विमुञ्च मानिनि रुषम्—" इत्यत्र स्वरभङ्गः, "सा गर्व्वमुद्वह—" इत्यत्र वेपथुः, "शोणं वीक्ष्य—" इत्यत्र वैवर्ण्यमश्रु चेति बोध्यम्। विस्तरस्त्वन्यत्र।

(न) व्यभिचारिभावमाह, विशेषादिति।—विशेषात्—विभावानुभावापेक्षया



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्थिरतया वर्त्तमाने हि रत्यादौ निर्वेदादयः प्रादुर्भाव-तिरोभावाभ्यामाभिमुख्येन चरणाद् व्यभिचारिणः कथ्यन्ते । (प) के ते ? इत्याह,—

**निर्वेदावेगदैन्यश्रममदजड़ता औग्र्यमोहौ विबोधः**
**स्वप्नापस्मारगर्वा मरणमलसताऽमर्षनिद्राऽवहित्थाः ।**
**औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता व्याधि-**
**सन्त्रासलज्जाः**
**हर्षासूयाविषादाः सधृतिचपलता ग्लानिचिन्ता-**
**वितर्काः ॥ १७३ ॥ (फ)**

---

उत्कर्षभावात्, आभिमुख्येन—आनुकूल्येन, चरन्तः,—प्रादुर्भवन्तः, रसानुगुणेन रत्यादौ रसरूपतया सङ्गच्छमाना इत्यर्थः ; स्थायिनि—रत्यादौ, उन्मग्नाः,—कदाचित् उद्रिक्ताः, बुद्बुदवत् झटिति प्रतीयमानत्वेन प्रादुर्भूता इत्यर्थः, निमग्नाः,—विलम्ब-प्रतीतिकत्वेन कदाचित् तिरोहिताः, ये धर्म्माः ते व्यभिचारिणः ज्ञेया इति शेषः । [ "चरन्तः" इत्यत्र "चरणात्" इति पाठे—स्थायिनि उन्मग्ननिमग्ना ये धर्माः, ते विशेषादाभिमुख्येन चरणात्—मेलकात्, इत्येवं योजनीयम् ] तद्भिदाः,—तेषां व्यभि-चारिणां भावानां, भिदाः,—प्रकाराः, त्रयस्त्रिंशत् । एतत्तु न्यूनसंख्यायाः व्यवच्छेदकं, न त्वधिकसंख्यायाः । अत एवोक्तम् ;—"हासक्रोधादयः शृङ्गारादौ व्यभिचारिणः" इति । एतदर्थमत्र चकार उपन्यस्तः ।

(प) कारिकाऽर्थं सुगमयति, स्थिरतयेति ।—स्थिरतया—स्थायिभावरूपेण, यावद्रसं तावत् स्थितिशालितयेत्यर्थः । वर्त्तमाने—लब्धसत्ताके, हि—एव, न तु अलब्ध-सत्ताके इति भावः, [ एतेन रसान्तरे स्थिरतयाऽलब्धसत्ताकत्वे रत्यादीनामपि स्थायि-त्वाभावः सूचितः । अत एवोक्तं "रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः" इति ] । रत्यादौ—रतिहासादौ भावे [ विषये सप्तमीयम् ] निर्व्वेदादयः,—वक्ष्यमाणास्त्रयस्त्रिंश-त्सङ्ख्यका निर्वेदावेगप्रभृतयः, प्रादुर्भाव-तिरोभावाभ्यां—समुद्रे तरङ्गवत् स्फुरणास्फुरणा-भ्याम्, आभिमुख्येन—आनुगुण्येन, चरणात्—सञ्चारितया, व्यभिचारिणः, कथ्यन्ते ।

(फ) तान् नामतो निर्द्दिशति, के इति ।—ते—निर्वेदादयो व्यभिचारिणः, के—किंकिंनामानः, इति—इत्याशङ्कायाम्, आह, निर्वेदादय इति ।—स्पष्टम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र निर्वेदः,—

तत्त्वज्ञानाऽऽपदीर्ष्यादेर्निर्व्वेदः स्वावमाननम्।
दैन्यचिन्ताऽश्रुनिश्वासवैवर्ण्योच्छ्वसितादिकृत् ॥१७४॥ (व)

तत्र तत्त्वज्ञानात् निर्वेदो यथा,—

"मृत्कुम्भवालुकारन्ध्रपिधानरचनाऽर्थिना।
दक्षिणावर्त्तशङ्खोऽयं हन्त! चूर्णीकृतो मया॥" (भ)

(व) निर्वेदमाह, तत्त्वेति।—तत्त्वज्ञानात्—देहविषयादौ अनुपादेयत्वज्ञानात्, न तु जीवपरमात्मनोरभेदज्ञानात्, तथा सति, मोक्ष एव प्रसज्येत, न तु आत्मनोऽवमाननम् इति बोध्यम्; एवञ्च तत्त्वज्ञानपदार्थस्य साक्षादनुपयुक्ततया तत्त्वपदं लाक्षणिकम्; लक्षणा च तत्कारणे वैराग्यादौ। आपदः, ईर्ष्यादेः,—परोत्कर्षाऽसहिष्णुतादेः हेतुतः [ अत्र आदिपदेन आधिव्याध्यादीनां ग्रहणम् ]। दैन्यं—दीनत्वं, चिन्ता, अश्रु—नेत्रजलं, निश्वासः,—श्वासातिशयः, वैवर्ण्यं—विवर्णत्वं, हर्षशून्यत्वप्रत्यायिकाकृतित्वमिति यावत्, उच्छ्वसितं—दीर्घश्वाससन्तानः, तदादिं करोतीति तथाभूतः। [ अत्रादिना शरीरपाताभिलाषादेर्ग्रहणम् ]। स्वावमाननं—स्वस्मिन् आत्मनि, स्वकीये विषये वा अवज्ञानमित्यर्थः, निर्वेदः। [ यद्वा,—प्रथमादिपदात् पुराणश्रवणादीनां, द्वितीयादिपदात् स्वस्य कुकर्म्मोद्भावनादीनां ग्रहणम्, अन्यत् पूर्व्ववत् इति सङ्क्षेपः ]।

(भ) तत्त्वज्ञानजनिर्वेदमुदाहरति, मृदिति।—मृत्कुम्भस्य—मृत्तिकाकलसस्य, वालुकारन्ध्रं, तस्य पिधानम्—आच्छादनं, तथा च मृत्कुम्भवालुकारन्ध्रपिधानवत् तुच्छं वैषयिकसुखं, तस्य रचना—अनुकूलव्यापारः, तदर्थिना—तत्कामेन मया, हन्त—कष्टम्! अयं, दक्षिणावर्त्तशङ्खः,—लक्षणया तत्सदृशं शरीरमित्यर्थः, चूर्णीकृतः,—लक्षणया व्यर्थमकर्म्मण्यः कृतः इत्यर्थः; सांसारिकविनश्वरसुखार्थिना मया परमार्थसाधनसमर्थतया अत्युपादेयः अयं देहः दक्षिणावर्त्तशङ्खसदृशोऽपि विषयाभिनिविष्टत्वेन मुद्गरतुल्यया जरया जर्जरीकृत इति भावः। एवञ्च विरक्तस्य दक्षिणावर्त्तशङ्खचूर्णनकथनमसङ्गतमित्युपमाकल्पनया निदर्शनाऽलङ्कारः; यद्वा,—रावणशक्त्या मोहमुपगते लक्ष्मणे श्रीरामचन्द्रस्य परिदेवनोक्तिरियम्। तर्हि अयं लक्ष्मण एव दक्षिणावर्त्तशङ्खः,—अमूल्यपदार्थः, मया चूर्णीकृतः,—विनाशितः, चूर्णाख्यद्रव्यविशेषीकृतश्च, [ शङ्खादिकं दग्ध्वा चूर्णनामक ("चुण" इति वङ्गभाषा) द्रव्यकरणप्रसिद्धेः ] रावणवधादिरेव

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ आवेगः,—

**आवेगः सम्भ्रमस्तत्र वर्षजे पिण्डिताङ्गता ।**
**उत्पातजे स्रस्तताऽङ्गे धूमाद्याकुलताऽग्निजे ॥**
**राजोपद्रवजादेस्तु शस्त्रनागादियोजनम् ।**
**गजादेः स्तम्भकम्पादिः पांश्वाद्याकुलताऽनिलात् ॥**
**इष्टाद्धर्षाः शुचोऽनिष्टाज्ज्ञेयाश्चान्ये यथायथम् ॥१७५॥ (म)**

---

स्वर्कुम्भवालुकारन्ध्रपिधानं, तद्रचनाकामेन मयेति पूर्वेणान्वयः । अस्मिन् पक्षे विषयिणा दक्षिणावर्त्तशङ्खेन विषयस्य लक्ष्मणस्याभेदमङ्गीकृत्य निगरणम्, अतोऽत्र रूपकोपपादकः अतिशयोक्त्यलङ्कारः ; पूर्व्वपक्षे,—तत्त्वज्ञानजम्, अस्मिन् पक्षे—पुनः आपदुत्थं स्वावमाननं ( निर्वेदः ) बोध्यम् । एवमन्यदपि ।

( म ) सप्रभेदमावेगमाह, आवेग इति ।—सम्भ्रमः,—अकस्मात् उपस्थितघटनाजनितमनोवेगः, आवेगः । तत्र—आवेगे, वर्षजे—वृष्टिजाते सति, पिण्डिताङ्गता—सङ्कुचिताङ्गत्वं, भवति इति शेषः, ["वर्षजे" इत्यत्र "हर्षजे" इति पाठान्तरे,—उल्लासजनिते आवेगे, जड़वत् स्तब्धावयवता इत्यर्थः । "पीड़िताङ्गता" इति पाठस्तु स्पष्टार्थः ] उत्पातजे—उत्पातात् जाते, दिव्यनाभसभूमिजरूपविविधोत्पातजन्ये सति इत्यर्थः, अङ्गे—शरीरे, स्रस्तता—शैथिल्यं भवति इति शेषः, अग्निजे, आवेगे सति, धूमादिभिः, आकुलता, भवति इति शेषः ; राज्ञामुपद्रवात्—युद्धायोजनादिरूपाज्जायत इति स आदिर्यस्य तस्मात् हेतोः, शस्त्रनागादियोजनम्—आत्मरक्षार्थं राजसाहाय्यार्थं वा हस्त्यश्वास्त्रादीनामायोजनमित्यर्थः, भवति । [ "राजविद्रवनादेः" इति पाठान्तरेऽपि अयमेवार्थः । आदिना चौरोपद्रवनादीनां ग्रहणम् ] । गजादेः जाते इति शेषः, आवेगे सतीति भावः, स्तम्भकम्पादिर्जायते इति शेषः ; अनिलात् जाते इति शेषः, प्रभञ्जनवायुजनित आवेगे सतीत्यर्थः, पांश्वादिभिः,—धूल्यादिभिः, आकुलता भवति इति शेषः ; इष्टात्—अभिलषितार्थसिद्धेः जाते इति शेषः, आवेगे सति, हर्षाः,—आनन्दाः, तज्जनितमुखविकासादयः इति यावत्, अनिष्टात्—अहितात्, अभिलषितार्थविरोधिकार्य्योपस्थितेरिति भावः, जाते इति शेषः, आवेगे, शुचः,—शोकाः, मुखसङ्कोचादयोऽनुभावाः भवन्ति इत्यर्थः । अन्ये—आवेगाः, यथायथं ज्ञेयाः,—वेदितव्याः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र शत्रुजो यथा,—

"अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनवेक्ष्य भरताग्रजो यतः।
क्षत्रकोपदहनार्चिषं ततः सन्दधे दृशमुदग्रतारकाम्॥" (य)

एवमन्यत् ऊह्यम्।

अथ दैन्यम्,—

**दौर्गत्याद्यैरनौजस्यं दैन्यं मलिनताऽऽदिकृत्॥१७६॥(र)**

यथा,—

"वृद्धोऽन्धः पतिरेष मञ्चकगतः, स्थूणाऽवशेषं गृहं,
कालोऽभ्यर्णजलागमः, कुशलिनो वत्सस्य वार्त्ताऽपि नो।
यत्नात् सञ्चिततैलबिन्दुघटिका भग्नेति पर्य्याकुला,
दृष्ट्वा गर्भभरालसां निजवधूं श्वश्रूश्चिरं रोदिति॥" (ल)

---

[एवञ्च,—सम्भ्रम आवेग इत्यावेगस्य सामान्यं लक्षणं, वर्षजादयश्च तस्य भेदाः। अमी चासङ्ख्या इति यथातथ स्वयमूह्या इति सूचितम्]।

(य) शत्रुजमावेगमुदाहरति, अर्घ्यमिति।—सः,—भार्गवः, अर्घ्यम् अर्घ्यं गृहाणेति शेषः, इति वादिनं, नृपं—दशरथम्, अनवेक्ष्य—अगणयित्वेत्यर्थः, यतः,—यस्मिन् प्रदेशे, भरताग्रजः,—रामः, तिष्ठतीति शेषः, ततः,—तत्र प्रदेशे, क्षत्रेषु कोप एव दहनः,—अग्निः, तस्य अर्चिः,—भाः, शिखा इति यावत्, तदिव अर्चिः यस्याः तां ("ज्वालाभासोर्न पुंस्यर्चिः" इत्यमरः) उदग्रतारकां—तीक्ष्णतारां, दृशं—चक्षुषं, सन्दधे—संहितवान्। अत्रार्घ्यमर्घ्यमिति मुहुर्वदतो दशरथस्य भार्गवदर्शने सम्भ्रमः। रघुवंशस्येदं पद्यम्। उपजातिः वृत्तम्।

(र) दुःखदारिद्र्यादिमहाऽपराधोत्पन्नः स्वनीचत्वप्रख्यापनाहेतुः मनोऽवस्थाविशेषः दैन्यं, तदाह, दौर्गत्याद्यैरिति।—दौर्गत्याद्यैः,—दारिद्र्यादिभिः हेतुभिः, [अत्रादिपदेन श्रमादेर्ग्रहणम्] मलिनताऽऽदिकृत्, अनौजस्यम्—ओजः बलं तेजो वा तच्छून्यत्वं, निस्तेजस्त्वमिति यावत्, दैन्यं—दीनत्वं नाम व्यभिचारिभावः कथ्यते।

(ल) उदाहरति, वृद्ध इति।—कस्याश्चिद्विपन्नाया दशावर्णनमिदम्। एषः, पतिः, वृद्धः, अथ च अन्धः, अत एव मञ्चकगतः,—पर्य्यङ्कशायी, [एतेन अस्य अकर्मण्यत्वम्, उत्थानशक्तिरहितत्वम्, अत एव ततः पोषणादिसम्भावनाऽसम्भवत्वं, स्वस्याश्च तच्चिन्ताऽऽकुलत्वं व्यज्यते] गृहं, स्थूणाः,—स्तम्भदारूणि एव अवशेषाः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ श्रमः,—

**खेदो रत्यध्वगत्यादेः श्वासनिद्राऽऽदिकृच्छ्रमः ॥१७७॥(व)**

यथा,—

"सद्यः पुरीपरिसरे च शिरीषमृद्वी
गत्वा जवात् त्रिचतुराणि पदानि सीता ।
गन्तव्यमस्ति कियदित्यसकृद् ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम् ॥" (श)

---

यस्य तादृशं, निपतनाभिमुखमिति यावत्, [ एतेन तद्गृहारेऽचमत्कथनेन निर्धनत्वं व्यज्यते ] कालः,—समयः, अभ्यर्णजलागमः,—अभ्यर्णः,—समीपवर्ती, जलागमः,—जलपातः यत्र तादृशः, वर्षाप्रारम्भः इति यावत्, [ एतेन स्वतः पतनाभिमुखस्य तादृशस्य गृहस्य वर्षायाम् अवश्यपतनसम्भावनया तत्र अवस्थाने प्राणधारणस्यैव संशयितत्वाशङ्का, अतस्तत्रानशनतयाप्यवस्थानं दुःशकं, किं पुनः स्थानान्तरात् आहार्यादिसङ्ग्रहणम् इति व्यज्यते ] वत्सस्य—विदेशगतस्य पुत्रस्येत्यर्थः, कुशलिनी—आख्यायिनी, वार्ता—वृत्तान्तः अपि, नो उपालभ्यते इति शेषः, [ एतेन शोक-व्याकुलताऽतिशयो व्यज्यते, "पुत्रशोको महाकष्टम्" इति प्रसिद्धिश्च तन्मूलम् ] यत्नात्—कथमपि इतस्ततो याचनादिव्यापारात्, सञ्चिततैलविन्दुघटिका—सञ्चितानां तैलविन्दूनां घटिकाऽल्पो घट इत्यर्थः, कतिपयतैलविन्दूनामेव यदल्पं पात्रं मनासीत् तत् इत्यर्थः, भग्ना, [ एतेन पौरुषप्रतिकाराभावोऽपि व्यज्यते ] इति—एवमनेकासामापदामुत्तरोत्तरमापातात् हेतोः, पर्य्याकुला—व्याकुला, श्वश्रूः, निजवधूम्—आत्मस्नुषां, गर्भभरालसां—पूर्णगर्भाम्, आसन्नप्रसवामिति भावः, दृष्ट्वा चिरं रोदिति । शार्दूलविक्रीड़ितं वृत्तम् ।

(व) श्रममाह, खेद इति ।—रत्यध्वगत्यादेः,—सुरताध्वगमनादिभिः, श्वासस्य, निद्राऽऽदेश्च कारकः, खेदः,—अवसादः, श्रमः । अनेकशारीरव्यापारोत्पन्ननिश्वासाङ्गमर्दनिद्राऽऽदिकारणस्वरूपः अङ्गावसादविशेषः श्रमः इति सारः । एष हि शारीरे बले वर्त्तमानेऽपि समुत्पद्यते, ग्लानिः न तथा इति ग्लानेरस्य विशेषः ।

(श) उदाहरति, सद्य इति ।—महानाटके सीतया सह रामस्य वनगमनाऽऽरम्भवर्णनमिदम् । शिरीषमृद्वी—शिरीषकुसुमसदृशसुकुमारावयवेत्यर्थः, सीता—जानकी, पुर्य्याः,—अयोध्यायाः, परिसरः,—प्रान्तभागः, तस्मिन्, अयोध्यायामेव, न तु

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ मदः,—

**सम्मोहानन्दसम्भेदो मदो मद्योपयोगजः।**
**अमुना चोत्तमः शेते, मध्यो हसति गायति॥**
**अधमप्रकृतिश्चापि परुषं वक्ति रोदिति॥१७८॥(ष)**

यथा,—

"प्रातिभं त्रिसरकेण गतानां वक्रवाक्यरचनारमणीयः।
गूढसूचितरहस्यसहासः सुभ्रुवां प्रववृते परिहासः॥" (स)

ततः किञ्चिद्दूरं वनादेः प्रान्तदेशे इत्यर्थः, ("पर्य्यन्तभूः परिसरः" इत्यमरः) नवात्—वेगात्, त्रिचतुराणि—त्रीणि वा चत्वारि वेति तथोक्तानि, पदानि यावद्, गत्वा च—गत्वैव, सद्यः,—तत्क्षणं, "कियत् गन्तव्यमस्ति" इति असकृत्—पुनः पुनः, ब्रुवाणा—कथयन्ती, पृच्छन्ती सतीति यावत्, रामस्य, अश्रु—नयनजलं, तस्य प्रथमावतारं—पूर्वाविष्करणं, कृतवती। तत्पूर्वं न कदाऽपि कश्चित् रामस्याश्रूद्गमं कृतवान्, किन्तु तदानीं सीतैव तथा ब्रुवती कृतवतीति भावः। [अत्र वारंवारं गन्तव्याध्वपरिमाणजिज्ञासया सीतायाः स्वल्पपथलङ्घनेऽपि श्रममवधार्य्य श्रीरामस्य रोदनमवगन्तव्यम्]। वसन्ततिलकं वृत्तम्।

(ष) सप्रभेदं मदमाह, सम्मोहेति।—मद्यस्य—आसवस्य, उपयोगः,—पानं, तस्मात् जातः, सम्मोहानन्दयोः सम्भेदः,—सम्मेलकः, मदः। आसवाद्युपयोगोद्भवः समुल्लासाढ्यः स्वापप्रहसितादिनिमित्तः मनोवृत्तिविशेषः मदः इति निष्कर्षः। अस्य त्रैविध्यसूचनाय अनुभाववैविध्यमाह, अमुनेति।—अमुना—मदेन, उत्तमः,—साधुशीलो जनः, शेते; मध्यः,—नातिनीचो न चात्युत्तमो लोकः, हसति, गायति च; अधमप्रकृतिः,—नीचस्वभावो जनः, परुषं—कर्कशं, वक्ति रोदिति च, अतोऽयं त्रिविधानुभावतया त्रिविध इति बोध्यम्।

(स) उदाहरति, प्रातिभमिति।—त्रिसरकेण—त्रिवारमधुपानेनेत्यर्थः, ["सरकं शीधुपात्रे स्यात् शीधुपाने च शीधुनि" इति विश्वः। "त्रिपानं मदातिभूमिः" इति पानविधिः। "तद्धितार्थोत्तरपदसमाहारे च" (२।१।५१ पा०) इति द्विगुः। "पात्राद्यन्तस्य न" (वा०) इति पात्रादित्वात् नपुंसकत्वम्] प्रातिभं—प्रतिभा—ज्ञानबीजभूतः संस्कारविशेषः, तत्र भवं तत् तथोक्तं, ज्ञानप्रभावविशेषमिति भावः। [भवार्थेऽण्] यद्वा,—प्रतिभा बुद्धिविशेष एवेति तत् तथोक्तं [स्वार्थेऽण्] प्रागल्भ्यं गतानां

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ जड़ता,—

**अप्रतिपत्तिर्जड़ता स्यादिष्टानिष्टदर्शनश्रुतिभिः ।**
**अनिमिषनयननिरीक्षणतूष्णीम्भावादयस्तत्र॥१७६॥(ह)**

यथा मम कुवलयाश्वचरिते प्राकृतकाव्ये,—

"णवरिअ तं जुअजुअलं अस्रोस्सणिहिदसजलमंथरदिट्ठिम् ।
आलेक्खअोपिअं विअ खणमेत्तं तत्थ संत्थिअं मुत्तसस्मम् ॥"(क)

—त्रिवारमद्यपानोद्दृक्षमदोद्भूतधार्ष्ट्यंजुषाम् इत्यर्थः, सुभ्रुवां—रमणीनां, वक्रवाक्यरचनारमणीयः,—वक्रं—श्लिष्टार्थकं, यद् वाक्यं तस्य रचनया रमणीयः, श्लिष्टार्थकवाक्यप्रयोगद्वारा मनोहर इति भावः, गूढ़ानि—प्रथमं त्रपया संगुप्तानि, सूचितानि—तत्समये मदेन प्रकटीकृतानि, रहस्यानि—ग्राम्याङ्गभङ्गीव्यापारप्रजल्पनादीनि, यस्मिन् स गूढ़सूचितरहस्यः, स चासौ सहासश्च इति, [ विशेषणसमासोऽयं, वैवक्षिकविशेषणविशेष्यभावात् ] ( "हासो हास्यम्" इत्यमरः ) परिहासः,—नर्मकेलिः, उपहासचेष्टा इति यावत्, ( "द्रवकेलिपरीहासाः" इत्यमरः ) प्रववृते—प्रवृत्तः । शिशुपालवधस्येदं पद्यम् । उपजातिः वृत्तम् ।

( ह ) जड़तामाह, अप्रतिपत्तिरिति ।—इष्टानिष्टयोः,—प्रियाप्रिययोः, दर्शनश्रुतिभिः, अप्रतिपत्तिः,—कर्त्तव्यविमूढ़ता, जड़ता स्यात् । तथा हि,—वियोग-भीति-चिन्तोत्कण्ठाऽतिप्रेष्ठानिष्टप्रेक्षणाकर्णनादिसमुत्पन्ननिश्चितकर्त्तव्यविषयास्थिरीकरणाक्षमा मनोवृत्तिः जड़ता इति निष्कर्षः । तत्र—जड़तायाम, अनिमिषेण—निर्निमेषेण, नयनेन निरीक्षणं, तूष्णीम्भावः,—मौनित्वं, तत्प्रभृतयः भवन्तीति शेषः । [ एषा हि कदाचित् मोहात् पूर्वं, कदाचित परञ्च समुत्पद्यते ; यदाचख्युः प्राचीनाः,—"कार्य्याविवेको जड़ता पश्यतः शृण्वतोऽपि वा । तद्विभावाः प्रियानिष्टदर्शनश्रवणे रुजा ॥ अनुभावास्तमी तूष्णीम्भावविस्मरणादयः । सा पूर्वं परतो वा स्यान्मोहादिति विदां मतम् ॥" इति ] एवञ्च,—मोहात् पूर्व्वकालीना, उत्तरकालीना चेति द्विविधेति वेदितव्यम् ।

( क ) अतिप्रेष्ठप्रेक्षणजन्यमुदाहरति, णवरिअ इति ।—[ "केवलं तद् युवयुगलमन्योऽन्यनिहितसजलमन्थरदृष्टि । आलेख्यार्पितमिव क्षणमात्रं तत्र संस्थितं मुक्तसङ्गम् ॥" इति संस्कृतम् ] । कदाचित् पथि सम्मिलितयोः परस्परं दृष्टिं निक्षिपतोः कयोश्चित् मित्रयोः तदानीन्तनीमवस्थां दृष्टवत उक्तिरियम् ; यद्वा,—बहुकालात् पर

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ उग्रता,—

**शौर्य्यापराधादिभवं भवेच्चण्डत्वमुग्रता।**
**तत्र स्वेदशिरःकम्पतर्जनाताड़नादयः॥१८०॥ (ख)**

यथा,—

"प्रणयिसखीसलीलपरिहासरसाधिगतैः
ललितशिरीषपुष्पहननैरपि ताम्यति यत्।
वपुषि बधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः॥" (ग)

मिलितयोः नायकनायिकयोः अवस्थां दृष्टवत्याः सख्या उक्तिरियम्। [तत्र "युवयुगलम्" इत्यत्र युवा च युवती च इत्येकशेषः। चवरिशशब्दः केवलार्थे देशीयः]। तत् युवयुगलं—तरुणद्वन्द्वं, केवलम्—अनन्यव्यापारं यथा तथा, अन्योऽन्यस्मिन् निहिता—अर्पिता, सजला—अश्रुपूर्णा, मन्थरा—जड़ा, दृष्टिः येन तादृशम्; अत एव, आलेख्यार्पितमिव—चित्रलिखितमिव, मुक्तसङ्गम्—आसङ्गरहितं सत्, तत्र चणमात्रं संस्थितम्—अवस्थितमित्यर्थः। स्कन्धकवृत्तमेतत्। तल्लक्षणं यथा,—"स्कन्धकमिति तत् कथितं यत्र चतुष्कलगणाष्टकेनार्द्धं स्यात्। तत्तुल्यमपरमदलं भवति चतुःषष्टिमात्रकशरीरमिदम्॥" इति।

(ख) उग्रतामाह, शौर्य्येति।—शौर्य्यं—बलशालित्वम्, अपराधः,—अन्यकृतापकारः, एवमादिभ्यः भवतीति तथोक्तं, चण्डत्वम्—अत्यन्तासहिष्णुत्वं, तीक्ष्णत्वमित्यर्थः, उग्रता स्यात्। अस्यानुभावान् निर्दिशति, तत्रेति।—तत्र—तस्याम् उग्रतायां सत्यामित्यर्थः, स्वेदः, शिरःकम्पः, तर्जना, ताड़नादयश्चानुभावा भवन्ति इति ज्ञेयम्।

(ग) उदाहरति, प्रणयीति।—प्रणयिनी—प्रेमवती, या सखी—सहचरी, तस्याः, सलीलः,—सविलासः, यः परिहासः,—केलिः, तत्र, रसेन—अनुरागेण, अधिगतानि—प्राप्तानि, तैः; ललितैः,—सुन्दरैः, शिरीषपुष्पैः यानि हननानि—प्रहाराः, तैः, अपि, यत्—वपुः, मालत्या इति शेषः, ताम्यति—क्लिश्यतीत्यर्थः, तत्र, वपुषि—मालतीशरीरे, बधाय—हन्तुं, शस्त्रं—बाणम्, उपक्षिपतः,—उत्तोलयतः, तव, शिरसि, एषः,—उद्यत इत्यर्थः, भुजः मम इति भावः, अकाण्डयमदण्ड इव—अकालकालदण्डसदृश इत्यर्थः, पततु। आकस्मिकत्वेन अप्रतिक्रियत्वमुक्तम्। भुजपदेन बाहुव्यापारेणैव हन्तव्योऽसीति शौर्य्यातिशयः उक्तः। मालतीमाधवस्थेदं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ मोहः,—

**मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः।**
**घूर्णनागात्रपतनभ्रमणादर्शनादिकृत् ॥१८१॥ (घ)**

यथा,—

"तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम्।
अज्ञातभर्त्तृव्यसना मुहूर्त्तं कृतोपकारेव रतिर्बभूव॥" (ङ)

---

पद्यम्। [ अत्र मालतीशरीरे शरप्रहारं कुर्व्वतोऽघोरघण्टस्यापराधेन माधवस्य चण्डत्वमेतादृशोक्त्या व्यज्यते। यमदण्डेनोपमानेन भुजरूपस्योपमेयस्य सादृश्योद्भावनात् उपमालङ्कारः ]। नर्दटकं वृत्तं,—"यदि भवती नजौ भजजला गुरु नर्दटकम्" इति तल्लक्षणात्।

(घ) मोहमाह, मोह इति।—भीतिदुःखावेगानुचिन्तनैः,—भीतिः,—भयं, दुःखं—क्लेशः, तयोरावेगः,—उद्रेकः, तस्यानुचिन्तनानि अत्यन्तसचिन्तविचाराणीत्यर्थः, तैः, यद्वा—भीतिश्च, दुःखञ्च, आवेगः,—उद्वेगश्च, अनुचिन्तनं—पश्चात्तापश्च, तैस्तथोक्तैः हेतुभिः, घूर्णना—चक्राकारेण भ्रमणं, गात्रपतनं, भ्रमणं—भ्रमः, अदर्शनम्—अज्ञानम्, इत्यादिकृत्—इत्यादिहेतुभूता या विचित्तता—विगतं चित्तम्—अनुसन्धानात्मकवृत्तिमदन्तःकरणं, बाह्यज्ञानराहित्यरूपा वृत्तिर्यस्य तस्य भावस्तत्ता तथोक्ता, निमीलनत्वमिति यावत्, मोहः। [ "घूर्णनागात्रपतन" इत्यत्र "मूर्च्छनाज्ञानपतन" इति पाठान्तरं स्पष्टार्थकम् ] भीतिविप्रयोगादिसम्पादिता यथार्थवस्तुतत्त्वज्ञानाऽनवबोधिनी मनोवृत्तिः मोहः इति निष्कर्षः।

(ङ) उदाहरति, तीव्रेति।—तीव्राभिषङ्गप्रभवेण—तीव्रः तीक्ष्णः, दुःसह इति यावत्, यः अभिषङ्गः,—पत्युः पराभवः, ("अभिषङ्गः पराभवे" इत्यमरः) तत्प्रभवेण, इन्द्रियाणां वृत्तिं—विषयसम्बन्धं, संस्तम्भयता—निरुन्धता, प्रतिबध्नतेति यावत्, [ एतेन मोहस्य अज्ञानकरत्वं सूचितम् ] मोहेन—विचित्ततया, अज्ञातभर्त्तृव्यसना—अज्ञातम् अननुभूतं, भर्त्तुः,—कामस्य, व्यसनं—विपत्, वियोग इत्यर्थः, यया तथाभूता सती, रतिः,—कामस्त्री ("रतिः स्त्री स्मरदारेषु रागे सुरतगुह्ययोः" इति मेदिनी) मुहूर्त्तं—किञ्चित्कालावधि, यावन्मोहमुपगता तावदिति यावत्, कृतोपकारा—प्राप्तोपकारा, इव, बभूव। उपजातिः वृत्तम्। कुमारसम्भवस्येदं पद्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ विबोधः,—

**निद्राऽपगमहेतुभ्यो विबोधश्चेतनाऽऽगमः।**
**जृम्भाऽङ्गभङ्गनयनमीलनाङ्गावलोककृत् ॥१८२॥(च)**

यथा,—

"चिररतिपरिखेदात् प्राप्तनिद्रासुखानां
चरममपि शयित्वा पूर्वमेव प्रबुद्धाः।
अपरिचलितगात्राः कुर्वते न प्रियाणाम्
अशिथिलभुजचक्राऽऽश्लेषभेदं तरुण्यः॥" (छ)

(च) विबोधमाह, निद्रेति।—निद्रायाः अपगमः,—निवृत्तिः, तस्य हेतुभ्यः,—सङ्गीतादिभ्यः, जृम्भाम्—आलस्येन मुखव्यादानम्, अङ्गभङ्गं—पार्श्वादीनामङ्गानां मोटनं, नयनमीलनं—नेत्रसङ्कोचनं, [ दृश्यते हि लोके प्रायशः, विबोधानन्तरमेव आलोकाद्युज्ज्वलवस्तुना अभिहतं चक्षुः आकुञ्चनादिरूपां विकृतिं याति, इति ] अङ्गावलोकं,—करतलादिदर्शनञ्च करोति—जनयतीति तथोक्तः, चेतनायाः आगमः,—उपस्थितिः, ज्ञानलाभ इति यावत्, विबोधः,—प्रस्वापविनाशात् परं समुत्पन्नः बोधविशेषः इत्यर्थः। प्रस्वापविनाशो हि शयनपूर्णताशयनात्मकठोरशब्दशीतोष्णस्पर्शादिभिः समुत्पद्यते, विभावाः त एवात्र इति ज्ञेयम्। अङ्गमर्द्दनाक्षिनिमीलनादयोऽनुभावाः।

(छ) उदाहरति, चिरेति।—चरमं—पश्चात्, पतिशयनानन्तरमिति यावत्, अपि, शयित्वा—स्वपित्वा, पूर्वं—प्रथमं, पतिप्रबोधात् प्रागिति यावत्, एव, प्रबुद्धाः,—अपगतनिद्राः, जागरिता इति यावत्, [ एवञ्च आसां पतिव्रतात्वं सूचितं, "सुप्ते पश्चाच्च या शेते पूर्वमेव प्रबुध्यते। नान्यं कामयते चित्ते सा स्त्री ज्ञेया पतिव्रता॥" इति स्मरणात् ] तथाऽपि अपरिचलितगात्राः,—अपरिचलितं—नेतस्ततः कृतचालनं, गात्रं—पार्श्वादि अङ्गं, याभिः, तास्तथोक्ताः, पत्नीनां निद्राभङ्गभयाद् याभिः प्रबुद्धाभिरपि पार्श्वपरिवर्त्तनभुजाकर्षणादि न कर्त्तुं पार्य्यते, तथाभूता इति भावः, [ यद्वा,—एतद्विशेषणद्वयेन आसामतीवानुरक्तिः सूच्यते, "सुप्ते स्वपिति" इति "सुप्ता न परिवर्त्तते" इति च अनुरक्तालक्षणे कथितत्वात् ] तरुण्यः, चिररतिपरिखेदात्—चिरं—बहुकालं व्याप्य, या कृता रतिः,—रमणं, सुरतप्रसङ्ग इति यावत्, तया यः परिखेदः,—तत्कृतः श्रमः, तस्मात्तथोक्तात्; प्राप्तनिद्रासुखानां—प्राप्तं लब्धं,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ स्वप्नः,—

**स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः।**
**कोपाऽऽवेगभयग्लानिसुखदुःखादिकारकः॥१८३॥(ञ)**

यथा,—

"मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतोः
लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेषु।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां
मुक्तास्थूलास्तरुकिशलयेष्वश्रुलेशाः पतन्ति॥" (झ)

निद्रासुखं यैः तेषां तथोक्तानां, [ "चिररतिपरिखेदप्राप्तनिद्रासुखानाम्" इति समस्तं क्वचित् पाठान्तरम् ] प्रियाणां—प्राणनाथानां, पतीनामिति भावः, अशिथिलभुजचक्राश्लेषभेदम्—अशिथिलः,—गाढ़ः, यः भुजचक्राश्लेषः,—भुजचक्रेण—भुजयोः चक्रं चक्राकारवेष्टनं, तेन आश्लेषः,—आलिङ्गनं, तस्य भेदः,—विश्लेषः, विस्रंसनमिति यावत्, तं तथोक्तं, न कुर्वते—न कुर्वन्ति, किन्तु आश्लिष्यैव स्थिताः, अन्यथा तेषां निद्राभङ्गः स्यात्। "शयानं न प्रबोधयेत्" इति स्मरणात् जाग्रत्यः अपि भुजाकर्षणद्वारा प्रियाणां निद्राभङ्गो मा भूदिति तानाश्लिष्यैव स्थिता आसन्निति भावः। [ "प्रशिथिल" इति पाठे—निद्रावशात् भुजशैथिल्यं, प्रियः प्रबुध्य भुजाक्षेपं कर्त्तुमर्हति इति सारः। इह तु "अशिथिलभुज" इत्यंशात् परं "कण्ठाश्लेषभङ्गम्" इति टीकाकृत्सम्मतः पाठः, स चाधुनिकपुस्तकेषु न पर्य्यवेक्ष्यते। अत्र पतिनिद्राभङ्गभयव्याजेनामोदातिशयहेतुभूतप्रियाऽऽलिङ्गनभङ्गविधानाभावोक्त्यार्जोक्तिः। रतिश्रमोऽत्र सञ्चारी, तदनुभावो निद्रा ]। शिशुपालवधस्येदं पद्यम्। मालिनी वृत्तम्;—"ननमयययुतेयं मालिनी भोगिलोकैः" इति तल्लक्षणात्।

(ञ) स्वप्नमाह, स्वप्न इति।—निद्रां—शयनं, शयनार्थं तल्पाद्याश्रयमिति यावत्, [ "तन्द्राम्" इति पाठान्तरे तु—जागरणसुषुप्त्योरन्तरालावस्थाम्, आलस्यरूपामवस्थामित्यर्थः ]; उपेतस्य—गतस्य, यः, विषयानुभवः,—श्रुतदृष्टार्थानां पुनस्तत्रैव प्रत्यक्षीकृततयाऽवगमः, सः, स्वप्न उच्यते इति शेषः। सः, कोपावेगभयग्लानिसुखदुःखादिकारकः। [ अत्रादिना शोकादीनां ग्रहणम्। अतोऽत्र कोपावेगादयोऽनुभावा इति बोद्धव्यम् ]।

(झ) उदाहरति, मामिति।—यक्षस्य मेघं प्रति प्रियायै वाचनिकार्पणमिदम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ अपस्मारः,—

**मनःक्षेपस्त्वपस्मारो ग्रहाद्यावेशनादिजः ।**
**भूपातकम्पप्रस्वेदफेनलालादिकारकः ॥१८४॥ (ञ)**

यथा,—

"आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम् ।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥" (ट)

स्वप्नसन्दर्शनेषु—स्वप्नाः,—सुप्तजनानां विज्ञानानि, सन्दर्शनानि—ज्ञानानि, तेषु [ चूतवृक्षादिवत्सामान्यविशेषभावेन सहप्रयोगः ]। ("स्वप्नः सुप्तस्य विज्ञानम्" इति विश्वः, "दर्शनं समये शास्त्रे दृष्टौ स्वप्नेऽक्षिणि संविदि" इति शब्दार्णवः ) यद्वा,—स्वप्ने—निद्राकालिकविषयानुभवे, यत् सन्दर्शनम्—अवलोकनं, तेषु, मया, कथमपि—महता आयासेन, लब्धायाः,—गृहीतायाः, दृष्टाया इति यावत्, ते—तव, निर्दयाश्लेष-हेतोः,—निर्गता दया परपीड़नासहिष्णुत्वं यत्र तादृशोऽसौ आश्लेषः,—आलिङ्गनं स एव हेतुः तस्मात्, गाढ़ालिङ्गनार्थमिति भावः, आकाशे—निर्विषये देशे इत्यर्थः, प्रणिहितभुजं—प्रणिहितौ स्थापितौ, भुजौ येन तादृशं, प्रसारितबाहुमिति यावत्, मां पश्यन्तीनां स्थलीदेवतानां—वनदेवतानां, मुक्तास्थूलाः,—मुक्ता इव स्थूलाः, अश्रुलेशाः,—नयनोदबिन्दवः, तरुकिशलयेषु—वृक्षाणामभिनवपत्राङ्कुरोपरिभागेषु इत्यर्थः, बहुशः,—बहुवारं, न खलु पतन्ति, इति न, किन्तु पतन्त्येवेति भावः। अत्र,—"महात्म-गुरु-देवानामश्रुपातः क्षितौ यदि। देशभ्रंशो महादुःखं मरणञ्च भवेद्ध्रुवम् ॥" इति पृथिव्यां देवाश्रुपातनिषेधदर्शनात् यचस्य मरणाभावसूचनार्थं तरुकिशलयेषु पतन्ति इत्युक्तमवधेयम्। मेघदूतस्येदं पद्यम्। मन्दाक्रान्ता वृत्तम्।

(ञ) अपस्मारमाह, मन इति।—ग्रहादीनाम्, ( आदिपदेन भूतादीनां परिग्रहः ) आवेशनादिना—(आदिपदेन धातुवैषम्यादिपरिग्रहः) आक्रमणादिना, जनितः मनसः,—चित्तस्य, क्षेपः,—विकृतिः, अपस्मारः। तत्र भूपातः,—भुवि पतनं, कम्पः, प्रकृष्टः स्वेदः, फेनलालादीनामुद्गमश्च भवति। अतोऽत्र भूमिपातादयोऽनुभावा वेदितव्याः।

(ट) उदाहरति, आश्लिष्टेति।—असौ—कृष्णः, आश्लिष्टा—आलिङ्गिता, भूमिः,—भूमितलं येन तथोक्तम्, [ एतेन भूपातः सूचितः ] उच्चैः,—उच्चस्वरेण, रसितारं—मन्द्रं कुर्व्वन्तं, लोलन्तः,—सञ्चलन्तः, भुजाकाराः,—हस्तसदृशाः, बृहन्तः,—महान्तः, तरङ्गाः, यस्य तादृशं, फेनायमानं—फेनमुद्वमन्तम्, आपगानां—



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ गर्वः,—

**गर्वो मदः प्रभावश्रीविद्यासत्कुलताऽऽदिजः।**
**अवज्ञासविलासाङ्गदर्शनाविनयादिकृत् ॥१८५॥ (ठ)**

शौर्य्यगर्वो यथा,—

"धृतायुधो यावदहं तावदन्यैः किमायुधैः ?।
यद्वा न सिद्धमस्त्रेण मम तत् केन साध्यताम् ? ॥" (ड)

अथ मरणम्,—

**शराद्यैर्मरणं जीवत्यागोऽङ्गपतनादिकृत् ॥१८६॥ (ढ)**

नदीनां, पतिं—समुद्रम्, अपस्मारिणम्—अपस्माररोगग्रस्तम्, आशशङ्के—तर्कितवान्। भूमिपातोच्चैरसनभुजाकारतरङ्गास्फोटनफेनोद्वमनादिना समुद्रोऽपस्मारग्रस्त इवालक्ष्यतेति भावः। अत एवात्रापस्मारध्वननम्। शिशुपालवधस्येदं पद्यम्। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः।

(ठ) गर्व्वमाह, गर्व्व इति।—प्रभावः,—कोशदण्डादिजन्यः प्रतापः, श्रीः,—सम्पत्तिः, विद्या—आन्वीक्षिक्यादिषु ज्ञानं, तथा सत्कुलता—आभिजात्यम्, [आदिपदेन सौन्दर्य्यादीनां परिग्रहः] तस्मात् जातः,—उत्पन्नः, यो मदः,—अहङ्कार. चित्तविकारविशेषः इति यावत्; स गर्व्वः,—तन्नाम्ना प्रसिद्धः। स च, अवज्ञा—लोकान् प्रति हेयत्वबुद्धिः, सविलासं—सभङ्गि, अङ्गदर्शनं, ["दर्शनम्" इति तु णिजन्ताणिजन्तदृशधातोः रूपं, तेन अणिजन्तपक्षे आत्मना आत्मशरीरावलोकनम्, अन्यत्र—परकीयलोचनविषयीकरणम् इति] तथा अविनयादिः,—अशिष्टव्यवहारादिस्तान् करोतीति ["सुकर्म्मपापमन्त्रपुण्येषु कृञः" (३।२।८ पा०) इति क्विप्, केचित् तु ताच्छील्ये क्विप् इति] तथोक्तः, तथा च—प्रभावादिकारणकोऽवज्ञाऽऽद्यनुभावको मानसविकारो गर्वो ज्ञेय इति निष्कृष्टम्।

(ड) उदाहरति, धृतायुध इति।—वेणीसंहारे अश्वत्थाम्न उक्तिरियम्। यावत् —यत्कालपर्य्यन्तम्, अहं धृतायुधः,—अस्त्रधारी सन्, तिष्ठामीति शेषः, तावत्, अन्यैः,—मद्धृतायुधभिन्नैरित्यर्थः, आयुधैः,—अस्त्रैः, किम् ? विफलमन्येषामस्त्रधारणमिति भावः। मम अस्त्रेण, यत्—कार्य्यं, न सिद्धं—न निष्पन्नं, तत्—कार्य्यं, केन वा साध्यताम् ? वदेति शेषः।

(ढ) मरणमाह, शराद्यैरिति।—शराद्यैः,—अस्त्रप्रहाराद्यैः, [अत्र आद्यपदेन

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"राममन्मथशरेण ताड़िता दुःसहेन हृदये निशाचरी।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा॥" (ग)

रोगशोकसन्तापादीनां परिग्रहः] जीवस्य—जीवनस्य त्यागः, उपचारात् तदानीन्तनी अवस्था, न तु तत्प्राग्वर्त्तिनीति भावः; मरणम्। तत्र अङ्गपतनादि भवति। [अत्र विशेषो यथा रसगङ्गाधरे,—"रोगादिजन्या मूर्च्छारूपा मरणप्रागवस्था मरणम्। न चात्र प्राणवियोगात्मकं मुख्यं मरणमुचितं ग्रहीतुम्। चित्तवृत्त्यात्मकेषु भावेषु तस्य अप्रसक्तेः। भावेषु च सर्वेषु कार्य्यसहवर्त्तितया शरीरप्राणयोगस्य हेतुत्वात्"। उदाहरणम्,—"दयितस्य गुणाननुस्मरन्ती शयने सम्प्रति या विलोकिताऽऽसीत्। अधुना खलु हन्त सा कृशाङ्गी गिरमङ्गीकुरुते न भाषिताऽपि॥" प्रियविरहोऽत्र विभावः, वचनविरामोऽनुभावः, हन्तपदस्याचात्यन्तमुपकारकत्वाद्वाक्यव्यङ्ग्योऽप्ययं भावः पदव्यङ्ग्यतामावहति; दयितस्य गुणाननुस्मरन्तीत्यनेन व्यज्यमानं चरमावस्थायामपि तस्या दयितगुणविस्मरणं मा भूदिति विप्रलम्भस्य शोकस्य वा चरमसभिव्यक्तस्य पोषकम्। अयञ्च विवेकः,—स्वव्यञ्जकवाक्योत्तरवर्त्तिना वाक्यान्तरेण सन्दर्भघटकेन नायिकाऽऽदेः प्रत्युज्जीवनवर्णने विप्रलम्भस्य, अन्यथा तु करुणस्य पोषक इति। कवयः पुनरमुं प्राधान्येन न वर्णयन्ति, अमङ्गलप्रायत्वात्। प्रदीपकारा अप्याहुः,—"जीवस्योद्गमनारम्भो मरणं परिकीर्त्तितम्। सम्मोहेन्द्रियसंग्लानिगात्रविक्षेपणादिकृत्॥" इति]।

(ग) उदाहरति, रामेति।—दुःसहेन—सोढुमशक्येन, राममन्मथशरेण—राम एव मन्मथः कामः, अन्यत्र,—रामः,—अभिरामः, मनोहर इत्यर्थः, मन्मथः, तस्य शरेण, हृदये—वक्षसि, पक्षे—मनसि च, ("हृदयं मनउरसोः" इति विश्वः) ताड़िता —आहता, विद्धाङ्गा इति यावत्, अत एव गन्धवद्रुधिरचन्दनोक्षिता—गन्धवत् दुर्गन्धि यत् रुधिरम् असृक्, तदेव चन्दनं चन्दनस्थानीयमित्यर्थः, तेन उक्षिता लिप्ता, अपरत्र,—गन्धवती ये रुधिरचन्दने कुङ्कुमचन्दने, ताभ्याम् उक्षिता ("रुधिरं कुङ्कुमासृजोः" इति विश्वः) सती, सा—विख्याता, निशासु चरतीति निशाचरी—राक्षसी ताड़केति यावत्, अन्यच,—अभिसारिका नायिका इत्यर्थः, जीवितेशवसतिं— जीवितेशः यमः, अन्यत्र,—प्रियः ("जीवितेशो यमे पुंसि प्रिये स्याज्जीवितेश्वरे" इति मेदिनी) तस्य वसतिं—वासस्थानं, जगाम। अत्राभिसारिकायाः प्रियसन्निधौ अभिसरणं व्यङ्ग्यं, यमसन्निधौ प्रयाणञ्च ताड़कायाः वाच्यम् इति बोध्यम्। रघुवंशस्येदं पद्यम्। रथोद्धता छन्दः,—"रान्नरावथ रथोद्धता लगौ" इति तल्लक्षणात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ आलस्यम्,—

**आलस्यं श्रमगर्भाद्यैर्जाड्यं जृम्भाऽऽसितादिकृत् ॥१८७॥ (त)**

यथा,—

"न तथा भूषयत्यङ्गं न तथा भाषते सखीम् ।
जृम्भते मुहुरासीना बाला गर्भभरालसा ॥" (थ)

अथ अमर्षः,—

**निन्दाऽऽक्षेपापमानादेरमर्षोऽभिनिविष्टता ।
नेत्ररागशिरःकम्प-भ्रूभङ्गोत्तर्जनादिकृत् ॥१८८॥(द)**

यथा,—

"प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात् ।
न त्वेवं दूषयिष्यामि शस्त्रग्रहमहाव्रतम् ॥" (ध)

---

(त) आलस्यमाह, आलस्यमिति।—श्रमेण, गर्भादिना वा [ आदिपदेन प्रचुरभोजनादेः ग्रहणम् ] शरीरस्य जाड्यं—चालनानुत्साहत्वमित्यर्थः, कर्म्मवैमुख्यमिति यावत्, आलस्यम्। तत्र जृम्भा, आसितम्—उपवेशनं तदादिकं भवति। किन्तु इदमवधेयम्,—अत्र न सर्वथा सामर्थ्याभावः, नापि कार्य्याकार्य्यपरिशून्यता, अतः कार्य्याकरणरूपस्य अनुभावस्य समानत्वेऽपि नेयं ग्लानिर्न वा जड़तेति।

(थ) आलस्यमुदाहरति, नेति।—बाला—कामिनी, गर्भभरेण अलसा—मन्थरा सती, अङ्गं, तथा—पूर्ववदित्यर्थः, न भूषयति—नालङ्करोति, सखीञ्च तथा न आभाषते—सख्या सममपि आलापं न करोतीत्यर्थः, केवलम् आसीना—उपविष्टा सती, मुहुः,—पुनः पुनः, जृम्भते—आलस्यं प्रकटयति इति भावः। अत्र गर्भभरालम्बनकः सन्निधीयमानप्रसववेदनास्मरणोद्दीपनकः, मन्थरगमनाद्यनुभाववान्, आलस्यं नाम सञ्चारी प्रतीयते।

(द) अमर्षमाह, निन्देति।—निन्दा—गर्हा, आक्षेपः,—तिरस्कारः, अपमानम्—अवज्ञा, इत्यादिहेतोः [ आदिपदेन वित्तग्रहणादेर्ग्रहणम् ] अभिनिविष्टता—वैरनिर्यातनादावभिनिवेशः, अमर्षः। क्रोधस्तु उत्कटापचिकीर्षा, इत्यनयोर्भेदः। तत्र नेत्ररागः,—चक्षुषो रक्तत्वं, शिरःकम्पः, भ्रूभङ्गः, तथा उत्तर्जनादि भवति।

(ध) उदाहरति, प्रायश्चित्तमिति।—विश्वामित्रादीन् प्रति परशुरामोक्ति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ निद्रा,—

चेत:सम्मीलनं निद्रा श्रमक्लमदादिजम्।
जृम्भाऽक्षिमीलनोच्छ्वासगात्रभङ्गादिकारणम् ॥ १८९॥ (न)

यथा,—

"सार्थकानर्थकपदं ब्रुवती मन्थराक्षरम्।
निद्राऽर्द्धमीलिताक्षी सा लिखितेवास्ति मे हृदि ॥" (प)

अथ अवहित्था,—

भयगौरवलज्जाऽऽदेर्हर्षाद्याकारगुप्तिरवहित्था।
व्यापारान्तरसक्त्यन्यथाऽवभाषणविलोकनादिकरी ॥१९०॥ (फ)

---

रियन्। पूज्यानां व:,—युष्माकं, व्यतिक्रमात्—विशेषेण आज्ञाभङ्गात्, प्रायश्चित्तं—पापशोधनानुकूलं कर्म्म, चरिष्यामि, येन पूज्यपूजाव्यतिक्रमजं पापं नश्येदिति भाव:; तु—किन्तु, शस्त्रग्रह:,—शस्त्रधारणमेव महाव्रतम्, एवं—सङ्कल्पितकार्य्यमनिष्पाद्यैव त्यागरूपेण, न दूषयिष्यामि। भवद्भि: पूज्यै: शस्त्रग्रहणं मम निषिध्यते, अहन्तु भवतां तद्वाक्यमगणयित्वैव अधुना शस्त्रग्रहणेन शत्रुं घातयिष्यामि, पश्चात् प्रायश्चित्तं करिष्यामीति भाव:। महावीरचरितस्येदं पद्यम्।

(न) निद्रामाह, चेत इति।—श्रमेण, क्लमेन—क्लान्त्या, मदादिना च जनितं चेतस:,—चित्तस्य, सम्मीलनं—मुकुलीभाव:, मेध्यानाड़ीप्रवेशेन निश्चलत्वमित्यर्थ:, निद्रा। तत्र जृम्भा, अक्षिमीलनम्, उच्छ्वास:, तथा गात्रभङ्गादिश्च भवति।

(प) उदाहरति, सार्थकेति।—सखायं प्रति कस्यचिन्नायकस्य उक्ति:। सा—मत्कान्ता, निद्रया अर्द्धमीलिते अक्षिणी यस्या: तथाभूता, अत एव सार्थकानि—अर्थयुक्तानि, अनर्थकानि—अर्थविरहितानि, च पदानि यस्मिन् तत् यथा तथा, मन्थराणि—जड़ानि, असम्पूर्णानि वा, अक्षराणि यस्मिन् तत् यथा तथा, ब्रुवती सती, मे—मम, हृदि लिखितेव—चित्रितेव, धारावाहिकस्मरणस्फोरणाय इति भाव:, अस्ति। यथा वा "निमीलितादक्षियुगाच्च निद्रया हृदोऽपि वाह्येन्द्रियमौनमुद्रितात्। अदर्शि सङ्गोप्य कदाऽप्यवीक्षितो रहस्यमस्या: स महन्महीपति: ॥" इति।

(फ) अवहित्थामाह, भयेति।—भयात्, गौरवात्, लज्जाऽऽदेश्च हेतो:, हर्षादीनाम्, आकाराणां—तत्तद्भावसूचकमुखरागादीनामित्यर्थ:, गुप्ति:,—गोपनं, संवरणमिति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्त्राणि गणयामास पार्वती॥" (ब)

अथ औत्सुक्यम्,—

**इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता।
चित्ततापत्वरास्वेददीर्घनिश्वसितादिकृत्॥१९१॥** (भ)

यथा,—

"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपाः
ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः।
सा चैवास्मि तथाऽपि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते॥" (म)

अत्र यत् काव्यप्रकाशकारेण रसस्य प्राधान्यमित्युक्तं, तत्

---

यावत्, अवहित्था—अ-वहिः-स्थानमिति तथोक्ता [ 'सुपि स्थः' ( ३।२।४ पा० ) इत्यत्र "स्थः" इति विभागे कप्रत्यये कृते, स्त्रियां पुनष्टापि पृषोदरादित्वात् रूपमिदम् ] तत्र व्यापारान्तरे—कार्य्यान्तरे, सक्तिः,—आसङ्गः, अन्यथा—अप्रक्रान्तस्य, अवभाषणं, विलोकनादिकञ्च भवति। [ अत्रादिपदेन क्रियामायायां परिग्रहः ]।

( ब ) उदाहरति, एवमिति।—देवर्षौ—नारदे, एवं वादिनि सति, पितुः,—हिमाद्रेः, पार्श्वे स्थिता इति शेषः, पार्वती, अधोमुखी—अवनतवदना सती, लीलाकमलपत्त्राणि—क्रीड़ार्थं धृतस्य पद्मस्य पत्त्राणि, गणयामास। अत्र कमलपत्रगणनया महादेवेन समं भाविनः स्वपरिणयस्य प्रश्नसूचनं गूहितम्। कुमारसम्भवस्येदं पद्यम्।

( भ ) औत्सुक्यमाह, इष्टेति।—इष्टस्य—प्रियस्य, अनवाप्तेः,—अप्राप्तेः हेतोः, कालक्षेपस्य—कालविलम्बस्य, असहिष्णुता, औत्सुक्यम्। तच्च चित्तस्य—मनसः, तापः, त्वरा, स्वेदः, दीर्घनिश्वासादिकं भवति।

( म ) उदाहरति, य इति।—व्याख्यातं पद्यमिदं काव्यनिरूपणप्रस्तावे १५पृष्ठे। अत्र "समुत्कण्ठते" इति पदेन नायकेन सममनुभूतस्य रेवारोधसि तत्तत्सुरतविधेरौत्सुक्यं स्फुटं नायिकायाः प्रतीयते।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रसनधर्मयोगित्वाद् व्यभिचारिभावस्यापि रसशब्दवाच्यत्वेन गतार्थं मन्तव्यम्। (य)

अथ उन्मादः,—

चित्तसम्मोह उन्मादः कामशोकभयादिभिः।
अस्थानहासरुदितगीतप्रलपनादिकृत्॥ १९२॥ (र)

यथा मम,—

"भ्रातर्द्विरेफ! भवता भ्रमता समन्तात्
प्राणाधिका प्रियतमा मम वीक्षिता किम्?"।

(झङ्कारमनुभूय सानन्दम्)

"ब्रूषे किमोमिति सखे! कथयाशु तन्मे
किं किं व्यवस्यति? कुतोऽस्ति? च कीदृशीयम्?॥" (ल)

(य) अत्रेत्यादि।—अत्र—अस्मिन्नुदाहृते पद्ये, काव्यप्रकाशकारेण रसस्य प्राधान्यम् इत्येवं यत् उक्तम्, तत् रसनधर्म्मित्वात्—"रस्यते" इत्येवमास्वादनधर्मशालितया, व्यभिचारिभावस्यापि रसशब्दवाच्यत्वेन—रसवाच्यत्वोपपत्त्या, गतार्थं—प्राप्तविषयम् इति मन्तव्यम्। अयं भावः,—अत्रानुभावादिकृतपरिपोषरहिततया रतेः सम्पूर्णरसत्वं न सम्भवति, वर्णनीयतया चमत्कारित्वेन औत्सुक्यस्यैव प्राधान्यम्; अत एव प्रकाशटीकाकारा अप्याहुः,—"रसपदं चात्र सम्भोगव्यभिचार्य्यौत्सुक्यमाह "रस्यते आस्वाद्यते" इति व्युत्पत्त्या; न तु सम्भोगनामा रसः। स्वाधीनपतिकायाः क्रीड़ास्थानं प्रत्युत्सुकताया वर्णनीयत्वात्" इति।

(र) उन्मादमाह, चित्तेति।—कामशोकभयादिभिः हेतुभिः, चित्तस्य सम्मोहः,—चेतनाचेतनादिविशेषज्ञानजननाक्षमत्वम्, उन्मादः। तत्र अस्थाने—हासादेरविषये, हासः, रुदितं, गीतं, प्रलपनं—प्रलापः, इत्यादिकं भवति। तथोक्तं नाट्यशास्त्रकारैः,—"इष्टजनविभवनाशादभिघाताद्वातपित्तकफकोपात्। विविधाच्चित्तविकारादुन्मादो नाम सम्भवति॥ अनिमित्तहसितरुदितोपविष्टगीतप्रधावितोत्क्रुष्टैः। अन्यैश्च विकारकृतैरुन्मादं सम्प्रयुञ्जीत॥" इति।

(ल) उदाहरति, भ्रातरिति।—हे भ्रातः द्विरेफ!—भ्रमर! समन्तात्—चतुर्दिक्षु, भ्रमता भवता मम प्राणाधिका—प्राणेभ्योऽप्यतिशयिता, अत एव प्रियतमा किं वीक्षिता?—दृष्टा? (झङ्कारं—मधुपध्वनिम्, अनुभूय—स्वीकारार्थकतया

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ शङ्का,—

**परक्रौर्य्यात्मदोषाद्यैः शङ्काऽनर्थस्य तर्कणम् ।**
**वैवर्ण्यकम्पवैस्वर्य्यपार्श्वालोकाऽऽस्यशोषकृत् ॥१९३॥ (ब)**

यथा मम,—

"प्रायेशेन प्रहितनखरेष्वङ्गकेषु क्षपाऽन्ते
जातातङ्का रचयति चिरं चन्दनालेपनानि ।
धत्ते लाक्षामसकृदधरे दत्तदन्तावघाते
क्षामाङ्गीयं चकितमभितश्चक्षुषी विक्षिपन्ती ॥" (श)

---

निश्चित्य, सानन्दम् ) हे सखे ! किं ब्रूषे ? ओम् इति ?—[ ओम् इति स्वीकारसूचकमव्ययम् ] तत्—तर्हि, आशु—शीघ्रं, मे—मह्यं, कथय—ब्रूहि, इयं किं किं व्यवस्यति—कर्त्तुमीहते ? कुतः,—कुत्र अस्ति ? कीदृशी च वर्त्तते ? इति शेषः इति । [ अत्र कामेन "भ्रमरः प्रत्युत्तराक्षमः" इति विशेषनिर्द्धारणात्क्षमत्वं बोध्यम् ]। वसन्ततिलकं वृत्तम् । [ यथा वा—"हंस ! प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता । विभावितैकदेशेन देयं यदभियुज्यते ] ॥" इति । परिपुष्टिस्तु विक्रमोर्वश्यादौ ।

( ब ) शङ्कामाह, परेति ।—परस्य क्रौर्य्यं—क्रूरता, तथा आत्मनः दोषः, तदेवमादिभिः, अनर्थस्य—अनिष्टस्य, आपद इति यावत्, तर्कणं—सम्भावना, शङ्का । ( एषा हि भीत्याद्युद्भावनेन प्रकम्पाद्युत्पादिका, न हि पूर्व्वदृष्टस्मृतिः इति विशेषः ); तत्र वैवर्ण्यं, कम्पः, वैस्वर्य्यं—स्वरभङ्गः, पार्श्वालोकः,—पार्श्वावलोकनम्, आस्यस्य—मुखस्य शोषश्च भवति इति भावः ।

( श ) उदाहरति, प्रायेशेनेति ।—इयं—दृश्यमाना, क्षामाङ्गी—कृशाङ्गी, प्रायेशेन—प्राणनाथेन, कान्तेनेति यावत्, प्रहितनखरेषु—दत्तनखविलेखनेषु, अङ्गकेषु, जातातङ्का—सख्याद्युपहासादेः सञ्जातसाध्वसा सती, क्षपाऽन्ते—रात्र्यवसाने, असमयेऽपि इति भावः, अभितः,—सर्व्वतः, चकितं—भीतं यथा तथा, असकृत्—पुनः पुनः, चक्षुषी विक्षिपन्ती सती, चिरं चन्दनालेपनानि, नखचिह्नगोपनार्थमिति भावः, रचयति, तथा दत्तदन्तावघाते—दंशिते इत्यर्थः, अधरे लाक्षां धत्ते—धारयति, अर्पयति इत्यर्थः । अयं भावः,—यदि सखी अन्या वा काऽपि ममेदमङ्गकेषु क्षतं द्रक्ष्यति, तदा किमहं तया पृष्टोत्तरयिष्यामि ? परं भविष्यामि तदानीं तासां सर्व्वासां

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ स्मृतिः,—

**सदृशज्ञानचिन्ताऽऽद्यैर्भ्रूसमुन्नयनादिकृत्।**
**स्मृतिः पूर्वानुभूतार्थविषयज्ञानमुच्यते ॥१९४॥ (ष)**

यथा मम,—

"मयि सकपटं किञ्चित् क्वापि प्रणीतविलोचने
किमपि नयनं प्राप्ते तिर्य्यग्विजृम्भिततारकम्।
स्मितमुपगतामालीं दृष्ट्वा सलज्जमवाञ्चितं
कुवलयदृशः स्मेरं स्मेरं स्मरामि तदाननम् ॥" (स)

---

परिचितरहस्या, इति रहः स्थितैव बहिर्गमनात् प्राक् तद्गोपनार्थमेवं कृतवतीति। अत्र सम्भोगचिह्नगोपन एव विश्रान्तिरिति शङ्काया एव प्राधान्यम्। मन्दाक्रान्ता वृत्तम्।

(ष) स्मृतिमाह, सदृशेति।—सदृशज्ञानेन, चिन्ता—भावनाख्यः संस्कारः, तदाद्यैश्च [ आद्यपदेन सम्बन्धिज्ञानादेर्ग्रहणम् ], पूर्व्वम् अनुभूतः, अर्थः,—रूपरसादिरूपः यस्य तादृशस्य विषयस्य—वस्तुनः, ज्ञानं स्मृतिः उच्यते। [ अत्र सदृशज्ञानादेः संस्कारोद्बोधनद्वारा, संस्कारस्य तु स्मृतिं प्रति साक्षादेव कारणत्वम् इति बोध्यम् ] तत्र भ्रुवोः समुन्नयनादिकं भवति।

(स) उदाहरति, मयीति।—प्रोषितस्य कस्यचित् नायकस्य सखायं प्रत्युक्तिरियम्। सकपटं यथा स्यात् तथा, क्वापि—कुत्रापि, तावत् अज्ञातानुरागे कामिनीजने इति भावः, (अजिज्ञासितपदार्थे वा) किञ्चित्—ईषत्, प्रणीतविलोचने—निक्षिप्तनयने मयि, अथ किमपि—कामिनीजनस्याधरामृतपानायानुज्ञासूचकं सप्रेमदृष्टिपातरूपं वस्तु इत्यर्थः, तिर्य्यक् विजृम्भिता तारका यस्य तादृशं, नयनं प्राप्ते—मम दृष्टिपथं गते सति, स्मितं—हासम्, उपगतां—सम्प्राप्ताम्, आलीं—तत्र स्थिताम् अत एव तत्सर्व्वं चेष्टितं पश्यन्तीं सखीं, दृष्ट्वा, सलज्जं यथा स्यात्तथा, अवाञ्चितम्—अवनमितं, कुवलयदृशः,—नीलोत्पलाक्ष्याः, स्मेरं स्मेरं—पुनः पुनः स्मितगर्भं, तत् आननं स्मरामि। अत्र कामपि परकीयां कामिनीं कामयमानं स्वसख्याः नायकं विभाव्य, नायिकासख्याः स्मितगर्भितमुखनिरीक्षणेन नायककर्त्तृकं नायिकामुखस्मरणम्। हरिणी वृत्तं,—"नसमरसला गः षड्वेदैर्हयैर्हरिणी मता" इति लक्षणात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ मतिः,—

**नीतिमार्गानुसृत्यादेरर्थनिर्द्धारणं मतिः ।**
**स्मेरता धृतिसन्तोषौ बहुमानश्च तद्भवाः॥१९५॥(ह)**

यथा,—

"असंशयं क्षत्रपरिग्रहक्षमा यदार्य्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥" (क)

अथ व्याधिः,—

**व्याधिर्ज्वरादिर्वाताद्यैर्भूमीच्छोत्कम्पनादिकृत् ॥१९६॥ (ख)**

---

(ह) मतिमाह, नीतीति ।—नीतिमार्गः,—नीतिशास्त्रं, तस्य अनुसृत्यादेः,—अनुसरणादेः, अवगमादेरिति यावत्, [आदिपदेन अनुमानादेर्ग्रहणम्] हेतोः अर्थानां—कार्य्याणां, निर्द्धारणं—निर्णयः, मतिः । निगमागमसमालोचनोत्पन्नः तात्पर्य्यनिर्णयः मतिः इति निष्कर्षः । स्मेरता, धृतिः, सन्तोषः, बहुमानश्च तद्भवाः,—स्मेरताऽऽदयः तदुत्पन्ना इत्यर्थः । [अन्यत्राप्युक्तम् ;—"शास्त्रादिविचारजन्यमर्थनिर्द्धारणं मतिः ; तत्र निःशङ्कतदर्थानुष्ठानसंशयोच्छेदादयोऽनुभावा भवन्ति" इति ] ।

(क) उदाहरति, असंशयमिति ।—शकुन्तलामवलोक्य दुष्मन्तस्यानुमानमिदम् । इयं शकुन्तलेति शेषः, असंशयं—निश्चितं, क्षत्रस्य—क्षत्रियजातेः, परिग्रहे—पत्नीरूपेण स्वीकारे, क्षमा—योग्या, क्षत्रियविवाहोचितेति यावत् ; यत्—यस्मात्, आर्य्यं—साधु, निर्द्दोषमिति यावत्, मे—मम, मनः, अस्यां—शकुन्तलायाम्, अभिलाषि—समुत्सुकम् । तदेव समर्थयते, सतामिति ।—हि—यतः, सन्देहपदेषु—सन्दिग्धेषु, वस्तुषु—विषयेषु, सतां—साधूनां, कदाऽप्यनाचरितपापकर्म्मणामित्यर्थः, अन्तःकरणप्रवृत्तयः,—आन्तराणि तत्त्वानि, सङ्कल्पादयः इति यावत्, प्रमाणं—निश्चयबीजम् । साधुमनसा यत् काम्यते, तदवश्यमेव कामयितव्यं, नात्र वैफल्यसम्भव इति भावः । अत्र शकुन्तलायाः स्वपरिग्रहोचितत्वनिर्द्धारणम् । वंशस्थविलं वृत्तम् ।

(ख) व्याधिमाह, व्याधिरिति ।—वाताद्यैः,—वायुपित्तकफादिप्रकोपैरित्यर्थः, जात इति शेषः, ज्वरादिः, व्याधिः । रोगवियोगाद्युत्पन्नः चित्तोद्भवः सन्तापः व्याधिः इति सारः । अत्र विभावाः प्रियविरहवातपित्तादिप्रकोपाः, अनुभावाः शरीरशैथिल्यश्वासोद्गमादयः । [ एतदाचख्युः आयुस्तत्त्वज्ञाः,—"एकैकशो द्वन्द्वशो वा त्रयाणां वा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र दाहमयत्वे भूमीच्छादयः। शैत्यमयत्वे उत्कम्पनादयः। स्पष्टमुदाहरणम्।

अथ त्रासः,—

निर्घातविद्युदुल्काद्यैस्त्रासः कम्पाऽऽदिकारकः ॥१९७॥(ग)

यथा,—

"परिस्फुरन्मीनविघट्टितोरवः
सुराङ्गनास्त्रासविलोलदृष्टयः।
उपाययुः कम्पितपाणिपल्लवाः
सखीजनस्यापि विलोकनीयताम् ॥" (घ)

---

प्रकोपतः। वातपित्तकफानां स्युः व्याधयो ये ज्वरादयः॥ इह तत्प्रभवो भावो व्याधिरित्यभिधीयते ॥" इति ]। तत्र भूमीच्छा—भूमौ शयनेच्छा, उत्कम्पनादिकञ्च भवति। उदाहरणं यथा,—"प्रियजनपरिषङ्गाद् वेपमानां कृशाङ्गीं, विकृतवचनवर्णां खेदसंसिक्तगात्रीम्। विपुलपुलकलेखामाकलय्य ज्वरार्त्तां, कुमतिरमितचिन्तासागरे निर्ममज्ज ॥" इति।

(ग) त्रासमाह, निर्घातेति।—निर्घातः,—"यदाऽन्तरीक्षे बलवान् मारुतो मरुताऽऽहतः। पतत्यधः स निर्घातो जायते वायुसम्भवः॥" इत्येवंरूपः सुदारुणः शब्दविशेषः, विद्युत्, तथा उल्का—आकाशगामी ज्योतिरग्निमयः पदार्थविशेषः, उक्तञ्च,—"दृहच्छिखा च सूक्ष्माग्रा रक्तनीलशिखोज्ज्वला। पौरुषी च प्रमाणेन उल्का नानाविधा स्मृता ॥" इत्युक्तलक्षणा, एवमादिभिः हेतुभिः, कम्पाऽऽदिकारकः, त्रासः, भवति इति शेषः।

(घ) उदाहरति, परिस्फुरदिति।—भारवौ जलक्रीड़ावर्णनमिदम्। सुराङ्गनाः,—अप्सरसः, परिस्फुरद्भिः,—परितः सञ्चरद्भिः, मीनैः,—मत्स्यैः, विघट्टिताः,—आहताः, ताड़िता इत्यर्थः, ऊरवः,—जङ्घाः, यासां ताः, अत एव त्रासेन विलोलाः,—चञ्चलाः, दृष्टयः, यासां तथाभूताः, तथा कम्पिताः, पाणिपल्लवाः, यासां तथोक्ताः सत्यः, सखीजनस्यापि—किं पुनर्विलासिनामित्यपिशब्दार्थः, विलोकनीयतां—दर्शनीयताम्, उपाययुः,—प्रापुः। वंशस्थविलं वृत्तम्। [ यथा वा—"समुत्क्षिपन् यः पृथिवीभृतां वरं वरप्रदानस्य चकार शूलिनः। त्रसत्तुषाराद्रिसुतास‌सम्भ्रमस्वयङ्ग्रहाश्लेषसुखेन निष्क्रयम् ॥" इति शिशुपालवधे १ स० ५० श्लोकः ]।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ व्रीड़ा,—

**धार्ष्ट्याभावो व्रीड़ा वदनानमनादिकृद्दुराचारात् ॥ १९८ (ङ)**

यथा,—"मयि सकपटम्" इत्यादि ।

अथ हर्षः,—

**हर्षस्त्विष्टावाप्तेर्मनःप्रसादोऽश्रुगद्गदादिकरः ॥ १९९ ॥ (च)**

यथा,—

"समीक्ष्य पुत्रस्य चिरात् पिता मुखं
निधानकुम्भस्य यथैव दुर्गतः ।
मुदा शरीरे प्रबभूव नात्मनः
पयोधिरिन्दूदयमूर्च्छितो यथा ॥" (छ)

---

(ङ) व्रीड़ामाह, धार्ष्ट्याभाव इति ।—धार्ष्ट्यस्य—निर्लज्जत्वस्य, अभावः,—राहित्यं, व्रीड़ा । सा चेत् दुराचारात् भवति, तदा वदनस्य—उपलक्षणात् मस्तकस्य, आनमनादिं करोतीति तथाभूता । नायिकानां नायकवक्त्रावलोकनादेः, पुरुषाणाञ्च स्वीकृतनियमभङ्गापमानादेः समुद्भवः निस्तेजस्त्वाधोवदनत्वादिनिमित्तीभूतः मनोवृत्तिविशेषो व्रीड़ा । [ केचित्तु एवमुदाचख्युः, यथा हि,—"चेतोनिमीलनं व्रीड़ा व्यञ्जरागस्तवादिभिः" इति । उदाहरणं यथा वा,—"पटालग्ने पत्यौ नमयति मुखं जातविनया हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम् । न शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना ह्रिया ताम्यत्यन्तः प्रथमपरिहासे नववधूः ॥" इति ] ।

(च) हर्षमाह, हर्ष इति ।—इष्टस्य—प्रियस्य वस्तुनः, अवाप्तेः,—लाभात्, अश्रु—नेत्रजलं, गद्गदम्—अस्पष्टभाषणं, तत्करः, मनसः,—चित्तस्य, प्रसादः,—प्रसन्नता, हर्षः ।

(छ) उदाहरति, समीक्ष्येति ।—दुर्गतः,—दरिद्रः, यथा एव, निधानकुम्भस्य—रत्नगर्भस्य कलसस्य, दर्शनात् भवति इति शेषः, तथैव पिता—जनकः, चिरात् पुत्रस्य मुखं समीक्ष्य—निरीक्ष्य, इन्दूदयेन—चन्द्रोदयेन, मूर्च्छितः,—वृद्धिं गतः, पयोधिः यथा—समुद्र इव, [ अतिप्रवृद्धस्य समुद्रस्य सम्भितत्वं भवतीति अभिप्रायेणोपमा इयम्, अथवा,—यथा पयोनिधिरिन्दूदयेन तरली भवति, तथा पुत्रोत्पत्त्या हर्षतरली बभूव इति उपमा ] मुदा—हर्षेण, आत्मनः,—स्वस्य, शरीरे—शरीरचेष्टायां,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ असूया,—

**असूयाऽन्यगुणर्द्धीनामौद्धत्यादसहिष्णुता।**
**दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गिताऽऽदिकृत्॥ २०० ॥ (ज)**

यथा,—

"अथ तत्र पाण्डुतनयेन, सदसि विहितं मधुद्विषः।
मानमसहत न चेदिपतिः, परवृद्धिमत्सरि मनो हि मानिनाम्॥" (झ)

---

न प्रबभूव—न समर्थो बभूव, अपरिमितहर्षवान् आसीदित्यर्थः। इद केनापि कविना "निवातपद्मस्तिमितेन चक्षुषा नृपस्य कान्तं पिबतः सुताननम्। महोदधेः पूर इवेन्दुदर्शनाद् गुरुः प्रहर्षः प्रबभूव नात्मनि॥" इति कालिदासकृतरघुवंशीयं विकृत्य स्वीयतया प्रदर्शितमिति ज्ञेयम्। वंशस्थविलं वृत्तम्। यथा वा,—"युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत। तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः।" इति शिशुपालवधे १ स० २३ श्लोकः।

(ज) असूयामाह, असूयेति।—औद्धत्यात्—उद्धतस्वभावत्वात्, अन्येषां गुणस्य, तथा ऋद्धीनां—सम्पदाम्, असहिष्णुता, असूया। तत्र दोषाणाम्—अपरनिष्ठानामिति भावः, उद्घोषः,—उत्कीर्त्तनं, भ्रूविभेदः,—भ्रूभङ्गः, अवज्ञा, क्रोधेङ्गित—मुखरागादि क्रियते। अत एवाहुः,—"परोत्कर्षदर्शनादिजन्यः परनिन्दाऽऽदिकारणीभूतश्चित्तवृत्तिविशेषोऽसूया" इति।

(झ) उदाहरति, अथेति।—अथ—कृष्णचन्द्रस्य सर्वेभ्योऽप्यार्य्येभ्यः प्रथमं श्रेष्ठतया युधिष्ठिरेण विहितायाः पूजायाः अनन्तरम्; तत्र—तस्यां, सकलभुवनमहनीयमहात्मजनपरिमण्डिततया विख्यातायामित्यर्थः; सदसि—सभायां, ("समज्या परिषद् गोष्ठी सभासमितिसंसदः" इत्यमरः) चेदिपतिः,—चेदिदेशविशेषस्य पतिरधीश्वरः, शिशुपालः इत्यर्थः, पाण्डुतनयेन—युधिष्ठिरेण, विहितं—कृतं, वर्द्धितमित्यर्थः, मधुद्विषः,—कृष्णस्य, मानं—सम्मानं, न असहत—ईर्ष्यां चकारेत्यर्थः; हि—तथाहि, मानिनाम्—अभिमानवताम्, उद्धतस्वभावानामिति यावत्, मनः, परेषां वृद्धौ—अभ्युदये, मत्सरि—विद्वेषि, भवति। अत्र महामहिममहनीयस्य भगवतो मानासहनकथनेन आक्षिप्यतन्निन्दाद्यनुभाववती शिशुपालगता भगवदुत्कर्षालम्बनाऽसूयाऽभिव्यज्यते। शिशुपालवधस्येदं पद्यम्। उद्गता वृत्तं,—"प्रथमे सजौ यदि सलौ च, नसजगुरुकाण्यनन्तरम्। यद्यथ भनभगाः स्युरथो, सजसा जगौ च भवतीयमुद्गता॥" इति तल्लक्षणात्।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ विषादः,—

**उपायाभावजन्मा तु विषादः सत्त्वसङ्क्षयः ।**
**निश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत् ॥२०१॥(ञ)**

यथा मम,—

"एसा कुड़िलघणेण सुचिउरकडापेण तुह णिबद्धा वेणी ।
मह सहि ! दारइ दंसइ आअसजट्ठिव्व जमउरइव्व हिअअं ॥"(ट)

अथ धृतिः,—

**ज्ञानाभीष्टाऽऽगमाद्यैस्तु सम्पूर्णस्पृहता धृतिः ।**
**सौहित्यवचनोल्लाससहासप्रतिभाऽऽदिकृत् ॥२०२॥(ठ)**

---

(ञ) विषादमाह, उपायेति ।—उपायानामभावात् जन्म यस्य तादृशः, सत्त्वसङ्क्षयः,—उत्साहह्रासः, विषादः । तत्र निश्वासः, उच्छ्वासः, हृत्तापः, सहायान्वेषणादिकञ्च भवति ।

(ट) उदाहरति, एसा इति ।—["एषा कुटिलघनेन सुचिकुरकलापेन तव निबद्धा वेणी । मम सखि ! दारयति दशत्यायसयष्टिरिव यमोरगीव हृदयम् ॥" इति संस्कृतम् ] । हे सखि ! [ एतेन तस्याः श्रेणीऽर्थित्वं स्वावेदनीत्तरञ्च कर्त्तव्यौचित्यावश्यकाशंसनञ्च आवेद्यते ] कुटिलघनेन—कुञ्चितनिविड़ेन, [ अत्र विशेषणोभयसमासः ] सुचिकुरकलापेन—शोभनेन कुन्तलसमूहेन, [ "चिउरक्कडापेण ( चिकुरकलापेन )" इति मावपाठे छन्दोभङ्गः ] ( "चिकुरः कुन्तलो वालः" इत्यमरः ) निबद्धा, एषा—दृश्यमाना, तव वेणी, आयसयष्टिरिव—लौहदण्ड इव, असिरिव वा, मम हृदयं दारयति—खण्डयति, तथा यमोरगीव—कालोरगीव, [ कालोरगीवेति पाठान्तरे छन्दोभङ्गः ] दशति च । [ अतोऽस्या दारणदशनभयं यथा मम न भवेत् तथा त्वया यतितव्यम् ; तच्च अधरामृतदानेनैवेति व्यज्यते । अत्रोत्प्रेक्षाऽनुप्राणिता भेदेऽप्यभेदातिशयोक्तिः । एवमेकस्या वेण्या दारणदशनरूपोभयविधकार्य्यकारिताऽभिधानेन आयासयष्टि-यमोरगीरूपोभयविधोपमानापेक्षया उपमेयरूपायास्तस्या व्यतिरेकाद्व्यतिरेकोऽभिव्यज्यते ] आर्य्यागीतिश्छन्दः,—"आर्य्याप्राग्दलमन्तेऽधिकगुरु तादृक् परार्द्धमार्य्यागीतिः" इति तल्लक्षणात् ।

(ठ) धृतिमाह, ज्ञानेति ।—ज्ञानस्य तथा अभीष्टस्य आगमः, एवमादिभिः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा मम,—

"कृत्वा दीननिपीड़नां निजजने बद्धा वचोविग्रहं
नैवालोच्य गरीयसीरपि चिरादामुष्मिकीर्यातनाः।
द्रव्यौघाः परिसञ्चिताः खलु मया यस्याः कृते साम्प्रतं
नीवाराञ्जलिनाऽपि केवलमहो ! सेयं कृतार्था तनुः॥" (ड)

अथ चपलता,—

**मात्सर्य्यद्वेषरागादेश्चापल्यं त्वनवस्थितिः।**
**तत्र भर्त्सनपारुष्यस्वच्छन्दाऽऽचरणादयः॥२०३॥(ढ)**

हेतुभिः, सम्पूर्णस्पृहता—पूर्णकामत्वं, धृतिः। तत्र सौहित्यं—तृप्तिः, ("सौहित्यं तर्पणं तृप्तिः" इत्यमरः) वचनानामुल्लासः, सहासा—हास्यसहिता, प्रतिभा—नवनवोन्मेषशालिनी बुद्धिः, तस्याः स्फूर्त्तिश्च भवति। तथाऽऽहुः,—"लोभशोकभयादिजनितोपप्लवनिवारणकारणीभूतश्चित्तवृत्तिविशेषो धृतिः" इति।

(ड) उदाहरति, कृत्वेति।—कृतानि पापानि तत्त्वज्ञानदशायां स्मरतः कस्यापि सर्व्वतो विरक्तस्योक्तिरियम्। दीनानां—नानाविपद्ग्रस्तानां जनानामिति भावः, निपीड़नाम्—उत्कोचादिद्वारा उत्पीड़नमित्यर्थः, कृत्वा, निजजने—पुत्रमित्रभावादिरूपे बन्धुजने, वचसां विग्रहं—वाक्कलहं, बद्धा—कृत्वेत्यर्थः, वाङ्मात्रेणापि शोषणं परित्यज्येति भावः, चिरात्—बहुकालिकीरित्यर्थः, गरीयसीः,—अतिमहतीः, आमुष्मिकीः,—पारलौकिकीः, यातनाः,—नानानरकसम्बन्धीनि दुःखानीति भावः, अपि, नैव आलोच्य—अगणयित्वा इत्यर्थः, दीनोत्पीड़नादिप्रत्यवायभयं सर्व्वथा विस्मृत्येति भावः, यस्याः,—तन्वाः, कृते—निमित्तम्, उपभोगार्थमित्यर्थः, मया, द्रव्यौघाः,—द्रव्यस्य—स्वर्णरत्नादिरूपवित्तस्य, ओघाः,—राशयः, धनराशयः इत्यर्थः, ("द्रव्यन्तु पित्तलौ वित्ते पृथिव्यादौ विलेपने। क्लीवे च भेषजे भव्ये द्रुविकारे च वाच्यवत्॥" इति मेदिनी) परिसञ्चिताः,—सङ्गृहीताः, सा इयं—मामकीना, तनुः,—शरीरं, खलु, साम्प्रतं—वार्धके इत्यर्थः, तत्त्वज्ञानदशायामिति यावत्, केवलं नीवाराञ्जलिना—एकाञ्जलिमितेन तृणधान्येन, अपि, कृतार्था—अवसितप्रयोजना, पुष्यते इति यावत्, इति, अहो—आश्चर्य्यम्। अत्र तत्त्वज्ञानेन निस्पृहत्वं धृतेः प्रत्यायकम्। शार्दूलविक्रीड़ितं वृत्तम्।

(ढ) चपलतामाह, मात्सर्य्येति।—मात्सर्य्यात्, द्वेषात्, रागादेः,—अनु-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"अन्यासु तावदुपमर्दसहासु भृङ्ग !
लोलं विनोदय मनः सुमनोलतासु ।
मुग्धामजातरजसं कलिकामकाले
व्यर्थं कदर्थयसि किं नवमालिकायाः ?" ॥ (ग)

---

रागादेश्व हेतोः, अनवस्थितिः,—एकत्रानवस्थानं, तु चापल्यम् । तत्र भर्त्सनं, पारुष्यं, तथा स्वच्छन्दचारित्वं भवति । यथाऽऽहुः,—"अमर्षप्रातिकूल्येर्ष्यारागद्वेषाश्च मत्सरः । इति यत्र विभावाः स्युरनुभावस्तु भर्त्सनम् ॥ वाक्पारुष्यं प्रहारश्च ताड़नं वधबन्धने । तच्चापलमनालोच्य कार्य्यकारित्वमिष्यते ॥" इति ।

(ग) उदाहरति, अन्यास्विति ।—कस्याश्चिदुपभोगानुचितावस्थायामुपभोगं कामयमानं निषेधन्त्या विदग्धोक्तिरियम् । हे भृङ्ग !—हे मधुप ! अन्यत्र,—उपचारात् तद्वत् रसिक ! इत्यर्थः । [एतेन आवेदनौचित्यं व्यज्यते] अन्यासु—एतद्भिन्नासु, उपमर्दसहासु—मधुपानकालिकचरणाघातादिरूपमुपमर्दनं सहन्ते—सोढुं क्षमन्ते इति, तथाभूतासु ; अन्यत्र,—सम्भोगकालिकचुम्बनालिङ्गनादिसहासु इत्यर्थः ; सुमनोलतासु—कुसुमवल्लीषु ; अन्यत्र,—सुमनसाम्—उदारचेतसां, लताः,—लता इवामोदहेतुभूतास्तासु, सुन्दरीषु इति यावत् ; लोलं—चपलं, परत्र,—मन्मथोद्रेकेणोद्धतमिति भावः, मनः, तावद् विनोदय—प्रीणय । नवमालिकायाः,—वासन्त्याः ; अन्यत्र,—उपचारात् नवा—अभिनवपरिणयाऽसौ, मालिका—विलासिनीति तस्यास्तथोक्तायाः, मुग्धाम्—अभिनवां, कोमलामित्यर्थः, अन्यत्र,—सुरतमूढ़ाम्, अजातरजसम्—अनुद्भूतपरागाम्, तत्र मधुनोऽभावात् इति भावः, अन्यत्र,—अजातार्त्तवां, तदुपभोगोऽधर्म्मकारकतया निषेधात् इति भावः ; कलिकां—कोरकं, ("कलिका कोरकः पुमान्" इत्यमरः) अन्यत्र,—उपचारात् तत्सदृशं गुह्याङ्गमिति भावः, अकाले—मकरन्दाभावदशायाम्, अन्यत्र,—बाल्यतया सङ्गानर्हदशायामित्यर्थः, किं—कथं, व्यर्थं—निरर्थकं, कदर्थयसि ?—क्लेशयसि ? अत्रोपभोक्तुः उपभोगानर्हामपि उपभोक्तुं कामयमानस्य कालासहिष्णुतया चापल्यं प्रतीयते । श्लोकेऽस्मिन् उपमर्दादिश्लिष्टविशेषणमहिम्ना प्रस्तुतहठकामुकप्रौढ़नायिकादिषु अप्रस्तुतभृङ्गसुमनोलतादीनां तथा प्रस्तुतबालिकादिषु अप्रस्तुतनवमालिकादीनां व्यवहारसमारोपात् श्लेषोत्था समासोक्तिः । वसन्ततिलकं वृत्तम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ ग्लानिः,—

रत्यायासमनस्तापक्षुत्पिपासाऽऽदिसम्भवा।
ग्लानिर्निष्प्राणता कम्पकार्श्यानुत्साहतादिकृत् ॥२०४॥(त)

यथा,—

"किशलयमिव मुग्धं बन्धनाद्‌ विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥" (थ)

---

(त) ग्लानिमाह, रत्यायासेति।—रत्यायासेन—सुरतपरिश्रमेण, मनस्तापेन, क्षुधा, पिपासाऽऽदिना च समुद्भूता, निष्प्राणता—असामर्थ्यमित्यर्थः, ग्लानिः। तत्र कम्पः, कार्श्यम्, अनुत्साहताऽऽदिकञ्च स्यात्। यथाऽऽहुः,—"रत्याद्यायासक्षुत्तृड्भि-ग्लानिर्निष्प्राणता मता। अनुत्साहाङ्गदौर्बल्यखेदाद्यैर्व्यक्तिमेति सा॥" इति।

(थ) उदाहरति, किशलयमिवेति।—जानकीं विलोक्य तत्स्वरूपं निरूपयन्त्या मुरलाया उक्तिरियम्। शरदिजः,—शरत्कालजः, घर्मः,—निदाघः, सूर्य्यताप इति यावत्, केतकीगर्भपत्रं—केतक्याः,—केतकीपुष्पस्य, गर्भपत्रं—मध्यस्थितं पत्रम्, इव, हृदयकुसुमशोषी—हृदयमेव कुसुमं कोमलतया पुष्पं तत् शोषयतीति तथोक्तः; यद्वा, —हृदयस्य कुसुमं कुसुमाकारं गर्भस्थानं तच्छोषी; अत एव दारुणः,—भयङ्करः, दीर्घशोकः,—दीर्घः आयतः, बहुकालव्यापितयाऽप्राप्यपार इति यावत्, शोकः,— विरहजन्यखेदविशेषः इति तथोक्तः; बन्धनात्—वृन्तात्, उत्पत्तिस्थानादिति यावत्, विप्रलूनं—विच्छिन्नं, मुग्धं—बालं, मनोरममिति यावत्, किशलयमिव स्थितम्, अस्याः,—सीतायाः, परिपाण्डु—परितः पाण्डु श्वेतच्छायं, क्षामं—कृशं, शरीरं, ग्लपयति—सन्तापयतीत्यर्थः [ ग्लै हर्षक्षये इति धातोः णिचि पुकि पाक्षिकह्रस्वः ]। अत्र सीतायाः विरहावस्थायां मनस्तापालम्बना शरीरपाण्डुत्वाद्यनुभावा ग्लानिः प्रतीयते। उत्तररामचरितस्येदं पद्यम्। मालिनी वृत्तम्। यथा वा "लुलितनयनताराः क्षामवक्त्रेन्दुबिम्बा रजनय इव निद्राक्लान्तनीलोत्पलाढ्यः। तिमिरमिव दधानाः स्रंसिनः केशपाशान् अवनिपतिगृहेभ्यो यान्त्यमूर्वारबध्वः॥" इति। पूर्व्वत्र विरहतापजन्या, अत्र पुनः सुरतश्रमजन्या ग्लानिरिति विशेषः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ चिन्ता,—

ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत्॥२०५॥(द)

"कमलेण विअसिएण अ
संजोअंती विरोहिणं ससिबिम्बं।
करअलपल्लत्थमुही
किं चिंतसि ? सुमुहि ! अंतराहिअहिअआ॥" (ध)

अथ वितर्कः,—

तर्को विचारः सन्देहाद्भ्रूशिरोऽङ्गुलिनर्त्तकः॥२०६॥(न)

यथा,—"किं रुद्धः प्रियया ?—" इत्यादि।

एते च त्रयस्त्रिंशद्व्यभिचारिभेदाः" इति यदुक्तं तदुपलक्षणमित्याह (प),—

(द) चिन्तामाह, ध्यानमिति।—हितस्य अनाप्तेः,—अलाभात्, शून्यता—हृदयस्य ज्ञानशून्यत्वं, तस्याः, तथा श्वासतापयोः कारणं ध्यानं चिन्ता।

(ध) उदाहरति, कमलेनेति।—["कमलेन विकसितेन च संयोजयन्ती विरोधिनं शशिबिम्बम्। करतलपर्य्यस्तमुखी किं चिन्तयसि सुमुखि ! अन्तराहितहृदया ?॥" इति संस्कृतम्]। हे सुमुखि ! अन्तराहितम्—अन्तरभिनिवेशितं, हृदयं यया तादृशी, [अत्र हृदयशब्देन हृद्गतं नायकरूपं वस्तु व्यज्यते] तथा करतले—वामे इति भावः, पर्य्यस्तं—स्थापितं, मुखं यया तथाभूता, अत एव विकसितेन—प्रस्फुटेन, कमलेन—पद्मेन च, विरोधिनं—स्वभाववैरिणं, शशिबिम्बं संयोजयन्ती सती, किं चिन्तयसि ? [अत्र करतलं कमलं मुखं शशिबिम्बमित्यतिशयोक्तिर्भेदेऽप्यभेदरूपा बोद्धव्या। करतलोपरि कपोलनिधानं शोकमुद्रेति प्रोषितभर्त्तृकाया नायिकाया नायकोत्सुकतया चिन्ताऽभिव्यज्यते]। आर्य्यागीतिश्छन्दः।

(न) वितर्कमाह, तर्क इति।—सन्देहात्—संशयात् हेतोः, भ्रुवोः, शिरसः, अङ्गुलीनाञ्च नर्त्तकः, विचारः, तर्कः।

(प) ननु एतेषां सञ्चारिभावानां कथमेतावती एव सङ्ख्या नियता स्यात्, विनयोत्कण्ठानिर्णयविवेकक्षमाकार्श्यकुतुकधार्ष्ट्यदम्भसंशयमात्सर्य्योद्वेगादीनामपि लक्ष्येषु यत्र तत्र वर्तमानत्वात् ? एवञ्चेत्, एतेऽन्येषामप्युपलक्षका इत्याह, एते चेति।—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः ॥२०७॥ (फ)

तथाहि शृङ्गारे अनुच्छिद्यमानतयाऽवस्थानाद् रतिरेव स्थायिशब्दवाच्या। हासः पुनरुत्पद्यमानो व्यभिचार्य्येव व्यभिचारिलक्षणयोगात्। तदुक्तं,—

"रसावस्थः परं भावः स्थायितां प्रतिपद्यते" इति।

तत् कस्य स्थायिनः कस्मिन् रसे सञ्चारित्वम् ? इत्याह,—

शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः।
शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः।
इत्याद्यन्यत् समुन्नेयं स्वयं भावितबुद्धिभिः ॥२०८॥(ब)

---

लक्षितलक्ष्याश्च इत्यर्थः। त्रयस्त्रिंशत्—तत्सङ्ख्यकाः, व्यभिचारिणां—सञ्चारिभावानां, भेदाः भवन्ति, इत्येवं प्राक् यदुक्तम्—अभिहितं, तत् उपलक्षणम्—अन्येषामप्युपलक्षकमिति भावः। अयं भावः;—उपलक्षणं नाम स्वप्रतिपादकत्वे सति इतरप्रतिपादको धर्म्मविशेषः, एवञ्च एषाम् उपलक्षकत्वस्वीकारेण तत्सदृशानामन्येषामपि ग्रहणमुचितमेव इति बोध्यम्। अन्ये तु नैतेभ्योऽन्ये केचिद् व्यतिरिच्यन्ते, किन्त्वेतेषु अन्तर्भूयन्ते ; तथाहि,—लज्जायां विनयस्य, औत्सुक्ये उत्कण्ठायाः कुतूहलस्य च, मतौ निर्णयस्य विवेकस्य च, धृतौ क्षमायाः, दैन्ये क्लैव्यस्य, चापले धृष्टतायाः, अवहित्थायां दम्भस्य, तर्के संशयस्य, असूयायां मात्सर्य्यस्य, त्रासे उद्वेगस्य च अन्तर्भावोपपत्तेः स्फुटं पार्थक्येन कल्पनं व्यर्थम्। यदि च,—विनयाऽऽदीनां शिरोनमनादिरूपानुभावसाम्येन लज्जाऽऽदावन्तर्भाव्यत्वोपपत्तावपि निन्द्यानिन्द्यकर्म्मालम्बनत्वादिभेदेन भिन्नतया तेषाम् अस्ति किमपि सूक्ष्ममवच्छेदकम् इत्येवाग्रहः, तर्हि तत्रापि सूक्ष्मसूक्ष्मावच्छेदककल्पनायामानन्त्यम् इति यथोक्तमेव न्याय्यं शरणम्।

(फ) रत्यादय इति।—रत्यादयः,—रतिहासादयः, अपि—ये एव शृङ्गारादौ स्थायितयाऽभिमतास्तेऽपि, किं पुनर्मात्सर्य्यादय इति भावः ; अनियते—अनिर्द्धारिते, स्वावस्थितनियमरहिते इत्यर्थः, रसे व्यभिचारिणः स्युः।

(ब) शृङ्गारेति।—शृङ्गारवीरयोः हासः, तथा वीरे क्रोधः, मतः,—बोद्धव्य इत्यर्थः, शान्ते पुनः जुगुप्सा, व्यभिचारितया कथिता, इत्यादि—एवमादि, अन्यत्—सर्व्वं, भावितबुद्धिभिः,—भाविता परिपक्वा बुद्धिर्येषां तैस्तथोक्तैः, काव्यशास्त्रनिष्णातै-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ स्थायिभावः,—

**अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः ।**
**आस्वादाङ्कुरकन्दोऽसौ भावः स्थायीति सम्मतः ॥२०९॥ (म)**

यदुक्तम्,—

"स्रक्सूत्रवृत्त्या भावानामन्येषामनुगामुकः ।
न तिरोधीयते स्थायी तैरसौ पुष्यते परम् ॥" इति (म)

---

रित्यर्थः, स्वयं समुन्नेयं—बोद्धव्यम् ; यथा शृङ्गारे शोकः, करुणे रतिः शमश्च, भयानके विस्मयः, शान्ते उत्साहः, बीभत्से भयम् इत्यादि ।

(म) स्थायिभावमाह, अविरुद्धा इति ।—अविरुद्धाः,—अविरोधिनः, विरुद्धाः,—विरोधिनः वा भावाः, यं तिरोधातुम्—आच्छादयितुम्, अक्षमाः ; तथा आस्वादस्य—रसस्य, अङ्कुरः,—प्ररोहः, तस्य कन्दः,—मूलम्, असौ भावः स्थायीति सम्मतः । अत्रेदमवधेयम्,—अन्तःकरणवृत्तिकल्पनाऽऽत्मकस्य रत्यादेर्झटिति क्षयित्वेऽपि सञ्जातसंस्काररूपेण बहुसमयं वर्त्तमानत्वात् यावद्रसप्रत्ययसमयमन्वेषणाच्च स्थायित्वम् । तथाऽभिहितमभियुक्तैः,—"विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः । आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः ॥ चिरं चित्तेऽवतिष्ठन्ते सम्बध्यन्तेऽनुबन्धिभिः । रसत्वं ये प्रपद्यन्ते प्रसिद्धाः स्थायिनोऽत्र ते ॥" इति । [ अत्र "चिरम्" इति पदं व्यभिचारिवारणाय ] । अनुबन्धिभिः,—अनुसूतैः, विभावादिभिरित्यर्थः । तथोक्तम्,—"सजातीयविजातीयैरतिरस्कृतमूर्त्तिमान् । यावद्रसं वर्त्तमानः स्थायिभाव उदाहृतः ॥" इति । "यथा नराणां नृपतिः शिष्याणाञ्च यथा गुरुः । एवं हि सर्व्वभावानां भावः स्थायी महानिह ॥" इति च नाट्यशास्त्रकारैः । अत्रायं सारः,—यथा समानलक्षणाः समानाङ्गप्रत्यङ्गाः कुलविद्याकर्म्मशिल्पविचक्षणत्वाद् राजत्वमाप्नुवन्ति, तत्रैव च अन्ये अल्पबुद्धयः तेषामेवानुचरा भवन्ति, तथा विभावानुभावव्यभिचारिणः स्थायिभावान् उपाश्रिता भवन्ति । तत्र बह्वाश्रयत्वात् स्वामिभूताः स्थायिनो भावाः । तत्स्थानीयपुरुषगुणभूता अन्ये भावास्तान् गुणतयाऽऽश्रयन्ते । परिजनभूता व्यभिचारिणो भावाः । यथा यो बहुजनपरिवारः स एव राजनाम लभते, नान्यः सुमहानपि पुरुषः, तथा विभावानुभावव्यभिचारिपरिवृतः स्थायिभावो रसतां लभते इति ।

(म) उक्तमर्थं प्राचां संवादेन स्पष्टयति, स्रगिति ।—स्रक्सूत्रवृत्त्या—मालाऽन्तर्गतसूत्रन्यायेन, अन्येषां भावानाम्, अनुगामुकः,—व्यञ्जतया सम्बन्धवान्, असौ—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तद्भेदानाह,—

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ताः शमोऽपि च ॥२१०॥

तत्र,—

रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितम्।
वागादिवैकृताच्चेतोविकासो हास इष्यते ॥
इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक्।
प्रतिकूलेषु तैक्ष्ण्यस्यावबोधः क्रोध इष्यते ॥
कार्य्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते।
रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयम् ॥
दोषेक्षणादिभिर्गर्हा जुगुप्सा विषयोद्भवा।
विविधेषु पदार्थेषु लोकसीमाऽतिवर्त्तिषु ॥
विस्फारश्चेतसो यस्तु स विस्मय उदाहृतः।
शमो निरीहावस्थायामात्मविश्रामजं सुखम्॥२११॥(य)

---

स्थायिभावः, तैः,—भावैः, न तिरोधीयते—तिरोहितस्वरूपो विधीयते, परं—केवलं, (तैः) पुष्यते—पुष्टिं प्रति नीयते।

(य) रत्यादीनाह, रतिरिति।—मनसः,—चित्तस्य, अनुकूले—प्रीतिकरे, अर्थे—वस्तुनि, ("अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः) प्रवणायितं—तदायत्तायितं, रतिः; अत्र उपचारात् तद्धर्मः, प्रेमरसार्द्रचित्तत्वं रतिरिति भावः। वागादीनां—वचनप्रभृतीनाम्, [आदिपदेन सञ्चारादीनां ग्रहणम्] वैकृतात्—विकृतिभावात्, चेतसः,—मनसः, विकासः,—स्फुरणं, हास इष्यते। इष्टस्य—प्रियस्य, नाशादिभिः हेतुभिः, चेतसः, वैक्लव्यं—व्याकुलीभावः, शोकशब्दभाक्—शोक इति शब्दं भजते लभते इत्यर्थः। प्रतिकूलेषु—विरुद्धेषु, तैक्ष्ण्यस्य—उग्रतायाः, अवबोधः,—दारुणबुद्धिविशेष इत्यर्थः, क्रोध इष्यते। कार्य्यारम्भेषु—कर्त्तव्यसम्पादनेषु, स्थेयान्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—मालतीमाधवे रतिः, नटकमेलके हासः, रामायणे शोकः, महाभारते शमः, एवमन्यत्रापि। एते हि एतेषु अन्तरा उत्पद्यमानैः तैस्तैर्विरुद्धैरविरुद्धैश्च भावैरनुच्छिन्नाः प्रत्युत परिपुष्टा एव सहृदयानुभवसिद्धाः। (र)

किञ्च,—

नानाऽभिनयसम्बन्धान् भावयन्ति रसान् यतः।
तस्माद्भावा अमी प्रोक्ताः स्थायिसञ्चारिसात्त्विकाः॥२१२॥ (ल)

यदुक्तं,—

"सुखदुःखादिभिर्भावैर्भावस्तद्भावभावनम्।" इति। (व)

—स्थिरतरः, संरम्भः,—समावेशः, उद्यतत्वमिति यावत्, उत्साहः उच्यते। रौद्रशक्त्या—द्विषतां तीव्रसामर्थ्यदर्शनेन, जनितम्—उत्पादितं, चित्तस्य वैक्लव्यदं—व्याकुलताऽऽपादकं मनोवृत्तिविशेषवस्तु इत्यर्थः, भयम्। दोषेक्षणादिभिः,—दोषदर्शनादिभिः कारणैः, विषयोद्भवा—विषयेषु भोग्यवस्तुषु, समुत्पन्ना, गर्हा—कुत्सा, जुगुप्सा। विविधेषु—नानाविधेषु, लोकसीमाऽतिवर्त्तिषु—अलौकिकेषु, पदार्थेषु, चेतसः,—चित्तस्य, यस्तु विस्तारः,—विकासः, स विस्मय उदाहृतः,—कथितः। निरीहावस्थायां—निस्पृहदशायाम्, आत्मनि—चेतसि, विश्रामजं—विश्रामजनितं, नानाविषयवासनापराङ्मुखतया समस्तक्लेशनिवृत्तिहेतुकमिति यावत्, सुखं, शमः।

(र) एते हीति।—एतेषु—रसेषु। एते—रत्यादयः। अन्तरा—मध्यतः। अनुच्छिन्नाः,—उच्छेदं न प्राप्ताः। सहृदयानां—सामाजिकानाम्, अनुभवसिद्धाः।

(ल) स्थाय्यादीनां भावशब्दवाच्यत्वे हेतुमाह, नानेति।—नानाऽभिनयसम्बन्धान्—विविधैरभिनयैर्व्यक्तानित्यर्थः, रसान् यतः भावयन्ति—व्यञ्जयन्ति, तस्मात् अमी स्थायिसञ्चारिसात्त्विकाः, भावाः, प्रोक्ताः,—कथिताः।

(व) उक्तमर्थं प्राचां संवादेन द्रढ़यति, यदुक्तमिति।—यथोक्तमित्यर्थः। सुखेति।—सुखदुःखादिभिः,—शमशोकादिरूपैः, [ अत्रादिपदेन रत्यादेः परिग्रहः ] भावैः,—स्थायिभावैः,तस्य रसस्य भावः,—रसत्वमित्यर्थः, तस्य भावनं—प्रापणं, भावः,—भावपदव्यपदेश्यः। रतिहासादिभिः स्थायिभावैः रसस्य यत् रसत्वोपकारकं तद्भावपदव्यपदेश्यमिति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ रसस्य भेदानाह,—

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।**
**बीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः॥२१३॥(अ)**

(अ) रसभेदानाह, शृङ्गारेति।—शृङ्गारः, हास्यः, करुणः, रौद्रः, वीरः, भयानकः, बीभत्सः, अद्भुतश्च, इति—एवम्, अष्टौ, रसाः मता इति शेषः, तथा—यथाऽमी रसास्तद्वत्, शान्तः, मतः रस इति शेषः। अत्रेदं बोध्यम् ;—शृङ्गारादयः शान्तान्ता नव रसाः, तत्राष्टौ इति नाट्याभिप्रायेण प्रथमं निर्दिष्टाः, शान्तस्य पुनः पार्थक्येन उल्लेखः। अतः केषाञ्चिन्मते शान्तस्य स्वरूपेणासद्भावाङ्गीकाराभावः सूच्यते। सिंहनिरीक्षणन्यायेन "तथा" इति अभिधाय तस्याङ्गीकारेण परेषां मतस्याचोदमत्त्वमपि सूच्यते इति। अयं भावः,—"शान्तस्य शमसाध्यत्वान्नटे च तदसम्भवात्। अष्टावेव रसा नाट्ये न शान्तस्तत्र युज्यते॥" इति केषाञ्चित् मतम् ; तत्रोच्यते,—न हि नटे रसव्यक्तिः अस्माभिरपि स्वीक्रियते। अथ सहृदयानां शमशालितया तेषु रसव्यक्तेर्बाध एव न ; न च नटस्य शमशालिताऽभावेन शान्ताभिनयव्यञ्जकत्वासम्भव इति वक्तुं युज्यते, तस्य स्थाय्यन्तराभावेन रसान्तराभिनयव्यञ्जकत्वस्यापि असम्भवापत्तेः। न च तदिष्टम्, अनुभवापह्नवापत्तेः। अथ नाट्ये गीतवाद्यादीनां प्रतिकूलानां सद्भावेन सहृदयेष्वपि तत्तद्विषयवैरस्यस्थायिकस्य शान्तस्य कथमभिव्यक्तिः? इति चेत्, फलबलेन स्वीक्रियताम्। तथा हि,—तत्र रसान्तरमिव त्वमपि रसमनुभवद्भिः सहृदयैः तस्यापि गीतवाद्यादौ प्रतिकूले तत्ताया दूरमपसारितत्वात्। यदि तु विषयचिन्तैव प्रतिकूलतयाऽङ्गीक्रियेत, तदाऽऽलम्बनस्य विषयोपभोगनिवृत्तत्वस्य, उद्दीपनस्य च श्रुतिस्मृतिपुराणेतिहासादिश्रवणपरमहंसोपासनतीर्थपरिभ्रमणादेरपि विप्रयत्नेन प्रतिकूलत्वम्। अत एव "अष्टावेव रसा नाट्येष्विति केचिदचूचुदन्। तदचारु, यतः काञ्चित् न रसं स्वदते नटः॥" इत्यादिना सङ्गीतरत्नाकरकृता नाट्येऽपि रसोऽसौ सिद्धान्तितः। शान्तः नाट्ये नास्ति रसः इति ये आमनन्ति, तेऽपि प्रबोधचन्द्रोदयमहाभारतादिप्रबन्धान् अवलोकयन्तः शान्तरसमभ्युपगच्छन्ति इति निर्विचिकित्सितं सहृदयानाम्। अतः सकलजनानुभवसिद्धतया दृश्यश्रव्यात्मकोभयविधेऽपि काव्ये सोऽवश्यं स्वीकार्यः। अत एव "अष्टौ नाट्ये रसाः स्मृताः" इत्यनुपदमेव "शान्तोऽपि नवमो रसः" इति प्रकाशकारा अपि सूत्रितवन्तः। एवञ्च प्रकृतं रसं प्रकारान्तरेण समर्थयमानानां व्याख्यातॄणां समर्थनं दुराग्रहमूलमेव प्रतिभासते इति दिक्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र शृङ्गारः,—

शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः।
उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते॥
परोढ़ां वर्जयित्वाऽत्र वेश्याञ्चाननुरागिणीम्।
आलम्बनं नायिकाः स्युर्दक्षिणाद्याश्च नायकाः॥
चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम्।
भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्त्तितः॥
त्यक्त्वौग्र्यमरणालस्यजुगुप्सा व्यभिचारिणः।
स्थायिभावो रतिः श्यामवर्णोऽयं विष्णुदैवतः॥२१४॥ (ष)

---

(ष) शृङ्गारमाह, शृङ्गं हीति।—शृङ्गं शृणाति, दशमदशया हन्ति कामुकान् इति तथोक्तं, ["शृभृञ्श्यामारन्तुं गुक् क्रस्वश्च" (उ० २ पा० १२६ सू०) इत्युणादिसूत्रेण गुङ्नुड्क्रस्वाः] हि—नाम, मन्मथस्य—कामस्य, उद्भेदः,—उद्रेकः, मन्मथोद्रेकेण मरणावधिदशोपस्थापको व्यापार इति भावः, तदागमनहेतुकः,—तस्य आगमनं प्राप्तिस्तस्य हेतुभूत इत्यर्थः, शृङ्गारः,—शृङ्गमृच्छति कारणत्वेन प्राप्नोतीति, शृङ्गेणार्य्यते प्राप्यते सामाजिकैः असाविति वा, शृङ्गमाराति समन्ततो ददातीति वा तथोक्तः, ["कर्म्मण्यण्" (३।२।१ पा०) इत्यण्; यद्वा,—"आतो डः" इति डः] रसः इष्यते। स च प्राय उत्तमप्रकृतिः,—उत्तमनायकः। अत्र—शृङ्गारे, परोढ़ां—परकीयाम्, [एतेन कन्यकाया अपि ग्रहणं सूचितम्] अननुरागिणीं वेश्याञ्च वर्जयित्वा, तद्विषयरसस्य शृङ्गाराभासत्वादिति भावः, अन्याः नायिकाः आलम्बनं—तदाख्यविभावरूपा इत्यर्थः, तथा दक्षिणाद्याः,—दक्षिणानुकूलधृष्टशठाः, नायकाः, स्युः। चन्द्रः, चन्दनं, रोलम्बस्य—भृङ्गस्य, रुतं—झङ्कारः, (आदिपदेन कोकिलकूजनादयः देशकालादयश्च गृह्यन्ते) उद्दीपनं—तदाख्यविभाव इत्यर्थः, मतं—कथितम्। भ्रुवोः विक्षेपः, कटाक्षादिश्च अनुभावः, प्रकीर्त्तितः। औग्र्यम्—उग्रता, मरणम्, आलस्यं, जुगुप्सा च ताः त्यक्त्वा, अन्ये भावाः, व्यभिचारिणः, स्युः। रतिः,—पूर्वोक्ता मनसः प्रेमात्मिका वृत्तिः इत्याशयः, स्थायी भावः। अयं—रसः, श्यामवर्णः, विष्णुर्दैवतं यस्य सः, इत्येवंविधश्च कथितः। तथोक्तं नाट्यशास्त्रे,—"शृङ्गारो विष्णुदेवः" इति "श्यामो भवति शृङ्गारः" इति च।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—"शून्यं वासगृहं......" इत्यादि। अत्र उक्तस्वरूपः पतिः, उक्तस्वरूपा च बाला आलम्बनविभावौ। शून्यं वासगृहम् उद्दीपनविभावः। चुम्बनम् अनुभावः। लज्जाहासौ व्यभिचारिणौ। एतैरभिव्यक्तः सहृदयविषयो रतिभावः शृङ्गाररसरूपतां भजते।

तद्भेदावाह,—

**विप्रलम्भोऽथ सम्भोग इत्येष द्विविधो मतः॥२१५॥(स)**

तत्र,—

**यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ॥२१६॥(ह)**

अभीष्टं—नायकं नायिकां वा।

---

(स) तद्भेदौ (शृङ्गारभेदौ इत्यर्थः) आह, विप्रलम्भ इति।—एषः,—शृङ्गारः, विप्रलम्भः, अथ सम्भोगः, इति—एवं, द्विविधः, मतः,—स्वीकृतः; शृङ्गारो नाम रसः सम्भोगविप्रलम्भभेदेन द्विप्रकारः इति भावः। तत्र संयोगकालावच्छिन्नत्वेन प्रकृष्टरतिविषयः सम्भोगः, वियोगकालावच्छिन्नत्वेन विप्रलम्भो नाम शृङ्गारः। अत्रापि नायिकानायकयोः सामानाधिकरण्यवैयधिकरण्याभ्यां न संयोगवियोगौ स्वीकृतौ, भिन्नतल्पैकतल्पशयनेऽपि प्रेमेर्ष्याऽऽदिसद्भावेन सम्भोगविप्रलम्भयोः वर्णनप्रसङ्गात्; तस्मात् द्वावप्येतौ संयोगवियोगाख्यावन्तःकरणवृत्तिभेदौ। तत्र सम्भोगोदाहरणम्;—"शयिता सविधेऽप्यनीश्वरा सफलीकर्तुमहो! मनोरथान्। दयिता दयिताऽऽननाऽम्बुजं दरमीलन्नयना निरीक्षते॥" इति। विप्रलम्भोदाहरणम्,—"वाचो माङ्गलिकीः प्रयाणसमये जल्पत्यनल्पं जने केलीमन्दिरमारुतायनमुखे विन्यस्तवक्त्राम्बुजा। निश्वासग्लपिताधरोपरिपतद्बाष्पार्द्रवक्षोरुहा बाला लोलविलोचना शिवशिव! प्राणेशमालोकते॥" इति रसगङ्गाधरे स्पष्टम्।

(ह) तत्र (तयोर्मध्ये इत्यर्थः) विप्रलम्भमाह, यत्रेति।—यत्र—शृङ्गारे, रतिः,—अनुरागः, प्रकृष्टा—प्रकरणादिना प्रकर्षं गता, तु—किन्तु, (अत्र नायिका नायको वा इति कर्तृपदमूहनीयम्) अभीष्टम्—अभिलषितं, नायकरूपं, नायिकारूपमालम्बनं वा इति यावत्, न उपैति—नोपभुङ्क्ते, असौ विप्रलम्भः। तथा च,—उपभोगाभावसंवलितप्रकृष्टरतिविषयो रसो विप्रलम्भ इति निर्गलितोऽर्थः। करुणादौ शोकाद्यु-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**स च पूर्वरागमानप्रवासकरुणात्मकश्चतुर्द्धा स्यात्** ॥२१७॥(क)

तत्र,—

**श्रवणाद् दर्शनाद् वाऽपि मिथः संरूढरागयोः ।**
**दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते ॥ (ख)**
**श्रवणन्तु भवेत् तत्र दूतवन्दिसखीमुखात् ।**
**इन्द्रजाले च चित्रे च साक्षात् स्वप्ने च दर्शनम् ॥**

---

द्दीपनतया रतिसत्त्वेन तत्रातिव्याप्तिवारणाय प्रकृष्टेति, सम्भोगेऽतिव्याप्तिवारणाय उपभोगाभावेति, विप्रलम्भसमानविषयके ज्ञानान्तरे, संस्कारे वा अतिव्याप्तिवारणाय रस इति। यत्तु प्राहुः,—"यत्र दुःखसंवलितत्वात् रतिर्न प्रकृष्टाऽभीष्टमुपैति ( विषयी· करोति ) स विप्रलम्भः" इति। तन्न, करुणेऽतिव्याप्तेः। यदि च "यत्र" इत्यस्य "शृङ्गारे" इति व्याख्यानात् न करुणेऽतिप्रसङ्ग इत्युच्यते, तदा "अभीष्टमुपैति" इति किमर्थम् ? अभीष्टविषयरतेरेव शृङ्गाररूपेण परिणामात्। यच्च,—"नायिकाऽऽदिभि· रभीष्टं न उपैति—न सङ्गच्छते। तथा च,—अभीष्टविच्छेदसंवलिता रतिर्यत्र स विप्रलम्भः" इति केषाञ्चिद्व्याख्यानं, तदसत् ; प्रणयमानादौ अभीष्टविच्छेदाभावेन अव्याप्तेः। एवमेव,—"संयोगः सुखसम्भिन्नो विप्रलम्भस्तु दुःखयुक्। रतिस्तयोः प्रकर्षः स्यात् आधिक्यात् सुखदुःखयोः ॥" इति दर्शनात् दुःखसंवलितरतिस्थायिभावको रसो विप्रलम्भः" इति यत् केचिदाहुः, तदपि न साधु ; प्रणयमाने दुःखायोगादव्याप्तेः।

(क) अस्य भेदानाह, स चेति।—स च—विप्रलम्भः, चतुर्द्धा इतीदमुप· लक्षणम् ; तेन विरहोपाधिकः पञ्चमोऽन्योऽपि अस्य भेदो वेदितव्यः, स च देशान्तर· प्रयाणादिजन्यत्वाभावेऽपि गुर्वादिपरतन्त्रत्वात् अभीष्टस्य एकत्रावस्थानविच्छेदा· ज्जायते। स यथा,—"किं रुद्धः प्रियया" इत्यादि ; अन्यथा तस्य निरुक्तप्रकार· चतुष्टयानन्तर्भावाल्लक्ष्यत्वाभावेन तत्र सामान्यलक्षणस्याव्याप्तिप्रसङ्गात्।

(ख) तत्र (प्रतिपादितपूर्व्वरागादिषु) पूर्व्वरागमाह, श्रवणादिति।—श्रवणात्, अपि वा दर्शनात्, मिथः,—परस्परं, संरूढरागयोः,—सञ्जातानुरागयोः, स्त्रीपुंसयो· रिति शेषः, अप्राप्तौ—अन्योऽन्यमलाभे, परस्परासङ्गमे इति यावत्, यः दशाविशेषः,—अवस्थाभेदः, स पूर्व्वराग उच्यते।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अभिलाषश्चिन्तास्मृतिगुणकथनोद्वेगसम्प्रलापाश्च ।
उन्मादोऽथ व्याधिर्जड़ता मृतिरिति दशात्र
कामदशाः ॥ (ग)

अभिलाषः स्पृहा चिन्ता प्राप्त्युपायादिचिन्तनम् ।
उन्मादश्चापरिच्छेदश्चेतनाचेतनेष्वपि ।
अलच्यवाक् प्रलापः स्याच्चेतसो भ्रमणाद् भृशम् ॥
व्याधिस्तु दीर्घनिश्वासपाण्डुताकृशताऽऽदयः ।
जड़ता हीनचेष्टत्वमङ्गानां मनसस्तथा ॥ २१८ ॥ (घ)

शेषं स्पष्टम् ।

क्रमेण उदाहरणानि,—

"प्रेमाऽऽर्द्राः प्रणयस्पृशः परिचयादुद्गाढ़रागोदयाः
तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।

---

(ग) दशाविशेषान् आह, अभिलाष इति ।—दश—दशप्रकाराः इत्यर्थः । अत्र—पूर्व्वरागे, कामदशाः,—कामकृताः अवस्थाः, मन्मथोद्रेके जाता अवस्था इत्यर्थः । अन्यत् स्पष्टम् ।

(घ) अभिलाषमाह, अभिलाष इति ।—स्पृहा—अभीष्टप्राप्तीच्छा । चिन्तामाह,—चिन्तेति । प्राप्त्युपायादीति ।—अत्रादिपदेन अभीष्टावगमप्रतिरोधकाः अपायादयोऽपि चिन्तनीयाः ; अन्यथा कदाचित् व्याघातोऽपि सम्भवेदिति बोध्यम् । उन्मादमाह, उन्माद इति ।—चेतनाचेतनेषु—सजीवनिर्जीवेषु अपि, अपरिच्छेदः,—अविवेकः, विशेषनिर्द्धारणाभाव इति यावत्, उन्मादः । प्रलापमाह, अलच्यवागिति ।—भृशम्—अत्यर्थं, चेतसः, भ्रमणात्—अभीष्टं प्रति धावनात्, या अलच्या—विना लच्यमित्यर्थः, वाक्—वचनं, निर्विषयं वच इति यावत्, सः प्रलापः स्यात् । व्याधिमाह, व्याधिस्त्विति ।—दीर्घनिश्वासः, पाण्डुता, कृशता—चीणौजस्त्वं, तदादिरूपो व्याधिः । जड़तामाह, जड़तेति ।—अङ्गानां—करचरणादीनां, तथा, मनसः,—अन्तरात्मनः, बुद्धेरिति यावत्, हीनचेष्टत्वं—निश्चेष्टत्वं, कर्त्तव्याचमत्वमिति यावत्, जड़ता ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यास्वन्तःकरणस्य वाह्यकरणव्यापाररोधी क्षणात्
आशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥" (ङ)

अत्र मालतीसाक्षाद्दर्शनप्ररूढ़रागस्य माधवस्याभिलाषः।

"कथमीक्षे कुरङ्गाक्षीं साक्षाल्लक्ष्मीं मनोभुवः ?।
इति चिन्ताऽऽकुलः कान्तो निद्रां नैति निशीथिनीम् ॥"(च)

अत्र कस्याश्चित् नायिकाया इन्द्रजालदर्शनप्ररूढ़रागस्य नायकस्य चिन्ता। इदं मम। "मयि सकपटम्" इत्यादौ

---

(ङ) अभिलाषमुदाहरति, प्रेमार्द्रा इति।—मुग्धे—सुन्दरि, मनोहरि इत्यर्थः, दृशौ यस्यास्तथाभूतायाः, मालत्या इत्यर्थः, प्रेमार्द्राः,—प्रेम्णा आन्तरस्नेहविशेषेण, आर्द्राः,—सिक्ताः, प्रेमाभिव्यञ्जिका इति यावत्, अत एव प्रणयस्पृशः,—प्रणयः,—सद्भावः, तत्स्पृशः,—तत्पूर्णा इत्यर्थः, परिचयात्—पुनः पुनः दर्शनादिव्यापारात्, उद्गाढ़ः,—उद्रिक्तः, उद्भिन्न इति यावत्, रागस्य—अनुरागस्य, सुरतेच्छाया इति भावः, उदयः,—आविर्भावः, यासु ताः, निसर्गमधुराः,—स्वभावमनोज्ञाः, तास्ताः, चेष्टाः,—अपाङ्गप्रेक्षणादिकाः क्रियाः, मयि, भवेयुः,—पुनर्भवन्तु इत्यर्थः; यासु—चेष्टासु, आशंसा—मनोरथः, तया परिकल्पितासु—विरचितासु, सङ्कल्पविषयीभूतासु सतीषु इति सारार्थः, अपि क्षणात्—क्षणमात्रेण, मनोरथकल्पनामात्रेणेत्यर्थः, वाह्यं—वहिर्भवं, यत् करणम्—इन्द्रियं, चक्षुरादिकमिति यावत्, तस्य व्यापारः,—स्वस्वविषयग्रहणं, तस्य रोधी—अवरोधकः, वाह्येन्द्रियसम्बन्धप्रतिवन्धक इत्यर्थः, अन्तःकरणस्य—अन्तरिन्द्रियस्य, मनस इत्यर्थः, आनन्देन, सान्द्रः,—निविड़ः, लयः,—विलयः, निविड़ाभिनिवेश इति यावत्, [ "आनन्दसान्द्रोदयः" इति पाठान्तरे—आनन्दस्य सान्द्रोदयः,—गाढ़ोदयः, गाढ़ानन्दोदय इत्यर्थः; सान्द्रः गाढ़ः, आनन्दः इति कर्मधारये तु आनन्दसान्द्रेत्युभयस्यापि प्राङ्निपातशक्तत्वेन आनन्दस्य तथात्वम् ] भवति; उभयत्र च अन्तःकरणमानन्दसलिले विलीनं भवतीति फलितार्थः। मालतीमाधवस्येदं पद्यम्। शार्दूलविक्रीड़ितं वृत्तम्।

(च) चिन्तामुदाहरति, कथमिति।—साक्षात्—मूर्त्तिमतीमित्यर्थः, मनोभुवः,—कामस्य, लक्ष्मीं—शोभास्वरूपां, कुरङ्गाक्षीं—मृगनयनां, कथं—केन प्रकारेण, ईक्षे ?—पश्यामि ? इति चिन्तया आकुलः कान्तः, निशीथिनीं—रात्रिं व्याप्य, [ अत्रात्यन्तसंयोगे द्वितीया ] निद्रां न, एति—प्राप्नोति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नायकस्य स्मृतिः। "नेत्रे खञ्जनगञ्जने" इत्यादौ गुणकथनम्। "श्वासान् मुञ्चति" इत्यादौ उद्वेगः। (छ)

"त्रिभागशेषासु निशासु च क्षणं
निमील्य नेत्रे सहसा व्यबुध्यत।
क्व नीलकण्ठ! व्रजसीत्यलक्ष्यवाक्
असत्यकण्ठार्पितबाहुबन्धना॥" (ज)

अत्र प्रलापः। "भ्रातर्द्विरेफ" इत्यादौ उन्मादः। (झ)

(छ) अत्रेति।—इन्द्रजालेन—कुहकस्य लोकोत्तरार्थदर्शिकया विद्यया, दर्शनात्—प्रेक्षणात्। स्मृतिमुदाहरति, मयीति।—स्मृतिभावोदाहरणतया (२०१ पृष्ठे) उदाहृतपूर्व्वमिदं पद्यम्। [एवञ्च भावविशेषरागविशेषरूपयोः स्मृत्योरभिन्नत्वं व्यज्यते]। गुणकथनमुदाहरति, नेत्रे इति।—प्रौढ़यौवनोदाहरणप्रसङ्गे (१२१ पृष्ठे) उदाहृतमिदम्। अत्र हि नेत्रादीनां खञ्जनगञ्जनत्वादिवर्णनेन गुणवर्णनं स्पष्टम्। उद्वेगमुदाहरति, श्वासानिति।—तपनोदाहरणप्रसङ्गे (१६६ पृष्ठे) उदाहृतं पद्यमिदम्। [एवञ्च तपनोद्वेगयोरैक्यं व्यज्यते]।

(ज) प्रलापमुदाहरति, त्रिभागेति।—त्रिसङ्ख्याविशिष्टो भागः, यद्वा,—तृतीयो भागः त्रिभागः, [सङ्ख्याशब्दस्य वृत्तिविषये क्वचित् पूरणार्थत्वमिष्यते इति बोध्यम्] स शेषो यासां तासु, तृतीयभागावशिष्टासु इत्यर्थः, निशासु—रात्रिषु, [अत्र पार्व्वतीति कर्त्तृपदमध्याहरणीय] क्षणं नेत्रे निमील्य—निद्रया निमीलितनेत्रा भूत्वेत्यर्थः, "हे नीलकण्ठ!—हर! क्व व्रजसि?"—कुत्र गच्छसि? इति अलक्ष्या—विना लक्ष्यमित्यर्थः, वाक्—वचनं, यस्याः तथाभूता अविषयवचना इत्यर्थः, असत्ये—स्वप्नविषयत्वात् अप्रकृते (हरस्य) कण्ठे, यद्वा,—असत्यस्य स्वप्नमात्रोपलभ्यमानतया अलीकस्य शिवस्य कण्ठे, अर्पितं बाह्वोर्बन्धनं यया, यद्वा,—असत्यं आलम्बनस्यासत्यतया मृषैव कण्ठे बाह्वोर्बन्धनं यस्याः, तादृशी सती, सहसा—सद्यः, व्यबुध्यत—जागरिताऽऽसीदिति शेषः। [एतेन स्वप्नसादृश्यप्रतिकृतिदर्शनतदङ्गस्पृष्टस्पर्शनाख्येषु चतुर्षु विरहिणां विनोदेषु पार्व्वत्याः स्वप्नदशा सखीमुखेन दर्शिता इति हृदयम्]। कुमारसम्भवस्थेदं पद्यम्। वंशस्थविलं वृत्तम्।

(झ) उन्मादमुदाहरति, भ्रातर्द्विरेफ इति।—उन्मादोदाहरणावसरे (१९९ पृष्ठे) व्याख्यातमिदं पद्यम्। [एवञ्च उभयविधयोरुन्मादयोरभिन्नत्वमभिहितमिति बोध्यम्]।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"पाण्डु क्षामं वदनं हृदयं सरसं तवालसञ्च वपुः।
आवेदयति नितान्तं क्षेत्रियरोगं सखि! हृदन्तः॥" (ञ)

अत्र व्याधिः।

"भिसिणीदलसअणीए णिहिअं सब्बं सुणिच्चलं अङ्गं।
दीहो णीसासहरो एसो साहेइ जीअइ त्ति परं॥" (ट)

अत्र जड़ता। इदं मम।

**रसविच्छेदहेतुत्वात् मरणं नैव वर्ण्यते।**
**जातप्रायन्तु तद् वाच्यं चेतसाऽऽकाङ्क्षितं तथा॥**
**वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः॥२१९॥(ठ)**

---

(ञ) व्याधिमुदाहरति, पाण्डिति।—हे सखि! तव पाण्डु—मलिनश्वेतवर्णं, क्षामं—क्षशं, वदनं, सरसं—प्रेमावेशपूर्णं, हृदयम्, अलसं—सर्व्वविषयनिरुत्सुकमित्यर्थः, वपुः,—शरीरञ्च, हृदन्तः,—हृदयाभ्यन्तरे, नितान्तं—गाढ़ं, क्षेत्रियरोगं—क्षेत्रियः,—आशरीरपातं स्थायी असौ रोगस्तं तथोक्तम्, एतच्छरीराचिकित्सनीयं व्याधिमित्यर्थः, आवेदयति—प्रकटयति। अत्र आर्य्या छन्दः।

(ट) जड़तामुदाहरति, भिसिणीति।—["विसिनीदलशयनीये निहितं सर्वं सुनिश्चलमङ्गम्। दीर्घो निश्वासभर एष साधयति जीवतीति परम्॥"इति संस्कृतम्]। दवीयांसं नायकमनुस्मृत्य तद्विरहेणासन्नमरणाया आत्मसख्या अवस्थावर्णनोक्तिरियम्। विसिनीदलशयनीये—विसिनीनां कमलिनीनां, दलानि पत्राणि, तेषां शयनीये शय्यायां, पद्मपत्ररचितशय्यायामिति यावत्, निहितं—अर्पितं, सर्व्वम् अङ्गं—शरीरं, सुनिश्चलं—स्पन्दनरहितं, परं—केवलम्, एषः,—अनुभूयमानः इत्यर्थः, यमुद्दिश्य वर्णनमिदं तं प्रदर्श्य इत्याशयः; दीर्घः,—आयतः, निश्वासभरः,—निश्वासातिशयः, जीवतीति, साधयति—व्यनक्ति। गीतिश्छन्दः,—"आर्य्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः। दलयोः क्वतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः॥" इति लक्षणात्।

(ठ) रसेति।—रसस्य—उपचारात् रतेः, विच्छेदहेतुत्वात्—विनाशहेतुत्वात्, रत्याश्रयस्य मरणाद्रतेर्नाश इति मरणरूपानुभावेन रतेर्मिलनाभावात् रसत्वं नोपपद्यते इति भावः। तत्—मरणम्। प्रत्युज्जीवनं—मरणात् परं पुनर्जीवनमित्यर्थः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र आद्यं यथा,—

"शेफालिकां विदलितामवलोक्य तन्वी
प्राणान् कथञ्चिदपि धारयितुं प्रभूता।
आकर्ण्य सम्प्रति रुतं चरणायुधानां
किं वा भविष्यति न वेद्मि तपस्विनी सा॥" (ड)

द्वितीयं यथा,—

"रोलम्बाः परिपूरयन्तु हरितो झङ्कारकोलाहलैः,
मन्दं मन्दमुपैतु चन्दनवनीजातो नभस्वानपि।
माद्यन्तः कलयन्तु चूतशिखरे केलीपिकाः पञ्चमं,
प्राणाः सत्वरमश्मसारकठिना गच्छन्तु गच्छन्त्वमी॥" (ढ)

मसैतौ।

(ड) आसन्नं मरणमुदाहरति, शेफालिकामिति।—प्रबलविरहसन्तापसन्तप्तया मृतप्रायया नायिकया तदानीमेव नायकानयनाय प्रेषितायाः दूत्याः नायकं प्रति उक्तिरियम्। सा तपस्विनी—ब्रह्मचारिणी, तव विरहे त्यक्तभोजनाभरणा भूत्वा विषयेभ्यो वैमुख्यापादनद्वारा तपश्चरतीत्यर्थः; अत एव तन्वी—कृशाङ्गी, अस्थिमात्रावशिष्टशरीरेति यावत्, शेफालिका—शरत्कालविकाशशीलः सुरभिमनोरमपुष्पप्रधानो वृक्षविशेषः, तस्याः प्रसवोऽपि शेफालिका ("सिउली फुल" इति वङ्गभाषा,) तां विदलितां—विकसिताम्, [एतेन अर्द्धरात्रः व्यज्यते] अवलोक्य—दृष्ट्वा, कथञ्चिदपि—कृच्छ्रेण, प्राणान्, धारयितुं, प्रभूता—समर्था, अभूदित्यर्थः, यद्यपि तदानीमेव प्राणाः प्रयातुमुद्यता आसन्, तथापि रात्रेरर्द्धावशिष्टतया दूत्या सह नायकागमनं सम्भाव्य कथङ्कारं महता आयासेन निरोद्धुं पारिता इति भावः; सम्प्रति—रात्रिशेषयामार्द्धे, चरणायुधानां—कुक्कुटानां, रुतं—रवम् आकर्ण्य, किं—कीदृगवस्था इत्यर्थः, [निपातानामनेकार्थत्वात्] वा भविष्यति इत्यहं न वेद्मि—न जानामि। अथ यदि तदीयं शरीरं भस्मसात् भवेत्, इत्यपि न चित्रं मन्ये इति तत्त्वम्। शेफालिकाः रात्रेर्मध्यभागे विकशन्ति, तद्दर्शनेन रात्रेरवशेषत्वात् कान्तागमनं प्रति आशासम्भवः, कुक्कुटरवश्रवणस्य तु रात्र्यवसानसूचकत्वात् नैराश्यमिति भावः। [अत्र हि किंवा भविष्यतीत्यादिपदव्यङ्ग्यं मरणस्य सन्निधानं द्योतते]। वसन्ततिलकं वृत्तम्।

(ढ) चेतसाऽऽकाङ्क्षितं मरणमुदाहरति, रोलम्बा इति।—प्रियविरहे मन्मथ-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तृतीयं यथा,—कादम्बर्यां महाश्वेतापुण्डरीकवृत्तान्ते । एष च प्रकारः 'करुणविप्रलम्भविषयः' इति वक्ष्यामः । (थ)

केचित् तु,—

"नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः ।
निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ॥
उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः ॥"(त)

---

पीड़िताया उक्तिरियम् । रोलम्बाः,—भ्रमराः, झङ्कारकोलाहलैः हरितः,—दिशः, ("दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः) परिपूरयन्तु ; चन्दनवनीजातः,—चन्दनवन्यां जातः, चन्दनगन्धेन मनोहरः दाक्षिणात्य इति भावः, नभस्वान्—वायुरपि, मन्दं मन्दम् उपैतु—वहतु ; केलीपिकाः,—केल्याः सुरतक्रीड़ायाः, उपचारात् तद्विषयिण्या उत्कण्ठाया उद्भावका इति यावत्, ("द्रवकेलिपरीहासाः" इत्यमरः) [ अत्र "कृदिकारादक्तिनः" इति वार्त्तिकेन ङीष् ] पिकाः कोकिलाः, चूतशिखरे—आम्रतरुशिरसि, स्थिता इति शेषः, माद्यन्तः,—चूताङ्कुरस्वादेन उल्लसन्तः सन्त इत्यर्थः, पञ्चमं—स्वरविशेषं, कलयन्तु—गायन्तु ; अमी, अश्मसाराः,—लौहः, तद्वत् कठिनाः, प्राणाः सत्वरं—शीघ्रं, गच्छन्तु गच्छन्तु । [ "नित्यवीप्सयोः" (८।१।४पा०) इत्याभीक्ष्ण्ये द्वित्वम् ] । [अत्र भ्रमरादीनां मन्मथोद्दीपकतया विरहिण्या मारकत्वस्य कविसमयेन सिद्धत्वेऽपि तत्तेषां झङ्कारादीनां प्रार्थनेन मरणस्य चेतसाऽऽकाङ्क्षितत्वं व्यज्यते ] । शार्दूलविक्रीड़ितं वृत्तम् ।

(थ) मरणात् परं प्रत्युज्जीवनं तृतीयमुदाहरति,—कादम्बर्यामिति । अयमेव प्रकारः करुणविप्रलम्भविषय इति दर्शयितुं प्रतिजानीते, एष चेति ।—स्पष्टम् ।

(त) रतिरहस्यकारमतं दर्शयति, केचिदिति ।—प्रथमं—गुणश्रवणमात्रावसरे, नयनप्रीतिः,—चक्षूरागः, नेत्रयोर्दर्शनानुराग इति यावत्, प्रेयसोः परस्परं प्रथमं सङ्गमाभिलाषरूपकामोद्रेकेण परं नेत्रे सानुरागे भवतः इति भावः ; ततः,—तत्परमभीष्टविषयालाभे, चित्तस्य—मनसः, आसङ्गः,—आसक्तिः, अथ—तस्मिन् सक्ते सति, सङ्कल्पः,—"कथं लभेय ? लब्ध्वा च एवमनुष्ठास्यामि" इत्येवंरूपः मनोरथविशेषः, ततः,—सङ्कल्पमनुध्यायतः, निद्राच्छेदः,—जागरणं, निद्रामप्राप्नुवतः तनुता—शरीरकार्श्यं, ततः विषयनिवृत्तिः,—बाह्यवस्तुवैमुख्यम्, अत्यन्तं तदायत्तमानसत्वादन्यान् विषयान् दवदग्धकाननानीव नोपगच्छतीति तात्पर्यं, विषयेभ्यः प्रतिनिवृत्तस्य त्रपानाशः,—निर्लज्जता, निर्लज्जत्वात् पूजनीयेभ्योऽपि न त्रस्यति इत्याशयः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत्याहुः। तत्र च,—

आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात्तदिङ्गितैः ॥२२०॥(थ)

इङ्गितानि उक्तानि यथा रत्नावल्यां सागरिकावत्सराजयोः। आदौ पुरुषानुरागे सम्भवत्यप्येवमधिकं हृदयङ्गमं भवति। (द)

नीलीकुसुम्भमञ्जिष्ठाः पूर्व्वरागोऽपि च त्रिधा।

तत्र,—

न चातिशोभते यन्नाऽपैति प्रेम मनोगतम्॥

तं नीलीरागमाख्यान्ति यथा श्रीरामसीतयोः। (ध)

कुसुम्भरागं तत्प्राहुर्यदपैति च शोभते। (न)

मञ्जिष्ठारागमाहुस्तं यन्नापैत्यतिशोभते ॥ २२१ ॥ (प)

---

विनष्टत्रपस्य निर्भीतिर्योन्मादः, ततः मूर्च्छा—अनिद्रायामपि वाह्येन्द्रियव्यापारशून्याऽवस्था ततः मृतिः,—प्राणवियोगः, इत्येताः, दश, एव स्मरदशाः,—कामकृता अवस्थाः, स्युः।

(थ) आदाविति।—आदौ—प्रथमतः, स्त्रियाः,—नायिकायाः, रागः,—नायकं प्रति अनुरागः, वाच्यः,—वर्णनीय इत्यर्थः, पश्चात्—तदनन्तरं, तस्याः इङ्गितैः,—चेष्टाविशेषैः, नेत्रविक्षेपादिभिरिति यावत्, पुंसः,—नायकस्य, रागः वाच्य इति शेषः।

(द) इङ्गितानीति।—अभिलाषादिरूपाणीत्यर्थः, एवं प्रथमं स्त्रिया नायकविषयानुरागवर्णनमुचितमित्यभिहितं भवति; वस्तुतस्तु प्रायोवादोऽयम्, अत एव नैषधचरितादौ नायिकाविषयानुरागोऽपि नायकस्य प्रथममुपपद्यते इति सारः।

(ध) नीलीरागमाह, न चेति।—यत् मनोगतं—मनोहरं, प्रेम न च अतिशोभते—नातिमात्रं वर्द्धते इत्यर्थः, न अपैति—न नश्यति च, तं—नात्युद्रिक्तमविचलितमित्यर्थः, नीलीरागम्, आख्यान्ति—कथयन्ति।

(न) कुसुम्भरागमाह, कुसुम्भरागमिति।—यत्—प्रेम, अपैति—नश्यति, शोभते च, तत्—उद्रिक्तं, चपलमित्यर्थः, प्रेम इति शेषः, कुसुम्भरागं प्राहुः। पुस्तकान्तरे "दैवज्ञत्या समं यद्वत् कर्द्दमस्य तपस्विनः" इति पाठोऽप्युपलभ्यते, एतेनोदाहरणान्तरप्रदर्शनस्यानावश्यकलम्।

(प) मञ्जिष्ठारागमाह, मञ्जिष्ठेति।—यत्—प्रेम, न अपैति—न नश्यति,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ मानः,—

**मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः ।**
**द्वयोः प्रणयमानः स्यात् प्रमोदे सुमहत्यपि ॥**
**प्रेम्णः कुटिलगामित्वात् कोपो यः कारणं विना ॥२२२॥ (फ)**

द्वयोरिति नायकस्य नायिकायाश्च उभयोः प्रणयमानो वर्णनीयः । उदाहरणं तत्र नायकस्य यथा,—

"अलिअपसुत्तअ! णिमिलिअच्छ! देसु सुहअ! मज्झं ओआसं ।
गण्डपरिउम्बणपुलइआङ्ग ! ण उणो चिराइस्सं ॥" (ब)

---

अतिशोभते च, तम्—अविचलमत्युद्रिक्तमित्यर्थः, रागमिति शेषः, मञ्जिष्ठारागम् आहुः,—कथयन्ति । कुसुम्भरागमञ्जिष्ठारागयोर्लक्ष्यं दर्शयितव्यमवश्यं, यदि शक्यम् । "इन्दुमत्या यथाऽजस्य दमयन्त्या नलस्य वा" इति पुस्तकान्तरीयाधिकपाठाङ्गीकारे तु नोदाहरणान्तरगवेषणावश्यकत्वम् ।

(फ) मानमाह, मान इति ।—स तु—मानस्तु, द्वयोः,—स्त्रीपुंसयोः, प्रमोदे—प्रेम्णि, प्रणयमानसंज्ञकः । ननु प्रमोदे सति कोप एव न भवति, तत् कथं मानलक्षणसङ्गतिः ? इत्यत आह, प्रेम्ण इति ।—कुटिलगामित्वात्—कुटिलनायकनायिकागतत्वादित्यर्थः, यत्र नायकः कुटिलः, नायिका वा कुटिला, तत्र अन्योऽन्यं मानस्य सम्भव इति भावः । कारणम्—अपराधादि । कुटिलस्य विनाऽपि कारणं तत्सम्भावनया कोपो भवतीति सारः ; यद्वा,—कुटिलगामित्वात्—दुरवगमस्वभावत्वात् इति ज्ञेयम् ।

(ब) अलिअ इति ।—[ अलीकप्रसुप्तक ! निमीलिताक्ष ! देहि सुभग ! मह्यमवकाशम् । गण्डपरिचुम्बनपुलकिताङ्ग ! न पुनश्चिरयिष्यामि ॥ इति संस्कृतम् ]। नायिकाऽऽगमने विलम्बमसहमानं कपटनिद्रितं नायकं प्रति गण्डपरिचुम्बनेन सात्त्विकभावविशेषरोमोद्गमे ज्ञाततत्कपटनिद्रायाः नायिकाया उक्तिरियम् । हे अलीकप्रसुप्तक !—कपटनिद्रित ! निमीलिते अक्षिणी येन तत्सम्बुद्धौ । हे सुभग !—प्रियतम ! गण्डस्य परिचुम्बनेन पुलकितानि—रोमाञ्चितानि, अङ्गानि यस्य तत्सम्बोधने । [ एतेन अलीकनिद्रेति व्यज्यते ]। मह्यम् अवकाशं—स्थानं, देहि, मम विलम्बे तव क्रोधो जात इति लक्ष्यते, पुनः,—इतः परं, न चिरयिष्यामि—पुनरेवं न विलम्बिष्ये इति भावः । अत्र नायिकाया विलम्बेन नायकस्य मान इति अलीकस्वप्नवशात् कौटिल्यञ्च बोध्यम् । आर्या छन्दः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नायिकाया यथा,—कुमारसम्भवे सन्ध्यावर्णनावसरे।
उभयोर्यथा,—

"पणअकुविआणं दोणं वि अलिअपसुत्ताणं माणइत्ताणं।
णिच्चलणिरुद्धणीसासदिसकस्साणं को मल्लो ?॥" (भ)

पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते ।
ईर्ष्यामानो भवेत् स्त्रीणां, तत्र त्वनुमितिस्त्रिधा ।
उत्स्वप्नायितभोगाङ्कगोत्रस्खलनसम्भवा ॥२२३॥ (म)

तत्र दृष्टे यथा,—

"विनयति सुदृशो दृशः परागं प्रणयिनि कौसुममाननानिलेन ।
तदहितयुवतेरभीक्ष्णमक्ष्णोः द्वयमपि रोषरजोभिरापुपूरे ॥" (य)

---

(भ) पणअ इति।—[प्रणयकुपितयोर्द्वयोरप्यलीकप्रसुप्तयोर्मानिनोः। निश्चलनिरुद्धनिश्वासदत्तकर्णयोः को मल्लः ?॥ इति संस्कृतम्]। प्रणयेन—प्रेम्णा, कुपितयोः,—कोपं गतयोः, अत एव अलीकप्रसुप्तयोः,—कपटनिद्रितयोः, द्वयोः,—उभयोः, मानिनोः,—मानवती-मानवतोः, "नाहं प्रथममेतेन संवदिष्यामि" "नाहमेतया संवदिष्यामि" इत्येवं दृढनिश्चययोरिति यावत्, निश्चलं यथा तथा, निरुद्धे निश्वासे दत्तकर्णयोः,—स्थिरकर्णयोरित्यर्थः, दम्पत्योरिति शेषः, को मल्लः मानभङ्गसमर्थः ? न कोऽपीत्यर्थः।

(म) पत्युरिति।—पत्युः,—प्रियस्य, अन्यप्रियासङ्गे—अपरनायिकासक्तौ, दृष्टे, श्रुते, अथवा अनुमिते सति, स्त्रीणाम् ईर्ष्यामानः भवेत्, तत्र—तेषु त्रिविधेषु मध्ये इत्यर्थः, अनुमितिः,—अनुमानं, त्रिधा भवतीति शेषः, उत्स्वप्नायितं—स्वप्ने तदुत्कीर्त्तनं, भोगाङ्कः,—सम्भोगचिह्नं, तथा गोत्रस्खलनं—नामव्यतिक्रमः, तत्सम्भवा, एतत्त्रयस्य कारणत्वात्।

(य) विनयतीति।—प्रणयिनि—कान्ते, आननानिलेन—आननं—मुखं, तस्य अनिलः,—वायुः, फूत्कार इति यावत्, तेन तथोक्तेन निजमुखफूत्कारेणेत्यर्थः, सुदृशः,—अन्यसुनयनायाः इति भावः, दृशः,—नेत्रस्य, एकलोचनस्येति यावत्, उपरि पतितमिति शेषः, [यद्वा,—दृश इति पञ्चम्यन्तम्। अस्मिन् पक्षे "अपादाने पञ्चमी" (२।३।२८ पा०) इति पञ्चमी] एकस्मादेव नेत्रादित्यर्थः, कौसुमं—कुसुमस्य पुष्पस्येदं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सम्भोगचिह्नेनानुमिते यथा,—

"नवनखपदमङ्गं गोपयस्यंशुकेन,
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम्।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्
नवपरिमलगन्धः केन शक्यो वरीतुम्?॥" (र)

अनुनयपर्य्यन्तासहने (ल) तु अस्य न विप्रलम्भभेदता, किन्तु सम्भोगसञ्चारीर्ष्यास्वभावत्वम्। यथा,—

---

तत् तथोक्तं, परागं—रजः, विनयति—निरस्यति, दूरीकुर्व्वति सतीति यावत्, तस्याः,—सुदृशः, अहितयुवतिः,—विपक्षकामिनी, तस्याः, सपत्न्या इति भावः, अक्ष्णोर्द्वयमपि—द्वे अपि नेत्रे, न त्वेकमेवेति भावः; अभीक्ष्णम्—अत्यर्थं, रोषरजोभिः,—कोपरूपपरागैः, आपुपूरे—आपूरितं, कोपकलुषितमभूदिति भावः। अत्र "एकत्र रजोऽपनयनस्य, अन्यत्र—रजःपूरणकारणत्वायोगादकारणत्वमेव पूरणस्येति विभावनाऽलङ्कारो रूपकानुप्राणितः" इति मल्लिनाथाः; "एकस्मान्नेत्रात् रजोऽपनेतुं प्रवृत्तौ द्वयोरपि नेत्रयोः रजसा पूरणमिति विषमम्" इत्यन्ये। रजोऽपनयनरूपाभीष्टार्थविरुद्धरजोभारपातलाभवर्णनाद्विषादनमिति रसगङ्गाधरकारमतानुसर्त्तारः; तथाहि रसगङ्गाधरकाराः,—"अभीष्टार्थविरुद्धलाभो विषादनम्" इति। शिशुपालवधस्येदं पद्यम्। पुष्पिताग्रा वृत्तम्।

(र) नवेति।—नायकं प्रति मानिन्या उक्तिरियम्। नवानि नखपदानि नखचिह्नानि यस्मिन् तादृशम्, अङ्गं—शरीरावयवम्, अंशुकेन—वसनेन, गोपयसि—आवृणोषि, दन्तदष्टम् ओष्ठं पुनः पाणिना—करपल्लवेन, स्थगयसि—तिरोदधासि, (परन्तु) प्रतिदिशं—दिशि दिशि इत्यर्थः, [विभक्त्यर्थेऽव्ययीभावः। "अव्ययीभावे शरत्प्रभृतिभ्यः" (५।४।१०७ पा०) इति समासान्तष्टच्प्रत्ययः] अपरस्त्रीसङ्गशंसी—अन्यकान्तासम्भोगसूचकः, विसर्पन्—निर्गच्छन्, नवपरिमलगन्धः,—नूतनविमर्द्दजनितसौरभविशेषः, केन (प्रकारेण) वरीतुं—गोपयितुं शक्यः? न केनापीत्यर्थः। [अत्र नखाघातदन्तदंशनयोरङ्गौष्ठाच्छादने, विसर्पणस्य गन्धानाच्छाद्यत्वे च विशेषणगत्या हेतुत्वात् काव्यलिङ्गद्वये सजातीयः सङ्करः]। शिशुपालवधस्येदं पद्यम्। मालिनी वृत्तम्।

(ल) अनुनयपर्य्यन्तासहने—प्रियवचनादिना मानभञ्जनानुकूलो व्यापारः अनुनयः, तत्पर्य्यन्तस्य असहने सोढुमशक्यत्वे, तं विनैव भङ्गुरत्वे इति यावत्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते।
कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिन् जने ?॥" (व)

यथा वा,—

"एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतो:
अन्योऽन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम्।
दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो:
भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहः॥" (श)

एवमन्यत्र।

---

(व) भ्रूभङ्गे इति।—मानाकरणे तिरस्कुर्वतीं सखीं प्रति कस्याश्चिदुक्तिः। भ्रूभङ्गे—भ्रूभेदे, रचिते—कृते सति अपि, दृष्टिः अधिकं सोत्कण्ठं—समुत्सुकं यथा तथा, उद्वीक्षते—सतृष्णं पश्यति, यं द्रष्टुमधिकं विकसितं भवतीत्यर्थः; वाचि—वाक्शक्तौ, रुद्धायां—सर्व्वतोभावेन संयतायामपि, असम्भाषणेच्छयेति भावः, इदं, दग्धाननं—तुच्छमुखम्, अधिकं—वारंवारमित्यर्थः, सस्मितम्—ईषद्धास्यसहितं, जायते, यं दृष्ट्वा बलादन्तःस्फुरन् प्रमोदः हास्यमनुभावयतीत्यर्थः, [ 'अधिकम्' इति उत्तरत्रापि अनुषज्यते ]। चेतसि—चित्ते, कार्कश्यं—काठिन्यं, गमितेऽपि—नीतेऽपि, तनुः,—शरीरं, रोमाञ्चम् आलम्बते—रोमाञ्चिता भवति, येनालिङ्गितेन मलयजचन्दनलेपमनुभवतीति भावः; अतः तस्मिन् जने—तादृशे प्रियजने, दृष्टे सति, मानस्य निर्वहणं—निर्वाहः, मानावलम्बनमित्यर्थः, कथं—केन प्रकारेण, भविष्यति ? न केनापीत्यर्थः। [ अत्र दर्शनादीनामनुभावानां बलवत्त्वेन तैः परिपुष्टा रतिः सम्भोगत्वमेवावलम्बते, भ्रूभङ्गादिभिर्व्यज्यमानायाः ईर्ष्यायास्तत्पार्थकत्वमेवेति भावः ]। अमरुशतकस्येदं पद्यम्। शार्दूलविक्रीडितं वृत्तम्।

(श) एकस्मिन्निति।—एकस्मिन्, शयने—शय्यायां, पराङ्मुखतया—वैमुख्येन, वीतोत्तरं—तूष्णीं यथा तथा ताम्यतोः,—क्लिश्यतोः, अत एव अनुनये—अनुनयाभिलाषे इत्यर्थः, अन्योऽन्यस्य—परस्परस्य, हृदि—मनसि स्थितेऽपि, गौरवं—मानं, संरक्षतोः,—मौनभङ्गमकुर्वतोरित्यर्थः, शनकैः,—क्रमशः, अपाङ्गवलनात्—तिर्य्यक्नेत्रान्तसञ्चालनात्, मिश्रीभवन्ति चक्षूंषि ययोः तादृशयोः, दम्पत्योः,—स्त्रीपुंसयोः,



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सामभेदोऽथ दानञ्च नत्युपेक्षे रसान्तरम् ।
तद्भङ्गाय पतिः कुर्य्यात् षडुपायानिति क्रमात् ॥
तत्र प्रियवचः साम, भेदस्तत्सख्युपार्जनम् ।
दानं व्याजेन भूषाऽऽदेः, पादयोः पतनं नतिः ॥
सामादौ तु परिक्षीणे स्यादुपेक्षाऽवधीरणम् ।
रभसत्रासहर्षादेः कोपभ्रंशो रसान्तरम् ॥२२४॥ (ष)

मानकलिः,—प्रणयकलहः, सहासं यथा तथा, रभसेन—वेगेन, हर्षेण वा, ("रभसो वेगहर्षयोः" इत्यमरः) व्यासक्तः,—दत्तः, कण्ठग्रहः,—कण्ठाश्लेषः यत्र तथाविधः सन्, भग्नः,—विनष्टः । अमरुशतकस्येदं पद्यम् । शार्दूलविक्रीडितं वृत्तम् ।

(ष) मानभञ्जनोपायानाह, सामेति ।—पतिः,—वल्लभः, तस्य—मानस्य, भङ्गाय—भञ्जनार्थं, साम, भेदः, दानं, नतिः, उपेक्षा, रसान्तरं चेति षट् उपायान्, क्रमात्—पूर्वपूर्वस्य निरासे इति भावः, कुर्य्यात्—अवलम्बेत । स्त्रीणां मानभञ्जनार्थं षड़ेव सामादय उपाया नायकैः विधेयाः, किन्तु पूर्वोपायेन मानाभङ्गे उत्तर उपायः, इत्येवंक्रमेण, न तु उत्तरोपायेन मानाभङ्गे पूर्वोपाय आश्रयणीयः; उत्तरोपायापेक्षया पूर्वोपायस्य अकिञ्चित्करत्वात् इति भावः । तत्र—तेषु मध्ये, प्रियवचः,—प्रियवाक्यं साम, तस्याः,—नायिकायाः, सख्याः, उपार्जनम्—आयत्तीकरणं भेदः, व्याजेन—छलेन, भूषाऽऽदेः अर्पणं, दानं, पादयोः पतनं—प्रणिपत्य प्रसादनं, नतिः । सामादौ तु—सामभेददाननमनरूपे चतुर्विधे अनुष्ठितेऽप्युपाये इत्यर्थः, परिक्षीणे—परितः,—सर्वथा, क्षीणे—विफले सति, तदनन्तरमिति भावः, अवधीरणम्—अवज्ञया किमप्यकरणम्, उपेक्षा स्यात्—भवेत्, (एतस्यामपि क्षीणायां) रभसः,—वेगः, बलात्कार इति यावत्, तथा त्रासः,—भीत्युत्पादनं, हर्षः,—प्रमोदः, आदिर्यस्य तथोक्तः, तस्मात्, कोपभ्रंशः,—मानखण्डनं, रसान्तरम्—अन्यो रसः, तत्संज्ञ उपायः स्यात् इत्यर्थः; सहसा भावान्तरयोगात् पूर्वभावस्य कोपस्य विध्वंसः रसान्तरसंज्ञः स्यादिति भावः । रसान्तरेण मानभङ्गो यथा,—"कथं मम्मीरसि क्षतपक्षनिस्वनः शिलीमुखोऽपतदिति जल्पति प्रिये । विहस्य किं किमिति सजल्पया तया ससाध्वसं कुपितममोचि कान्तया ॥" इति, अत्र कान्तवचसि शरपतनशङ्कया मानभङ्गः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—"नो चाटुश्रवणं कृतम्" इत्यादि। अत्र हि सामादयः पञ्च सूचिताः। रसान्तरमूह्यम्।

अथ प्रवासः,—

प्रवासो भिन्नदेशित्वं कार्य्याच्छापाच्च सम्भ्रमात्।
तत्राङ्गचेलमालिन्यमेकवेणीधरं शिरः॥
निश्वासोच्छ्वासरुदितभूमिपातादि जायते॥२२५॥ (स)

किञ्च,—

अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशताऽरुचिः।
अधृतिः स्यादनालम्बस्तन्मयोन्मादमूर्च्छनाः॥
मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इह। (ह)

---

(स) प्रवासमाह, प्रवास इत्यादि।—कार्य्यात्—अभीष्टफललाभनिमित्तं, किङ्करत्वादिप्रसङ्गात् वा, शापात्—अभिसम्पातात्, सम्भ्रमात्—उपद्रवादिभयादित्यर्थः, च भिन्नदेशित्वं—देशान्तरवृत्तित्वं, दम्पत्योः एकत्र निवासाभाव इति यावत्, प्रवासः,—तन्नामा विप्रलम्भ इत्यर्थः; [अत्र "यत्र" इत्यनुषज्यते] यत्र स्त्रीपुंसयोर्भिन्नदेशित्वं, तत्तदनुभावजनकत्वेन स्वाद्यते, सः प्रवास इति सारः। अस्यानुभावानाह, तत्रेति।—तत्र—प्रवासप्रभेदके विप्रलम्भ इत्यर्थः, अङ्गस्य—शरीरस्य, चेलस्य—वस्त्रस्य च, मालिन्यं, शिरः, एकवेणीधरं, निश्वासः,—दीर्घश्वासः, उच्छ्वासः,—अन्तर्मुखश्वासः, रुदितं, भूमिपातादिकञ्च जायते। एतत् तु सर्वं प्रायेण नायिकाया एव, नायकस्य तु यथासम्भवमुन्नेयमिति बोध्यम्।

(ह) मतान्तरे स्मरस्य एकादश दशाः क्रमेणाह, अङ्गेष्विति।—इह—प्रवासे, अङ्गेषु—गात्रेषु, असौष्ठवं—सुन्दरत्वाभावः, मनोरमणीयत्ववैधुर्य्यमिति यावत्, प्रसाधनाभाव इति भावः, तापः,—सन्तापः, पाण्डुता—पाण्डुवर्णत्वं, कृशता—क्षीणाङ्गत्वं, (दशानां दशकं मन्तारस्तु—पाण्डुताकृशतेत्येकं पदं स्वीकृत्य पाण्डुतया संवलिता कृशतेति व्याचक्षते) अरुचिः,—विषयवैतृष्ण्यम्, अधृतिः,—धैर्य्याभावः, अनालम्बः,—अनाश्रयत्वं, सर्व्वशून्यता इत्यर्थः, तन्मयः,—तदेकतानचित्तत्वम्, उन्मादः,—भूतावेशादिनेवाव्यवस्थितचित्तत्वं, मूर्च्छना—मूर्च्छा, मृतिः च इत्येताः असौष्ठवादयः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

असौष्ठवं मलापत्तिस्तापस्तु विरहज्वरः ॥
अरुचिर्वस्तुवैराग्यं, सर्व्वत्रारागिताऽधृतिः ।
अनालम्बनता चापि शून्यता मनसः स्मृता ॥
तन्मयं तत्प्रकाशो हि वाह्याभ्यन्तरतस्तथा ॥२२६॥(क)

शेषं स्पष्टम् ।

एकदेशतो यथा मम तातपादानाम् ;—

"चिन्ताभिः स्तिमितं मनः, करतले लीना कपोलस्थली,
प्रत्यूषक्षणदेशपाण्डु वदनं, श्वासैकखिन्नोऽधरः ।
अम्भःशीकरपद्मिनीकिशलयैर्नोपैति तापः शमं,
कोऽस्याः प्रार्थितदुर्लभोऽस्ति सहते दीनां दशामीदृशीम् ?॥"(ख)

---

सत्यन्ताः एकादश स्मरदशाः, क्रमात्—उत्तरोत्तरं, सम्पद्यमानाः, ज्ञेयाः । [ "ज्ञेया दश" इत्यत्र "एकादश" इति पाठः कल्पनीयः, अन्यथा अङ्गेष्वसौष्ठवमित्यादि सत्यन्ता विवृतिः असङ्गता स्यात् ] ।

(क) असौष्ठवमाह, असौष्ठवमिति ।—मलानाम्, आपत्तिः,—प्राप्तिः, मालिन्यमित्यर्थः, असौष्ठवम् । तापमाह, ताप इति ।—विरहेण ज्वरः,—व्याधिस्तु तापः, [ पाण्डुता—पाण्डुवर्णत्वं, दुःखेन शरीरस्य निस्तेजस्कतया मलिनश्वेतीभावः, कृशता—दौर्बल्यम्, इत्येते प्रसिद्धे, अत एवैते अनुक्ते, मतान्तरे तु—पाण्डुतासंवलिता कृशतेत्यर्थः ] । अरुचिमाह, अरुचिरिति ।—अरुचिः, वस्तुषु वैराग्यं—विगतस्पृहत्वम् । अधृतिमाह, सर्व्वत्रेति ।—सर्व्वत्र—सर्व्वस्मिन् वस्तुनि, अरागिता—अननुरागिता, प्रमोदजनकताया अविश्वास इति यावत्, अधृतिः । अनालम्बनतामाह, अनेति ।—मनसः शून्यता च, अनालम्बनता—अवलम्बनराहित्यं, स्मृता । तन्मयमाह, तन्मयमिति ।—तथा वाह्याभ्यन्तरतः—वहिरिन्द्रियग्राह्ये मनोग्राह्ये च इत्यर्थः, तस्य—अभीष्टस्य, नायकस्येति यावत्, प्रकाशः,—सर्व्वत्र अध्यासवशात् स्वरूपेण परिचयः, स्वप्न इवालीकत्वेऽपि भानमिति यावत्, तन्मयम् । [ उन्मादमूर्च्छनामृतयः तु प्रसिद्धा, इत्यमूः न लक्षिता इति वेदितव्यम् ; अत एव वृत्तावपि वक्ष्यति—"शेषं स्पष्टम्" इति ।

(ख) चिन्ताभिरिति ।—कामपि वियोगिनीं दृष्टवतः कस्यापि वितर्कोक्तिरियम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भावी भवन् भूत इति त्रिधा स्यात्तत्र कार्य्यजः ॥२२७॥

कार्य्यजस्य बुद्धिपूर्व्वकत्वात् त्रैविध्यम्। (ग)

तत्र भावी यथा मम,—

"यामः ? सुन्दरि ! याहि पान्थ ! दयिते ! शोकं वृथा मा कृथाः,
शोकस्ते गमने कुतो मम ? ततो वाष्पं कथं मुञ्चसि ?।
शीघ्रं न व्रजसीति, मां गमयितुं कस्मादियं ते त्वरा ?
भूयानस्य सह त्वया जिगमिषोर्जीवस्य मे सम्भ्रमः ॥" (घ)

---

अस्याः,—खसुषमया रतिमपि तिरस्कुर्व्वाणायाः कान्तायाः, प्रार्थितदुर्लभः,—प्रार्थितः पुनरपि दुर्लभः,—एतस्यामनुरक्तः, [ अत्र "विशेषणं विशेष्येण बहुलम्" (२।१।५७ पा०) इत्यनेन विशेषणविशेष्ययोः प्रायिकत्वाद्विशेषणसमासः ] कः,—को जनः, अस्ति ? यत्कृते इयम् ईदृशीं, दीनां, दशाम्—अवस्थां, विपत्तिमिति यावत्, सहते—अनुभवति, ईदृशी कीदृशी ? इत्याह,—मनः,—अन्तरिन्द्रियं, चिन्ताभिः,—ध्यानैः, स्तिमितं—स्थिरं, जड़ीकृतमित्यर्थः, विषयान्तरग्रहणाक्षमत्वमानीतमिति यावत्, [एतेन अनालम्बनता सूचिता ] कपोलस्थली—गण्डदेशः, करतले, लीना—स्थिता, वदनं—मुखं, प्रत्यूषस्य यः, क्षणदा—रात्रिः, तस्याः ईशः,—पतिः, ("रात्रिस्त्रियामा क्षणदा क्षपा" "ओषधीशो निशापतिः" इति चामरोक्तिः) क्षणदेशः,—चन्द्रः, तद्वत् पाण्डु—मलिनश्वेतीभावमापन्नमित्यर्थः, अधरः, श्वासेन—दीर्घनिश्वासेन, एकं—केवलं, खिन्नः,—क्लान्तः, शुष्क इति यावत्, तापः,—अन्तःसन्तापः, अम्भसां, शीकरैः,—विन्दुभिः, [ यद्यपि ("शीकरोऽम्बुकणाः स्मृताः" इत्यमरोक्तिः) तथाऽप्यत्र "विशिष्टवाचकानां पदानां सति विशेषणसमवधाने विशेष्यमात्रपरत्वम्" इति नयेन अम्भःशब्दयोगात् शीकरशब्देन कणामात्रं बोद्धव्यम् ] पद्मिनीकिशलयैः,—कमलिनीपत्रैः, अथवा,—अम्भःशीकरयुतैः पद्मिनीकिशलयैः, [ अस्मिन् पक्षे मध्यपदलोपी समासः ] शमं—शान्तिं, न उपैति—न प्राप्नोति। शार्दूलविक्रीड़ितं वृत्तम्।

(ग) कार्य्यजस्येत्यादि।—बुद्धिपूर्वकत्वात्—स्वेच्छया विधीयमानत्वात् इत्यर्थः। [ एवञ्च भिन्नदेशगमनस्य सम्भावनायां भावित्वं, तन्निश्चये वर्त्तमानत्वं, तन्निष्पत्तौ भूतत्वम्; अन्ययोस्तु शापजसम्भ्रमजयोः सम्भावनानिश्चयासम्भवादेकैकविधत्वमेवेति ज्ञेयम् ]।

(घ) याम इति।—दम्पत्योरुक्तिप्रत्युक्ती। हे सुन्दरि! यामः,—गच्छामः ?

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भवन् यथा,—

"प्रस्थानं वलयैः कृतं, प्रियसखैरस्रैरजस्रं गतं,
धृत्या न क्षणमासितं, व्यवसितं चित्तेन गन्तुं पुरः।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिताः,
गन्तव्ये सति जीवित! प्रियसुहृत्सार्थः किमु त्यज्यते?" ॥ (ङ)

["वर्त्तमानसामीप्ये वर्त्तमानवद्वा" (३।३।१३१पा०) इति वर्त्तमानसामीप्ये भविष्यदर्थे लट्। अविशेषणत्वात् बहुवचनम्]। (इति नायकस्योक्तिः)। हे पान्थ!—पथिक! याहि—गच्छ, (इति नायिकायाः प्रत्युक्तिः)। अत्र गमनसम्भावनामात्रेण यत् 'पान्थ' इति सम्बोधनं, तत् आत्मनि कान्तस्य प्रेमाभावसूचनाय, तदवगत्य कुटिल्येव 'दयिते' इत्यनेन प्रतिसम्बोधनम्; तथा हि—हे दयिते!—प्रिये! वृथा शोकं, मा कृथाः,—न कुरु, (इति नायकस्योक्तिः)। ते—तव, गमने, मम शोकः कुतः?—किमर्थम्? (इति नायिकायाः प्रत्युक्तिः)। तत्,—तर्हि, कथं—किमर्थं, वाष्पं—नेत्रजलं, मुञ्चसि—त्यजसि? रोदिषीत्यर्थः, (इति नायकस्योक्तिः)। शीघ्रं—सत्वरं, न व्रजसि—न गच्छसि, इति—इति हेतोः, वाष्पं मुञ्चामीति शेषः, (इति नायिकायाः प्रत्युक्तिः)। मां गमयितुं, ते—तव, इयं, त्वरा—व्यग्रता, कस्मात्?—किमर्थम्? (इति नायकस्योक्तिः)। त्वया सह, जिगमिषोः,—गन्तुमिच्छोः, मे—मम, मदीयस्येति यावत्, अस्य, जीवस्य—जीवितस्य, भूयान्—महान्, अयं, सम्भ्रमः,—त्वरा, व्यग्रतेति यावत्, अवश्यं जिगमिषावपि त्वयि विलम्बं कुर्व्वाणे मम प्राणाः कण्ठावरुद्धा इवोच्चिज्यन्ते, यतस्तेऽपि त्वया सह गन्तुं कृतनिश्चयाः सन्ति इति हृदयम्, (इति नायिकायाः प्रत्युक्तिः)। अत्र हि कान्तासम्मतिसापेक्षतया, गमनस्य सम्भावनामात्रं ज्ञेयम्। शार्दूलविक्रीड़ितं वृत्तम्।

(ङ) प्रस्थानमिति।—कान्तप्रवासं निश्चित्य स्वजीवितं प्रति नायिकाया उक्तिरियम्। भो जीवित! प्रियतमे—त्वत्तोऽपि अत्यन्ते प्रिये, यातुं—विदेशं गन्तुं, निश्चितचेतसि—स्थिरचित्ते, सति, वलयैः,—करभूषणविशेषैः, प्रस्थानं—यात्रा, कृतम्; कान्तस्य भाविविरहचिन्तया शरीरकार्श्यात् हस्तात् वलयभ्रंशो जात इति भावः; तथा प्रियसखैः,—प्रियबन्धुभिः, सततम् एकत्रावस्थितेरिति भावः, यद्वा,—दुःसहदुःखे अश्रुपातेनैव जीवनधारणं भवतीति स्वरक्षाकारित्वात् प्राणप्रियैरित्यर्थः, अस्रैः,—अश्रुभिः, अजस्रं—निरवच्छिन्नं, गतं—प्रस्थितं, पतितुमारब्धमित्यर्थः; "समप्राणः सखा मतः" इत्युक्तेः सख्युर्गमने सख्युरपि गमनस्य उचितत्वात् इति भावः; यद्वा नित्यमश्रूणां

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भूतो यथा,—"चिन्ताभिः स्तिमितम्" इत्यादि । शापाद्‌ यथा,—"तां जानीथाः" इत्यादि । सम्भ्रमो दिव्यमानुषनिर्घातोत्पातादिजः । यथा,—विक्रमोर्वश्यामुर्वशीपुरूरवसोः । (च)

निपाते तेषामपि चिराय विलयो जातः, इदानीम् अश्रूणि न पतन्ति इत्यभिप्रायः । (एषु पुनः प्रियसखत्वोपादानमत्यन्तप्रियत्वसूचनाय ; अन्ये तु—अश्रुजीवितयोरेकहृदयगामित्वादत्यन्तप्रियत्वमित्याहुः, नाड़ीविशेषेण हृत्कोषात् अश्रुनिर्गमात् । न चैवं धृतेरपि प्रियसखत्वापत्तिरिति वाच्यं, धृतेरात्मधर्म्मत्वेन मनोधर्म्मत्वेन वा हृदयहत्तित्वायोगात् ; यद्वा,—प्रियजीवने एव वलया धार्य्यन्त इति वलयानां, धृतेः प्रीतिजनकत्वात्, चित्तस्य तत्प्रवणत्वात् प्रियस्य सुहृत्त्वम् ; अश्रुणान्तु मानभङ्गव्यञ्जकतयाऽत्यन्तप्रियत्वमित्यत्र पृथक् प्रियसखत्वोपपादनम् इति ) तथा धृत्या—धैर्य्येण, क्षणं—क्षणमात्रमपि, न आसितं—न स्थितं, वियोगासहिष्णुत्वेन धैर्य्यं विनष्टमिति भावः, चित्तेन—मनसा, पुरः,—अग्रतः, प्रियतमस्येति भावः, गन्तुं व्यवसितम्—उद्युक्तम् ; इत्थं सर्वे—मदाश्रिता वलयादय इत्यर्थः, समं—युगपत्, प्रियेण सह वा, प्रस्थिताः,—प्रचलिताः ; अतः गन्तव्ये—त्वयाऽपि एकस्मिन् समये अवश्यं गन्तव्यमिति स्थिते सति, प्रियसुहृत्सार्थः,—प्रियाश्च ते सुहृदश्चेति प्रियसुहृदस्तेषां सार्थः,—समुदायः, ("सार्थो वणिक्समूहे स्यात् अपि सङ्घातमात्रके" इति मेदिनी ) वलयादिरित्यर्थः, [ अत्र "जीवितप्रिय" इति समस्तपाठे—जीवितस्य जीवनीपमस्य कान्तस्य प्रिय इत्यर्थः, ] किमु—कथं, त्यज्यते ?—त्यक्तुं न युज्यते, तेनैव साकं गम्यतामित्यर्थः । प्रियसुहृद्भिः सह गमने कष्टातिशयो न भविष्यति इति प्रियतमगमने गन्तुमुद्यताः वलयादयः सख्युचितं कर्म्म कुर्व्वन्ति, यदि च त्वं प्रियस्य सुहृद्भवसि, तत् तवापि अवश्यं तदनुगमनं भविष्यति ; ततः साम्प्रतमेवानुगमनं न्याय्यमिति भावः । [ अत्र नायिकारतेर्नायक आलम्बनं, विरहदशायामेकाकित्वेन अवस्थानाद्युद्दीपनं, तथाऽभिधानं चानुभावः, अश्रुपातहृत्तापव्यङ्ग्यः, विषादो व्यभिचारी प्रतीयते ]। अमरुशतकस्येदं पद्यम् । शार्दूलविक्रीड़ितं वृत्तम् ।

(च) भूतं प्रवासमुदाहरति, चिन्ताभिरिति ।—( २३२ पृष्ठे ) व्याख्यातमिदं पद्यम् । स्वहृदयङ्गमस्य सङ्गमाभावे विरहिण्या दशावर्णनेयम् ; अत एव भूतोऽत्र प्रवास इति बोध्यम् । शापजमुदाहरति—"तां जानीथाः" इति । इदमपि व्याख्यातपूर्वं पद्यम् । प्रोषितभर्तृकाया नायिकाया उदाहरणमिदम् । अत्र हि यक्षेश-शापात् यक्षस्य प्रवासः स्पष्टः । दिव्यः,—विद्युदुल्कादिः, मानुषः,—मर्त्त्यलोकभवः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र पूर्वरागोक्तानामभिलाषादीनामत्र उक्तानाञ्च अङ्ग-सौष्ठवादीनामपि दशानामुभयेषामपि उभयत्र सम्भवेऽपि चिरन्तनप्रसिद्ध्या उभयसम्भवे विविच्य प्रतिपादनम्।

अथ करुणविप्रलम्भः,—

यूनोरेकतरस्मिन्
गतवति लोकान्तरं पुनर्लभ्ये।
विमनायते यदैक-
स्तदा भवेत् करुणविप्रलम्भाख्यः॥ २२८॥ (छ)

यथा,—कादम्बर्य्यां पुण्डरीकमहाश्वेतावृत्तान्ते।

पुनरलभ्ये शरीरान्तरेण वा लभ्ये तु करुणाख्य एव रसः। किञ्च अत्राकाशसरस्वतीभाषाऽनन्तरमेव शृङ्गारः, सङ्गमप्रत्याशया रतेरुद्भवात्। अयन्तु "करुणः" इत्यभियुक्ताः मन्यन्ते। यच्चात्र "सङ्गमप्रत्याशाऽनन्तरमपि भवतो विप्रलम्भशृङ्गारस्य

---

भूकम्पादिः, निर्घात इति—नाभसोपलक्षणम्, उत्पातः,—अनिष्टसूचकः दैवकृतः प्रकृतिविपर्य्यासः। [ आदिना उन्मादादिपरिग्रहः ]। उर्व्वशीपुरूरवसोरिति।—उर्व्वशी हि पुरा मित्रावरुणशापात् मनुष्यलोकं प्राप्य पुरूरवसो गृहे "यदि भवन्तं सुरतसमयातिरिक्तसमये नग्नं पश्यामि, तदा त्वामहं त्यक्ष्यामि, मम मेषद्वयं भवता रक्षणीयम्" इति नियमं कृत्वा स्थिता। तदनन्तरं देवैरन्धतमसे मेषद्वयमपहृतम्; तच्छ्रुत्वा पुरूरवाः ससम्भ्रमं वस्त्रमपरिधायैव खड्गपाणिः मेषापहर्त्तुः पश्चाद्धावितः। एतस्मिन्नन्तरे विद्युद्भिः तं नग्नमालोक्योर्वशी स्वर्गं गतेति ग्रन्थस्य वर्त्तुलार्थः। [ अत्र देवकृतमेषापहरणरूपदिव्योत्पातेन पुरूरवसः सम्भ्रमः, तेनोर्वश्याः भिन्नदेशवृत्तित्वमवगन्तव्यम् ]।

(छ) करुणविप्रलम्भमाह, यूनोरित्यादि।—यूनोः,—दम्पत्योः मध्ये, लोकान्तरं गतवति, एकस्मिन्—एकतरे, पुनर्लभ्ये—तेन शच्छरीरेण एव पुनः प्राप्ये सति, एकः,—तयोरेकतर इत्यर्थः, यदा—यत्र [ इत्यव्ययम् ] विमनायते—विमना इव आचरति, शोकार्त्तः सन् विलापादिकं करोतीत्यर्थः, तदा करुणविप्रलम्भाख्यो भवेत्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रवासाख्यो भेद एव" इति केचिदाहुः, तदन्ये "मरणरूप-विशेषसम्भवात् तद्भिन्नमेव" इति मन्यन्ते । (ज)

अथ सम्भोगः,—

**दर्शनस्पर्शनादीनि निषेवेते विलासिनौ ।**
**यत्रानुरक्तावन्योऽन्यं सम्भोगोऽयमुदाहृतः ॥२२६॥ (झ)**

आदिशब्दादन्योऽन्याधरपानचुम्बनादयः । यथा "शून्यं वासगृहम्" इत्यादि । (ञ)

---

(ज) पुनरलभ्ये इति ।—अत्र रतेर्नाशात् उत्कटशोकसम्भवाच्च करुणाख्य एव रसः, न तु करुणविप्रलम्भ इत्यर्थः । नायिकानायकाऽन्यतरवियोगे चेतोवैक्लव्यस्यैव प्राधान्यात् करुणरसस्यैव सम्भवे कथमत्र रतेः प्राधान्यात् शृङ्गाररसावसरः ? इत्यपेक्षायामाह, किन्त्वत्रेति ।—अत्र—कादम्बरीग्रन्थे, चन्द्रापीडसन्निधौ निजकान्तपुण्डरीकेतिवृत्तवर्णनेषु महाश्वेतावाक्येषु इति सारः । वियोगेऽपि जीवितलज्ज्ञानावस्थायां विक्लवताऽनुप्राणितरतेरेव मुख्यत्वात् विप्रलम्भाख्यः शृङ्गार एव । वैक्लव्यन्तु सञ्चारिमात्रमेव इत्यभिप्रायः । अयं—नायिकानायकान्यतरस्य पुनरलभ्यत्वे शरीरान्तरेण वा लभ्यत्वे प्रतीयमान इत्यर्थः ; तु—पुनः, करुणः,—करुणविप्रलम्भ इत्यर्थः, अभियुक्ताः,—मान्याः । यत्र तु मरणज्ञानं सम्यक् जायते, तत्र रतिपोषितवैक्लव्यस्यैव प्राधान्यात् करुण एव ; यदा तु सत्यपि मृतिज्ञाने देवताऽनुग्रहादिना प्रत्युज्जीवनज्ञानं क्षणेनाऽपि स्यात्, तदा आलम्बनस्य उत्कटनैराश्यासम्भवात् दीर्घप्रवास इव विप्रलम्भ एव, न करुणः इति केचित् आहुः । तदन्ये—एभ्यो भिन्नाः, भिन्नं—करुण-विप्रलम्भ-प्रवासाभ्यामन्यं, शुद्धं करुणमेवेत्यर्थः । स्पष्टमन्यत् ।

(झ) सम्भोगमाह, दर्शनेत्यादि ।—यत्र, अन्योऽन्यम् [ एकतरानुरागाभावे शृङ्गाराभास एव, तद्वारणाय एतदुपात्तम् ] अनुरक्तौ—अनुरागिणौ, विलासिनौ—[ विलासिनी च विलासी च इत्येकशेषः ] विलसनशीलौ दम्पती, दर्शनस्पर्शनादीनि, निषेवेते—कुरुतः, अयं, सम्भोगः,—तदाख्यः शृङ्गारः, उदाहृतः,—कथितः ।

(ञ) उदाहरति, शून्यमिति ।—(२० पृष्ठे) व्याख्यातमिदं पद्यम् । अत्र हि नायिकायाः किञ्चिच्छनैरुत्थाय प्राणप्रियपरिचुम्बनादिना, व्याजेन निद्राणस्य च नायकस्योदञ्चद्रोमाञ्चत्वादिनाऽनुभावेनानुरागः स्पष्टं प्रतिभासते, तन्मूलश्च परस्परं सम्भोगोऽपि स्पष्टः इति बोध्यम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सङ्ख्यातुमशक्यतया चुम्बनपरिरम्भणादिबहुभेदात्।
अयमेक एव धीरैः कथितः सम्भोगशृङ्गारः॥
तत्र स्यादृतुषट्कं चन्द्रादित्यौ तथोदयास्तमयः।
जलकेलिवनविहारप्रभातमधुपानयामिनीप्रभृतिः॥
अनुलेपनभूषाऽऽद्या वाच्यं शुचि मेध्यमन्यच्च॥२२०॥(ट)

तथा च भरतः,—"यत्किञ्चिल्लोके शुचि मेध्यमुज्ज्वलं दर्शनीयं वा, तत् सर्वं शृङ्गारेणोपमीयते" इति। किञ्च, (ठ)—

कथितश्चतुर्विधोऽसा-
वानन्तर्य्यात् तु पूर्वरागादेः॥ २३१॥ (ड)

---

(ट) ननु अयं कतिविधः? इत्याशंसायामाह, सङ्ख्यातुमिति।—अयं—सम्भोगशृङ्गारः, चुम्बनम्—अधरपानं, परिरम्भणम्—आलिङ्गनं, तदादिबहुभेदभिन्नत्वेन सङ्ख्यातुम्, अशक्यतया—न शक्य इत्यनेन हेतुनेत्यर्थः, धीरैः,—सहृदयैः, एकः एव कथितः। प्रकाशकृताऽप्यभिहितम्;—"तत्र आद्यः परस्परावलोकनालिङ्गनाधरपानपरिचुम्बनाद्यनन्तभेदत्वादपरिच्छेद्य एक एव गण्यते" इति। तत्र—सम्भोगे इत्यर्थः, ऋतुषट्कादिकं, वाच्यं—सम्भोगोद्दीपकतया वर्णनीयं, शुचि—निर्म्मलं, मेध्यं—पवित्रम्, अन्यत्—हर्म्यादि, स्यात्—उपयुक्तं भवेत्; तथोक्तं रसगङ्गाधरकृता,—"यद् यत् पवित्रं सङ्गम्यं तेन पुष्टिं प्रदर्शयेत्" इति।

(ठ) एवमस्यानन्तसङ्ख्योपपत्त्या एकविधत्वेनैव अङ्गीकारौचित्येऽपि, प्राधान्येन सङ्ख्यातुं शक्याः ये सम्भोगभेदाः तेषां चतुर्विधत्वं वक्तुमुपक्रमते, किञ्चेति।—एतदभेदवादिमतापेक्षया पक्षान्तरसूचनम्।

(ड) कथित इति।—असौ—सम्भोगशृङ्गारः, पूर्व्वरागादेः, आनन्तर्य्यात्—अनन्तरसम्भवत्वात्, तु—पुनः, चतुर्विधः, कथितः। आदिपदेन पूर्व्वराग-मान-प्रवास-करुणाः चत्वारः गृह्यन्ते, पूर्व्वरागादेरनन्तरमयं सम्पद्यते, इत्ययमपि पूर्व्वरागसम्भोगः, मानसम्भोगः, प्रवाससम्भोगः, करुणसम्भोगश्चेति चतुर्विध इति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यदुक्तम्,—

"न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते।
कषायिते हि वस्त्रादौ भूयान् रागो विवर्द्धते॥" इति।(ढ)

तत्र पूर्वरागानन्तरं सम्भोगो यथा,—कुमारसम्भवे पार्वती-परमेश्वरयोः। प्रवासानन्तरं सम्भोगो यथा मम तातपादानाम्,—

"क्षेमं ते ननु पक्ष्मलाक्षि?—किसअं क्खेमं महङ्गं दिढं,
एतादृक् कृशता कुतः?—तुह पुणो पुट्ठं सरीरं जदो।
केनाहं पृथुलः प्रिये?—प्पणइणीदेहस्स सम्मोलणात्,
त्वत्तः सुभ्रु! न काऽपि मे—जइ इदं क्खेमं कुदो पुच्छसि?॥"(ण)

एवमन्यत्रापि ऊह्यम्।

---

(ढ) ननु दुःखबहुले विप्रलम्भे किं नाम रसत्वम्? इत्याशङ्क्य तस्य सम्भोगानुगुणत्वं सम्पादयति, नेति।—विप्रलम्भेन, विना सम्भोगः, न पुष्टिम् अश्नुते—परिपोषं न प्राप्नोति, विप्रलम्भपूर्व्वको हि सम्भोगः प्रकृष्टो भवतीति भावः। हि—तथाहि, वस्त्रादौ कषायिते—कषायजलेन सिक्ते इत्यर्थः, भूयान्—महान्, रागः विवर्द्धते—वृद्धिं गच्छति। [एतेन पूर्व्वरागादिकं विनाऽपि सम्भोगः सम्भवतीति सूचितम्; तथा च प्रकृष्टापकृष्टभेदेन सम्भोगो द्विविधः; विप्रलम्भानन्तरः सम्भोगः प्रकृष्टः; स च विप्रलम्भः पूर्व्वरागादिचातुर्विध्येन चतुर्विधः; तद्विपरीतोऽपकृष्ट इति फलितम्]।

(ण) क्षेममिति।—नायकनायिकयोरुक्तिप्रत्युक्ती, तत्र नायकस्य संस्कृत-भाषयोक्तिः, नायिकायाः प्राकृतभाषया पुनः प्रत्युक्तिरित्यवधेयम्। हे पक्ष्मलाक्षि!—प्रशस्तलोमशोभितनयने! ते—तव, क्षेमं—कुशलं, ननु—किम्? (इति नायकस्योक्तिः)। [किसअमिति।—कृशकं क्षेमं मदङ्गं दृढम् इति संस्कृतम्]। दृढम्—अत्यर्थं, कृशकं—शीर्णं, यत् मम अङ्गं, तदेव क्षेमं—कुशलं, ममाङ्गस्य कार्श्यमेव क्षेममिति भावः। (इति नायिकायाः प्रत्युक्तिः)। एतादृक्—एतादृशी, एवंविधेति यावत्, ("तव" इत्यध्याहार्य्यम्) कृशता—शरीरदौर्बल्यमित्यर्थः, कुतः,—कथं जाता? (इति नायकस्य प्रश्नः)। [तुह इति।—तव पुनः पुष्टं शरीरं यतः इति संस्कृतम्]। यतः,—यस्मात्, तव शरीरं पुनः, पुष्टम्। (इति नायिकायाः प्रत्युक्तिः)। हे प्रिये! अहं, केन—केन हेतुना, पृथुलः,—स्थूलाङ्गः? अभवमिति शेषः। (इति नायकस्योक्तिः)। [पणइणी इति।—प्रणयिनीदेहस्य सम्मेलनात् इति संस्कृतम्]। प्रणयिन्याः,—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ हास्यः,—

विकृताकारवाग्वेशचेष्टाऽऽदेः कुहकाद्भवेत्।
हास्यो हासस्थायिभावः श्वेतः प्रमथदैवतः॥
विकृताऽऽकारवाक्चेष्टं यदालोक्य हसेज्जनः।
तदत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम्॥
अनुभावोऽक्षिसङ्कोचवदनस्मेरताऽऽदिकम्।
निद्राऽऽलस्यावहित्थाद्या अत्र स्युर्व्यभिचारिणः॥

ज्येष्ठानां स्मितहसिते
मध्यानां विहसितावहसिते च।

---

अपरकान्तायाः, देहस्य सम्मेलनात्—सङ्गात्। ["सम्मीलनात्" इति पाठे तु—त्वदन्तःप्रवेशात् इत्यर्थः] (इति नायिकायाः प्रत्युक्तिः)। हे सुभ्रु!—सुन्दरि! [सूशब्दस्योवङ्स्थानीयतया "नेयङुवङ्स्थानावस्त्री" (१।४।४ पा०) इति नदीसंज्ञाप्रतिषेधे "अम्बार्थनद्योर्ह्रस्वः" (७।३।१०७ पा०) इति ह्रस्वत्वाभावात्प्रामादिकोऽयं प्रयोग इत्येके, अन्ये तु—"अप्राणिजातेश्चारज्ज्वादीनामुपसङ्ख्यानम्" इति वार्त्तिके "अलाबूः" "कर्कन्धूः" इत्याद्यूकारान्तादूङमुदाजहार महाभाष्यकारः, इत्यस्याप्यूङन्तत्वात् नदीत्वे ह्रस्वत्वम्] त्वत्तः,—त्वदपेक्षया इत्यर्थः, काऽपि, मे—मम, न, प्रणयिनीति शेषः। (इति नायकस्योक्तिः)। [जइ इति।—यदि इदं क्षेमं कुतः पृच्छसि? इति संस्कृतम्]। यदि इदं—त्वमेव मम प्रणयिनी इति तवेदमेवाभिमतं, तर्हि इति भावः, कुतः,—किमर्थं, क्षेमं—कुशलं, पृच्छसि?—मम स्वास्थ्यविषयकजिज्ञासायाः किं फलम्? त्वयि प्रणयिनि किं मम कष्टम्? प्रवासस्थितस्याऽनन्यासक्तेस्तव साम्प्रतमपि यन्मय्येव केवलं प्रणयिनीत्वधीः, इतीऽधिकं किमपि मे कुशलं नास्तीति भावः। (इति नायिकायाः प्रत्युक्तिः)। शार्दूलविक्रीडितं वृत्तम्। अपरौ (मानकरुणौ) यथा,—"पादप्रणतमालोक्य कान्तमेकान्तकातरम्। मुञ्चन्ती वाष्पसन्तानं सुमुखी तेन चुम्बिता॥" इति। "कान्ते! घोरकृतान्तवक्त्रकुहरात् त्वं पुण्यपुञ्जेन मे मुक्ता क्लान्त तदर्जनश्रमभरं प्रत्यङ्गमालिङ्ग्य माम्। इत्याकर्ण्य निमीलितार्द्धनयनं स्मेरं शनैरानतं सोल्लास वदनाम्बुजं मृगदृशः स्वैरं चुचुम्बे प्रियः॥" इति च व्याख्यातुः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नीचानामपहसितं
तथाऽतिहसितञ्च षड् भेदाः ॥ (त)
ईषद्विकासिनयनं स्मितं स्यात् स्पन्दिताधरम्।
किञ्चिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः ॥
मधुरस्वरं विहसितं
सांसशिरःकम्पमवहसितम्।
अपहसितं सास्राक्षं
विक्षिप्ताङ्गं भवत्यतिहसितम् ॥ २३२ ॥ (थ)

(त) हास्यरसमाह, विकृतेत्यादि।—विकृतः आकारः, वाक्, वेशः, चेष्टादिश्च यस्य तादृशात्, कुहकात्—विस्मापकात्, नटादित्यर्थः, [कुह विस्मापने इत्यस्य कुजि रूपमिदं, विस्मापकत्वञ्च नानाऽऽविष्कारप्रकटनकारितया नटस्य सिद्धमेव] (उपलक्षणमेतत्, तेन विकृताकारादिविषयकश्रव्यकाव्यादेरपि ग्रहणं बोध्यम्) [कुतुकादिति पाठे—कौतुकजनकात्, विकृताकारवाक्चेष्टादेर्वैलक्षण्यादित्यर्थः] हासः,—तदाख्यः रसः, भवेत्; (अत एवोक्तं,—"विपरीतालङ्कारैर्विकृताचाराभिधानवेशैश्च। विकृतैरङ्गविकारैर्हसतीति रसः स्मृतो हास्यः॥" इति)। तस्य स्थायिभावो हासः, श्वेतः वर्णः, (तथोक्तं—"सितो हास्यः प्रकीर्त्तितः" इति) प्रमथः,—शिवानुचरः, दैवतं यस्य तादृशः, (तथोक्तं—"हास्यः प्रमथदैवतः" इति) यत् विकृताकारवाक्चेष्टं वस्तु आलोक्य—दृष्ट्वा, जनः हसेत्, तत्, अत्र—रसे, आलम्बनं प्राहुः, तथा तस्य चेष्टा—विकृताकारादिरूपा इत्याशयः, उद्दीपनं मतम्। अक्ष्णोः,—नेत्रयोः, सङ्कोचः, वदनस्य—मुखस्य, स्मेरताऽऽदिकश्च अत्र अनुभावः। निद्रा, आलस्यम्, अवहित्थादयश्च अत्र व्यभिचारिणः स्युः। हास्यरसस्थायिभावस्य हासस्य पात्रभेदेन भेदानाह, ज्येष्ठानामिति।—ज्येष्ठानाम्—उत्तमानां, स्मितं हसितञ्च, मध्यानां—मध्यमानां, विहसितम् अवहसितञ्च, नीचानाम्—अधमानाम्, अपहसितं तथा अतिहसितञ्च, इत्येवं हासस्य षट् भेदाः, भवन्ति इति शेषः। ["तदेव षड्भेदः" इति पाठे,—तत्—तस्मात्, हास्यभेदादित्यर्थः, एषः,—हास्यरसः, षड्भेदः,—षट्प्रकारः इति]।

(थ) स्मितादीनां लक्षणमाह, ईषदिति।—ईषत् विकासिनी नयने यत्र तत्,



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा मम,—

"गुरोर्गिरः पञ्च दिनान्यधीत्य
वेदान्तशास्त्राणि दिनत्रयञ्च ।
अमी समाघ्राय च तर्कवादान्
समागताः कुक्कुटमिश्रपादाः ॥" (द)

तथा स्पन्दितः, अधरो यस्मिन् तथाभूतं हास्यं, स्मितं स्यात् । तत्र—हासेषु मध्यं, किञ्चित्—ईषत्, लक्ष्याः,—दृश्याः, द्विजाः,—दन्ताः, यत्र तादृशं, ("दन्तविप्राण्डजा द्विजाः" इत्यमरः) हास्यं, बुधैः हसितं कथितम् । मधुरः,—मनोहरः, स्वरः यत्र तादृशं हास्यं, विहसितम् ; अंसस्य—स्कन्धस्य, शिरसश्च, कम्पेन सहितं, हास्यम्, अवहसितम् । साम्राक्षम्—अश्रुपूर्णनयनं, हास्यम्, अपहसितं, विक्षिप्तानि, अङ्गानि यस्मिन् तादृशं हास्यम्, अतिहसितं भवति । [ अत एवोक्तमभियुक्तैः,—"आत्मस्थः परसंस्थश्चेत्यस्य भेदद्वयं मतम् । आत्मस्थो द्रष्टुरुत्पन्नो विभावेक्षणमात्रतः ॥ हसन्तमपरं दृष्ट्वा विभावश्चोपजायते । योऽसौ हास्यरसस्तज्ज्ञैः परस्थः परिकीर्त्तितः ॥ उत्तमानां मध्यमानां नीचानामप्यसौ भवेत् । त्र्यवस्थः कथितस्तस्य षड् भेदाः सन्ति चापरे ॥ स्मितञ्च हसितं प्रोक्तमुत्तमे पुरुषे बुधैः । भवेद्विहसितं चोपहसितं मध्यमे नरे ॥ नीचेऽपहसितञ्चातिहसितं परिकीर्त्तितम् । ईषत्फुल्लकपोलाभ्यां कटाक्षैरप्यनुल्वणैः ॥ अदृश्यदशनो हासो मधुरः स्मितमुच्यते । वक्त्रनेत्रकपोलैश्चेदुत्फुल्लैरुपलक्षितः ॥ किञ्चिल्लक्षितदन्तश्च तदा हसितमिष्यते । सशब्दं मधुरं कालगतं वदनरागवत् ॥ आकुञ्चिताक्षि मन्द्रञ्च विदुर्विहसितं बुधाः । निकुञ्चितांसशीर्षश्च जिह्मदृष्टिविलोकनः ॥ उत्फुल्लनासिको हासो नाम्नोपहसितं मतम् । अस्थानजः साश्रुदृष्टिराकम्पस्कन्धमूर्धजः ॥ शार्ङ्गदेवेन गदितो हासोऽपहसिताह्वयः । स्थूलकर्णकटुध्वानो वाष्पपूरप्लुतेक्षणः ॥ करोपगूढपार्श्वश्च हासोऽतिहसितं मतम् ॥" इति ] ।

(द) उदाहरति, गुरोरिति ।—अमी कुक्कुटमिश्रपादाः, गुरोः,—प्रभाकरस्य, गिरः,—मीमांसाशास्त्राणीत्यर्थः, पञ्च दिनानि—पञ्चदिनमात्रम्, अधीत्य—पठित्वा, तथा वेदान्तशास्त्राणि—शारीरकमीमांसाग्रन्थान्, दिनत्रयं—केवलं त्रीणि दिनानि यावत्, अधीत्य, एवं तर्कवादान्—तर्कशास्त्राणि, न्यायदर्शनानीत्यर्थः, समाघ्राय—घ्राणेन्द्रियविषयमात्रं विधायेत्यर्थः, आघ्राणमात्रं कृत्वा, न तु अधीत्य इति भावः, समागताः । [ अत्र कुक्कुटशर्म्मा आलम्बनम्, अस्य अनधीतशास्त्रत्वेऽपि सभायामधीतशास्त्रवदागमनं, अर्थ्यमायाश्च तादृशलक्षोद्दीपनम्, आचिख्या दन्तविकाशादयोऽनु-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अस्य लटकमेलकप्रभृतिषु परिपोषो द्रष्टव्यः। (ध)

अत्र च, (न)—

यस्य हासः स चेत् क्वापि साक्षान्नैव निबध्यते।
तथाप्येष विभावादिसामर्थ्यादुपलभ्यते॥
अभेदेन विभावादिः साधारण्यात् प्रतीयते।
समाजिकैस्ततो हास्यरसोऽयमनुभूयते॥२३३॥(प)

एवमन्येष्वपि रसेषु बोद्धव्यम्।

अथ करुणः,—

इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत्।
धीरैः कपोतवर्णोऽयं कथितो यमदैवतः॥

---

भावाः, हर्षादयः सञ्चारिभावाः, इत्येषां संयोगात्सामाजिकानां हासोऽभिव्यज्यते इति बोध्यम् ]। उपजातिः वृत्तम्। यथा वा रसगङ्गाधरकृतोदाहृतं,—"मत्तातपादैर्विहिते निबन्धे निरूपिता नूतनयुक्तिरेषा। अङ्गं गवां पूर्व्वमहो! पवित्रं कथं न वा रासभधर्म्मपत्न्याः?॥" इति। [ अत्र हि वक्तुस्तात आलम्बनं, तदीया युक्तिरुद्दीपनम्, आक्षिप्तो दन्तविकाशादिरनुभावः, पादादिपादव्यङ्ग्या निन्दा च व्यभिचारी भावः, इत्येषां संयोगाद्धासोऽभिव्यज्यते ]।

(ध) परिपोषः,—बाहुल्यम्।

(न) ननु रसे नायकस्याऽभेदः सामाजिके भासते, स चात्र श्लोके न निबद्धः, तत् कथं तस्याभेदारोपो जायताम्? इत्यत आह, अत्र चेति।—अत्र—हास्यरसे इत्यर्थः, चकारादन्यत्रापि।

(प) यस्येति।—यस्य—नायकस्य इत्यर्थः, हासः, वर्ण्यते इति शेषः, चेत् स क्वापि—कस्मिंश्चिदुदाहरणे, साक्षात् नैव निबध्यते—विरच्यते, तथाऽपि एषः,—नायक इत्यर्थः, विभावादीनां, सामर्थ्यात्—शक्तेः, अन्यथाऽनुपपत्तिज्ञानादिति बोध्यम्, उपलभ्यते—प्रतीयते; ततः किम्? इत्यत आह, अभेदेनेति।—साधारण्यात्—साधारणीकरणव्यापारात्, विभावादिः, अभेदेन—तादात्म्येन, प्रतीयते, ततः,—साधारण्यज्ञानात्, सामाजिकैः, अयं हास्यरसः, अनुभूयते। यत्रोदाहरणे रसनायकस्य साक्षान्न निबन्धः, तत्र आक्षेपादेव तदुपादानमिति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शोकोऽत्र स्थायिभावः स्याच्छोच्यमालम्बनं मतम् ।
तस्य दाहादिकाऽवस्था भवेदुद्दीपनं पुनः ॥
अनुभावा दैवनिन्दा भूपातक्रन्दितादयः ।
वैवर्ण्योच्छ्वासनिश्वासस्तम्भप्रलपनानि च ॥
निर्वेदमोहापस्मारव्याधिग्लानिस्मृतिश्रमाः ।
विषादजड़तोन्मादचिन्ताद्या व्यभिचारिणः॥२२४(फ)

शोच्यं—विनष्टबन्धुप्रभृति । यथा,—मम राघवविलासे,—

"विपिने क्व जटानिबन्धनं तव चेदं क्व मनोहरं वपुः ।
अनयोर्घटना विधेः स्फुटं ननु खड्गेन शिरीषकर्त्तनम् ॥" (ब)

---

(फ) करुणरसमाह, अथेत्यादि ।—इष्टस्य—प्रियस्य वस्तुनः, पुत्रादेर्वा, नाशात्—विच्छेदात्, मरणाद्वा, अनिष्टस्य, आप्तेः,—लाभाच्च, करुणाख्यः,—करुणो नाम, रसः भवेत् । [ तथोक्तं प्रदीपकृता,—"इष्टवधदर्शनाद्वा विप्रियवचनस्य संश्रवाद्वाऽपि । एभिर्भावविशेषैः करुणरसो नाम सम्भवति ॥" इति] । अयं, धीरैः,—पण्डितैः, कपोतवर्णः,—कपोतवर्बूरकान्तिः, तथा यमदैवतः, कथितः । [तथोक्तं,—"कपोतः करुणश्चैव""करुणो यमदैवतः" इति च ] । अत्र—रसे, शोकः,—मृतप्रियजनादिजन्योऽन्तःसन्तापः, स्थायिभावः स्यात्, शोच्यं—शोकविषयीभूतं वस्तु, मृतसुहृद्बान्धवजनादि इति यावत्, आलम्बनं मतम् ; तस्य—शोच्यस्य, दाहादिका, अवस्था, पुनः,—तु, उद्दीपनं, भवेत् । दैवस्य—अदृष्टस्य, निन्दा, भुवि—पृथिव्यां, पातः,—पतनं, भूलुण्ठनमित्यर्थः, क्रन्दितादयः,—रोदनविलपनादयः, वैवर्ण्यं—विवर्णत्वम्, उच्छ्वासः,—दीर्घनिश्वसितं, निश्वासः,—अन्तर्मुखश्वासः, स्तम्भः,—जाड्यं, प्रलपनञ्च, अनुभावाः, अत्र स्युः इति शेषः । अस्य च निर्वेदः, मोहः, अपस्मारः, व्याधिः, ग्लानिः, स्मृतिः, श्रमः, विषादः, जड़ता, उन्मादः, चिन्ताऽऽदयश्च व्यभिचारिणः,—व्यभिचारिभावाः ज्ञेया इति शेषः । [ अत एवोक्तं रसगङ्गाधरकृता,—"श्वसनविरुदितैर्मोहागमैश्च परिदेवितैर्विलपितैश्चैव । अभिनेयः करुणरसो देहायासाभिघातैश्च ॥" इति ] ।

(ब) उदाहरति, विपिन इति ।—विपिने—वने, जटानिबन्धनं—जटाधारणं, क्व ? इदं, मनोहरं—सुकोमलं, तव वपुश्च, क्व ? अनयोः,—जटाधारणमनोहर-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र हि रामवनवासजनितशोकार्त्तस्य दशरथस्य दैवनिन्दा। एवं बन्धुवियोगविभवनाशादौ अप्युदाहार्य्यम्। (भ) परिपोषस्तु महाभारते स्त्रीपर्वणि द्रष्टव्यः।

अस्य करुणविप्रलम्भाद्भेदमाह,—

शोकस्थायितया भिन्नो विप्रलम्भादयं रसः।
विप्रलम्भे रतिः स्थायी पुनः सम्भोगहेतुकः॥२३५(म)

अथ रौद्रः,—

रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः।
आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतम्॥
मुष्टिप्रहारपतनविकृतच्छेदावदारणैश्चैव।
सङ्ग्रामसम्भ्रमाद्यैरस्योद्दीप्तिर्भवेत् प्रौढ़ा॥

---

शरीरयोः, घटना—एकत्र योजना, विधिः,—विधातुः, खड्गेन, शिरीषस्य—तदाख्यस्य पुष्पस्य, कर्त्तनं—छेदनम्, इति स्फुटं—व्यक्तं, ननु—खलु। अत्रोत्प्रेक्षेत्येके, दृष्टान्त इति अपरे, विषम इति तु वयम्। उपेन्द्रवज्रा वृत्तम्।

(भ) अत्र प्रकरणात् दशरथ एव नायक इति बुध्यते, इत्यत आह, अत्रेति।—अस्मिन् उदाहृते पद्ये, रामस्य वनवासेन जनितो यः शोकस्तेनार्त्तः,—पीड़ितः, तस्य तथाभूतस्य, दशरथस्य, दैवस्य—भागधेयस्य, निन्दा—दोषाविष्करणम्। एवं बन्धूनां वियोगः,—मरणं, विभवस्य च नाशस्तदादौ अपि उदाहार्य्यम्। क्रमेण यथा,—"गृहिणी, सचिवः, सखी मिथः, प्रियशिष्या ललिते कलाविधौ। करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम्?॥" इति। अत्रेन्दुमतीमरणजनितशोकार्त्तस्याजस्य मृत्युनिन्दा। "प्रातर्भवामि वसुधाऽधिपचक्रवर्त्ती सोऽहं व्रजामि विपिने जटिलस्तपस्वी। यच्चिन्तितं तदिह दूरतरं प्रयाति यच्चेतसा न गणितं तदिहाभ्युपैति॥" इति। अत्र नष्टराज्यस्य रामस्य परिदेवनं, स्थायिभावः इति।

(म) करुणविप्रलम्भादस्य व्यवच्छेदमाह, शोकेति।—अयं रसः,—करुण इत्यर्थः, शोकस्थायितया, विप्रलम्भात्—करुणविप्रलम्भात्, भिन्नः। विप्रलम्भे—करुणविप्रलम्भे, पुनः, सम्भोगहेतुकः, रतिः स्थायिभावः अस्ति, अत्र च शोक इत्यनयोर्भेद इति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भ्रूविभङ्गोष्ठनिर्दंशबाहुस्फोटनतर्जनाः ।
आत्मावदानकथनमायुधोत्क्षेपणानि च ॥
अनुभावास्तथाक्षेपक्रूरसन्दर्शनादयः ।
उग्रताऽऽवेगरोमाञ्चस्वेदवेपथवो मदः ।
मोहामर्षादयश्चात्र भावाः स्युर्व्यभिचारिणः॥२२६(य)

यथा,—

"कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं
मनुजपशुभिर्निर्मर्य्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥" (र)

(य) रौद्ररसमाह, रौद्र इति ।—क्रोधः, स्थायिभावः, यस्य तादृशः, रक्तः,—रक्तवर्णः, रुद्रः अधिदैवतं यस्य तथोक्तः, रसः, रौद्रः, नामेति शेषः । तत्र—रौद्रे रसे, अरिः,—शत्रुः, आलम्बनम्—आलम्बनविभावः, तस्य—अरेः, चेष्टा, उद्दीपनं मतं, मुष्टिप्रहारेण यत् पतनं तेन, विकृतच्छेदनेन, अवदारणेन, यद्वा,—विकृतं—विरुद्धाचरणं, छेदः,—खड्गादिना छेदनम्, अवदारणं—शूलादिना वेधनं, तैः ; सङ्ग्रामसम्भ्रमाद्यैः,—युद्धव्यग्रतादिभिश्च, अस्य—रौद्रस्य, प्रौढ़ा—प्रवृद्धा, उद्दीप्तिः,—उद्दीपनं, भवेत् ; मुष्टिप्रहारादय उद्दीपनविभावा इति भावः । भ्रूविभङ्गः, ओष्ठनिर्दंशनं, बाहुस्फोटनं, तर्जनम्, आत्मनः अवदानकथनं—कृतकर्मणः प्रशंसनमित्यर्थः, आयुधानाम्—अस्त्राणाम्, उत्क्षेपणानि—उच्चैर्निक्षेपणानि, तथा आक्षेपः,—तिरस्कारः, क्रूरसन्दर्शनानि—कुटिलावलोकनानि च, इत्येवमादयः अनुभावाः । अत्र—रौद्रे, उग्रता, आवेगः, रोमाञ्चः, स्वेदः, वेपथुः,—कम्पश्च, तथा मदः, मोहः, अमर्षादयः, एते भावाः व्यभिचारिणः स्युः । [ तथोक्तं,—"युद्धप्रहारपतनविकृतच्छेदनविदारणैश्चैव । सङ्ग्रामसम्भ्रमाद्यैरेभिः सञ्जायते रौद्रः ॥ नानाप्रहरणमोक्षैः शिरःकबन्धभुजकर्त्तनैश्चैव । एभिश्चार्थविशेषैरस्याभिनयः प्रयोक्तव्यः ॥ इति रौद्ररसो दृष्टो रौद्रवागङ्गचेष्टितः । शस्त्रप्रहारभूयिष्ठ उग्रकर्मक्रियाऽऽत्मकः ॥" इति ] ।

(र) उदाहरति, यथेत्यादि ।—पितृनिधनार्त्तस्य क्रुद्धस्याश्वत्थामः पाण्डवान् प्रतिसम्बोध्योक्तिरियम् । यैः, निर्मर्य्यादैः,—अतिक्रान्तस्थितिभिः, उल्लङ्घितनियमै-

अस्य युद्धवीराद् भेदमाह, (ल)—

रक्तास्यनेत्रता चात्र भेदिनी युद्धवीरतः॥१३७॥ (व)

रिति यावत्, युद्धे न्यस्तशस्त्रस्य हनने युद्धमर्य्यादाभङ्ग इति प्रसिद्धम्। अत एव, मनुजेषु —मनुष्येषु, पशुभिः,—पशुवत् कार्य्याकार्य्यविमूढैरित्यर्थः, उदायुधैः,—उद्यतशस्त्रैः, शस्त्रग्राहिभिरित्यर्थः, भवद्भिः, इदं—सपितृशिरश्छेदरूपं, गुरु—महत्, पातकं—पापं, शस्त्रादि परित्यज्य युद्धतस्य विरम्य समाहिततयाऽवस्थितस्याचार्य्यस्य निहननरूपं महापापमिति समुदायार्थः, ज्ञातम्, अनुमतं वा, दृष्टं वा; नरकरिपुणा—नरकासुर-निसूदनेन, कृष्णेन इत्यर्थः, सार्द्धं—सह, वर्त्तमानानामिति शेषः, तत्साहाय्येन युद्धे प्रवृत्तानामिति भावः, सभीमकिरीटिनां—भीमार्जुनसहितानां, तेषाम्, असृङ्मेदो-मांसैः,—रुधिरवसामांसैः, दिशां—दिक्संस्थितभूतानामित्यर्थः, बलिम्—उपहारम्, अयम् अहं—एषोऽहं, करोमि, दिशः पूजयामीत्यर्थः। [अत्र कुद्धस्याश्वत्थाम्नः क्रोधस्य भीमार्ज्जुनादयः सर्वेऽपि स्वपितृनिहननमिमित्तभूता आलम्बनभूताः, अधर्म्मेण पितृहननमुद्दीपन, निहन्तृणामवज्ञाऽऽद्यनुभावः, आवेगादिः सञ्चारी चेति बोध्यम्]। वेणीसंहारस्येदं पद्यम्। हरिणी वृत्तं,—"न समरसला गः षड्वेदैर्हयैर्हरिणी मता" इति लक्षणात्। यदि तु ओजोव्यञ्जकवर्णादिसङ्घटनाभावेन नात्र रौद्ररस-व्यञ्जनक्षमा वृत्तिरिति सहृदयानां हृदयं, तदेदमुदाहरणं,—"नवोच्छलितयौवन-स्फुरदखर्वगर्वज्वरे मदीयगुरुकार्मुकं गलितसाध्वसं वृश्चति; अयं पततु निर्दयं दलितदृप्तभूभृद्गलस्खलद्रुधिरघस्मरो मम परश्वधो भैरवः॥" इति। परशुरामस्य श्रीरामचन्द्रं प्रत्युक्तिरियम्। [अत्र सर्व्वथोद्धता रचनौजोगुणशालितया प्रकृतरसानु-कूला इति स्पष्टम्]।

(ल) ननु रौद्र-युद्धवीरयोः रिपुरालम्बनं विभावः, इत्यनयोरभेद एवापतितः, इति तयोर्भेदं दर्शयितुमाह, अस्येति।—रौद्रस्येत्यर्थः।

(व) युद्धवीरादस्य भेदमाह, रक्तास्येति।—रक्तं—रक्तवर्णम्, आस्यं, नेत्रञ्च यस्मिन् तस्य भावः तत्ता, अत्र—रौद्रे रसे, युद्धवीरतः,—युद्धवीरात्, भेदिनी—भेद-कारिणी; युद्धवीरे मुखस्य नेत्रस्य च रक्तत्वं न स्यात्, अत्र तु नायकस्य रक्तास्यनेत्रता-व्यङ्ग्यः क्रोधः, इति अस्यैवानयोः भेद इति भावः। तथा चोभयत्र रिपोरालम्बनत्वेऽपि क्रोधाविर्भावे रौद्रः, उत्साहाविर्भावे वीरः; न हि उत्साहे रक्तास्यत्वादि सम्भवति, अस्य सात्त्विकत्वेन तामसत्वासम्भवात्, इत्यनयोर्भेदः इति निष्कर्षः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ वीरः,—

उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः ॥
महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः ।
आलम्बनविभावास्तु विजेतव्यादयो मताः ॥
विजेतव्यादिचेष्टाद्यास्तस्योद्दीपनरूपिणः ।
अनुभावास्तु तत्र स्युः सहायान्वेषणादयः ॥
सञ्चारिणस्तु धृतिमति-
गर्वस्मृतितर्करोमाञ्चाः ।
स च दानधर्मयुद्धै-
र्दयया च समन्वितश्चतुर्द्धा स्यात् ॥२३८॥ (श)

(श) वीररसमाह, उत्तमेति ।—उत्तमप्रकृतिः,—उत्तमा—उत्कृष्टधीरोदात्तरूपा, प्रकृतिः,—नायकः, यस्य तादृशः, यद्वा,—उत्तमा चमत्कारातिशयाधायितया रसान्तरादुत्कृष्टा, प्रकृतिः स्वभावो यस्य इत्यर्थः ; उत्साहः, स्थायिभावो यस्य तथोक्तः, महेन्द्रदैवतः,—महेन्द्रः,—सुरपतिः, दैवतं—देवता, यस्य तथोक्तः, हेमवर्णः,—हेमवद्वर्णो यस्य तथोक्तः, अयं, वीरः,—वीररसः, समुदाहृतः,—कथितः ; तस्य—रसस्य, आलम्बनविभावाः, तु—पुनः, विजेतव्यादयः,—प्रतिनायकादयः, [ अत्रादिपदेन कर्त्तव्यकर्म्मादीनां ग्रहणम् ] मताः । विजेतव्यादिचेष्टाऽऽद्याः,—प्रतिनायकादिचेष्टितादयः, [ अत्रादिपदाभ्यां कर्त्तव्यकर्म्मतत्साधनोपायविज्ञानादीनां ग्रहणम् ; यद्वा,—प्रथमादिपदेन दानीयधर्म्यानुकम्पनीयानां, द्वितीयादिपदेन दाने सत्त्वाध्यवसायादेः, धर्म्मे धर्म्मशास्त्राध्ययनादेः, दयायां दीनस्य कातरोक्त्यादेश्च ग्रहणम् ] उद्दीपनरूपिणः, विभावा इति शेषः, तत्र—तादृशे वीरे रसे इत्यर्थः, सहायान्वेषणादयः, [ अत्रादिपदेन स्वपराक्रमोद्भावनादीनां ग्रहणम् ] तु—पुनः, अनुभावाः, स्युः, तथा धृतिः,—धैर्य्यं, मतिः,—बुद्धिः, कर्त्तव्यनिश्चय इति यावत्, गर्वः, स्मृतिः,—स्मरणं, तर्कः, रोमाञ्चश्च, सञ्चारिणः,—व्यभिचारिभावाः । एवं वीरं लक्षयित्वाऽस्य भेदानाह, स चेति ।—सः,—वीररसः, च, दानधर्म्मयुद्धैः दयया च समन्वितः,—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स च वीरः दानवीरो धर्म्मवीरो युद्धवीरो दयावीरश्चेति चतुर्विधः। (ष)

तत्र दानवीरो यथा,—परशुरामः। "त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः" इति। अत्र परशुरामस्य त्यागे उत्साहः स्थायी भावः। सम्प्रदानभूतैर्ब्राह्मणैरालम्बनविभावैः सत्त्वाध्यवसायादिभिश्च उद्दीपनविभावैर्विभावितः सर्व्वस्वत्यागादिभिरनुभावैरनुभावितो हर्षधृत्यादिभिः सञ्चारिभिः पुष्टिं नीतो दानवीरतां भजते। (स)

---

तत्तदुपाधिमान् सन्निति भावः, चतुर्द्धा—चतुःप्रकारः, स्यात्, इति बोध्यम्। [अस्य उत्साहः स्थायी भावः, उत्साहश्च रागद्वेषशून्यत्वे सति चित्तोत्कर्षविशेषः, अत एवास्य देवराजो देवता, निष्कलङ्कतया च स्वर्णसदृशवर्णत्वम्, उत्तमप्रकृतिकत्वम्, अधमत्वव्यञ्जकत्रासत्वादिशून्यत्वञ्च; दानादीनाञ्च चतुर्णामुत्साहविषयत्वोपपत्त्या चातुर्विधत्वनिर्द्देशेन पलायनवीरादिप्रभेदान् अपि अस्य स्वीकुर्वन्तः पण्डितराजादयः परास्ताः बोध्याः, क्षमावीरादयस्तु धर्म्मवीरस्यैव प्रभेदाः इति दिक्]।

(ष) वीरभेदान् विवृणोति, स चेति।—स वीरश्च दानवीरादिभेदेन चतुर्विध इति। ननु नैष नियमः सङ्गच्छते, "राज्यञ्च" इत्यादौ "ते प्रकामं विप्लवन्तां मा भूत् सत्यस्य विप्लवः" इत्यादिविधया पराङ्गे पाठव्यत्ययेन सत्यवीरस्यापि प्रतीतेः। न चास्य धर्म्मवीरानन्यतया धर्म्मवीरेण गतार्थत्वमिति वाच्यम्, एवं सति दानवीरदयावीरयोरपि धर्म्मवीरान्तर्भावतया पार्थक्योच्छेदात्। न केवलं सत्यवीर एवास्य पञ्चमः प्रभेदः, किन्तु बलवीरः, पाण्डित्यवीरः इत्यादयोऽन्येऽपि प्रभेदाः यथातथमवधेयाः। अत एवाङ्गीकृतायामी रसगङ्गाधरकारादिभिरनेकैः सहृदयधुरीणैः इति दिक्। दानवीर-दयावीरयोर्धर्म्मवीरान्तर्भावौचित्येऽपि सम्प्रदायानुरोधेन तथाऽभिधानमित्यवगच्छ।

(स) दानवीरमुदाहरति, त्याग इति।—सप्तभिः, समुद्रैः, मुद्रिता—वेष्टिता, या मही तस्याः, निर्व्याजम्—अकपटं, दानम्, अवधिः यस्य तथाविधः इति। "उत्पत्तिर्जमदग्नितः स भगवान् देवः पिनाकी गुरुर्वीर्य्यं तत्र न मद्गिरामनुपमं व्यक्तं हि तत्कर्म्मभिः। त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः सत्यब्रह्मतपोनिधेर्भगवतः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

किं किन्न लोकोत्तरम् ॥" इति तु महावीरचरिते समस्तं पद्यम् । उदाहरणं सङ्गमयति, अत्रेति ।—उदाहृते पद्यांशे इत्यर्थः । परशुरामस्य, त्यागे—दाने, उत्साहः,—उदारभावेन चित्तप्रवृत्तिः, स्थायी भावः । अतोऽयं सम्प्रदानभूतैः,—विद्याविनयार्जवादिना पात्रतां गतैः, ब्राह्मणैः, आलम्बनविभावैः, सत्त्वाध्यवसायादिभिः,—सत्त्वं—सौम्यताऽऽद्यावर्जको गुणविशेषः, तस्य अध्यवसायः,—उद्रेकः, प्रतिज्ञासम्पादनार्थकः प्रत्ययः इत्यर्थः, तदादिभिः, [ आदिना प्ररोचनादेर्ग्रहणम् ] उद्दीपनविभावैः च, विभावितः,—समुद्रेकं नीतः, सर्व्वस्वत्यागादिभिः अनुभावैः, अनुभावितः,—कार्य्यात्मना परिणतः, हर्षधृत्यादिभिः,—हर्षधृत्यौत्सुक्यादिभिः, सञ्चारिभिः, पुष्टिं—स्वादनौचित्यं, नीतः, दानवीरतां भजते । [ वस्तुतस्तु ग्रन्थकृतोदाहृतं "त्यागः सप्तसमुद्रमुद्रितमही—" इति पद्यं न रमणीयं प्रतिभासते ; अत्र वाक्यार्थस्य जमदग्निनन्दनप्रशंसनपरतया व्यङ्ग्यस्य गुणीभूततया ध्वन्युदाहरणीयताऽनुपपत्तेः । एवमेव यत् केनाप्युदाहृतं "यस्योद्दामदिवानिशाऽर्थिविलसद्दानप्रवाहप्रथामाकर्ण्यावनिमण्डलागतविपद्वन्दीन्द्रवृन्दाननात् । ईर्ष्यानिर्भरफुल्लरोमनिकरव्याजवलादूधःस्रवत् पीयूषप्रकरैः सुरेन्द्रसुरभिः प्रावृट्पयोदायते ॥" इति, तदपि तथा । यद्यपि अत्र समस्तसभ्यनिरीचिताऽऽलम्बनं, भूमण्डलान्तर्गतविपद्वन्दिराजकीर्त्तितभूपतिदानकीर्त्तनमुद्दीपनम्, ऊधःप्रस्नुतसुधाधाराऽनुभावः, ईर्ष्याऽऽदिः सञ्चारी च, परिपुष्यते चैषां संयोगात् कविगत उत्साहः, तथाऽपि कवेः भूपतिस्तुतिकीर्त्तनपरतया तद्गत उत्साहो ध्वनिरूपतामप्राप्य गुणीभूतात्मतयैवावतिष्ठते । अतः,—"कियदिदमधिकं मे यद् द्विजायार्थयित्रे कवचमरमणीयं कुण्डले चार्पयामि । अकरुणमवकृत्य द्राक् कृपाणेन निर्यद्बहलरुधिरधारं मौलिमावेदयामि ॥" इति रसगङ्गाधरीयमेव पद्यमुदाहरणीयम् ; ब्राह्मणवेषिणे याचकाय देवराजाय कवचकुण्डलसमर्पणपरस्य दानवीरस्य कर्णस्य तद्व्याजेन विस्मयं नाटयतः सामाजिकान् प्रत्युक्तिरियम् । इह हि इन्द्रस्य याचकब्राह्मणवेषधारित्वमालम्बनं, तद्दैन्यं, तत्कृतं प्रशंसनं चोद्दीपनं, कवचकुण्डलयोः तुच्छत्वद्योतनमनुभावः, "मे" इति पदेन अर्थान्तरसङ्क्रमितवाच्यात्मना समुदितो गर्वः, स्वीयालौकिकजनकजन्यत्वादिस्मृतिश्च व्यभिचारी भावः । तत्तदर्थानुरूपद्योतनपरतया वृत्तिरपीह नितान्तं सहृदयहृदयावर्जिका समुदयते, उत्साहपरिपोषकस्य कवचादिसमर्पणेन लघुताद्योतनस्य हि समर्थिका पूर्वभागे शिथिलबन्धत्वम्, उत्तरभागे च "मौलिमावेदयामि" इत्यतः पूर्वं दानिनः अहङ्कारानुगतोत्साहपरिपोषणाय समुद्धतत्वम् । एवं दानोत्साहेऽपि स्वात्मनः अर्थिनः पुरस्तात् "आवेदयामि" इति सविनयत्वमेवावेदयतीति दिक् ] ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

धर्म्मवीरो यथा युधिष्ठिरः,—

"राज्यञ्च वसु देहश्च भार्य्या भ्रातृसुताश्च ये।
यच्च लोके ममायत्तं तद्धर्म्माय सदोद्यतम्॥" (ह)

युद्धवीरो यथा श्रीरामचन्द्रः,—

"भो लङ्केश्वर! दीयतां जनकजा, रामः स्वयं याचते,
कोऽयं ते मतिविभ्रमः? स्मर नयं, नाद्यापि किञ्चिद्गतम्?।
नैवञ्चेत्,—खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः
पत्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः॥" (क)

(ह) धर्म्मवीरमुदाहरति, राज्यमिति।—राज्यं, वसु—धनं, देहः, भार्य्या, भ्रातरः, सुताश्च, किं बहुना, लोके—जगति, यत्—वस्तु, मम, आयत्तम्—अधीनं, तत्सर्वं, सदा, धर्म्माय ["परस्मै" इति पाठान्तरे तु,—अन्यनिमित्तं, परोपकारार्थमिति यावत्, न तु स्वार्थमित्यर्थः] उद्यतं—निरूपितमित्यर्थः, मयेति शेषः। [अत्र युधिष्ठिरस्य वैदिकधर्म्मकर्म्मणि उत्साहः तथाविधोक्त्याऽनुभावेनाक्षिप्तेन च विभावादिना आस्वादपदवीं गतः सामाजिकानां रसतया परिणमतीति बोध्यम्]।

(क) युद्धवीरमुदाहरति, भो इति।—रावणं प्रति रामस्योक्तिरियम्। भो लङ्केश्वर! जनकजा—सीता, दीयतां—प्रत्यर्प्यतां, मह्यमिति शेषः, रामः, स्वयं—साक्षात्, न तु परमुखेणेति भावः, याचते—प्रार्थयते, ते—तव, अयं मतिविभ्रमः,—मतौ बुद्धौ, विभ्रमो विशिष्टो भ्रमः, बुद्धिविपर्य्यासः इत्यर्थः, कः?—किमर्थम्? नयं—नीतिं, स्मर—सन्मार्गमवलम्बस्वेति भावः, अद्यापि, किञ्चित्—मोहादिकं, न गतम्?—न विनष्टम्? तवेति शेषः, [गतमित्यत्र "कृतम्" इति पाठे,—किञ्चित् दण्डादिविधानं न कृतं, मयेति शेषः] चेत्—यदि, एवं—मया यदभिहितं तव श्रेयसि तत्, न, करोषीति शेषः, इदानीमपि मोहवशात् मद्वचनं यदि न साधु मन्यसे, तर्हीति भावः, खरस्य, दूषणस्य, त्रिशिरसश्च, कण्ठासृजा—कण्ठरुधिरेण, पङ्किलः,—मलिनः, लिप्त इत्यर्थः, धनुषः, ज्याबन्धेन—मौर्व्वीयोजनेन, बन्धूकृतः,—एकत्रावस्थानदानेन बन्धुरिव कृतः, गुणयोजित इत्यर्थः, मम, एषः, पत्री—शरः, न सहिष्यते, त्वामिति शेषः; मम शरस्तु शीघ्रं विनाशयिष्यति तव जीवितमिति भावः। [अत्रात्मनोऽसहनं पत्रिण्यारोपितं, रिपुहनने तस्य प्रधानोपायत्वसूचनाय]। बालरामायणस्येदं पद्यम्। अत्र रामस्य युद्धे उत्साहः यथायथमुत्था-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

दयावीरो यथा जीमूतवाहनः,—

"शिरामुखैः स्यन्दत एव रक्त-
मद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तवापि तावत्
किं भक्षणात्त्वं विरतो गरुत्मन् ? ॥" (ख)

एष्वपि विभावादयः पूर्वोदाहरणवदूह्याः ।

अथ भयानकः,—

भयानको भयस्थायिभावः कालाधिदैवतः ।
स्त्रीनीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः ॥
यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम् ।
चेष्टा घोरतरास्तस्य भवेदुद्दीपनं पुनः ॥
अनुभावोऽत्र वैवर्ण्यगद्गदस्वरभाषणम् ।
प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः ॥

---

पितैः विभावाद्यैः आस्वाद्यमानः रसतामापद्यते इति बोद्धव्यम् । शार्दूलविक्रीड़ितं वृत्तम् ।

(ख) दयावीरमुदाहरति, शिरामुखैरिति ।—स्वदेहं भक्षयन्तं गरुड़ं प्रति जीमूतवाहनस्य उक्तिरियम् । हे गरुत्मन् !—गरुड़ ! शिरामुखैः,—शिराणां—नाड़ीनां, मुखानि—छिन्नभागाग्राः, तैः तद्द्वारेति यावत्, छिन्ननाड्यग्रभागैरित्यर्थः, रक्तं, स्यन्दत एव—क्षरत्येव, अद्यापि—उपचारात् साम्प्रतमपि इत्यर्थः, मम, देहे, मांसम्, अस्ति, तवापि तावत्—तव पुनरित्यर्थः, तृप्तिम्—उदरपूर्त्तिजनितं परितोषमित्यर्थः, न पश्यामि—न सम्भावयामीत्यर्थः, (तथापि) किं—कथं, त्वं, भक्षणात्—मन्मांसभक्षणव्यापारादित्यर्थः, विरतः ?—निवृत्तः ? । [अत्र जीमूतवाहनस्य परदुःखहरणेच्छारूपायां दयायाम् उत्साहः तत्तद्विभावानुभावसञ्चारिभिः परिपुष्टः रसतामाप्नोतीति ज्ञेयम् ] । नागानन्दस्येदं पद्यम् । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

जुगुप्साऽऽवेगसम्मोहसन्त्रासग्लानिदीनताः ।
शङ्काऽपस्मारसम्भ्रान्तिमृत्य्वाद्या व्यभिचारिणः ॥२३९॥ (ग)

यथा,—"नष्टं वर्षवरैः" इत्यादि । (घ)

---

(ग) भयानकरसमाह, भयानक इति ।—भयस्थायिभावः,—भयमेव स्थायिभावः यस्य तादृशः, कालाधिदैवतः,—कालः,—यमः, अधिदेवता यस्य तथोक्तः, ("कालदेवो भयानकः" इति भरतोक्तेः) स्त्रीनीचेति ।—स्त्री, नीचश्च, प्रकृतिः,—नायकः, यस्य तथोक्तः, ("बालस्त्रीनीचनायकः" इति रुद्रभट्टोक्तेः एतस्य बालनायकत्वमपि बोध्यम्) कृष्णः,—कृष्णवर्णः, रस इति शेषः, तत्त्वविशारदैः,—तत्त्वज्ञैः जनैः, भयानकः,—तदाख्यो रसः, मतः,—कीर्त्तितः। (तथोक्तं,—"कृष्णश्चैव भयानकः" इति)। यस्मात् भीतिः,—भयम्, उत्पद्यते, अत्र—रसे, तत् आलम्बनं मतं, तस्य—भयालम्बनस्य, घोरतराः,—अतिभीषणाः, चेष्टाः पुनः उद्दीपनं भवेत्। अत्र—रसे, वैवर्ण्यं, गद्गदस्वरेण—अस्पष्टस्वरेण, भाषणं, प्रलयः,—नष्टचित्तता, नष्टचेष्टता वा, ("प्रलयो नष्टचेष्टता" इत्यमरोक्तेः) स्वेदः,—घर्म्मजलं, रोमाञ्चः, कम्पः, दिक्प्रेक्षणादयः,—सहायान्वेषणार्थं पलायनार्थं वा इतस्ततो दृष्टिपातादयः, च अनुभावाः ; जुगुप्सा—घृणा, आवेगः, सम्मोहः, सन्त्रासः, ग्लानिः, दीनता, शङ्का, अपस्मारः, सम्भ्रान्तिः,—उन्मादः, मृत्युः,—मरणं, तदाद्याः, [एतेन व्याधेरपि ग्रहणम्] व्यभिचारिणः,—सञ्चारिभावाः, ज्ञेयाः इति शेषः। [तथोक्तं प्रदीपकृता,—"भयानके भयं स्थायी कालो देवोऽस्य सम्मतः। कृष्णो वर्णो नीचपात्रो भीम आलम्बनं मतम्॥ चेष्टा तस्योद्दीपनं स्यादनुभावो विवर्णता। गद्गदस्वरभूपातमूर्च्छाश्च प्रलयादयः॥ सन्त्रासावेगसम्मोहा व्यभिचारिण ईरिताः॥" इति]।

(घ) भयानकमुदाहरति, नष्टमिति।—अत्र वर्षवरादीनां नीचानां भयं स्थायी भावः, मन्दुरातः निर्गतो वानरवेषी अन्तःपुरप्रविष्टः विदूषकः आलम्बनविभावः, तस्य उल्लम्फनादिव्यापाराः उद्दीपनानि, त्रासादयो व्यभिचारिणः, अनुभावाश्च पलायनादयः, एतैरास्वाद्यमानः सामाजिकानां रसतामापद्यते इति बोध्यम्। स्त्रीप्रधानोदाहरणं दृश्यते यथा रत्नावल्यां १०९ पृष्ठे,—"इदं मघोनः कुलिशं धारासन्निहितानलम्। स्मरणं यस्य दैत्यस्त्रीगर्भपाताय कल्पते॥" इति। रुद्रोक्तबालकनायको यथा,—"घोरमम्भोधरध्वानं निशम्य व्रजबालकाः। मातुरङ्के निलीयन्ते सकम्पविकृतस्वराः॥" इति।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ बीभत्सः,—

जुगुप्सास्थायिभावस्तु बीभत्सः कथ्यते रसः ।
नीलवर्णो महाकालदैवतोऽयमुदाहृतः ॥
दुर्गन्धमांसरुधिरमेदांस्यालम्बनं मतम् ।
तत्रैव कृमिपाताद्यमुद्दीपनमुदाहृतम् ॥
निष्ठीवनास्यवलननेत्रसङ्कोचनादयः । (ङ)
अनुभावास्तत्र मतास्तथा स्युर्व्यभिचारिणः ॥
मोहोऽपस्मार आवेगो व्याधिश्च मरणादयः ॥२४०॥

यथा,—

"उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोथभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आर्त्तः पर्य्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्कात्
अङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥" (च)

---

(ङ) बीभत्सरसमाह, जुगुप्सेति ।—जुगुप्सा—घृणा, स्थायिभावः यस्य तादृशः, रसः बीभत्सः कथ्यते ; अयं—रसः, नीलवर्णः, तथा महाकालो देवता यस्य तथोक्तः, उदाहृतः,—उक्तः, ("नीलवर्णस्तु बीभत्सः" "बीभत्सस्य महाकालः" इति च भरतः,) दुर्गन्धमांसानि, रुधिराणि, मेदांसि च आलम्बनं मतम् ; तत्र—दुर्गन्धमांसादिषु, एव कृमिपाताद्यम् उद्दीपनम्, उदाहृतं—कथितम् ; निष्ठीवनं—थूत्कप्रक्षेपः, आस्यवलनं —मुखसंवरणम् । अन्यत् स्पष्टम् । [ तथोक्तं मुनिना,—"अनभिमतदर्शनेन च गन्धरसस्पर्शदोषैश्च । उद्वेजनैश्च बहुभिर्बीभत्सरसः समुद्भवति ॥ मुखनेत्रविकूणनया नासाप्रच्छादनाऽवनमितास्यैः । अव्यक्तपादपतनैर्बीभत्सः सम्यगभिनेतव्यः ॥" इति ]।

(च) उदाहरति, उत्कृत्येति ।—श्मशाने शवं भुञ्जानं प्रेतं दृष्ट्वा माधवस्योक्तिरियम् । प्रेतरङ्कः,—प्रेताधमः, प्रथमं कृत्तिं—चर्म्म, उत्कृत्य उत्कृत्य—पुनः पुनः छित्वा, अत्तीत्यनेनान्वयः । अथ—अनन्तरं, पृथुना—महता, उच्छोथेन—स्फीततया, भूयांसि—प्रचुराणि, अंसः,—स्कन्धः, स्फिक्—नितम्बः, पृष्ठपिण्डादयश्च अवयवाः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथाद्भुतः,—

अद्भुतो विस्मयस्थायिभावो गन्धर्वदैवतः।
पीतवर्णो वस्तु लोकातिगमालम्बनं मतम्।
गुणानां तस्य महिमा भवेदुद्दीपनं पुनः॥ (छ)
स्तम्भः स्वेदोऽथ रोमाञ्चगद्गदस्वरसम्भ्रमाः।
तथा नेत्रविकासाद्या अनुभावाः प्रकीर्त्तिताः॥
वितर्कावेगसम्भ्रान्तिहर्षाद्या व्यभिचारिणः॥२४१॥

---

[ आदिना ऊर्व्वादेः परिग्रहः ] तेषु अंसाद्यवयवेषु, सुलभानि—सुखेन लभ्यानि, उग्रपूतीनि—उत्कटदुर्गन्धीनि, मांसानि, जग्ध्वा—भक्षयित्वा, स्थितः इति शेषः, अथापि आर्त्तः,—दुःखितः, क्षुधया पीड़ित इति यावत्, [ "अन्तः" इति पाठे,—अन्तः,—शवदेहाभ्यन्तरे, ] अत एव पर्य्यस्ते—इतस्ततः पतिते, नेत्रे यस्य तादृशः, ( कश्चिदाच्छिद्य नेष्यतीति भयात्पर्य्यस्तनेत्रत्वम् ) तथा प्रकटिताः,—आविष्कृताः, दशनाः,—दन्ताः, येन तथोक्तः सन्, अङ्कस्थात्—उत्सङ्गनिहितात्, करङ्कात्—अस्थिशेषात्, शवात्, शिरोभागाद्वा, ("करङ्कोऽस्थिशेषे" "करङ्कः प्रेतशरीरम्" "करङ्को मस्तके" इति च मेदिनी ) अस्थिसंस्थम्—अस्थिगतम्, अथ च स्थपुटगतं—विकट-गभीरभागस्थितं, ग्रन्थिस्थितमिति यावत्, अपि क्रव्यं—मांसम्, अव्यग्रं—निःशङ्कं यथा तथा, अत्ति—भक्षयति। क्रमेण भक्षणादव्यग्रतया भक्षणक्रमो दर्शितः। [ अत्र तथा-विधशवप्रेतौ आलम्बनविभावौ, पूतिगन्धादिकानि उद्दीपनविभावाः, तत्तदुक्तिभिः आक्षेपलभ्याः निष्ठीवनादयः अनुभावाः, मोहादयः व्यभिचारिणो यथायथं ज्ञेयाः। एतैरभिव्यक्तः माधवस्य जुगुप्सारूपस्थायिभावः बीभत्सो रसः सहृदयानां रसतया परिणमति ]। मालतीमाधवस्येदं पद्यम्। शार्दूलविक्रीड़ितं वृत्तम्।

(छ) अद्भुतरसमाह, अद्भुत इति।—विस्मयः स्थायी भावो यस्य तादृशः, गन्धर्वदैवतः,—गन्धर्वौ दैवतं यस्य तथोक्तः, ( भरतस्तु "अद्भुतो ब्रह्मदैवतः" इत्याह ) तथा पीतवर्णो रसः, अद्भुतः, ( तथोक्तं,—"पीतश्चैवाद्भुतः स्मृतः" इति ) लोकातिगं—लोकातिवर्त्ति, अलौकिकमिति यावत्, वस्तु, अत्र आलम्बनं मतम्; तस्य—अद्भुतालम्बनस्य, गुणानां महिमा पुनः उद्दीपनं भवेत्। अन्यत् स्पष्टम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत:
टङ्कारध्वनिरार्य्यबालचरितप्रस्तावनाडिण्डिमः ।
द्राक्पर्य्यस्तकपालसम्पुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो! नाद्यापि विश्राम्यति ?॥"(ज)

अथ शान्तः,—

शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः ।
कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः ॥
अनित्यत्वादिनाऽशेषवस्तुनिःसारता तु या ।
परमात्मस्वरूपं वा तस्यालम्बनमिष्यते ॥
पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः ।
महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः ॥

---

(ज) उदाहरति, दोर्दण्डेति ।—हरधनुर्भङ्गध्वनिमाकर्ण्य विस्मितस्य लक्ष्मणस्य उक्तिरियम् । दोर्दण्डाभ्यां—बाहुदण्डाभ्याम्, अञ्चितः,—आकुञ्चितः, यः चन्द्रशेखरस्य—हरस्य, धनुर्दण्डः, तस्य अवभङ्गात्—खण्डनात्, उद्यतः,—उद्गतः, आर्य्यस्य—रामस्य इत्यर्थः, बालचरितप्रस्तावनायां—बालस्य बाल्यस्य, चरितानि तदानीन्तनानीति यावत्, तेषां प्रस्तावना कीर्त्तनारम्भः, तत्र डिण्डिमः,—वाद्यविशेषस्वनरूप इत्यर्थः, टङ्कारध्वनिः, द्राक्—झटिति, पर्य्यस्तेन—पतितेन, कपालसम्पुटेन—पिधानपात्रविशेषेणेत्यर्थः, मिलत्—सङ्गच्छमानं, यत् ब्रह्माण्डमेव भाण्डं—पात्रविशेषः, क्षुद्रस्थालीत्यर्थः, तस्य उदरे—अभ्यन्तरे, भ्राम्यन्, अत एव पिण्डितः,—एकत्र विस्तृतः, बहुलीभूतः इत्यर्थः, [ शरावाच्छन्नमुखस्थालीमध्ये जायमानः शब्दो बहुलो भवतीत्यभिप्रायेणेदमुक्तम् ] चण्डिमा—चण्डत्वं यस्य तथोक्तः सन्, कथम् अद्यापि—इदानीमपि, उपचारात् अतीतबहुकाले धनुर्भङ्गेऽपीति भावः, न विश्राम्यति इति अहो !—आश्चर्य्यम् । [ अत्र धनुष्टङ्कारः आलम्बनं, तस्यातिदीर्घस्थायित्वमुद्दीपनं, तत्तदुक्तिश्चानुभावः, यथायथमाक्षिप्ताश्च व्यभिचारिणः, एतैरभिव्यक्तः लक्ष्मणस्य विस्मयः सामाजिकानां रसतामेतीति बोध्यम् ]। महावीरचरितस्येदं पद्यम् । शार्दूलविक्रीडितं वृत्तम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रोमाञ्चाद्याश्चानुभावास्तथा स्युर्व्यभिचारिणः।
निर्वेदहर्षस्मरणमतिभूतदयाऽऽदयः ॥२४२॥ (भ)

(भ) शान्तरसमाह, शान्त इति।—शमः,—विरक्तावस्थायां स्वात्मानुभवे सम्पद्यमानश्चित्तविश्रामजन्य आनन्दविशेषः, स एव स्थायिभावः यस्य तथोक्तः, उत्तमा, प्रकृतिः,—नायकः, यस्य तादृशः, कुन्दः,—कुसुमविशेषः, इन्दुश्चन्द्रश्च, तद्वत् सुन्दरी, छाया—कान्तिर्यस्य तथाभूतः, कुन्दवर्णः, चन्द्रवर्णो वेत्यर्थः, श्रीनारायणो दैवतं यस्य तथाविधः रसः, शान्तः। अनित्यत्वादिना—विनश्वरत्वादिना, अशेषाणां—कृत्स्नानां, वस्तूनां—पदार्थानां, विषयाणामित्यर्थः, या निःसारता—साररहित्यं, परमात्मस्वरूपं वा, तस्य—शान्तस्य, आलम्बनमिष्यते। रोमाञ्चाद्याः, [इत्याद्यपदेन दयाऽऽदीनां ग्रहणम्] अनुभावाः, तथा, निर्वेदः,—वैराग्य, तदाद्याः व्यभिचारिणः स्युः। अन्यत् स्पष्टम्। [अत्रेदं बोध्यं,—यत्र निर्वेदः स्थायिभावः, तत्पक्षे अवमाननीयत्वमेवालम्बनं, निर्वेदस्य व्यभिचारित्वेन स्थायित्वायोगात्, शमस्य स्थायित्वेनानुभूयमानत्वाच्च ग्रन्थकृता तदुपेक्षितम्। तदेव विशदीक्रियते ; तथाहि,—नवमः शान्तो रसो निर्बाधः, शमस्य विभावरूपेण तस्य सहृदयहृदयानुवेद्यत्वात्, न चास्य निर्वेदः स्थायीति वक्तुं युक्तं, तस्य विषयेषु पर्य्याप्तिप्रत्ययरूपत्वात्,आत्मावमाननरूपत्वाच्च। न चैवम्भूतः शमोऽपि सकलानां विषयाणां परित्यागोत्तरं जायमानतया स्वात्मैकविषयकानन्दसम्पत्तिरूपत्वात् ; (तथाऽभिहितमभियुक्तैः,—"यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोड़शीं कलाम् ॥" इति) ननु तत् स्यादेतस्य सकलहृत्युपरसः स्थायिभावः इति चेत् ? तदपि एतेनैव निरस्तम् ; निर्वेदस्य अभावाभिन्नतया स्थायित्वानुपपत्तेः, एवञ्च "निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः" इति मम्मटोक्तमपि व्युदस्तम् इत्याहुः कविराजानुमतैकपक्षपाताः। मम्मटमतानुमन्तारस्तु, न शम एतस्य स्थायीति वक्तुं युक्तम्, तत्त्वज्ञानैकमूलं निर्वेदमवलम्ब्य शमादेः प्रादुर्भावशालितया शमस्यापि तज्जन्यत्वेन निर्वेदस्यैव तदवलम्बनत्वेन स्थायित्वात्, विषयेषु पर्य्याप्तिप्रत्ययरूपस्य आत्मावमाननरूपस्य वा निर्वेदस्य शोकस्यैव समाधेयत्वञ्च ; नापि "क्वचिच्छमः" इति भरतमुनेः सिद्धान्तविरोधः, "शम्यतेऽस्मात्" इति व्युत्पत्त्यनुसारेण एतस्यापि निर्वेदवाचकत्वानपायात्। "तृष्णाक्षयसुखस्यैते" इत्यत्र च तृष्णाक्षयशब्दस्यापि "तृष्णायाः क्षयोऽस्मात्" इति व्युत्पत्त्यनुसारेण निर्वेदवाचकत्वाभ्युपगमात्। अत एवाभियुक्ताः,—"रतिः शोकश्च निर्वेदक्रोधोत्साहाश्च विस्मयः। हासो भयं जुगुप्सा च स्थायिभावाः क्रमादमी ॥" इत्याहुः। एतेन "एकोनपञ्चाशद्भावाः" इति मुनिनियमोऽपि समर्थितः ;

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"रथ्याऽन्तश्चरतस्तथा धृतजरत्कन्थालवस्याध्वगैः
सत्रासञ्च सकौतुकञ्च सदयं दृष्टस्य तैर्नागरैः ।
निर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे
निःशङ्कं करटः कदा करपुटीभिक्षां विलुण्ठिष्यति ? ॥"(ञ)

पुष्टिस्तु महाभारतादौ द्रष्टव्या ।

---

तथाहि,—अष्टौ स्थायिनः, अष्टौ सात्त्विकाः, त्रयस्त्रिंशच्च व्यभिचारिणः, इति सम्मेलनेन सङ्गच्छते स्फुटं तेषामेकोनपञ्चाशत्त्वम् इति दिक् ]।

(ञ) उदाहरति, रथ्येत्यादि ।—कस्यचित् जातनिर्वेदस्य शान्तचित्तस्योक्तिरियम् । करटः,—काकः, ("करटो गजगण्डे स्यात्···दुर्दुरूटेऽपि वायसे" इति मेदिनी) कदा रथ्यायाः,—गृहसमीपदेशस्थस्य पथः, अन्तः,—पथिमध्ये इत्यर्थः, चरतः,—भिक्षाऽर्थं भ्रमतः, तथा धृतः,—गृहीतः, स्कन्धदेशे स्थापित इत्यर्थः, जरन्—जीर्णतामापन्नः, कन्थालवः—छिन्नकन्थाखण्डं, येन तथोक्तस्य, अध्वगैः,—पथि गच्छद्भिः, तैः,—पूर्व्वपरिचितैः, नागरैः,—नगरवासिभिः, सत्रासं—बीभत्सवेषदर्शनेन यः त्रासः तत्सहितं, सकौतुकम्—अनुपादेयकन्थाधारणेन यत् कौतुकं तत्सहितं, सदयं—दीनत्वेन या दया तत्सहितं यथा तथा, दृष्टस्य, मां दृष्ट्वा "क्षिप्तोऽयम्" इति केषाञ्चित् भयं, "किमनेन क्रियते ?" इति दिदृक्षया केषाञ्चित् कौतुकम्, "अहो ! कथमसौ क्लेशमनुभवति ?" इति केषाञ्चित् दयेति भावः ; तथा निर्व्याजीकृतः,—कामादिनाशेन निष्प्रतिबन्धकीकृतः, [ "निर्वीजीकृतः" इति पाठेऽपि बीजं,—वासना, तच्छून्यीकृत इत्यर्थः ] यः चित्सुधारसः,—चित्—ज्ञानं, सा एव सुधा—अमृतं, तस्या रसः,—आस्वादः, तेन या मुत्—हर्षः, तया, तत्त्वतः ज्ञानामृतपानपरितृप्तिजनितेन आनन्देनेत्यर्थः, निद्रायमाणस्य—निद्रितस्येव, बाह्यविषयेभ्य इन्द्रियनिरोधं विदधतः इत्यर्थः, मे—मम, करपुटीभिक्षां—करपुटस्थितां केनचित् दत्तां भिक्षाम्, अन्नादीन् इत्यर्थः, निःशङ्कं—निर्भयं यथा तथा, ताडनभयाभावादिति भावः, विलुण्ठिष्यति—विशेषेण हरिष्यतीत्यर्थः । [ अत्र तथाविधनिर्विण्णस्य परमात्मज्ञानेन, भिक्षारूपवस्तुनिःसारताज्ञानेन वा आलम्बनेन, यथायथमाक्षिप्तेन च उद्दीपनेन, तत्तदुक्तिरूपेणानुभावेन, आक्षिप्तेन च निर्वेदादिना व्यभिचारिणा अभिव्यक्तः शमः स्थायिभावः सामाजिकानां रसत्वेन आस्वाद्यमानः रसतामेति इति बोध्यम् ]। शान्तिशतकस्य पद्यमिदम् । शार्दूलविक्रीडितं वृत्तम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

निरहङ्काररूपत्वाद्दयावीरादिरेष नो ॥२४३॥(ट)

दयावीरादौ हि नागानन्दादौ जीमूतवाहनादेरन्तरा मलयवत्याद्यनुरागादेरन्ते च विद्याधरचक्रवर्त्तित्वाद्याप्तेर्दर्शना-दहङ्कारोपशमो न दृश्यते। शान्तस्तु सर्व्वाकारेणाहङ्कारप्रश-मैकरूपत्वान्न तत्रान्तर्भावमर्हति। अतश्च नागानन्दादेः (ठ) शान्तरसप्रधानत्वमपास्तम्। ननु,—

"न यत्र दुःखं, न सुखं, न चिन्ता,
न द्वेषरागौ, न च काचिदिच्छा।
रसः स शान्तः कथितो मुनीन्द्रैः,
सर्वेषु भावेषु समप्रमाणः॥" (ड)

---

(ट) निरहङ्कारेति।—एषः,—शान्तरसः, निरहङ्काररूपत्वात्—सर्वथा अह-ङ्कारराहित्यात्, दयावीरादिः,—तद्रूपः, [ आदिना धर्म्मवीरदेवताविषयरतिप्रभृतीनां ग्रहणम् ] नो—नैव। ततश्च साहङ्कारा दया एव दयावीरादौ, अत्र तु न तथेति अनयोर्भेदः; तथा चाहङ्कारसंवलितो दयाऽऽदिः दयावीरादेर्घटकः, शुद्धा दया पुनः शान्तरसस्य इति सारः।

(ठ) अतश्च—ईदृशविशेषावधारणाच्चेत्यर्थः। नागानन्दादेः,—दयावीरादि-प्रधानग्रन्थविशेषादेः। अन्यत् सुगमम्।

(ड) नेति।—यत्र—रसे, न दुःखं, न सुखं—विषयजनितसुखमित्यर्थः, न चिन्ता—कामिनीकाञ्चनादिविषयिणी भावना, न द्वेषः,—शत्रुनिर्य्यातनेच्छा, रिपूणामपचिकीर्षेत्यर्थः, न रागः,—प्रियेष्वनुरक्तिः, सुहृदामुपचिकीर्षेति यावत्, न च काचित्—काऽपि, इच्छा—कमपि विषयमवलम्ब्य वैषयिकसुखतदुपायाभिलाषः, तथा सर्वेषु भावेषु—वस्तुषु, लोष्टकाञ्चनादिविभावादिषु निखिलेषु पदार्थेषु सत्सु अपि, समं—रागद्वेषराहित्येन अविषमं, प्रमाणं—प्रतीतिः येन सः, [ "शमप्रधानः" इति पाठे तु "शम एव स्थायितया प्रधानं यत्र सः" इत्यर्थः। "शमः प्रधानः" इति पाठस्तु न समीचीनः, पौनरुक्त्यापत्तेः ] सः,—तादृशः, रसः, मुनीन्द्रैः,—महर्षिभिः, शान्तः कथितः। यस्मिन् हि पूर्व्वोक्तस्थायिभावानाम् अष्टानाम् एकतमस्यापि न प्राधान्यं विद्यते, परं तेभ्यो निवृत्तिरेवा प्रतीयते, स हि शान्तो रसः, इति फलितार्थः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत्येवंरूपस्य शान्तस्य मोक्षावस्थायामेवात्मस्वरूपापत्तिलक्षणायां प्रादुर्भावात् तत्र सञ्चार्य्यादीनामभावात् (ढ) कथं रसत्वम् ? इत्युच्यते,—

युक्तवियुक्तदशाया-
मवस्थितो यः शमः स एव यतः ।
रसतामेति तदस्मिन्
सञ्चार्य्यादेः स्थितिश्च न विरुद्धा ॥ २४४ ॥ (ण)

यच्च अस्मिन् सुखाभावोऽपि उक्तस्तस्य वैषयिकसुखपरत्वान्न विरोधः । उक्तं हि,—

"यच्च कामसुखं लोके यच्च दिव्यं महासुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोड़शीं कलाम् ॥ (त)

---

(ढ) मोक्षावस्थायां—मुक्तिदशायाम्, आत्मस्वरूपापत्तिलक्षणायां—परमात्मस्वरूपत्वप्राप्तिरूपायामवस्थायामित्यर्थः, सञ्चार्य्यादीनां—निर्वेदादीनाम्, अभावात्—असद्भावात्, अस्थितेरिति यावत् ।

(ण) युक्तवियुक्तदशायामिति ।—युक्तः,—विषयेभ्यः प्रत्याहृत्य साक्षात्कर्त्तव्ये वस्तुनि मनो निधाय वर्त्तमानश्चिन्तासन्तानवान्, विषयेभ्यो मनः समाकृष्य परमात्मनि संयोज्य स्थितः इति यावत्, यस्य योगज-धर्म्मसहकृतेन मनसा जिज्ञासितवस्तुसाक्षात्कारः जायते इत्याशयः । वियुक्तः,—भूतेन्द्रियजयी, समाधिप्रभावेण अणिमाद्याः कामसिद्धीः, दूरश्रवणाद्याश्चेन्द्रियसिद्धीः आसादितवान् इत्यर्थः, प्रायेण सिद्धिमान् इति भावः ; यस्य योगजधर्म्मसहकृतानि वाह्येन्द्रियाणि स्वे स्वे विषये महत्त्वसन्निकर्षादिसहकारिनिरपेक्षाणि वर्त्तन्ते, स एव युक्तवियुक्तः, तद्दशायां—तादृशावस्थायामित्यर्थः । अस्मिन्—शान्तरसे । अन्यत् स्पष्टम् ।

(त) नन्वत्र शमरूपस्य सुखस्य सत्त्वेन "न सुखम्" इत्यसङ्गतं स्यात् ? इत्याह, यच्चेति ।—लोके—पृथिव्यां, यत् कामसुखं—भोगजं सुखं, यच्च दिव्यं—स्वर्गीयं, महासुखम्, एते—द्वे कामसुख-दिव्यसुखे इत्यर्थः, तृष्णाक्षयः,—निस्पृहता, तेन यत् सुखं तस्य, शमसुखस्येति सारः, षोड़शीं कलाम्—अंशं, न अर्हतः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सर्वाकारमहङ्काररहितत्वं व्रजन्ति चेत् ।
अत्रान्तर्भावमर्हन्ति दयावीरादयस्तदा ॥" (थ)

आदिशब्दात् धर्म्मवीर-दानवीरदेवताविषयरतिप्रभृतयः । तत्र देवताविषया रतिर्यथा, (द)—

"कदा वाराणस्यामिह सुरधुनीरोधसि वसन्,
वसानः कौपीनं, शिरसि निदधानोऽञ्जलिपुटम् ।
अये गौरीनाथ ! त्रिपुरहर ! शम्भो ! त्रिनयन !
प्रसीदेति क्रोशन् निमिषमिव नेष्यामि दिवसान् ॥" (ध)

---

(थ) सर्वेति ।—सर्वं देहेन्द्रियादि, आकारः आश्रयो यस्य तत् सर्वाकारं—सर्वप्रकारमित्यर्थः, अहङ्कारः,—अभिमानः, तद्रहितत्वं—तदभावत्वं, चेत्—यदि, व्रजन्ति, दयावीरादिनायकाः इति शेषः, यदि दयावीरादिनायकाः देहेन्द्रियादि-विषयकाभिमानशून्याः भवन्ति इति भावः [अभिमानश्च देहेन्द्रियेष्वहमित्यारोपः, देहादिसम्बन्धिनि पुत्रादौ ममेत्यारोपश्च] तदा दयावीरादयोऽपि रसाः, अत्र—शान्तरसे, अन्तर्भावम्, अर्हन्ति, शान्तरसस्वरूपाः भवन्ति इति तदर्थः ।

(द) तत्रेति ।—शान्तरसान्तर्भूतेषु दयावीरादिषु मध्ये, शान्तरसेऽन्तर्भूता देवताविषया रतिरित्यर्थः ।

(ध) कदेति ।—शैवोक्तिरियम् । अहं कदा इह वाराणस्यां—काशीक्षेत्रे, सुरधुनीरोधसि—सुराणां—देवानां, धुनी—नदी, तस्या रोधः,—तीरं, तस्मिंस्तथोक्ते, ("तटिनी ह्रदिनी धुनी" इति "कूलं रोधश्च तीरञ्च" इति चामरः) गङ्गातीरे इत्यर्थः, वसन्, कौपीनं वसानः,—परिदधानः, [अत्र कौपीनपरिधानेच्छया अहङ्कारनिवृत्तिः प्रतीयते] तथा, शिरसि अञ्जलिपुटं निदधानः सन्, "अये गौरीनाथ ! त्रिपुरहर ! शम्भो ! त्रिनयन ! प्रसीद"—प्रसन्नो भव, इति क्रोशन्—उच्चैः स्वरेण रटन्, दिवसान् निमिषमिव, नेष्यामि—अतिवाहयिष्यामि । [अत्र कौपीनाधानमात्रावशेषितया प्रतीयमानः शमः वाराणसीगतगङ्गातटनिवासमाहात्म्यश्रवणेनोद्दीपितः भगवदालम्बनः सर्व्वतो विरज्यावस्थानेनानुभाववान् हर्षादिव्यभिचारिसंवलितः शान्तरूपेण सामाजिके आस्वाद्यते, या च चित्तस्य भगवत्स्मरणैकतानताऽभिधानेन भगवद्विषया रतिः चमत्कुरुते, साऽपि तत्रैव अन्तर्भूतेति बोध्यम्] । शिखरिणी वृत्तम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ मुनीन्द्रसम्मतो वत्सलः,—

वत्सलश्च रस इति तेन स दशमो मतः ।
स्फुटं चमत्कारितया वत्सलञ्च रसं विदुः ।
स्थायी वत्सलतास्नेहः पुत्राद्यालम्बनं मतम् ॥
उद्दीपनानि तच्चेष्टा विद्याशौर्य्यदयाऽऽदयः ।
आलिङ्गनाङ्गसंस्पर्शशिरश्चुम्बनमीक्षणम् ॥
पुलकानन्दवाष्पाद्या अनुभावाः प्रकीर्त्तिताः ।
सञ्चारिणोऽनिष्टशङ्काहर्षगर्वादयो मताः ॥
पद्मगर्भच्छविर्वर्णो दैवतं लोकमातरः ॥२४५॥(न)

यथा,—

"यदाह धात्र्या प्रथमोदितं वचो
ययौ तदीयामवलम्ब्य चाङ्गुलीम् ।
अभूच्च नम्रः प्रणिपातशिक्षया
पितुर्मुदं तेन ततान सोऽर्भकः ॥" (प)

---

(न) अथ मुनीन्द्रमते दशमो वत्सलोऽपि रस इति तमाह, वत्सल इति ।—स्फुटमिति ।—स्फुटं—सुव्यक्तम्, उत्कटमिति यावत् । विदुः इत्यत्र केचिदिति शेषः, अन्ये पुनरस्य भावकाव्यत्वमेवेच्छन्ति ; तन्न, चमत्कारातिशययोगेन रसत्वस्यैव युक्तत्वात् । वत्सलता—प्रियता, तया सहितः स्नेहः,—रतिः, स्थायी । सा च लालनपालनादीच्छा ; [ पुत्रादीत्यादिना कनिष्ठभ्रात्रादिग्रहणम् ; भ्रात्रालम्बनो यथा,—"देशे देशे कलत्राणि देशे देशे च बान्धवाः । तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ॥" इति । अत्र श्रीरामचन्द्रस्य भ्रातृस्नेहः तादृशोक्त्यनुभावेन आस्वाद्यमानो रसतामिति । केचित् "सहोदरः" इति सहः,—सङ्ग्रामसहः, अदरः,—निर्भयश्च, इति व्याकुर्व्वन्ति ; तन्मते तदुभयमुद्दीपनविभावः ]। लोकमातरः,—शचीत्यादयः । अन्यत् स्पष्टम् ।

(प) वत्सलरसमुदाहरति, यदाहेति ।—धात्र्या—उपमात्रा, प्रथमम्, उदितं—शिक्षितं, वचः,—"तात ! प्रणमामि" इत्यादिरूपं, यत् आह—ब्रवीति स,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एषाञ्च रसानां परस्परविरोधमाह,—

आद्यः करुणबीभत्सरौद्रवीरभयानकैः।
भयानकेन करुणेनापि हास्यो विरोधभाक्॥
करुणो हास्यशृङ्गाररसाभ्यामपि तादृशः॥
रौद्रस्तु हास्यशृङ्गारभयानकरसैरपि।
भयानकेन शान्तेन तथा वीररसः स्मृतः॥
शृङ्गारवीररौद्राख्यहास्यशान्तैर्भयानकः।
शान्तस्तु वीरशृङ्गाररौद्रहास्यभयानकैः॥
शृङ्गारेण तु बीभत्स इत्याख्याता विरोधिता॥२४६॥(फ)

आद्यः,—शृङ्गारः। एषाञ्च समावेशप्रकारो वक्ष्यते।

---

तदीयां—धात्रीसम्बन्धिनीम्, अङ्गुलीम्, अवलम्ब्य—आश्रित्य, यत् ययौ—गच्छति स्म, प्रणिपातशिक्षया—"एवमेवं प्रणामादि कार्य्यम्" इत्युपदेशेन, यच्च नम्रः,—आनत-मस्तकः, अभूत्, तेन—हेतुना, सः अर्भकः,—शिशुः, रघुः इति यावत्, पितुः,—जनकस्य, दिलीपस्येत्यर्थः, मुदं—हर्षं, ततान—विस्तारयामास। [अत्र दिलीपस्य स्नेहः पुत्ररूपेणालम्बनेन पादवयोक्ततदीयार्द्धस्फुटवचनादिना उद्दीपनेन यथायथमाक्षिप्तेन अनुभावादिना च आस्वाद्यमानः रसतामापद्यते। अत्र रसानां तत्तद्वर्णकथनं तत्तद्वक्ता-ऽभिप्रायेण इति बोध्यम्। अथ येषां मतेऽस्य भावकाव्यत्वं न रसत्वं, तेषामयमाशयः,—"यदाह" इत्यादौ रतिरेव वात्सल्यलक्षणा प्रतीयते, न तेन वत्सलरसस्य प्रतीतिः, भाव-त्वेनैव तस्य गतार्थत्वात्। ननु यदि तादृशरतिमान् वत्सलोऽपि रसः, तर्हि परमेश्वरा-लम्बनः, रोमाञ्चाद्यनुभाववान्, हर्षादिसञ्चारिभावकः, भागवतभारतभगवद्गीताऽऽदि-श्रवणे, भगवत्परायणैः प्रत्यक्षमनुभूयमानः, भक्तिरसोऽपि रसान्तरं कथं न स्यात्? भगवती विशुद्धप्रेमात्मिका भक्तिर्हि अत्र स्थायिभावः। न हि शान्ते अन्तर्भवत्ययं, विशुद्धानुरागस्य वैराग्यप्रतिकूलत्वात्, इति भक्तिरसोऽपि रसान्तरमिति स्वीक्रियतां का हानिः? इति चेन्न, तथाऽङ्गीकारे मुन्यनुशासनातिक्रमे रसानां नियतसङ्ख्याधिक-कल्पने प्रमाणाभावादिति दिक्]। रघुवंशस्य पद्यमिदम्। वंशस्थविलं वृत्तम्।

(फ) आद्य इति।—आद्यः,—प्रथमः रसः, शृङ्गार इत्यर्थः। हास्यः,—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कुतोऽपि कारणात् क्वापि स्थिरतामुपयन्नपि।
उन्मादादिर्न तु स्थायी न पात्रे स्थैर्य्यमेति यत् ॥२४७॥(ब)

यथा विक्रमोर्वश्यां चतुर्थेऽङ्के पुरूरवस उन्मादः।

रसभावौ तदाभासौ भावस्य प्रशमोदयौ।
सन्धिः शबलता चेति सर्वेऽपि रसनाद्रसाः॥२४८॥(भ)

रसनधर्मयोगित्वाद्भावादिष्वपि रसत्वमुपचारादित्यभिप्रायः। (म)

---

हास्यरसः। विरोधं भजते इति विरोधभाक्—विरोधीत्यर्थः, शोकजुगुप्साभयसत्त्वेन रतेरसम्भवादिति भावः। तादृशः,—विरोधभागित्यर्थः। इति—इत्थं, विरोधिता—परस्परविरोधः, आख्याता—कथिता।

(ब) ननु शृङ्गारादौ उन्मादादेरपि सम्भवात्, रत्यादिरिव, यत्र उन्मादादिः प्रतीयते, तत्रोन्मादादेरपि स्थायिभावत्वे रत्यादिस्थायिभावानां नियतत्वं कथम्? इत्याह, कुत इति।—कुतोऽपि—कस्मादपि कारणात्, क्वापि—कस्मिंश्चिद्रसविशेषे, उन्मादादिः, स्थिरतां—व्यापकत्वम्, उपयन्नपि—लभमानोऽपि, न तु स्थायी—नैव स्थायिपदवाच्यः, यत्—यस्मात्, पात्रे—आधारभूते नायकादौ तद्रसत्वावच्छिन्ने इत्यर्थः, [ सः ] स्थैर्य्यं—स्थिरताम्, अविनश्वरत्वमित्यर्थः, न एति—न प्राप्नोति ; परन्त तदपायादिति भावः, रत्यादिस्तु क्वचित् तिरोभूततया क्वचित्पुनरतिरोभूततया तिष्ठत्येवेति एतस्य नियतस्थितिकतया स्थायित्वमेवेति सुधीभिर्विभाव्यम्।

(भ) इदानीं रसपदस्य मुख्यलाक्षणिकार्थभेदज्ञापनार्थमाह, रसभावाविति।—तदाभासौ—तस्य—रसस्य, भावस्य च आभासौ, रसाभासः भावाभासश्च इत्यर्थः, भावस्य प्रशमः भावप्रशमः, भावस्य उदयः भावोदयः, सन्धिः,—भावसन्धिरित्यर्थः, शबलता—भावशबलता इत्यर्थः, एते सर्वेऽपि रसनात्—आस्वादनरूपगुणयोगात्, आनन्दसंवलितज्ञानसम्बन्धादित्यर्थः, रसाः,—रसपदप्रतिपाद्याः, गौणा रसा इत्यर्थः, उच्यन्ते इति शेषः। रसो विभावादिभिरभिव्यक्तश्चिदानन्दचमत्काररूपतां भजते, भावादिस्तु लौकिककार्य्यकारणादिभिरिति विशेषो बोध्यः।

(म) उपचारादिति।—रत्यादिस्थायिभावानामभावेन मुख्यलक्षणायोगादिति भावः। न चात्र देवादिविषयकरतिसत्त्वात् कथं स्थायिभावाभावः? इति वाच्यं, कान्ताऽऽदिविषयरतेरेव स्थायित्वोपपादनात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भावादय उच्यन्ते,—

सञ्चारिणः प्रधानानि देवादिविषया रतिः।
उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते ॥२४९॥(य)

"न भावहीनोऽस्ति रसो, न भावो रसवर्जितः।
परस्परकृता सिद्धिरनयोः रसभावयोः॥" (र)

इत्युक्तदिशा परमालोचनया परमविश्रान्तिस्थानेन रसेन सहैव वर्त्तमाना अपि राजानुगतविवाहप्रवृत्तभृत्यवद् आपाततो यत्र प्राधान्येनाभिव्यक्ता व्यभिचारिणः, देवमुनिगुरुनृपादिविषया च रतिः, उद्बुद्धमात्रा विभावादिभिरपरिपुष्टतया रसरूपतामनापद्यमानाश्च स्थायिनो भावा भावशब्दवाच्याः।

---

(य) सञ्चारिण इति।—प्रधानानि—प्रधानभूताः, आपाततः प्राधान्येन रत्याद्यपेक्षया अभिव्यक्ताः इति भावः, सञ्चारिणः,—प्रागुक्ता निर्वेदादयः, तथा देवादिविषया रतिः,—भक्त्यादिपदव्यपदेश्यः अनुरागः, तथा उद्बुद्धमात्रः,—उद्रिक्त एव, किञ्चित् भासमानः इति यावत्, न तु विभावादिभिः परिपोषित इति भावः, स्थायी—रत्यादिः, च भाव इत्यभिधीयते। यथा विभावादिभिरभिव्यक्तो रत्यादिश्चिदानन्दचमत्काररूपत्वेन परिणतो रसतामापद्यते, तथा स्वकार्य्यकारणाभ्यामभिव्यक्तो देवादिविषयकरत्यादिः चिदानन्दस्वरूपतां न प्राप्तो भावत्वं प्राप्नोति; चमत्कारसत्त्वाऽसत्त्वाभ्यामनयोर्भेद इति भावः। यद्यपि देवादिविषयाऽपि रतिराम्नायते, तथाऽप्यसौ न स्थायिशब्देनोच्यते, नायिकादिविषयस्य रत्यादेरेव स्थायिशब्देनाभिधातुमुचितत्वात् इति बोध्यम्।

(र) कारिकां व्याचक्षाणः सञ्चारिणां प्रधानत्वं निर्द्दिशति, न भावेति।—भावेन—निर्वेदाद्यन्यतमेन, हीनः,—वर्ज्जितः, रसः, नास्ति। यतो भावेभ्यः एव सामान्यगुणयोगेन रसाः प्रादुर्भवन्ति, एवं रसेन वर्ज्जितः भावोऽपि नास्ति; तद्यथा—"योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः। शरीरं व्याप्यते तेन शुष्ककाष्ठमिवाग्निना॥" इति। इत्येवं कृत्वा अनयोः, रसभावयोः, सिद्धिः,—निष्पत्तिः, परस्परकृता—परस्परसम्पादिता। भावेन रसः परिपुष्यते, रसोऽपि भावेनेति भावः। अत्र पुस्तकान्तरे "यथा मरिचकर्पूरसमीचाऽऽदिप्रपाणके। न पार्थक्यं भवेत् स्वादस्तथैव रसभावयोः॥" इति पाठान्तरमुपलभ्यते। अर्थस्तु स्पष्टः।


CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र व्यभिचारी यथा,—"एवंवादिनि देवर्षौ" इत्यादि। अत्रावहित्था। (ल)

देवविषया रतिः यथा मुकुन्दमालायाम्,—

"दिवि वा भुवि वा ममास्तु वासो
नरके वा नरकान्तक! प्रकामम्।
अवधीरितशारदारविन्दौ
चरणौ ते मरणेऽपि चिन्तयामि॥" (व)

---

(ल) इति—एवम्, उक्तदिशा—भरताद्युक्तमार्गेण, परमया—सूक्ष्मया, आलोचनया, परमविश्रान्तिस्थानेन—स्वपरिपाकस्वरूपभूतेन, रसेन सह एव वर्त्तमाना अपि, राजानुगता विवाहप्रवृत्ता भृत्या इव—राजानुगतभृत्यस्य अप्राधान्येऽपि विवाहकाले शिविकारोहणोन्नतासनोपवेशनादिभिः यथा तात्कालिकप्राधान्याभिव्यक्तिर्भवति, तद्वदित्यर्थः, आपाततो यत्र प्राधान्येन अभिव्यक्ता व्यभिचारिणो भावाः, तथा देव-मुनि-गुरु-नृपादिर्विषयो यस्याः सा च रतिः, [ नृपादीत्यत्रादिपदेन मित्रादेर्ग्रहणम्; आदिपदात् पुत्रादेरपि ग्रहणम् इत्यन्ये, तन्न; तद्विषयकरतेर्वत्सलरसत्वेनैव ग्रन्थकृता दर्शितत्वात् ] उद्बुद्धमात्रा अतः विभावादिभिरपरिपुष्टतया रसरूपतामनापद्यमानाः स्थायिनो भावा अपि भावशब्दवाच्याः इति बोध्यम्। उदाहरति, तत्रेति।—तत्र—तेषु, व्यभिचारिभावो यथा,—"एवंवादिनि देवर्षौ......" इत्यादि। अत्र शिवप्रसङ्ग-जातहर्षसूचकमुखरागादेर्लज्जया गोपनेन अवहित्था नाम व्यभिचारी भावः। स चाधोमुखत्वव्यञ्ज्यलज्जया कारणेन लीलाकमलपत्रगणनारूपव्यापारान्तरप्रसङ्गेन च प्राधान्येन झटिति अभिव्यक्तः भावशब्दवाच्यत्वं गाहते इति। पुस्तकान्तरे तु "स्मरत्यगस्तिं पथिकः प्रपापाल्यञ्जलिं सृजन्। साऽपि स्मरति वामाक्षी भजते सप्त वारिधीन्॥" अत्र परस्परानुरागलक्षणाया रतेरुद्बोधमात्रम्, इति पाठान्तरमुपलभ्यते।

(व) देवविषयिणीं रतिमुदाहरति, दिवीति।—हे नरकान्तक!—नरकासुरनिसूदन! कृष्ण! दिवि—स्वर्गे वा, भुवि—पृथिव्यां वा, नरके वा, मम प्रकामं—सम्यक्, वासः,—स्थितिः, अस्तु—भवतु। तत्र नैव मे क्षतिरिति भावः; कथम्? इत्याशंकायामाह, अवेति।—मरणे—मृत्युकालेऽपि, अवधीरितम्—अवज्ञातं, शारदारविन्दं—शरत्कालीनकमलं, याभ्यां तादृशौ, ते—तव, चरणौ, चिन्तयामि—ध्यायामि। अत्र वक्तुः श्रीकृष्णभक्तिरूपा रतिः। वैतालीयं वृत्तम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मुनिविषया रतिर्यथा,—

"विलोकनेनैव तवामुना मुने !
कृतः कृतार्थोऽस्मि निवर्हितांहसा।
तथाऽपि शुश्रूषुरहं गरीयसी-
र्गिरोऽथवा श्रेयसि केन तृप्यते ?॥" (अ)

राजविषया रतिर्यथा मम,—

"त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम्।
न धत्ते शिरसा गङ्गां भूरिभारभिया हरः॥" (ब)

एवमन्यत्र। (स)

---

(अ) मुनिविषयिणीं रतिमुदाहरति, विलोकनेनेति।—नारदं प्रति श्रीकृष्णस्य उक्तिरियम्। हे मुने! तव निवर्हितं—निराकृतम्, अंहः,—पापं येन तादृशेन, विनाशितपापेनेत्यर्थः, अमुना विलोकनेन—दर्शनेन, एव कृतार्थः,—सिद्धमनोरथः, कृतः अस्मि। तथाऽपि—विलोकनेन कृतार्थत्वेऽपीत्यर्थः, अहं गरीयसीः,—गुर्वर्थप्रतिपादिकाः, गिरः,—वाचः, शुश्रूषुः,—श्रोतुमिच्छुः; अथवा—किंवा, केन—जनेन, श्रेयसि—कल्याणे, तृप्यते?—न केनापीत्यर्थः। यद्वा,—अथ—प्रश्ने, श्रेयसि केन वा तृप्यते? अत्र श्रीकृष्णस्य मुनिविषयिणी रतिः प्रतीयते। शिशुपालवधस्येदं पद्यम्। वंशस्थविलं वृत्तम्।

(ब) राजविषयिणीं रतिमुदाहरति, त्वदिति।—कश्चित् राजानं प्रति कस्यचिदुक्तिरियम्। हे राजन्! हरः,—शिवः, भूरिभारभिया—अत्यधिकभारजनितत्रासेन हेतुना, शिरसा तव वाजिराजिभिः,—अश्वसमूहैः, निर्धूतैः,—चितैः, धूलीपटलैः,—रजोराशिभिः, पङ्किला—सञ्जातपङ्का तां तथाविधां, गङ्गां, न धत्ते—न धारयति। अत एव जगत्पवित्रीकरणार्थव्याजेन तां स्वजटाजूटतः परिमुञ्चतीति भावः। अत्र कस्यचित् स्तुतिपाठकस्य निखिलनृपेभ्यः प्रस्तुतराज्ञ उत्कर्षकीर्त्तनरूपा रतिः।

(स) एवमिति।—एवं—निरुक्तप्रकारेण, अन्यत्र—गुर्वादौ, अपि रतिरुन्नेया इति शेषः। तत्र गुरुविषया रतिः यथा,—"अस्माङ्गीवमहत्तरः क्रतुभुजामध्यायमाद्यो रविर्यज्वानो वयमद्य ते भगवती भूरद्य राजन्वती। अद्य स्वं बहु मन्यते सहचरैरस्माभिराखण्डलो येनैतावदरुन्धतीपतिरपि स्वेनाऽनुगृह्णाति नः॥" इति। अत्र दशरथस्य वशिष्ठे गुरौ रतिः। पित्रोरपि गुरुत्वात् तद्विषया रतिः यथा,—"जीवत्सु

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उद्बुद्धमात्रस्थायिभावो यथा,—

"हरस्तु किञ्चित्परिवृत्तधैर्य्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे विम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥" (ह)

अत्र पार्वतीविषया भगवतो रतिः । (क)

ननूक्तं "प्रपाणकरसवद्विभावादीनामेकोऽवभासो रस इति" तत्र सञ्चारिणः पार्थक्याभावात् कथं प्राधान्येनाभिव्यक्तिः ? इत्युच्यते,—

**यथा मरीचखण्डादेरेकीभावे प्रपाणके ।**
**उद्रेकः कस्यचित् क्वापि तथा सञ्चारिणो रसे॥२५०॥**(ख)

---

तातपादेषु नवे दारपरिग्रहे । मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥" अत्र श्रीरामस्य पित्रोः रतिः । मित्रे रतिर्यथा,—"अद्य राज्यं मया प्राप्तमद्य वाली हतो मया । हरीणामद्य पूज्योऽस्मि यद्भवान् मित्रतां गतः ॥" अत्र सुग्रीवस्य श्रीरामे मित्रे रतिः ।

(ह) नायिकाऽऽलम्बनाया अपि रतेर्विभावादिभिरपरिपुष्टत्वे उद्बुद्धमात्रस्थायिभावमुदाहरति, हर इति ।—हरस्तु, चन्द्रोदयारम्भे—चन्द्रोदयोपक्रमे, अम्बुराशिः,—समुद्र इव, किञ्चित्—ईषत्, परिवृत्तं—विचलितं, धैर्य्यं यस्य तथोक्तः, ईषद्विचलितधैर्य्यः सन्, विम्बफलवत् अधरोष्ठो यत्र तादृशे, उमामुखे, विलोचनानि—नेत्राणि, व्यापारयामास—साभिलाषमद्राक्षीदिति भावः । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः वृत्तम् । अत्र पार्वतीविषया भगवतो रतिः स्थायिभावः अनुभावादिभिरपरिपुष्टतया रसतामप्राप्य स्थितः, इत्यस्य उद्बुद्धमात्रत्वम् ; वस्तुतस्तु अत्र रतिः पार्वतीमुखविलोकनरूपेणानुभावेन, अधरोष्ठयोर्विम्बफलसाम्यकथनरूपेण उद्दीपनविभावेन, समाधिना च वसन्तोदयेन लज्जाऽऽदिना च व्यभिचारिणा परिपोषिता रसतामेतीति बोध्यम् ।

(क) अत्रेति ।—उमामुखावलोकनरूपानुभावमात्रेण व्यक्ता रतिः, उद्दीपनविभावादिकृतपरिपोषराहित्येन रसतां नापद्यते इति भावव्यपदेश एवास्योचितः इति भावः ।

(ख) यथेति ।—यथा मरीचखण्डादेः एकीभावे—मिश्रणेऽपि, प्रपाणके—पानीयद्रव्यविशेषे, कस्यचित्—वस्तुनः, क्वापि—कदापि, उद्रेकः,—स्फुरणं भवतीति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ रसाभासभावाभासौ,—

**अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः॥२५१॥(ग)**

अनौचित्यञ्च अत्र रसानां भरतादिप्रणीतलक्षणानां सामग्रीरहितत्वे सत्येकदेशयोगित्वोपलक्षणपरं बोध्यम्; तच्च बालव्युत्पत्तये एकदेशतो दर्श्यते, (घ)—

**उपनायकसंस्थायां मुनिगुरुपत्नीगतायाञ्च।**
**बहुनायकविषयायां रतौ तथाऽनुभयनिष्ठायाम्॥**
**प्रतिनायकनिष्ठत्वे तद्वदधमपात्रतिर्य्यगादिगते।**
**शृङ्गारेऽनौचित्यं रौद्रे गुर्वादिगतकोपे॥**
**शान्ते च हीननिष्ठे गुर्वाद्यालम्बने हास्ये।**
**ब्रह्मवधाद्युत्साहेऽधमपात्रगते तथा वीरे॥**
**उत्तमपात्रगतत्वे भयानके ज्ञेयमेवमन्यत्र॥२५२॥(ङ)**

---

शेषः, तथा—तद्वत्, क्वापि—कस्मिंश्चित् रसे, कस्यचित् सञ्चारिणः, उद्रेकः भवति इति शेषः, अतः सञ्चारिणः प्रधानानीत्युक्तं ज्ञेयम्।

(ग) रसभावयोराभासावाह, अनौचित्येति।—रसभावयोः अनौचित्यप्रवृत्तत्वे—अनुचितभावेन वर्त्तमानत्वे, आभासः,—रसाभासः, भावाभासश्च इत्यर्थः।

(घ) अथ रसानामनौचित्यमाह, अनौचित्यञ्चेति।—अनौचित्यपदञ्चेत्यर्थः, अत्र—रसभावयोः, भरतादीति।—भरतादिभिः आचार्य्यैः, प्रणीतानि—रचितानि, लक्षणानि—स्वरूपाणि, येषां तथाभूतानां, रसानां [ बहुवचनमादिवाचकम् ] तेन शृङ्गारादीनां निर्वेदादीनां चेत्यर्थः, सामग्रीरहितत्वे—सामग्री—कारणकूटः, तद्रहितत्वे—तदभावे, विभावादिरूपकारणासत्त्वे सति इत्यर्थः, एकदेशयोगित्वोपलक्षणपरम्—एकदेशयोगित्वं—यत्किञ्चिल्लक्षणसम्बन्धः, तदुपलक्षणं—तत्प्रत्यायनं, तत्परं—तत्तात्पर्य्यक, कियदंशे तल्लक्षणयोगः, कियदंशे च तल्लक्षणायोग इति यतः प्रतिपत्तिः स्यात् तथाभूतमिति यावत्। तच्च—अनौचित्यञ्चेत्यर्थः, बालव्युत्पत्तये—बालानाम् अज्ञानां, व्युत्पत्तये—बोधाय, एकदेशतः,—एकांशेन, दर्श्यते—प्रदर्श्यते।

(ङ) एकदेशं दर्शयति, उपनायकेति।—शृङ्गारे—शृङ्गाररसे, रतौ उप-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नायकः,—उपपतिः, तत्र सन्तिष्ठतीति तथाभूतायां, च—तथा, मुनयश्च गुरवश्चेत्येषां पत्न्यः,—प्रमदाः, तत्र गतायां—तन्निष्ठायां, बहवो नायकाः विषयाः यस्यास्तथाभूतायां, तथा न उभयनिष्ठा—नायिकागतत्वे नायकाऽगतत्वेन, नायकगतत्वे नायिकागतत्वाभावेन च, नायिकानायकानुभयगता तथाभूतायां सत्यां, तथा शृङ्गारे, प्रतिनायकः,—नायकप्रतिद्वन्द्वी, तन्निष्ठत्वे, तद्वत् अधमपात्रम्—असत्कुलजातनायकः, तथा तिर्य्यगादि—पशुपक्षिप्रभृति, तद्गते—तन्निष्ठत्वे सति, (तिर्य्यगादीनां नायकलक्षणाभावादिति भावः) अनौचित्यं बोध्यमिति शेषः। [अत एव तर्कवागीशा अप्याहुः,—"शृङ्गारे दक्षिणाद्याश्च नायकाः" इत्युक्तम्। नायकलक्षणे "कुलीनः" इत्यनेन सत्कुलजातत्वम्। "शीलवान्" इत्यनेन सद्वृत्तत्वञ्च नायकस्य लभ्यते। "नायकसामान्यगुणैर्भवति यथासम्भवैर्युक्ता" इत्यनेन नायिकायाश्च सद्वृत्तत्वं लभ्यते; नायकस्य निषिद्धयोषित्सङ्गमे, नायिकायाश्च निषिद्धपुरुषसङ्गमे सद्वृत्तत्वं न भवतीति तद्विषयशृङ्गारस्य यथोक्तनायकाभावादेकदेशयोगित्वम्। निषिद्धयोषित उक्ताः शृङ्गारतिलके,—"सम्बन्धिमित्रद्विजराजहीनवर्णाधिकानां प्रमदा न गम्याः। व्यङ्गास्तथा प्रव्रजिता विभिन्नमन्त्राश्च धर्म्मार्थमनोभवज्ञैः॥" इति। एवं योषितामपि सम्बन्ध्यादयः पुरुषाः निषिद्धाः। [एवञ्च मुनिगुरुपत्नीगतायां चेति चकारेण सम्बन्ध्यादिपत्न्यो बोध्याः। "उपनायकसंस्थायाम्" इत्यत्र सम्बन्ध्याद्यन्यतम उपनायको बोध्यः। अन्यथा "बहुनायकविषयायाम्" इति "प्रतिनायकनिष्ठत्वे" इति च व्यर्थं स्यात्]। बहुनायकेति।—सम्बन्ध्यादिभिन्ना अपि बहुनायका निषिद्धाः इति भावः। अनुभयनिष्ठायामिति।—"विभिन्नमन्त्राश्च" इत्यनेन अन्यतरस्यां मतौ निषिद्धत्वादिति भावः। नायकस्य प्रतिपक्षः प्रतिनायकः। अस्य सम्बन्ध्यादिभिन्नत्वेनानिषिद्धेऽपि भर्त्तुरनभिमताचरणेनासद्वृत्तत्वं नायिकाया इति भावः। इति] तथा रौद्रे रसे, गुर्वादिगतकोपे—गुरुजनप्रभृतिगते कोपे सति, अनौचित्यं बोध्यमिति भावः। "क्रोधात्मको भवेद्रौद्रः प्रतिशूरैरमर्षितः। रूक्षप्रायो भवेदत्र नायकोऽत्युग्रविग्रहः॥" इत्यभियुक्तोक्त्या रौद्रे प्रतिशूरजनितक्रोधः, न तु गुर्वादिजनितक्रोधो नायके युक्त इति भावः। शान्ते रसे, हीननिष्ठे—निकृष्टव्यक्तिनिष्ठे सति, "उत्तमप्रकृतिर्मतः" इति मुनिदर्शितसरणिपरित्यागात् "गतेच्छो नायकस्तत्र तमोरागपरिक्षयात्" इत्युक्तनायकलक्षणातिक्रमाच्च, अनौचित्यं ज्ञेयमिति भावः। हास्ये रसे, गुर्व्वाद्यालम्बने—गुर्वादिरूपे आलम्बने सति, अनौचित्यमित्यर्थः,गुर्वादीनां हास्यालम्बनत्वेऽवज्ञा जायते, अवजानानश्च तान् पतितो भवतीत्यनौचित्यमिति हृदयम्; (अत एवोक्तम्,—"न हसेत, न प्रतिवदेत्, न पृष्ठं दर्शयेत्, नीचैरासीत" इत्यादि)। तथा वीरे—उत्साहस्थायिके

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र रतेरुपनायकनिष्ठत्वे यथा मम,—
"स्वामी मुग्धतरो, वनं घनमिदं, बालाऽहमेकाकिनी,
क्षौणीमावृणुते तमालमलिनच्छाया तमःसन्ततिः।
तन्मे सुन्दर! मुञ्च कृष्ण! सहसा वर्त्मेति गोप्या गिरः,
श्रुत्वा तां परिरभ्य मन्मथकलाऽऽसक्तो हरिः पातु वः॥" (च)

रसे, ब्रह्मवधाद्युत्साहे—ब्रह्मबधादिषु उत्साहस्तस्मिन् सतीत्यर्थः, तेषां वेदविरुद्धतया तद्विषयकोत्साहवतः नायकत्वं न सम्भवतीत्यनौचित्यमित्यर्थः, तथा अधमपात्रगते, उत्साहे सति इति शेषः, अनौचित्यमिति भावः। "उत्तमप्रकृतिर्वीरः........." इति पूर्वोक्तस्यापलापापत्तेः "उत्साहाध्यवसायादविषादित्वादविषयान्मोहात्। विविधादर्थविशेषाद्वीररसो नाम सम्भवति॥ स्थितिधैर्यवीर्यगर्व्वैरुत्साहपराक्रमप्रभावैश्च। वाक्यैश्चाक्षेपकृतैः............" इत्युक्तगुणशून्यत्वापत्तेश्च न तथाविधे उत्साहे वीरस्य स्वरूपसत्त्वमिति निष्कर्षः। तथा भयानके रसे, भयस्य उत्तमपात्रगतत्वे सति "स्त्रीनीचप्रकृतिः" इत्यनेन स्त्रीनीचादिनायकत्वमेव उचितमिति अनौचित्यं ज्ञेयम्। एवं—निरुक्तप्रकारेण, अन्यत्र—रसान्तरे, ज्ञेयम्। यत् यत् औचित्यादन्यत् प्रतीयेत, तत्सर्व्वमनौचित्यं स्वयं विवेकिभिर्वोद्धव्यमिति भावः। तद् यथा,—अदैवहतपात्रगते करुणे, तत्त्वज्ञगते बीभत्से, विशेषदर्शितपात्रगते अद्भुते, अपकार्य्यालम्बने वत्सले अनौचित्यं ज्ञेयम् इति सङ्क्षेपः।

(च) स्वामीति।—हे कृष्ण! स्वामी—पतिः, ममेति शेषः, मुग्धतरः,—अतिमूढ़ः, [एतेनास्य सुरतानभिज्ञत्वं, विलम्बे कोपावेगात् प्रहारशीलत्वञ्च ध्वनितम्] इदं वनं, घनं—निविड़म्, [एतेन तस्य भयङ्करत्वं, निविड़तया जनदर्शनाभावेन सुरतयोग्यस्थानरूपत्वप्रत्यायनञ्च सूचितम्] अहम् एकाकिनी बाला [एतेन गमने बिभेमीति, मया सह स्वच्छन्दं रमस्व इति च सूच्यते] तमालवत् मलिना छाया—कान्तिर्यस्याः तादृशी, तमसां—तिमिराणां सन्ततिः,—समूहः, क्षौणीं—पृथिवीम्, आवृणुते—आच्छादयति, [एतेन गमनसाहाय्यप्रार्थनं, कोऽप्यावां न पश्येदिति च सूचितम्] तत् हे सुन्दर!—मनोहर! [एतेन पथि परित्यागाय स्तवः, त्वां परित्यज्य नाहं गन्तुं शक्नोमि, त्वं मे मनो हृतवानिति च सूचितम्] मे—मम, वर्त्म—पन्थानं, मुञ्च—त्यज, [एतेन राजमार्गं, परनारीस्पर्शाभावरूपसदाचारञ्च त्यजेति ध्वनितम्] इति—इत्थं, गोप्याः,—गोपनार्य्याः, गिरः,—वाचः, श्रुत्वा, तां—गोपीं, सहसा—बलात्, परिरभ्य—आश्लिष्य, मन्मथकलायां—कामव्यापारे, आसक्तः, हरिः,—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

बहुनायकनिष्ठत्वे यथा,—

"कान्तास्त एव भुवनत्रितयेऽपि मन्ये
येषां कृते सुतनु! पाण्डुरयं कपोलः॥" (छ)

अनुभयनिष्ठत्वे यथा—मालतीमाधवे नन्दनस्य मालत्याम्। "पश्चादुभयनिष्ठत्वेऽपि प्रथममेकनिष्ठत्वे रतिराभासत्वम्" इति श्रीमल्लोचनकाराः।

तत्रोदाहरणं यथा—रत्नावल्यां सागरिकाया अन्योन्य-सन्दर्शनात् प्राक् वत्सराजे रतिः।

प्रतिनायकनिष्ठत्वे यथा—हयग्रीववधे हयग्रीवस्य जल-क्रीड़ावर्णने।

अधमपात्रगतत्वे यथा,—

"जघनस्थलनद्धपत्रवल्ली-
गिरिमल्लीकुसुमानि काऽपि भिल्ली।
अवचित्य गिरौ पुरो निषण्णा
स्वकचानुल्कचयाञ्चकार भर्त्ता॥" (ज)

---

कृष्णः, वः,—युष्मान्, पातु—रक्षतु। अत्र श्रीकृष्णस्य नन्द-(गोप)-नन्दनतया सम्बन्धित्वेन गोप्यास्तदनुरागोऽनुचितः इति भावः। "स्वामी निश्वसितेऽप्यसूयति—" इत्यादिपरनायिकोदाहरणन्तु न शृङ्गाराभासः, तथात्वे शृङ्गारे परनायकोदाहरण-मनर्थकं स्यादिति ज्ञेयम्। शार्दूलविक्रीड़ितं वृत्तम्।

(छ) कान्ता इति।—हे सुतनु!—शुभाङ्गि! भुवनत्रितये त एव (जनाः) कान्ताः,—रम्याः, येषां कृते—यन्निमित्तम्, अयं कपोलः, तवेति शेषः, पाण्डुः,—विरहात् मलिनश्वेतिमानमापन्न इत्यर्थः, इत्यहं मन्ये—सम्भावयामि। अत्र कपोल-पाण्डिमवर्णनमनुरागप्रदर्शनार्थं, स हि, "ते" इत्यनेन बहुनायकनिर्दिष्टत्वादनुचित एव इति बोध्यम्।

(ज) जघनेति।—जघनस्थले नद्धा—बद्धा, पत्रवल्ली—पत्रलता यया तादृशी, काऽपि भिल्ली—किराती, गिरौ—पर्वते, गिरिमल्लीकुसुमानि—कुटजपुष्पाणि, ("कुटजो गिरिमल्लिका" इत्यमरः) अवचित्य, पुरः,—समक्षं, भर्त्तुरिति शेषः, निषण्णा—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तिर्य्यग्गतत्वे यथा,—

"मल्लीमतल्लीषु वनान्तरेषु वल्ल्यन्तरे वल्लभमाह्वयन्ती।
चञ्चद्विपञ्चीकलनादभङ्गीसङ्गीतमङ्गीकुरुते स्म भृङ्गी॥" (झ)

आदिशब्दात् तापसादयः। (ञ)

रौद्राभासो यथा,—

"रक्तोत्फुल्लविशाललोलनयनः कम्पोत्तराङ्गो मुहु-
र्मुक्त्वा कर्णमपेतभीर्धृतधनुर्बाणो हरेः पश्यतः।
आध्मातः कटुकोक्तिभिः स्वमसकृद्दोर्विक्रमं कीर्त्तयन्
अंसास्फोटपटुर्युधिष्ठिरमसौ हन्तुं प्रविष्टोऽर्जुनः॥" (ट)

---

उपविष्टा सती, भर्त्रा—स्वामिना, स्वकचान्—निजकेशान्, उत्कचयाञ्चकार—वन्धयामास। अत्र रतेरधमपात्रगतत्वेन अनुचितत्वं बोध्यम्। उदारराघवस्येदं पद्यम्। वैतालीयं वृत्तम्।

(झ) मल्लीति।—भृङ्गी—भ्रमरी, मल्लीभिः,—मल्लिकाकुसुमतरुभिः, मतल्लीषु—अतिप्रशस्तेषु, मनोहरेषु इत्यर्थः, ("मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ। प्रशस्तवाचकान्यमूनि" इत्यमरः) वनान्तरेषु—वनमध्येषु, वल्ल्यन्तरे—अन्यस्यां लतायां, स्वाधिष्ठितलताभिन्नलतायाम् इति भावः, स्थितमिति शेषः, वल्लभं—पतिं, भ्रमरमित्यर्थः, आह्वयन्ती—सङ्गमार्थम् आकारयन्ती सती, चञ्चन्त्याः,—स्वनन्त्याः, अथवा,—चञ्चत्—प्रवाहवत् निरवच्छिन्नम् [ अस्मिन् पक्षे सङ्गीतमित्यस्य विशेषणम् ] विपञ्च्याः,—वीणायाः, यः कलः,—मधुरास्फुटः नादः, तस्य भङ्ग्या—अनुसारेण, सङ्गीतम्, अङ्गीकुरुते स्म—रतीद्दीपनोपकरणं गीतवतीत्यर्थः। उदारराघवस्येदं पद्यम्। इन्द्रवज्रा वृत्तम्।

(ञ) आदिशब्दात् "तिर्य्यगादिगते" इत्यत्रस्थादिपदादिति ज्ञेयम्।

(ट) रक्तोत्फुल्लेति।—असौ अर्जुनः, रक्ते—रक्तवर्णे, उत्फुल्ले—विकसिते, क्रोधेन विस्फारिते इति भावः, विशाले—आयते, लोले—चञ्चले, नयने यस्य तथोक्तः, मुहुः,—पुनः पुनः, कम्पोत्तराणि—कम्पप्रधानानि, अङ्गानि यस्य तादृशः, सकम्प इत्यर्थः, अपेतभीः,—निर्भयः, धृतधनुर्वाणः,—गृहीतधनुःशरः, कटुकोक्तिभिः,—युधिष्ठिरस्य दुर्वचोभिः, आध्मातः,—आपूरितः, क्षोभितः इत्यर्थः, [ आध्मातः,—दग्धः, इत्यर्थे "कटुकोक्तिभिः" इत्यत्र "अनलैः" इति रूपकं व्यङ्ग्यम् ] पश्यतः हरेः,—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भयानकाभासो यथा,—

"अशक्नुवन् सोढुमधीरलोचनः
सहस्ररश्मेरिव यस्य दर्शनम्।
प्रविश्य हेमाद्रिगुहागृहान्तरं
निनाय बिभ्यत् दिवसानि कौशिकः॥" (ठ)

स्त्रीनीचविषयमेव हि भयं रसप्रकृतिः। एवमन्यत्र।

**भावाभासो लज्जा-**

**ऽऽदिके तु वेश्याऽऽदिविषये स्यात् ॥२५३॥ (ड)**

स्पष्टम्।

---

श्रीकृष्णस्य, [अनादरे षष्ठी] पश्यन्तं हरिम् अनादृत्य इत्यर्थः, असकृत्—पुनः पुनः, स्वं—स्वकीयं, दोर्विक्रमं—बाहुविक्रमं, कीर्त्तयन्—प्रथयन् सन्, तथा अंसास्फोटपटुः,—अंसस्य—स्कन्धस्य, आस्फोटे—करेण ताड़ने, पटुः,—तत्परः सन्, कर्णं—सूतपुत्रं, प्रतिशूरमिति भावः, मुक्त्वा—प्रहरन्तमपि तं त्यक्त्वा इत्याशयः, युधिष्ठिरं हन्तुं प्रविष्टः, स्कन्धावारमिति शेषः। एकदा कुरुपाण्डवसङ्ग्रामे नित्यम् "अद्यैवाहं कौरवान् निहनिष्यामि" इत्येवं स्वविक्रमं कीर्त्तयन्तं प्रतिज्ञां निस्तर्त्तुमशक्नुवन्तञ्च अर्जुनं युधिष्ठिरः "यदि त्वं कौरवान् हन्तुम् असमर्थः स्याः, तदा गाण्डीवस्य असम्मानं मा कुरु, त्वजैनं, श्रीकृष्णाय समर्पय" इत्यादिरूपं निर्भर्त्सयामास ; तत् सोढुमशक्नुवन् पार्थः, "यो मामायुधं त्यक्तुमादिशेत्, तिरस्कुर्य्यात् वा, तमहं हनिष्यामि" इति पूर्व्वप्रतिज्ञामनुसृत्य पूज्यतममपि युधिष्ठिरं हन्तुं प्रवव्रते इति पौराणिकी वार्त्ता अत्रानुसन्धेया। अत्र रौद्ररसस्य स्थायिनि कोपे गुरुनिष्ठत्वानौचित्येन रौद्राभासत्वं बोध्यम्। शार्दूलविक्रीड़ितं वृत्तम्।

(ठ) अशक्नुवन्निति।—कौशिकः,—इन्द्रः, [पेचक इति तु ध्वन्योऽर्थः] सहस्ररश्मेरिव—सूर्य्यस्येव, यस्य—रावणस्य, दर्शनं सोढुम् अशक्नुवन्, अत एव अधीरलोचनः,—चञ्चलदृष्टिः, बिभ्यत्—भयं गच्छन् सन्, हेमाद्रिगुहा एव गृहं तस्य अन्तरम्—अभ्यन्तरं, प्रविश्य, दिवसानि निनाय—यापयामास इत्यर्थः। अत्र भयस्य इन्द्रगतत्वेन स्त्रीनीचाद्यन्यतमविषयत्वाभावे उत्तमप्रकृतिगतत्वमिति भयानकाभासत्वम्। शिशुपालवधस्य पद्यमिदम्। वंशस्थविलं वृत्तम्।

(ड) भावाभासमाह, भावाभास इति।—लज्जाऽऽदिके सञ्चारिणि, वेश्याऽऽदि-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**भावस्य शान्तावुदये सन्धिमिश्रितयोः क्रमात्।**
**भावस्य शान्तिरुदयः सन्धिः शबलता मता॥२५४॥(ढ)**

विषये—वाराङ्गनाऽऽदिनिष्ठे सति, भावाभासः स्यात्। [अत्र प्रथमादिपदेन चिन्ताऽऽदीनां, द्वितीयादिपदेनाननुरागिण्यादीनां ग्रहणम्]। यथा—"राकासुधाकरमुखी तरलायताक्षी सा स्मेरयौवनतरङ्गितविभ्रमाङ्गी। तत् किं करोमि विदधे कथमत्र मैत्रीं तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः॥" इति सीतामुद्दिश्य रावणस्योक्तिः, सा—सीता, अस्ति इति शेषः। [अत्र नायिकायाः स्वीकारोपायचिन्तयाऽनुरागाभावो व्यज्यते अत्र इवशब्दः सम्भावनायाम्, अतः चिन्तास्वरूपमप्राप्य आभासमात्रतयाऽवतिष्ठते। एवं नृपादिविषयकरतेः शाश्वादिविषयत्वेऽप्यनौचित्यादाभासरूपत्वम्]।

(ढ) भावशान्त्यादीनाह, भावस्येति।—एतत्सप्तम्यन्तपदेनान्वेति, तेन भावस्येति पदस्य शान्तावित्यादिना सप्तम्यन्तेन प्रत्येकं सम्बन्धः। तथा च, भावस्य शान्तौ, भावस्य शान्तिः, भावस्योदये भावस्योदयः, भावस्य (इदं वचनविपरिणामेनान्वेति, तेन) भावयोरित्यर्थः, सन्धौ, भावस्य—भावयोः, सन्धिः, भावस्य—(अत्रापि वचनविपरिणामेनान्वयः) भावानाम्, मिश्रिते—मिश्रणे, [अत्र भावे क्तः] भावस्य—भावानां, शबलता, इत्येवं क्रमात् मता। अत्र भावो व्यभिचारिभावः, शान्तिः,—प्रशमः, उदितस्यापि तिरोभाव इति यावत्, अयमपि उत्पत्तिकालावच्छिन्न एव ग्राह्यः। उदयः,—उत्पत्तिः, स्वसामग्रीबलेनोद्गमावस्थेति यावत्, सन्धिः—परस्परातिरस्कृतयोः परस्परतिरस्कारयोग्ययोरेकाश्रयत्वम्, परस्परसामग्रीमाहात्म्येन परस्परांवमर्द्दकालिकत्वेनावस्थितत्वमिति यावत्। एतदपि एकदेशवृत्तित्वविशेषितैककालवृत्तित्वरूपम्। केचित्तु—"विरुद्धयोरेकस्मिन्नेकदैवावच्छेदकभेदेन स्थितिः सन्धिः" इत्याहुः, तन्न, वक्ष्यमाणोदाहरणासङ्गतिप्रसङ्गात्। तत्रावच्छेदकानुपपत्तेः। ननु अनुपस्थितस्यापि लक्षणादेरवच्छेदकत्वं कल्प्यमिति चेत् न, एकदेत्यस्य असङ्गतत्वापत्तेः। मिश्रितं,—मिश्रणं, तच्च बाध्यबाधकभावापन्नानामुदासीनानां वाऽन्योऽन्यान्तर्गतत्वं, पूर्वपूर्वस्य बाध्यत्वेन उत्तरोत्तरस्य बाधकत्वेनैकत्र काव्ये निबन्धनमिति यावत्। अत्रापि बाध्यत्वं नाम विरोधिसामग्रीस्थगितपरिपुष्टिकत्वम्, बाधकत्वञ्च विरोधि। अस्मिन् मते दन्त्यवान् सबलशब्दः। शान्तौ उदये च एकस्यैव भावस्य शान्तिरुदयश्च, सन्धौ द्वयोरेव मुहुः शान्त्युदयौ, शबलतायां पुनः बहूनां भावानां मिश्रणम्; केचित्तु—"भावानामुत्तरोत्तरबलवत्त्वं श(स)बलत्वं बलवत्समूहो वा" इत्याहुः, तन्न, वक्ष्यमाणोदाहरणे हि द्वयोर्द्वयोः भावयोरुत्तरस्यैव बलवत्त्वं, न तु यावतामुत्तरेषाम् इति दिक्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्रमेण यथा,—

"सुतनु! जहिहि कोपं पश्य पादानतं मां
न खलु तव कदाचित् कोप एवंविधोऽभूत्।
इति निगदति नाथे तिर्य्यगामीलिताच्या
नयनजलमनल्पं मुक्तमुक्तं न किञ्चित्॥" (ण)

अत्र वाष्पमोचनेन ईर्ष्याऽऽख्यसञ्चारिभावस्य शम:।

"चरणपतनप्रत्याख्यानात् प्रसादपराङ्मुखे
निभृतकितवाचारेत्युक्त्वा रुषा परुषीकृते।
व्रजति रमणे निश्वस्योच्चैः स्तनस्थितहस्तया
नयनसलिलच्छन्ना दृष्टिः सखीषु निवेशिता॥" (त)

अत्र विषादस्योदय:।

---

(ण) भावशान्तिमुदाहरति, सुतन्विति।—हे सुतनु!—सुन्दरि! कोपं जहिहि—त्यज, पादानतं मां पश्य—अवलोकय, कदाचित् तव एवंविध: कोप:, न खलु—नैव, अभूत्, इति—इत्थं, नाथे निगदति—कथयति सति, तिर्य्यक् यथा तथा आमीलिते—ईषदुन्मीलिते, अक्षिणी यया तथाभूतया, कयाचित् कान्तया इति शेष:, अनल्पम्—अधिकतरं, नयनजलं मुक्तं—त्यक्तं, न—न तु, किञ्चित् उक्तं—कथितम्। अत्र पादपतनरूपप्रसादसामग्र्या ईर्ष्याया: प्रशम इति व्यज्यते इति। अमरुशतकस्येदं पद्यम्। मालिनी वृत्तम्।

(त) भावोदयमुदाहरति, चरणेति।—निभृत:,—गुप्त:, कितवाचार:,—कपटाचार:, यस्य तत्सम्बुद्धौ हे निभृतकितवाचार!—सहसाऽनुपलक्षितविटाचरण! इति उक्त्वा, नायिकया इति शेष:, रुषा—कोपेन, चरणयो: पतनेऽपि यत् प्रत्याख्यानं—निराकरणं, तस्मात् हेतो:, चरणाक्षेपादिना निराकरणात् इत्याशय:, प्रसादपराङ्मुखे—अप्रसन्ने, प्रसादरूपफलविमुखे इत्यर्थ:, अत एव परुषीकृते—कठिनीकृते, स्नेहहीनीकृते इति यावत्, रमणे—कान्ते, व्रजति—गच्छति सति, कयाचित् उच्चैः निश्वस्य—दीर्घं निश्वस्य, स्तने स्थित: हस्त: यस्या: तथाभूतया सत्या, स्तनमध्ये हस्तनिवेशेन "हृदय! मा स्फुट" इति हृदयाश्वास इति भाव:, सखीषु नयनसलिलच्छन्ना—अश्रुपूर्णा इत्यर्थ:, दृष्टि: निवेशिता—अर्पिता, [एतेन यौवनस्य अचिरस्थायित्वमिति, पादपतनेऽपि मया कान्तो निराकृत इति चातिशयेन अनौचित्यं कृतम्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम् ।
रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे ॥"(थ)
अत्र हर्षविषादयोः सन्धिः । (द)

"क्वाकार्य्यं, शशलक्ष्मणः क्व च कुलं, भूयोऽपि दृश्येत सा,
दोषाणां प्रशमाय मे श्रुतमहो ! कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः, स्वप्नेऽपि सा दुर्लभा,
चेतः ! स्वास्थ्यमुपैहि, कः खलु युवा धन्योऽधरं धास्यति ॥"(ध)

इति सूचितम् । अत्र नायकप्रत्याख्यानरूपसामग्र्या विषादस्य उदय इति व्यज्यते इति ] । अमरुशतकस्येदं पद्यम् । हरिणी वृत्तम् ।

(थ) भावसन्धिमाह, नयनेति ।—नयनयुगस्य—नेत्रद्वयस्य, आसेचनकम्—अतिसन्तोषकरं, ("तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्" इत्यमरः) मानसवृत्त्याऽपि दुष्प्रापं—मनोरथस्याप्यविषयमित्यर्थः, मदिराक्ष्याः,—मदिरः,—खञ्जनः, तद्वदतिचपले अक्षिणी यस्याः तथाविधायाः [ मदिरा दृष्टिभेदः इति नव्याः, तल्लक्षणं चोक्तं सङ्गीतकलिकायाम् ;—"सौष्ठवेन परित्यक्ता स्मेरापाङ्गमनोहरा । वेपमानान्तरा दृष्टिर्मदिरा परिकीर्त्तिता ॥" इति । हरविजयव्याख्याकारेणापि तथैवोक्तम्,—"आघूर्णमानमध्या या क्षामा चाञ्चिततारका । दृष्टिर्विकसितापाङ्गा मदिरा तरुणे मदे ॥" इति । अतः, मदिरे—दृष्टिविशेषयुक्ते, अक्षिणी—नयने, यस्याः तथाभूतायाः इति व्याख्येयम् ] । इदं रूपं मे—मम हृदयं मदयति—आनन्दयति, दुनोति—सन्तापयति च । अत्रैकस्यैव कामिनीरूपस्य नेत्रतृप्तिकरत्वेन आनन्दजनकत्वम्, अप्राप्यत्वेन तापजनकत्वमिति हर्षविषादयोः सन्धिरवधेयः । उपगीतिश्छन्दः,—"आर्य्याद्वितीयकेऽर्द्धे यद्गदितं लक्षणं तत् स्यात् । यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते ॥" इति तल्लक्षणात् ।

(द) अत्रेति ।—अत्र—उदाहृते पद्ये, हर्षविषादयोः, ( अत्युत्कृष्टत्वज्ञानकाले हर्षः, उपभोगाप्रयोजकत्वज्ञानकाले विषादः ) एवं विरुद्धयोरपि तयोः, सन्धिः,—एकस्मिन् समावेशः, काललाघवेन संसर्गप्रतिभासः इत्यर्थः ।

(ध) भावशबलतामुदाहरति, क्वेति ।—उर्वशीवियोगेन स्वमरणमुपक्रम्य पश्चान्निवर्त्तमानस्य पुरूरवस उक्तिरियम् । अकार्य्यं—स्त्रीवियोगात् आत्महननरूपं, क्व ? शशलक्ष्मणः,—चन्द्रस्य, कुलञ्च क्व ? चन्द्रवंशीयोऽहं कथमात्मघाती भवामीति असदृशसमावेशसूचकं क्वद्वयमिति भावः । सा—उर्वशी, भूयोऽपि—पुनरपि, दृश्येत—दृष्टिविषयवर्त्तिनी भवेत् ; दोषाणाम्—अकार्य्यानुष्ठानानां, प्रशमाय—शान्तये, मे—मम,



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता ।

इति श्रीमन्नारायणचरणारविन्दमधुव्रतसाहित्यार्णवकर्णधारध्वनिप्रस्थापनपरमाचार्य्य-
कविसूक्तिरत्नाकराष्टादशभाषावारविलासिनीभुजङ्गसान्धिविग्रहिकमहापात्र-
श्रीविश्वनाथकविराजकृतौ साहित्यदर्पणे रसभावादिनिरूपणो
नाम तृतीयः परिच्छेदः ॥ ३ ॥

श्रुतं—शास्त्रज्ञानम्, अधीतं वा, शास्त्रं ज्ञात्वा कथमहमकार्य्यं करोमीति भावः। अहो!—आश्चर्य्यं, कोपेऽपि मुखं, तस्याः इति शेषः, कान्तं—मनोहरम्। अपकल्मषाः,—अपापाः, कृतधियः,—परिणतबुद्धयः, विद्वांस इत्यर्थः, किं वक्ष्यन्ति? एवमकार्य्य-कारिणं मामुद्दिश्येति शेषः, मयि घृणां दर्शयिष्यन्तीति भावः। सा—उर्वशी, स्वप्नेऽपि दुर्लभा—लब्धुमशक्या। हे चेतः! स्वास्थ्यं—शान्तिम्, उपेहि—प्राप्नुहि, सुस्थिरं भव इत्यर्थः, कः खलु धन्यः—पुण्यवान्, युवा—तरुणः पुरुषः, अधरम्, उर्वश्या इति शेषः, धास्यति?—पास्यति? शार्दूलविक्रीडितं वृत्तम्। [ अत्र प्रथमपादे वितर्कौत्सुक्ये, यथा हि,—कुलमित्यन्तेन चन्द्रकुले स्त्रीविरहादात्महननमकार्य्यम् इत्येवंरूपविचाररूपो वितर्कः, "सा" इत्यन्तेनौत्सुक्यम्; द्वितीयपादे मतिस्मरणे, यथा हि,—"श्रुतम्" इत्यन्तेन सर्वथा तदनुरागो दोषायैव इत्यर्थनिर्द्धारणरूपा मतिः, "मुखम्" इत्यन्तेन मुखस्य कमनीयत्वस्मरणम्; तृतीयपादे शङ्कादैन्ये, यथा हि,—"कृतधियः" इत्यन्तेन शङ्का, "दुर्लभा" इत्यन्तेन स्वाऽनौजस्यरूपं दैन्यम्; चतुर्थे धृतिचिन्ते स्थिते, यथा हि,—"उपेहि" इत्यन्तेन धृतिः, "धास्यति" इत्यन्तेन चिन्ता व्यङ्ग्या। अत्र द्वयोर्द्वयोः भावस्य पूर्वस्य प्रशमाङ्गस्य बाध्यत्वम्, उत्तरस्य विप्रलम्भाङ्गस्य बाधकत्वम्। चिन्तायां विश्रान्तेः तदङ्गकस्य विप्रलम्भशृङ्गारस्य शान्तापेक्षया परिपोषः। तस्याप्युत्तराऽन्तरा प्रशमोदया-देतान्समभिलाषस्य नाऽऽस्वाद्यत्वमिति खण्डरसत्वमित्यवधेयम्। उभयाङ्गस्य भाव-समूहस्य बाध्यबाधकभावो मुख्यत्वेनास्वाद्यते इति भावशबलताया एव प्रधानत्व-मिति दिक् ]।

इत्यशेषशास्त्राटवीसञ्चारपञ्चानन-पण्डितकुलपतिना बि, ए, उपाधिधारिणा
श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां
पण्डितश्रीआशुबोधविद्याभूषण-पण्डितश्रीनित्यबोधविद्यारत्नाभ्यां
प्रतिसंस्कृतायां विमलाख्यायां साहित्यदर्पणव्याख्यायां
तृतीयः परिच्छेदः ॥ ३ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# चतुर्थः परिच्छेदः ।

अथ काव्यभेदमाह (क) ।—

**काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यञ्चेति द्विधा मतम् ॥२५३॥**

तत्र,—

**वाच्यातिशायिनि व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तमम् ॥२५४॥(ख)**

---

(क) अधुना काव्यस्वरूपं निरूप्य काव्यभेदं निदर्शयितुं प्रतिजानीते, अथेति ।—अथ—काव्यघटकरसादिनिरूपणानन्तरमित्यर्थः, काव्यस्य—"वाक्यं रसात्मकं काव्यम्" इत्युक्तलक्षणस्य वाक्यविशेषस्य, भेदः,—प्रकारस्तम्, आह ।

(ख) ध्वनिमाह, वाच्येति ।—व्यङ्ग्ये—व्यञ्जनया बोध्ये अर्थे, वाच्यातिशायिनि—वाच्यार्थात् अधिकचमत्कारिणि सति, तत् काव्यमुत्तमं ध्वनिः, कथ्यते इति शेषः । ध्वन्यते—व्यज्यते, अस्मिन्—वाक्यार्थसमुदाये इति विग्रहः । गुणीभूतव्यङ्ग्ये उक्तव्युत्पत्तिसम्भवेऽपि ध्वनिपदस्य निरूढ़रूढ़िसापेक्षत्वान्न तत्र व्यवहारः । वस्तुतस्तु "ध्वन्यते" इति ध्वनिः, रसादिः ; ध्वनतीति ध्वनिः, शब्दादिगता शक्तिः ; ध्वननं ध्वनिः, रसादिप्रतीतिः इति व्युत्पत्तिभेदात् ध्वनिपदार्थभेदो बोध्यः । ततश्चाधिकचमत्कारि व्यङ्ग्यं काव्यं ध्वनिरिति फलितम् । अयं भावः,—यत्र अभिधया वृत्त्या प्रतिपाद्यस्य वाच्याभिधेयस्यार्थस्यापेक्षया व्यञ्जनया वृत्त्या प्रतिपाद्यस्य व्यङ्ग्याभिधेयस्यार्थस्य चमत्कारातिशायित्वं स्यात्, तद् ध्वनिरिति व्यपदेश्यं काव्यम् ; तच्च वाच्यापेक्षयाऽधिकचमत्कारशालित्वात् उत्तममिति व्यपदिश्यते, यद्वा,—वाच्येतिपदं लक्ष्यस्याप्युपलक्षणं, तेन वाच्यापेक्षया लक्ष्यापेक्षया चेत्यर्थः, अथवा,—वाच्येतिपदं लक्ष्यस्यैव यत्र व्यङ्ग्याद्व्यङ्ग्यान्तरस्यापि व्यङ्ग्यत्वं, तत्र व्यङ्ग्यान्तरव्यञ्जकस्य पूर्वव्यङ्ग्यस्याप्युपलक्षकं, तेन वाच्यापेक्षया, लक्ष्यापेक्षया, पूर्वव्यङ्ग्यापेक्षया च यत्र व्यङ्ग्यस्य चमत्कारातिशायित्वं, तदुत्तमं काव्यम् । अत्राहुर्ध्वनिकाराः,—"प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानां, ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति" इति । अभिनवगुप्ता अप्याहुः,—"श्रोत्रशष्कुलीं सन्तानेनागता अन्त्याः शब्दाः श्रूयन्ते इति प्रक्रियायां शब्दाः, श्रूयमाणा इत्युक्तं, तेषां घण्टाऽनुरणनरूपत्वं तावदस्ति, ते च

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वाच्यादधिकचमत्कारिणि व्यङ्ग्यार्थे "ध्वन्यतेऽस्मिन्" इति व्युत्पत्त्या ध्वनिर्नामोत्तमं काव्यम् ।

**भेदौ ध्वनेरपि द्वावुदीरितौ लक्षणाऽभिधामूलौ ।**
**अविवक्षितवाच्योऽन्यो विवक्षितान्यपरवाच्यश्च ॥२५५॥(ग)**

ध्वनिशब्देनोक्ताः । यदाह भगवान् भर्तृहरिः,—"यः संयोगवियोगाभ्यां करणैरुपजायते । स स्फोटः शब्दजः शब्दो ध्वनिरित्युच्यते बुधैः ॥" इति । एवं घण्टाऽऽदिनिर्ह्रादस्थानीयोऽनुरणनात्मोपलक्षितो व्यङ्ग्योऽप्यर्थो ध्वनिरिति व्यवहृतः । इत्येष प्रकारोऽव्यक्तशब्दानामेव वर्त्तते । व्यक्तशब्दानां तथा श्रूयमाणा ये वर्णा नादशब्दवाच्या अन्त्यबुद्धिनिर्ग्राह्याः स्फोटाभिव्यञ्जकास्ते ध्वनिशब्देनोक्ताः । यदाह भगवान् स एव,—"प्रत्ययैरनुपाख्येयैर्ग्रहणानुग्रहैस्तथा । ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ॥" इति । तेन व्यञ्जकौ शब्दार्थावपीह ध्वनिशब्देनोक्तौ । किञ्च वर्णेषु तावन्मात्रपरिमाणेष्वपि सत्सु । यथोक्तम्,—"अल्पीयसाऽपि यत्नेन शब्दमुच्चारितं मतिः । यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटम् ॥" इति । तेषु तावत्स्वेषु श्रूयमाणेषु वक्तुर्योऽन्यो द्रुतविलम्बितादिवृत्तिभेदात्मा प्रसिद्धादुच्चारणादिव्यापारादभिव्यक्तः, स ध्वनिरुक्तः । यदाह स एव,—"शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदास्तु वैकृताः । ध्वनयः समुपोहन्ते स्फोटात्मा नैव भिद्यते ॥" इति । इदमभिहितम् ;—घटः, पटः इत्यादिसमुदितस्वरूपैः क्षणावस्थानैः पदैर्नित्यः स्फोटात्मा शब्दः प्रतिपद्यते, एतेन प्रतिपन्नेन च अर्थः प्रतिपद्यते इति तथाभूतस्य प्रधानतयाऽवस्थितस्फोटव्यञ्जकस्य वर्णसमुदयात्मकस्य घटादिशब्दस्य ध्वनिरिति व्यपदेशो वैयाकरणानां सिद्धान्ते । अत एतदनुयायिभिरितरैरपि प्रधानतयाऽवस्थितव्यङ्ग्यव्यञ्जकत्वसाम्यादप्रधानीभूताभिधेयं यद् व्यञ्जनयाऽप्रतिपाद्यं, तत् अव्यञ्जनसहस्य शब्दार्थद्वन्द्वरूपस्योत्तमस्य काव्यस्य ध्वनिरिति व्यपदेश आयातः । अत एवाहुर्ध्वनिकाराः,—"यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ । व्यङ्ग्यः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥" इति ।

(ग) काव्यात्मभूतस्य ध्वनेर्भेदेनैव ध्वनिकाव्यप्रभेदमाह, भेदाविति ।—इह यद्यपि वस्त्वलङ्कारध्वनीनां काव्यात्मत्वं नाङ्गीकृतं, तथाऽपि रसादिप्रकर्षकत्वेनैव तेषां काव्यात्मत्वमित्यभिप्रायेण तत्साधारणं ध्वनिप्रभेदनिरूपणं प्रक्रमते इति बोध्यम् । ध्वनेरपि लक्षणाऽभिधामूलौ—लक्षणामूलोऽभिधामूलश्चेत्यर्थः, द्वौ भेदौ उदीरितौ—उक्तौ, तयोः आद्यः लक्षणामूलो ध्वनिः ; अविवक्षितवाच्यः,—न विवक्षितम्—

तत्राविवक्षितवाच्यो नाम लक्षणामूलो ध्वनिः । लक्षणामूलत्वादेव अत्र वाच्यमविवक्षितं बाधितस्वरूपम् । विवक्षितान्यपरवाच्यस्तु अभिधामूलः । अत एव अत्र वाच्यं विवक्षितम् । अन्यपरं व्यङ्ग्यनिष्ठम् । अत्र हि वाच्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थस्य प्रकाशकः ; यथा,—प्रदीपो घटस्य । अभिधामूलस्य बहुविषयतया पश्चान्निर्देशः । (घ)

अविवक्षितवाच्यस्य भेदावाह,—

**अर्थान्तरं सङ्क्रमिते वाच्येऽत्यन्तं तिरस्कृते ।**
**अविवक्षितवाच्योऽपि ध्वनिर्द्वैविध्यमृच्छति ॥२५६॥(ङ)**

उपयुक्तम्, अन्वयार्हं वा, वाच्यं—वाच्योऽर्थः यत्र तथोक्तः, अन्यः,—द्वितीयः, अभिधामूलो ध्वनिरिति यावत्, विवक्षितान्यपरवाच्यः,—विवक्षितं—वाच्यतावच्छेदकरूपेणान्वयबोधकः, तस्मात् अन्यपरं—व्यङ्ग्यपरं, व्यङ्ग्योपसर्जनीभूतं वा, वाच्यं—वाच्योऽर्थो यत्र तथाविध इति भावः ।

(घ) अविवक्षितवाच्यत्वे हेतुमाह, लक्षणेति ।—लक्षणामूलत्वात्—लक्षणामूलं यस्य तस्य भावः तत्त्वं, तस्मात् तथोक्तात्, मुख्यार्थबाधविषयिणी वृत्तिर्हि लक्षणा तन्मूलत्वात्, अत्र वाच्यस्य बाधितत्वम् (अविवक्षितत्वम् ) इति भावः । अभिधामूलः,—अभिधामाश्रित्याविर्भूतः, ध्वनिरित्यनुषज्यते । अत एव अभिधामूलत्वादेव इत्यर्थः । वाच्यार्थस्य व्यङ्ग्यपरत्वमुपपादयति, अत्र हीति ।—अत्र—विवक्षितान्यपरवाच्ये ध्वनौ, हि—यतः, स्वरूपं प्रकाशयन्—स्वरूपेण अवस्थितः सन्, प्रकाशकः,—प्रत्यायकः । ( वाच्यार्थस्य स्वोपस्थितिद्वारा शाब्दबोधं प्रति कारणत्वमित्यभिप्रायेणेदम् ) । निदर्शनमाह, यथेति ।—यथा प्रदीपः घटस्य, एतदुपलक्षणं, तेन घटपटादेरित्यर्थः, स्वरूपेण स्वयं प्रदीप्यमानः सन् अन्यमपि स्वरूपेण सन्तं प्रदीपयति, तथेति भावः । लक्षणामूलध्वनेः अल्पविषयत्वात् सूचीकटाहन्यायेन प्रथमनिर्द्देशः, तदन्यस्य पश्चादित्यवधेयम् । अन्यत् स्पष्टम् ।

(ङ) अर्थान्तरमिति ।—अविवक्षितवाच्योऽपि—लक्षणमूलोऽपि, ध्वनिः, वाच्ये—मुख्येऽर्थे, अर्थान्तरम्—उपयोगिलक्ष्यतावच्छेदकं, सङ्क्रमिते—आश्रितत्वेन प्रस्थिते, अथवा अत्यन्तं—सर्व्वथा, तिरस्कृते—न केनापि रूपेण अन्वयं प्रविष्टे सति, द्वैविध्यम्, ऋच्छति—प्राप्नोति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अविवक्षितवाच्यो नाम ध्वनिरर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः। यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः स्वविशेषरूपेऽर्थान्तरे परिणमति, तत्र मुख्यार्थस्य स्वविशेषरूपार्थान्तरसङ्क्रमितत्वादर्थान्तरसङ्क्रमितवाच्यत्वम्। (च)

यथा,—

"कदली कदली, करभः करभः,
करिराजकरः करिराजकरः।
भुवनत्रितयेऽपि बिभर्त्ति तुला-
मिदमूरुयुगं न चमूरुदृशः॥" (छ)

---

(च) अविवक्षितवाच्य इति।—यत्र—प्रकृतान्वये, मुख्यः,—वाच्यः, अर्थः, स्वयं—साक्षात्,मुख्यताऽवच्छेदकरूपेणेति यावत्, अनुपयुज्यमानः,—उपयुक्ततामप्राप्नुवन् सन्, स्वविशेषरूपे—स्वप्रकारभूते, अर्थान्तरे—स्वकीयमुख्यताऽवच्छेदकव्याप्यधर्मे, परिणमति—विशेष्यतया भासते, तत्र—निरुक्तस्वरूपे वाक्ये, मुख्यार्थस्य—वाच्यार्थस्य, स्वस्वरूपेण प्रकृतान्वयेऽनुपयुज्यमानस्याभिधया प्रतिपाद्यस्य अर्थस्येति यावत्, स्वविशेषरूपार्थान्तरसंक्रमितत्वात्—स्वविशेषरूपं यदर्थान्तरं तत्र सङ्क्रमितत्वात्—विशेष्यतया भासमानत्वात्, [एतेन मुख्यार्थस्य मुख्यताऽवच्छेदकरूपेण प्रकृतान्वयानुपयोगित्वं बाधः, तस्यैव विशेषणान्तररूपेण बोधः इति इयमुपादानलक्षणा इति सूचितम्]।

(छ) उदाहरति, कदलीति।—कदली—रम्भाकाण्डः, कदली—अतिशीतेति भावः, करभः,—आमणिबन्धात् कनिष्ठाऽन्तो हस्तस्य बाह्यभागः, ("मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः) करभः,—अतिकृश इति भावः, करिराजकरः,—हस्तिशुण्डादण्डः, करिराजकरः,—अतिकर्कश इति भावः, अस्मात् कारणात्, चमूरुः,—मृगविशेषः, तस्येव दृशौ यस्यास्तथाभूतायाः, चमूरु(मृग)नयनसदृशनयनायाः, कान्तायाः इति शेषः, इदम् ऊरुयुगम्—ऊर्व्वोः,—जानूपरिभागयोः, युगं—द्वयं, भुवनत्रितये—त्रिषु लोकेषु, अपि किं पुनरेकस्मिन् द्वयोर्वा भुवनयोरिति भावः, तुलां—सादृश्यं, न बिभर्त्ति। अयं भावः,—ऊर्व्वोः घटादौ सादृश्यं सर्वथा न सम्भवत्येव, यत्र तु कदल्यादौ सादृश्यं सम्भाव्यते, तदतिशैत्यादिनाऽपकृष्टमिति स्पष्टं तस्मात् ऊर्व्वोः सादृश्यं न कुत्रापि। एवञ्च अत्र व्यतिरेकालङ्कारः। प्रसन्नराघवस्येदं पद्यम्। तोटकं वृत्तम्;—"वद तोटकमब्धिसकारयुतम्" इति तल्लक्षणात्।

अत्र द्वितीयकदल्यादिशब्दाः पौनरुक्त्यभिया सामान्य-कदल्यादिरूपे मुख्यार्थे बाधिता जाड्यादिगुणविशिष्टकदल्यादि-रूपमर्थं बोधयन्ति; जाड्याद्यतिशयश्च व्यङ्ग्यः। यत्र पुनः स्वार्थं सर्वथा परित्यजन् अर्थान्तरे परिणमति, तत्र मुख्यार्थस्य अत्यन्ततिरस्कृतत्वादत्यन्ततिरस्कृतवाच्यत्वम्। (ञ)

यथा,—

"निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते"।(झ)

(ञ) ननु कदल्यादिपदानामतिशीताद्यर्थः कुतः प्रतिपद्यते, तस्य केनाप्य-सङ्केतितत्वात्, इति चेत्? तत्राह, अत्रेति।—उदाहृते पद्ये इत्यर्थः, द्वितीय-कदल्यादिशब्दाः,—द्वितीयाः,—द्वितीयवारं पठिताः, येषामतिशीताद्यर्थाः प्रतिपाद्याः तादृशा इति भावः, ये कदल्यादयः शब्दाः, जाड्यादिः,—जाड्यं—शैत्यं, तदादिः, शैत्यकृशत्वकर्कशत्वरूप इति भावः, यो गुणः, तेन विशिष्टः,—विशेषितः, तादृशं, कद-ल्यादिरूपम् अर्थम्, बोधयन्ति—उपचारात् लक्षयन्ति। यद्यपि शैत्यादिः जलादावेव, तथाऽपि तस्य परम्परया कदल्यादिवृत्तित्वमवगन्तव्यम्। न च शैत्यादीनामन्यत्रापि सत्त्वात् कथं कदल्यादिव्याप्यत्वम्? इति वाच्यं, शैत्यादिविशेषस्यैवात्र विव-क्षितत्वात्। जाड्याद्यतिशयः,—शैत्याद्यतिशयः, व्यङ्ग्यः,—प्रयोजनमूलायाः लक्षणायाः बोधविषयः। सर्व्वत्रैव मुख्यार्थस्याभेदः सम्बन्धः। एवञ्च कदल्यतिशीता, करभोऽति-कृशः, करिराजकरः अतिकर्कशः, इति चमूरुदृशः इदमूरुयुगम् असदृशमित्याशयः। एवमर्थान्तरसंक्रमितवाच्यध्वनिभेदमभिधाय अत्यन्ततिरस्कृतवाच्यरूपं ध्वनिभेदमाह, यत्रेति।—यत्र पुनः, शब्द इति शेषः, स्वार्थं—स्वस्मिन् सङ्केतितमर्थमित्यर्थः, सर्व्वथा परित्यजन्—गौणरूपेणापि अप्रतिपादयन्नित्यर्थः, अर्थान्तरे—मुख्यार्थभिन्ने, परिणमति —लक्षणया वर्त्तते, तत्र मुख्यार्थस्य, अत्यन्ततिरस्कृतत्वात्—सर्वथा बाध्यत्वात्, अत्यन्त-तिरस्कृतवाच्यत्वम्—अत्यन्तं तिरस्कृतः,—अगृहीतसम्पर्कः, वाच्यः,—मुख्यार्थो यत्र तस्य भावः तत्त्वम् इत्यर्थः।

(झ) निश्वासान्ध इति।—निश्वासेन—मुखनासाभ्यां निर्गतेन वायुना, अन्धः, —नष्टविकाश इति तादृशः, आदर्शः,—दर्पणः, ("आदर्शो दर्पणे टीकाप्रतिपुस्तकयो-रपि" इति मेदिनी) इव चन्द्रमाः न प्रकाशते। अस्य च पूर्वार्द्धम्—"रविसङ्क्रान्त-सौभाग्यस्तुषारावृतमण्डलः" इति। एतच्च वाल्मीकीयस्य रामायणस्य पद्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्रान्धशब्दो मुख्यार्थे बाधितोऽप्रकाशरूपमर्थं बोधयति; अप्रकाशातिशयश्च व्यङ्ग्यः। अन्धत्वाप्रकाशत्वयोः सामान्यविशेषभावाभावात् नार्थान्तरसङ्क्रमितवाच्यत्वम्। (ञ)

यथा,—

"भम धम्मिअ! वीसत्थो सो सुणहो अज्ज मारिओ देण।
गोलावरीकच्छकुंजवासिणा दरीअसीहेण॥" (ट)

---

(ञ) अत्रेति।—अन्धशब्दः, मुख्यार्थे—चक्षुष्मत्ताविहीनरूपेऽर्थे, बाधितः,—स्वरूपेणानुपतिष्ठन्, अप्रकाशरूपं—बिम्बोपादानशक्तिशून्यरूपम्, अर्थं, बोधयति—प्रतिपादयति। ननु तर्हि अप्रकाशशब्द एव कथं नोपात्तः? इत्याह, अप्रकाशेति।—अप्रकाशस्यातिशयः इत्यर्थः, च व्यङ्ग्यः,—प्रयोजनमूलायाः लक्षणायाः प्रयोजनरूपोऽर्थः, अन्धत्वाप्रकाशत्वयोः,—अन्धत्वं—चक्षुष्मत्ताराहित्यम्, अप्रकाशत्वं—चाकचक्यरहितत्वम्, अनुज्ज्वलत्वमित्यर्थः; (अत्र चाक्षुषज्ञानाऽजनकत्वरूपैकधर्मवत्त्वं मुख्यलक्ष्ययोः सम्बन्धः) तयोः, सामान्यविशेषभावाभावात्—व्यापकव्याप्यत्वभावाभावादित्यर्थः। तथाहि—मुख्यार्थताऽवच्छेदकलक्ष्यार्थावच्छेदकयोः सामान्यविशेषभावाभावे एवार्थान्तरसंक्रमितवाच्यत्वं भवति। यथा—"त्वामस्मि वच्मि—" इत्यादौ। न च "यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा। अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति॥" इत्यादौ काव्यप्रकाशकारदत्तोदाहरणे मित्रत्वादीनां मुख्यताऽवच्छेदकानां लक्ष्यताऽवच्छेदकैराश्वस्तत्वनियन्त्रणीयत्वस्नेहपात्रत्वैः सह सामान्यविशेषभावाभावात् कथमुक्तनियमः? इति वाच्यम्, आश्वस्तत्वादिविशिष्टस्यैवात्र विवक्षितत्वात्।

(ट) ननु "भम धम्मिअ"—इत्यादौ विपरीतलक्षणाऽसत्त्वे नात्यन्ततिरस्कृतवाच्यध्वनेरिदमुदाहरणं भवितुमर्हति इति विप्रतिपद्यमानं प्रत्याह,—भम इति।—["भ्रम धार्मिक! विश्वस्तः स श्वाऽद्य मारितस्तेन। गोदावरीकच्छकुञ्जवासिना दृप्तसिंहेन"॥ इति संस्कृतम्]। आश्रमवर्त्तिन्याः कस्याश्चित् व्यभिचारिण्या गोदावरीकुञ्जरूपे सङ्केतस्थाने प्रत्यहं पुष्पचयनेन क्रियमाणे सङ्केतभङ्गे स्वमनोरथभङ्गकारिणं स्वप्रेरितकुक्कुरोपद्रवेण अपि अनिवृत्तं कमपि धार्मिकं प्रति तस्या एव दिनान्तरे उक्तिरियम्। हे धार्मिक! विश्वस्तः,—निःशङ्कः सन्, भ्रम—पुष्पचयनार्थं पर्य्यट, अद्य स श्वा—कुक्कुरः, यस्त्वां प्रति प्रत्यहमुपद्रवतीति भावः, गोदवर्य्याः कच्छः,—तीरं, ("परिधानाञ्चले कच्छो जलप्रान्ते त्रिलिङ्गके" इत्यमरः) तत्र यः कुञ्जः,—लताऽऽदिपिहितं स्थानं, तत्र वासिना, तेन—प्रसिद्धेन, दृप्तसिंहेन—प्रचण्डकेशरिणा, मारितः,—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र "भ्रम धार्मिक" इत्यतो भ्रमणस्य विधिः प्रकृतेऽनुपयुज्यमानतया भ्रमणनिषेधे पर्य्यवस्यतीति विपरीतलक्षणाऽऽशङ्का न कार्य्या। यत्र खलु विधिनिषेधावुत्पद्यमानावेव निषेधविध्योः पर्य्यवस्यतः, तत्रैव तदवसरः; यत्र पुनः प्रकरणादिपर्य्यालोचनेन विधिनिषेधयोर्निषेधविधी अवगम्येते, तत्र ध्वनित्वमेव। (ठ) तदुक्तम्;—

"क्वचिद् बाध्यतया ख्यातिः क्वचित् ख्यातस्य बाधनम्।
पूर्वत्र लक्षणैव स्यादुत्तरत्राभिधैव तु" ॥ (ड)

---

निहतः। गाथासप्तशत्याः पद्यमिदम्। अत्र आर्य्याऽपरपर्य्याया गाथा नाम छन्दः।

(ठ) अत्रेति।—धार्म्मिक भ्रम, इत्यतः,—इत्यनेन कथनेन, भ्रमणस्य—पर्य्यटनस्य, विधिः,—विधानं, तदर्थाभ्यनुज्ञानमित्यर्थः, प्रकृते—कुलटायाः तात्पर्य्यविषयीभूते स्वैरविहारे इत्यर्थः, न उपयुज्यत इति, तत्तया—तद्रूपेण हेतुना, भ्रमणनिषेधे—भ्रमणं न कार्य्यमित्यभिधाने, पर्य्यवस्यति—परिणमति, इति—अस्मात् हेतोः, विपरीतलक्षणाऽऽशङ्का—विपरीता—विरुद्धार्थप्रतिपादिका, या लक्षणा तस्याः आशङ्का—सम्भावनं, न कार्य्या। ननु तर्हि कस्तस्या विषयः? इत्याशङ्क्याह, यत्रेति।—यत्र—यस्मिन् वाक्ये, खलु उत्पद्यमानौ—उत्पत्तिं गच्छन्तौ, एव विधिनिषेधौ निषेधविध्योः पर्य्यवस्यतः,—परिणमतः, विधिवाक्यं श्रूयमाणमेव निषेधं, निषेधवाक्यं श्रूयमाणमेव पुनः विधिं बोधयतीत्यर्थः, ["उत्पद्यमानौ" इत्यत्र "उत्पत्स्यमानौ" इति पाठे—अन्वयबोधात्प्राक् उत्पत्स्यमानान्वयबोधौ इत्यर्थः] तत्रैव—तथाविधे एव स्थले इत्यर्थः, तदवसरः,—विपरीतलक्षणायाः अवसरः। यत्र—"भ्रम धार्म्मिक" इत्यादौ पुनः, प्रकरणादीनां पर्य्यालोचनेन विधौ निषेधे च क्रमात् निषेधो विधिश्च अवगम्येते—प्रतीयेते, तत्र, ध्वनित्वम्—अभिधामूलध्वनित्वमित्यर्थः, एवं चात्र लक्षणामूलध्वनेरवसरो नास्त्येवेति भावः।

(ड) क्वचिदिति।—क्वचित् बाध्यतया—अनुपपन्नतया, विपरीतार्थे पर्य्यवसन्नतया इत्यर्थः, ख्यातिः,—आपातमात्रेण अन्वयबोधः, क्वचित् ख्यातस्य—उपपन्नतया प्रतीतस्य, अन्वयबोधविषयीभूतस्येति यावत्, बाधनं—बाधोदयाद्विपरीतार्थपर्य्यवसानमित्यर्थः, पूर्व्वत्र—यत्र बाध्यतया ख्यातिस्तत्र, लक्षणा—लक्षणामूलो ध्वनिः, एव, उत्तरत्र—ख्यातस्य बाधनस्थले इत्यर्थः, अभिधैव—अभिधामूलध्वनिरेव इत्यर्थः, स्यात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्राद्ये मुख्यार्थस्य अर्थान्तरे सङ्क्रमणं प्रवेशः, न तु तिरोभावः ; अत एव अत्र अजहत्स्वार्थलक्षणा। द्वितीये तु स्वार्थस्यात्यन्तं तिरस्कृतत्वात् जहत्स्वार्था। (ढ)

**विवक्षिताभिधेयोऽपि द्विभेदः प्रथमं मतः।**
**असंलक्ष्यक्रमो यत्र व्यङ्ग्यो लक्ष्यक्रमस्तथा॥२५७॥(ण)**

विवक्षितान्यपरवाच्योऽपि ध्वनिरसंलक्ष्यक्रमव्यङ्ग्यः, संलक्ष्यक्रमव्यङ्ग्यश्च इति द्विविधः।

**तत्राद्यो रसभावादिरेक एवात्र गण्यते।**
**एकोऽपि भेदोऽनन्तत्वात् सङ्ख्येयस्तस्य नैव यत्॥२५८॥(त)**

---

(ढ) अत्रेति।—अत्र—अनयोर्मध्ये, आद्ये—अर्थान्तरसंक्रमितवाच्ये लक्षणामूलध्वनौ इति यावत्, द्वितीये—अत्यन्ततिरस्कृतवाच्ये, जहत्स्वार्था, लक्षणेत्यनुषज्यते।

(ण) विवक्षितेति।—विवक्षितं—वक्तुमिष्टम्, अबाधितस्वरूपमित्यर्थः, अभिधेयं—वाच्यं, यत्र तादृशः, ध्वनिरिति शेषः, अपि प्रथमं द्विभेदः,—द्विप्रकारः, मतः, पश्चादस्यापरे भेदाः वक्तव्याः इति भावः। तावेव निर्दिशति, असंलक्ष्येति।—यत्र—यस्मिन् ध्वनौ, व्यङ्ग्यः,—व्यञ्जनाबोध्योऽर्थः, असंलक्ष्यक्रमः,—न सं—सम्यक्, लक्ष्यः,—लक्षयितुं शक्यः, इत्यसंलक्ष्यः, क्रमः,—पौर्व्वापर्य्यं, यस्य तादृशः, सः असंलक्ष्यक्रमव्यङ्ग्यः इत्यर्थः ; तथा यत्र व्यङ्ग्यः लक्ष्यक्रमः, स संलक्ष्यक्रमव्यङ्ग्यः इत्यर्थः। यत्रे हि तावत् प्रस्तावे झटिति ज्ञातेषु विभावादिषु काव्यार्थभावनास्वतन्त्रेण प्रमात्रा अल्पीयसा समयेन योऽर्थः ज्ञायते, तत्र हेतुहेतुमद्भावयोः पूर्व्वापरभावक्रमस्य असंलक्षणाद्धेतोः असंलक्ष्यक्रमव्यङ्ग्यः कथ्यते। यत्र हि विचारबोध्यः प्रस्तावः, विचारणीया वा विभावादयः, तत्र चमत्कारस्य साधनसामग्रीप्रतीक्षणोन्मुखकालायत्ततया मन्थरा प्रवृत्तिः, इति तथाविधस्य चमत्कारस्य संलक्ष्यक्रमव्यङ्ग्य इति व्यपदेशो बोध्यः।

(त) तत्रेति।—तत्र—तयोर्मध्ये, आद्यः,—असंलक्ष्यक्रमव्यङ्ग्य इत्यर्थः, रसभावादिः, [ आदिना रसाभासादिग्रहणम् ] एक एव—एकविध एव, अत्र—काव्यप्रभेदगणनाऽवसरे, गण्यते ; एकप्रकारत्वे हेतुमाह, एक इति।—यत्—यस्मात्, तस्य—व्यङ्ग्यस्य, एकोऽपि भेदः,—विशेषः, अनन्तत्वात्—अतिबाहुल्यात्, नैव, संङ्ख्येयः,—सङ्ख्यातुं शक्य इत्यर्थः। एतदीयस्यैकस्य प्रभेदस्यापि अवान्तरभेदप्रभेदावतारानन्-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उक्तस्वरूपो रसभावादिरसंलक्ष्यक्रमव्यङ्ग्यः। अत्र व्यङ्ग्यप्रतीतेर्विभावादिप्रतीतिकारणकत्वात् क्रमोऽवश्यमस्ति, किन्तु उत्पलपत्रशतव्यतिभेदवल्लाघवान्न संलक्ष्यते। एषु रसादिषु च एकस्यापि भेदस्यानन्तत्वात् सङ्ख्यातुमशक्यत्वादसंलक्ष्यक्रमव्यङ्ग्यध्वनिर्नाम काव्यमेकभेदमेवोक्तम्। तथाहि,—एकस्यैव हि शृङ्गारस्य एकोऽपि सम्भोगरूपो भेदः परस्परालिङ्गनाधरपानचुम्बनादिभेदात् प्रत्येकञ्च विभावादिवैचित्र्यात् सङ्ख्यातुमशक्यः, का गणनाऽत्र सर्वेषाम्? (थ)

**शब्दार्थोभयशक्त्युत्थे व्यङ्ग्येऽनुस्वानसन्निभे।**
**ध्वनिर्लक्ष्यक्रमव्यङ्ग्यस्त्रिविधः कथितो बुधैः॥२५६॥(द)**

---

तथा बालानां बोधसौकर्य्याय सर्व्वभेदप्रभेदमूलभूत एक एवाद्यः प्रभेदोऽभिमन्यते इति भावः।

(थ) अत्र तावद्व्यङ्ग्यस्यासंलक्ष्यक्रमत्वं समर्थयते, अत्रेति।—व्यङ्ग्यस्य असंलक्ष्यक्रमत्वेनाभिमतस्य व्यङ्ग्यार्थस्य, या प्रतीतिः,—स्वरूपेण सत्त्वं,तस्याः,विभावादीनां प्रतीतिः,—बोधः, कारणं यस्य तत्त्वात्, विभावादिप्रतीतिमात्रावष्टम्भनत्वादिति यावत्, विभावादिप्रतीतेश्च क्रमेण (विभावप्रतीत्यनन्तरमनुभावप्रतीतिरनुभावप्रतीत्यनन्तरञ्च सञ्चारिप्रतीतिरित्येवं पौर्व्वापर्य्येण) सम्पद्यमानत्वादिति भावः। क्रमः,—पौर्व्वापर्य्यम्, अवश्यम् अस्ति, किन्तु, उत्पलपत्रशतस्य—कमलपत्रशतकस्य, व्यतिभेदः,—झटिति भेदनं, तद्वत् लाघवात्—रसभावादेः अतिशीघ्रजन्यत्वादित्यर्थः, न संलक्ष्यते। अयं भावः,—यद्यपि कमलस्य शतपत्राणि यदि कश्चिद्भिन्द्यात्, तर्हि नैकेन कालेन, किन्तु अनेकैः कालैः, अतएव क्रमोऽवश्यमस्ति, तथाऽपि स क्रमो यथा न लक्ष्यते, तथा विभावानुभावसञ्चारिणामानुपूर्व्व्येण प्रतीयमानत्वेऽपि न क्रमस्तत्र प्रतीयते, तेषामतिझटिति सम्मिलिततयैव प्रतीतेः, इति विभावादिप्रतीतिरसंलक्ष्यक्रमव्यङ्ग्यव्यपदेश्येति स्थितम्। इति। एषु—रसभावादिषु इत्यर्थः, अनन्तत्वात्, अत एव सङ्ख्यातुमशक्यत्वात् इति सारः। उक्तमर्थं विशेषाख्यानेन द्रढ़यति, तथाहीति।—विभावादीनां वैचित्र्यात्—वैलक्षण्यात्। स्पष्टमन्यत्।

(द) लक्ष्यक्रमव्यङ्ग्यध्वनिमाह, शब्देति।—अनुस्वानः,—अनुरणनं, प्रति-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ध्वनिरिति यावत्, (तस्य खलु जनकीभूतशब्दोत्तरजायमानत्वरूपक्रमो लक्ष्यते)। तत्सन्निभे—तदनुरूपे,व्यङ्ग्ये, शब्दार्थोभयशक्त्युत्थे—शब्दस्यार्थस्य तदुभयस्य च शक्तेरुत्तिष्ठति—आविर्भवति, यत् तस्मिन्, शब्दशक्त्या उत्थिते, अर्थशक्त्या उत्थिते, शब्दार्थोभयशक्त्या च उत्थिते सति इत्यर्थः, लक्ष्यक्रमव्यङ्ग्यः ध्वनिः, बुधैः,—विद्वद्भिः, विविधः,—शब्दशक्त्युत्थः अर्थशक्त्युत्थः शब्दार्थोभयशक्त्युत्थश्चेति त्रिप्रकारः, कथितः। (इदमत्रावधेयम् ;—ननु यदि शब्दनिष्ठया शक्त्या प्रतीयमानो यत्रेतरोऽर्थो ध्वनेः विशेषोऽभिमन्येत, तर्हि शब्दनिष्ठया शक्त्याऽर्थान्तररूपः श्लेषो विलुप्तस्वरूप एव भवेत्, इति चेत् एवा व्यवस्था,—यत्र शब्दनिष्ठया शक्त्या साक्षादनुत्थापितः, किन्तु आक्षिप्तः सन् प्रतीयेत, स सर्वो ध्वनेर्विषयः, यस्तु तया साक्षादुत्थापितात्मा, स सर्वः श्लेषस्य विषय इति। तथाऽऽहुर्ध्वनिकाराः,—"आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते। यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः॥" इति। अलङ्कारो वस्तु चेत्युभयं यत्र प्रकाशते, स शब्दशक्त्युत्थो ध्वनिः, यत्र तु द्वे वस्तुनी प्रकाशेते स श्लेषः, यथोदाहृते "येन ध्वस्तमनोभवेन" इत्यादौ। अत्र हि माधवीमाधवस्वरूपवर्णनरूपे द्वे वस्तुनी प्रकरणादेरनियन्त्रिततया तद्वैशिष्ट्येन प्रतिभावतां प्रतिभापथं गाहेते, यद्यपि भट्टोद्भटेन अलङ्कारान्तरप्रतीतावपि श्लेषोऽङ्गीकृतः, यथा,—"तस्या विनाऽपि हारेण निसर्गादेव हारिणौ। जनयामासतुः कस्य विस्मयं न पयोधरौ ?॥" इत्यादौ अलङ्कारो विरोधः, तदन्यश्च शृङ्गारसञ्चारी विस्मयः प्रकाशते इति अलङ्कारान्तरस्य विस्मयस्य प्रतीतेः विरोधानुगतः श्लेषः ; न तु अत्र लक्ष्यक्रमव्यङ्ग्यो ध्वनिः ; अथापि यत्र आक्षिप्ता नालङ्कारान्तरप्रतीतिः तत्रैव स्यात्, किन्तु यत्र सामर्थ्यादाक्षिप्तं सत् शब्दशक्त्या अलङ्कारान्तरं प्रतिभासते,स सर्व्व एव ध्वनेर्विषयः। तथा हि,—"कदाचित् कुसुमसमयमुपसंहरन्नजृम्भत ग्रीष्माभिधानः सम्फुल्लमल्लिका धवलाट्टहासो महाकालः" इत्यादौ हर्षचरिते ऋतुवर्णनप्रकरणवैशिष्ट्येन अभिधायां नियन्त्रितायाम् "अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी" इति नयमुत्सृजत्सु महाकालादिषु शब्देषु स्वस्वार्थं बोधयित्वा च विरतेषु अपि सहृदयहृदये भासते यः कोऽप्यर्थः, स शब्दशक्त्याऽऽक्षिप्त इति शब्दशक्त्युत्थ इति स्वीकार्य्यम्। इति। अत्रैके—"अनेकार्थानां शब्दानां प्रकरणादिवैशिष्ट्येन अर्थान्तरेषु नियन्त्रितेषु एक एवार्थोऽभिधया प्रतिपादयितुं शक्यते, तदनन्तरं भासमानः कोऽप्यर्थः शब्दशक्त्युत्थः, एवं सति शब्दशक्तिमूलत्व व्यङ्ग्यत्वयोरविरोधः" इत्याहुः ; अपरे त्वाहुः,—"ग्रीष्मादिपदानां नानाऽर्थतामवलम्ब्याभिधा क्रमपि नियन्त्रणात्तरमपि भासमानमर्थमुपकरोतीति शब्दशक्त्युत्थत्वं दुर्वारम्" इति। केचित् पुनः प्राहु,—"शब्दभेदे शाब्दः श्लेषः, शब्दार्थश्लेषे च शक्तिभेदेन शब्दभेदोऽप्यङ्गीकर्त्तव्यः, यत्र तु शब्दार्थशक्ती

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्रमलक्ष्यत्वादेवानुरणनरूपो (ध) यो व्यङ्ग्यस्तस्य शब्दशक्त्युद्भवत्वेन अर्थशक्त्युद्भवत्वेन शब्दार्थशक्त्युद्भवत्वेन च त्रैविध्यात् संलक्ष्यक्रमव्यङ्ग्यनाम्नो ध्वनेः काव्यस्यापि त्रैविध्यम्। तत्र,—

**वस्त्वलङ्काररूपत्वाच्छब्दशक्त्युद्भवो द्विधा॥२६०॥(न)**

नियन्त्रितत्वेऽपि अर्थान्तरप्रतीयमानत्वेन च शब्दभेदाङ्गीकारानौचित्यं, तत्र प्रतीयमानार्थरूपत्वम्" इति। "सम्फुल्लमल्लिकाधवलाट्टहासः" इत्यादौ सम्फुल्लमल्लिका एव धवलाट्टहासो यस्य तादृशः इत्यादिव्युत्पत्त्यनुसारेण व्याख्यानान्तरप्रतिपादनेऽभिधाऽन्तरमेवोदेति, एवं सति अर्थान्तरमभिधयैव, न तु व्यञ्जनया बोध्यम्; अथ तयोः प्राकरणिकाप्राकरणिकयोर्द्वयोरर्थयोर्या रूपणा सा प्रतीयमाना, तत्र अभिधाया असम्भवात्। अतः तथाविधायां रूपणायां शब्दशक्तिमूला व्यञ्जनैव शरणं, व्यञ्जनया विना तथाविधायाः रूपणायाः प्रतीतेरसम्भवात्। अत एवायमलङ्कारध्वनिरिति वक्तुं युक्तम्। एवंविधोदाहरणस्थलेषु अभिधया प्राकरणिके प्रथमार्थे नियन्त्रिते शब्दशक्त्या द्वितीयार्थे प्रकाशमाने सति वाक्यार्थस्यासङ्गतेः प्राकरणिकाप्राकरणिकार्थयोरुपमानोपमेयभावः अवश्यमङ्गीकार्य्यः, श्लेषस्तु "अर्थभेदे शब्दभेदः" इति शब्दद्वयमूलः, अयं पुनर्ध्वनिः नियन्त्रितानेकाप्राकरणिकार्थानां शब्दानां सामर्थ्यादाक्षिप्तत्वात् इति भिन्न एवायं श्लेषादिति दिक्।

(ध) क्रमेति।—क्रमस्य—व्यङ्ग्यप्रतीतिपौर्व्वापर्य्यस्य, लक्ष्यत्वात्—स्फुटं प्रतीयमानत्वात्, एव अनुरणनरूपः,—प्रतिध्वनितुल्यः इत्यर्थः। अन्यत् स्पष्टम्।

(न) वस्त्विति।—शब्दशक्त्युद्भवः, व्यङ्ग्य इति शेषः, वस्तुरूपत्वात्, अलङ्काररूपत्वाच्च द्विधा भवति, ततश्च शब्दशक्त्युत्थो वस्तुध्वनिः, अलङ्कारध्वनिश्चेति फलितम्। अत्रेदं बोध्यं,—यत्र यत् किमपि प्रतीयमानमलङ्कारशून्यं सत् चमत्कुरुते, तत्र तद्वस्तुध्वनिव्यपदेश्यम्; यथोदाहरिष्यमाणे "पंथिअ" इत्यादौ। यत्र पुनर्यच्चमत्कारकारणमलङ्कारप्रतीयमानत्वं भवेत्, तत्र तदलङ्कारध्वनिव्यपदेश्यम्, इति प्राचामाशयः, उक्तञ्च रसगङ्गाधरकारैः,—"अलङ्कारप्रतीतिश्चेत् स्वयं यत्र चमत्कृते। अलङ्कारध्वनिस्तत्र स्याच्चमत्कारकारणम्॥ यत्र तु स्यादलङ्कारशून्यमेव चमत्कृते। तत्र वस्तुध्वनिर्ज्ञेयो भेदस्तु पिककाकवत्॥" इति। वयन्तु उभयोश्चमत्कारकारणत्व वस्त्वलङ्कारोभयध्वनिमपि अङ्गीकुर्म्मः; काव्यस्य रसमात्रजीविततया रसस्य च "रसे सारश्चमत्कारः" इति नारायणोक्त्या "चमत्कारैकमूलं स्यात् काव्यम्" इति भरतोक्त्या च काव्याङ्गानामपि चमत्कारमात्रप्राणत्वादिति।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अलङ्कारशब्दस्य पृथगुपादानादनलङ्कारं(प) वस्तुमात्रं गृह्यते । तत्र वस्तुरूपशब्दशक्त्युद्भवो व्यङ्ग्यो यथा,—

"पंथिअ ! ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।
उण्णअ पओहरं पेक्खि ऊण जइ वससि ता वससु ॥" (फ)

अत्र सत्थरादिशब्दशक्त्या यद्युपभोगक्षमोऽसि तदाऽऽस्स्वेति वस्तु व्यज्यते । (ब)

(प) अलङ्कारेति ।—अनलङ्कारम्—अलङ्कारशून्यम् [ अलङ्कारशब्दोऽत्र धर्मपरः, तेन न विद्यते अलङ्कारः,—अलङ्कारत्वं यत्र इति बहुव्रीहिः, तत्पुरुषसमासे क्लीबत्वं न स्यात् । "शेषतत्पुरुषद्वन्द्वावन्यस्यपदलिङ्गकौ" इति अनुशासनेन पुंस्त्वप्रसक्तेः ] ।

(फ) पंथिअ इति ।—["पथिक ! नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे । उन्नतपयोधरं प्रेक्ष्य पुनर्यदि वससि तद्वस ॥" इति संस्कृतम् ] । वासार्थिनं पथिकं प्रति कस्याश्चित् स्वयंदूत्या उक्तिरियम् । हे पथिक ! अत्र प्रस्तरस्थले—पाषाणबहुले, ग्रामे मनाक्—अल्पम्, अपीति शेषः, स्रस्तरम्—आसनं, शयनीयकट इति यावत्, न अस्ति, प्रस्तरेष्वेव वयं स्वपिमः, नात्र अन्यः शय्याविधाननियम इति भावः । उन्नतपयोधरम्—उन्नतमेघं, दृष्ट्वा—अविलम्बमेव वर्षिष्यतीत्यालोच्य, यदि वससि—वासमिच्छसि, तत्—तदा, वस, नात्र पुनः कश्चिदिहावरोध इति भावः । अत्र निवासोपयुक्तं शयनीयकटादिकमत्र नास्त्येव मेघप्रतिरुद्धगतिकतया यदि वससि, तद्वस इत्यर्थः आपाततः प्रतीयते । आर्या छन्दः ।

(ब) व्यङ्ग्यमवगमयति, अत्रेति ।—सत्थरादिशब्दशक्त्या, अत्र आदिपदेन पत्थरपओहरशब्दयोर्ग्रहणम् । यदि असि [ इदमव्ययम् ] त्वं, ( सम्बोध्यः ) देशदेशान्तरसञ्चारितयोपार्जितसकलेङ्गितादिविज्ञान इति यावत्, उपभोगक्षमः,—परदारोपगमनरहस्यविज्ञतया पर्यटनश्रमानातुरतया वा प्रियतमारहितत्वेन मदनार्दितत्वेन वा रमणीलाभेच्छुकतया कामिन्या आमोदं वर्द्धयितुं शक्तो भवसि, तदा—तर्हि, आस्स्व—क्षणमुपविश, इति—एवंविधं, वस्तु व्यज्यते । अयं भावः—सत्थरशब्दः प्राकृतभाषायां शयनीयार्थः, परदारगमननिषेधपरशास्त्रार्थकश्चेति श्लिष्टः, पत्थर-(प्रस्तर)-शब्दः संस्कृतभाषायां पाषाणवाचकः, लक्षणया तत्सदृशजडार्थश्चेति श्लिष्टः, पओहर-(पयोधर)-शब्दश्चैवं प्राकृतसंस्कृतभाषयोः स्तनमेघार्थकतया श्लिष्टः, इत्येतेषां सत्थर (स्रस्तर)-पत्थर-(प्रस्तर)-पओहर-(पयोधर)-शब्दानां प्राकृतसंस्कृततदुभयभाषासु स्रस्तराद्यनेका-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अलङ्काररूपो यथा,—"दुर्गालङ्घितविग्रहः" इत्यादि। अत्र प्राकरणिकस्य उमानाममहादेवीवल्लभभानुदेवनामनृपतेर्वर्णने द्वितीयार्थसूचितमप्राकरणिकस्य पार्वतीवल्लभस्य वर्णनमसम्बद्धं मा प्रसाङ्क्षीदितीश्वरभानुदेवयोरुपमानोपमेयभावः कल्प्यते। (भ) तदत्र "उमावल्लभ उमावल्लभ इव" इत्युपमाऽलङ्कारो व्यङ्ग्यः।

यथा वा,—

"अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद ! प्रभो !।
अहितः सहितः साधुयशोभिरसतामसि॥" (म)

---

र्थकतया चात्र शयनीयं, परदारगमनदोषविचारश्च नास्ति, प्रस्तरप्रायोऽयं मूर्खप्रायोऽयञ्च देशोऽस्ति, अतो यदि पयोधरं मेघोपस्थितिं सम्भाव्य पुरो गन्तुं नेच्छसि, यदि वा स्तनमण्डलमुच्चैः स्फुरदवलोक्य तावता तयोः सौन्दर्याद्यनुमाय रिरंसुरसि, तत् यावत् सायंसमयः, यावच्च तिमिरं न प्रसरेत्, तावत् प्रमदाविरहेण प्रमदाऽन्तरविषयिणीं पर्य्युत्सुकतां निरुन्धेति स्वप्रार्थनीयं वस्तु स्वयंदूत्या कयाऽपि नायिकया कस्यचित् पान्थस्य पुरस्तात् प्रकाश्यते इति। परम्परयाऽपि शब्दशक्त्युद्भवो ध्वनिः सम्भवति, यथा,—"शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र ! यस्मै त्वम्। यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च॥" शनिः,—ग्रहविशेषः इत्यर्थः, अशनिः,—वज्रं, तमुच्चैः, निहन्ति, स उदारः,—स्वयं सम्पत्तिं प्राप्य परेभ्यः सम्प्रदानपरः, अनुदारः,—अनुमतदार इत्यर्थः; स्पष्टमन्यत्। अत्र यः शनिर्न सोऽशनिरित्येवं विरोधाभाससाहचर्य्येण शनिरशनिश्चेत्येतौ, उदारोऽनुदारश्चेत्येतौ च विरुद्धावपि त्वदनुवर्त्तनार्थमेकं कार्य्यं कुरुत इति वस्तु प्रतीयते। स्पष्टञ्चैतत् काव्यप्रकाशे इति।

(भ) अलङ्कारेति।—अलङ्काररूपः, शब्दशक्त्युत्थव्यङ्ग्य इति अनुषङ्गः। मा प्रसाङ्क्षीत्—प्रसक्तं मा भूदित्यर्थः। स्पष्टमन्यत्।

(म) शब्दशक्तिमूलमलङ्कारान्तरमाह, अमित इति।—हे प्रभो ! हे हर्षद !—हर्षं ददाति मित्रेभ्य इति तथोक्त; हर्षं द्यति—छिनत्ति, नाशयतीति यावत्, शत्रूणामिति तथोक्त ! च, मित्रहर्षदायक ! शत्रुहर्षखण्डक ! इत्यर्थः, एवं पदाभङ्गेऽपि विरोधः ["हर्षदः" इति पाठान्तरे तु तथाभूतस्त्वमित्यर्थः,] समितः,—सङ्ग्रामात्, प्राप्तैः,—लब्धैः, उत्कर्षैस्त्वम् अमितः,—अपरिमितः, असि। साधुयशोभिः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्रामित इत्यादावपिशब्दाभावाद्विरोधाभासो व्यङ्ग्यः। व्यङ्ग्यस्यालङ्कार्य्यत्वेऽपि ब्राह्मणश्रमणन्यायादलङ्कारत्वमुपचर्य्यते। (य)

**वस्तु वाऽलङ्कृतिर्वाऽपि द्विधाऽर्थः सम्भवी स्वतः।**
**कवेः प्रौढ़ोक्तिसिद्धो वा तन्निबद्धस्य चेति षट्॥**
**षड्भिस्तैर्व्यंज्यमानस्तु वस्त्वलङ्काररूपकः।**
**अर्थशक्त्युद्भवो व्यङ्ग्यो याति द्वादशभेदताम्॥२६१॥(र)**

---

—पवित्रकीर्त्तिभिः, सहितः,—युक्तस्त्वम्, असतां—दुष्टानाम्, अहितः,—शत्रुः, असि। अत्रामितस्य समितत्वमिति, अहितस्य सहितत्वमिति च आपाततो विरोधः, इति तात्पर्य्यम्।

(य) विरोधाभासस्य वाच्यत्वे पदयोः समानविभक्तिकत्वमपिचकारसत्त्वञ्चापेक्षितं, तदभावादेवात्र व्यङ्ग्यत्वमित्याह, अपिशब्दाभावादिति।—अपिशब्दस्य प्रयोगाकरणादित्यर्थः, (एतदुपलक्षणं, तेन समानविभक्तिकत्वाभावात्, चेतिनिर्द्देशाभावाच्च इत्यपि द्रष्टव्यम्)। ननु रसस्य प्रकर्षतया उपमाऽऽदेः यदा गौणत्वं, तदैवालङ्कारत्वमिति उत्तरत्र निरूपयिष्यते, अत्र तु व्यङ्ग्यत्वेनास्वाद्यतया मुख्यत्वं, तत् कथमलङ्कारत्वम्? इत्याशङ्क्याह, व्यङ्ग्यस्येति।—ब्राह्मणोऽसौ श्रमणः,—बौद्धसन्न्यासी, इति ब्राह्मणश्रमणः तस्य न्यायः,—युक्तिः, निदर्शनमिति यावत्, तस्मात्, सन्न्यासिदशायां तस्य ब्राह्मणत्वाभावेऽपि यथा दशाऽन्तरीयं ब्राह्मणत्वमादाय असौ ब्राह्मण इति व्यपदिश्यते, तथा अलङ्कारस्यात्र व्यङ्ग्यत्वेऽपि वाच्यतादशीयमलङ्कारत्वमादाय इति भावः, अलङ्कारत्वम्, उपचर्य्यते—व्यपदिश्यते।

(र) अर्थशक्त्युद्भवं व्यङ्ग्यमाह, वस्त्विति।—वस्तु वा, अलङ्कृतिः वा इत्येव द्विधा—द्विप्रकारः, अर्थः, स्वतःसम्भवी—समुचिततया बहिरपि सम्भाव्यमानसत्स्वरूपः, न हि केवलं वाग्विन्यासेन निष्पन्नात्मा, किन्तु स्वभावसिद्ध इत्यर्थः, कवेः प्रौढ़ोक्त्या सिद्धः,—बहिरवर्त्तमानोऽपि कवयितृप्रतिभायोगेन तथा निरूपितः ["अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि" इति नयादिति बोध्यम्] तथा तन्निबद्धस्य—कविनिबद्धस्य जनस्य, कविवर्णितस्य वक्तुः इत्यर्थः, च प्रौढ़ोक्तिसिद्धः, इति षट्प्रकारो भवति। तैः षड्भिः, व्यज्यमानः,—प्रतीयमानः, अर्थशक्त्या उद्भवः व्यङ्ग्यः, तु—पुनः, वस्त्वलङ्कार-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्वतःसम्भवी औचित्याद् वहिरपि सम्भाव्यमानः। प्रौढ़ोक्त्या सिद्धः, (ल) न तु औचित्येन। तत्र क्रमेण यथा,—

"दृष्टिं हे प्रतिवेशिनि! क्षणमिहाप्यस्मद्गृहे दास्यसि,
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति।
एकाकिन्यपि यामि सत्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः॥" (व)

रूपकः,—वस्तुरूपो वा अलङ्काररूपो वा इत्यर्थः, द्वादशभेदतां, याति—प्राप्नोति। तथा हि, स्वतःसम्भवी, कविप्रौढ़ोक्तिसिद्धः, कविवर्णितनायकादि-(कथयित्)-प्रौढ़ोक्तिसिद्धः, इति भेदेन त्रिप्रकारः; पुनः वस्तुमात्रालङ्कृतिरूपाभ्यां द्विधा भिन्नः षट्प्रकारः, षट्प्रकाराणां प्रत्येकं वस्तुव्यङ्ग्यालङ्कृतिव्यङ्ग्यभेदाभ्यां भिन्नत्वे द्वादशभेदाः इति सारः। ततश्च स्वतःसम्भविना वस्तुना व्यज्यमानो वस्तुरूपव्यङ्ग्य इत्येकः, स्वतःसम्भविना वस्तुना व्यज्यमानो अलङ्काररूपव्यङ्ग्य इति द्वितीयः, स्वतःसम्भविना अलङ्कारेण व्यज्यमानो वस्तुरूपव्यङ्ग्य इति तृतीयः, स्वतःसम्भविना अलङ्कारेण व्यज्यमानोऽलङ्काररूपव्यङ्ग्य इति चतुर्थः, कविप्रौढ़ोक्तिसिद्धेन वस्तुना व्यज्यमानो वस्तुरूपव्यङ्ग्य इति पञ्चमः, कविप्रौढ़ोक्तिसिद्धेन वस्तुना व्यज्यमानः अलङ्काररूपव्यङ्ग्य इति षष्ठः, कविप्रौढ़ोक्तिसिद्धेन अलङ्कारेण व्यज्यमानो वस्तुरूपव्यङ्ग्य इति सप्तमः, कविप्रौढ़ोक्तिसिद्धेन अलङ्कारेण अलङ्काररूपव्यङ्ग्य इति अष्टमः, कविनिबद्धव्यक्तिप्रौढ़ोक्तिसिद्धेन वस्तुना व्यज्यमानो वस्तुरूपव्यङ्ग्य इति नवमः, कविनिबद्धव्यक्तिप्रौढ़ोक्तिसिद्धेन वस्तुना व्यज्यमानोऽलङ्काररूपव्यङ्ग्य इति दशमः, कविनिबद्धव्यक्तिप्रौढ़ोक्तिसिद्धेन अलङ्कारेण व्यज्यमानो वस्तुरूपव्यङ्ग्य इति एकादशः, कविनिबद्धव्यक्तिप्रौढ़ोक्तिसिद्धेन अलङ्कारेण व्यज्यमानोऽलङ्काररूपव्यङ्ग्यः द्वादश इति फलितम्।

(ल) स्वतःसम्भविपदार्थं व्याचष्टे, स्वत इति।—औचित्यात्—याथार्थ्यात्, वहिरपि, सम्भाव्यमानः,—तादृशशब्दातिरिक्तप्रमाणेनाऽपि प्रतीयमानः, रूपकाऽलङ्कारे रूप्यरूपकयोरभेदस्यालीकत्वेऽपि तयोः सादृश्यस्यापि लोकप्रसिद्धत्वे स्वतःसम्भवित्वम्; अत एव "अधरस्नानकमलदलम्" इति रूपकं स्वतःसम्भवितया काव्यप्रकाशे उक्तम्। "धम्मिल्ले नवमल्लिकासमुदयः" इति सादृश्याप्रसिद्धा प्रौढ़ोक्तिसिद्धं रूपकमुदाहरिष्यति। प्रौढ़ोक्तिपदार्थमाह, प्रौढ़ोक्त्येति।—प्रौढ़ोक्त्या—वर्णनमात्रेण, सिद्धः,—निष्पन्नवत्प्रतीयमान इत्यर्थः।

(व) तत्र स्वतःसम्भविवस्तुव्यङ्ग्यस्थलमाह, दृष्टिमित्यादि।—कस्याश्चित्कुलटा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अनेन स्वतःसम्भविना वस्तुमात्रेण एतत्प्रतिपादिकाया भाविपरपुरुषोपभोगजनखच्चतादि गोपनरूपं वस्तुमात्रं व्यज्यते । (अ)

"दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥" (ब)

अनेन स्वतःसम्भविना वस्तुना रवितेजसो रघुप्रतापोऽधिक इति व्यतिरेकालङ्कारो व्यज्यते । (स)

---

नायिकायाः कामपि प्रतिवेशिनीं प्रत्युक्तिरियम् । हे प्रतिवेशिनि ! मम गृहान्तिकनिवासिनि ! क्षणम्, इह, अस्मद्गृहे, अपि [ एतेन स्वगृहे च इति बोध्यते ] दृष्टिं दास्यसि, अस्य शिशोः,—बालकस्य, पिता—मद्भर्त्ता इत्यर्थः, विरसाः,—विस्वादाः, कौपीः,—कूपभवाः, अपः,—जलानि, प्रायेण—प्रायः, न तु सर्व्वदेति भावः, न पास्यति, ( अतः ) एकाकिनी अपि इतः,—अस्मात् प्रदेशात्, सत्वरं, तमालाकुलं—तमालवनवेष्टितं, स्रोतः,—नदीमित्यर्थः, यामि—गच्छामि, नीरन्ध्राः,—निविडाः, निरवकाशा इत्यर्थः, जरठच्छेदाः,—जरठः,—कठिनः, छेदः,—अग्रभागो येषां ते, नलग्रन्थयः,—नलानां—तृणविशेषाणां, ग्रन्थयः,—पर्व्वाणि, तनुं—शरीरम्, आलिखन्तु—अङ्कयन्तु, खण्डयन्तु इति यावत् ; न ततो मे काऽपि चतिरिति भावः । विदग्धाकायाः पद्यमिदम् । शार्दूलविक्रीडितं वृत्तम् ।

( अ ) व्यङ्ग्यमाह, अनेनेति ।—अनेन—वाक्यार्थेन, वाक्यार्थद्वारेति भावः, स्वतःसम्भविना—स्वभावसिद्धेन, लोकप्रसिद्धेन इति यावत्, वस्तुमात्रेण—अनलङ्कारेण वस्तुना, तद्द्वारेति यावत्, एतत्प्रतिपादिकायाः,—एतस्य वाक्यार्थस्य वक्त्र्याः, भाविपरपुरुषोपभोगजनखचतादिगोपनरूपं—भावी यः परपुरुषकर्त्तृक उपभोगः,—अधरपानादिस्तस्माज्जायते यत्तथाभूतं नखचतादि तस्य यद्गोपनम्—आच्छादनं तद्रूपं, वस्तुमात्रम्, [ मात्रपदेनालङ्कारसम्भवव्यवच्छेदः सूच्यते ] अस्या नायिकाया वैदग्ध्यादिति शेषः, व्यज्यते—ध्वन्यते ।

( ब ) स्वतःसम्भविवस्तुव्यङ्ग्यालङ्कारमाह, दिशीति ।—दक्षिणस्यां दिशि, रवेः,—सूर्य्यस्य, अपि तेजः, मन्दायते—मन्दीभवति, मृदूभवतीत्यर्थः, पाण्ड्याः,—तदाख्य क्षत्रियभेदाः, तस्यामेव—दक्षिणस्यामपि ( अत्र एवकारः अप्यर्थे ) दिशि रघोः प्रतापं—दण्डजं तेजः, ( "स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम्" इत्यमरः ) न विषेहिरे—न सोढुं शक्ता आसन् इत्यर्थः । रघुवंशस्येदं पद्यम् ।

( स ) अनेनेति ।—अनेन—निरुक्तवाक्यार्थद्वारकेण, स्वतःसम्भविना—दक्षिणा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"आपतन्तममुं दूरादूरीकृतपराक्रमः।
बलोऽवलोकयामास मातङ्गमिव केशरी॥" (छ)

अत्र उपमाऽलङ्काररूपेण स्वतःसम्भविना (क) व्यञ्जकार्थेन "बलदेवः क्षणेनैव वेणुदारिणः क्षयं करिष्यति" इति वस्तु व्यज्यते।

"गाढ़कान्तदशनक्षतव्यथासङ्कटादरिवधूजनस्य यः।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरम्॥"(ख)

यत्नेऽपि प्रभावाधिक्यवर्णनावष्टम्भेन अवश्यम्भाविनेत्यर्थः, वस्तुना—रवितेजसो मन्दीभावेनेत्यर्थः, व्यतिरेकः,—उपमानादुपमेयस्याधिक्यं, न्यूनत्वं वा, व्यज्यते—ध्वन्यते, तस्य व्यङ्ग्यत्वञ्च प्रकृतोपयोगिप्रकर्षनिकर्षयोरन्यतरस्य बोधाभिप्रायेण प्रयुक्तधर्मस्य तत्प्रकारत्वाऽसम्भवेन तद्बोधानुपपत्त्या निरुक्तधर्मव्यङ्ग्यप्रकारमुखेन तद्बोधोपपत्तौ भवति, दिशीत्यादौ पुनः रवितेजसो मार्दवयुक्तो यो निकर्षः तस्यासत्त्वप्रयुक्तरघुप्रतापगतप्रकर्षनिरूपकत्वाभावात् प्रकृतानुपयोगितया मार्दवव्यङ्ग्यसत्त्वेन प्रकृतोपयोगिनिकर्षप्रत्यायनात् व्यतिरेकस्य व्यङ्ग्यत्वं सम्पन्नमिति भावः।

(छ) स्वतःसम्भव्यलङ्कारव्यङ्ग्यवस्त्वाह, आपतन्तमिति।—ऊरीकृतः,—स्वीकृतः, पराक्रमो येन तथोक्तः, पराक्रमितुमुद्यतः इत्यर्थः, कृतयुद्धप्रतिज्ञ इति यावत्; बलः,—हलधरः, केसरी—सिंहः, मातङ्गं—गजमिव, (विपुलविक्रमत्वेन बलस्य केसरिसादृश्यं, मदान्धत्वेन वेणुदारिणः मातङ्गसादृश्यं, लोकप्रसिद्धमेव) दूरात् आपतन्तम्—अभिमुखमागच्छन्तमित्यर्थः, अमुं—वेणुदारिणं बाणात्मजम्, अवलोकयामास। शिशुपालवधस्थेदं पद्यम्।

(क) अत्रेति।—स्वतःसम्भविना—लोकप्रसिद्धेन।

(ख) स्वतःसम्भव्यलङ्कारव्यङ्ग्यमलङ्कारमाह, गाढ़ेति।—यः युधि—युद्धे, रुषा—क्रोधेन, निजाधरं निर्दशन् सन्, अरीणां—शत्रूणां, वधूजनस्य ओष्ठः एव विद्रुमः,—प्रवालं, तस्य दलानि—खण्डानि तानि, गाढ़ं यत् कान्तानां दशनक्षतं—दन्तदंशनक्षतं, तेन या व्यथा सैव सङ्कटः,—विपत्, तस्मात् अमोचयत्—मुक्तानि अकरोत्। क्रोधेन निजाधरं निर्दश्य निहते शत्रौ तद्वधूनां कान्तकर्त्तव्यः रतिकालिकः अधरदंशः निवर्त्तते इत्यर्थः। अधरदंशनेन व्यथा एव जायते, न तु तन्मोचनमित्यापाततो विरोधः, आश्रयभेदे त्वविरोध एवेति बोध्यम्। रथोद्धता वृत्तं,—"रात् परैर्नरलगै रथोद्धता" इति तल्लक्षणात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र स्वतःसम्भविना विरोधालङ्कारेण "अधरो निर्दष्टः शत्रवो व्यापादिताश्च" इति समुच्चयालङ्कारो व्यङ्ग्यः। (ग)

"सज्जेइ सुरहिमासो ण आपणेइ जुअइजणलक्खसहे।
अहिणअसहआरमुहे णवपल्लवपत्तले अणङ्गस्स सरे॥" (घ)

अत्र "वसन्तः शरकारः, कामो धन्वी, युवतयो लक्ष्यं, पुष्पाणि शराः", इति कविप्रौढोक्तिसिद्धं वस्तु प्रकाशीभवन्मदनविजृम्भणरूपं वस्तु व्यनक्ति। (ङ)

---

(ग) अत्रेति।—व्यापादिताः,—मारिता इत्यर्थः। "धुनोति चासिं तनुते च कीर्त्तिम्" इत्यादौ एकाधिकरणे चैष दृश्यते इति वक्ष्यमाणवदत्र कार्य्यकारणकालनियमविपर्य्ययरूपातिशयोक्तिमूलं क्रियायौगपद्यं समुच्चयः। निर्दष्टमिति वर्त्तमाननिर्देशात् तत्कालिकमोचनेन तद्धेतुशत्रुव्यापादनस्यापि तत्कालिकत्वलाभः। कार्य्यकारणयोः शत्रुव्यापादनाऽधरदंशनयोः समकालिकत्वं बाधितमपि आहार्य्यप्रतीतिविषय एव शीघ्रकारिताव्यञ्जनमित्यवधेयम्। अत्र समुच्चयार्थकचकाराद्यभावेन शत्रुव्यापादनक्रियया "अधरनिर्दंशनसमकाले एव शत्रवो मारिताः" इत्यर्थस्य व्यङ्ग्यत्वेन एकत्र युगपत् निर्दंशनव्यापादनक्रिययोः समावेशरूपः समुच्चयस्य व्यङ्ग्यत्वं सिद्धम्।

(घ) कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यं वस्त्वाह, सज्जेइ इति।—[ "सज्जयति सुरभिमासो न चार्पयति युवतिजनलक्ष्यसहान्। अभिनवसहकारमुखान् नवपल्लवपत्रलाननङ्गशरान्॥" इति संस्कृतम् ]। सुरभिमासः,—वसन्तमासः, युवतिजना एव लक्ष्याणि तत्सहान्—तदुपयुक्तान् [ "मुहे" इति पाठे—"मुखान्" इति सं० तत्र तन्मुखान्—तदभिमुखान्, तत्संलक्ष्य प्रेरितान् इत्यर्थः ] अभिनवः,—नवमुकुलितः, सहकारः,—अतिसौरभाम्रः ( "सहकारोऽतिसौरभः" इत्यमरः ) मुखम्—आदिर्येषां तान्, नवपल्लव एव पत्रं—पक्षः, तत् लान्ति—गृह्णन्तीति तथोक्तान्, अनङ्गशरान् सज्जयति—प्रस्तुतान् करोति, न च—नैव, अर्पयति अनङ्गायेति शेषः। एतच्च सर्व्वमलौकमित्यस्य कविप्रौढोक्तिसिद्धत्वं बोध्यम्। गाथासप्तशत्याः पद्यमिदम्। अत्र गाथा छन्दः।

(ङ) अत्रेति।—प्रकाशीभवत्—सिद्धवद्भासमानं, मदनविजृम्भणरूपं—कामस्य विशेषेण वर्द्धनरूपं, व्यनक्ति—प्रकटयति। अत्र वसन्तादीनां शरकारत्वादिकमलीकमिति सङ्क्षेपः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"रजनीषु विमलभानोः करजालेन प्रकाशितं वीर!।
धवलयति भुवनमण्डलमखिलं तव कीर्त्तिसन्ततिः सततम्॥"(च)

अत्र कविप्रौढ़ोक्तिसिद्धेन वस्तुना कीर्त्तिसन्ततेश्चन्द्रकरजालादधिककालप्रकाशकत्वेन व्यतिरेकालङ्कारो व्यङ्ग्यः।

"दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः।
मणिव्याजेन पर्य्यस्ताः पृथिव्यामश्रुबिन्दवः॥" (छ)

अत्र कविप्रौढ़ोक्तिसिद्धेनापह्नुत्यलङ्कारेण भविष्यद्राक्षसश्रीविनाशरूपं वस्तु व्यज्यते। (ज)

"धम्मिल्ले नवमल्लिकासमुदयो, हस्ते सिताम्भोरुहं,
हारः कण्ठतटे, पयोधरयुगे श्रीखण्डलेपो घनः।

(च) कविप्रौढ़ोक्तिसिद्धवस्तुव्यङ्ग्यमलङ्कारमाह, रजनीष्विति।—हे वीर! रजनीषु—रात्रिषु, विमलभानोः,—उज्ज्वलकिरणस्य, चन्द्रस्येत्यर्थः, करजालेन—किरणसमूहेन, प्रकाशितम् अखिलं—समग्रं, भुवनमण्डलं, तव कीर्त्तिसन्ततिः,—यशोराशिः, सततं—रात्रिन्दिवमित्यर्थः, धवलयति—प्रकाशयति। अत्र यशसा निखिलभुवनधवलीकरणमलीकमपि कविप्रौढ़ोक्तिसिद्धम्, अखिलमित्यनेनाधिकदेशप्रकाशकत्वञ्च बोध्यम्। रात्रिन्दिवप्रकाशकस्यापि रात्रिप्रकाशकत्वमस्तीति तस्य निकर्षकारणत्वासम्भवात् तदग्रहेन रात्रिमात्रप्रकाशकत्वेन निकर्षप्रत्यायनात् व्यतिरेकस्य व्यङ्ग्यत्वम् इति ज्ञेयम्। गीतिश्छन्दः,—"आर्य्या प्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः। दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः॥" इति तल्लक्षणात्।

(छ) कविप्रौढ़ोक्तिसिद्धालङ्कारव्यङ्ग्यं वस्त्वाह, दशाननेति।—तत्क्षणं—रामजन्मक्षणे इत्यर्थः, यस्मिन् क्षणे श्रीरामः पृथिव्यामवतीर्णः, तत्क्षणं व्याप्येति भावः, राक्षसानां श्रियः,—लक्ष्म्याः, अश्रुबिन्दवः दशाननस्य—रावणस्य, किरीटेभ्यः,—मुकुटेभ्यः, मणिव्याजेन—रत्नपतनमिषेण, पृथिव्यां पर्य्यस्ताः,—पतिताः, रावणमुकुटेभ्यः रत्नानि पेतुरित्यर्थः। [प्रकृतानां मणीनां प्रतिषेधेन अप्रकृतानामश्रुबिन्दूनां स्थापनमपह्नुतिः]। वृत्तमनुष्टुप्। रघुवंशस्येदं पद्यम्।

(ज) अत्रेति।—अत्र राक्षसश्रियः अश्रुबिन्दूनामलीकत्वात् अपह्नुत्यलङ्कारस्य अवास्तवत्वेन कविप्रौढ़ोक्तिमात्रसिद्धत्वमिति भावः; तेन च भविष्यद्राक्षसलक्ष्मीविनाशरूपं वस्तु व्यज्यते।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एकोऽपि त्रिकलिङ्गभूमितिलक ! त्वत्कीर्त्तिराशिर्ययौ
नानामण्डनतां पुरन्दरपुरीवामभ्रुवां विग्रहे ॥" (झ)

अत्र कविप्रौढ़ोक्तिसिद्धेन रूपकालङ्कारेण "भूमिष्ठोऽपि स्वर्गस्थानामुपकारं करोषि" इति विभावनाऽलङ्कारो व्यज्यते ।

"शिखरिणि क्व नु नाम कियच्चिरं
किमभिधानमसावकरोत् तपः ।
सुमुखि ! येन तवाधरपाटलं
दशति बिम्बफलं शुकशावकः ॥" (ञ)

---

(झ) कविप्रौढ़ोक्तिसिद्धालङ्कारव्यङ्ग्यमलङ्कारमाह, धम्मिल्ले इति ।—हे त्रिकलिङ्गभूमितिलक !—तैलङ्गदेशाभरण ! एकोऽपि तव कीर्त्तिराशिः,—यशःस्तोमः, पुरन्दरपुरी—अमरावती, तत्र स्थिताः याः वामभ्रुवः,—सुन्दर्यः, तासां विग्रहे—शरीरे, नानामण्डनतां—विविधालङ्कारत्वं, ययौ—प्राप । तथा हि, धम्मिल्ले—संयतकेशे, ( "धम्मिल्लः संयताः कचाः" इत्यमरः ) नवमल्लिकानां समुदयः,—समूहः, हस्ते सितं—शुभ्रम्, अम्भोरुहं—पद्मं, कण्ठतटे हारः, पयोधरयुगे—स्तनद्वये, घनः,—सान्द्रः, श्रीखण्डलेपः,—चन्दनविलेपनं, सञ्जातः इति शेषः । [ अत्र कीर्त्तिराशेर्धावल्यरूपसादृश्यमप्रसिद्धमपि कविप्रतिभामात्रसिद्धमिति तन्मूलकरूपणस्यापि तथात्वाङ्गीकारात् तद्धावल्यस्य नवमल्लिकादितादात्म्येनाध्यवसायात् रूपकालङ्कारः । स्वर्गस्थितिरूपकारणं विनाऽपि कीर्त्तेः तत्रत्यानामुपकाररूपकार्य्यवर्णनात् विभावना च तदुत्थापितेति अनयोः अङ्गाङ्गिभावेन सङ्करः ] । शार्दूलविक्रीड़ितं वृत्तम् ।

(ञ) कविनिबद्धप्रौढ़ोक्तिसिद्धवस्तुव्यङ्ग्यं वस्त्वाह, शिखरिणीति ।—हे सुमुखि ! असौ शुकशावकः [ शैशवेऽपि युवजनोचिताचारावाप्तिः तपोयोगादेव इति सरससमयः ] क्व नु—कस्मिन्नपि, शिखरिणि—पर्वते, कियत् चिरं—कियत्समयं व्याप्य, किमभिधानं—किमप्याख्यायुक्तम्, अज्ञातनामकमित्यर्थः, तपः अकरोत्—अनुष्ठितवान्, नाम—( इदं सम्भावनायाम् ) सम्भाव्यते इदं मयेति भावः, येन—तपःफलेनेत्यर्थः, तव अधरवत् पाटलं—रक्तं, पाटलशब्दस्य श्वेतरक्तार्थकत्वेऽपि अत्र उपचारात् रक्तवर्णत्वं बोध्यम् ; बिम्बफलं दशति—निरवच्छिन्नसम्बन्धेन आस्वादयते, न केवलं बुभुक्षितवद्भुनक्ति इत्यर्थः । रसज्ञताऽऽदयः तपोबलमन्तरा न सम्भवन्ति इति सारः । द्रुतविलम्बितवृत्तं,—"द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र अनेन कविनिबद्धस्य कस्यचित् कामिनः प्रौढ़ोक्तिसिद्धेन वस्तुना "तवाधरः पुण्यातिशयलभ्यः" इति वस्तु प्रतीयते।

"सुभगे! कोटिसङ्ख्यत्वमुपेत्य मदनाशुगैः।
वसन्ते पञ्चता त्यक्ता पञ्चताऽऽसीद्वियोगिनाम्॥" (ट)

अत्र कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धेन कामशराणां कोटिसङ्ख्यत्वप्राप्त्या निखिलवियोगिमरणेन वस्तुना "शराणां पञ्चता शरान् विमुच्य वियोगिनः श्रितेव" इत्युत्प्रेक्षाऽलङ्कारो व्यज्यते।

"मल्लिकामुकुले चण्डि! भाति गुञ्जन् मधुव्रतः।
प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव॥" (ठ)

अत्र कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धेन उत्प्रेक्षाऽलङ्कारेण "कामस्य अयमुन्मादकः कालः प्राप्तः, तत् कथं मानिनि! मानं न मुञ्चसि?" इति वस्तु व्यज्यते। (ड)

---

(ट) कविनिबद्धप्रौढ़ोक्तिसिद्धवस्तुव्यङ्ग्यमलङ्कारमाह, सुभगे इति।—हे सुभगे! वसन्ते मदनाशुगैः,—कामशरैः, कोटिसङ्ख्यत्वम्—असङ्ख्यत्वमित्यर्थः, उपेत्य—प्राप्य, पञ्चता—पञ्चसङ्ख्याकत्वमित्यर्थः, त्यक्ता, परन्तु पञ्चता—मरणं, वियोगिनां—विरहिणाम्, आसीत्; विरहिणः कामशरार्त्ता मृता इति भावः।

(ठ) कविनिबद्धप्रौढ़ोक्तिसिद्धालङ्कारव्यङ्ग्यं वस्त्वाह, मल्लिकेति।—हे चण्डि!—अत्यन्तकोपने! मल्लिकामुकुले गुञ्जन्—झङ्कारं कुर्व्वन्, मधुव्रतः,—भ्रमरः, पञ्चबाणस्य—कामस्य, प्रयाणे—विजययात्रायां, शङ्खम् आपूरयन्निव—आध्मापयन्निव, भाति—राजते। ["मल्लिकामुकुले भाति गुञ्जन्मत्तमधुव्रतः" इति पाठं केचिदाहुः। तन्मते—मधुव्रतस्य मत्तेति विशेषणस्य अयमभिप्रायः यत्,—शङ्खाऽऽपूरणे कर्त्तव्ये शङ्खस्य मार्गदेश एव मुखेन पूर्य्यते, अनेन तु सम्मुखभागः, इति स्थिते मधुकरस्य तद्विपर्य्ययादिति]।

(ड) अत्रेति।—कामस्येत्यत्र सहाय इति शेषः। ["कामस्य" इत्यत्र "मानस्य" इति पाठे—यथाश्रुत एवार्थो ज्ञेयः]। उन्मादकः,—प्रोषितपीड़ाऽतिशयजनक इत्यर्थः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"महिलासहस्सभरिए तुह हिअए सुहअ! सा अमाअंती।
अणुदिणमणस्सकम्मा अंगं तणुअं पि तणुएइ॥" (ढ)

अत्र "अमाअन्ती" इति कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धेन काव्यलिङ्गालङ्कारेण "तनोस्तनूकरणेऽपि तव हृदये न वर्त्तते" इति विशेषोक्त्यलङ्कारो व्यज्यते। न खलु कवेः कविनिबद्धस्येव रागाद्याविष्टता, अतः कविनिबद्धवक्तृप्रौढ़ोक्तिः कविप्रौढ़ोक्तेरधिकं सहृदयचमत्कारकारिणीति पृथक् प्रतिपादिता; एषु च अलङ्कृतिव्यञ्जनस्थले रूपणोत्प्रेक्षणव्यतिरेचनादिमात्रस्य प्राधान्यं सहृदयसंवेद्यं, न तु रूप्यादीनामित्यलङ्कृतेरेव मुख्यत्वम्। (ण)

---

(ढ) महिलेति।—["महिलासहस्रभरिते तव हृदये सुभग! सा अमान्ती। अनुदिनमनन्यकर्मा अङ्गं तनुकमपि तनयति॥" इति संस्कृतम्]। दूत्याः कस्याश्चित् नायकं प्रत्युक्तिरियम्। हे सुभग! सा—तव कान्ता, महिलानां—नारीणां, सहस्रेण भरिते—पूरिते [एतेन स्थानाभावः सूचितः। भरो जातोऽस्य तत् भरितम् "तदस्य सञ्जातं तारकादिभ्य इतच्" (५।२।२६ पा०) इति इतच्प्रत्ययः] तव हृदये अमान्ती—अवकाशमलभमाना इत्यर्थः, अनुदिनं—प्रतिदिनं, लक्षणया निरन्तरमित्यर्थः, अनन्यकर्मा—नान्यत् कर्म्म यस्याः सेति तथोक्ता, त्यक्तकार्य्यान्तरा सती इति यावत्, तनुकम्—अत्यन्तकृशमपि, अङ्गं तनयति—तनूकरोति, कृशीकरोतीत्यर्थः; तनोः कार्श्यातिशये जाते यदि स्थानं प्राप्नुयादित्याशया इति भावः। तव विरहे सा नितरां कृशा जाता, तदेनामनुगृहाणेति भावः। आर्य्यावृत्तम्।

(ण) अत्रेति।—अत्र "अमाअन्ती" इति—मनसोऽणुत्वात् अनुपलभ्यत्वाच्च तत्र मानमेव न सम्भवति, कुतः तल्लाभः? पदार्थतया हेतुः निर्दिष्ट इति "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते" इति काव्यलिङ्गमलङ्कारः, स च पदार्थस्य कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धतया तथाविधो व्यङ्ग्यः इति भावः, तेन; तनोः,—शरीरस्य, तनूकरणेऽपि—कृशीकरणेऽपीत्यर्थः। "तनुतनूकरणरूपकारणस्य सत्त्वेऽपि त्वद्धृदयवृत्तित्वरूपफलं नास्ति" इति "सति हेतौ फलाभावे विशेषोक्तिः" इति निर्दिष्टा विशेषोक्तिः। ननु कविनिबद्धप्रौढ़ोक्तिसिद्धस्य कविप्रौढ़ोक्तिसिद्धत्वमस्त्येवेति कथं तस्य पृथगुपादानम्? इत्यत आह, न खल्विति।—रागाद्याविष्टता—प्रणयिता इत्यर्थः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**एकः शब्दार्थशक्त्युत्थे ॥ २६२ ॥ (त)**

**उभयशक्त्युद्भवे व्यङ्ग्ये एको ध्वनेर्भेदः।**

**यथा,—**

**"हिममुक्तचन्द्ररुचिरः सपद्मको**
**मदयन् द्विजान् जनितमीनकेतनः।**
**अभवत् प्रसादितसुरो महोत्सवः**
**प्रमदाजनस्य स चिराय माधवः॥" (थ)**

---

[ आदिशब्देन उत्साहादिपरिग्रहः ज्ञेयः ]। प्रौढ़ान्त्या हि वक्तृरागाद्याविष्टचित्तत्वं प्रतीयते। तत्र कयोरेवा का निवद्धस्य वक्तुरधिकरागाद्याविष्टचित्तत्वमिति तदाशङ्काया: प्रौढ़ात्कारविकचमत्कारकारित्वमिति भावः। प्रतिपादिता—गृहीता। ननु यथालङ्कारस्य व्यञ्जकत्वमुक्तं, तथालङ्कार्य्यस्य वस्तुनोऽपि व्यञ्जकत्वमस्त्येव, इति कथमलङ्कारस्य पृथगुपादानम्? अत आह, एषु चेति।—एषु—प्रागुक्तेषु द्वादशभेदेषु मध्ये, अलङ्कृतिव्यञ्जनस्थले—यथालङ्कारो व्यञ्जकस्तत्रेत्यर्थः। सहृदयसंवेद्यं—सामाजिकगम्यम्। रूप्यादीनाम्—आरोप्यमाणानां, नवमल्लिकासमुदयप्रभृतीनामित्यर्थः। [ आदिपदेन उत्प्रेक्षणीयव्यतिरेचनीयादीनां ग्रहणम् ]। मुख्यत्वं—प्राधान्यम्। अत एव प्राधान्येन व्यवहारः इति सारः।

( त ) एक इति।—शब्दार्थशक्त्युत्थे—शब्दार्थयोः, शक्त्या—सामर्थ्येन, उत्थे—उत्पन्ने, व्यङ्ग्ये इति शेषः, एकः, भेद इति शेषः; शब्दार्थोभयशक्त्युत्थः संलक्ष्यक्रमव्यङ्ग्य एकभेद एवेत्यर्थः। अयं भावः,—शब्दशक्तिकारणकत्वमर्थशक्तिकारणकत्वञ्च इत्युभयस्यापि सर्व्वथाप्यनाधारणं सिद्धम्; तयोः परामर्शाभावे व्यङ्ग्यस्यास्फुरणात्, तथाऽपि विनिमयमसहमानानां शब्दानामाधिक्ये तत्प्रतिपादितात् मुख्यत्वात् वर्त्तमानाया अयर्थशक्तेरमुख्यत्वाच्च शब्दशक्तिकारणकत्वेन एव निर्देशः; विनिमयं सहमानानां चाधिक्ये अर्थनिष्ठायाः शक्तेरेव मुख्यत्वात् वर्त्तमानाया अपि शब्दनिष्ठायाः शक्तेः मुख्यानुयायित्वतया भद्रवल्लोग्रामादिवत् मुख्येनैव निर्देशः ज्ञेयः। यत्र विनिमयस्य सहिष्णूनामसहिष्णूनाञ्च शब्दानां न ह्येकजातीयं प्राचुर्य्यं, किन्तु साहश्यमेव, तत्रोभयशक्तिकारणकस्य व्यङ्ग्यस्यावस्थानमिति शब्दार्थोभयोत्थः ध्वनिः; न चासौ एकशक्तिकारणकतया कथयितुमर्हः, प्रमाणाभावात्; इति सारः।

( थ ) हिमेति।—हिममुक्तः,—हिमावरणशून्यः, निर्म्मल इत्यर्थः, यश्चन्द्रः तद्वत्



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र "माधवः कृष्णो माधवो वसन्त इव" इत्युपमाऽलङ्कारो व्यङ्ग्यः। एवञ्च व्यङ्ग्यभेदादेव व्यञ्जकानां काव्यानां भेदः। (द)

**तदष्टादशधा ध्वनिः॥ २६३॥** (ध)

अविवक्षितवाच्यः, अर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्च इति द्विविधः। विवक्षितान्यपरवाच्यस्तु असंलक्ष्यक्रमव्यङ्ग्यत्वेनैकः। संलक्ष्यक्रमव्यङ्ग्यत्वेन च शब्दार्थोभयशक्तिमूलतया पञ्चदशेति अष्टादशभेदो ध्वनिः। (न)

---

रुचिरः,—मनोहरः, अन्यत्र,—तेन रुचिरः,—दीप्यमानः, पद्मया—लक्ष्म्या सह वर्त्तमानः सपद्मकः, अन्यत्र,—पद्मयुक्तः, द्विजान्—ब्राह्मणान्, अन्यत्र—पक्षिणः, कोकिलादीन् इत्यर्थः, मदयन्—हर्षयन्, जनितः,—उत्पादितः, मीनकेतनः,—कामः, प्रद्युम्नः इत्यर्थः, येन तथोक्तः, अन्यत्र,—जनितसुरताभिलाष इत्यर्थः, प्रसादिताः,—प्रसन्नतां प्रापिताः, सुराः,—देवाः, येन सः, दैत्यविध्वंसनादिनेति भावः, अन्यत्र—प्रसादिताः,—विमलीकृताः, सुराः—मद्यानि, येन तथाविधः, स माधवः,—कृष्णः, अन्यत्र,—वसन्तः, चिराय प्रमदाजनस्य—नारीजनस्य, महोत्सवः,—महाऽऽनन्दस्वरूपः अभवत्। अत्र चन्द्रपद्मादिशब्दार्थोभयशक्तिव्यङ्ग्यस्य वसन्तस्योपमा शब्दार्थोभयशक्तिव्यङ्ग्या, विनिमयाक्षमत्वेन चन्द्रादीनां, विनिमयक्षमत्वेन च हिममुक्तादीनाम्; शब्दार्थयोरेव मुख्यत्वेन व्यञ्जकत्वमिति शब्दार्थोभयशक्तिनिमित्तकत्वं तस्याः सिद्धम्। तथाहि—प्रमदाजनस्य महोत्सवजनने वसन्तस्यैव सामर्थ्यमित्यर्थः,(यदर्थे यस्य प्रसिद्धिः तत्रैव तदर्थस्य सामर्थ्यम्; एवमेव काव्यप्रकाशकारः) प्रतिसन्धानसहकृतेन माधवपदेन वसन्तपदार्थ एव व्यज्यते, न त्वर्थान्तरम्; तस्य तत्र सामर्थ्याभावात्। न चात्र शब्दार्थोभयश्लेषसत्त्वेन शब्दार्थोभयशक्तिमूला व्यङ्ग्योपमेति वाच्यं, तथा सति "दुर्गालङ्घित—" इत्यत्रापि उभयश्लेषसत्त्वेन उभयशक्तिव्यङ्ग्यत्वं स्यात्। "गृहीतगरिमा—" इत्यर्थश्लेषस्यापि तत्र सत्त्वादिति सङ्क्षेपः। मञ्जुभाषिणी वृत्तम्;—"सजसा जगौ च यदि मञ्जुभाषिणी" इति तल्लक्षणात्।

(द) ननूक्तभेदेषु व्यङ्ग्यस्यैव भेदो दर्शितः, तच्च प्रकृतानुपयुक्तम्, अत आह, एवञ्चेति।—उक्तरीत्या इत्यर्थः। व्यङ्ग्यभेदात्—व्यङ्ग्यस्य—व्यञ्जनाजन्यबोधविषयस्य अर्थस्य, भेदात्—पार्थक्यात्, व्यञ्जकानां—व्यञ्जयन्तीति व्यञ्जकानि तेषाम्।

(ध) तदिति।—उक्तक्रमादित्यर्थः।

(न) अष्टादशत्वमुपपादयति, अविवक्षितेति।—लक्षणामूलो ध्वनिरित्यर्थः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एषु च (प)—

**वाक्ये शब्दार्थशक्त्युत्थस्तदन्ये पदवाक्ययोः ॥२६४॥ (फ)**

तत्र अर्थान्तरसङ्क्रमितवाच्यो ध्वनिः पदगतो यथा,—

"धन्यः स एव तरुणो नयने तस्यैव नयने च।

युवजनमोहनविद्या भवितेयं यस्य सम्मुखे सुमुखी॥"(ब)

अत्र द्वितीयनयनशब्दो भाग्यवत्ताऽऽदिगुणविशिष्टनयनपरः।

वाक्यगतो यथा,—

"त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति।

आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत्॥" (भ)

---

विवक्षितान्यपरवाच्यः,—अभिधामूल इत्यर्थः। शब्दार्थोभयशक्तिमूलतया पञ्चदशेति।—तथाहि,—वस्त्वलङ्कारमूलत्वात् शब्दशक्तिमूलौ द्वौ, अर्थशक्तिमूला अनन्तरोक्ता द्वादश, उभयशक्तिमूल एक इति पञ्चदशधेति भावः, पुनश्चोक्तभेदद्वयेन साकं मेलने अष्टादशधा इति दिक्।

(प) एषु—अष्टादशसु भेदेषु मध्ये इत्यर्थः।

(फ) वाक्ये इति।—शब्दार्थशक्त्युत्थः,—शब्दार्थोभयशक्त्युत्थो ध्वनिः, वाक्ये—केवलं वाक्य एव, भवतीति शेषः, तदन्ये—तस्मादन्ये, उभयशक्त्युत्थादन्ये, अर्थान्तर-सङ्क्रमितवाच्यादयः सप्तदश भेदाः इत्यर्थः, पदवाक्ययोः,—पदगताः वाक्यगताश्च भवन्तीति शेषः। [अत्रेदमवधेयम्—यत्र मुख्यत्वादेकस्यैव पदस्य व्यङ्ग्यार्थावबोधे क्षमत्वं, साहचर्य्यमात्रत्वं पुनरन्येषाम्; तत्र पदगतत्वं सिद्धम्; अनेकपदानां तथात्वे वाक्यगतत्वमिति सारः] ततश्च उभयशक्तिजो भेद एक एव, अन्ये सप्तदश पदवाक्य-गतत्वेन द्विविधत्वात् चतुस्त्रिंशत्, मिलित्वा पञ्चत्रिंशद् भेदाः, इति बोध्यम्।

(ब) धन्य इति।—स एव तरुणः,—युवा, धन्यः,—पुण्यवानित्यर्थः, तस्यैव—तरुणस्यैवेत्यर्थः, नयने—नेत्रे, नयने—धन्ये इत्यर्थः, च, यस्य सम्मुखे युवजनमोहनविद्या—युवजनमोहनकारिणी या विद्या तद्रूपेत्यर्थः, इयं—लोकोत्तरसौभाग्या, सुमुखी—महनीयतया दर्शनीयेति भावः, भविता—स्थास्यतीत्यर्थः। यद्यपि "कदली कदली—" इत्यादौ पदगतोऽर्थान्तरसङ्क्रमितवाच्यार्थध्वनिरुदाहृत एव, तथाऽप्युदाहरणान्तर-दर्शनमेतद्दृढप्रतिपत्तये इति बोध्यम्। उद्गीतिश्छन्दः।

(भ) त्वामिति।—अस्मीत्यव्ययम्, अहमित्यर्थः, त्वाम्—उपदेशार्हं भवन्तं,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र प्रतिपाद्यस्य सम्मुखीनत्वादेव लब्धे प्रतिपाद्यत्वे "त्वाम्" इति पुनर्वचनमन्यव्यावृत्तिविशिष्टं त्वदर्थं लक्षयति। एवं वच्मीत्यनेनैव कर्त्तरि लब्धे "अस्मि" इति पुनर्वचनमन्यव्यावृत्तिविशिष्टं मदर्थं लक्षयति। तथा "विदुषां समवायः" इत्यादिवचनेनैव वक्तुः प्रतिपादने सिद्धे पुनः "वच्मि" इति वचनम् "उपदिशामि" इति वचनविशेषरूपमर्थं लक्षयति। एतानि च लक्षितानि स्वातिशयं व्यञ्जयन्ति। एतेन मम वचनं तवात्यन्तं हितं, तदवश्यमेतत् कर्त्तव्यमित्यभिप्रायः। तदेवमयं वाक्यगतोऽर्थान्तरसङ्क्रमितवाच्यो ध्वनिः।

अत्यन्ततिरस्कृतवाच्यः पदगतो यथा,—"निश्वासान्ध इव" इत्यादि। वाक्यगतो यथा,—"उपकृतं बहु तत्र" इत्यादि, अन्येषां वाक्यगतत्वे उदाहृतम्। (म)

---

वच्मि—ब्रवीमि, उपदिशामीति यावत्, अत्र विदुषां समवायः,—सङ्घः, समूह इत्यर्थः, [ समुदाय इति पाठे—समुदायः,—समूहः ] तिष्ठति, तत्—तस्मात्, आत्मीयाम्—आत्मने हितां, मतिम् आस्थाय—आश्रित्य, अत्र—विदुषां समवाये, स्थितिं—कर्त्तव्यनिश्चयं, विधेहि—कुरु, इतीति शेषः।

(म) लक्षणाबीजमन्वयानुपपत्तियोगित्वं प्रदर्श्य लक्ष्यार्थं व्यङ्ग्यार्थञ्च दर्शयति, अत्रेति।—"अस्मि" इति पुनर्वचनं हितकारिमदर्थं लक्षयति। सर्व्वत्र मुख्यार्थस्य अभेदः सम्बन्धः। एतानि—अन्यव्यावृत्तिविशिष्टत्वादिवस्तूनि। तथाहि,—अन्यव्यावृत्तिविशिष्टमिति त्वामेव, न त्वन्यमिति भावः। अन्यव्यावृत्तिविशिष्टमिति अहमेव, नान्यः इति लक्षयति इत्याशयः। स्वातिशयमिति।—त्वत्पदार्थस्य वादजल्पादिक्षमत्वं, मत्पदार्थस्यात्यन्तहितैषित्वम्, उपदेशस्यानुपेक्षणीयत्वमतिशयः इत्यर्थः। प्रत्येकपदव्यङ्ग्यत्वं प्रदर्श्य वाक्यव्यङ्ग्यत्वं दर्शयति, एतेनेति।—उक्तवाक्येनेत्यर्थः। अभिप्रायः, प्रतीयते इति शेषः। "निश्वासान्धः,—" इत्यादिवत् "उपकृतम्" इत्यपि पूर्वमेव व्याख्यातम्। अत्र तु लाक्षणिकपदानामेकवाक्यस्थत्वाद्वाक्यत्वेनैव व्यञ्जकत्वम्; यद्यपि उपकृतादिलाक्षणिकपदानां प्रत्येकवाक्यस्थत्वं, तथाऽपि महावाक्यगतत्वेनैकवाक्यस्थत्वं बोध्यम्। अन्येषाम्—असंलक्ष्यक्रमव्यङ्ग्यादीनाम् इत्यर्थः। उदाहृतम् इति।—अत्र निरुक्तरसाद्युदाहरणमेव तदुदाहरणमित्यर्थोऽवगन्तव्यः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पदगतत्वे यथा,—

"लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः।
तदा सुधाऽऽस्पदमभूदधुना तु ज्वरो महान्॥" (य)

अत्र लावण्यादीनां तादृगनुभवैकगोचरताव्यञ्जकानां तदादिशब्दानामेव प्राधान्यम्। अन्येषान्तु तदुपकारित्वमेवेति तन्मूलक एव ध्वनिव्यपदेशः। (र)

(य) असंलक्ष्यक्रमव्यङ्ग्यं पदप्रकाश्यमाह, लावण्यमिति।—कस्यचिद् वियोगिन उक्तिरियम्। तत् लावण्यम्—अङ्गप्रभाविशेषः, सर्व्वावयवगतो विदग्धनयनोत्सवहेतुः कोऽप्यतिशय इत्यर्थः, असौ कान्तिः,—औज्ज्वल्यं, (प्रत्येकमवयवानां संस्थानसौभाग्यं कान्तिरिति चण्डीदासः) तत् रूपं—सौन्दर्य्यं, स वचसां क्रमः,—परिपाटी, भङ्गीत्यर्थः, तदा—तस्मिन् काले, नायिकासन्निधानसमये इति यावत्, सम्भोगावसरे इति भावः, सुधाऽऽस्पदम्—अमृतपात्रम्, अभूत्; अधुना—नायिकाविच्छेददशायां, तद्विरहे इत्यर्थः, तु महान् ज्वरः,—व्याधिः, सन्तापजनक इति यावत्, तत्तत्स्मरणस्य अतीवसन्तापकत्वादिति भावः।

(र) विभावादिव्यङ्ग्ये रसे तदादिपदानां व्यञ्जकत्वमुपपादयति, अत्रेति।—अनुभवैकगोचरताव्यञ्जकानाम्—अनिर्वचनीयत्वव्यञ्जकानाम्, प्राधान्यम्, अत्युत्कृष्टविप्रलम्भव्यञ्जने इति शेषः; अन्येषां—विभावादीनां, लावण्यादीनां वा, तदुपकारित्वं—तदादिपदसहकारित्वमेव, इति हेतोः, तन्मूलक एव—पदमूलक एव, न तु वाक्यमूलकः इति भावः; "प्रधाने हि व्यपदेशाः भवन्ति" इति न्यायादित्यर्थः। अत्यन्तसन्तोषसम्पादकवस्तुस्मरणात् विरहिणां दुःखातिशयो भवति इति विप्रलम्भातिशयो व्यज्यते, इत्येतत्पदगतासंलक्ष्यक्रमव्यङ्ग्यध्वनेरुदाहरणमुपपन्नम्। ननु तदादिपदानाम् अनुभवगोचरेऽभिधैव, कथं पुनः व्यञ्जना? इति चेत्, न, अनुभवैकगोचरतेत्यनेनानिर्वचनीयत्वस्य विवक्षणात्। (अत एव चण्डीदासः,—"अनुभवैकगोचराः,—तत्कालचमत्कारिणो निर्वक्तुमशक्याः, सर्व्वस्वव्ययप्राणपणादिभिरपि प्रार्थनीयाः" इति व्याचकार)। इदञ्च बोध्यम्;—देहिनामिव काव्यानां सङ्घटनाविशेषसाध्यः मनोरमत्वप्रत्ययः अन्वयव्यतिरेकाभ्यां सङ्घटनाभागेषु समर्थ्यते, तस्मात् पदानाम् अपि, न केवलं वाक्यानां व्यञ्जकत्वद्वारा ध्वनिप्रसङ्गः सिद्धः इति ध्वन्यालोके विशदीकृतम्। प्रदीपकृताऽपि व्याख्यातम्;—"ननु पदस्य व्यञ्जकत्वे किमुपलब्धम्? न च वाक्यात्मनां काव्यानां ध्वनित्वमिति, न वा केवलपदस्य

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तदुक्तं ध्वनिकृता,—

"एकावयवसंस्थेन भूषणेनेव कामिनी।

पदद्योत्येन सुकवेर्ध्वनिना भाति भारती॥" (ल)

एवं भावादिष्वपि ऊह्यम्। (व)

"भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः।

कस्य नानन्दनिस्यन्दं विदधाति सदागमः?॥" (श)

व्यञ्जकत्वे सकलस्य वाक्यस्य मनोरमत्वं सङ्घटेत इति वक्तुं युक्तम्, इति चेत्?— केवलपदव्यञ्जकत्वेन न पदप्रकाश्यता, अपि तु तन्मुख्यत्वेन, केवलपदस्य व्यञ्जकतायामपि अविवक्षितवाच्यध्वनौ यद्वाक्यनिष्ठस्य शब्दस्य अर्थस्य वा या अतिशयितार्थव्यञ्जकता, सा वाक्यस्यैव इति न दोषलेशः।

(ल) नन्वितरसाचिव्यं विना पदस्य व्यञ्जकत्वं तावन्न सम्भवति, तत्र प्राधान्याप्राधान्यविवेचनमकिञ्चित्करम्; तथा सति सर्व्वत्र वाक्यस्यैव व्यञ्जकत्वम् उपपन्नम्। पदगतध्वनिप्रभेदाङ्गीकारस्तु प्राचीनमतानुसारेणैवेत्यभिप्रायेण प्राचीनमतमुपन्यस्यति,—तदुक्तमिति। एकेति।—एकावयवसंस्थेन—एकाङ्गस्थितेन, भूषणेन—अलङ्कारेण, नासिकास्थगजमुक्तादिना इत्यर्थः, कामिनीव—सुन्दरीवत्, पदद्योत्येन—एकदेशस्थितेन तादृशपदप्रकाश्येन, ध्वनिना—व्यङ्ग्येन, सुकवेः,—साधुकवेः, भारती—वाणी, समस्तमेव वाक्यमित्यर्थः, भाति—राजते, रम्यतामुपपद्यते इति भावः।

(व) एवं भावादिष्वपीति।—पदप्रकाश्यभावादिष्वपीत्यर्थः। तेषामपि असंलक्ष्यक्रमव्यङ्ग्यध्वनित्वेनोदाहर्त्तुमुचितत्वात्; यथा रसरूपासंलक्ष्यक्रमव्यङ्ग्यानि काव्यानि उदाहृतानि, तथा भावरूपासंलक्ष्यक्रमव्यङ्ग्यानामपि उदाहरणानि मृग्याणीति भावः।

(श) शब्दशक्तिमूलं पदप्रकाश्यं वस्त्वाह, भुक्तीति।—जनान्तरसन्निधावुपनायकै आगते शास्त्रप्रशंसाव्याजेन हर्षं सूचयन्त्याः कस्याश्चिदुक्तिरियम्। भुक्तिः,—भोगः, स्वर्गादिसुखमित्यर्थः, मुक्तिः,—अपवर्गः, तयोः कृत्—प्रदर्शक इत्यर्थः, अन्यत्र,—भुक्तिः,—सुरतसुखसम्भोगः, मुक्तिः,—गृहकर्म्मत्यागः, तयोः कर्त्ता, एकान्ते—निर्जने, समादेशने—तत्त्वोपदेशे, तत्परः,—निरतः, निर्जनोपासनाया एव शास्त्रीयत्वादिति भावः, अन्यत्र,—एकान्ते—जनशून्यसङ्केतस्थाने, समादेशने—स्थित्यनुमतौ, तत्परः; यद्वा,—एकान्तसमादेशनस्य—बहुलीलोपदेशस्य कारकः, सदागमः,—सच्छास्त्रं,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र सदागमशब्दः सन्निहितमुपनायकं प्रति सच्छास्त्रार्थमभिधाय "सतः पुरुषस्यागमः" इति वस्तु व्यनक्ति। ननु "सदागमः सदागमः इव" इति न कथमुपमाध्वनिः? सदागमशब्दार्थयोरुपमानोपमेयभावाविवक्षणात्। रहस्यसङ्गोपनार्थमेव हि द्व्यर्थपदप्रतिपादनम्; प्रकरणादिपर्य्यालोचनेन च सच्छास्त्राभिधानस्य असम्बन्धत्वात्। (ष)

"अनन्यसाधारणधीर्धृताखिलवसुन्धरः।
राजते कोऽपि जगति स राजा पुरुषोत्तमः॥" (स)

---

पुराणादिकम् इत्यर्थः, अन्यच्च,—व्यङ्ग्यार्थस्य सतः,—सत्पुरुषस्य भवादृशस्य, आगमः,—उपस्थितिः, कस्य—मद्विधस्य जनस्य, आनन्दनिस्यन्दम्—आमोदप्रस्रवणम्, आनन्दातिशयमित्यर्थः, न विदधाति—न उत्पादयति? न करोतीत्यर्थः; अपि तु सर्व्वस्यैवेति।

(ष) द्वैहृयार्थस्य काव्यव्यङ्ग्यत्वेऽपि तत्र सदागमपदस्य प्रधानत्वादन्येषां सहकारित्वात् पदव्यङ्ग्यव्यपदेश इत्याह, अत्रेति।—सन्निहितं—जनान्तरसन्निधौ उपस्थितमित्यर्थः। सच्छास्त्रार्थमभिधाय—अभिधया बोधयित्वा। सदागमशब्दार्थयोः,—सत्पदार्थस्यागमपदार्थस्य चेत्यर्थः, सच्छास्त्रसत्पुरुषागमनयोरिति भावः। उपमानोपमेयभावस्य, अविवक्षणात्—वक्तुमनभिलाषात्। अविवक्षायां हेतुमाह, रहस्येति।—हि—यस्मात्, द्व्यर्थपदानां प्रतिपादनं—प्रयोगः। ननु "तदर्थं कृतमेतदर्थं भवति" इति न्यायादुपमानोपमेयत्वबोधकः कथं न स्यात्? इत्यत आह, प्रकरणादीति।—[ आदिना वयोऽवस्थादिसङ्ग्रहः ]। सच्छास्त्राभिधानस्यासम्बन्धत्वाच्चेत्यन्वयः। असम्बन्धत्वात्—प्रकृतानुपयोगित्वात्। तथा च यत्र वाच्यार्थः प्रकृतोपयुक्तः, व्यङ्ग्यार्थस्त्वसम्बद्धः, तत्रैवागत्या तयोरुपमानोपमेयभावः कल्प्यते। अत्र तु व्यङ्ग्यार्थस्यैव प्रकृतोपयोगित्वं, वाच्यार्थस्य तदङ्गत्वमिति न तदवसरः। उपनायकानुरागस्य गोपनार्थतायाः एव विवक्षितत्वात्, न तु उपमानोपमेयभावबोधनार्थम् इति भावः।

(स) शब्दशक्तिमूलं पदप्रकाश्यमलङ्कारमाह, अनन्येति।—न अन्येषां साधारणी—अनन्यतुल्या इत्यर्थः, धीर्यस्य तादृशः, धृता—पालिता, हरिणोद्धृता च, अखिला—समग्रा, वसुन्धरा—पृथ्वी, येन तथाविधः, स पुरुषोत्तमः,—पुरुषश्रेष्ठः, कोऽपि राजा जगति—पृथिवीतले, राजते। [ अत्र पुरुषोत्तमपदस्यैव प्राधान्यमिति पदद्योत्य उपमाध्वनिरिति बोध्यम् ]।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र पुरुषश्रेष्ठः पुरुषोत्तम इवेत्युपमाध्वनिः। अनयोः शब्दशक्तिमूलौ संलक्ष्यक्रमभेदौ । (ह)

"सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं
यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमत्रागतिः ।
आश्चर्यं तव सौकुमार्य्यमभितः क्लान्ताऽसि येनाधुना
नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति ते नासितुम् ॥" (क)

(ह) अत्रेति।—पुरुषोत्तम इव—विष्णुरिव। ननु अत्र पूर्वार्द्धेऽपि श्लेषसम्भवेन "दुर्गालङ्घितविग्रहः" इतिवत् वाक्यव्यङ्ग्यमेवोपमानोपमेयत्वमिति चेत्? सत्यम्। अनेकार्थस्य पुरुषोत्तमपदस्य सार्थकत्वाय एकार्थकानामपि अनन्येतिपदानां द्व्यर्थकत्वं कल्प्यते इति पुरुषोत्तमपदस्यैव प्रधानत्वम्। "दुर्गालङ्घित:,"—इत्यादौ तु बहूनामेव पदानां स्वभावत एवानेकार्थकत्वमिति ततोऽस्य भेदः। ननु संज्ञायामेव ["संज्ञायाम्" (२।१।४४ पा०) इति समासशासनात्] कथं पुरुषोत्तमपदस्य अनेकार्थत्वम्? न च सप्तमीसमासस्यैव संज्ञायां विधानात् षष्ठीसमासेन पुरुषश्रेष्ठवाचकत्वमिति वाच्यं, निर्द्धारणे विहितायाः षष्ठ्याः ["न निर्द्धारणे" (२।२।१० पा०) इति] समासनिषेधात्; उच्यते,—पुरुषम् उत्तमयति—संसर्गेण उत्कृष्टं करोतीति व्युत्पत्त्या तस्य पुरुषश्रेष्ठवाचकत्वात्। अनयोरिति।—शब्दशक्तिः मूलं ययोः तौ, शब्दशक्त्युद्भवावित्यर्थः। स्पष्टमन्यत्।

(क) स्वतःसम्भविवस्तुव्यङ्ग्यं वस्तु पदप्रकाश्यमाह,—सायमिति।—पथि उपनायकेन भुक्तां स्नातागतां सखीम् उपहसन्त्याः कस्याश्चिदुक्तिरियम्। सायं—सन्ध्याकाले, स्नानम् उपासितं—कृतं, मलयजेन—चन्दनेन, अङ्गं समालेपितम्, [एतेन स्नानमलयजलेपयोः श्रमप्रतिबन्धकत्वं दर्शितम्]। सायंपदस्य विमुहूर्त्तरूपसायाह्नपरत्वे तत्रातपसम्भावनया तां वारयति, यात इति।—अम्बरमणिः,—सूर्य्यः, अस्ताचलमौलिम्—अस्ताचलस्य चूड़ां, यातः, (अतः) अत्र—मत्सकाशे इत्यर्थः, विस्रब्धं—निःशङ्कं, स्वच्छन्दमित्यर्थः, यथा तथा आगतिः,—आगमनं, ["विस्रब्धमन्दागतिः" इति काव्यप्रकारकारसम्मतः पाठः, तथा सति विस्रब्धम् अथ च मन्दं यथा स्यात्तथाऽऽगतिरित्यर्थः। अत्र असमस्तत्वाङ्गीकारे विस्रब्धाऽसौ मन्देति तथोक्ता गतिः,—गमनं, सञ्चरणमिति भावः। एतेन सायं सूर्य्यस्य अस्तगतत्वात् आतपक्लेशोऽपि नास्तीति सूचितम्,] (तथाऽपि) तव सौकुमार्य्यं—मार्द्दवम्, आश्चर्य्यम्—अद्भुतम्,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र स्वतःसम्भविना वस्तुना कृतपरपुरुषपरिचया स्नाताऽसीति वस्तु व्यज्यते। तच्च "अधुना स्नान्ताऽसि, न तु पूर्वं कदाचिदपि तव एवंविधः क्लमो दृष्टः" इति बोधयतोऽधुनापदस्य एवेतरपदार्थोत्कर्षादधुनापदस्यैव पदान्तरापेक्षया वैशिष्ट्यम्। (ख)

"तदप्राप्तिमहादुःखविलीनाशेषपातका।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा॥
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम्।
निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका॥" [युग्मकम्] (ग)

---

अनन्यसाधारणमित्यर्थः, येन—सौकुमार्य्येण हेतुना, अधुना—इदानीमेव, न तु इतः प्रागिति भावः, अभितः,—वहिरन्तश्च उभयतः, क्लान्ताऽसि। क्लमज्ञापकमाह, नेत्रद्वन्द्वमिति।—(यतः) ते—तव, नेत्रद्वन्द्वं—नयनयुगलम्, अमीलनव्यतिकरं—न विद्यते मीलनस्य—मुद्रणस्य, व्यतिकरः,—पौनःपुन्येन प्रवृत्तिः सम्बन्धो वा यस्मिन् तत् तथोक्तं, मीलनसम्पर्करहितम् इति यावत्, तत् यथा स्यात् तथा, स्वत एव मुद्रितं न भूत्वा इत्यर्थः, आसितुम्—अवस्थातुं, न शक्नोति—न पारयति। शार्दूलविक्रीड़ितं वृत्तम्।

(ख) अत्रेत्यादि।—स्वतःसम्भविना—स्वभावतः सम्भवितुं योग्येन, वस्तुना—वाक्यार्थरूपेण। ननु तादृशार्थस्य वाक्यार्थव्यङ्ग्यत्वे वाक्यगतध्वनिरेवायं, न तु पदगतः? इत्यत आह, तच्चेति।—तच्च—तादृशव्यङ्ग्यञ्चेत्यर्थः, "अधुना क्लान्ताऽसि" इत्यादि बोधयत इति।—तथा च तादृशक्लमस्य सौकुमार्य्यप्रयुक्तत्वे दिनान्तरेऽप्येवं स्यात्, अतोऽधुनापदादाधुनिकक्लमहेतुलाभः इति भावः। ननु तथाप्यधुनापदस्यैवेति नियमः कथमुपपद्यते? स्वं स्वमर्थं बोधयतां पदान्तराणामपि व्यञ्जनायामुपकारसम्भवात्; इत्यत आह, इतरेति।—अधुनापदस्य इतरपदार्थानामुत्कर्षाधानात् तस्यैव पदान्तरापेक्षया वैशिष्ट्यं—प्राधान्यम्; अधुनापदार्थप्राधान्येन तावद्वाक्यार्थेन तादृशपदान्तराणामपि परपुरुषपरिचयव्यञ्जकत्वम्; तथाहि "सायम्" इत्यादि अधुनापदार्थप्रतिसन्धानेन सायन्तनस्नानस्य निमित्तान्तरानुसन्धानप्रतिबन्धादविलम्बितमेव परपुरुषपरिचयं, मलयजलेपने तत्सम्भोगगोपनं, सूर्य्यास्तगमनं चान्यविधोपभोगलक्षणदर्शनाभावं प्रत्याययति। अत्रोपहास एव महावाक्यव्यङ्ग्यः, इदञ्च व्यङ्ग्यं तत्प्रकर्षकमित्यवधेयम्।

(ग) स्वतःसम्भविवस्तुव्यङ्ग्यमलङ्कारं पदप्रकाश्यमाह, तदिति।—राधीत्कृवे

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र अशेषचयपदप्रभावादनेकजन्मसहस्रभोग्यदुष्कृतसुकृतफलराशितादात्म्याध्यवसिततया भगवद्विरहदुःखचिन्ताऽऽह्लादयोः प्रत्यायनमित्यतिशयोक्तिद्वयप्रतीतिरशेषचयपदद्वयद्योत्या। अत्र च व्यञ्जकस्य कविप्रौढोक्तिमन्तरेणापि सम्भवात् स्वतःसम्भविता। (घ)

---

गुरुजनोपरोधेन कृष्णसमीपे गन्तुमशक्ताया अपि गोपकन्याया मुक्तिलाभवर्णनमिदम्। समस्तपापपुण्यचयादेव मुक्तिः इत्युपपादयति, तदप्राप्तीति।—तस्य—श्रीकृष्णस्य, अप्राप्तिः,—अलाभः, एव, अथवा तज्जन्यं यद्, महादुःखं तेन विलीनानि—विशेषेण अपगतानि, अशेषाणि पातकानि यस्याः सा, (भोगेन हि पापपुण्यचयौ भवति, दुःखभोगोऽपि पापफलं, तद्भोगेनैव पापध्वंसोऽभूदिति प्रतिपादनाय महादुःखेति कथनम् इति भावः।) तथा, तस्य—श्रीकृष्णस्य, या चिन्ता—ध्यानं, तया, तज्जन्यो वा यः विपुलः,—महान्, आह्लादः,—सुखं, तेन चीणाः पुण्यानां चयाः,—समूहाः यस्याः तथोक्ता; (सुखभोगो हि पुण्यफलं, तद्भोगेनैव पुण्यचयोऽभूदिति भावः;) जगतां सूतिः,—उत्पत्तिः, यस्मात् तं, परब्रह्मस्वरूपिणं—परमात्मरूपं श्रीकृष्णं, चिन्तयन्ती—ध्यायन्ती, अन्या—या गुरुजनोपरुद्धा सती श्रीकृष्णसमीपं गन्तुमशक्ता सा इत्यर्थः, गोपकन्यका, निरुच्छ्वासतया—निर्गत उच्छ्वासः,—प्राणोत्क्रमणं यस्याः सा तस्याः भावः, निरुच्छ्वासता तया—निरुद्धप्राणतया, प्राणोत्क्रमणमन्तरेण इति यावत्, ("न तस्य प्राणा उत्क्रामन्ति" [बृह० उप० ४ अध्या० ४ ब्रा० ६ मन्त्रः] "अत्रैव समवलीयन्ते" [बृह० उप० ३ अध्या० २ ब्रा० ११ मन्त्रः] इति च श्रुतिशासनात्) मुक्तिं गता—श्रीकृष्णवियोगेन मुक्तेत्यर्थः। मुक्तिं प्रति ब्रह्मज्ञानस्य पापपुण्यचयसहकृतस्यैव हेतुत्वादिति भावः। श्रीमद्भागवतस्येदं युग्मकम्।

(घ) अत्राशेषेत्यादि।—पापपुण्ययोः सामस्त्यलाभश्च अशेषचयपदाभ्यां दर्शित एव, अशेषचयपदयोः प्रभावात्—सामर्थ्यात्, कारणसामस्त्येन फलसामस्त्यप्रतीतिर्बोध्यैवेति भावः। हेतुः अयं तादात्म्याध्यवसाये इति सारः। दुष्कृतसुकृतफलराशिः,—दुःखाह्लादसञ्चयः, तथा हि, तादात्म्याध्यवसितयोरभेदारोपविषययोः प्रत्यायनं—प्रकर्षवैशिष्ट्येन प्रतिपादनम् इत्यर्थः; तथा च भगवद्विरहदुःखमशेषपापफलं, भगवच्चिन्ताह्लादः अशेषपुण्यफलमतिशयोक्तिप्रयोजकमिति बोध्यं, "सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते" इति वक्ष्यमाणत्वात् ध्येयम्। अत्रायं विचारः;—'विषयनिगरणेन विषयितादात्म्यारोपोऽतिशयोक्तिः" इति अतिशयोक्तेः लक्षणम्; यथा,—"कथमुपरि

कलापिनां कलापः" इत्यादि। अत्र प्रकरणवैशिष्ट्याद्विषयस्य केशपाशस्य लाभ इति विषयनिगरणम्। अशेषचयपदद्वयद्योत्या—अशेषचयपदव्यञ्जनाजन्या। अयं भावः;—प्रकृतेऽभिधेयबोधानन्तरं सुखदुःखभोगविषयेण कथं यावत्पुण्यपापचयः? इत्यनुपपत्तिं प्रतिसन्दधतो व्यञ्जनया यावत्सुखदुःखभोगजन्याशेषपुण्यपापचयवतीति प्रतीतिर्जायते। अत्राशेषचयपदाभ्यां विषयिणः सुखदुःखराशेर्वाच्यत्वव्यञ्जनया झटिति प्रतीतिः प्रकरणवैशिष्ट्येन प्रकृतयोः भगवद्विरहदुःखचिन्ताह्लादयोः प्रतीतिः इत्यतिशयोक्तिद्वयस्य व्यङ्ग्यत्वम्। न चाध्यवसायमात्रेण कथमनुपपत्तिनिरास इति वाच्यम्, एककार्य्यकारित्वरूपसादृश्यपर्य्यवसायेन तन्निरासात्। तथा च भगवच्चिन्ताविरहाभ्यां तथा सुखदुःखे जनिते यदुपभोगेन यावत्सुखदुःखभोगनाश्ययोः सुकृतदुष्कृतपुञ्जयोः नाशः जनितः। एतत्सूचनाय महत्त्वं विपुलत्वञ्च दुःखाह्लादयोर्विशेषणमुपन्यस्तम्। केचित्तु,—"मुक्त्युपयोगित्वेन प्रकृतस्य समस्तपापफलराशेः पापविशेषफलेनाप्रकृतेन भगवद्विरहमहादुःखेन, मुक्त्युपयोगित्वेन प्रकृतस्य समस्तपुण्यफलराशेः पुण्यविशेषफलेनाप्रकृतेन तच्चिन्ताविपुलसुखेन सहाभेदप्रतीतिः अतिशयोक्तिः; "निगीर्य्य प्रकृते शब्दोपात्तेनाप्रकृतेन सहाभेदप्रतीतिः अतिशयोक्तिः इति तल्लक्षणात्" इत्याहुः; तन्न, विषयिणि प्रसिद्धधर्म्मस्य विषये प्रतीतिरेवातिशयोक्तिफलं, न तु विषये प्रसिद्धस्य विषयिणि प्रतीतिः। एवं स्थितौ अतिशयोक्तिद्वयस्य निष्फलत्वापातात् विषये प्रसिद्धस्य यावत्पुण्यपापनाशकत्वस्य विषयिणि प्रतीतेरसम्भवेनाभिप्रेतानुपपत्तिनिरासस्यायोगात् विषयिणः शब्दोपात्तत्वेन "कथमुपरि कलापिनां कलापः" इति सदृशाच्चोपपत्तौ अतिशयोक्तिद्वयस्य व्यङ्ग्यत्वायोगाच्च। न चाशेषचयपदप्रभावेण विषयस्य व्यङ्ग्यत्वेनैव तस्य व्यङ्ग्यत्वमिति वाच्यम्; तथा सति "कथमुपरि" इत्यादौ प्रकरणवैशिष्ट्येन विषयस्य व्यङ्ग्यतया अतिशयोक्तेर्व्यङ्ग्यत्वापातात्। व्यञ्जकस्य—द्योतकस्य, वाक्यार्थस्येत्यर्थः, प्रौढोक्तिम्, अन्तरेण—विना, सम्भवात्, स्वतःसम्भविता—स्वतःसम्भविरूपत्वम्। स्वतःसम्भव्यलङ्कारव्यङ्ग्यवस्तुपदप्रकाश्यं वस्तु यथा,—"क्षणदासावक्षणदा वनमवनं व्यसनमव्यसनम्। वत वीर! तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्व्वम्॥" [क्षणदा—रात्रिः, अक्षणदा—अनुत्सवकरी, वनं—काननम्, अवनं—वारियुक्तं, व्यसनं—दुःखम्, अव्यसनम्—अवीनां—मेषाणामिव असनम्—इतस्ततः भ्रमणञ्च, पराङ्मुखे—विमुखे, पराङ्मुखं—विपरीतम्। अत्र शब्दशक्तिमूलविरोधिनिर्वाहेन चतुर्थपादगतेनार्थान्तरन्यासेन विधिरपि त्वामनुवर्त्तते इति सर्व्वपदद्योत्यं वस्तु, स्वतःसम्भव्यलङ्कारव्यङ्ग्योऽलङ्कारः]। पदद्योत्यो यथा,—"तव पत्यधरस्तन्वि! म्लानपद्मदलं प्रगे। इति श्रुत्वा नववधूः करोति मुखमानतम्॥" अत्र रूपकालङ्कारेण त्वयाऽस्यात्यन्त

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"पश्यन्त्यसङ्ख्यपथगां त्वद्दानजलवाहिनीम् ।
देव ! त्रिपथगाऽऽत्मानं गोपयत्युग्रमूर्द्धनि ॥" (ङ)

इदं मम। अत्र "पश्यन्ती" इति कविप्रौढोक्तिसिद्धेन काव्यलिङ्गालङ्कारेण न केऽप्यन्ये दातारस्तव सदृशा इति व्यतिरेकालङ्कारोऽसङ्ख्यपदद्योत्यः। एवमन्येषु अपि अर्थशक्तिमूलसंलक्ष्यक्रमभेदेषु उदाहार्य्यम् । (च)

---

चुम्बनं कृतं, येन म्लानत्वमिति काव्यलिङ्गालङ्कारः म्लानादिपदद्योत्यः। कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यं वस्तु पदप्रकाश्यं यथा,—"चन्द्रधवलासु रात्रिषु धनुरपि कुसुमं समास्फाल्य। एकच्छत्रमनङ्गस्त्रिभुवनराज्यं करोत्यनिशम् ॥" अत्रानङ्गस्य चापास्फालनपूर्व्वकत्रिभुवनाधिकारकरणस्यालीकत्वात् कविप्रौढोक्तिसिद्धेन तेन वस्तुना येषां कामिनामसौ राजा, तेषां न कोऽपि तदादेशपराङ्मुख इति जाग्रद्भिरुपभोगपरैः केवलं तैर्निशाऽतिवाह्यते इति त्रिभुवनराज्यपदद्योत्यं वस्तु व्यज्यते। कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्योऽलङ्कारः पदप्रकाश्यो यथा,—"निशितशरधियाऽर्पयत्यनङ्गो दृशि सुदृशः स्वबलं वयस्यराले। दिशि निपतति यत्र सा च तत्र व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ॥" अवस्थाः,—प्रागुक्ताः विरहकालिकाः दश कामदशाः। अत्र क्रमिकाणां युगपदुन्मेषणरूपं वस्तु वाक्यार्थः, स च स्वतोऽसम्भवित्वात् कविप्रौढोक्तिसिद्धः, तेन व्यतिकरपदद्योत्यो विरोधो व्यज्यते। कविप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यं वस्तु पदप्रकाश्यं यथा,—"सन्तापभाजा हृदयेन हारो निवार्य्यमाणोऽपि मुहुर्मृगाक्ष्याः। वक्षोजभारस्य वयस्यभावाद्विशुद्धजातिर्न चलत्यमुष्मात् ॥" [विशुद्धजातिः,—विशुद्धमुक्ताजातिघटितः]। अत्र विशुद्धजातित्वहेत्वलङ्कारेणानवरतकम्पमान एवास्ते इति न चलतीति पदव्यङ्ग्यं वस्तु अनपगमनहेतुत्वस्य अवान्तरत्वेन आरोप्यमाणत्वात् कविप्रौढोक्तिसिद्धत्वम् इति सङ्क्षेपः।

(ङ) कविप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यमलङ्कारं पदप्रकाश्यमाह, पश्यन्तीति।—हे देव ! त्रिपथगा—गङ्गा, तव दानजलवाहिनीम् असङ्ख्यपथगां—बहुमार्गगामिनीं, पश्यन्ती आत्मानम् उग्रस्य—हरस्य, मूर्द्धनि—शिरसि, [ उग्रमूर्द्धपदेन मूर्द्ध्नोऽत्यन्तगोपनमृगपर्श्वदेशत्वं सूचितम् ] गोपयति। [ अत्र दानजलस्य नदीरूपत्वं स्वतोऽसम्भवि कविप्रौढोक्त्या सिद्धम्। उत्प्रेक्षाऽपि व्यङ्ग्या ]।

(च) अत्रेति।—काव्यलिङ्गालङ्कारेण—"हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्" इति लक्षणोक्तेन, पश्यन्तीति हेतुगर्भविशेषणरूपेण इत्यर्थः। एवमन्येष्वपि इति।—कविप्रौढोक्तिसिद्धवस्त्वलङ्कारव्यङ्ग्यमुदाहृतं कविनिबद्धवक्तृ

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तदेवं ध्वनेः पूर्वोक्तेषु अष्टादशसु भेदेषु मध्ये शब्दार्थशक्त्युत्थो व्यङ्ग्यो वाक्यमात्रे भवन्नेकः। अन्ये पुनः सप्तदश वाक्ये, पदे चेति चतुस्त्रिंशदिति पञ्चत्रिंशद्भेदाः।

**प्रबन्धेऽपि मतो धीरैरर्थशक्त्युद्भवो ध्वनिः॥२६५॥(छ)**

प्रबन्धे—महावाक्ये। अनन्तरोक्तद्वादशभेदोऽर्थशक्त्युत्थः; यथा महाभारते गृध्रगोमायुसंवादे,—

"अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले।
कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे॥
न चेह जीवितः कश्चित् कालधर्म्ममुपागतः।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी॥" (ज)

प्रौढ़ोक्तिसिद्धवस्त्वलङ्कारव्यङ्ग्येषु चतुर्षु भेदेषु यथा,—"सुतरामचमस्तव पञ्चभिः पुष्पपत्रिभिः। युवत्याऽमोघया शक्त्या जगद्विध्यति मन्मथः॥" अत्र नायिकारूपशक्त्या मन्मथस्य जगद्वेधनसम्भवि, कविनिबद्धप्रौढ़ोक्तिसिद्धं वस्तु, तेन नायिकायाः सर्व्वमनोहरस्वरूपं वस्तु जगत्पदद्योत्यं प्रकाशते। "यो व्रजत्यतितरां सहायतां हन्त! विश्वविजये मनोभुवः। तं निशम्य मधुरं पिकस्वरं कः प्रयाति धृतिमानताननेे!॥" अत्र पिकस्वरसहायस्मरस्य विश्वजयी वस्तु कविनिबद्धप्रौढ़ोक्तिसिद्धं, "तेन मानभङ्गकारणे पिकस्वरे सत्यपि मानी न भग्नः" इति विशेषोक्तिरलङ्कारः आनत इति पदद्योत्यो व्यज्यते। "सन्तप्तचामीकरचारुवर्णे कर्णे निबद्धं नवकर्णिकारम्। तदेव शस्त्रं मदनस्य जैवं जगत्त्रयं तेन जितं भवत्या॥" अत्र नायिकाकर्णार्पितं नवकर्णिकारमेव मदनशस्त्रमिति रूपकं कविनिबद्धप्रौढोक्तिसिद्धं, कर्णिकारेण तव मुखस्य तादृशी शोभा जाता, यया वीतरागा अपि स्मरपराधीना भवन्ति, इति वस्तु जगत्त्रयपदप्रकाश्यं व्यञ्जयति। "यशश्चन्द्र इवाभाति राजंस्ते दानसम्भवम्। दैन्यं न हन्यते हन्त! तेन दृष्टिविरोधि मे॥" अत्र यशसः शुक्लत्वसम्भवात् तेन चन्द्रोपमानमप्यसम्भावि कविनिबद्धप्रौढ़ोक्तिसिद्धं, तेन दैन्यमेव तमः इति रूपकं दृष्टिपदद्योत्यं व्यज्यते इति दिक्।

(छ) प्रबन्धे इति।—अर्थशक्त्युद्भवः ध्वनिः धीरैः,—विद्वद्भिः, प्रबन्धे—महावाक्येऽपि, मतः,—कथितः। ततश्च पञ्चत्रिंशद्भेदाः पूर्वोक्ताः; प्रबन्धगताश्च द्वादशेति मिलित्वा सप्तचत्वारिंशद्भेदाः इति बोध्यम्।

(ज) स्वतःसम्भविवस्तुव्यङ्ग्यवस्तु प्रबन्धप्रकाश्यमाह, अलमिति।—श्मशाने



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इति दिवसे शक्तस्य गृध्रस्य, श्मशाने मृतं बालमुपादाय तिष्ठतां दिवसे तं परित्यज्य गमनमिष्टम्। (झ)

"आदित्योऽयं स्थितो मूढ़ाः! स्नेहं कुरुत साम्प्रतम्।
बहुविघ्नो मुहूर्त्तोऽयं जीवेदपि कदाचन॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम्।
गृध्रवाक्यात् कथं बालास्त्यजध्वमविशङ्किताः॥" (ञ)

इति निशि समर्थस्य गोमायोर्दिवसे परित्यागोऽनभिलषित इति वाक्यसमूहेन द्योत्यते। अत्र स्वतःसम्भवी व्यञ्जकः।

---

मृतबालकं त्यजतः तद्बन्धून् प्रति गृध्रस्य वचनमिदम्। गृध्रैः गोमायुभिः,—शृगालैश्च, सङ्कुले—व्याप्ते, कङ्कालाः,—शरीरास्थीनि, बहुला यत्र तादृशे ["कङ्कालबहुले" इति पाठे—कङ्कालैन व्याप्ते इत्यर्थः] अत एव सर्वेषां प्राणिनां भयङ्करे, घोरे—दारुणे, अस्मिन् श्मशाने स्थित्वा अलं—स्थितिर्न कर्त्तव्येत्यर्थः; कालधर्मः,—पञ्चत्वं, तम् उपागतः,—प्राप्तः; प्रियो वा, यदि वा द्वेष्यः,—अप्रियः, कश्चित्, इह—श्मशाने, न च जीवितः, जात इति शेषः; प्राणिनां गतिः ईदृशी—एवम्प्रकारा। पञ्चत्वमुपागतः कश्चित् न पुनरुज्जीवति इति भावः। महाभारतस्येदम्।

(झ) इति दिवसे इति।—दिवसे शक्तस्य—दिने भक्षणक्षमस्येत्यर्थः। गमनमिष्टमिति।—"वाक्यसमूहेन द्योत्यते" इत्यग्रेणान्वयः बोध्यः।

(ञ) गोमायूक्तप्रबन्धस्य तादृशव्यङ्ग्यमाह, आदित्योऽयमिति।—हे मूढ़ाः! ["बालाः!" इति पाठे—शिशुबुद्धय इत्यर्थः] अयम् आदित्यः,—सूर्य्यः, स्थितः, नेयं रात्रिरिति भावः, [आदित्यसत्त्वात् युष्माकं रात्रिचरतोऽपि भीतिर्नास्तीति सूचितम्] साम्प्रतं स्नेहं कुरुत, स्नेहकारणं स्थितिरेवेति भावः, अयं—सन्ध्यासमयासन्नः, मुहूर्त्तः बहुविघ्नः,—दारुणतया विघ्नपूर्णः, सम्भावितभूताद्यावेशः इत्यर्थः, [तदवगमात् मुहूर्त्तान्तरे जीवनस्य सम्भावना दर्शिता] कदाचन जीवेदपि; जीवनसम्भावनायां हेतुमाह, अमुमिति।—हे बालाः!—अज्ञा इत्यर्थः, कनकवर्णाभं—काञ्चनकान्तिं, [कनकवर्णाभत्वे रूपविपर्य्यासाभावात् जीवनसम्भावना दर्शिता] अप्राप्तयौवनं—किशोरम्, अमुं बालं, गृध्रस्य वाक्यात् अविशङ्किताः,—सर्व्वथा प्रत्युज्जीवनाऽऽशां परित्यज्य गृध्रादिना व्यापादनभयशून्याः सन्तः, कथं त्यजध्वम्?। ["त्यजध्वम्" इत्ययमार्षः प्रयोगः]।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एवमन्येषु एकादशभेदेषु उदाहार्य्यम्। एवं वाच्यार्थव्यञ्जकत्वे उदाहृतम्।

लक्ष्यार्थस्य यथा,—"निःशेषच्युतचन्दनम्" इत्यादि। व्यङ्ग्यार्थस्य यथा,—"उच्च णिच्चल" इत्यादि। अनयोः स्वतःसम्भविनोर्लक्ष्यव्यङ्ग्यार्थौ व्यञ्जकौ। एवमन्येषु एकादशभेदेष उदाहार्य्यम्। (ट)

**पदांशवर्णरचनाप्रबन्धेष्वस्फुटक्रमः।**
**असंलक्ष्यक्रमव्यङ्ग्यो ध्वनिस्तत्र पदांशकः॥२६६॥(ठ)**

प्रकृतिप्रत्ययोपसर्गनिपातादिभेदादनेकविधः।

यथा,—

"चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।
करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर! हतास्त्वं खलु कृती॥" (ड)

---

(ट) इति निश्शेति।—समर्थस्य—भवणक्षमस्येत्यर्थः। अत्र स्वतःसम्भवी, वाक्यार्थः इति शेषः, व्यञ्जकः,—वाच्यम्। एवं—निरुक्तध्वनिसमूहः इत्यर्थः। [अनयोः स्वतःसम्भविना वस्तुना महावाक्यगतेन वस्तु व्यज्यते]। लक्ष्यार्थस्येति।—व्यञ्जकत्वे इति शेषः, एवमग्रेऽपि। निःशेषेत्यादि।—लक्ष्यार्थस्य—"तस्यान्तिकमेव गतासि" इति विपरीतलक्षणया बोधितस्य इत्यर्थः, [अनेन स्वतःसम्भविना वस्तुना रमणरूपं वस्तु व्यज्यते इति बोध्यम्]। "उच्च" इत्यत्र स्वतःसम्भविभ्यां लक्ष्यार्थ-व्यङ्ग्यार्थाभ्यां वस्तुभ्यां सङ्केतस्थानरूपं वस्तु व्यज्यते इति बोध्यम्। एवमन्येष्विति।—एकादशत्वं लक्ष्यव्यङ्ग्ययोः प्रत्येकापेक्षया, उभयापेक्षया तु द्वाविंशमिति द्रष्टव्यम्।

(ठ) पदांशेति।—अस्फुटक्रमः असंलक्ष्यक्रमव्यङ्ग्यः, ध्वनिः पदांशे, वर्णे, रचनायां, प्रबन्धे च भवति। तत्र—पदांशादिषु मध्ये इत्यर्थः, पदांशकः, ध्वनिरिति शेषः, प्रकृत्यादिभेदादनेकविधः इति गद्यांशेनान्वेति।

(ड) पदांशगतमुदाहरति, चलेति।—भ्रमरं प्रति दुष्मन्तस्योक्तिरियम्। हे मधुकर!—भ्रमर! करं—पाणिं, व्याधुन्वत्याः,—बाधनार्थमितस्ततो विक्षिपन्त्याः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र "हताः" इति न पुनः "दुःखं प्राप्तवन्तः" इति हन् प्रकृतेः।(ढ)

"मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम्।
मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितं तु॥" (ण)

---

अस्याः शकुन्तलाया इति शेषः, चलौ—चञ्चलौ, अपाङ्गौ—नेत्रप्रान्तौ ("अपाङ्गौ नेत्रयोरन्तौ" इत्यमरः) यस्याः तां तथोक्तां, वेपथुमतीं—त्वदागमनशङ्कया इतस्ततः सतर्कदृष्टिपातेन अतिचपलामित्यर्थः, दृष्टिं—नयनं, बहुशः,—पुनः पुनः, स्पृशसि; रहस्याख्यायीव—गुप्तभाषीव, कर्णान्तिकचरः,—कर्णसमीपगः सन्, मृदु—मन्दं, स्वनसि—गुञ्जसि; [अनेन कपोलचुम्बनविशेषः ध्वन्यते। कामिनः खलु रहस्याख्यानव्याजेन कपोलं चुम्बन्ति इति प्रसिद्धिः] तथा रतिसर्व्वस्वं—सुरतसर्व्वधनम्; यद्वा,—रतौ सर्व्वस्वमिव आदरणीयम्, [अनेन तस्य स्वाभिलाषः व्यज्यते] अधरं—दन्तच्छदं, पिबसि—चुम्बसि, दशसि इत्यर्थः; अतः त्वं खलु—त्वमेव, कृती—कृतबहुकृत्यत्वात् कृतार्थ एव, तवैव कृतित्वं सर्व्वभावेन सिद्धमिति भावः; वयम्—एवंविधाभिलाषिणः अपि तद्दृष्टिस्पर्शादिवर्ज्जिताः इत्यर्थः, [अत्र बहुवचनेन आत्मनि गौरवं, तत्र अहं प्रख्यातपुरुवंशोत्पन्नः, सुरूपः, युवा, मानवः, नृपतिः, अस्याः सर्व्वथा योग्योऽपि इत्यादिकं व्यज्यते] तत्त्वान्वेषात्—इयं क्षत्रपरिग्रहक्षमा न वेत्यादितत्त्वपरीक्षात्, हताः,—हतप्रायाः, अतिपीड़िताः इत्यर्थः; यद्वा,—वस्तुवृत्ते अन्विष्यमाने आयासमात्र पात्रीभूता जाता इत्यर्थः। [अत्र त्वं कृती, न वयमिति व्यतिरेको व्यङ्ग्यः, भ्रमरस्य स्वभावोक्तेः स्वभावोक्तिः, मधुकरस्य कृतित्वे पादत्रयगतं वाक्यजातं हेतुभूतमिति काव्यलिङ्गं, भ्रमरस्य च कमल एवानुरागौचित्येन मुखे तद्भिवानुरञ्जनमिति कृत्वा भ्रान्तिमान् व्यङ्ग्यश्चेति बोध्यम्]। अभिज्ञानशकुन्तलस्येदं पद्यम्। शिखरिणी वृत्तम्।

(ढ) अत्रेति।—हता इत्यनेन दुःखातिशयो व्यज्यते, दुःखं प्राप्तवन्त इति प्रयोगेण प्रकृतोपयुक्तस्य दुःखातिशयस्य प्रतीतिर्न स्यात् इत्याशयः। हन् प्रकृतेरिति।—हन् प्रकृतेरेव प्राधान्येन व्यञ्जकत्वमिति शेषः।

(ण) मुहुरिति।—गौतम्या शकुन्तलायां नीतायां दुष्मन्तस्यानुतापवर्णनमेतत्। पक्ष्माणि सन्त्यनयोरिति पक्ष्मले—["सिध्मादिभ्यश्च" (५।२।९७ पा०) इति लच्] शोभनपक्ष्मशालिनी, अक्षिणी—नयने, यस्यास्तथोक्तायाः, ["बहुव्रीहौ सक्थ्यक्ष्णोः"

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र "तु" इति निपातस्यानुतापव्यञ्जकत्वम्। "न्यक्कारो ह्ययमेव मे यदरयः" इत्यादौ "अरयः" इति बहुवचनस्य, "तापसः" इत्येकवचनस्य, "अत्रैव" इति सर्व्वनाम्नः, "निहन्ति" इति "जीवति" इति च तिङः, "अहो" इत्यव्ययस्य, "ग्रामटिका" इति टिकच्रूपतद्धितस्य, "विलुण्ठन" इति व्युपसर्गस्य, "भुजैः" इति बहुवचनस्य व्यञ्जकत्वम्। (त)

---

(५।५।११३ पा०) इति षचि "षिद्गौरादिभ्यश्च" (४।१।४१ पा०) इति ङीप्] शकुन्तलाया इति शेषः, मुहुः,—पुनः पुनः, अङ्गुलिभिः, संवृतौ,—आच्छादितौ,—अधरौष्ठौ यस्य तादृशं, प्रतिषेधाक्षरेण—"न हि न हि" इत्येवं वर्णप्रयोगेण, यो विक्लवः,—वैक्लव्यं, तेन अभिरामं—मनोहरम्; यद्वा,—प्रतिषेधवचसा विक्लवं—व्याकुलम्, अत एवाभिराममित्यर्थः, अंसविवर्त्ति—अंसे—स्कन्धदेशे, विवर्त्तयितुं—परिवृत्य स्थातुं शीलमस्य तत्, मुखं, कथमपि—महताऽऽयासेन, चक्षुःपरागापसारणच्छलेन इति यावत्, उन्नमितम्—अङ्गुलीभ्यामूर्द्धीकृत्य धृतं, चुम्बनयोग्यतां नीतमित्यर्थः, तु—किन्तु, न चुम्बितं—न मया हतपुण्येन चुम्बितुं शक्तमित्यनुतापातिशयः। [अत्र स्वभावोक्तिरलङ्कारः]। अभिज्ञानशकुन्तलस्येदं पद्यम्। अत्रौपच्छन्दसकन्नामच्छन्दः, तदुक्तं यथा पैङ्गले,—"औपच्छन्दसकम्" इति।

(त) न्यक्कार इति।—व्याख्यातमिदं प्राक्। "अरयः इति बहुवचनस्य" इत्यादि षष्ठ्यन्तानां, "व्यञ्जकत्वम्" इत्यग्रेतनेनान्वयः। "अरयः" इति बहुवचनेन अरेरेकस्यापि सद्भावोऽनुचितः, किं पुनर्बहूनामिति। तापस इत्येकवचनेन अरीणां प्रतीकाराक्षमत्वं ज्ञापितम्; यद्वा,—यदि विदितपराक्रमा महान्तो देवराजाद्यन्यतमाः शत्रवः समुद्यताः स्युः, तदाऽपि क्षमं, किन्तु तत्राप्यस्माकं भक्ष्यस्तापसः! अहो! अत्रापि तापस इति एकवचनेन अमर्षातिशयं, तथा हि,—यद्यपि एकतापसनिग्रहेणैव सर्व्वरक्षा न सम्भवति, परन्तु सोऽपि सर्व्वप्राणैः कर्त्तुमशक्य इति। अत्रेति इदं पदेन, यदि सोऽपि दूरं परोऽक्षं निहन्तुं समुद्यतः स्यात्, तदाऽपि किञ्चित् क्षमं, किन्तु मत्सविध एवेति शत्रोरपरोक्षमपराधित्वस्यात्यन्तमसहनीयमिति; यद्वा,—रिपुनिग्रहे दूरगमनादिव्यापारो नास्ति, तथाऽपि स न कर्त्तुं शक्यते इति। निहन्तीति वर्त्तमानापदारकथनेन, विलम्बासहिष्णो रिपुनिग्रहे नास्माकमुद्यमः। जीवतीति जीवनस्य वर्त्तमानत्वख्यापनेन, इतः पूर्व्वमेव मे मरणमुचितमासीत्, किन्तु नासीदित्येव कष्टं, न हि मरणोत्तरं पराभवः कमपि बाधते इति। अहो! इति अव्ययस्य जीवनस्य साश्चर्य्यत्व-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"आहारे विरतिः समस्तविषयग्रामे निवृत्तिः परा
नासाग्रे नयनं तदेतदपरं यच्चैकतानं मनः।
मौनञ्चेदमिदञ्च शून्यमधुना यद्विश्वमाभाति ते
तद्ब्रूयाः सखि! योगिनी किमसि भोः! किं वा वियोगिन्यसि?॥"(थ)

ख्यापनं, मानिनाम् एतादृशपरिभवे जीवनमत्यन्तमनुचितमिति। स्वर्गग्रामटिकेति स्वर्गस्य क्षुद्रग्रामत्वख्यापनेन तल्लुण्ठनमपि यस्य श्लाघायै न, सोऽपि तापसेन पराभूयते, अहो! दुर्दैवविलसितमेतत् इति। यद्वा,—टिकच्रूपस्य अल्पार्थकस्य तद्धितप्रत्ययस्य स्वर्गस्य विलुण्ठनेऽतिशयाभावरूपं व्यञ्जकत्वम्, इति। व्युपसर्गस्य लुण्ठनस्य विलुण्ठनस्य —स्वर्गविलुण्ठनस्येत्यर्थः, वैशिष्ट्यकथनेन सुरपतेः अत्यन्तपराभवकारिणो रावणस्य एकतापसेन पराभव दुर्दैवेनोपपद्यते इति। भुजैरिति बहुवचनेन भुजानां बहुत्वख्यापनेन, रिपुनिग्रहे रावणस्य एतादृशाधिकसाधनसत्त्वेऽपि स कर्त्तुं न शक्यते इति व्यज्यते। यद्यप्येते संलक्ष्यक्रमव्यङ्ग्यानां वस्तुध्वनयः एव, तथाप्येते असंलक्ष्यक्रमव्यङ्ग्यस्य निर्वेदाख्यभावस्य पोषकाः, इति तेनैव व्यपदेशः।

(थ) आहारे इति।—विरहिणीमुपहसन्त्याः सख्या उक्तिरियम्। भोः सखि! [इदञ्च प्रणयसूचकं सम्बोधनं, तेन योगिन्या न कुत्रापि प्रणयी भवति, तव तु प्रणयीऽस्तीति सखीत्यनेन व्यज्यते]। आहारे—भोजने, विरतिः,—रागाभावः, अप्रवृत्तिरित्यर्थः, आहारे इति विषयसप्तम्या आहारविषयकरागाभाव एव, न तु योगिनीवत् अनिष्टसाधनताज्ञानात् योगप्रतिकूलाहारान्निवृत्तिः; तदुक्तं,—"नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः" इति (भ० गी०), एवञ्च योगिन्या वैधाहारे प्रवृत्तिरस्ति वियोगिन्यास्तु (तव) सर्व्वस्मिन्नेवाहारे वीतरागतेति भावः। समस्तविषयाणां—सर्व्वेषां विषयाणां—भोग्यानां, ग्रामे—समूहे, परा—आत्यन्तिकी, निवृत्तिः; [अत्र समस्तेति परेति च विशेषणेन योगिन्याः सर्व्वविषयनिवृत्तिर्न दृश्यते शरीरधारणोपयोगिषु तस्याः प्रवृत्तिदर्शनात्, वियोगिन्यास्तु सर्वेष्वपि विषयेषु न प्रवृत्तिर्भवतीति, तथा—योगिन्याः निवृत्तेरात्यन्तिकत्वं नास्ति, वियोगिन्यास्तु आत्यन्तिकता, योगिन्याः योगसाधने यदृच्छोपपन्ने च विषये प्रवृत्तेः, तव च सर्व्वथैव विषयान्निवृत्तेः पार्थक्यं व्यज्यते]। नासाऽग्रे नयनं, तिष्ठतीति शेषः, चिन्तास्तिमितत्वादिति भावः, यच्च एकतानम्—एकाग्रम्, अनन्यवृत्तीत्यर्थः, मनः तदेतत् अपरम्—अन्यत्। [योगिन्या ध्यानसमये एव नासाऽग्रे नयनं, मनसश्च एकतानत्वं भवति, वियोगिन्यास्तु (तव) सर्व्वदैव तदुभयमिति तदेतदपरमिति व्यञ्जयतीति]। इदं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र तु "आहारे" इति विषयसप्तम्याः, "समस्त" इति "परा" इति च विशेषणद्वयस्य, "मौनं चेदम्" इति प्रत्यय-परामर्शिनः सर्वनाम्नः, "आभाति" इत्युपसर्गस्य, "सखि" इति प्रणयस्मारणस्य, "असि भोः" इति सोपहासोत्प्रासस्य, "किं वा" इत्युत्तरपक्षदार्ढ्यसूचकस्य वाशब्दस्य, "असि" इति वर्त्तमानोपदेशस्य तत्तद्विशेषव्यञ्जकत्वं सहृदयसंवेद्यम्। (द)

वर्णरचनयोरुदाहरिष्यते। प्रबन्धे यथा,—महाभारते

मौनं—तूष्णीम्भावश्च, [योगिनी मौनसमये इङ्गितादिना अर्थं बोधयति, तव तु इङ्गिताऽऽदिनाऽपि अर्थबोधकत्वं नास्तीति इदंपदेन व्यज्यते]। इदञ्च विश्वं, यत् ते—तव, अधुना शून्यम् आभाति—आ—सम्यक्प्रकारेण भातीत्यर्थः; [योगिन्याः विश्वं तत्त्वेनासद्भूतं प्रतिभाति, वियोगिन्याश्च सदपि विश्वं प्रकृतानुपयोगित्वेनासदिव प्रतिभातीति इदंपदेन व्यज्यते, तथा योगिन्याः विश्वस्य शून्यत्वेन ज्ञानं परमात्मावच्छिन्नस्य तु न, वियोगिन्यास्तु तव सन्नपि विश्वं शून्यमिति आङुपसर्गेण व्यज्यते]। तत्—तस्मात्, ब्रूयाः,—कथयेः, योगिनी असि किम्? वा अथवा, [इदञ्च वियोगिन्येवासीत्युत्तरपक्षं द्रढ़यति, तथा चास्य न त्वं योगिनी, किन्तु सत्यं वियोगिन्येवासीति व्यञ्जयति] किं वियोगिनी असि? [अयञ्च परिहाससूचकः प्रश्नः, तेन सोत्प्रासस्य उपहाससूचकस्य अस्य प्रश्नस्य योगिनीव प्रतीयसे, न तु तथाभूता त्वमिति व्यक्तिविषयं, तथा असीति वर्त्तमानकालिका क्रिया प्रत्यक्षतामनुभावयति]। शार्दूलविक्रीड़ितं वृत्तम्।

(द) अत्र त्विति।—"आहारे" इति, विषयसप्तम्याः व्यञ्जकत्वमिति शेषः, एवं परत्रापि षष्ठ्यन्तेन व्यञ्जकत्वमिति सम्बन्धनीयम्। "मौनं चेदम्" इति।—प्रत्ययपरामर्शिनः,—प्रतीयते इति प्रत्ययः,—प्रतीतिविषयः, तस्य परामर्शि—वाचकं तस्य, ["प्रत्यय" इत्यत्र "प्रत्यक्ष" इति क्वचित् पाठः, तथा सति प्रत्यक्षवाचकस्येत्यर्थः]। सर्व्वनाम्नः,—सर्व्वादिगणान्तर्गतस्य प्रातिपदिकस्य, इदंशब्दस्येति यावत्। प्रणयस्मारणस्य—प्रणयं—प्रेम, स्मारयति—प्रत्याययतीति तस्य तथोक्तस्य, प्रेमसूचकस्येत्यर्थः, [अत्र नन्द्यादित्वात् ल्युः]। उपहासेन सह वर्त्तते इति स चासौ उत्प्रासः,—कथनं तस्य। तत्तद्विशेषव्यञ्जकत्वं—तत्तेषाम्—आहारादिविषयविरत्यादिरूपाणां प्रतिपाद्यानां, ये विशेषाः,—प्रकाराः, ["विशेष" इत्यत्र "विषय" इति पाठे—तेषां तेषां ये विषयाः,—प्रतिपाद्या इत्यर्थः] तेषां व्यञ्जकत्वं—तत्कर्म्मद्योतकत्वं, सहृदयसंवेद्यं—सचेतसामनुभवविषयम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शान्तः ; रामायणे करुणः ; मालतीमाधवरत्नावल्यादौ शृङ्गारः। एवमन्यत्र। (ध)

(५१)
**तदेवमेकपञ्चाशद्भेदास्तस्य ध्वनेर्मताः। (न)**

(ध) वर्णरचनयोरिति।—वर्णः,—माधुर्य्यादिगुणव्यञ्जकः, रचना—पदविन्यासविशेषः, साऽपि माधुर्य्यादिगुणव्यञ्जिका, तयोः, माधुर्य्यादिगुणव्यञ्जकत्वादिति भावः। उदाहरिष्यते इति गुणपरिच्छेदे इति शेषः। एवमन्यत्रेति।—"माघे शिशुपालदूतोक्तौ सन्धौ वाच्ये वस्तुमात्ररूपो विग्रहः शब्दशक्तिमूलः प्रबन्धव्यङ्ग्यो दृश्यते" इति चण्डीदासः।

(न) तदेवमिति।—तत्—तस्मात्, एवम्—उक्तरीत्या, तस्य—पूर्वोक्तस्य, ध्वनेः एकपञ्चाशत् भेदा मताः। तथाहि,—लक्षणामूलध्वनिः, अर्थान्तरसङ्क्रमितवाच्यः अत्यन्ततिरस्कृतवाच्य इति द्विविधोऽपि पदवाक्यगतत्वेन चतुर्विधः। असंलक्ष्यक्रमव्यङ्ग्यः, पदपदांशवर्णरचनावाक्यमहावाक्यगतत्वेन षड्विधः। शब्दशक्त्युत्थः संलक्ष्यक्रमव्यङ्ग्यः, वस्त्वलङ्काररूपत्वेन द्विविधोऽपि पदवाक्यगतत्वेन चतुर्विधः। अर्थशक्त्युत्थः संलक्ष्यक्रमव्यङ्ग्यः, वस्त्वलङ्कारयोः स्वतःसिद्धकविप्रौढोक्तिसिद्धकविनिबद्धवक्तृप्रौढोक्तिसिद्धत्वेन षड्विधयोः वस्त्वलङ्कारोभयव्यञ्जकत्वेन द्वादशविधोऽपि पदवाक्यमहावाक्यगतत्वेन त्रैविध्यात् षट्त्रिंशत्प्रकारः। उभयशक्त्युत्थस्तु वाक्यगतः, एकविध एवेति [पूर्व्वं पञ्चविंशद्भेदाः उक्ताः ; अर्थशक्तिमूलध्वनेः प्रबन्धप्रकाश्यत्वेन पुनर्द्वादशविधत्वम्। असंलक्ष्यक्रमव्यङ्ग्यध्वनेरपि पदांशवर्णरचनाप्रबन्धप्रकाश्यत्वेन चतुर्विधत्वमिति षोड़श] मिलित्वा एकपञ्चाशद्विधो ध्वनिरिति फलितार्थः। यद्यप्यर्थानां वाच्यलक्ष्यव्यङ्ग्यभेदेन पदांशानाञ्च प्रकृत्यादिभेदेनातोऽधिका अपि प्रकाराः भवन्ति, तथापि सम्प्रदायानुरोधेनैकपञ्चाशत्वमेव दर्शितम्। अत्र वैशद्यविन्यासः,—अविवक्षितवाच्यविवक्षितान्यपरवाच्यसंज्ञौ लक्षणाऽभिधामूलकौ प्रथमं ध्वनेः द्वौ प्रकारौ। अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्यत्वनिमित्तकत्वेन द्विप्रकारस्य अविवक्षितवाच्यस्य वाक्यपदाश्रयत्वेन द्वैविध्ये चतुःप्रकारत्वम्। संलक्ष्यक्रमव्यङ्ग्यासंलक्ष्यक्रमव्यङ्ग्यभेदेन विवक्षितान्यपरवाच्यस्य द्विप्रकारत्वं, शब्दशक्तिमूलकसंलक्ष्यक्रमव्यङ्ग्यस्य वस्त्वलङ्कारात्मकत्वेन द्विप्रकारत्वे वाक्यपदगतत्वनिमित्तकं चतुःप्रकारत्वम्। अर्थशक्तिमूलकसंलक्ष्यक्रमव्यङ्ग्यस्य स्वतःसम्भवितार्थेन कविप्रौढोक्तिसिद्धत्वार्थेन कविनिबद्धवक्तृप्रौढोक्तिसिद्धत्वार्थेन च त्रिप्रकारत्वम्। तस्य पुनः वस्त्वलङ्काररूपत्वेन द्विप्रकारत्वे षट्-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रकारत्वम्। तस्य चापि व्यङ्ग्यव्यञ्जकत्वभेदेन द्विप्रकारत्वे द्वादशप्रकारत्वम्। द्वादशप्रकारस्य पुनः प्रबन्धगतत्व-वाक्यगतत्व-पदगतत्वरूपत्रिप्रकारेण अर्थशक्तिमूलोऽनुरणनात्मकः ध्वनिः षट्त्रिंशत्प्रकारकः। शक्तिद्वयमूलकः वाक्यगतत्वेनैकप्रकारः; संलक्ष्यक्रमव्यङ्ग्यध्वनेः एवमेकचत्वारिंशद्भेदाः। असंलक्ष्यक्रमव्यङ्ग्याह्वस्य प्रबन्धवाक्यपदपदैकदेशरचनावर्णगतत्वभेदेन रसादिध्वनेः षट्प्रकारत्वम्; विवक्षितान्यपरवाच्यध्वनेः सप्तचत्वारिंशत्प्रकाराः एवं ज्ञेयाः। अविवक्षितवाच्यस्य चतुर्विधभेदैः साकं प्रथमं विशुद्धरूपाः एकपञ्चाशद्भेदाः ध्वनेरवगन्तव्याः। ते पृथक् नामनिर्देशेन प्रदर्श्यन्ते।—(१) पदनिष्ठोऽर्थान्तरसंक्रमिताविवक्षितवाच्यध्वनिः, (२) वाक्यनिष्ठोऽर्थान्तरसंक्रमिताविवक्षितवाच्यध्वनिः, (३) पदनिष्ठात्यन्ततिरस्कृताविवक्षितवाच्यध्वनिः, (४) वाक्यनिष्ठोऽत्यन्ततिरस्कृताविवक्षितवाच्यध्वनिः, (५) पदनिष्ठः शब्दशक्तिमूलसंलक्ष्यक्रमवस्तुध्वनिः, (६) पदनिष्ठः शब्दशक्तिमूलसंलक्ष्यक्रमालङ्कारध्वनिः, (७) वाक्यनिष्ठः शब्दशक्तिमूलसंलक्ष्यक्रमवस्तुध्वनिः, (८) वाक्यनिष्ठः शब्दशक्तिमूलसंलक्ष्यक्रमालङ्कारध्वनिः, (९) पदनिष्ठः स्वतःसिद्धार्थशक्तिमूलो वस्तुद्वारको वस्तुध्वनिः, (१०) पदनिष्ठः स्वतःसिद्धार्थशक्तिकारणको वस्तुद्वारकोऽलङ्कारध्वनिः, (११) पदनिष्ठः स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारद्वारकोऽलङ्कारध्वनिः, (१२) पदनिष्ठः स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारद्वारको वस्तुध्वनिः, (१३) वाक्यनिष्ठः स्वतःसिद्धार्थशक्तिमूलो वस्तुद्वारको वस्तुध्वनिः, (१४) वाक्यनिष्ठः स्वतःसिद्धार्थशक्तिमूलो वस्तुद्वारकोऽलङ्कारध्वनिः, (१५) वाक्यनिष्ठः स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारद्वारकोऽलङ्कारध्वनिः, (१६) वाक्यनिष्ठः स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारद्वारको वस्तुध्वनिः, (१७) प्रबन्धनिष्ठः स्वतःसिद्धार्थशक्तिमूलो वस्तुद्वारको वस्तुध्वनिः, (१८) प्रबन्धनिष्ठः स्वतःसिद्धार्थशक्तिमूलो वस्तुद्वारकोऽलङ्कारध्वनिः, (१९) प्रबन्धनिष्ठः स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारद्वारकोऽलङ्कारध्वनिः, (२०) प्रबन्धनिष्ठः स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारद्वारको वस्तुध्वनिः, (२१) पदनिष्ठः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुद्वारको वस्तुध्वनिः, (२२) पदनिष्ठः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुद्वारकोऽलङ्कारध्वनिः, (२३) पदनिष्ठः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारद्वारकोऽलङ्कारध्वनिः, (२४) पदनिष्ठः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारद्वारको वस्तुध्वनिः, (२५) वाक्यनिष्ठः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुद्वारको वस्तुध्वनिः, (२६) वाक्यनिष्ठः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुद्वारकोऽलङ्कारध्वनिः, (२७) वाक्यनिष्ठः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारद्वारकोऽलङ्कारध्वनिः, (२८) वाक्यनिष्ठः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारद्वारको वस्तुध्वनिः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अभिहितान्वयवादिभिरङ्गीकृता तात्पर्य्याख्या वृत्तिरपि संसर्गमात्रे परिक्षीणा न व्यङ्ग्यबोधिनी ( घ )।

यच्च केचिदाहुः,—

"सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः" इति (ङ)।

सङ्केताभाववानित्यर्थः, तेन रसादीनां रसादिपदसङ्केतितत्वेऽपि न क्षतिः। न चेति।—हि—यतः, विभावाद्यभिधानं—विभावादीनाम् [ आद्यादिपदेन अनुभावसञ्चारिणो गृह्यन्ते] अभिधानं—कथनम्, अभिधया प्रतिपादनमिति यावत्, एव तदभिधानं—तस्य—वस्त्वलङ्काररसादेः, अभिधानं, न, तस्य—वस्त्वलङ्काररसादेः, तदेकरूप्यानङ्गीकारात्—आस्वादरूपरसादिप्रतीतितादात्म्यास्वीकारात्, विभावाद्यभिन्नरूपतया अस्वीकारादिति यावत्; तथा च विभावाद्यभिधानानन्तरं जायमानाया आस्वादरूपरसादिप्रतीतेः कारणतया व्यञ्जनाऽवश्यं स्वीकार्य्येति भावः; तादृशप्रतीतेः रसादिपदाजन्यत्वमपि प्रतिपादयति, यत्र चेति।—"तामुद्वीक्ष्य कुरङ्गाक्षीं रसो नः कोऽप्यजायत" इत्यादौ चेत्यर्थः, स्वशब्देन—रसशृङ्गारादिपदेन, अभिधानं—कथनं, रसादेरिति शेषः, तत्र प्रत्युत [ इदं वैपरीत्ये ] दोषः एव [ एवकारेण आस्वादरूपरसप्रतीतिव्यवच्छेदः]। ननु रसस्य स्वशब्दाभिधानं काव्ये एव दोषः, न तु लौकिकवाक्ये, एवञ्च काव्यदोषवशात्तादृशी प्रतीतिर्माऽस्तु, लौकिकवाक्ये तु स्यादेवेत्यत आह, क्वचिच्चेति।—लौकिकवाक्ये चेत्यर्थः, तत्प्रतीतिः,—तस्य रसादेः प्रतीतिः। तस्य—रसस्य, तथा चाभिधया जायमानस्य बोधस्य स्वप्रकाशत्वाभावादानन्दरूपत्वाभावाच्च न रसस्वरूपत्वस्वीकार इति भावः।

( घ ) कारिकोक्तक्रमेण तात्पर्य्यवृत्तेरपि व्यङ्ग्यबोधनाक्षमत्वमुपपादयति, अभिहितेति।—अभिहितानां—कथितानां, सर्वेषां पदानामिति शेषः, अन्वयः,—परस्परं सम्बन्धः, तात्पर्य्यशक्त्या स्वत एव तात्पर्य्यग्राहकतयाऽङ्गाङ्गित्वमिति यावत्, तं वदन्ति—स्वीकुर्व्वन्तीति तैः मीमांसकैरित्यर्थः, अङ्गीकृता, तात्पर्य्याख्या—तात्पर्य्यन्नाम, वृत्तिः अपि संसर्गमात्रे—केवलान्वयबोधे इत्यर्थः, परिक्षीणा—गतशक्तिः, न तस्या अपरार्थबोधने क्षमत्वमिति भावः। एतेन वक्तृतात्पर्य्यरूपैवास्तु व्यञ्जनेति वदन्तः परास्ताः।

( ङ ) शब्दश्रवणानन्तरं यावन्तः अर्थाः प्रतीयन्ते, तावत्स्वेव शब्दस्य अभिधा एव व्यापारः, इति मतमुत्थाप्य दूषयति, सोऽयमिति।—अतिदीर्घः इषुव्यापारो यथैकलक्ष्यं भित्त्वा लक्ष्यान्तरमपि भिनत्ति, तथा एकैवाभिधा वाच्यार्थं बोधयित्वा व्यङ्ग्यार्थमपि बोधयतीति भावः; यथा इषुः बलवद्वीरेण प्रक्षिप्तः, प्रचण्डजवाभिधेन क्रिया-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यच्च ध्वनिकेनोक्तम्,—

"तात्पर्य्याव्यतिरेकाच्च व्यञ्जकत्वस्य न ध्वनिः।
यावत्कार्य्यप्रसारित्वात् तात्पर्य्यं न तुलाधृतम्॥" इति (च)

तयोरुपरि "शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभावः" इति वादिभिरेव पातनीयो दण्डः। (छ)

---

योगेन कवचोद्भेदनं वक्षोविदारणं जीवनापहरणञ्च प्रतियोद्धुः सम्पादयति, तथैक एव शब्दः अभिधाऽऽख्येन एकेनैव क्रियायोगेन पदार्थस्मरणं, वाक्यार्थविज्ञानं, व्यङ्ग्यार्थप्रत्ययञ्च संविधत्ते,तस्माद्व्यङ्ग्यत्वसम्मतस्य अर्थविशेषस्य वाच्यगम्यत्वमेवेति सारः। भट्टमतोपजीविनां लोल्लटादीनामयमाशयः इति।

(च) तात्पर्य्येति।—तात्पर्य्यस्य अव्यतिरेकात्—अभिन्नत्वात्, शब्दादेरिति शेषः, तथा च शब्दादिसम्बन्धिनस्तात्पर्य्यस्य भिन्नत्वाभावादित्यर्थः, व्यञ्जकत्वस्य—व्यञ्जनाया, न ध्वनिः,—न व्यञ्जनानाम्नी वृत्तिरङ्गीकार्य्या इत्यर्थः, एवञ्च तात्पर्य्य-वृत्तिरेव व्यङ्ग्यबोधिनीत्यर्थः। नन्विदं संसर्गमात्रबोधकं कथं व्यङ्ग्यं बोधयतु? इत्याह, यावदिति।—तात्पर्य्यं यावत्कार्य्यप्रसारित्वात्—यावन्ति कार्य्याणि इति यावत्कार्य्यं, तत्र प्रसारित्वात्—व्यापकत्वात्, तुलया—तोलनपात्रेण धृतं न, तात्पर्य्यम् एतावत्कार्य्यं साधयेत्, नान्यत्, इति नेत्यर्थः। अयं भावः,—व्यञ्जना तात्पर्य्यञ्च नामतो भिद्येते, न पुनः स्वरूपतः; तात्पर्य्यं हि न केनापि तुलायां धृत्वा द्रव्यमिव एताव-दिति निश्चितम्। संसर्गमात्रबोधकत्वेन न नियन्त्रितमित्यर्थः; एतस्य सर्व्वकार्य्य-व्यापित्वात्। अतः वाक्यस्य तात्पर्य्यार्थस्वीकारेणैव व्यञ्जनया प्रतिपाद्यस्यार्थस्य गतार्थत्वेन व्यञ्जनायाः पुनः स्वीकारौचित्यम् इति।

(छ) तयोरिति।—तयोः,—इषुवत् अभिधाव्यापारवादि-यावत्कार्य्यप्रसारि-तात्पर्य्यवादिनोरित्यर्थः। शब्देति।—शब्दबुद्धिकर्म्मणां विरतानां व्यापारोत्थानं न पुन र्भवतीत्यर्थः; तत्र शब्दः,—घटादिः, बुद्धिः,—ज्ञानं, कर्म्म—क्रिया, एतेषां विरतत्वं नाम एकं व्यापारमुत्पाद्य द्वितीयं व्यापारमुत्पादयितुं स्थगितत्वम्। तथा सति घटादिः शब्दः एकमर्थं बोधयित्वा विरतः सन् नान्यमर्थं बोधयितुं शक्नोति, बुद्धिः एकमर्थं विषयीकृत्य नान्यमर्थं विषयीकर्त्तुं शक्नोति। इदमुक्तं,—यया बुद्ध्या घटो विषयीक्रियते, न तया पुनः पटो विषयीकर्त्तुं पार्य्यते, तदानीं बुद्धेः घटाकारेणावतिष्ठमानायाः पटाकारेणाव-स्थातुमशक्यत्वात्। तत एवोक्तं,—बुद्धिरेकमर्थं विषयीकृत्य नान्यं विषयीकर्त्तुं शक्नोतीति विरम्य तस्या व्यापाराभावात्, तथा पचनादिरूपं क्रियाऽपरपर्य्यायं कर्म्म एकं स्वानुकूलं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एवञ्च किमिति लक्षणाऽप्युपास्या ? दीर्घदीर्घतराभिधाव्यापारेणापि तदर्थबोधसिद्धेः । (ज) किमिति च "ब्राह्मण ! पुत्रस्ते जातः," "कन्या ते गर्भिणी" इत्यादावपि हर्षशोकादीनामपि न वाच्यत्वम् । (झ)

---

तण्डुलादीनां विक्लेदनादिरूपं व्यापारं निष्पाद्य नापरं निष्पादयितुं शक्नोति। इदं तत्त्वम् ;—"तण्डुलान् पचति" इत्यादौ तण्डुलपाकाद्यनुकूला क्रिया "ग्रामं गच्छति" इत्यादौ गमनाद्यनुकूला न भवति वक्तुं शक्या, तस्य तथैव सम्पद्य वर्त्तमानत्वात्, तस्मात् तस्या अन्यथासम्पद्यमानत्वम् असम्भवीति विरतव्यापारत्वं बाढ़म् । इति ।

(ज) ननु मुद्रादयो विरता नान्यमर्थं बोधयितुं शक्नुवन्तीति नोपपद्यते, एकया मुद्रया एकेन शब्दादिना च बहुकार्य्यसाधनस्य अनेकार्थादिबोधनस्य च सर्व्वदैव प्रसिद्धेरित्यस्वरसमाशङ्क्याह, एवञ्चेति ।—एवञ्च—निरुक्तप्रकारेण पुनः, अभिधयैव व्यङ्ग्यबोधस्वीकारेण चेत्यर्थः, किमिति—किमर्थम् ? यदि तथाविधेन अभिधासामर्थ्येनैव व्यञ्ज्यतया बोध्योऽर्थोऽपि बोध्यत्वेन स्वीक्रियते, तदा किमभिप्रायो लक्षणाया अपि स्वीकारः ? लक्षणया बोध्यस्याप्यर्थस्य तथाविधेन अभिधाव्यापारेणैव बोध्यत्वस्वीकार्य्यात् इत्यर्थः । अयं भावः,—"सोऽयमिषोरिव" इत्यभिधायिनो मीमांसकाः, मीमांसायाश्च आचार्य्यो जैमिनिः, तथा सिद्धान्ते च स्वाचार्य्यसिद्धान्तेनापि विरोधः ; तथा हि,—"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्ब्बल्यमर्थविप्रकर्षात्" (मीमां० द० ३ अ० ६ पा० १४ सू०) इति जैमिनिसूत्रम् ; एतेन च श्रुतिलिङ्गादीनां पूर्व्वपूर्व्वबलिष्ठत्वं परपरदुर्बलत्वञ्च प्रतिपादितम् । अथ यदि यथा श्रुतिस्थले तथा लिङ्गस्थलेऽपि शब्दाऽऽकर्णनोत्तरमवगम्यमानानामर्थानां दीर्घदीर्घतराभिधासामर्थ्येनैव अवगतिः स्यात्, तदा लिङ्गप्रभृतीनां दुर्बलत्वं कथङ्कारमुपपत्स्यते ? इति, विस्तरस्तु माधवीये जैमिनिन्यायमालाविस्तरे, आपदेवरचिते मीमांसान्यायप्रकाशे, रामेश्वरभिक्षुरचितायां मीमांसाऽर्थसङ्ग्रहकौमुद्यां, श्रीकृष्णयाज्ञिकनिर्म्मितायां मीमांसापरिभाषायाञ्चेति दिक् । तदर्थस्य —लक्षणाजन्यबोधविषयस्य, लक्ष्यार्थस्य इत्यर्थः, बोधसिद्धेः,—प्रतीतिसिद्धेः । तथा हि, लक्षणाजन्यबोधात्तरमपि व्यङ्ग्यबोधाय अभिधासत्त्वस्वीकारे लक्षणासत्त्वस्वीकारस्य अकिञ्चित्करत्वमिति भावः ।

(झ) ननु लक्षणाया अपि अस्वीकारे का हानिः ? इति सामान्यतः समाशङ्क्याह, किमिति चेति ।—ते—तव, सम्बोध्यस्येति यावत्, पुत्रो जातः,—उत्पन्नः, कन्या—अनूढ़ा पुत्री च, गर्भिणी—गर्भवती, धृतसन्तानबीजा वर्त्तते इति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यत्पुनरुक्तं "पौरुषेयमपौरुषेयञ्च वाक्यं सर्वमेव कार्य्य-परम्, अतत्परत्वेऽनुपादेयत्वादुन्मत्तवाक्यवत्, ततश्च काव्य-शब्दानां निरतिशयसुखास्वादव्यतिरेकेण प्रतिपाद्यप्रति-पादकयोः प्रवृत्त्यौपयिकप्रयोजनान्तरानुपलब्धेर्निरतिशयसुखा-स्वाद एव कार्य्यत्वेनावधार्य्यते; "यत्परः शब्दः स शब्दार्थः" इति न्यायादिति। (ञ)

भावः, इत्यादौ अपि वाक्ये श्रूयमाणे हर्षशोकादीनां पुत्त्रजननश्रवणादिना मनसि स्फुरतो हर्षादिबोधस्य, कन्याया अन्तर्वत्नीत्वश्रवणादिना कुलकलङ्कबोधादिना शोकादिसम्पत्तेश्च न वाच्यत्वमापद्येतेति भावः। "पुत्त्रस्ते जातः, कन्या ते गर्भिणी" इत्यादीनामपि "विधुरुदितः, सूर्य्योऽस्तमितः" इत्यादीनामिव वाचकत्वाङ्गीकार-स्यैवौचित्यात्। तव मते व्यञ्जकत्वाभावात् वाचकत्वाङ्गीकारस्य सर्व्वत्र आपातत उपस्थितौ तथा प्रातिस्विकस्य बोधस्य निर्म्मूलत्वमेव। अस्मन्मते तु व्यञ्जनारूपस्य व्यापारान्तरस्य जागरूकत्वान्न काऽपि क्षतिः; इति दरमुकुलितनयनं स्वहृदये निहित-करेण क्षणं विचार्य्य वाच्यम्।

(ञ) रसादीनां तात्पर्य्यविषयत्वमनुमानेन गतार्थयतामन्विताभिधानवादिनां मतं दर्शयति, यत्पुनरित्यादिना।—यत्पुनः उक्तम्—अन्विताभिधानवादिना सिद्धान्तितं, पौरुषेयं—पुरुषस्येदं, "दध्यानय" इत्यादि लौकिकवाक्यं, "धर्म्म एव हतो हन्ति" इत्यादि मन्वादिवाक्यञ्चेत्यर्थः, अपौरुषेयं—यन्न पौरुषेयं, "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादि नैगमं वाक्यम्; तदेतत्सर्व्वमेव वाक्यं कार्य्यपरं—कार्य्यसाधनप्रयो-जनकम्। कार्य्यं हि दध्यानयन-देवयजनादिरूपं भोजनस्वर्गाद्यर्थपरम्। व्यतिरेक-व्याप्तिं दर्शयति, अतत्परत्वे इति।—अतत्परत्वे स्वीक्रियमाणे पुनः तस्य तस्य वाक्य-स्योपादेयत्वं न स्यात्, उपादेयत्वाभावे चोन्मत्तप्रमत्तजल्पितायितत्वं निर्बाधम् इति वक्तुर्लोऽर्थः। एवञ्च सिद्धमर्थमाह, ततश्चेति।—तत्पुनरित्यर्थः। काव्यसम्बन्धिनां शब्दानां निरतिशयसुखास्वादनमेव फलं, तदतिरिक्तस्य च अनुपलब्धेः; प्रतिपाद्य-प्रतिपादकयोः,—"दध्यानय" "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादीनां यं प्रत्यभिधानं, स प्रतिपाद्यः; यश्चाभिधाता, स प्रतिपादक इति तयोः,—श्रोतृवाचकयो-रित्यर्थः; प्रवृत्तिः,—काव्यश्रवणकाव्यपाठयोरिच्छा इत्यर्थः, तस्या औपयिकं—युक्तियुक्तं साधकमित्यर्थः, यत्प्रयोजनान्तरं—निरतिशयानन्दात् अन्यत् प्रयोजनं, तस्य अनुप-लब्धेः,—शब्देनानुपस्थितेः हेतोः, अवधार्य्यते—निर्णीयते, तात्पर्य्येणेति शेषः।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र प्रष्टव्यम् ;—किमिदं तत्परत्वं नाम ? तदर्थत्वं वा, तात्पर्य्यवृत्त्या तद्बोधकत्वं वा ? आद्ये न विवादः, व्यङ्ग्यत्वेऽपि तदर्थताऽनपायात् । द्वितीये तु केयं तात्पर्य्याख्या वृत्तिः ? अभिहितान्वयवादिभिरङ्गीकृता, तदन्या वा ? आद्ये दत्तमेवोत्तरम् । द्वितीये तु नाममात्रे विवादः ; तन्मतेऽपि तुरीयवृत्तिसिद्धेः । (ट)

नन्वस्तु युगपदेव तात्पर्य्यशक्त्या विभावादिसंसर्गस्य रसादेश्च प्रकाशनमिति चेन्न, तयोर्हेतुफलभावाङ्गीकारात् । यदाह मुनिः,—"विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्तिः" इति । सहभावे च कुतः सव्येतरविषाणयोरिव कार्य्यकारणभावः ? पौर्वापर्य्यविपर्य्ययात् । (ठ)

---

उक्तमर्थं मीमांसकमतेन द्रढ़यति, यत्पर इति ।—शब्दः यत्परः,—यत्र यद्बोधेच्छया प्रयुक्तः इत्यर्थः, स शब्दार्थः,—शब्दप्रतिपाद्यः, इति, ततश्च तात्पर्य्येणैव रसादिप्रतीतिर्भवेत्, न तदर्थं व्यञ्जनाऽङ्गीकार्य्या इति भावः ।

(ट) एतन्मतं दूषयति, तत्रेति ।—व्यङ्ग्यत्वे—व्यञ्जनया बोध्यमानत्वे, अपि किं पुनरबोध्यमानत्वे इत्यर्थः, तदर्थताऽनपायात्—तदर्थतायाः,—तत्परतायाः, अनपायात्—अनपगमात् । व्यञ्जनावादिमते सिद्धसाधनमिति भावः । द्वितीये त्विति ।—अत्राभिधया "कार्य्यं कुरु" इत्यादिवाक्ये, जलाऽऽहरणार्थं "घटमानय" इत्यादौ च कार्य्यप्रतिपादके व्यभिचारोऽपि द्रष्टव्यः । दत्तमिति ।—संसर्गबोधे परिक्षीणत्वात् कार्य्यबोधनाक्षमत्वं तात्पर्य्यस्येत्युत्तरं बोध्यम् । तन्मतेऽपि—रसादीनां तात्पर्य्यग्राह्यत्ववादिमतेऽपि । स्पष्टमन्यत् ।

(ठ) ननु विभावादिसंसर्गबोध-रसादिबोधयोः क्रमिकत्वाङ्गीकार एव दूषणमुक्तं, यौगपद्याङ्गीकारे तु नास्यावसर इत्यभिप्रायेणाह, नन्वस्त्विति ।—तयोः,—विभावादिसंसर्गस्य रसादेश्चेत्यर्थः, हेतुफलभावाङ्गीकारात्—कारणकार्य्यभावस्वीकारात् । मुनिवचनेन द्रढ़यति, यदाहेति ।—"विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्तिः" इति । तत्र विभावाद्यर्थोऽभिहिताः, एतेषां संयोगः,—सम्बन्धः, तस्मात्, रत्यादीनाम् इति शेषः, रसनिष्पत्तिः,—रसात्मना प्रतीयमानत्वम् । इदमत्रावधेयम् ;—विभावानुभावेति भरतमुनिसूत्रम्, इदञ्च स्वस्वमेधोन्मेषसमुन्मेषवशेन अनेकैर्महाऽनुभावैः विभा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वितार्थमपि भरतमतेन पुनर्विभाव्यते,—"विभाव इति कस्मात्? उच्यते,—विभावो विज्ञानार्थः, विभाव्यन्तेऽनेन वागङ्गसत्त्वाभिनया इत्यतो विभावः, विभावितं विज्ञातमित्यनर्थान्तरम्। अत्र श्लोकः,—"बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रयाः। अनेन यस्मात् तेनायं विभाव इति संज्ञितः॥" अथानुभाव इति कस्मात्? उच्यते,—यदयमनुभावयति वागङ्गसत्त्वकृतमभिनयम्। अत्र श्लोकः,—"वागङ्गसत्त्वाभिनयैर्यस्मादर्थो विभाव्यते। वागङ्गोपाङ्गसंयुक्तस्त्वनुभाव इति स्मृतः॥" एवमेतेषां विभावानुभावसंयुक्तानां लक्षणनिर्देशनान्यभिव्याख्यास्यामः। तत्र विभावानुभावौ लोकप्रसिद्धौ। लोकस्वभावोपगतत्वादनयोर्लक्षणं नोच्यतेऽतिप्रसङ्गनिवृत्त्यर्थम्; अत्र श्लोकः,—"लोकस्वभावसंसिद्धा लोकयात्राऽनुगामिनः। अनुभावा विभावाश्च ज्ञेयास्त्वभिनयैर्बुधैः॥" तत्राष्टौ भावाः स्थायिनः, त्रयस्त्रिंशद् व्यभिचारिणः, अष्टौ सात्त्विकाः, एवमेते काव्यरसाभिव्यक्तिहेतव एकोनपञ्चाशद्भावाः प्रत्यवगन्तव्याः। एभ्यश्च सामान्यगुणयोगेन रसा निष्पद्यन्ते। भवति चात्र श्लोकः,—"योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः। शरीरं व्याप्यते तेन शुष्ककाष्ठमिवाग्निना॥" अत्राह,—कथं स्थायिन एव भावाः रसत्वमाप्नुवन्ति? उच्यते,—यथा हि समानलक्षणाः तुल्यपाणिपादोदरशरीराः समानाङ्गप्रत्यङ्गाः कुलविद्याकर्मशिल्पविचक्षणत्वाद्राजत्वमाप्नुवन्ति, तत्रैव च अन्येऽल्पबुद्धयस्तेषामेवानुचरा भवन्ति, तथा विभावानुभावव्यभिचारिणः स्थायिभावानुपाश्रिता भवन्ति, बह्वाश्रयत्वात् स्वामिभूताः स्थायिनो भावाः। तत्स्थानीयपुरुषगुणभूता अन्ये भावास्तान् गुणतया आश्रयन्ते परिजनभूताः व्यभिचारिणो भावाः। यथा नरेन्द्रो बहुजनपरिवारोऽपि स एव नाम लभते, नान्यः सुमहानपि पुरुषः, तथा विभावानुभावव्यभिचारिपरिष्कृतः स्थायिभावो रसतां लभते। "यथा नराणां नृपतिः शिष्याणाञ्च यथा गुरुः। एवं हि सर्व्वभावानां भावः स्थायी महानिह॥.........." को दृष्टान्तः? अत्राह यथा,—नानाव्यञ्जनौषधिद्रव्यसंयोगाद् रसनिष्पत्तिः। यथाहि गुड़ादिभिर्द्रव्यैः व्यञ्जनैरौषधिभिश्च षाड़वादयो रसा निवर्त्तन्ते, तथा नानाभावोपगता अपि स्थायिनो भावाः रसत्वमाप्नुवन्ति इति। एतेन विभावादीनां संयोगो हेतुरिति प्रतिपादितम्। विभावादिसंसर्गः रसप्रतीतौ हेतुः, रसश्च कार्य्यम्; तत् कथं तयोर्यौगपद्ये प्रतीतिः? कार्य्यकारणयोः पौर्व्वापर्य्यनियमात्; न हि कार्य्यं कारणञ्च युगपद्भवतीति भावः। सहभावे—युगपदुत्पत्तौ, सव्येतरविषाणयोः,—वामदक्षिणशृङ्गयोः, इव कुतः,—कथं, कार्य्यकारणभावः? शृङ्गयोः समकाले उत्पन्नयोर्यथा परस्परं कार्य्यकारणभावो न स्यात्, तथा विभावादिसंसर्गरसयोः तथात्वे मुनिवचनविरोध इति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"गङ्गायां घोषः" इत्यादौ तटाद्यर्थमात्रबोधनविरताया लक्षणायाश्च कुतः शैत्यपावनत्वादिव्यङ्ग्यबोधकता ? तेन तुरीया वृत्तिरुपास्यैवेति निर्विवादमेतत्। (ड)

किञ्च,—

**बोद्धृस्वरूपसङ्ख्यानिमित्तकार्य्यप्रतीतिकालानाम् ।**
**आश्रयविषयादीनां भेदाद्भिन्नोऽभिधीयते व्यङ्ग्यः ॥२७१॥(ढ)**

वाच्यार्थव्यङ्ग्यार्थयोर्हि पदतदर्थमात्रज्ञाननिपुणैर्वैयाकरणैरपि सहृदयैरेव च संवेद्यतया बोद्धृभेदः ; "भम धम्मिअ !" इत्यादौ क्वचिद्वाच्ये विधिरूपे निषेधरूपतया, क्वचित् "निःशेषच्युतचन्दनम्" इत्यादौ निषेधरूपे विधिरूपतया च स्वरूपभेदः । "गतोऽस्तमर्कः" इत्यादौ च वाच्योऽर्थ एक एव प्रतीयते, व्यङ्ग्यस्तु तद्बोद्ध्रादिभेदात् ; क्वचित् "कान्तमभिसर"

(ड) ननु लक्षणया रसादिबोध आस्तामित्याशङ्क्याह, गङ्गायामिति ।— तुरीया—चतुर्थी । स्पष्टमन्यत् ।

(ढ) अभिधेयव्यङ्ग्ययोरन्योऽन्यं भेदमुपपाद्य, तेनैव अभिधातः व्यञ्जनायाः भेदमुपपादयति, किञ्चेत्यादिना ।—बोद्धा च स्वरूपञ्च सङ्ख्या च निमित्तञ्च कार्य्यञ्च प्रतीतिश्च कालश्चेति तेषाम् ; तत्र बोद्धा—ज्ञाता, स्वरूपं—विधिरूपं, निषेधरूपं वा ; सङ्ख्या—प्रसिद्धा, निमित्तं—कारणं, कार्य्यं—प्रसिद्धं, प्रतीतिः,—निश्चयः, कालः,—पौर्व्वापर्य्यम् । आश्रयविषयादीनाम्—आश्रयश्च विषयश्चेति तावादौ येषां तेषाम् । एतदनन्तरं चकारो द्रष्टव्यः । तत्र आश्रयः,—अवलम्बनं, विषयः,—प्रतिपाद्योऽर्थः, [आदिना देशौचित्यादीनां ग्रहणं] भेदात्—भिन्नत्वात्, व्यङ्ग्यः,—व्यञ्जनया बोध्योऽर्थः, भिन्नः,—भेदं प्राप्तः, अभिधीयते । अत्र "वाच्यात्" इत्यस्यानुषङ्गः [ "अभिधेयतः" इति पाठे—वाच्यार्थात् इति तदर्थो ज्ञेयः ] अयं भावः,—वाच्यस्य अर्थस्य यो बोद्ध्रादिः, सोऽन्य एव, यश्च व्यङ्ग्यस्यार्थस्य, स चान्यः ; इति तयोः परस्परमनैक्यात् स्वाद्भेदो विदितचरः । यद्वा,—व्यङ्ग्योऽर्थो बोद्ध्रादिभेदादनेकविधतां यथा प्रतिपद्यते, न तथा वाच्योऽर्थः ; तस्मात् स्फुट एव बोद्ध्राद्यनेकविधत्वाद् व्यङ्ग्यस्य अनेकविधत्वं, वाच्यस्य च बोद्ध्राद्यनेकविधत्वाभावादेकविधत्वम् इति भावः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इति, "गावो निरुध्यन्ताम्" इति, "नायकस्य अयमागमनावसरः" इति "सन्तापोऽधुना नास्ति" इत्यादिरूपेणानेक इति सङ्ख्या-भेदः। वाच्यार्थः शब्दोच्चारणमात्रेण वेद्यः। एष तु तथाविध-प्रतिभा-नैर्मल्यादिनेति निमित्तभेदः। प्रतीतिमात्रकरणात् चमत्कारकरणाच्च कार्य्यभेदः। केवलरूपतया चमत्कारितया च प्रतीतिभेदः। पूर्वपश्चाद्भावेन च कालभेदः। शब्दाश्रयत्वेन शब्दतदेकदेशतदर्थवर्णसङ्घटनाश्रयत्वेन च आश्रयभेदः। (ण)

---

(ण) बोद्धृभेदं दर्शयति, वाच्यार्थव्यङ्ग्यार्थयोरिति।—पदतदर्थमात्रस्य—पद-पदार्थमात्रस्य, [ मात्रपदेन व्यङ्ग्यव्यवच्छेदः ] ज्ञाने निपुणैः वैयाकरणैः अपि [ एतेन सहृदयानामपि परिग्रहः ] सहृदयैः एव [ एतेन वैयाकरणव्यवच्छेदः ] च संवेद्यतया —बोद्धव्यतया, बोद्धृभेदः; वैयाकरणा वाच्यार्थमेव, न तु व्यङ्ग्यार्थं बोद्धुं शक्नुवन्ति, काव्यतत्त्वं सूक्ष्मतयोद्बोद्धुं शक्ताः सहृदयास्तु उभयमेव वाच्यं व्यङ्ग्यं चेति द्विविधमप्यर्थं बोद्धुं प्रभवन्ति, इति वाच्यार्थबोद्धारो वैयाकरणाः, व्यङ्ग्यार्थबोद्धारस्तु सहृदया एवेति स्फुटं बोद्धृभेद इति भावः। [ ध्वनिकृता गोवर्द्धनसूरिणाऽपि तथोक्तम् ;—"शब्दार्थ-शासनज्ञानमात्रेणैव न वेद्यते। वेद्यते स हि काव्यार्थतत्त्वज्ञैरेव केवलम् ॥" इति। "यदि च वाच्यरूप एवासावर्थः स्यात्, तर्हि वाच्यवाचकरूपपरिज्ञानादेव तत्प्रतीतिः स्यात्। अथ वाच्यवाचकलक्षणमात्रकृतश्रमाणां काव्यतत्त्वार्थभावनाविमुखानां स्वर-श्रुत्यादिलक्षणमिव प्रतीतानां गन्धर्वलक्षणविदामगोचर एवासावर्थः" इति च तद्-व्याख्यायां राजानकगोविन्दभट्टैः ]। स्वरूपभेदं दर्शयति,—"भम धम्मिअ !" इत्यादा-विति।—विधिरूपे वाच्ये सतीत्यन्वयः, निषेधरूपतया, व्यङ्ग्यस्येति शेषः। निषेधरूपे वाच्ये सतीत्यन्वयः। स्वरूपभेदः, वाच्यव्यङ्ग्यार्थयोरिति पूर्व्वेणान्वयः। एवमग्रेऽपि। अत्र च "धार्म्मिक ! भ्रम" इति वाच्यार्थः विधिरूपः, व्यङ्ग्यार्थस्तु निषेधरूपः, इति वाच्यव्यङ्ग्यार्थयोः स्वरूपं सुमहत् भिन्नमिति भावः। "निःशेष"—इति लक्षणवादि-मतेनोदाहरणम्। सङ्ख्याभेदं दर्शयति, गत इति।—बोद्धा—प्रतिपाद्यः, [ आदिना प्रकरणादीनां ग्रहणम् ] अत्र एक एव वाच्यार्थः, व्यङ्ग्यस्तु बहुविध इति भावः। निमित्तभेदं दर्शयति, वाच्यार्थः इति।—शब्दस्य उच्चारणं—ज्ञानं, तन्मात्रेण [ मात्र-शब्देन प्रतिभानैर्मल्यादिव्यवच्छेदः ] वाच्यार्थबोधे शब्दज्ञानस्यैव निमित्तत्वात्। एष तु—व्यङ्ग्यार्थस्तु। प्रतिभेति।—प्रतिभा—गूढार्थग्रहणशक्तिः, तस्या नैर्म्मल्यं—तादृश-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"कस्स व ण होइ रोसो दट्ठूण पिआए सव्वणं अहरम् ।
सभमरपद्मग्घाइणि ! वारिअवामे ! सहस्स दाणीम्" ॥ (त)

ग्रहणप्रतिबन्धकीभूतदुरदृष्टासंसर्गः, [ आदिना वक्त्रादिवैशिष्ट्यज्ञानादिपरिग्रहः ] । कार्य्यभेदं दर्शयति, प्रतीतीति ।—वाच्यार्थे प्रतीतिमात्रं—बोधमात्रं, [ मात्रपदेन चमत्कारव्यवच्छेदः ] व्यङ्ग्यार्थे चमत्कारकरणं—चित्तोल्लासविधानम् । प्रतीतिभेदं दर्शयति, केवलेति ।—वाच्यप्रतीतेः सुखचमत्कारहीनतया, व्यङ्ग्यप्रतीतेस्तदुभयवत्तया भेदः । कालभेदं दर्शयति, पूर्वेति ।—वाच्यार्थव्यङ्ग्यार्थयोः प्रतीतिपौर्व्वापर्य्येण कालभेद इत्यर्थः, वाच्यार्थः प्रथमं प्रतीयते, व्यङ्ग्यार्थस्तु पर्य्यालोचनया परत्र इति भावः । आश्रयभेदं दर्शयति, शब्दाश्रयत्वेनेति ।—वाच्यस्य शब्दमात्राश्रयत्वेन—शब्दमात्रसम्बन्धित्वेन, व्यङ्ग्यस्य शब्दादिसम्बन्धित्वेन तयोराश्रयभेदः । वाच्यार्थः केवलं शब्दमाश्रयति, व्यङ्ग्यार्थस्तु शब्दादिकमिति भावः । तदेकदेशेति ।—शब्दैकदेशेत्यर्थः ; स च प्रकृतिप्रत्ययोपसर्गादिरूपः, तदर्थः,—तस्य—शब्दस्य, अर्थः ।

(त) विषयभेदं दर्शयति, कस्स इति ।—[ "कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् । सभ्रमरपद्माघ्रायिणि ! वारितवामे ! सहस्वेदानीम् ॥" इति संस्कृतम् ] । उपपतिना दष्टाधरां भार्य्यां प्रति क्रुद्धं नायकं छलयितुमीहमानाया नायिकासख्या उक्तिरियम् । हे वारितवामे !—वारिता—निवारिताऽसौ वामा—प्रतिकूला तत्सम्बुद्धौ, हे सभ्रमरपद्माघ्रायिणि !—सभ्रमरं पद्मं जिघ्रतीति तत्सम्बोधने, प्रियायाः सव्रणं—व्रणयुक्तम्, अधरं दृष्ट्वा कस्य—नायकस्य, रोषः,—क्रोधः, न भवति ? अपि तु सर्वस्यैव भवतीत्यर्थः । इदानीं सहस्व, भर्त्तृतर्जनां व्रणवेदनाञ्चेति शेषः । अत्र "वारितवामे" इति "सभ्रमरपद्माघ्रायिणि" इति च साभिप्रायत्वापि वामपद्मशब्दयोर्विशेषणीभूतौ वारितसभ्रमरशब्दौ साभिप्रायौ इति परिकरालङ्कारः । अत्राहुश्चित्रमीमांसाया लोचनकारा गोविन्दभट्टाः,—"कस्य वेति अनीर्ष्यालोरपि, न भवति रोषो दृष्टेति कुतश्चिदेवापूर्व्वतया प्रियायाः सव्रणमधरं दृष्ट्वा—अवलोक्य, सभ्रमरपद्माघ्राणशीले ! शीलं हि कथञ्चिदपि वारयितुं न शक्यम् इति हेतोः, वारिते—वारणायां सत्यपि, वामे—तदनङ्गीकारिणि ! सहस्वेदानीम्, उपालम्भपरम्परामित्यर्थः । अत्रायं भावः,—काचिदविनीता कुतश्चित् खण्डिताधरा तत्सविधसंविधाने भर्त्तरि तमनवलोकयमानयेव कयाचित् विदग्धसख्या तद्वाच्यतापरिहारायैवमुच्यते । सहस्वेदानीमिति वाच्यमविनयवतीविषयम् । भर्त्तृविषयन्तु अपराधो नास्तीत्यावेद्यमानं व्यङ्ग्यम् । तस्याञ्च प्रियतमेन गाढमुपालभ्यमानायां तद्रक्षीकशङ्कितप्रातिवेश्मिक-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इति सखीतत्कान्तविषयत्वेन विषयभेदः; तस्मान्नाभिधेय एव व्यङ्ग्यः। (थ)

तथा,—

**प्रागसत्त्वात् रसादेर्नो बोधिके लक्षणाऽभिधे।**
**किञ्च मुख्यार्थबाधस्य विरहादपि लक्षणा॥२७२॥(द)**

"न बोधिका" इति शेषः। न हि कोऽपि रसनात्मकव्यापाराद् भिन्नो रसादिपदप्रतिपाद्यः पदार्थः प्रमाणसिद्धोऽस्ति, यमिमे लक्षणाऽभिधे बोधयेताम्। किञ्च, यत्र "गङ्गायां घोषः"

लोकविषयश्चाविनयच्छादनेन प्रत्यायनं व्यङ्ग्यम्। तत्सपत्न्याश्च तदुपालम्भतदविनयप्रहृष्टायां सौभाग्यातिशयख्यापनं प्रियाया इति शब्दबलादिति सपत्नीविषयं व्यङ्ग्यम्। सपत्नीमध्ये इयत्खलीकृताऽस्मीति लाघवमात्मनि गृहीतुं न युक्तम्; प्रत्युतायं बहुमानः, सहस्व शोभस्वेदानीमिति सखीविषयं सौभाग्यप्रख्यापनव्यङ्ग्यम्। अद्येयं तव प्रच्छन्नानुरागिणी हृदयवल्लभेत्थं रक्षिता पुनः प्रकटरदनदंशनविधिर्न विधेय इति तच्चौर्यकामुकविषयसम्बोधनं व्यङ्ग्यम्। इत्थं मयैतदपह्नुतमिति स्ववैदग्ध्यख्यापनं तटस्थविदग्धलोकविषयं व्यङ्ग्यम्" इति।

(थ) सखीतत्कान्तविषयत्वेनेति।—अत्र वाच्यार्थबोधे सखी उद्देश्या, समरेणास्या अधरो दष्टः, न पुनः उपपतिना; इति व्यङ्ग्यार्थबोधे उद्देश्यः कान्तः इति विषयभेदः, सख्या कान्तेन चोभयबोधः सम्भवतीति न बोद्धृभेदः। उपसंहरति, तस्मादिति।—न एव व्यङ्ग्य इत्यन्वयः।

(द) व्यङ्ग्यान्तरबोधे यथा तथाऽस्तु, रसादिबोधस्तु व्यञ्जनावृत्त्यङ्गीकारमन्तरेण सर्व्वथा न सम्भवतीत्यभिप्रायेणाह, प्रागिति।—रसादेः प्राक् असत्त्वात्—अविद्यमानत्वात्, बोधात् पूर्व्वं प्रमाणान्तरासिद्धत्वादित्यर्थः, लक्षणाऽभिधे—लक्षणावृत्तिरभिधावृत्तिश्चेत्यर्थः, नो बोधिके—बोधयितुं न शक्नुत इत्यर्थः। लक्षणा अभिधा च प्रमाणान्तरसिद्धमेव वस्तु बोधयतः, इति नियमाभिप्रायेणेदं, रसादिपदन्तु व्यञ्जनासिद्धं रसादिम् अभिधया बोधयतीति न दोष इति भावः। लक्षणया रसादिबोधे बाधकान्तरमाह, किञ्चेति।—किञ्च—अन्यच्च, मुख्यार्थबाधस्य विरहात्—अभावादपि, लक्षणा, नो बोधिका इति शेषः; लक्षणया मुख्यार्थबाधे हि प्रमाणान्तरसिद्धं वस्तु बोध्यते, रसादिबोधे तु न मुख्यार्थबाधः, नापि रसादिः प्रमाणान्तरसिद्धः इति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत्यादावुपात्तशब्दार्थानां बुभूषन्नेवान्वयोऽनुपपत्त्या बाध्यते, (ध) तत्रैव हि लक्षणायाः प्रवेशः। यदुक्तं न्यायकुसुमाञ्जलावुदयनाचार्य्यैः ;—

"श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति।
पदार्थान्वयवैधुर्य्यात् तदाक्षिप्तेन सङ्गतिः॥" इति (न)

---

(ध) पूर्व्वार्द्धं विवृणोति, न हीति।—व्यापारात्—कार्य्यात्। द्वितीयार्द्धं विवृणोति, किन्त्विति।—उपात्तशब्दार्थानां—वाच्यार्थानां, बुभूषन्—भवन्, अन्वयः,—अन्वयबोधः, अनुपपत्त्या—अन्वयानुपपत्तिग्रहेण, बाध्यते—प्रतिबध्यते।

(न) श्रुतेति।—श्रुतान्वयात्—श्रुतानां—शब्दोपात्तानाम्, अन्वयात्—अन्वयबोधजनकात्, वाच्यार्थान्वयबोधजननादित्यर्थः, अनाकाङ्क्षम्—आकाङ्क्षारहितं, वाक्यम् अन्यत्—अर्थान्तरं, न इच्छति—आकाङ्क्षति ; पदार्थान्वयवैधुर्य्यात्—पदार्थानाम्, अन्वयस्य—सम्बन्धस्य, वैधुर्य्यम्—अनुपपत्तिः, तस्मात्, मुख्यार्थान्वयानुपपत्तिग्रहादित्यर्थः, तदाक्षिप्तेन—मुख्यार्थसम्बन्धितया गृहीतेन, अर्थेनेति शेषः, सङ्गतिः,—अन्वयबोधः, भवतीति शेषः। "गामानय" इत्यादीनां वाक्यानां श्रुतमात्राणामन्वयेन स्वस्वार्थबोधकत्वेन स्वमर्थं बोधयितुं न पदान्तराकाङ्क्षित्वम्। "गङ्गायां घोषः" इत्यादीनां पुनः श्रुतमात्राणामन्वयेन स्वस्वार्थाबोधकतया स्वमर्थं बोधयितुं पदान्तराकाङ्क्षित्वमस्त्येवेति तदर्थमवश्यं पदान्तरमाक्षेप्तव्यम् ; तथैवान्वयेन स्वस्वार्थबोधकत्वोपयोगितालाभात् इति भावः। इदमभिहितं भवति,—"कर्म्मणि कुशलः," "गङ्गायां घोषः" इत्यादौ कुशलगङ्गाऽऽदिशब्दानां कुशग्राहिप्रवाहादिरूपो मुख्योऽर्थः, तत्र च बाधसद्भावः, मुख्यार्थस्य च तत्सदृशतीरादौ सम्बन्धः, तत्सदृशतीरादेश्च लक्षणयाऽऽनयनं, तत्सदृशतीरादिरूपैर्मुख्यशब्दैरुद्बोधयितुमसम्भाव्यस्य विवेकित्वपावनत्वादेश्च प्रत्यायनं फलम्, इति कुशलगङ्गाऽऽदिशब्दैः कुशग्राहिसदृश-तीरादि आनीयते। यद्येवं कुशग्राहिसदृश-तीराद्यपि, कुशल-गङ्गाऽऽदिशब्दानां मुख्योऽर्थो भवेत्, तत्र कुशग्राहिता-घोषाधिकरणताऽऽद्यसम्भवरूपो बाधो भवेत्, फलस्य च कुशग्राहि-गङ्गाऽऽदिनिष्ठकुशग्राहिसदृश(विवेकि)त्व-पावनत्वादिविशेषरूपस्य कुशग्राहिसदृश-तीरादिना साक्षात्सम्बन्धो भवेत्, लक्षणया फलोद्बोधनस्य च फलान्तरं भवेत्, तदा कुशलगङ्गाऽऽदिशब्दाः फलं लक्षयेयुः, न चेदं किञ्चित्सम्भवति, अथात्र यदि कुशग्राहि-सदृश-तीरादिनिष्ठविवेकित्वपावनत्वाऽऽद्यात्मनि फलेऽपि लक्षणीये लक्षणीयकुशल-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

न पुनः "शून्यं वासगृहम्" इत्यादौ मुख्यार्थबाधः। यदि च "गङ्गायां घोषः" इत्यादौ प्रयोजनं लक्ष्यं स्यात्, तीरस्य मुख्यार्थत्वं बाधितत्वञ्च स्यात्, तस्याऽपि च लक्ष्यतया प्रयोजनान्तरं, तस्याऽपि प्रयोजनान्तरमित्यनवस्थाऽऽपातः । (प)

घोषादिनिष्ठपावनत्वाद्यात्मकं फलान्तरमङ्गीक्रियेत, तर्हि फलानुपूर्व्या लक्षणाऽङ्गीकारे फलगवेषणानवसाने प्रस्तुतस्य बोधाभावकारिणी अनवस्थाऽऽपद्येतेति ।

(प) प्रकृते मुख्यार्थबाधाभावं दर्शयति, न पुनरिति ।—"शून्यं वासगृहम्..." इत्यादौ—शून्यं वासगृहमित्यमरुशतकीये काव्योदाहरणत्वेन उदाहृतपूर्वे पद्ये इत्यर्थः, मुख्यस्य—वाच्यस्य, अर्थस्य, बाधः,—अनुपपत्तिः, पुनः न। तस्मात् अत्र प्रतीयमानस्य वाच्यतो व्यतिरिक्तस्य अर्थस्य बोधनाय न लक्षणाऽपि अङ्गीकर्त्तुं शक्या स्यात्। अतः प्रतीयमानोऽर्थः वाच्याद्भिन्नो लक्ष्य इत्यभिधातुं चाशक्यः। मुख्यार्थबाधमन्तरा लक्षणाया अप्रवृत्तेरिति भावः। व्यङ्ग्यस्य लक्षणाबोध्यत्वाङ्गीकारे अनवस्थादोषमाह, यदि चेति ।—यदि पुनरित्यर्थः, "गङ्गायां घोषः" इत्यादौ प्रयोजनं लक्ष्यं स्यादिति ।—प्रयोजनं—शैत्यपावनत्वाद्यतिशयः, लक्ष्यं—लक्षणाजन्यबोधविषयः, स्यात् ("तदा" इति अध्याहार्य्यं) तीरस्य मुख्यार्थत्वं—गङ्गाशब्दमुख्यार्थत्वं, बाधितत्वञ्च—बाधश्च स्यात्। चकारेण पावनत्वाद्यतिशयेन लक्षणीयेन सम्बन्धश्चेत्यपि बोध्यम्। न च मुख्यार्थाभिमते तीरे लक्ष्यार्थाभिमतपावनत्वाद्यतिशयस्य सम्बन्धसत्त्वेन कथं तदापत्तिरिति वाच्यं, तीरे तु असम्बद्धे सम्बन्धरूपाहार्य्यप्रतीतिविषयस्य प्रवाहहर्षिपावनत्वाद्यतिशयस्य सम्बन्धाभावात्, स्वाश्रयप्रवाहसम्बन्धित्वादिरूपपरम्परासम्बन्धस्याव्यावर्त्तकत्वेन लक्षणाहेतुत्वाभावात्, तटादिनिष्ठपावनत्वादेस्तु गङ्गापदेनानुपस्थितेः अकिञ्चित्करत्वात्। इष्टापत्तावाह, तस्यापीति ।—तस्यापि—शैत्यपावनत्वादिरूपस्य लक्ष्यमाणप्रयोजनस्यापि, लक्ष्यतया—[विशेषणे तृतीया] लक्ष्यमित्यर्थः, प्रयोजनान्तरम्—अन्यत्प्रयोजनम् इति तथोक्तम्; [मयूरव्यंसकादित्वाचान्यस्यान्तरादेशः, प्रयोजनस्य च पूर्व्वनिपातः]। अनवस्थाऽऽपातः,—असीमत्वात् लक्ष्यप्रयोजनानां न काऽपि व्यवस्थेति भावः। अयं भावः;—"गङ्गायां घोषः प्रतिवसति" इत्यत्र गङ्गाशब्दस्य भगीरथखातावच्छिन्नजलप्रवाहो मुख्यार्थः, तत्र घोषवासाधिकरणत्वासम्भवरूपबाधात्, तत्सम्बद्धतीरस्य लक्षणयोपस्थितिः, लक्षणाप्रयोजनस्य शैत्यपावनत्वाद्यतिशयस्य गङ्गादिशब्दाभिधया बोधयितुमशक्यतया व्यञ्जनयैव बोध इति गङ्गाशब्दस्य तीरं लक्ष्यं, तादृशपावनत्वादि व्यङ्ग्यम्। अथ शङ्कते, यदि चेत्या-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

न चापि प्रयोजनविशिष्ट एव तीरे लक्षणा; विषयप्रयोजनयोर्युगपत्प्रतीत्यनभ्युपगमात्, नीलादिसंवेदनानन्तरमेव हि ज्ञाततायाः अनुव्यवसायस्य वा सम्भवः। (फ)

दिना।—तथाच, यदि गङ्गाशब्दस्य शीतलत्वपावनत्वादिरूपप्रयोजनं लक्ष्यं स्यात्, तदा तीरस्य गङ्गाशब्दमुख्यार्थत्वं स्यात्, तथात्वे तु तत्र घोषवासाद्यधिकरणत्वासम्भवरूपबाधोऽपि स्यात्; मुख्यार्थबाधस्थले एव लक्षणास्वीकारात्। एवं लक्ष्यत्वाभिमतशीतलत्वपावनत्वादेः मुख्यार्थाभिमततीरेण साक्षात्सम्बन्धोऽपि स्यात्, शक्यसम्बन्धे एव लक्षणास्वीकारात्। एवं शीतलत्वपावनत्वादिरूपप्रयोजने लक्षणास्वीकारे तत्र प्रयोजनान्तरमपेक्षणीयं, यतः प्रयोजनादेव लक्षणा स्वीक्रियते। एवं तादृशप्रयोजनान्तरस्यापि लक्ष्यत्वापत्तिः तत्रापि प्रयोजनान्तरस्याप्यपेक्षेत्यनवस्थेति। इदमुक्तम्—अनवस्थाऽऽपाते निर्णयो न जायते, अत एवं न वक्तव्यम्। अस्तु वाऽनवस्थाया अपि स्वीकारः, किन्तु "भक्षितेऽपि लशुने न शान्तो व्याधिः" इतिवत् अनवस्थायामपि पूर्वं पूर्वापेक्षया उत्तरोत्तरस्यैव व्यङ्ग्यत्वेनावशिष्यमाणत्वमापातत आपद्यते इति अनवस्थायाः प्रकृताप्रतिपत्तिकरत्वं दूषकताबीजं न निवारयितुं शक्यमिति भावः।

(फ) विशिष्टलक्षणावादिनां मतं दूषयति, न चापि इति।—प्रयोजनेन—पावनत्वाद्यतिशयेन विशिष्टे, तथा च "अतिपावने तीरे घोषः" इति लक्षणाजन्यो बोधः; तस्य च "गङ्गातटे घोषः" इत्यभिधाजन्यबोधादधिकार्थप्रतीतिः फलम्; एवञ्च फलफलिनोरभेद एव पर्यवसन्नः। इममेव दोषमाह, विषयप्रयोजनयोरिति।—विषयः,—कारणीभूतज्ञानं, प्रयोजनं—फलीभूतज्ञानं, तयोर्युगपत्—समकालिकी, या प्रतीतिः तस्याः अनभ्युपगमात्—अनङ्गीकारात्, एतदभ्युपगमे फलफलिनोरभेदापत्तिः; न हि कारणज्ञानं कार्यज्ञानञ्च समकाले सम्भवतीति भावः। फलफलिनोर्भेदमेव समर्थयति, नीलादीति।—नीलादीनां संवेदनानन्तरमेव—प्रत्यक्षात् परमेव, न तु पूर्वं, यद्वा प्रत्यक्षसमकाले इत्यर्थः, ज्ञाततायाः—प्रकटतायाः, मीमांसकमतानुयायिनां सङ्केतविशेषः इति यावत्, यथा नीलो ज्ञात इत्यादिरूपः, तस्याः, वा—यद्वा, अनुव्यवसायः,—नैयायिकमतानुयायिनां सङ्केतविशेषः, यथा,—नीले प्रत्यक्षे नीलमहं जानामीत्येवंरूपोऽर्थः, तस्य, ततश्च नीलादिप्रत्यक्षं कारणं, तदनन्तरं ज्ञातता वा अनुव्यवसायः तस्य फलं, तयोर्यौगपद्यं न केऽप्यङ्गीकुर्वन्ति। प्रकृते तीरज्ञानात् परमेव शैत्यपावनत्वादिप्रतीतिः, न तु समकालिकीति फलितार्थः। एतदुपलक्षणम्। गङ्गापदादप्रतीयमानस्य पावनत्वादेः तीरे वैशिष्ट्यासम्भवोऽपि द्रष्टव्यः। यदि पुनः दूरतीरा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नानुमानं रसादीनां व्यङ्ग्यानां बोधनक्षमम्।
आभासत्वेन हेतूनां स्मृतिर्न च रसादिधीः॥२७३॥(व)

व्यक्तिविवेककारेण हि—"याऽपि विभावादिभ्यो रसादीनां प्रतीतिः साऽनुमान एवान्तर्भवितुमर्हति। विभावानुभावव्यभिचारिप्रतीतिर्हि रसादिप्रतीतेः साधनमिष्यते। ते हि रत्यादीनां भावानां कारणकार्य्यसहकारिभूतास्ताननुमापयन्त एव रसादीन् निष्पादयन्ति। त एव हि प्रतीयमाना आस्वादपदवीं गताः सन्तो रसा उच्यन्ते, इत्यवश्यम्भावी तत्प्रतीतिक्रमः केवलमाशुभावितया असौ न लक्ष्यते, यतोऽयमव्याप्यभिव्यक्तिक्रमः" इति यदुक्तं तत्र प्रष्टव्यम्;—किं शब्दाभिनयसमर्पितविभावादिप्रत्ययानुमित-रामादिगत-रागादिज्ञानमेव रसत्वेनाभिमतं भवतः, तद्भावनया भावकैर्भाव्यमानः स्वप्रकाशानन्दो वा? आद्ये न विवादः; किन्तु "रामादिगत-रागादिज्ञानं रससंज्ञया नोच्यतेऽस्माभिः" इत्येव विशेषः। द्वितीयस्तु व्याप्तिग्रहणाभावाद्धेतोराभासतयाऽसिद्ध एव। यच्चोक्तं तेनैव,—"यत्र

पेक्षया समीपतीरे पावनत्वाद्यतिशयः सम्भवति, स एव गङ्गापदेन प्रत्याय्यते इति सम्भाव्यते, तदा नायं दोषः। अत एव "तीरस्य मुख्यार्थत्वं बाधितत्वञ्च स्यात्" इत्यत्र ग्रन्थकृता "पावनत्वाद्यतिशयेन लक्षणीयेन सम्बन्धस्य" इत्यापत्तिः काव्यप्रकाशोक्ताऽपि नोक्ता; तयोः सम्बन्धसत्त्वेनापत्त्ययोगादिति भावः।

(व) नाट्ये रामत्वेनाहार्य्यज्ञानविषये नटे, काव्ये तु रामे एव विभावादिभी रत्याद्यनुमानं, ततः तदनुमानोद्बोधितया सामाजिकानां वासनारूपप्रत्यासत्त्या साक्षात्कृतो रामादिरत्यादी रसः, इति श्रीशङ्कुमतानुयायिनां मतं दूषयन् अनुमानप्रमाणलभ्यत्वं रसादेर्निराकरोति, नेति।—हेतूनां—कारणानाम्, आभासत्वेन—दुष्टत्वेन, व्यभिचरितत्वेनेत्यर्थः, अनुमानं—व्याप्तिपक्षधर्म्मताज्ञानं, रसादीनां व्यङ्ग्यानां—व्यञ्जनाजन्यबोधविषयाणां, न बोधने क्षमं—समर्थम्; रसादिबुद्धेः संस्कारजन्यज्ञानत्वेन स्मृतित्वं साधयतां मतं दूषयति, स्मृतिरिति।—स्मृतिः,—संस्कारविशेषः च, रसादीनां धीः,—ज्ञानसाधनं, न। अत्रापि प्रागुक्त एव हेतुर्बोध्यः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यत्र एवंविधानां विभावानुभावसात्त्विकसञ्चारिणामभिधानमभिनयो वा, तत्र तत्र शृङ्गारादिरसाविर्भावः" इति । सुग्रहैव व्याप्तिः पक्षधर्म्मता च । (भ) तथा,—

(भ) कारिकयोक्तमेवार्थं विशदयितुं तत्र तावत् पूर्व्वपक्षमुपपाद्य दर्शयति, व्यक्तिविवेकेति ।—व्यक्तिविवेककारेण—व्यक्तेः,—व्यञ्जनाया वृत्तेः, विवेकः,—"अनुमानेऽन्तर्भावं सकलस्यैव ध्वनेः प्रकाशयितुम् । व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम् ॥" इति तदुक्तदिशाऽनुमानेऽन्तर्भावाय विचारः, तं करोतीति तेन, महिमभट्टेनेत्यर्थः, हि—(निपातानामनेकार्थत्वात्) पुनः, "यदुक्तम्" इत्यग्रेणान्वितम् ; या अपि विभावादिभ्यः,—विभावानुभावसञ्चारिसात्त्विकभावेभ्यः, तेषां सम्बन्धेभ्यः इति यावत्, रसादीनां—रसभावतदाभासादीनां, प्रतीतिः,—प्रतिभासः, पण्डितम्मन्यैः कैश्चित् वाच्यत्वलक्ष्यत्वानालिङ्गिततया स्वीक्रियमाणेति शेषः, सा—तथाविधा विभावादिसम्बन्धाद्रसादीनां प्रतीतिः, अनुमाने—अनुमितौ, व्याप्यस्य दर्शनेन व्यापकस्य निश्चयात्मिकायां बुद्धौ इति यावत्, एव (एवकारेण परानुमतव्यञ्जनाजन्यबोधव्यवच्छेदः)। अन्तर्भवितुम्—अभेदमवगाहितुम्, अर्हति—युज्यते । ननु कथमित्याशङ्क्य तत्कारणं निर्दिशति, विभावेति ।—हि—यतः, ("हि हेतावधारणे" इत्यमरः) विभावानुभावव्यभिचारिणाम्—उपलक्षणेन स्थायिभावानां, सात्त्विकभावानाञ्चेत्यर्थः, प्रतीतिः,—प्रत्ययः, रसादिप्रतीतेः,—रसादीनाम् (आदिपदेन भावतदाभासादीनां ग्रहणम्) प्रतीतिः तस्याः साधनं,—"क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करणं तत् तदा स्मृतम् ॥" इत्युक्तं करणम्, इष्यते—अभिप्रेयते । ननु विभावादिप्रतीतेर्व्याप्तिज्ञानत्वाभावात् कथं तज्जन्यरसादिप्रतीतेरनुमितित्वम् ? अतो विभावादीनां व्याप्यत्वमुपपादयति, ते हीति ।—विभावादयो हीत्यर्थः, रत्यादीनां—रतिहासादीनां, भावानां—स्थायिभावानामित्यर्थः, कारणकार्य्यसहकारिभूताः,—"कारणान्यथ कार्य्याणि सहकारीणि यानि च । रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥ विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः । व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ॥" इत्युक्त्या कारणादिस्वरूपाः सन्तः, धूमादिकारणम् आर्द्रेन्धनादि यथा धूमादिव्याप्यं, वह्न्यादिकार्य्यं धूमादि वह्न्यादिव्याप्यं, तथा रत्यादेः कारणं विभावः, कार्य्यमनुभावश्च रत्यादिव्याप्य इति भावः । तान्—रत्यादीन्, अनुमापयन्तः,—स्वविषयकव्याप्तिपक्षधर्म्मताज्ञानेन बोधयन्तः, यथा "पर्व्वतो वह्निमान् धूमात्" इत्यत्र वह्निव्याप्यधूमवान् पर्व्वत इति प्रतीतिः, तथा "शून्यं वासगृहम्" इत्यादि

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यत् काव्यं तत् शृङ्गाररसवत्, तत्तद्विभावादिमत्त्वात्; इत्यनुमितौ शृङ्गाररसव्याप्य-विभावादिमत् काव्यमिति प्रतीतिर्भवेदिति भावः। रसादिप्रतीतिं प्रति विभावादीनां कारणत्वमुपपादयति, त इति।—त एव—विभावादय एव, प्रतीयमानाः,—प्रतिभास-मानाः, आस्वादपदवीं—रसनीयतापदं, गताः,—प्राप्ताः सन्तः, रसाः उच्यन्ते—रस-गङ्गाधरकारादिभिरभिधीयन्ते, तथा च,—पयो यथाऽम्लयोगेन दधित्वं प्राप्नुवत् दध्नः कारणमुच्यते, तथा विभावादयोऽपि अनुमीयमानरत्यादियोगेन रसादिरूपतां प्राप्नुवन्तो रसादेः कारणान्युच्यन्ते इति भावः। ननु एतादृशकार्य्यकारणभावस्वीकारे रसादेरसं-लक्ष्यक्रमव्यङ्ग्यत्वं कथमुपपन्नम्? अत आह, अवश्यम्भावीति।—अवश्यम्भावी—निश्चितं सम्भवी, तत्प्रतीतिक्रमः,—ताः,—विभावानुभावादिप्रतीति-व्याप्तिपक्षधर्म्मतायहरसा-द्यनुमित्यास्वादरूपाः, याः प्रतीतयः,—प्रत्ययाः, तासां क्रमः,—पौर्वापर्य्यम्; अन्यथा कथं "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति सङ्गच्छेतेति भावः; केवलम् आशुभावितया—शीघ्रोत्पन्नत्वेन, असौ—क्रमः, न लक्ष्यते—नानुभूयते। तथा च, आसां शतपत्रव्यतिभेदवत् क्रमसत्त्वेऽपि सूक्ष्मकालतया स न लक्ष्यते इति भावः। ननु भवतामिदमधिकं कल्पनम्, अत आह, यत इति।—यतः, अयम्—ईदृशः, अस्यापि—रसादेर्व्यङ्ग्यत्वस्वीकारेऽपि, अभिव्यक्तिः,—व्यञ्जनाजन्यबोधः, तस्याः क्रमः। यथा भवतां बोधः प्रथमं विभावाद्युपस्थितिः, ततो रत्यादिव्यञ्जनं, ततः साधारण्याभिमानः, ततो रसाद्युत्पत्तिः इति क्रमसत्त्वेऽपि रसादेरसंलक्ष्यक्रमत्वमुपपन्नं, तथाऽस्माकमपीति भावः। तथोक्तं रसगङ्गाधरकारैः,—विभावा अनुभावाश्च तथा सञ्चारिणः क्रमात्। पक्षाः सपक्षाः कथिता विपक्षा रसबोधने॥ वस्तुनोऽलङ्कृतेर्वाऽपि व्यङ्ग्यत्वे तु मनीषिणः। वक्तृवाच्यादिधीवृत्तीः पक्षादीन् सम्प्रचक्षते॥" इति दिक्। इत्थेवं रसगङ्गाधर-कारादिसिद्धान्तमनुसृत्य व्यक्तिविवेकं रचितवतो महिमभट्टाचार्य्यस्य मतमुपन्यस्य तत् खण्डयितुमुपक्रमते, तत्रेति।—तत्र—निरुक्तसिद्धान्तस्वीकारे, प्रष्टव्यं—जिज्ञास्यम्। तदेव निर्दिशति, किं शब्देति।—शब्दाभिनयेन—दृश्यश्रव्यरूपकाव्यद्वयाभिप्रायेण इत्यर्थः, समर्पितः,—उत्पादितः, यः विभावादीनां प्रत्ययः,—प्रतीतिः, तेन अनुमितः, रामादिगतः यः रागादिः,—सीताऽऽदिविषयकः प्रणयादिः, तस्य ज्ञानं—प्रतीतिः, एव रसत्वेन—रसस्वरूपेण, भवतः,—तव, रसगङ्गाधरकारादिमतानुयायिनः महिम-भट्टाचार्य्यस्येत्यर्थः, अभिमतं—स्वीकृतम्, किमिति पूर्व्वतोऽन्वेति। तद्भावनया—तस्य भावनया, रामादिगतरागादिध्यानरूपेण विभावादिबोधेनेत्यर्थः, भावकैः,—सहृदयैः, भाव्यमानः,—आस्वाद्यमानः, स्वप्रकाशानन्दः,—स्वेन—आत्मना, प्रकाशो यस्य सः रसत्वेनाभिमतः इति शेषः, (अभिमतः इति लिङ्गव्यत्ययेनान्वयः)। व्याप्ति-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"याऽर्थान्तराभिव्यक्तौ वः सामग्रीष्टा निबन्धनम् ।
सैवानुमितिपक्षे नो गमकत्वेन सम्मता ॥" (म) इति

इदमपि नो न विरुद्धम् । न हि एवंविधा प्रतीतिरास्वाद्यत्वेन अस्माकमभिमता; किन्तु स्वप्रकाशमात्रविश्रान्तः

---

ग्रहणाभावादिति ।—व्याप्तिग्रहणाभावात्—पक्षधर्मताऽनुपपत्तेरित्यर्थः । असिद्धः,—नानुमितिविषयः; शांचियजरन्मीमांसकादीनां विभावादिप्रत्ययसत्त्वेऽपि स्वप्रकाशानन्दानुत्पत्तिदर्शनादयं हेतुर्व्यभिचारी, इति व्याप्तिग्रहाभावात् तस्यानुमानं न सम्भवतीति भावः । प्रकारान्तरेण व्याप्तिग्रहं साधयित्वा रसादेः अनुमानसिद्धत्वं साधयति, यच्चोक्तमिति ।—तेनैव—व्यक्तिविवेककारेणैव, एवंविधानां—तत्तद्व्यापारशालिनामित्यर्थः, विभावनादिव्यापारभागिनामिति भावः, अभिधानं—शब्देनोपस्थापनम्, अभिनयः,—नटचेष्टाऽऽदिभिरुपस्थापनम् । रसाविर्भावः,—रसाद्युत्पत्तिः । व्याप्तिरिति ।—यत्र यत्र धूमस्तत्र तत्र वह्निरिति साहचर्यनियमः, साध्याभाववदवृत्तित्वमिति भावः, सुग्रहैव—विभावनादिव्यापारभागि विभावाद्युपस्थानं रसाद्याविर्भावव्याप्यमिति व्याप्तिग्रहः, शांचियादीनान्तु विभावादेरेवोपस्थितिः, न तु विभावनादिव्यापारभागिनः, तत्र तादृग्व्यापारास्वीकारादिति न व्यभिचारः । पक्षधर्मता—पक्षस्य—व्याप्यस्य, धूमादेरिति यावत्, पर्वतादिसत्त्वमिति भावः, सुग्रहैवेत्यन्वयः,"अहं रामाद्याविर्भावव्याप्यतादृग्विभावाद्युपस्थानवान्" इति सामाजिकानां व्याप्तिविशिष्टपक्षधर्मताग्रहः । अत्र व्याप्तिः,—अव्यभिचारिहेतुत्वं, पक्षधर्मता—पक्षसत्ता, पक्षे विद्यमानतेत्यर्थः, यथा "पर्व्वतो वह्निमान्" इत्यत्र पक्षः पर्व्वतः, तत्र वह्नेः सत्ताऽस्ति, तथाऽत्र सामाजिकानाम् "अहं रामो सीताविषयकरतिमान्" इत्येवं प्रतीतौ जायमानायाम् "अहं रसवान्" इति प्रतीतिर्जायते, तत्सत्त्वे च रसिकजनः पक्षः रसस्य तत्सत्ताऽस्तीति भावः, इत्यवधेयम् ।

(म) येति ।—अर्थान्तरस्य—भवन्मते व्यङ्ग्यस्य, वाच्यादित्रयभिन्नार्थस्येति यावत्, अभिव्यक्तौ—व्यञ्जनया प्रकटने, वः,—व्यञ्जनावृत्तिं स्वीकुर्वतां युष्माकं, या सामग्री—शाब्दबोधादिरूपः कारणसमूहः, निबन्धनं—प्रधानम्, इष्टा—अभिलषिता, सैव—उक्तस्वरूपैव सामग्री, अनुमितिपक्षे, तिष्ठतामिति शेषः, नः—अस्माकम्, व्यक्तिविवेकरसगङ्गाधरादिकाराणामिति भावः, गमकत्वेन—रसाद्यनुमापकत्वेन, सम्मता ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सान्द्रानन्दनिर्भरः । तेन अत्र सिषाधयिषितादर्थादर्थान्तरस्य साधनाद्धेतोराभासता (य)।

यच्च "भम धम्मिअ !" इत्यादौ प्रतीयमानं वस्तु (र)

"जलकेलितरलकरतलमुक्तपुनःपिहितराधिकावदनः ।
जगदवतु कोकयूनोर्विघटनसङ्घटनकौतुकी कृष्णः ॥" (ल)

इत्यादौ च रूपकालङ्कारादयोऽनुमेया एव ।(व) तथाहि,—

(य) दूषयति, इदमिति ।—इदमपि—एवंरूपमपि अनुमानं, नः,—व्यञ्जनावादिनामस्माकं, न विरुद्धं,—न विपरीतम्, अस्माभिरपि तादृशानुमानं स्वीक्रियते एवेति भावः । ननु किमधिकं भवान् ब्रवीतीत्यत आह, न हीति ।—न तु इत्यर्थः । स्वप्रकाशमात्रविश्रान्तः,—स्वप्रकाशमात्रेण—स्वस्वरूपेण प्रकाशमात्रेणैव, विश्रान्तः,—विषयीकृतः ; सान्द्रस्य—निरन्तरस्य, आनन्दस्य निर्भरः,—अतिशयः, आस्वाद्यत्वेनास्माकमभिमत इत्यर्थः । तेन—तादृशानुमितेरास्वाद्यत्वस्वीकारेण, सिषाधयिषितात्—साधयितुमिष्टात्, अर्थात्—स्वप्रकाशानन्दरूपात्, अर्थान्तरस्य—भिन्नार्थस्य, रसाद्याविर्भावस्य इति भावः, साधनात्—अनुमापनात्, हेतोः, आभासता—दुष्टहेतुत्वमित्यर्थः । अनुमितौ तु येन हेतुना यत् कार्य्यं साध्यते, तदेव कार्य्यमवश्यम्भावि, यदि तेन हेतुना अभिप्रेतकार्य्यं साध्यते, तदेव तस्य हेतोराभासत्वं, नियतहेतुका ह्यनुमितिरिति बोध्यम् ।

(र) इदानीं वस्त्वलङ्कारयोरपि अनुमानेनैव बोधः, न तु तदर्थमपि व्यञ्जनावृत्तिः स्वीकार्य्येति पुनरपि व्यक्तिविवेककारस्यैव मतान्तरं दूषयितुमुत्थापयति, यच्चेति ।—इदञ्च "पर्य्यवस्यति" इत्यन्तेनान्वेति । प्रतीयमानं वस्तु—अभ्रमणरूपमनुमेयं पश्चात् विवक्षणीयम् ।

(ल) जलेति ।—जलकेली—वारिविहारी, तरलाभ्यां—चञ्चलाभ्यां, करतलाभ्यां, मुक्तं—त्यक्तं, पुनः पिहितम्—आच्छादितं, राधिकायाः वदनं येन तादृशः, अत एव कोकयूनोः,—कोकी च कोकश्चेति कोकौ, युवती च युवा चेति युवानौ, कोकौ एव युवानौ तयोस्तयोर्क्तयोः, चक्रवाकदम्पत्योरित्यर्थः, विघटनसङ्घटने—वियोगसंयोगौ, तयोः कौतुकी—कुतूहलवान्, कृष्णः जगत् अवतु—रक्षतु । -

(व) अत्र राधिकावदने मुक्ते सति तत्र चन्द्रबुद्ध्या रात्रिज्ञानेन तयोः विघटनं, पिहिते सति चन्द्रानुपलब्ध्या रात्र्यभावज्ञानेन तयोः सङ्घटनम् । तयोर्भ्रान्त्या मुहुर्वियोगसंयोगदर्शनेन कृष्णस्य कौतुकमिति भावः । राधिकावदने चन्द्रत्वारोपणेन

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अनुमानं नाम पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तत्वविशिष्टाल्लिङ्गाल्लिङ्गिनो ज्ञानम्। (ग) ततश्च वाच्यादसम्बद्धोऽर्थस्तावन्न प्रतीयते; अन्यथाऽतिप्रसङ्गः स्यादिति बोध्यबोधकयोरर्थयोः कश्चित् सम्बन्धोऽस्त्येव। ततश्च बोधकोऽर्थो लिङ्गं, बोध्यश्च लिङ्गी, बोधकस्य चार्थस्य पक्षसत्त्वं निबद्धमेव। सपक्षसत्त्वविपक्षव्यावृत्तत्वे अनिबद्धेऽपि सामर्थ्यादवसेये। तस्मादत्र यद् वाच्यार्थाल्लिङ्गरूपाल्लिङ्गिनो व्यङ्ग्यार्थस्यावगमस्तदनुमान एव पर्य्यवस्यतीति (घ) तन्न। तथाहि अत्र "भम धम्मिअ!"

रूपकालङ्कारः। अनुमेया एव—"वाच्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति। सम्बन्धतः कुतश्चित् सा काव्यानुमितिरित्युक्ता॥" इत्यादिव्यक्तिविवेककारोक्त्याऽनुमिति—विषया एव, न तु व्यङ्ग्याः इति भावः।

(ग) अनुमानत्वमुपपादयति, तथा हीति।—अनुमानलक्षणमाह, अनुमानमिति।—सन्दिग्धसाध्यकः सिषाधयिषाविरहविशिष्टसिद्ध्यभाववान् वा पक्षः, पक्षसत्त्वं यथा,—वह्निसाध्यकधूमहेतौ साध्यसन्देहसत्त्वेन पर्व्वतः पक्षः, तत्र सत्त्वं—वर्त्तमानत्वं, लिङ्गस्य धूमस्य। सपक्षसत्त्वं—सपक्षः,—निश्चितसाध्यवान्, यथा तादृशस्थले महानसं तत्र सत्त्वं धूमस्य। विपक्षव्यावृत्तत्वं—विपक्षः साध्याभाववान्, यथा,—तादृशस्थले ह्रदः, तद्व्यावृत्तत्वं—तस्मिन् अवर्त्तमानत्वं धूमस्य। इयं व्याप्तिः। तादृशपक्षसत्त्वादिविशिष्टात् लिङ्गात्—साधनात्, लिङ्गिनः,—साध्यस्य, ज्ञानं—प्रतीतिः, अनुमानम्। पर्व्वते धूमदर्शनानन्तरं "पर्व्वतो वह्निमान्, धूमवत्त्वात्, यत्र यत्र धूमस्तत्र तत्र वह्निः, यथा महानसम्" इत्यादिका धूमस्य वह्न्यभाववदवृत्तित्वरूपव्याप्तिज्ञानानन्तरं वह्निव्याप्यधूमवानिति परामर्शात् पर्व्वते वह्न्यनुमितिरिति बोध्यम्।

(घ) वाच्यात्तावत् व्यङ्ग्यं प्रतीयते, इति वाच्यार्थस्य लिङ्गत्वमभिप्रेत्य तत्र पक्षसत्त्वादिकमुपपादयति, ततश्चेति।—वाच्यात्—अभिधेयात्, असम्बद्धः,—सम्बन्धवर्जितः। अन्यथा—असम्बद्धप्रतीतिस्वीकारे, अतिप्रसङ्गः,—अतिव्याप्तिः, अलक्ष्ये लक्षणगमनरूप इत्यर्थः; यथा "भम धम्मिअ!" इत्यत्र भ्रमणाभावः प्रतीयते, तथा घटाभावोऽपि प्रतीयेत। इति—इति हेतोः "भम धम्मिअ!" इत्यत्र बोध्यबोधकयोरर्थयोर्वैपरीत्यलक्षणः सम्बन्धो बोध्यः, स एव व्यापकताघटक इति भावः। ततश्च—बोध्यबोधकयोर्वैपरीत्यरूपसम्बन्धसत्त्वाच्च, तत्र पक्षसत्त्वादिज्ञानस्यैवोपयोगित्वात्;

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत्यादौ गृहे श्वनिवृत्त्या विहितं भ्रमणं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयतीति यद्वक्तव्यं तत्र अनैकान्तिको हेतुः, भीरोरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेण च गमनस्य सम्भवात्। पुंश्चल्या वचनं प्रामाणिकं न वेति सन्दिग्धासिद्धश्च। "जलकेलि" इत्यत्र "य आत्मदर्शनादर्शनाभ्यां चक्रवाकविघटनसङ्घटनकारी स चन्द्र एव" इत्यनुमितिरेवेयमिति न वाच्यम्, उद्भासकादावनैकान्तिकत्वात्। "एवंविधोऽर्थ एवंविधार्थबोधक एवंविधार्थत्वात्, यन्नैवं तन्नैवम्" इत्यनुमानेऽपि आभाससमानयोगक्षेमो हेतुः। "एवंविधार्थत्वात्" इति हेतुना एवंविधानिष्टार्थसाधनस्याप्युपपत्तेः। (स)

---

तदुपपादयति, बोधकस्येति।—अर्थस्य—वाच्यार्थस्य, पक्षसत्त्वं—पक्षे—शब्दे, सत्त्वं—वर्त्तमानत्वं, निबद्धं—शब्देनोपस्थितम्, एव। सामर्थ्यात्—संस्कारबलात्, अवसेये—प्रत्येतव्ये। एतत्सदृशः पक्षः,—सपक्षः, एतद्विपरीतस्तु विपक्ष इति भावः। महावाक्यार्थं निरूपयति, तस्मादिति।—वाच्यार्थात्—अभिधेयार्थात्, लिङ्गरूपात्—साधनरूपात्, लिङ्गिनः,—साध्यरूपस्य व्यङ्ग्यस्य, अवगमः,—प्रतीतिः। ततश्च "भ्रम धार्मिक!" इत्यादौ श्वनिवृत्त्या विहितं भ्रमणं भ्रमणरूपवाच्यार्थः वैपरीत्यसम्बन्धेन गोदावरीतीरे सिंहोपलब्धेर्भ्रमणशब्दे अभ्रमणार्थवत्त्वमनुमापयतीति भावः।

(स) दूषयति, तन्नेति।—गृहे—गृहसमीपे चत्वरादौ, श्वनिवृत्त्या—कुक्कुरमरणप्रदर्शनेन, विहितं—विधिविषयः, "अभ्रमणमनुमापयति" इत्यनेनान्वितम्। अत्र श्वनिवृत्तिविधीयमानगृहसमीपभ्रमणं लिङ्गं, तच्च भीरुत्वपर्य्यवसन्नम्। सिंहवद्गोदावरीतीराभ्रमणं साध्यं, धार्मिकः पक्षः, सामाजिकोऽनुमाता। अनैकान्तिकः,—व्यभिचारीत्यर्थः। भीरोरपीति।—अनेन निरुक्तलिङ्गवैशिष्ट्यस्य सूचनम्। गमनस्य सम्भवादिति।—अत्र अभ्रमणानुमापकलिङ्गसत्त्वेन साध्याभावसत्त्वप्रदर्शनमसन्दिग्धसिद्धमिति भावः। हेतोर्दोषान्तरमाह, पुंश्चल्या इति।—कुलटायाः इत्यर्थः, प्रामाणिकं—प्रमाजनकम्; तथा च इदं वाक्यं धार्मिकस्य भयोत्पादकं, यद्वा कुक्कुरस्पर्शशङ्कासङ्कुचितभ्रमणस्य तस्य स्वच्छन्दभ्रमणविधायकम्, इति सामाजिकानां सन्देहात् भीरुत्वसन्देह इति हेतोः सन्दिग्धत्वेन असिद्धत्वमिति भावः। अनुमितौ असन्दिग्धो हेतुरावश्यकः; अत्र तु न तथा, इति हेतोः सन्दिग्धत्वात् न अत्रानुमानमिति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तथा यत् "दृष्टिं हे प्रतिवेशिनि! क्षणमिहाप्यस्मद्गृहे दास्यसि—" इत्यादौ नलग्रन्थीनां तनूल्लेखनम्, एकाकितया च स्रोतोगमनं, तस्याः परकामुकोपभोगस्य लिङ्गिनो लिङ्गमित्युच्यते; तच्च तत्रैवाभिहितेन स्वकान्तस्नेहेनापि सम्भवतीति अनैकान्तिको हेतुः। (ह)

रूपकालङ्कारानुमानं दूषयति, जलकेलीति।—उत्त्रासकादाविति।—उत्त्रासकः,—भयप्रदः। [आदिना वियोगकारणरात्रिसाधर्म्यान्तरस्यापि ग्रहणम्]। यदि कश्चित् भयं प्रदर्शयति, तदाऽपि वियोगस्य सम्भव इति चन्द्रोदयाभावेऽपि कारणान्तरेण वियोगदर्शनात् कारणान्तरे तादृशविघटनकारित्वरूपहेतोः सत्त्वेन तत्र तादात्म्येन चन्द्ररूपसाध्याभावसत्त्वाद् व्यभिचारः। तादात्म्यसम्बन्धेन साध्यस्य चन्द्रस्य वदने बाधात्; बाधोऽपि अत्र हेतुदोषः बोध्यः इति भावः। अनुमानञ्च कदाचित् व्यभिचारभयात् पक्षमात्रवृत्तिहेतुना अपि सम्भवति, इति तेनैव इष्टसिद्धिं कुर्वतोऽस्य मतं दूषयति,—एवमिति। आभाससमानेति।—आभासस्य—व्यभिचारादिरूपहेतुदोषस्य, समानो योगक्षेमः,—कार्य्यसाधकः हेतुः; दुष्टहेतुप्रयोगेण यथा वादिविजयी भवति, तथाऽर्थान्तरसाधकहेतुप्रयोगेणापीत्याभासतुल्ययोगक्षेमत्वमिति भावः। तथा च एवंविधः,—"गतोऽस्तमर्कः" इत्यादिरूपः, एवंविधार्थानां—"गावो निरुध्यन्ताम्" इत्यादिरूपाणां, बोधकः एवंविधार्थत्वात्—एवंविधार्थबोधाय प्रयुक्तत्वादित्यर्थः। हेतोः पक्षमात्रवृत्तित्वेनान्वयदृष्टान्तासम्भवात् अन्वयव्याप्तिग्रहो न सम्भवति इति व्याप्तिग्रहाय व्यतिरेकोदाहरणमाह, यन्नैवमिति।—यत्—वस्तु, नैवं—न एवम्प्रकारम्, एवंविधार्थबोधकत्वाभाववदित्यर्थः, तत्—वस्तु, नैवम्—एवंविधार्थत्वाभाववदित्यर्थः। "देवदत्तो भवतीति वाक्यार्थवत्" इति दृष्टान्तोऽत्र द्रष्टव्यः इति। आभाससमानयोगक्षेमत्वमेवोपपादयति, एवंविधार्थत्वादिति।—एवंविधार्थत्वादिति हेतुः एवंविधानिष्टार्थस्यापि साधकत्वसम्भवादित्यर्थः, तथात्वे पक्षमात्रवृत्त्यनुमानेऽपि हेतोर्दुष्टत्वमिति अनुमानं पक्षमात्रवृत्त्यादिदुष्टे हेतौ नैव सम्भवतीति भावः। यथा दुष्टहेतुप्रयोगेण वादिविजयी भवति, तथाऽर्थान्तरसाधकहेतुप्रयोगेणापि, इत्याभासतुल्ययोगक्षेमत्वमिति हृदयम्।

(ह) अत्रापि व्यभिचारमाह, तथेति।—एकाकितया चेति।—अत्र चकारो वाऽर्थः, स्रोतोगमनं वेत्यर्थः। लिङ्गं—तादात्म्येन साधनं, तच्च—प्रागुक्तमर्थद्वयञ्च, तत्रैव—"दृष्टिम्" इत्यादि श्लोके एव, अभिहितेन—द्वितीयपादप्रतिपादितेन; तथा च यत्र स्नेहस्य किं दुष्करम् इति जानतां सर्वेषामेव श्रोतॄणां तादृशबोधो न

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यच्च "निःशेषच्युतचन्दनम्" इत्यादौ दूत्यास्तत्कामुकोपभोगोऽनुमीयते तत् किं प्रतिपाद्यया दूत्या, तत्कालसन्निहितैर्वाऽन्यैः, तत्काव्यार्थभावनया वा सहृदयैः ? आद्ययोर्न विवादः। तृतीये तु तथाविधाभिप्रायविरहस्थले व्यभिचारः। (क)

ननु वक्त्राद्यवस्थासहकृतत्वेन विशेष्यो हेतुरिति न वाच्यम्, एवंविधव्याप्त्यनुसन्धानस्याभावात्। (ख)

किञ्च एवंविधानां काव्यानां कविप्रतिभामात्रजन्मनां प्रामाण्यानावश्यकत्वेन सन्दिग्धासिद्धत्वं हेतोः। व्यक्तिवादिना चाधम-

---

जायते, तत्रैव तादृशार्थद्वयबोधकत्वाभावाद्व्यभिचार इति भावः। यदि तु कालान्तरे तादृग्वाक्यप्रयोगेण यस्य कस्यापि श्रोतुः तादृशार्थबोधाद्व्यभिचारो न भवति, इति विभाव्यते, तदाऽत्र "तद्वाक्यप्रतिपाद्यं तादृशार्थद्वयं परकामुकोपभोगप्रतिपादकं तादृशार्थत्वात्" इत्यनुमाने बाधरूपहेतुदोषो द्रष्टव्यः। यथा—"गन्धप्रागभावकालीनो घटो गन्धवान्" इत्यादौ तत्कालीनघटे साध्याभावमादाय बाधः, तथाऽत्रापि व्यक्तिविशेषे कालविशेषे वा एवंविधार्थबोधकत्वरूपसाध्याभावमादाय बाधो बोध्यः।

(क) तत्कामुकेति।—नायिकाकामुकेत्यर्थः। अनुमीयते इति।—चन्दनच्यवनादिरत्र हेतुः, तत्कालसन्निहितैः,—तादृशकथनसमये नायिकासन्निधानवृत्तिभिः, काव्यार्थभावनयेति—[विशेषणे तृतीया]। न विवाद इति।—चन्दनच्यवनादीनां स्नानादिनाऽपि सम्भवात्। सम्भोगव्यभिचारित्वेऽपि तेषां दूतीतत्कालसन्निहितयोः प्रत्यक्षतो वैलक्षण्यसहकारसम्भवेन व्यभिचारज्ञानानुदयात् व्याप्तिग्रहः सम्भवतीति भावः। ननु सामाजिकानामपि निःशेषादिपदाभिप्रायेणैव वैलक्षण्यग्रहो भविष्यतीत्यत आह, तथाविधेति।—निःशेषादिपदानां सम्भोगजन्यत्वबोधाभिप्रायविरहस्थल इत्यर्थः।

(ख) यदि सामान्यतश्चन्दनच्यवनादेः हेत्वाभासेन अनुमितिर्न सम्भवति, तदाऽत्र विशिष्टतादृशहेतुर्वाच्य इति मतं दूषयति, नन्विति।—वक्त्रादीत्यादि।—[तद्गुणसंविज्ञानबहुव्रीहिणा प्रतिपाद्यदूतीपरिग्रहः]। अवस्था—कामुकत्वादिवैशिष्ट्यं, तत्सहकृतचन्दनच्यवनादिहेतुर्बोध्यः। एवंविधेति।—एवंविधा या व्याप्तिः तस्याः अनुसन्धानस्य अभावात्—शब्देनानुपस्थानात्, तथाच प्रतिपाद्यावस्थासहकृतत्वस्य शब्देनानुपस्थितेः प्रमाणान्तरस्य च असद्भावात्कथं तादृशविशिष्टहेतुत्वभावेन व्याप्तिग्रहसम्भव इति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पदसहायानामेवैषां पदार्थानां व्यञ्जकत्वमुक्तं, तेन च तत्कान्तस्याधमत्वं प्रामाणिकं न वेति कथमनुमानम् ? (ग)

एतेनार्थापत्तिवेद्यत्वमपि व्यङ्ग्यानामपास्तम् । अर्थापत्तेरपि पूर्वसिद्धव्याप्तीच्छामुपजीव्यैव प्रवृत्तेः । यथा,—"यो जीवति स कुत्राप्यवतिष्ठते, जीवति चात्र गोष्ठ्यामविद्यमानश्चैत्रः" इत्यादि । (घ)

किञ्च वस्त्रक्रयादौ तर्ज्जनीतोलनेन दशसङ्ख्याऽऽदिवत् सूचनबुद्धिवेद्योऽप्ययं न भवति ; सूचनबुद्धेरपि सङ्केतादिलौकिकप्रमाणसापेक्षत्वेनानुमानप्रकारताऽङ्गीकारात् । (ङ)

---

(ग) किञ्चेति ।—कविप्रतिभामात्रजन्मनां—कवीनां प्रतिभा—बुद्धिनैर्मल्यं, तन्मात्रेण जन्म—उत्पत्तिर्येषां तादृशानां, प्रामाण्यस्य—याथातथ्यरूपानुसन्धानस्य, अनावश्यकत्वेन हेतोः सन्दिग्धासिद्धत्वं—किमियं परपुरुषार्थिनी स्रोतसि जलाहरणार्थं गता, उत स्वकान्तस्नेहेन ? इति सन्देहः, तेन हेतोर्न प्रामाण्यं, तत् कथमत्रानुमानं सम्भवतीति भावः । एषां पदार्थानां—"निःशेषच्युतचन्दनम्" इत्यादीनामित्यर्थः, व्यञ्जकत्वं—व्यङ्ग्यबोधकत्वम् । प्रामाणिकं—प्रमाणानुगतं, तथ्यमित्यर्थः ।

(घ) एतेन—हेतोराभासत्वेन इत्यर्थः । पूर्वेति ।—पूर्वं सिद्धा—निर्णीता इत्यर्थः, या व्याप्तिः तस्याः इच्छां—ज्ञानमित्यर्थः, उपजीव्य—अवलम्ब्य इत्यर्थः, अर्थस्य—अपरार्थस्य, आपत्तिः,—आक्षेपः, अर्थापत्तिः, यथा "जीवति" इति,—यतो जीवति, अतः कुत्रापि—गोष्ठीभिन्नेऽपि स्थाने, अवतिष्ठते इति अर्थापत्त्या प्रतीयते । अत्र "जीवति" इति व्याप्तिग्राहकमित्यवधेयम् । अत्र जीवित्वस्य यत्किञ्चिदधिकरणावस्थानव्याप्यत्वज्ञानमपेक्षणीयमिति व्याप्तिग्रहप्रदर्शनपुरःसरमर्थापत्तिप्रदर्शनमिदम् । "जीवति च" इत्यादिकमर्थापत्तिदर्शनम् । जैमिन्यनुमताऽर्थापत्तिः दृष्टश्रुतधर्माभ्यां द्विप्रकारा ; तत्र दृष्टाऽर्थापत्तिः,—एकत्र अधिकरणे यद्भाव उपलब्धः, अपरत्रापि तद्भावः अङ्गीक्रियते एव । श्रुतार्थापत्तिः यथा,—"पीनो देवदत्तो दिवा न भुङ्क्ते" अतोऽवगम्यते रात्रौ भुङ्क्ते इति ।

(ङ) किञ्चेति ।—तर्जनीतोलनेन—तर्जन्या उत्क्षेपेण, सूचनबुद्धिवेद्यः,—सूचनं—सङ्केतः, तद्विषयिणी या बुद्धिः तद्वेद्यः, अयं—व्यङ्ग्यरूपोऽर्थ इत्यर्थः, सूचनबुद्धेरपि सङ्केतादि लौकिकप्रमाणसापेक्षत्वेन—सहचारग्रहजन्यत्वेन ; अयं भावः,—यदि

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यच्च "संस्कारजन्यत्वाद्रसादिबुद्धिः स्मृतिः" इति केचित्, तत्रापि प्रत्यभिज्ञायामनैकान्तिकतया हेतोराभासता। (च)

"दुर्गालङ्घित" इत्यादौ च "द्वितीयार्थो नास्त्येव" इति यदुक्तं महिमभट्टेन, तदनुभवसिद्धिमपलपतो गजनिमीलिकैव। (छ)

तदेवमनुभवसिद्धस्य तत्तत् रसादिलक्षणार्थस्याश्रयकापलापतया तत्तत् शब्दाद्यन्वयव्यतिरेकानुविधायितया च अनुमानादिप्रमाणावेद्यतया च अभिधादिवृत्तित्रयाबोध्यतया च तुरीया वृत्तिरुपास्यैवेति सिद्धम्। इयञ्च व्याख्याद्यनुसन्धानं विनाऽपि भवतीत्यखिलं निर्म्मलम्। (ज)

---

कश्चित् पूर्वं व्यवहारार्थं व्यवहारिकेण सह साधारणजनगोपनार्थम् एवं व्यवस्थापयति, यत् मम तर्जनीतोलने युष्माभिर्दशसंख्या बोद्धव्येति, तदा तत्सूचनेन तस्य व्यवहारः सिध्यति; तत्र च सूचने प्रामाण्यस्य सद्भावेन, अनुमानप्रकारताऽङ्गीकारात्—व्याप्तिज्ञानविशेषत्वस्वीकारात् इति, सा सूचनबुद्धिरनुमानविशेष एवेति भावः। प्रकृते वक्तुरुक्तिवैचित्र्यविशेष एव सङ्केतः, तेन व्यङ्ग्यार्थप्रतीतिर्व्याप्तिग्रहेणैव भवतीति कथं व्यञ्जनास्वीकारः? इत्यापत्तिरपि न भवति। वक्तुरुक्तिविशेषवैचित्र्यसत्त्वेऽपि सर्वेषामेव श्रोतृणामनभिज्ञतया व्यङ्ग्यार्थानवबोधस्थले व्यभिचारदर्शनादिति बोध्यम्।

(च) "स्मृतिर्न वा" इति कारिकांशं विवृणोति, यच्चेति।—संस्कारजन्यत्वात्,—संस्कारजन्यज्ञानत्वादित्यर्थः, अन्यथा संस्कारादौ संस्कारध्वंसादौ तज्जन्यत्वस्य सत्त्वात् व्यभिचारस्यात्यन्तस्फुटत्वापत्तेः। प्रत्यभिज्ञायां—सोऽयमित्याकारकप्रतीतौ, अनैकान्तिकतया—साध्यं विना विद्यमानतया, हेतोः,—संस्कारजन्यज्ञानत्वरूपस्य, आभासता—व्यभिचारिता, दुष्टता इत्यर्थः। एतच्च साधनं रसप्रतीतिकारणीभूतवासनायाः संस्कारविशेषत्ववादिमते। अतिरिक्तत्ववादिमते तु हेतोः पक्षावृत्तित्वेन स्वरूपासिद्धिरपि दोषः, न तु व्यभिचारमात्रम्। ये तु प्रत्यभिज्ञायाः स्मृतित्वापत्तिभयेन स्मृतिजन्यत्वमेव मन्यन्ते, न तु संस्कारजन्यत्वं, तन्मते व्यभिचारो न भवतीत्यवधेयम्।

(छ) अभिधामूलव्यञ्जनामनङ्गीकुर्व्वतो मतं दूषयति, दुर्गेत्यादि।—द्वितीयार्थः,—अप्राकरणिकार्थबोधः, अपलपतः,—निह्नुवानस्य, महिमभट्टस्य इत्यर्थः, गजनिमीलिका—हस्तिवत् मूर्खता इति भावः।

(ज) उपसंहरति, तदेवमिति।—तत्तद्रसादिलक्षणार्थस्य—तत्तद्रसादि-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत् किंनामिकेयं वृत्तिः ? इत्युच्यते—

**सा चेयं व्यञ्जना नाम वृत्तिरित्युच्यते बुधैः ।**
**रसव्यक्तौ पुनर्वृत्तिं रसनाख्यां परे विदुः ॥२७४॥(झ)**

**एतच्च विविच्योक्तं रसनिरूपणप्रस्ताव इति सर्वमवदातम् । (ञ)**

इति श्रीमन्नारायणचरणारविन्दमधुव्रतसाहित्यार्णवकर्णधारध्वनिप्रस्थापनपरमाचार्य-कविसूक्तिरत्नाकराष्टादशभाषावारविलासिनीभुजङ्गसान्धिविग्रहिकमहापात्र-श्रीविश्वनाथकविराजकृतौ साहित्यदर्पणे व्यञ्जनाव्यापारस्थापनं नाम पञ्चमः परिच्छेदः ॥ ५ ॥

---

स्वरूपार्थस्य,["विलक्षणार्थस्य इति पाठे—तत्तद्रसादिरूपस्य, वाच्यादिविलक्षणस्येत्यर्थः] [अनुमानादीत्यादिपदेन अर्थापत्त्यादेर्ग्रहणम् । अभिधादीत्यादिपदेन लक्षणातात्पर्ययो-र्ग्रहणम् ] ।

(झ) सा चेयमिति ।—रसव्यक्तौ—रसप्रकटने इत्यर्थः, वृत्तिं—व्यापारं, परे—अन्ये विद्वांसः, नैयायिकाः इति यावत्, न त्वालङ्कारिकाः ; तेषामयमाशयः,—"वस्त्वलङ्कारग्रहार्थं व्यञ्जनावृत्तिरवश्यं स्वीकार्य्या, तयैव रसादेरपि ग्रहोऽस्तु । तदर्थ-मतिरिक्तरसनाऽऽख्यवृत्तिस्वीकारेणालम्" इति । न च व्यञ्जनाजन्यबोधस्यास्वादरूपत्वं नास्ति, रसनाख्यव्यापारजन्यबोधस्य तु तदक्षतमिति वाच्यम्, एतादृशनियमस्य शपथ-निर्णेयत्वात् । व्यञ्जनया वस्त्वलङ्काररूपव्यङ्ग्यार्थावगतिः, रसनया तु रसादिरूपार्थाव-गतिरिति परमतम् ; ग्रन्थकृतस्तु सामान्येन व्यञ्जनयैव सर्वव्यङ्ग्यार्थावगम इति बोध्यम् ।

(ञ) एतत्—रसनाख्यवृत्तिस्वरूपम् । अवदातम्—अविरुद्धम् ।

इत्यशेषशास्त्राटवीसञ्चारपञ्चानन-पण्डितकुलपतिना बि, ए, उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां पण्डितश्रीआशुबोधविद्याभूषण-पण्डितश्रीनित्यबोधविद्यारत्नाभ्यां प्रतिसंस्कृतायां विमलाख्यायां साहित्यदर्पणव्याख्यायां पञ्चमः परिच्छेदः ॥ ५ ॥

---

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# षष्ठः परिच्छेदः ।

एवं ध्वनिगुणीभूतव्यङ्ग्यत्वेन काव्यस्य भेदद्वयमुक्त्वा पुनः दृश्यश्रव्यत्वेन भेदद्वयमाह, (क)—

**दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम् ।**
**दृश्यं तत्राभिनेयम् ॥ २७५ ॥ (ख)**

तस्य रूपकसंज्ञाहेतुमाह,—

**तद्रूपारोपात्तु रूपकम् ॥ २७६ ॥ (ग)**

तत्—दृश्यं काव्यं, नटे रामादिस्वरूपारोपाद्रूपकमित्युच्यते ।(घ)

---

(क) अथ ग्रन्थसङ्गतिं दर्शयन् प्रकरणान्तरमारभमाणः तत्र प्रतिपाद्यं दर्शयितुं प्रतिजानीते, एवमित्यादिना ।—एवं—निदर्शितप्रकारेणेत्यर्थः, ध्वनिश्च गुणीभूतव्यङ्ग्यं चेत्येतयोर्भावस्तत्त्वं तेन, ध्वनिरूपत्वेन गुणीभूतव्यङ्ग्यत्वेन चेत्यर्थः । ध्वन्यते—प्राधान्येन व्यज्यतेऽर्थो यत्रासौ ध्वनिः ; गुणीभूतं व्यङ्ग्यं यत्र तद्गुणीभूतव्यङ्ग्यम् । काव्यस्य भेदद्वयम् उक्त्वा, पुनः तस्यैव ध्वनिकाव्यस्य गुणीभूतव्यङ्ग्यस्य वा काव्यस्य दृश्यत्वेन श्रव्यत्वेन चेत्येवं कृत्वेति भावः, भेदद्वयम् आह ।

(ख) दृश्येति ।—अभिनीयते इति अभिनेयं, [ कर्मणि यत्प्रत्ययः ] नटाद्यभिनीयमानं नायकादिचरितमित्यर्थः ।

(ग) तदिति ।—तत्—दृश्यं काव्यन्तु, रूपस्य—अभिनेयस्य, नायकादिस्वरूपस्य इत्यर्थः, आरोपः,—आरोपणं, तस्मात्—तं हेतुं निमित्तीकृत्येत्यर्थः, रूपकमित्युच्यते । तथोक्तं दशरूपके,—"रूपकं तत्समारोपात्" इति । "नटे रामाद्यवस्थाऽऽरोपेण वर्त्तमानत्वाद्रूपकं, मुखचन्द्रादिवत् ; इत्येकस्मिन्नर्थे प्रवर्त्तमानस्य शब्दत्रयस्य "इन्द्रः पुरन्दरः शक्रः" इतिवत् प्रवृत्तिनिमित्तभेदो दर्शितः" इति च तद्व्याख्याकारैः । "यथा मुखादौ पद्मादेरारोपो रूपकं भवेत् । तथैव नायकारोपो नटे रूपकमुच्यते ॥" इति भावः ।

(घ) तदेव स्पष्टयति, तदित्यादिना ।—तत् दृश्यं काव्यं, न तु श्रव्यमित्यर्थः, नटे—अभिनेतरि, रामादेः,—अभिनेयस्य नायकादेरिति भावः, स्वरूपं—देशकालावस्थाऽनुरूपत्वं, तस्यारोपात् रूपकमित्युच्यते ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कोऽसावभिनय इत्याह,—

भवेदभिनयोऽवस्थाऽनुकारः स चतुर्विधः ।
आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा ॥२७७॥(ङ)

नटैरङ्गादिभिः रामयुधिष्ठिरादीनामवस्थाऽनुकरणमभिनयः ।

रूपकस्य भेदानाह,—

नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः ।
ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ॥२७८॥ (च)

किञ्च,—

नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम् ।
प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा ॥
संलापकं श्रीगदितं शिल्पकञ्च विलासिका ।
दुर्मल्लिका प्रकरणी हल्लीशो भाणिकेति च ॥

(ङ) भवेदिति।—अवस्था—आलम्बनस्य शोकहर्षादिना यादृशी मुख-विकासाविकासादिव्यवस्था तस्याः, अनुकारः,—अनुकरणम्, अभिनयः। अभि-नयव्युत्पत्तिर्यथोक्ता,—"अभिपूर्व्वस्तु णीञ्धातुः पुरा मुख्यार्थनिर्णये। यस्मात् प्रयोगं नयति तस्मादभिनयः स्मृतः ॥ विभावयति यस्माच्च नानाऽर्थान् हि प्रयोगतः। शाखाऽङ्गोपाङ्गसंयुक्तस्तस्मादभिनयः स्मृतः ॥" इति। अस्य चातुर्विध्यमाह, स इति। सः,—निरुक्तलक्षणोऽभिनयः, चतुर्विधः,—चतुर्भेदः, आङ्गिकः,—अङ्गेन निष्पन्नः, वाचिकः,—वचनेन निष्पन्नः, आहार्य्यः,—आहरणीयः, वेशरचनादिरूपः इत्यर्थः, सात्त्विकः,—सत्त्वोद्रेकात् जनितः, स्तम्भस्वेदादिरित्यर्थः ; तथोक्तं भरतेन,—"आङ्गिको वाचिकश्चैव ह्याहार्य्यः सात्त्विकस्तथा। ज्ञेयस्त्वभिनयो विप्राः ! चतुर्धा परिकल्पितः ॥" इत्यादि ।

(च) नाटकमिति।—नाटकं, प्रकरणं, भाणः, व्यायोगः, समवकारः, डिमः, ईहामृगः, अङ्कः, वीथी, प्रहसनमिति दश रूपकाणि भवन्ति। दशरूपकेऽप्युक्तम् ;—"नाटकं सप्रकरणं भाणः प्रहसनं डिमः। व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति ॥" इति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अष्टादश प्राहुरुपरूपकाणि मनीषिणः।
विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्॥२७९॥(छ)

सर्वेषां—प्रकरणादिरूपकाणां नाटिकाद्युपरूपकाणाञ्च।

तत्र,—

नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम्।
विलासर्द्ध्यादिगुणवद् युक्तं नानाविभूतिभिः॥
सुखदुःखसमुद्भूतिनानारसनिरन्तरम्।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्।
दिव्योऽथ दिव्यादिव्यो वा गुणवान् नायको मतः॥
एक एव भवेदङ्गी शृङ्गारो वीर एव वा।
अङ्गमन्ये रसाः सर्वे कार्य्यं निर्वहणेऽद्भुतम्॥
चत्वारः पञ्च वा मुख्याः कार्य्यव्यापृतपूरुषाः।
गोपुच्छाग्रसमाग्रन्तु बन्धनं तस्य कीर्त्तितम्॥२८०॥(ज)

---

(छ) एवं रूपकभेदानभिधाय उपरूपकभेदानपि आह, नाटिकेति।—नाटिकामारभ्य भाणिकाऽन्तं निर्द्दिष्टान्यष्टादश उपरूपकाणि भवन्ति इति मनीषिणः,—विद्वांसः, प्राहुः। विनेति।—विशेषं विना सर्वेषां—प्रकरणादीनां रूपकाणां, नाटिकादीनाम् उपरूपकाणाञ्चेत्यर्थः, लक्ष्म—लक्षणं, स्वरूपमित्यर्थः, नाटकवत् मतं—कथितम्।

(ज) ननु किं तत् नाटकलक्षणमित्यपेक्षायां नाटकलक्षणमाह, नाटकमिति।—ख्यातवृत्तं—पुराणेतिहासादिप्रसिद्धवृत्तान्तं, न तु स्वकपोलकल्पितवृत्तान्तमिति भावः; अत एवोक्तं,—"तत्प्रख्यातं विधातव्यं वृत्तमत्राधिकारितम्" इति। पञ्चभिः (वक्ष्यमाणैः) सन्धिभिः,—मुखादिभिरङ्गविशेषैः, समन्वितं—सम्बद्धम्; दशरूपककारस्त्वाह,—"आद्यन्तमेवं निश्चित्य पञ्चधा तद्विभज्य च। खण्डशः सन्धि-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ख्यातं—रामायणादिप्रसिद्धं वृत्तम् । यथा,—रामचरितादि । सन्धयो वक्ष्यन्ते, नानाविभूतिभिर्युक्तमिति महासहायम् । सुखदुःखसमुद्भूतत्वं रामयुधिष्ठिरादिवृत्तान्तेषु अभिव्यक्तम् । राजर्षयः,—दुष्मन्तादयः । दिव्याः,—श्रीकृष्णादयः । दिव्यादिव्यः,—यो दिव्योऽप्यात्मनि नराभिमानी । यथा,—श्रीरामचन्द्रः । गोपुच्छाग्रसमाग्रमिति—"क्रमेणाङ्काः सूक्ष्माः कर्त्तव्याः" इति केचित् । अन्ये त्वाहुः,—"यथा गोपुच्छे केचित् बाला ह्रस्वाः, केचिद्दीर्घाः, तथेह कानिचित् कार्य्याणि मुखसन्धौ समाप्तानि, कानिचित् प्रतिमुखे । एवमन्येष्वपि कानिचित् कानिचित्" इति ।

**प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः ।**
**भवेदगूढ़शब्दार्थः क्षुद्रचूर्णकसंयुतः ॥**
**विच्छिन्नावान्तरैकार्थः किञ्चित् संलग्नबिन्दुकः ।**
**युक्तो न बहुभिः कार्य्यैर्वीजसंहृतिमान् न च ॥**

---

संज्ञांश्च विभागानपि खण्डयेत् ॥" इति । विलासर्द्ध्यादिगुणवत्—विलासः,—"धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः" इतिलक्षणोक्तनायकगुणविशेषः, ऋद्धिः,—अभ्युन्नतिः, [ आदिना धैर्य्यगाम्भीर्य्यादिग्रहणं ] तद्गुणवत्—तद्गुणयुक्तम् । तथोक्तं,—"सर्वसम्पत्प्रभूतं स्यात्" इति । सुखस्य दुःखस्य च समुद्भूत्या—कदाचित् सुखसमुद्भूत्या, कदाचित् दुःखसमुद्भूत्या चेत्यर्थः, नाना—विविधाः, ये रसाः,—आस्वादव्यापाराः, तैः निरन्तरं—सान्द्रं, पूर्णमित्यर्थः ; [ "सुखदुःखसमुद्भूति" इति पृथक्पदस्वीकारे तु सुखदुःखाभ्यां समुद्भूतिः,—सम्भवः यस्य तत् ] तथोक्तं,—"सुखदुःखोत्पत्तिकृतम्" इति । अङ्गी—प्रधानभूतः, अङ्गम्—अप्रधानम् । निर्वहणे—निर्वहणाख्ये सन्धौ, अद्भुतं—विस्मयजनकव्यापारः, [ अद्भुत इति पाठान्तरे—तदाख्यो रस इत्यर्थः ] कार्य्यं—वर्णनीयम्, अत एवोक्तं दशरूपककृता,—"एको रसोऽङ्गी कर्त्तव्यो वीरः शृङ्गार एव वा । अङ्गमन्ये रसाः सर्वे कुर्य्यात् निर्वहणेऽद्भुतम् ॥" ग्रथनं—रचनम् । शेषं स्पष्टम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नानाविधानसंयुक्तो नातिप्रचुरपद्यवान्।
आवश्यकानां कार्य्याणामविरोधाद्विनिर्म्मितः॥
नानेकदिननिर्वर्त्त्यकथया सम्प्रयोजितः।
आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा॥
दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः।
विवाहो भोजनं शापोत्सर्गौ मृत्यू रतं तथा॥
दन्तच्छेद्यं नखच्छेद्यमन्यद् व्रीड़ाकरञ्च यत्।
शयनाधरपानादि नगराद्यवरोधनम्॥
स्नानानुलेपने चैभिर्वर्ज्जितो नातिविस्तरः।
देवीपरिजनादीनाममात्यवणिजामपि॥
प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः।
अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः॥२८१॥(क)

विन्द्वादयो वक्ष्यन्ते। आवश्यकं—सन्ध्यावन्दनादि।

---

(क) अङ्कमाह, प्रत्यक्षेति।—प्रत्यक्षं—प्रत्यक्षवत् आभासमानं, नेतुः,—नायकस्य, चरितं यत्र सः, तथाऽऽह दशरूपककारः,—"प्रत्यक्षनेतृचरितः" इति। रसेन भावेन च समुज्ज्वलः; अत एवोक्तम्,—"अङ्को नानाप्रकारार्थसंविधानरसाश्रयः" इति। अगूढ़ः,—स्फुटः, शब्दार्थः,—वाक्यतात्पर्य्यं, यत्र तथाविधः, क्षुद्रेण—अल्पकलेवरेण, चूर्णकेन—गद्येन, संयुतः, विच्छिन्नः,—विच्छेदं प्राप्तः, अवान्तरं—सन्दर्भैकदेशः, एव एकः,—मुख्यः, अर्थः,—प्रयोजनं, यस्मिन् तथोक्तः, किञ्चित्—ईषत्, संलग्नाः,—संविहिताः, विन्दवः,—वक्ष्यमाणलक्षणाः यस्मिन् तथोक्तः; उक्तञ्च दशरूपकज्ञता,—"विन्दुव्याप्तिपुरस्कृतः" इति। बहुभिः,—हास्योद्वेगादिजनकतया बहुविधैः, कार्य्यैः,—व्यापारैः, न युक्तः, न च बीजस्य—ग्रन्थप्रकृतिरूपस्य मूलकारणस्य, संहृतिः,—संहारः, तद्वान्; नानाविधानैः,—विविधैः विहितकर्म्मभिः, संयुक्तः, नातिप्रचुरपद्यवान्—अतिबहुभिः पद्यैः न संयुतः, आवश्यकानां—धर्म्मशास्त्रानुसारेण

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अङ्कप्रस्तावाद् गर्भाङ्कमाह,—

**अङ्कोदरप्रविष्टो यो रङ्गद्वारामुखादिमान् ।**
**अङ्कोऽपरः स गर्भाङ्कः सबीजः फलवानपि ॥२८२॥(ञ)**

यथा,—बालरामायणे रावणं प्रति कञ्चुकी,—

"श्रवणैः पेयमनेकैर्दृश्यं दीर्घैश्च लोचनैर्बहुभिः ।
भवदर्थमिव निबद्धं नाट्यं सीतास्वयंवरणम् ॥" (ट)

इत्यादिना विरचितः सीतास्वयंवरो नाम गर्भाङ्कः । इति ।

---

निश्चितमनुष्ठेयानां, कार्य्याणां—सन्ध्यावन्दनादीनाम्, अविरोधात्—अव्याघातात्, विनिर्म्मितः,—विरचितः, नानेकदिनैः,—अबहुदिनैः, स्वल्पदिनैरिति यावत्, निर्वर्त्त्या—निष्पाद्या, या कथा तया सम्प्रयोजितः ; आसन्नः,—समीपवर्त्ती, नायको यत्र, वर्त्तमानत्वेनेति शेषः, तथोक्तः, त्रिचतुरैः,—त्रिभिः चतुर्भिर्वेत्यर्थः, पात्रैः,—नाटकीयपुरुषैः, युतः । उत्सर्गः,—मलत्यागः । एभिः,—दूराह्वानादिभिः । परिजनाः,—दैव्याः परिचारकाः, राजकुमाराद्यो वा, तेषाम् । अन्ते—शेषे, निष्क्रान्तानि निखिलानि—समग्राणि, पात्राणि यत्र तथाविधः, अङ्कः,—परिच्छेदविशेषः । दशरूपककारोऽप्याह,—"दूराह्वानं वधं युद्धं राज्यदेशादिविप्लवम् । संरोधं भोजनं स्नानं सुरतं चानुलेपनम् ॥ अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् । नाधिकारिवधं क्वापि त्याज्यमावश्यकं न च ॥ एकाहाचरितैकार्थमित्थमासन्ननायकम् । पात्रैस्त्रिचतुरैरङ्कं तेषामन्तेऽस्य निर्गमः ॥...............पञ्चाङ्कमेतदवरं दशाङ्कं नाटकं परम् ॥" इति । अन्यत् स्पष्टम् ।

(ञ) गर्भाङ्कमाह, अङ्कोदरेति ।—रङ्गद्वारं—सूत्रधारक्रियमाणं मङ्गलम्, आमुखं—प्रस्तावना [आदिना सभापूजादिग्रहणं] तद्वान्, अङ्कस्य उदरं—मध्यं, प्रविष्टः, सबीजः,—मूलकारणसहितः, फलवान्—नायकनिष्पाद्यप्रधानप्रयोजनान्वितः, यः अपरः अङ्कः, सः गर्भाङ्कः,—गर्भे इवाङ्क इति तथोक्तः ।

(ट) उदाहरति, श्रवणैरिति ।—सीतास्वयंवरणं—तदाख्यं, नाट्यम्, अनेकैः श्रवणैः,—कर्णैः, पेयं—सर्वजनैः सादरं श्रवणीयमित्यर्थः, बहुभिः दीर्घैः,—आयतैः, लोचनैः,—नेत्रैः, दृश्यं—सर्वजनदर्शनीयमित्यर्थः, अत एव भवदर्थमिव—तव निमित्तमिव, दशाननतया बहुकर्णनेत्रत्वादिति भावः, निबद्धं—रचितम् । आर्य्यावृत्तम् ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र पूर्व्वं पूर्व्वरङ्गः सभापूजा ततः परम् ।
कथनं कविसंज्ञादेर्नाटकस्याप्यथाऽऽमुखम् ॥२८३॥(ठ)

तत्रेति—नाटके ।

यन्नाट्यवस्तुनः पूर्व्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्व्वन्ति पूर्व्वरङ्गः स उच्यते ॥
प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि ।
तथाऽप्यवश्यं कर्त्तव्या नान्दी विघ्नोपशान्तये॥२८४॥(ड)

अस्याः स्वरूपमाह,—

आशीर्व्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥
मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी ।
पदैर्युक्ता द्वादशभिरष्टभिर्वा पदैरुत ॥ २८५ ॥ (ढ)

---

(ठ) नाटकरचनापरिपाटीमाह, तत्रेति ।—तत्र—नाटके, पूर्व्वं—प्रथमं, पूर्व्वरङ्गः,—वक्ष्यमाणलक्षणः, तदनन्तरं सभापूजा—सभाप्रशंसनं, ततः कविसंज्ञादेः, [ "संज्ञादेः" इति आदिपदेन गोत्रमातापितॄणां ग्रहणम् ] नाटकस्यापि कथनं—कीर्त्तनम्, अथ—अनन्तरम्, आमुखं—प्रस्तावना, निबद्धव्येति शेषः ।

(ड) पूर्व्वरङ्गमाह, यदिति ।—रङ्गः,—नृत्यस्थानं, तस्य विघ्नोपशान्तये—अन्तरायनिवर्त्तनाय, नाट्यवस्तुनः,—नाटकेतिवृत्तप्रस्तावात्, पूर्वं कुशीलवाः,—सूत्रधारप्रधाना नटाः, यत्—कर्म्म, प्रकुर्वन्ति, सः पूर्वरङ्गः,—मङ्गलाचरणमित्यर्थः, उच्यते । यद्यपि अस्य—पूर्व्वरङ्गस्य, प्रत्याहारादिकानि—ध्यानधारणाप्रभृतीनि, भूयांसि—बहूनि, अङ्गानि, सन्ति इति शेषः, तथाऽपि विघ्नोपशान्तये नान्दी अवश्यं कर्त्तव्या ।

(ढ) नान्दीपदार्थमाचष्टे, आशीरिति ।—यस्मात् देवद्विजनृपादीनाम् [ नृपादीनामित्यादिपदेन गुर्वादिपरिग्रहः ] आशीः,—शुभचिन्तनं, तद्वचनेन संयुक्ता स्तुतिः,—गुणकीर्त्तनं, [ "स्तुतिः" इत्यत्र "नित्यम्" इति पाठे—स्तुतिरध्याहार्य्या ] प्रयुज्यते—क्रियते, तस्मात् सा नान्दी इति संज्ञिता—कथिता ; नन्दयतीति व्युत्पत्तियोगात्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अष्टपदा यथा अनर्घराघवे,—"निष्प्रत्यूहम्" इत्यादि।
द्वादशपदा यथा मम तातपादानां पुष्पमालायाम्,—

"शिरसि धृतसुरापगे स्मरारा-
वरुणमुखेन्दुरुचिर्गिरीन्द्रपुत्री।
अथ चरणयुगानते स्वकान्ते
स्मितसरसा भवतोऽस्तु भूतिहेतुः॥" (ग)

देवद्विजनृपप्रभृतीनामानन्दयित्री स्तुतिर्नान्दीति फलितार्थः। सा तु मङ्गल्यं—मङ्गलान्वितं, शङ्खचन्द्रादि शंसयति—सूचयतीति तथोक्ता, तथा (क्वचित्) द्वादशभिः पदैः,—सुप्तिङन्तरूपैः, वा—अथवा, अष्टभिः पदैः, उत—अथवा, क्वचिद्वा इत्यर्थः, पदैः,—पद्यस्य तुर्य्यांशभूतैः चरणैः, युक्ता। यत्र द्वादशपदा नान्दी, तत्र पदशब्दः सुप्तिङन्तान्यतमवाचकः, यत्राष्टपदा, तत्र पदशब्दः पद्यचतुर्थांशवाचको बोद्धव्यः, अत एवानर्घराघवे, पद्यद्वयेनाष्टपदा नान्दी, पुष्पमालायाञ्चैकेनैव पद्येन द्वादशपदा नान्दी उदाहरिष्यते इति हृदयम्। नान्दीपदव्युत्पत्तिस्तु यथोक्ता नाट्यप्रदीपे—"नन्दन्ति काव्यानि कवीन्द्रवर्गाः कुशीलवाः पारिषदाश्च सन्तः। यस्मादलं सज्जनसिन्धुहंसी तस्मादियं सा कथितेह नान्दी॥" इति, भरतेन तस्या यथोक्ता व्यवस्था—"पूर्वं कृता मया नान्दी आशीर्वचनसंयुता। अष्टाङ्गपदसंयुक्ता प्रशस्ता वेदसम्मता॥" इति "सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः। नान्दीं पदैर्द्वादशभिरष्टाभिर्वाऽप्यलङ्कृताम्॥" इति, एषा च तदीया व्याख्या—"अनेन त्र्यस्रतालानुगता त्रिपदा षट्पदा द्वादशपदेति, चतुरस्रतालाऽनुगता चतुष्पदाऽष्टपदा षोड़शपदेति पृथक् त्रिविधैव। नातः परमपि भूयस्त्वादादृता। पदानि श्लोकावयवभूतानि तिङन्तानि सुबन्तानि वा, श्लोकतुरीयांशरूपाणि वा, अवान्तररूपाणि वा। आचार्य्यैस्त्वस्मात्स्ववान्तरवाक्येष्वेव पदत्वम्।" इति। नाट्यप्रदीपकारैश्च—"श्लोकपादः पदं केचित् सुप्तिङन्तमथापरे। परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे॥" इति।

(ग) तत्र द्वादशपदामुदाहरति, शिरसीति।—स्मरारौ—हरे, शिरसि धृता सुरापगा—गङ्गा येन तादृशे सति, अरुणा—रक्ता, मुखेन्दोः,—मुखचन्द्रस्य, रुचिः,—कान्तिः, यस्यास्तथाभूता, अथ—अनन्तरं, स्वकान्ते—तस्मिन् स्मरारौ इत्यर्थः, चरणयुगानते—अपराधं स्वीकृत्य पादतलपतिते सति, स्मितेन—मन्दहासेन, सरसा—सद्भावार्द्रा, गिरीन्द्रपुत्री—गौरी, भवतः,—तव, भूतिहेतुः,—कल्याणदायिनी, अस्तु—भवतु। एतत् पद्यं द्वादशभिः पदैः रचितम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एवमन्यत्र। "एतन्नान्दी" इति कस्यचिन्मतानुसारेणोक्तम्। वस्तुतस्तु "पूर्वरङ्गस्य रङ्गद्वाराऽभिधानमङ्गम्" इत्युच्यते। (त)

यदुक्तम्,—

"यस्मादभिनयो ह्यत्र प्राथम्यादवतार्य्यते।
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम्॥" इति। (थ)

उक्तप्रकारायाश्च नान्द्या रङ्गद्वारात् प्रथमं नटैरेव कर्त्तव्यतया न महर्षिणा निर्देशः कृतः। (द)

कालिदासादिमहाकविप्रबन्धेषु च,—

"वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथाऽर्थाक्षरः।

(त) केचित्तु रत्नावल्यादौ श्लोकत्रयरूपाया नान्द्या दर्शनात् अत्र प्रथमपद-शब्दस्यापि श्लोकचतुर्थभागपरत्वं व्याचक्षुः, तन्न। "इदं गुरुभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे। विन्देम देवतां वाचममृतामात्मनः कलाम्॥" इत्युत्तरचरितनाटके द्वादशपदायाः नान्दीत्वानुपपत्तेः, एवं चाष्टाभिरिति तदधिकोपलक्षणत्वेन श्लोक-त्रयेणापि नान्दी सङ्गच्छते। अत एव महानाटके च्ऽधिकैः श्लोकैः नान्दी कृता। नन्वभिज्ञानशकुन्तलायां "या सृष्टिः"—इत्यादौ द्वादशाधिकपदघटितैकश्लोकप्रणीतायाः नान्द्याः कथं संग्रहः? इति चेत्, तस्याः "कालिदासादिमहाकविप्रबन्धेषु च" इत्यनेन ग्रन्थकृतैव नान्दीत्वाभावस्य वक्ष्यमाणत्वात्, इति विभिन्नमार्गोक्त्योक्तम्, एत-दिति।—"कस्यचित्" इत्यनेनास्वरसः सूचितः। तर्हि तस्य किं नाम? इत्यत आह, वस्तुतस्त्विति।—पूर्वरङ्गस्य—सामान्यमङ्गलाचरणरूपस्य, रङ्गद्वारम् अभिधानं यस्य तादृशम्, अङ्गं—विशेषः।

(थ) अत्र मुनेरपि स्वरसमाह, यस्मादिति।—यस्मात्—यतः, अत्र—सूत्र-धारक्रियमाणे मङ्गले, प्राथम्यात्—आरम्भं विधाय, अभिनयः—नाट्यव्यापारः, अव-तार्य्यते—क्रियते इत्यर्थः, अतः वाक् च अङ्गञ्च तयोरभिनयात्मकं (क्रियमाणं मङ्गलं) रङ्गद्वारं ज्ञेयम्।

(द) तस्य नान्दीत्वे मुनेरस्वरसतामाह, उक्तेति।—उक्तप्रकारायाः,—आशी-र्वचनसंयुक्तेतिलक्षणोक्तरूपायाः, चशब्दो हेतौ, महर्षिणा—भरतेन, निर्देशः,—नियमः। ग्रन्थारम्भात् प्रागेव सा नान्दी निर्विघ्नं इत्यसमाप्त्यै कविनाऽपि क्रियते इति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायाऽस्तु वः ॥" (ध)

एवमादिषु नान्दीलक्षणायोगात्। उक्तञ्च—"रङ्गद्वारमारभ्य कविः कुर्य्यात्" इति। अत एव प्राक्तनपुस्तकेषु—"नान्द्यन्ते सूत्रधारः" इत्यनन्तरमेव "वेदान्तेषु" इत्यादिश्लोकलिखनं दृश्यते। यच्च पश्चात् "नान्द्यन्ते सूत्रधारः" इति लिखनं, तस्यायमभिप्रायः,—"नान्द्यन्ते सूत्रधार इदं प्रयोजितवान्, इतः प्रभृति मया नाटकमुपादीयते, इति कवेरभिप्रायः सूचितः" इति।

पूर्व्वरङ्गं विधायैव सूत्रधारो निवर्त्तते।
प्रविश्य स्थापकस्तद्वत् काव्यमास्थापयेत् ततः ॥
दिव्यमर्त्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः।
सूचयेद्वस्तु बीजं वा मुखं पात्रमथापि वा॥२८६॥(न)

---

(ध) वेदान्तेष्विति।—वेदान्तेषु—उपनिषत्सु, यं—स्थाणुमिति भावः, रोदसी—द्याव्यापृथिव्यौ, व्याप्य स्थितम्, एकम्—अद्वितीयं, पुरुषं—ब्रह्म, आहुः,—कथयन्ति, बुधा इति शेषः, यस्मिन्—स्थाणौ, अनन्यविषयः,—तन्मात्रप्रतिपादकः, ईश्वर इति शब्दः, यथार्थाक्षरः,—यथार्थानि—व्युत्पत्त्यनुकूलानि इत्यर्थः, अक्षराणि यस्य तादृशः, योगार्थनिरूढ़ इत्यर्थः, यश्च स्थाणुः, नियमिताः,—संयमिताः, प्राणादयः,—शरीरस्थाः पञ्च वायवः यैः तादृशैः, प्राणायामादिपरैरित्यर्थः, मुमुक्षुभिः,—मोक्तुमिच्छुभिः, योगिभिः इत्यर्थः, अन्तः,—अन्तःकरणमध्ये, मृग्यते—अन्विष्यते, चिन्त्यते इति यावत्, स्थिरा—निश्चला या भक्तिः तस्याः योगेन [ व्यासवाक्ये त्वस्मिन् भक्तिशब्दे परे पुंवद्भावस्य विशदविधिनिषेधौ अस्मत्कृताभिज्ञानशकुन्तलव्याख्याने २१ पृष्ठे "विदितभक्तिः" इत्यत्र द्रष्टव्यौ। स्थिरः यो भक्तियोगः तेन इति वा केचित् ] सुलभः,—सुदृढ़भक्तिमात्रलभ्य इत्यर्थः, सः स्थाणुः,—शिवः, वः,—युष्माकं, निःश्रेयसाय—मङ्गलाय, यद्वा कैवल्याय, ( "निःश्रेयसन्तु कल्याणमोक्षयोः" इत्यमरः ) अस्तु—निःश्रेयसदायी भवतु इत्यर्थः। विक्रमोर्व्वश्यां नान्दीरूपेण निबद्धोऽयं श्लोकः। शार्दूलविक्रीड़ितं वृत्तम्।

(न) पूर्वरङ्गमिति।—सूत्रधारः,—सूत्रं—प्रयोगानुष्ठानं, धारयति—प्रवर्त्तय-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

काव्यस्यार्थस्य स्थापनात् स्थापकः। तद्वदिति—सूत्रधार-सदृशगुणाकारः। इदानीं पूर्वरङ्गस्य सम्यक्प्रयोगाभावादेक एव सूत्रधारः सर्वं प्रयोजयतीति व्यवहारः। स स्थापको दिव्यं वस्तु दिव्यो भूत्वा, मर्त्यं मर्त्यो भूत्वा, मिश्रञ्च दिव्यमर्त्ययोरन्यतरो भूत्वा सूचयेत्। वस्तु—इतिवृत्तम्। यथा—उदात्तराघवे,—

"रामो मूर्ध्नि निधाय काननमगान्मालामिवाज्ञां गुरोः,
तद्भक्त्या भरतेन राज्यमखिलं मात्रा सहैवोज्झितम्।
तौ सुग्रीवविभीषणावनुगतौ नीतौ परां सम्पदं,
प्रोत्सिक्ता दशकन्धरप्रभृतयो ध्वस्ताः समस्ता द्विषः॥" (प)

---

तीति सूत्रधारः। तथोक्तं—"नाट्योपकरणादीनि सूत्रमित्यभिधीयते। सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते॥" इति। "चतुरातोद्यनिष्णातोऽनेकभाषासमन्वितः। नानाभाषणतत्त्वज्ञो नीतिशास्त्रार्थतत्त्ववित्॥ नानागतिप्रचारज्ञो रसभावविशारदः। नाट्यप्रयोगनिपुणो नानाशिल्पकलाऽन्वितः॥ छन्दोविधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः। तत्तद्गीताऽनुगलयकलातालावधारणः॥ अवधाय प्रयोक्ता च योक्तृणामुपदेशकः। एवं गुणगणोपेतः सूत्रधारोऽभिधीयते॥" इति। पूर्व्वरङ्गं विधाय—कृत्वैव, निवर्त्तते। ततः स्थापकः,—तदाख्यः द्वितीयो नटः, प्रविश्य, रङ्गमिति शेषः, काव्यम् आस्थापयेत्—प्रकटयेत्, सभापूजादिपुरःसरं सूचयेत् इति सरलार्थः। "पूर्व्वरङ्गं विधायादौ सूत्रधारे विनिर्गते। प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः॥" इति। अन्यत् स्पष्टम्।

(प) वस्तु उदाहरति, राम इति।—रामः मालामिव [ एतेन प्रमोदातिशयः सूच्यते ] गुरोः,—पितुः, ("गुरुर्ना जनके पूज्ये ज्येष्ठे महति तु त्रिषु" इति गोपालः) आज्ञां मूर्ध्नि—शिरसि, निधाय—गृहीत्वा, काननं—वनं, ("काननं गहनं वनम्" इत्यमरः) अगात्; भरतेन तद्भक्त्या—तस्मिन् रामे, या भक्तिः,—अनुरागविशेषः, तया; मात्रा—जनन्या, सहैव अखिलं—समग्रं, राज्यम् उज्झितं—त्यक्तम्; तौ—प्रसिद्धौ, अनुगतौ—आश्रितौ, सुग्रीवविभीषणौ परां—निरतिशयां, सम्पदं—राज्यमित्यर्थः, नीतौ—प्रापितौ, वालिदशाननवधात् रामेणेति शेषः, प्रोत्सिक्ताः,—अतिगर्विताः, दशकन्धरप्रभृतयः समस्ताः द्विषः,—शत्रवः, ध्वस्ताः,—विनाशिताः। अत्रापि रामेणेति शेषः। अत्र समस्तं रामायणवृत्तं प्राधान्येन सूचितम्। शार्दूलविक्रीडितं वृत्तम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

बीजं यथा रत्नावल्याम्—

"द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥"(फ)

अत्र हि समुद्रे वहित्रभङ्गमग्नोत्थिताया रत्नावल्या अनुकूलदैवलालितो (ब) वत्सराजगृहप्रवेशो यौगन्धरायणव्यापारमारभ्य रत्नावलीप्राप्तौ बीजम् ।

मुखं—श्लेषादिना (भ) प्रस्तुतवृत्तान्तप्रतिपादको वाग्विशेषः ।

यथा,—"आसादितप्रकटनिर्मलचन्द्रहासः
प्राप्तः शरत्समय एष विशुद्धकान्तिः ।
उत्खाय गाढ़तमसं घनकालमुग्रं
रामो दशास्यमिव सम्भृतबन्धुजीवः ॥" (म)

---

(फ) द्वीपादिति ।—अभिमुखीभूतः,—अनुकूलतां प्राप्तः, विधिः,—दैवं, ("विधिर्ना नियतौ काले विधाने परमेष्ठिनि" इति मेदिनी ) अन्यस्मात्—निजावासभिन्नात्, द्वीपात्—सर्वतो जलवेष्टितभूभागात्, अपि जलनिधेः,—समुद्रस्य, मध्यात्, अपि दिशः अन्तादपि अभिमतम्—अभिलषितं वस्तु, आनीय झटिति—शीघ्रं, घटयति—सङ्गमयति ।

(ब) वहित्रम्—अर्णवयानम् । अनुकूलदैवलालितः,—अनुकूलदैववशात् सञ्जातः ।

(भ) श्लेषादिना—शब्दानामनेकार्थकत्वादिना, [अत्रादिपदेन समासोक्त्यप्रस्तुतप्रशंसादेर्ग्रहणम् ] ।

(म) आसादितेति ।—शरद्वर्णनमिदम् । आसादितः,—प्राप्तः, प्रकटः,—परिस्फुटः, निर्मलस्य—मेघाद्यावरणशून्यतया पूर्णप्रकाशस्य, चन्द्रस्य हासः,—विकासः, येन तथोक्तः, अन्यत्र—आसादितः,—प्राप्तः, रावणवधादिति भावः, प्रकटः,—समुज्ज्वलः, निर्मलः,—शाणेऽवस्थाप्य तीक्ष्णधारतां नीत इत्यर्थः, चन्द्रहासः,—रावणस्य असिः येन तादृशः, विशुद्धा—समुज्ज्वला, कान्तिः,—नक्षत्रादीनां ज्योतिः, अन्यत्र—स्वस्य शोभा इति भावः, यस्य तथोक्तः, तथा सम्भृतानि—सम्यक् पोषितानि, विकासितानि इत्यर्थः, बन्धुजीवानि,—तदाख्यपुष्पाणि येन सः, [ बन्धुजीवशब्दात् प्रसवार्थे अणि, "फले लुक्" इति तद्धितलुकि "क्लीबे नं प्रसवे सर्व्वम्" इत्यमरोक्तेः नपुंसकता बोध्या ] अन्यत्र—सम्भृताः,—संरक्षिताः, बन्धूनां—विभीषणसुग्रीवादीनां, जीवाः,—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पात्रं यथा शाकुन्तले,—

"तवास्मि गीतरागेण हारिणा प्रसभं हृतः।
एष राजेव दुष्मन्तः सारङ्गेणातिरंहसा॥" (य)

**रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः।
रूपकस्य कवेराख्यां गोत्राद्यपि स कीर्त्तयेत्॥
ऋतुञ्च कञ्चिित्प्रायेण भारतीं वृत्तिमाश्रितः॥२८७॥(र)**

प्राणाः, राक्षसेभ्य इति भावः, येन तथाभूतः, एषः शरत्समयः दशास्यमिव—रावणमिव, उग्रं—भीषणं, गाढ़तमसं—निविड़ान्धकारम्, अन्यत्र—तमोगुणाच्छन्नं, घनकालं—मेघसमयं, वर्षाकालमित्यर्थः, अन्यत्र—अतिकृष्णवर्णम्, उत्खाय—उन्मूल्य, राम इव प्राप्तः,—उपस्थितः। अत्र श्लेषेण रामायणरूपप्रस्तुतवृत्तान्तः सूचितः। वसन्ततिलकं वृत्तम्। एवं नायकनामसूचनात् पात्रसूचनमपि सम्भवति। अस्य पात्रासङ्कीर्णोदाहरणं, यथाऽनर्घराघवे,—"यान्ति न्यायप्रवृत्तस्य तिर्य्यञ्चोऽपि सहायताम्। अपन्थानन्तु गच्छन्तं सोदरोऽपि विमुञ्चति॥" अत्र वानराणां रामसाहाय्यं, विभीषणेन रावणत्यागश्च श्लेषेण सूचितः।

(य) तवेति।—अतिरंहसा—अतिवेगवता, हारिणा—चित्ताकर्षकेण, दूरसमाकर्षिणा वा, सारङ्गेण—मृगेण, एष इति आमुखनिर्वाहार्थं पुरतो निर्द्दिष्टः, राजा दुष्मन्त इव, अतिरंहसा—अति—अत्यन्त, रंहः,—वेगः, मनसः इति शेषः, यस्मात् तेन, मधुरतया श्रवणार्थम् अतीव मनोवेगकारिणा, हारिणा—मनोहरेण, तव गीतरागेण—सङ्गीतरागेण, हृतः,—आकृष्टः, राजपक्षे—सुदूरं प्रापितः, अस्मि, अहम् इति शेषः। पथ्यावक्त्रं वृत्तम्।

(र) रङ्गमिति।—रङ्गं—रङ्गस्थसामाजिकसमूहमित्यर्थः, प्रसाद्य—प्रीणयित्वा, श्लोकैरिति।—[ बहुवचनमविवक्षितमाद्यार्थं वा, तेन गद्यस्यापि ग्रहणम् ]। रूपकस्य—नाटकादेः। [ एतदेव रहस्यं प्रकारान्तरेण भावप्रकाशिकायां सन्निबध्यते। तद्यथा—"इत्थं रङ्गविधानस्य सम्बन्धादिप्रसिद्धये। गीतं नाम च बध्नीयात्पूजावाक्यं सभासदाम्॥ वाञ्छाकलापः प्रथमं कलाविधिरनन्तरम्। वाञ्छाशून्या न दृश्यन्ते व्यवहाराः कथञ्चन॥ वाञ्छाकलापस्तु कवेरभीष्टार्थप्रकाशनम्। स्वाभिधेयगतत्वेन स द्विधा परिपठ्यते॥ स्वगतन्तु स्वगोत्रादिस्वीयकीर्त्तिप्रकाशनम्। अभिधेयगतं यत् तत् काव्यनाम्ना प्रकाशनम्॥" इति ]।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सः,—स्थापकः । प्रायेणेति क्वचिद्दतोरकीर्त्तनमपि । यथा—रत्नावल्याम् ।

भारतीवृत्तिस्तु,—

**भारती संस्कृतप्रायो वाग्व्यापारो नराश्रयः॥२८८॥**

संस्कृतबहुलो वाक्प्रधानो व्यापारो भारती ।

**तस्याः प्ररोचना वीथी तथा प्रहसनामुखे ।**

**अङ्गान्यत्रोन्मुखीकारः प्रशंसातः प्ररोचना ॥२८९॥(ल)**

प्रस्तुताभिनयेषु प्रशंसातः श्रोतॄणां प्रवृत्त्युन्मुखीकरणं (व) प्ररोचना । यथा रत्नावल्याम्,—

"श्रीहर्षो निपुणः कविः, परिषदप्येषा गुणग्राहिणी,
लोके हारि च वत्सराजचरितं, नाट्ये च दक्षा वयम् ।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं, किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ? ॥" (श)

वीथीप्रहसने वक्ष्येते ।

---

(ल) तस्या इति ।—तस्याः,—भारत्याः वृत्तेः, प्ररोचना, वीथी तथा प्रहसनम्, एवम् आमुखम् इति चत्वारि अङ्गानि बोध्यानि । अत्र—एषु चतुर्षु अङ्गेषु मध्ये, प्रशंसातः,—सामाजिकादीनां गुणकीर्त्तनेन, उन्मुखीकारः,—उन्मुखीकरणम्, उत्कण्ठोत्पादनमित्यर्थः, प्ररोचना नाम भारतीवृत्तिरित्यर्थः । सुधाकरे द्विप्रकारा प्रशंसा निरूपिता ; यथा,—"प्रशंसा तु द्विधा ज्ञेया चेतनाऽचेतनाश्रया । चेतनास्तु कथानायककविसभ्यनटाः स्मृताः । अचेतनौ देशकालौ काली मधुरन्मुखः ॥" इति ।

(व) प्रवृत्त्युन्मुखीकरणं—प्रवृत्त्यौपयिकेच्छाजननम् इत्यर्थः ।

(श) श्रीहर्ष इति ।—श्रीहर्षः निपुणः,—सुदक्षः, कविः,—काव्यरचयिता, एषा परिषत्—सभाऽपि, गुणग्राहिणी—गुणग्रहणे तत्परा, न तु दोषग्रहणे इत्यर्थः, वत्सराजस्य—उदयनस्य, चरितं लोके—जगति, हारि—मनोहरञ्च, वयञ्च नाट्ये—अभिनयव्यापारे, दक्षाः,—निपुणाः, इह—अस्मिन् अभिनयव्यापारे, एकैकमपि, न पुनः सर्व्वमित्यर्थः, वस्तु—कवित्वादिकं, वाञ्छितस्य—सभासन्तोषरूपस्य फलस्य,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नटी विदूषको वाऽपि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्व्वते ॥
चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा॥२९०॥(ष)

सूत्रधारसदृशत्वात् स्थापकोऽपि सूत्रधार उच्यते, तस्य अनुचरः पारिपार्श्विकः, तस्मात् किञ्चिदूनो नटः ।

उद्घात्यकः कथोद्घातः प्रयोगातिशयस्तथा ।
प्रवर्त्तकावलगिते पञ्च प्रस्तावनाभिदाः ॥२९१॥ (स)

---

प्राप्तेः,—इष्टसिद्धेरित्यर्थः, पदं—स्थानं, यद्वा कारणम्; मम भाग्यस्य उपचयात्—अभ्युन्नतेः हेतोः, अयं सर्व्वः गुणानां—कवित्वनाट्यदक्षत्वादिरूपाणामित्यर्थः, गणः,—समूहः, समुदितः,—सम्यक् उदयं प्राप्तः, अत्र किं पुनः, वक्तव्यमिति शेषः। अवश्य-मेव मम भाग्यमेव अत्र कारणमिति भावः। अत्र कविप्रभृतीनां प्रशंसया सभ्याना-मुन्मुखीकरणरूपा प्ररोचना। शार्दूलविक्रीड़ितं वृत्तम्।

(ष) आमुखमाह, नटीति।—नटी (अत्र "नटः" इति वक्तुमुचितं "तस्मात् किञ्चिदूनो नटः" इति वृत्तिनिबन्धनत्वात्, मन्दारमरन्दे तु उभयोरपि नटीनटयोः उपादानं दृश्यते, यथा हि,—"नटी विदूषको वाऽपि नटी वा पारिपार्श्विकः" इति)। विदूषकः,—"कुसुमवसन्ताद्यभिधः" इत्यादिनोक्तलक्षणकः, वाऽपि—अथवा, पारि-पार्श्विकः,—पार्श्ववर्त्तिनटविशेषः; एते सूत्रधारेण सहिताः यत्र चित्रैः,—मनोज्ञैः, स्वकार्य्योत्—स्वकर्त्तव्यव्यापारात्, उत्थैः,—उद्भूतैः, यद्वा—स्वकार्य्ये—पात्रप्रवेशः, तदुपयुक्तैरित्यर्थः, प्रस्तुताक्षेपिभिः,—प्रकृतवृत्तमुत्थापयद्भिः, वाक्यैः मिथः,—अन्योऽन्यं, संलापं—सम्यक् भाषणं, कुर्व्वते, तत् तु आमुखं विज्ञेयं, सा नाम्ना प्रस्तावनाऽपि, विज्ञे-येति शेषः। सदृष्टान्तं प्रस्तावनास्वरूपः सुधाकरे यथोक्तः,—"विधेर्यथैव सङ्कल्पो मुखतां प्रतिपद्यते। प्रधानस्य प्रबन्धस्य तथा प्रस्तावना मता॥" इति।

(स) प्रस्तावनाभेदानाह, उद्घात्यक इति।—एतल्लक्षणं सदृष्टान्तं सुधाकरे यथा,—"विधेर्यथैव सङ्कल्पो मुखतां प्रतिपद्यते। प्रधानस्य प्रबन्धस्य तथा प्रस्तावना मता॥" इति।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र,—

**पदानि त्वगतार्थानि तदर्थगतये नराः ।**
**योजयन्ति पदैरन्यैः स उद्घात्यक उच्यते॥२८२॥(ह)**

यथा मुद्राराक्षसे सूत्रधारः,—

"क्रूरग्रहः सकेतुश्चन्द्रमसम्पूर्णमण्डलमिदानीम् ।
अभिभवितुमिच्छति बलात्—" (क) इत्यनन्तरं [ नेपथ्ये ]
"आः क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति बलात् ?" इति ।

अत्र अन्यार्थवन्त्यपि पदानि हृदिस्थार्थागत्या अर्थान्तरे सङ्क्रमय्य पात्रप्रवेशः । (ख)

---

(ह) उद्घात्यकमाह, पदानीति ।—अगतः,—अप्रसिद्धतया अप्रतीतः, अर्थः,—अभिप्रेतार्थः, येभ्यः तानि अगतार्थानि—अबोधिताभीष्टार्थानि इत्यर्थः, पदानि तदर्थगतये—तदर्थस्य—अभिप्रेतार्थस्य, गतये—बोधाय, नराः ( यत्र ) अन्यैः,—अभिप्रेतार्थमात्रप्रतिपादकैरित्यर्थः, पदैः योजयन्ति—अभिप्रेतार्थे सङ्क्रमयन्ति, स उद्घात्यक उच्यते ।

(क) क्रूरग्रह इति ।—क्रूरः,—अनिष्टफलदत्वेन निष्ठुरः, ग्रहः,—राहुः, सकेतुः,—सपातः, चन्द्रतुल्यक्रान्तिस्थ इत्यर्थः, इदानीं—सम्प्रति, असम्पूर्णमण्डलम्—अपरिपूर्णबिम्बं, चन्द्रं बलात्—हठात्, अभिभवितुम्—आक्रमितुं, ग्रसितुमिति यावत्, इच्छति—प्रवणीभवति ।

(ख) अत्रेति ।—अत्र अन्यार्थवन्ति यथा,—क्रूरः ग्रहः,—आग्रहः, यस्य तथोक्तः, अथवा—क्रूरे—क्रूरकर्म्मणि, कूटव्यवहारे इत्यर्थः, ग्रहः,—आसक्ती यस्य तथाविधः, सकेतुः,—मलयकेतुना सह वर्त्तमानः, राक्षसः इत्यर्थः, इदानीमसम्पूर्णमण्डलम्—अचिरराज्याभिषिक्ततया स्वस्य सम्यगाज्ञाप्रचाराभावेन अस्वाधीनप्रकृतिमण्डलं, चन्द्रं—चन्द्रगुप्तं, बलात्—बलं सामर्थ्यं, मित्रादिसैन्यं वा, आश्रित्य [ल्यब्लोपे पञ्चमी ] अभिभवितुं—पराभवितुम्, इच्छति । इत्यादीनि अभिप्रेतार्थप्रतिपादकानि, अपि पदानि हृदिस्थस्य—अभिमतस्य, [ अलुक् समासः ] अर्थस्य—द्वितीयार्थरूपस्य, अगत्या—अबोधेन, द्वितीयार्थस्य प्रतिपादनं नासीदिति मुद्रा इत्यर्थः, अर्थान्तरे—द्वितीयार्थे, सङ्क्रमय्य—तत्तच्छब्दात् स्पष्टतः अभिधाय इत्यर्थः, चन्द्रगुप्तं प्रति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा।
भवेत् पात्रप्रवेशश्चेत् कथोद्घातः स उच्यते ॥२९३॥

वाक्यं यथा रत्नावल्याम् ;—"द्वीपादन्यस्मादपि" इत्यादि सूत्रधारेण पठिते [ नेपथ्ये ] "एवमेतत्। कः सन्देहः ? द्वीपादन्यस्मादपि" इत्यादि पठित्वा यौगन्धरायणस्य प्रवेशः। (ग)

वाक्यार्थो यथा वेण्याम्,—

"निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः॥" (घ)

---

समलयकेतोः अमात्यराक्षसात् भयमाशङ्कमानस्य पात्रस्य—नटस्य, चाणक्यनेपथ्यभूतस्य इत्यर्थः, प्रवेशः।

(ग) वाक्यमिति।—अयं भावः,—काव्येन्दुप्रकाशकृता "रूढिस्थानामर्थवतां पदानामन्यथाकृतेः। यः पात्रस्य प्रवेशः स्यात् स कथोद्घात इष्यते॥" इत्युक्तः कथोद्घातः, तत्रान्यथाकरणं पदभङ्गार्थभङ्गभेदाभ्यां द्विप्रकारकम्, इति कथोद्घातोऽपि द्विविधः "सूत्रधारस्य वाक्यं वा" इत्यादिना सूचित इति बोध्यम्। अतः,—प्रथमस्योदाहरणम्—"द्वीपादन्यस्मात्" इति ; द्वितीयस्य "निर्वाण" इति।

(घ) निर्वाणेति।—पाण्डुतनयाः,—पाण्डवाः, माधवेन—कृष्णेन, सह अरीणां —शत्रूणां, दुर्य्योधनादीनामित्यर्थः, प्रशमात्—सन्धिकरणे शत्रुभावापगमात्, अन्यत्र —युद्धे निधनात्, निर्वाणं—निवृत्तं, वैरस्य—विद्वेषस्य, दहनं—तापो येषां तथाभूताः सन्तः, एकत्र शत्रुत्वव्यपगमात् अन्यत्र शत्रूणां समूलमुच्छेदात् तद्विषयकविद्वेषनिवृत्त्या प्रशमिततज्जन्यसन्तापा इत्यर्थः, नन्दन्तु—आनन्दमनुभवन्तु ; [अत्र अरिप्रशमनरूपहेतोरन्वयोपपत्तये पूर्व्वपदार्थप्रधानः वैरं दहन इवेति उपमितसमासो ग्राह्यः, न तु वैरमेव दहन इति रूपकसमासः, तस्य उत्तरपदार्थप्रधानतया उक्तहेतोरन्वयानुपपत्तेः। अत्र "नन्दन्तु" इति पदस्य दुःखाभावपरत्वं बोद्धव्यं, दुःखसत्त्वे आनन्दानुदयात्, तथा च उक्तरूपविग्रह एव साधीयान्, न तु रूपकार्थबोधकः वैरमेव दहन इति विग्रहः]। सभृत्याः,—सानुजीविनः, कुरुराजस्य—धृतराष्ट्रस्य, सुताः,—पुत्राः, दुर्य्योधनादय

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इति सूत्रधारेण पठितस्य वाक्यस्यार्थं गृहीत्वा [ नेपथ्ये ] "आः दुरात्मन्! वृथा मङ्गलपाठक! कथं स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः ?" ततः सूत्रधारनिष्क्रान्तौ भीमसेनस्य प्रवेशः ।

**यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते ।**
**तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा ॥२९४॥(ङ)**

यथा कुन्दमालायाम्,—"[ नेपथ्ये ] इत इतोऽवतरत्वार्य्या ।

सूत्र । कोऽयं खलु आर्य्याऽऽह्वानेन (च) सहायकमपि मे सम्पादयति ? [ विलोक्य ] कष्टमतिकरुणं वर्त्तते,—

लङ्केश्वरस्य भवने सुचिरं स्थितेति
रामेण लोकपरिवादभयाकुलेन ।
निर्वासितां जनपदादपि गर्भगुर्वीं
सीतां वनाय परिकर्षति लक्ष्मणोऽयम् ॥" (छ)

---

इति यावत्, रक्तेन—अनुरागेण, प्रणयेनेत्यर्थः, प्रसाधिता—आयत्तीकृता, भूः,—पृथिवी, यैः तादृशाः, अन्यत्र—रक्तेन—खगावरुधिरेण, प्रसाधिता—अलङ्कृता, भूः यैः तथाभूताः, तथा क्षतः,—विनष्टः, विग्रहः,—कलहः, सन्धिकरणादिति भावः, येषां तादृशाः, अन्यत्र—क्षताः,—व्रणिताः, विग्रहाः,—शरीराणि येषां, युद्धप्रहारादिति भावः, तथाभूताः सन्तः, स्वस्थाः,—सुखिनः, अन्यत्र—स्वर्गस्थाः, मृता इत्यर्थः, ( "सुस्थिते च मृते स्वस्थः" इति कोषः ) भवन्तु । अस्मिन् पक्षे [ "खर्परे शरि वा विसर्गलोपो वक्तव्यः" इति विसर्गलोपः ] एतेन कुरुराजसुतपदार्थमादाय पात्रस्य प्रवेशः सूचितः । वसन्ततिलकं वृत्तम् ।

(ङ) प्रयोगातिशयमाह, यदीति ।—यदि एकस्मिन् प्रयोगे अन्यः प्रयोगः प्रयुज्यते, तेन—द्वितीयेन प्रयोगेण, पात्रस्य—नटस्य, प्रवेशः चेत् भवति, तदा प्रयोगातिशयः, भवतीति शेषः ।

(च) आर्य्यापदेनात्र सूत्रधारः स्वभार्य्याऽऽह्वानं मन्यमानो वदति,—कोऽयमित्यादि ।

(छ) लङ्केश्वरस्येति ।—लङ्केश्वरस्य—रावणस्य, भवने—गृहे, लङ्कायामिति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र नृत्यप्रयोगार्थं स्वभार्य्याऽऽह्वानमिच्छता सूत्रधारेण "सीतां वनाय परिकर्षति लक्ष्मणोऽयम्" इति सीतालक्ष्मणयोः प्रवेशं सूचयित्वा निष्क्रान्तेन स्वप्रयोगमतिशयान एव प्रयोगः प्रयोजितः। (ज)

कालं प्रवृत्तमाश्रित्य सूत्रधृग् यत्र वर्णयेत्।
तदाश्रयस्य पात्रस्य प्रवेशस्तत् प्रवर्त्तकम् ॥२९५॥(झ)

यथा "आसादितप्रकट" इत्यादि। ततः प्रविशति यथा-निर्दिष्टो रामः।

यत्रैकत्र समावेशात् कार्य्यमन्यत् प्रसाध्यते।
प्रयोगे खलु तज्ज्ञेयं नाम्नाऽवलगितं बुधैः॥२९६॥(ञ)

यथा,—शाकुन्तले सूत्रधारो नटीं प्रति—"तवास्मि गीत-रागेण" इत्यादि। ततो राज्ञः प्रवेशः।

---

यावत्, सुचिरं—दीर्घकालं, दशमासपर्य्यन्तं व्याप्य इत्यर्थः,[कालात्यन्तसंयोगे द्वितीया, क्रियाविशेषणत्वेन वा क्लीवत्वम्] स्थिता, सीतेति शेषः, इति—इत्थं, लोकानां परिवादः,—दोषारोपणम्, अपवाद इति यावत्, ("परिवादोऽपवादे स्यात्" इति मेदिनी) तस्मात् भयं, तेन आकुलः,—कातरः, तेन, रामेण जनपदात्—देशात्, निर्वासितां—निष्कासितां, गर्भेण गुर्व्वीं—भारवतीं तां, गुरुगर्भभराक्रान्तामित्यर्थः, अपि सीताम् अयं लक्ष्मणः वनाय—वनं नेतुमित्यर्थः, परिकर्षति—आकर्षति। वसन्त-तिलकं वृत्तम्। कुन्दमालायाः पद्यमिदम्।

(ज) अत्रेति।—अत्र—नृत्यप्रयोगे, प्रयोगः,—सीतालक्ष्मणयोः प्रवेशसूचनं, स्वप्रयोगं—नृत्यरूपम्, अतिशयानः,—अतिक्रामन्, प्रयोजितः।

(झ) कालमिति।—यत्र प्रवृत्तम्—उपस्थितं, कालं—वसन्तादिकमित्यर्थः, आश्रित्य सूत्रधृक्—सूत्रधारः, वर्णयेत्, तत्र (यः) तदाश्रयः,—तदाश्रितेत्यर्थः, पात्रस्य—नटस्य, प्रवेशः, भवति इति शेषः, तत् प्रवर्त्तकम्।

(ञ) यत्रेति।—यत्र—यस्मिन्, प्रयोगे, एकत्र—एकस्मिन् विषये, समावेशात्—सादृश्योद्भावनात्, अन्यत् कार्य्यं—पात्रप्रवेशरूपं, प्रसाध्यते—सूच्यते, तत् बुधैः,—पण्डितैः, अवलगितम् (अव-लग्-क्तः। लग् गतौ) इति नाम्ना ज्ञेयम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

योज्यान्यत्र यथालाभं वीथ्यङ्गानीतराण्यपि॥२६७॥(ट)

अत्र—आमुखे। उद्घात्यकावलगितयोरितराणि वीथ्यङ्गानि वक्ष्यमाणानि। नखकुट्टस्तु,—

नेपथ्योक्तं श्रुतं तत्र त्वाकाशवचनं तथा।
समाश्रित्यापि कर्त्तव्यमामुखं नाटकादिषु॥
एषामामुखभेदानामेकं कञ्चित् प्रयोजयेत्॥
तेनार्थमथ पात्रं वा समाक्षिप्यैव सूत्रधृक्।
प्रस्तावनाऽन्ते निर्गच्छेत् ततो वस्तु प्रयोजयेत्॥२६८॥(ठ)

वस्तु—इतिवृत्तम्।

इदं पुनर्वस्तु बुधैर्द्विविधं परिकल्प्यते।
आधिकारिकमेकं स्यात् प्रासङ्गिकमथापरम्॥
अधिकारः फले स्वाम्यम्, अधिकारी च तत्प्रभुः।
तस्येतिवृत्तं कविभिः आधिकारिकमुच्यते॥२६९॥(ड)

फले—प्रधानफले। यथा,—बालरामायणे रामचरितम्।

---

(ट) योज्यानीति।—अत्र—आमुखे, यथालाभं—यथासम्भवम्, इतराणि—अन्यानि, वीथ्यङ्गानि अपि योज्यानि—प्रयोक्तव्यानि।

(ठ) नेपथ्योक्तमिति।—तत्र—नाटकादिषु, तु श्रुतं नेपथ्योक्तं—नेपथ्यभाषितं, तथा आकाशवचनं समाश्रित्याऽपि आमुखं—प्रस्तावना, कर्त्तव्यम्। एषाम् आमुखभेदानाम्—एतद्द्वयन्योक्तानां, नखकुट्टोक्तानां वा, एकं कञ्चित् प्रयोजयेत्—विदध्यात्। अथ सूत्रधृक्—सूत्रधारः, तेन अर्थं—वस्तु, वा—अथवा, पात्रं समाक्षिप्य—उपस्थाप्य, सूचयित्वा इति यावत्, एव प्रस्तावनाऽन्ते निर्गच्छेत्, रङ्गादिति शेषः, नेपथ्यान्तः प्रविशेदिति भावः। ततः,—सूत्रधारगमनानन्तरं, वस्तु—इतिवृत्तं, प्रयोजयेत्—उपस्थापयेत्, प्रविष्टं पात्रमिति शेषः।

(ड) इदमिति।—इदं वस्तु पुनः बुधैः द्विविधं परिकल्प्यते—विभज्यते, एकं—वस्तु, आधिकारिकम्, अथ अपरं प्रासङ्गिकं स्यात्। अधिकारिज्ञानं तावदाधि-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अस्योपकरणार्थन्तु प्रासङ्गिकमितीष्यते ॥३००॥ (ढ)

अस्य—आधिकारिकेतिवृत्तस्य उपकरणनिमित्तं यच्चरितं तत् प्रासङ्गिकम् । यथा,—सुग्रीवादिचरितम् ।

पताकास्थानकं योज्यं सुविचार्य्येह वस्तुनि॥३०१॥(ण)

इह—नाट्ये ।

यत्रार्थे चिन्तितेऽन्यस्मिंस्तल्लिङ्गोऽन्यः प्रयुज्यते ।

आगन्तुकेन भावेन पताकास्थानकन्तु तत्॥३०२॥(त)

तद्भेदानाह,—

सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः ।

पताकास्थानकमिदं प्रथमं परिकीर्त्तितम्॥३०३॥(थ)

यथा रत्नावल्यां,—"वासवदत्तेयम्" इति राजा यदा तत्

---

कारिकज्ञानजनकं, तच्चाधिकारज्ञानाधीनम्, इत्यधिकारं निरूपयति, अधिकार इति ।—फले—कार्य्यस्य प्रधानफले, स्वाम्यं—स्वामित्वम्, अधिकारः, तस्य—स्वाम्यस्य, प्रभुश्च अधिकारी, तस्य—अधिकारिणः, इतिवृत्तं कविभिः,—विद्वद्भिः, आधिकारिकम् उच्यते ।

(ढ) अस्येति ।—अस्य—आधिकारिकेतिवृत्तस्य, तु—पुनः, उपकरणार्थम्—उपकाराय प्रसङ्गेन निर्वृत्तं वस्तु, प्रासङ्गिकम् इति इष्यते ।

(ण) पताकास्थानप्रयोगनियममाह, पताकेति ।—इह वस्तुनि—नाट्यरूपे इतिवृत्ते, सुविचार्य्य—सम्यक् विविच्य, पताकास्थानकं योज्यं—प्रयोक्तव्यम् ।

(त) पताकास्थानमाह, यत्रेति ।—यत्र अन्यस्मिन् अर्थे—प्रयोजने, चिन्तिते तल्लिङ्गः,—तस्य अर्थस्य लक्षणान्वितः, अन्यः,—अन्यार्थः, आगन्तुकेन—अतर्कितेन, भावेन—उपस्थापितेन वस्तुना, प्रयुज्यते—क्रियते, तत्—निरुक्तलक्षणम् इदं, तदिति शेषः, पताकास्थानकं, बोध्यमिति शेषः ।

(थ) सहसेति ।—उपचारतः,—अतर्कितभावोपनतत्वात्, सहसा एव गुणवती—परमप्रीतिकरी, अर्थसम्पत्तिः,—फललाभः, यत्र भवेदिति शेषः, इदं तदिति शेषः, पताकास्थानं प्रथमम्—आद्यं, परिकीर्त्तितम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri.

कण्ठपाशं मोचयति, तदा तदुक्त्या (द) "सागरिकेयम्" इति प्रत्यभिज्ञाय "कथं प्रिया मे सागरिका,—

अलमलमतिमात्रं साहसेनामुना ते,
त्वरितमयि! विमुञ्च त्वं लतापाशमेतम्।
चलितमपि निरोद्धुं जीवितं जीवितेशे!
क्षणमिह मम कण्ठे बाहुपाशं निधेहि॥" (ध)

इत्यादि फलरूपार्थसम्पत्तिः पूर्व्वापेक्षया उपचारातिशयात् गुणवती—उत्कृष्टा। (न)

**वचः सातिशयश्लिष्टं नानाबन्धसमाश्रयम्।**
**पताकास्थानकमिदं द्वितीयं परिकीर्त्तितम्॥३०४॥(प)**

(द) वासवदत्तेयमिति।—वासवदत्तारूपधारिणी सागरिका सङ्केतं प्राप्ता, वासवदत्तया तद्विज्ञातमिति सागरिका वासवदत्तापरिभवभयेन गले पाशं दत्त्वा तत्रैव मर्त्तुमारब्धा, इति राज्ञः सागरिकायां वासवदत्ताभ्रम इति बोध्यम्। तदुक्त्या—सागरिकोक्त्या।

(ध) अलमिति।—अतिमात्रं यथा भवति तथा, ते—तव, अमुना—उद्बन्धनद्वारा प्राणत्यागरूपेण, साहसेन—साहसिकव्यापारेण, हठान्मरणव्यापारेणेति यावत्, अलम् अलम्, (सम्भ्रमे द्विरुक्तिः)। अयि सागरिके! त्वम् एतं लतापाशं त्वरितं—झटिति, विमुञ्च—परित्यज, हे जीवितेशे!—प्राणेश्वरि! चलितं—स्थानात् दूरं गतं, हृदयदेशं परित्यज्य बहिर्गन्तुं प्रवृत्तमिति भावः, अपि जीवितं—मदीयान् प्राणान् निरोद्धुं क्षणम्, इह—अस्मिन्, मम कण्ठे बाहुपाशं—पाशाकारं बाहुयुगलं, निधेहि—अर्पय। अत्र वासवदत्तायाः अनुनयपूर्वकं सुरतं राज्ञोऽभिप्रेतं, तदन्यस्य सागरिकायाः अनुनयपूर्व्वकसुरतस्यानुष्ठानम्। वासवदत्ता रुष्टा इति विकलचित्तेन राज्ञा तर्कितस्य सागरिकाप्राप्तिरूपस्य कारणस्य, फलं सागरिकासुरतम्। मालिनी वृत्तम्।

(न) फलेति।—फलरूपार्थसम्पत्तिः,—फलरूपस्य—सागरिकारूपस्य, अर्थस्य सम्पत्तिः,—लाभः। पूर्वापेक्षया—वासवदत्तालाभापेक्षया इत्यर्थः, उपचारातिशयात्—अतर्कितोपनतत्वातिशयात्।

(प) वच इति।—सातिशयम्—अतिमात्रं यथा तथा, श्लिष्टं—नानार्थं,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा वेण्याम् ;—"रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥" अत्र रक्तादीनां रुधिरशरीरार्थहेतुकश्लेषवशेन बीजार्थप्रतिपादनात् नेतृमङ्गलप्रतिपत्तौ सत्यां द्वितीयं पताकास्थानम् । (फ)

**अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत् ।**
**श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते ॥ ३०५ ॥(ब)**

लीनम्—अव्यक्तार्थं, श्लिष्टेन—सम्बन्धयोग्येनाभिप्रायान्तरप्रयुक्तेन, प्रत्युत्तरेणोपेतं, सविनयं—विशेषनिश्चयप्राप्त्या सहितं, सम्पाद्यते यत् तत् तृतीयं पताकास्थानम् । (भ)

यथा वेण्यां द्वितीयेऽङ्के—

"कञ्चुकी । देव ! भग्नम् । राजा । केन ? कञ्चु । भीमेन । राजा । कस्य ? कञ्चु । भवतः । राजा । आः ! किं प्रलपसि ? कञ्चु । [ सभयं ] देव ! ननु ब्रवीमि,—भग्नं भीमेन भवतः ।

---

नानाविधो यो बन्धः,—रचना, विविधविशेषणसम्बन्ध इति यावत्, तत्समाश्रयं—तद्विषयकं, वचः,—वचनं, द्वितीयम् इदं पताकास्थानकं परिकीर्त्तितम् ।

(फ) अत्र सामान्यलक्षणं सङ्गमयति, अत्रेति ।—रक्तादीनां—रक्तादिपदानाम्; [ आदिना प्रसाधितविग्रहपदयोर्ग्रहणम् ] । रुधिरशरीरेति ।—रुधिरशरीरयोर्मध्ये "नष्टितः" इति ज्ञेयम् । बीजार्थप्रतिपादनात्—भीमसेनक्रोधोपचितो युधिष्ठिरोत्साहः सन्दर्भस्य बीजं, तस्य अर्थः,—प्रयोजनं, फलमित्यर्थः, शत्रुनिपातनरूपमिति भावः, तस्य प्रतिपादनात्—सूचनात्, नेतुः,—नायकस्य, युधिष्ठिरस्य इत्यर्थः, मङ्गलप्रतिपत्तौ—मङ्गलानुष्ठाने निश्चिते । तथा च प्रतिनायकस्य दुर्योधनस्य मङ्गले चिन्तिते आगन्तुकेन भावेन (प्रधानफलसूचनेन इत्यर्थः) नेतृमङ्गलप्रतिपत्तिरिति द्वितीयं पताकास्थानकं बोध्यम् ।

(ब) अर्थोपक्षेपकमिति ।—अर्थस्य—कार्य्यस्य, फलरूपस्य इति यावत्, उपक्षेपकम्—उपस्थापकं, वक्ष्यमाणविष्कम्भकादिपञ्चकान्यतममित्यर्थः । स्पष्टमन्यत् ।

(भ) लीनमिति ।—सम्बन्धयोग्येन—प्रस्तुतान्वयोपयुक्तेन, अभिप्रायान्तरप्रयुक्तेन—अप्रस्तुतबोधाभिप्रायेण प्रयुक्तेन इत्यर्थः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

राजा। धिक्! वृद्धापसद! कोऽयमद्य ते व्यामोहः? (म)

कञ्चु। देव! न व्यामोहः, सत्यमेव,—

भग्नं भीमेन भवतो मरुता रथकेतनम्।
पतितं किङ्किणीक्वाणबद्धाक्रन्दमिव क्षितौ॥" (य)

अत्र दुर्य्योधनोरुभङ्गरूपप्रस्तुतसङ्क्रान्तमर्थोपक्षेपणम्। (र)

**द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः।**
**प्रधानार्थान्तरापेक्षी पताकास्थानकं परम्॥३०६॥** (ल)

यथा रत्नावल्याम्,—

"उद्दामोत्कलिकां विपाण्डुररुचिं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम्॥" (व)

---

(म) वृद्धेति।—वृद्धापसद—वृद्धेषु अपसदः,—अधमः, तत्सम्बुद्धौ, वृद्धतयाऽपहृतविवेकेष्वधम इति भावः। व्यामोहः,—वैचित्त्यं, मदोद्रेक इति यावत्।

(य) भग्नमिति।—भीमेन—भयानकेन, मरुता—वायुना, भग्नं—खण्डितं, भवतः,—तव, रथकेतनं—रथध्वजः, किङ्किण्यः,—क्षुद्रघण्टिकाः, तासां क्वाणः,—शब्दः, तेन बद्धः,—कृतः, आक्रन्दः,—रोदनध्वनिर्येन तथाभूतमिव क्षितौ—भूमौ, पतितम्। यथा कोऽपि शत्रुणा आहतः क्षितौ पतन् रोदिति, तद्वदिति भावः। भवत इति च प्रस्तुते ऊरुभङ्गेऽप्यन्वययोग्यम्; मरुता इति विशेषनिश्चयः, अत्र रथकेतनभङ्गनिवेदनमभिमतम्, ऊरुभङ्गनिवेदनमुपपन्नम्। पथ्यावक्त्रं वृत्तम्।

(र) एतदेवोपपादयति, अत्रेति।—सङ्क्रान्तं—पर्य्यवसन्नमित्यर्थः।

(ल) द्व्यर्थ इति।—द्व्यर्थः,—अर्थद्वयसहितः, सुश्लिष्टः,—सुसम्बद्धः, काव्येषु योजितः,—प्रयोजितः, काव्यप्रयोगार्हः, न तु सभाऽभ्यन्तरतया काव्यप्रयोगायोग्य इत्यर्थः; सर्व्वत्रैव काव्ययोजितस्य विद्यमानत्वेन काव्ययोजितत्वविशेषणस्य निरर्थकत्वापत्तेरिति भावः। प्रधानं—फलम्, एव (यत्) अर्थान्तरम्—अर्थविशेषः, तत् अपेक्षते इति प्रधानार्थान्तरापेक्षी—मुख्यफलरूपस्य अर्थस्य सूचक इत्यर्थः, परं—चतुर्थं, पताकास्थानकम्।

(व) उदाहरति, उद्दामेति।—वत्सराजस्य विदूषकं प्रत्युक्तिरियम्। अहम्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र भाव्यर्थः सूचितः (अ)।

एतानि चत्वारि पताकास्थानानि क्वचिन्मङ्गलार्थं क्वचिदमङ्गलार्थमपि सर्व्वसन्धिषु भवन्ति। काव्यकर्त्तुरिच्छावशाद् भूयोऽपि भवन्ति। यत् पुनः केनचिदुक्तं,—"मुखसन्धिमारभ्य सन्धिचतुष्टये क्रमेण भवन्ति" इति, तदन्ये न मन्यन्ते, एषामत्यन्तमुपादेयानामनियमेन (ब) सर्व्वत्रापि सर्व्वेषामपि भवितुं युक्तत्वात्।

---

उद्दामम्—उत्कटं यथा तथा, उत्—उद्गताः, कलिकाः,—कोरकाः, यस्यास्ताम्, अन्यत्र—उद्दामा—उत्कटा, उत्कलिका—कान्तार्थमुत्कण्ठा, ("कलिका कोरकः पुमान्" "उत्कण्ठोत्कलिके समे" इति चामरः) यस्याः, तां, विपाण्डुरा—कुसुमविकासात् विशेषेण पाण्डुवर्णा, रुचिः,—कान्तिः यस्याः, तथाभूताम्, अन्यत्र—विरहेण पाण्डुकान्तिं, प्रारब्धजृम्भां—विकासोद्यताम्, अन्यच—जृम्भा—आलस्यभङ्गः, प्रारब्धा जृम्भा यया तादृशीं, (कामाभिलाषव्यञ्जकमिदम्) अविरलैः,—घनैः, श्वसनोद्गमैः,—वात्याप्रसरैः, अन्यत्र—निश्वासमरुद्भिः, क्षणात्—क्षणे क्षणे, मुहुर्मुहुरित्यर्थः, आत्मनः,—स्वस्य, आयासम्—इतः ततः विक्षेपम्, अन्यत्र—क्लान्तिम्, आतन्वतीं—प्रकटयन्तीम्, समदनां—मदनवृक्षान्विताम्, अन्यच—कामार्त्ताम्, इमामुद्यानलताम्—उपवनव्रततिम्, अन्याम्—अपरां, नारीमिव अद्य पश्यन्—अवलोकयन्, देव्याः,—महाराज्ञ्याः, वासवदत्ताया इति यावत्, मुखं ध्रुवं—निश्चितं, कोपेन विपाटला द्युतिः यस्य तादृशं, करिष्यामि। साध्वी स्त्री भर्त्तारम् अपरामवलोकयन्तं दृष्ट्वा कुप्यति इति प्रसिद्धिः; यथा विरहक्लिष्टसागरिकादर्शनेन तस्याः क्रोधः, तथोद्यानलतादर्शनकृतकालविलम्बेनापीति भावः। शार्दूलविक्रीड़ितं वृत्तम्। रत्नावल्या पद्यमिदम्।

(अ) अत्र भावी अर्थः,—राजानं सागरिकाऽऽसक्तं दृष्ट्वा वासवदत्ता कोपं करिष्यतीत्येवंरूपप्रधानार्थान्तरमित्यर्थः, तत्सूचकमिति बोध्यम्; यद्वा,—विरहक्लिष्टसागरिकासङ्गमः, प्रधानमर्थः सूचितः; द्वितीये, श्लेषवशेनैव प्रधानार्थसूचनम्, अत्र तु न तथेति भेदः। इह सागरिकाप्रसादे चिन्तिते देव्याः प्रसादोऽनुष्ठेयप्राय इति सामान्यलक्षणगमनम्।

(ब) एतानीति।—भूयोऽपि—पुनः पुनरपि, भवन्ति, प्रयुक्तानीति शेषः। उपादेयानां—सहृदयमनोरम्याणामित्यर्थः, अनियमेन—नियमं विनेत्यर्थः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यत् स्यादनुचितं वस्तु नायकस्य रसस्य वा।
विरुद्धं तत् परित्याज्यमन्यथा वा प्रकल्पयेत् ॥३०७(स)

अनुचितमितिवृत्तं यथा—रामस्य छद्मना वालिवधः। तच्च उदात्तराघवे नोक्तमेव। सुग्रीववीरचरिते तु वाली रामवधार्थमागतो रामेण हतः, इत्यन्यथा कृतः।

अङ्केष्वदर्शनीया या वक्तव्यैव च सम्मता।
या च स्यात् वर्षपर्य्यन्तं कथा दिनद्वयादिजा ॥
अन्या च विस्तरा सूच्या साऽर्थोपक्षेपकैर्बुधैः॥३०८॥(ह)

अङ्केषु अदर्शनीया कथा—युद्धादिकथा।

वर्षादूर्द्ध्वन्तु यद्वस्तु तत् स्याद्वर्षादधोभवम् ॥३०९॥(क)

---

(स) यदिति।—यत् वस्तु नायकस्य वा रसस्य अनुचितं—स्वरूपच्युतिप्रत्यायकं, तत् विरुद्धं—प्रतिकूलं, परित्याज्यं स्यात्, वा अन्यथा—उचितं यथा भवति तथा, पुराणादिविरुद्धमपि स्वेच्छया इति शेषः, प्रकल्पयेत्—रचयेत्। अत एवोक्तम्,—"अपारे काव्यसंसारे कविरेव प्रजापतिः। यथाऽस्मै रोचते विश्वं तथेदं परिवर्त्तते॥ शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत्। स एव वीतरागश्चेन्नीरसं सर्वमेव तत्॥ भावानचेतनानपि चेतनवच्चेतनानचेतनवत्। व्यवहरति यथेष्टं सुकविः काव्ये स्वतन्त्रतया॥" इति ध्वन्यालोके।

(ह) अङ्केष्विति।—या—कथा, अङ्केषु अदर्शनीया—निषेधनीया, वक्तुमिति शेषः, सा सम्मता—वक्तुरभीष्टा चेत्, वक्तव्या—कथया निर्वाह्या, एव न तु कार्य्यत इति भावः; या—कथा, वर्षपर्य्यन्तं—संवत्सरसाध्येति भावः, सा दिनद्वयादिजा—दिवसद्वयादिभिः निर्वाह्या इत्यर्थः, स्यात्; ["नानेकदिननिर्वर्त्त्यकथया सम्प्रयोजितः" इत्यनेन तस्य अङ्के निषिद्धत्वेऽपि वर्षपर्य्यन्तम् इति नियमार्थं पृथगुपादानम्]। अन्या, या विस्तरा—अतिबहुला कथा, सा—समस्ताऽपि कथा, बुधैः,—पण्डितैः, अर्थोपक्षेपकैः,—अर्थसूचकैः वाक्यैः, वक्ष्यमाणैर्विष्कम्भकादिभिरित्यर्थः, सूच्या—प्रकाश्या।

(क) वर्षादिति।—यत् वस्तु वर्षात् ऊर्द्ध्वं—वत्सराधिकसम्पाद्यमित्यर्थः, तत् वर्षात् अधोभवं—वर्षात् न्यूनकालेन निर्वाह्यमित्यर्थः, स्यात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उक्तं हि मुनिना,—

"अङ्कच्छेदे कार्य्यं मासकृतं वर्षसञ्चितं वाऽपि ।
तत् सर्व्वं कर्त्तव्यं वर्षादूर्द्ध्वं न तु कदाचित् ॥" (ख)

एवञ्च चतुर्दशवर्षव्यापिन्यपि रामवनवासे ये ये विराधवधादयः कथांशाः, ते ते वर्ष-वर्षावयव-दिनयुग्मादीनामेकतमेन सूचनीया न विरुद्धाः ।

दिनावसाने कार्य्यं यद् दिनेनैवोपपद्यते ।
अर्थोपक्षेपकैर्वाच्यमङ्कच्छेदं विधाय तत् ॥३१०॥(ग)

के ते अर्थोपक्षेपकाः ? (घ) इत्याकाङ्क्षायामाह,—

अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ ।
चूलिकाऽङ्कावतारोऽथ स्यादङ्कमुखमित्यपि ॥३११॥(ङ)

अथ विष्कम्भकः,—

वृत्तवर्त्तिष्यमाणानां कथाऽंशानां निदर्शकः ।
सङ्क्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ।

---

(ख) अङ्कच्छेद इति ।—अङ्कस्य छेदे—अवसाने, विष्कम्भकादावित्यर्थः, यत् कार्य्यं मासकृतं वा, वर्षसञ्चितं—संवत्सरकृतमित्यर्थः, तत् सर्वं वर्षात् ऊर्द्ध्वं कदाचित् न तु—नैव, कर्त्तव्यम् ।

(ग) एकदिननिर्वर्त्त्यस्य कथाऽंशस्य निर्वर्त्तनीयत्वप्रकारमाह, दिनेति ।—यत् कार्य्यं दिनेन—सम्पूर्णेन दिवसेन, उपपद्यते—सङ्गच्छते, तत्—सम्पूर्णदिवसनिर्वर्त्त्यं कार्य्यमित्यर्थः, अङ्कच्छेदम्—अङ्कविरामं, विधाय—कृत्वा, दिनावसाने—दिवसावसानावसरे, अर्थोपक्षेपकैः,—वक्ष्यमाणैः विष्कम्भकादिभिः, वाच्यं—वक्तव्यम् ।

(घ) अर्थोपक्षेपकानभिधातुमाकाङ्क्षामुत्थापयति, के ते ? इति ।—के ?—किंस्वरूपाः ?

(ङ) अर्थेति ।—अर्थस्य—कार्य्यस्य, उपक्षेपकाः,—उपस्थापयितारः, पञ्च—पञ्चसङ्ख्यकाः । तान् नामतो निर्दिशति,—विष्कम्भकः, प्रवेशकः, चूलिका, अङ्कावतारः, तथा अङ्कमुखम् इति ।

LIBRARY.
Jangamwadi Math, VARANASI,
Acc. No. ..................



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः।
शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पितः॥३१२॥(च)

तत्र शुद्धो यथा,—मालतीमाधवे श्मशाने कपालकुण्डला। सङ्कीर्णो यथा,—रामाभिनन्दे क्षपणककापालिकौ।

अथ प्रवेशकः,—

प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा॥३१३॥(छ)

अङ्कद्वयस्यान्तरिति प्रथमाङ्केऽस्य प्रतिषेधः। यथा—वेण्याम् अश्वत्थामाङ्के राक्षसमिथुनम्।

अथ चूलिका,—

अन्तर्जवनिकाऽऽसंस्थैः सूचनाऽर्थस्य चूलिका॥३१४॥(ज)

यथा,—वीरचरिते चतुर्थाङ्कस्यादौ। [नेपथ्ये] "भो भोः

---

(च) विष्कम्भकमाह, वृत्तेति।—वृत्तवर्त्तिष्यमाणानां—वृत्तानाम्—अतीतानां, वर्त्तिष्यमाणानाम्—आगामिनां, कथांशानां निदर्शकः,—सूचकः, अङ्कस्य आदौ—प्रथमं, दर्शितः, सङ्क्षिप्तः,—सङ्क्षेपेणोक्तः, यः अर्थः,—कथाविभागः, स विष्कम्भः। स तु मध्येन—मध्यविधेन एकेन पात्रेण, वा मध्यमाभ्यां पात्राभ्यां सम्प्रयोजितः चेत् भवति, तदा शुद्धः स्यात्। नीचमध्यमाभ्यां, पात्राभ्यामिति शेषः, कल्पितश्चेत् सङ्कीर्णः,—विमिश्रः, विष्कम्भको नाम अर्थोपक्षेपकः इति शेषः।

(छ) प्रवेशकमाह, प्रवेशक इति।—नीचपात्रप्रयोजितः,—नीचानि—नाट्या, न तु कर्म्मतो निकृष्टानि, यानि पात्राणि तैः प्रयोजितः,—कृतप्रयोग इत्यर्थः, अनुदात्तया—प्राकृतया, उक्त्या—भाषया, रचितः कथाविभागः इति शेषः, प्रवेशकः। ननु स कुत्र स्यात्? इत्याह, अङ्केति।—स तु अङ्कद्वयान्तः,—द्वयोरङ्कयोर्मध्ये, विज्ञेयः,—विधातव्यः इत्यर्थः। ननु किमयमेतावत्स्वरूप एव? इत्याह, शेषमिति।—शेषं—सङ्क्षेपोक्तादि, विष्कम्भके यथा—विष्कम्भकवत्, ज्ञेयमिति भावः।

(ज) चूलिकामाह, अन्तरिति।—जवनिका—तिरस्करिणी, तस्याः अन्तः,—अभ्यन्तरे, आसंस्थैः (जनैः) या अर्थस्य—कार्य्यस्य, सूचना सा चूलिका।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वैमानिकाः ! प्रवर्त्तन्तां रङ्गमङ्गलानि" इत्यादि । "रामेण परशुरामो जितः" इति नेपथ्ये पात्रैः सूचितम् ।

अथ अङ्कावतारः,—

अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः ।
यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः ॥३१५॥(झ)

यथा,—अभिज्ञाने पञ्चमाङ्के पात्रैः सूचितः षष्ठाङ्कस्तदङ्कस्याङ्गविशेष इवावतीर्णः ।

अथाङ्कमुखम्,—

यत्र स्यादङ्क एकस्मिन्नङ्कानां सूचनाऽखिला ।
तदङ्कमुखमित्याहुर्बीजार्थख्यापकञ्च तत् ॥३१६॥(ञ)

यथा,—मालतीमाधवे प्रथमाङ्कादौ कामन्दक्यवलोकिते भूरिवसुप्रभृतीनां भाविभूमिकानां परिक्षिप्तकथाप्रबन्धस्य च प्रसङ्गात् सन्निवेशं सूचितवत्यौ । (ट)

अङ्कान्तपात्रैर्वाऽङ्कास्यं छिन्नाङ्कस्यार्थसूचनात् ॥३१७॥(ठ)

---

(झ) अङ्कावतारमाह, अङ्कान्ते इति ।—अङ्कस्य अन्ते—अवसाने, पात्रैः,—नाटकीयपुरुषैः, न तु कविना इति भावः, सूचितः,—सङ्क्षिप्य दर्शितः, अथ च तदङ्कस्य—यस्यान्ते पात्रैः सूचितः, तस्याङ्कस्य, अविभागतः,—अविच्छेदेन, यत्र—य इत्यर्थः, [ अध्यथमेतत् ] अङ्कः अवतरति, एषः अङ्कावतार इति स्मृतः,—कथितः ।

(ञ) अङ्कमुखमाह, यत्रेति ।—यत्र एकस्मिन् अङ्के अङ्कानां—सर्वेषामङ्कार्थानाम्, अखिला—समस्ता, सूचना स्यात्, तत् अङ्कमुखं, यत् केवलं बीजार्थस्य—मूलभूतस्य विषयस्य, ख्यापकं—सूचकं, च तदप्यङ्कमुखम् इत्याहुः ।

(ट) भावीति ।—भाविभूमिकानां—भविष्यन्नेपथ्यशालिनाम्, परिक्षिप्तः,—सङ्क्षिप्तः, यः कथाप्रबन्धः, तस्य प्रसङ्गात्—प्रसङ्गमनुसृत्य, सन्निवेशं सूचितवत्यौ ।

(ठ) अथ धनिकमतेनाङ्कमुखमाह, अङ्कान्तेति ।—वा—यद्वा, अङ्कान्ते (प्रविष्टैः) पात्रैः,—नटैः, छिन्नस्य—छेदं प्राप्तस्य, अङ्कस्य—विष्कम्भकस्य इत्यर्थः, अर्थस्य सूचनात् अङ्कास्यम्—अङ्कमुखम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अङ्कान्तपात्रैः,—अङ्कान्ते प्रविष्टैः पात्रैः। यथा वीरचरिते द्वितीयाङ्कान्ते,—"सुमन्त्रः। [ प्रविश्य ] भगवन्तौ वशिष्ठविश्वामित्रौ भवतः सभार्गवानाह्वयतः। इतरे। क्व भगवन्तौ ? सुमन्त्रः। महाराजदशरथस्यान्तिके। इतरे। तत् तत्रैव गच्छामः" इत्यङ्कपरिसमाप्तौ "ततः प्रविशन्त्युपविष्टा वशिष्ठविश्वामित्रपरशुरामाः" इत्यत्र पूर्व्वाङ्कान्त एव प्रविष्टेन सुमन्त्रपात्रेण शतानन्दजनककथाविच्छेदे उत्तराङ्कमुखसूचनादङ्कास्यमिति। एतच्च धनिकमतानुसारेणोक्तम्।

अन्ये तु—"अङ्कावतारेणैव इदं गतार्थम्" ( ड ) इत्याहुः।

**अपेक्षितं परित्यज्य नीरसं वस्तु विस्तरम्।**
**यदा सन्दर्शयेच्छेषमामुखानन्तरं तदा ॥**
**कार्यो विष्कम्भको नाट्य आमुखाक्षिप्तपात्रकः** ॥३१८॥ (ढ)

यथा,—रत्नावल्यां यौगन्धरायणप्रयोजितः।

**यदा तु सरसं वस्तु मूलादेव प्रवर्त्तते।**
**आदावेव तदाऽङ्कः स्यादामुखाक्षेपसंश्रयः** ॥३१९॥(ण)

यथा,—शाकुन्तले।

---

( ड ) अन्ये इति।—अन्ये तु—काव्यप्रदीपकारादयस्तु, अङ्कावतारेण—अङ्कान्तरङ्कान्तरोपस्थितिस्वीकारेण, एव गतार्थं—कृतार्थम्। एवंविधस्याङ्कमुखस्य स्वीकारो निरर्थक इति भावः, इत्याहुः।

( ढ ) प्रथमाङ्कादावपि कर्त्तव्यतामाह, अपेक्षितमिति।—नीरसं विस्तरं वस्तु परित्यज्य—विच्छिद्य, अपेक्षितम्—आकाङ्क्षितं, यदा सन्दर्शयेत्, तदा शेषं—सरसं वस्तु, सन्दर्शयितुमिति शेषः, नाट्ये आमुखानन्तरम्—आमुखात्—प्रस्तावनायाः, अनन्तरम्—पश्चात्, आमुखेन आक्षिप्तम्—आकृष्टं, पात्रं यत्र तादृशः, विष्कम्भकः कार्य्यः।

( ण ) यदेति।—यदा तु मूलादेव—मूलमारभ्यैव, सरसं वस्तु प्रवर्त्तते, तदा आदौ एव आमुखम् आक्षिपति इति तथोक्तः संश्रयो यस्य तथाभूतः, आमुखसूचितः इत्यर्थः, अङ्कः स्यात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विष्कम्भकाद्यैरपि नो बधो वाच्योऽधिकारिणः ।
अन्योऽन्येन तिरोधानं न कुर्य्याद्रसवस्तुनोः॥३२०॥(त)

रसः,—शृङ्गारादिः । यदुक्तं धनिकेन,—

"न चातिरसतो वस्तु दूरं विच्छिन्नतां नयेत् ।
रसं वा न तिरोदध्याद् वस्त्वलङ्कारलक्षणैः ॥"इति । (थ)

बीजं बिन्दुः पताका च प्रकरी कार्य्यमेव च ।
अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि॥३२१॥(द)

अर्थप्रकृतयः,— प्रयोजनसिद्धिहेतवः ।

---

(त) विष्कम्भकाद्यैरिति ।—विष्कम्भकाद्यैः अपि इत्यपिना अङ्कैरपीत्यर्थः । अधिकारिणः,—प्रधानफलप्रभोः, वधः,—मारणं मरणं वा, नो वाच्यः,—न वर्णनीयः, किं पुनः साक्षाद्दर्शनीय इति भावः । इदमुक्तं भवति, नायको नायिकैव वा नाटकफलाधिदेवता भवति, तद्वधे वर्णमाने नाटकफलस्यापि संहारः, अस्य तदायत्तत्वात् ; तथा सति प्रकृते सर्व्वतो विप्लवापत्तिः इति । तथा रसस्य, वस्तुनः,—इतिवृत्तस्य, च अन्योऽन्येन—परस्परेणेत्यर्थः, तिरोधानं न कुर्य्यात, रसे इतिवृत्तयोगः, इतिवृत्ते रसयोगः यथा स्यात् तथा रचयितव्यमित्यर्थः, नैतयोः परस्परं विच्छेदः कार्य्य इति भावः । यथोक्तं भरतमुनिना,—"अङ्के प्रवेशके वा प्रकरणमाश्रित्य नाटके वाऽपि । न वधः कर्त्तव्यः स्याद् यस्तत्र स नायकः ख्यातः ॥ अवतरणमेव कार्य्यं सन्धिर्वा ग्रहणमेव वा नित्यम् । बहुभिः कार्य्यविशेषैः प्रवेशकैः सूचयेद् वाऽपि ॥" इति ।

(थ) धनिकमतेन समर्थयते, नेति ।—अतिरसतः,—अतिरसात्, रसस्यातिरेकेणेत्यर्थः, वस्तु—इतिवृत्तं, दूरम्—अत्यर्थं, विच्छिन्नतां—विच्छेदं, न च नयेत्—नैव प्रापयेत् ; तथा वस्तुनः,—इतिवृत्तस्य, अलङ्कारलक्षणैः,—अलङ्कृतिरचनैः, अनुप्रासोपमाऽऽदीनां विधानैरित्यर्थः, रसं वा न तिरोदध्यात्—न विच्छेदं गमयेदित्यर्थः । अतः यथा रसवस्तुनोः सम्बन्धोऽपि सम्पद्येत, परस्परञ्च तदन्यतरोत्कर्षेण एकस्य तिरोधानं न स्यात् तथा यतितव्यमिति भावः ।

(द) बीजमिति ।—अर्थस्य—प्रयोजनस्य, प्रकृतयः,—सिद्धिहेतवः, पञ्च । ता नामतो निर्दिशति,—बीजं, बिन्दुः, पताका, प्रकरी, तथा कार्य्यम् इति । फलमाह,—( एताः बीजाद्याः अर्थप्रकृतीः ) ज्ञात्वा यथाविधि, योज्याः,—प्रयोक्तव्या इत्यर्थः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र बीजम्,—

**अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति ।**
**फलस्य प्रथमो हेतुर्बीजं तदभिधीयते ॥३२२॥ (ध)**

यथा,—रत्नावल्यां वत्सराजस्य रत्नावलीप्राप्तिहेतुर्दैवानुकूल्य-लालितो यौगन्धरायणव्यापारः । यथा वा,—वेण्यां द्रौपदीकेश-संयमनहेतुर्भीमसेनक्रोधोपचितो युधिष्ठिरोत्साहः । (न)

**अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् ॥३२३॥ (प)**

यथा,—रत्नावल्याम् अनङ्गपूजापरिसमाप्तौ कथाऽर्थविच्छेदे सति "उदयनस्येन्दोरिवोद्वीच्यते" इति सागरिका श्रुत्वा [सहर्षं] "कधं एसो सो उदअणणरिंदो" इत्यादिरवान्तरार्थहेतुः । (फ)

---

(ध) बीजमाह, अल्पमात्रमिति ।—यत् अल्पमात्रं—यत्किञ्चित्, समुद्दिष्टं सत् बहुधा विसर्पति—विस्तारं गच्छति, सहकारियोगेनोपचितं सत् विविधावान्तर-कार्य्याणि जनयति इत्यर्थः, तत् फलस्य—प्रधानफलस्य, प्रथमः,—प्रधानं, हेतुः,—कारणं, बीजम् अभिधीयते—कथ्यते । अत्र विशेषो यथोक्तः मातृगुप्ताचार्य्यैः,—"फले यस्य हि संहारः फलबीजन्तु तद्भवेत् । वस्तुबीजं कथा ज्ञेया अर्थबीजन्तु नायकः ॥" इति । प्रथमं स्तोकमुत्पन्नः, ततः परं बहुविधविस्तारवान् कार्य्यप्रयोजनः कारणविशेषः बीजवत् बीजमिति सारः ।

(न) यथा रत्नावल्यामिति ।—रत्नावल्याः,—सागरिकायाः, प्राप्तिहेतुः दैवस्य आनुकूल्यं—फलाभिमुखत्वं तेन लालितः,—अनुमोदित इत्यर्थः, यौगन्धरायणस्य व्यापारः बीजं, रत्नावलीप्राप्तिश्च तत्फलं बोध्यमिति शेषः । वेण्यामिति ।—द्रौपदी-केशसंयमनहेतुः भीमसेनस्य क्रोधेन उपचितः,—वृद्धिं गतः, युधिष्ठिरस्य उत्साहः, वेणीसंहारनाटकस्य बीजं, द्रौपदीकेशसंयमनञ्च तत्फलं बोध्यमिति शेषः ।

(प) बिन्दुमाह, अवान्तरेति ।—अवान्तरस्य—महावाक्यरूपसन्दर्भैकदेशस्य, अर्थस्य—प्रयोजनस्य, विच्छेदे—समाप्तौ, अच्छेदस्य—अविरामस्य, कारणं बिन्दुः । तथोक्तम्,—"अवान्तरकथाविच्छेदे तत्सन्धानकारी बिन्दुः । जले तैलबिन्दुवत् विस्तारित्वात् बिन्दुरिति व्यपदिश्यते ॥" इति ।

(फ) उदाहरति, यथेति ।—रत्नावल्याम् अनङ्गस्य—कामस्य, पूजा तस्याः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते ॥३२४॥ (व)

यथा,—रामचरिते सुग्रीवादेः, वेण्यां—भीमादेः, शाकुन्तले—विदूषकस्य चरितम् ।

पताका नायकस्य स्यात् न स्वकीयफलान्तरम् ।
गर्भे सन्धौ विमर्षे वा निर्वाहस्तस्य जायते ॥३२५॥ (भ)

यथा,—सुग्रीवादेः राज्यप्राप्त्यादिः ।

यत्तु मुनिनोक्तम्, (म)—

"आ गर्भाद्वा विमर्षाद्वा पताका विनिवर्त्तते ।
यस्मात् कस्मान्निबन्धोऽस्याः परार्थः परिकीर्त्त्यते ॥" (य)

---

परिसमाप्तौ सत्यां, कथायाः,—प्रकृतसन्दर्भस्य, अर्थः,—तात्पर्य्यं, तस्य विच्छेदे सति "अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवावास्थानीं समये समं नृपजनः सायन्तने सम्पतन्। सम्प्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुं प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्ष्यते ॥" इति श्रुत्वा सागरिका ( सहर्षम् ) कथमिति ।— [ "कथम् एषः स उदयननरेन्द्रः" इति संस्कृतम् ] अवान्तरस्यार्थस्य हेतुः, अवान्तरार्थश्च सागरिकाया वत्सराजं प्रति अनुरागस्य अविराम इति बोध्यम्।

( व ) पताकामाह, व्यापीति ।—व्यापि—व्यापकं, निर्वहणपर्य्यन्तं स्थायीत्यर्थः, प्रासङ्गिकं—प्रसङ्गतः आगतं, वृत्तं—चरितं, पताका इति अभिधीयते। तथोक्तं भरतेन,—"यद्वृत्तं हि परार्थं स्यात् प्रधानस्योपकारकम्। प्रधानवच्च कल्प्येत सा पताकेति कीर्त्तिता ॥" इति ।

( भ ) पताकेति ।—पताका नायकस्य स्वकीयफलान्तरं—निजप्रयोजनविशेषोपयोगिनीत्यर्थः, न स्यात् [ "पताकानायकस्य" इति समस्तपाठे—पताकायाः नायकस्य—स्वामिनः, स्वकीयं—स्वमात्रोपकारि यत्फलान्तरं "न पताका" इत्यनुषङ्गेणान्वयः] । अस्य व्यापकताऽभावमुपपादयति, गर्भे इति ।—गर्भे सन्धौ, विमर्षे वा—विमर्षसन्धौ वा, तस्य—फलान्तरस्य, निर्वाहः,—समाप्तिः, जायते। रसगङ्गाधरे तूक्तं,—"नायकस्य फलं यत्तत् पताका परिकीर्त्त्यते। प्रतिनायकगं वाऽपि पताका यत् प्रयोजनम् ॥" इति ।

( म ) फलान्तरे मुनेः पताकापदप्रयोगस्याभिनवगुप्तपादाचार्य्यव्याख्यानानुसारेण गौणत्वमङ्गीकृत्य स्वोक्तिविरोधं परिहरति, यत्तु इति ।—मुनिना—भरतेन ।

( य ) आ गर्भादिति ।—यस्मात् कस्मात् हेतोः अस्याः,—तथाविधायाः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र "पताकेति ।—पताका (र) नायकफलं निर्वहण-पर्य्यन्तमपि पताकायाः प्रवृत्तिदर्शनात्" इति व्याख्यातमभि-नवगुप्तपादैः ।

**प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता ।**

यथा,—कुलपत्यङ्के रावणजटायुसंवादः ।

**प्रकरी नायकस्य स्यान्न स्वकीयं फलान्तरम् ॥३२६॥ (ल)**

**अपेक्षितन्तु यत्साध्यमारम्भो यन्निबन्धनः ।**

**समापनन्तु यत्सिद्ध्यै तत्कार्य्यमिति सम्मतम् ॥३२७॥ (व)**

यथा,—रामचरिते रावणबधः ।

**अवस्थाः पञ्च कार्य्यस्य प्रारब्धस्य फलार्थिभिः ।**

**आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ॥३२८॥ (श)**

---

पताकायाः, निबन्धः,—रचना, सङ्घटनमित्यर्थः, परार्थः परिकीर्त्त्यते, ततः आ गर्भात्—गर्भसन्धिपर्य्यन्तम्, आ विमर्षात्—विमर्षसन्धिपर्य्यन्तं, वा पताका विनिवर्त्तते ।

(र) तत्रेति ।—अत्र पताकाशब्देन पताकानायकफलं बोध्यम् ।

(ल) प्रकरीमाह, प्रासङ्गिकमिति ।—प्रासङ्गिकं—प्रसङ्गतः प्राप्तं, प्रदेशस्थम्—एकदेशव्यापि, चरितं प्रकरी मता। सा तु नायकस्य स्वकीयं फलान्तरं—फलविशेषः, न स्यात् । अन्ये तु—"शोभायै वैदिकादीनां यथा पुष्पाचतादयः । अथर्त्तु-वर्णनादिस्तु प्रसङ्गे प्रकरी मता ॥" इत्याहुः । तत्रोदाहरणं पुनर्यथा शाकुन्तले षष्ठेऽङ्के,—"ततः प्रविशति चूताङ्कुरमालोकयन्ती चेटी तत्पृष्ठे अपरा च"......इत्यारभ्य "नेपथ्ये" इत्यन्तेन इति ।

(व) कार्य्यमाह, अपेक्षितमिति ।—यत् साध्यं—साधनीयम्, अपेक्षितम्—आकाङ्क्षितं, न तु प्रासङ्गिकं, यन्निबन्धनः,—यदर्थः, आरम्भः,—उपाये प्रथमप्रवृत्तिः; उद्योगः इति यावत्, तथा यस्य सिद्ध्यै—सिद्ध्यर्थं, समापनं—सामग्रीसमवधानं, तत्तु कार्य्यमिति सम्मतम् ।

(श) कार्य्यस्य अवस्थाभेदानाह, अवस्था इति ।—फलार्थिभिः,—फललाभाभि-लाषिभिः, प्रारब्धस्य—कृतारम्भस्य, कार्य्यस्य, पञ्च अवस्थाः,—अङ्गानि, परिकीर्त्त्यन्ते

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र,—

**भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये॥३२९॥(घ)**

यथा,—रत्नावल्यां रत्नावल्यन्तःपुरनिवेशार्थं यौगन्धरायणस्य औत्सुक्यम्। एवं नायकनायिकादीनामपि (ङ) औत्सुक्यमाकरेषु बोद्धव्यम्।

**प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः॥३३०॥(छ)**

यथा रत्नावल्यां,—"तह वि ण अत्थि अस्सो दंसणोवाओ त्ति जधा तधा आलिहिअ जधासमीहिदं करइस्सम्" इत्यादिना प्रतिपादितो रत्नावल्याश्चित्रलेखनादिर्वत्सराजसङ्गमोपायः। (क) यथा च,—रामचरिते समुद्रबन्धनादिः।

**उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः॥३३१॥(ख)**

---

इति शेषः, तास्व,—आरम्भः, यत्नः, प्राप्त्याशा, नियताप्तिः तथा फलागम इति बोध्या इति भावः।

(घ) आरम्भमाह, भवेदिति।—मुख्यस्य—प्रधानस्य, फलस्य सिद्धये यत् औत्सुक्यं, स आरम्भः भवेत्।

(ङ) उदाहरति, यथेति।—अत्र रत्नावलीलाभ एव मुख्यं फलं बोध्यम्। नायकेति।—[ नायकश्च नायिकाऽऽदयश्च इति विग्रहः, अतो नैकशेषः ]।

(छ) प्रयत्नमाह, प्रयत्न इति।—फलस्य—प्रधानफलस्य, अवाप्तौ—प्राप्तौ, तद्विषये इति यावत्, [ विषये सप्तमीयम् ] अतित्वरान्वितः,—अत्यन्तसाहसिकतया पुरस्कृतः, व्यापारः,—चेष्टा, प्रयत्नः। तथोक्तम्,—"अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति। परं चौत्सुक्यगमनं प्रयत्नः परिकीर्त्तितः॥" इति भरतशास्त्रे।

(क) उदाहरति, यथेति।—तह वि इति।—[ "तथाऽपि नास्त्यन्यो दर्शनोपाय इति यथा तथा आलिख्य यथासमीहितं करिष्यामि" इति संस्कृतम् ]। सागरिका वासवदत्ताभयेन राजानं पुनर्द्रष्टुमपि अपारयन्ती राजानमालिख्य "तदन्यो न कश्चित्तद्दर्शनोपाय इति चित्रे तथा राजानं पश्यन्ती कृतार्था भविष्यामि" इति चिन्तितवतीति भावः। वत्सेति।—वत्सराजस्य सङ्गमोपायः। अयं भावः,—साक्षात्सङ्गमे महाराज्ञ्याः प्रतिबन्धात् झटिति तद्धेतुः चित्रलिखनमिति।

(ख) प्राप्त्याशामाह, उपायेति।—उपायापायशङ्काभ्याम्—उपायः,—उद्यम-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—रत्नावल्यां तृतीयेऽङ्के वेशपरिवर्त्तनाभिसरणादेः सङ्गमोपायाद् वासवदत्तालक्षणापायशङ्कया च अनिर्द्धारितैकान्तसङ्गमरूपफलप्राप्तिः प्रत्याशा । एवमन्यत्र ।

**अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता ॥३३२॥(ग)**

अपायाभावान्निर्द्धारितैकान्तफलप्राप्तिर्नियताप्तिः । यथा रत्नावल्याम् ;— "राजा । देवीप्रसादनं त्यक्त्वा नान्यमत्रोपायं पश्यामि" इति देवीलक्षणापायस्य प्रसादनेन निवारणात् नियतफलप्राप्तिः सूचिता ।

**साऽवस्था फलयोगः स्याद् यः समग्रफलोदयः ॥३३३॥ (घ)**

यथा,—रत्नावल्यां रत्नावलीलाभचक्रवर्त्तित्वलक्षणफलान्तरलाभसहितः । एवमन्यत्र । (ङ)

**यथासङ्ख्यमवस्थाभिराभिर्योगात् तु पञ्चभिः ।**
**पञ्चधैवेतिवृत्तस्य भागाः स्युः पञ्च सन्धयः॥३३४॥(च)**

---

साधनम्, अपायशङ्का—उद्यमसिद्धौ विघ्नभयं, ताभ्यां प्राप्तौ, फलस्येति शेषः, सम्भवः,—सम्भावना, प्राप्त्याशा ।

(ग) नियताप्तिमाह, अपायेति ।—अपायस्य—विघ्नस्य, अभावतः,—अपगमात्, निश्चिता, प्राप्तिः,—फललाभः, नियताप्तिः ।

(घ) फलागममाह, सेति ।—यः समग्रस्य—अनेकस्य, फलस्य—प्रयोजनलाभस्य, उदयः,—सम्भावना, सा अवस्था फलयोगः,—फलागमः, स्यात् । पण्डितराजेन रसगङ्गाधरे तूक्तं,—"फलागमः समं यत्र नायकप्रतिनायकौ । सम्पत्तिञ्च विपत्तिञ्च प्रपद्येतां कुतश्चन ॥" इति ।

(ङ) एवमिति ।—अन्यत्र—वीरचरितादौ, सीतालाभादिसहितो रावणवधादिः इति ज्ञेयम् ।

(च) सन्धिमाह, यथेति ।—आभिः,—अनन्तरोक्ताभिः, पञ्चभिः अवस्थाभिः,—आरम्भप्रभृतिभिरङ्गैरित्यर्थः, यथासङ्ख्यं—निर्दिष्टक्रममनुल्लङ्घ्य, योगात्—समन्वयात्, इतिवृत्तस्य—सन्दर्भवस्तुनः, पञ्चधा एव—पञ्चप्रकारा एव, भागाः, पञ्च सन्धयः स्युः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तल्लक्षणमाह,—

**अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति॥३३५॥(छ)**

एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैकप्रयोजनसम्बन्धः सन्धिः। तद्भेदानाह,—

**मुखं प्रतिमुखं गर्भो विमर्ष उपसंहृतिः।**
**इति पञ्चास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते॥३३६॥**

यथोद्देशं लक्षणमाह,—

**यत्र बीजसमुत्पत्तिर्नानाऽर्थरससम्भवा।**
**प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितम्॥३३७॥(ज)**

यथा,—रत्नावल्यां प्रथमेऽङ्के (झ)।

**फलप्रधानोपायस्य मुखसन्धिनिवेशिनः।**
**लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखञ्च तत्॥३३८॥(ञ)**

---

अतश्च आरम्भयोगिनी अवस्था मुखसन्धिः, यत्नयोगिनी अवस्था प्रतिमुखसन्धिः, प्रत्याशायोगिनी अवस्था गर्भसन्धिः, नियताप्तियोगिनी अवस्था विमर्षसन्धिः, फलागमयोगिनी अवस्था उपसंहृतिसन्धिश्चेति बोध्यम्।

(छ) सन्धिलक्षणमाह, अन्तरैकार्थसम्बन्ध इति।—एक एव अन्वयः,—प्रयोजनं, तस्मिन् सति, अन्तरा—मध्ये, एकार्थसम्बन्धः,—एकेन अपरेणेत्यर्थः, अर्थेन सम्बन्धः,—संयोगः, सन्धिः। मन्दारमरन्देऽप्युक्तं,—"मुख्यप्रयोजनवशात् तथाऽङ्गानां समन्वये। अवान्तरार्थसम्बन्धः सन्धिः सन्धानरूपतः॥" इति।

(ज) मुखसन्धिमाह, यत्रेति।—यत्र—अंशे, नाना अर्थाः,—प्रयोजनानि, रसाः,—शृङ्गारादयश्च, तेषां सम्भवः,—व्यञ्जनं यत्र तादृशी, प्रारम्भेण—प्रकृष्टयत्नेन, समायुक्ता, बीजस्य—सन्दर्भमूलकारणस्य, समुत्पत्तिः,—समुद्भवः, तत् मुखं—मुखसन्धिरित्यर्थः, परिकीर्त्तितम्।

(झ) उदाहरति, यथेति।—अत्र रत्नावलीवत्सराजयोरनुरागरूपस्य बीजस्य उत्पत्तिरिति लक्षणसमन्वयः।

(ञ) प्रतिमुखसन्धिमाह, फलेति।—यच्च मुखसन्धिनिवेशिनः,—मुखसन्धौ

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—रत्नावल्यां द्वितीयेऽङ्के वत्सराजसागरिकासमागमहेतोरनुरागबीजस्य प्रथमाङ्कोपक्षिप्तस्य सुसङ्गता-विदूषकाभ्यां ज्ञायमानतया किञ्चिल्लक्ष्यस्य वासवदत्तया चित्रफलकवृत्तान्तेन किञ्चिदुन्नीयमानोऽस्य उद्देशरूप उद्भेदः । (ट)

**फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन ।**

**गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान्मुहुः ॥३३९॥(ठ)**

फलस्य गर्भीकरणाद्गर्भः ।(ड) यथा रत्नावल्यां द्वितीयेऽङ्के,—"सुसङ्गता । सहि ! अदक्खिणा दाणिं सि तुमं, जा एवं भट्टिणा हत्थेण गहिदावि कोवं ण मुञ्चसि" ( ढ ) इत्यादौ समुद्भेदः । पुनर्वासवदत्ताप्रवेशे ह्रासः । तृतीयेऽङ्के—"तद्वार्त्ताऽन्वेषणाय गतः कथं चिरयति वसन्तकः ?" इत्यन्वेषणम् । विदूषकः । "ही ही भोः ! कोसम्बीरज्जलम्भेणावि ण तादिसो पिअवअस्सस्स

---

स्थितस्य, फलप्रधानोपायस्य—फलस्य—प्रधानफलस्य, यः प्रधानोपायः तस्य, बीजस्येत्यर्थः, लक्ष्यालक्ष्य इव—ईषल्लक्ष्य इव, उद्भेदः,—प्रकाशः, उद्देश इति यावत्, तत् प्रतिमुखं—प्रतिमुखं नाम सन्धिरित्यर्थः ।

(ट) उदाहरति, यथेति ।—सागरिकावत्सराजसमागमः प्रधानफलम् । अनुरागबीजस्य—अनुरागरूपबीजस्येत्यर्थः । सुसङ्गता—सागरिकायाः वयस्या । अन्यत् स्पष्टम् ।

(ठ) गर्भमाह, फलेति ।—यत्र फलस्य—प्रधानप्रयोजनस्य, यः प्रधानोपायः तस्य, प्राक्—पूर्वं, किञ्चन—कथञ्चन, ईषदित्यर्थः, उद्भिन्नस्य—उद्भेदं गतस्य, प्रतिमुखोद्दिष्टस्य किञ्चिल्लक्ष्यतया प्रकाशितस्य बीजस्येति भावः, मुहुः,—पुनः पुनः, ह्रासान्वेषणवान्,—क्वचित् तिरोभाववान् क्वचिद्वा अनुसन्धानवान्, समुद्भेदः,—सम्यक् प्रकाशः, स गर्भः,—गर्भनामा सन्धिरित्यर्थः । यथोक्तं नाट्यशास्त्रकारैः,—"उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव वा । पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः ॥" इति ।

(ड) फलस्येति ।—गर्भीकरणात्—अन्तर्गतकरणादित्यर्थः ।

(ढ) सहीति ।—[ "सखि ! अदक्षिणा इदानीमसि त्वं, या एवं भर्त्रा हस्तेन गृहीताऽपि कोपं न मुञ्चसि" इति संस्कृतम् ] ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

परितोसो, जादिसो मम सआसादो पिअवअणं सुणिअ भविस्सदि" (ण) इत्यादौ उद्भेदः। पुनरपि वासवदत्ताप्रत्यभिज्ञानात् त्रासः। पुनः सागरिकायाः सङ्केतस्थानगमने अन्वेषणम्। पुनर्लतापाशकरणे उद्भेदः।

अथ विमर्षः,—

यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः।
शापाद्यैः सान्तरायश्च स विमर्ष इति स्मृतः॥३४०॥(त)

यथा शाकुन्तले चतुर्थाङ्कादौ,—"अनसूया। हला पिअंवदे! जइ वि गन्धब्वेण विवाहविहिणा णिब्बुत्तकल्लाणा पिअसही सउंतला अणुरूवभत्तिभाइणी संवुत्ता, तह वि मे ण णिब्बुदं हिअअं" (थ) इत्यत आरभ्य सप्तमाङ्कोपक्षिप्तात् शकुन्तलाप्रत्यभिज्ञानात् प्रागर्थसञ्चयः (द) शकुन्तलाविस्मरणरूपविघ्नालिङ्गितः।

---

(ण) हो होति।—["कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य परितोषः, यादृशो मम सकाशात् प्रियवचनं श्रुत्वा भविष्यति" इति संस्कृतम्]।

(त) विमर्षसन्धिमाह, यत्रेति।—यत्र मुख्यफलस्य—प्रधानफलस्य, उपायः गर्भतः,—गर्भसन्धिमपेक्ष्य इत्यर्थः, अधिकः,—स्पष्ट इत्यर्थः, उद्भिन्नः,—प्रकाशितः, शापाद्यैः,—अभिसम्पातप्रभृतिभिः, [आद्यशब्देन भयादिग्रहणं] सान्तरायश्च—सविघ्नश्च, स विमर्ष इति स्मृतः,—कथितः। भयेन सान्तरायो यथा,—रत्नावल्यां सागरिकासङ्गमोपायः वत्सराजस्यानुरागः वासवदत्ताभयेन संसृष्टः। तथोक्तम्;—"गर्भान्निर्भिन्नबीजार्थो विलोभनकृतोऽपि वा। क्रोधव्यसनजो वाऽपि स विमर्ष इति स्मृतः॥" इति।

(थ) हला पिअंवदे इति।—["हला प्रियंवदे! यद्यपि गान्धर्वेण विवाहविधिना निर्वृत्तकल्याणा प्रियसखी शकुन्तला अनुरूपभर्तृभागिनी संवृत्ता, तथाऽपि मे न निर्वृतं हृदयम्" इति संस्कृतम्]।

(द) सप्तमेति।—सप्तमाङ्कोपक्षिप्तात्—सप्तमाङ्के उपक्षिप्तम्—उपसंहृतम्, तस्मात्, शकुन्तलायाः प्रत्यभिज्ञानात् प्राक्—पूर्वम्, अर्थसञ्चयः,—फलसमुदायः।


CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ निर्वहणम्,—

बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।
एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत् ॥३४१॥(ध)

यथा वेण्याम्;—"कञ्चुकी। (उपसृत्य सहर्षम्) महाराज! वर्द्धसे। अयं खलु भीमसेनो दुर्य्योधनक्षतजारुणीकृतसर्व्वशरीरो दुर्लक्ष्यव्यक्तिः" इत्यादिना द्रौपदीकेशसंयमनादिमुखसन्ध्यादि-बीजानां निजनिजस्थानोपक्षिप्तानामेकार्थयोजनम्। यथा वा,— शाकुन्तले सप्तमाङ्के शकुन्तलाऽभिज्ञानात् उत्तरोऽर्थराशिः। (न)

एषामङ्गान्याह, (प)—

उपक्षेपः परिकरः परिन्यासो विलोभनम् ।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना ।
उद्भेदः करणं भेद एतान्यङ्गानि वै मुखे ॥३४२॥ (फ)

---

(ध) निर्वहणसन्धिमाह, बीजेति।—यत्र यथायथं—यथाप्रदेशं, विप्रकीर्णाः,—विनिवेशिताः, बीजवन्तः,—मूलकारणसमन्विताः, मुखाद्यर्थाः,—मुखादयः, मुख-सन्धिप्रभृतिरूपा इति यावत्, अर्थाः,—कार्य्याणि, इतिवृत्तभागाः इति यावत्, एकार्थम्—एकप्रयोजनम्, उपनीयन्ते—प्राप्यन्ते, [ ऐकार्थम् इति पाठे—एकवाक्यत्वार्थमुप-नीयन्ते—प्रतिपाद्यन्ते इत्यर्थः ] तत् हि निर्वहणं—निर्वहणसन्धिः, उपसंहार इत्यर्थः। यथोक्तं सुधाकरकारैः,—"मुखसन्ध्यादयो यत्र विकीर्णा बीजसंयुताः। महाप्रयोजनं यान्ति तन्निर्वहणमुच्यते॥" इति।

(न) उदाहरति, यथेति।—दुर्लक्ष्यव्यक्तिः,—दुर्लक्ष्या—दुःखेन लक्षणीया, व्यक्तिः,—प्रकाशः यस्य तादृशः, स एवायमिति निश्चेतुमशक्य इत्यर्थः। द्रौपदीकेश-संयमनादीन्येव मुखसन्ध्यादयश्च बीजञ्च इति तेषामिति विग्रहः। शकुन्तलाऽभिज्ञानात्—"शकुन्तलेयम्" इति प्रत्यभिज्ञानात्, उत्तरः,—अनन्तरोक्त इत्यर्थः, अर्थराशिः,—कार्य्यसमुदायः।

(प) एषामिति।—एषां—मुखादीनाम्।

(फ) द्वादश मुखसन्ध्यङ्गान्याह, उपक्षेप इति।—स्पष्टम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथोद्देशं लक्षणमाह,—

**काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः॥३४३॥(ब)**

काव्यार्थः,—इतिवृत्तलक्षणप्रस्तुताभिधेयः। यथा वेण्यां "भीमः,—

लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य।
आकृष्य पाण्डववधूपरिधानकेशान्
स्वस्था भवन्ति मयि जीवति धार्त्तराष्ट्राः?॥" (भ)

**समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः॥३४४॥(म)**

यथा तत्रैव,—

"प्रवृद्धं यद् वैरं मम खलु शिशोरेव कुरुभिः
न तत्रार्य्यो हेतुर्न भवति किरीटी न च युवाम्।

---

(ब) उपक्षेपमाह, काव्येति।—काव्यार्थस्य—सन्दर्भप्रतिपाद्यस्य, समुत्पत्तिः,—सङ्क्षेपेण उत्थापनमित्यर्थः, [क्वचित्—"समुत्क्षिप्तिः" इति पाठः] उपक्षेप इति स्मृतः।

(भ) उदाहरति, लाक्षेति।—धार्त्तराष्ट्राः,—धृतराष्ट्रसुताः दुर्य्योधनादयः, लाक्षागृहानलविषान्नसभाप्रवेशैः,—लाक्षानिर्म्मितं गृहमिति लाक्षागृहं, तत्र दाहाय दत्तः अनलः,—अग्निः, तेन—लाक्षागृहानलेन, विषेण मिश्रितमन्नं विषान्नं तेन, विषान्नप्रयोगेण इत्यर्थः, सभायां प्रवेशः,—प्रवेशनं तेन, द्यूतक्रीड़ार्थम् आह्वानेन इत्यर्थः, प्राणेषु वित्तनिचयेषु—धनसमुदायेषु, च नः,—अस्मान्, प्रहृत्य—प्रथमद्वितीयाभ्यां द्वाभ्यामुपायाभ्यां प्राणनिधनार्थं चेष्टयित्वा, तृतीयेनोपायेन च धनानि हृत्वा इत्यर्थः, पुनश्च तृतीयेन पाण्डवानां या वधूः,—पाञ्चाली, तस्याः परिधानं—वस्त्रं, केशांश्च आकृष्य मयि—भीमे, जीवति स्वस्था भवन्ति? [अत्र भविष्यत्सामीप्ये लट्] अत्र "स्वस्थाः" इति काकुः, तथा च न स्वस्था भविष्यन्तीति निष्कृष्टोऽर्थः। अत्र द्रौपदी-केशसंयमनरूपस्य काव्यार्थस्य अथवा वैरप्रकाशनेनात्मसम्भावनया च वैरोद्धारप्रकारस्येतिवृत्तस्य समुत्थापनम्। वसन्ततिलकं वृत्तम्।

(म) परिकरमाह, समुत्पन्नेति।—समुत्पन्नस्य—समुत्थितस्य, अर्थस्य—काव्यार्थस्य, बाहुल्यं—विस्तारः, अतिशयेन सूचनमित्यर्थः, परिकरः ज्ञेयः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

जरासन्धस्योरःस्थलमिव विरूढं पुनरपि
क्रुधा भीमः सन्धिं विघटयति यूयं घटयत॥" (य)

तन्निष्पत्तिः परिन्यासः॥ ३४५॥ (र)

यथा तत्रैव,—

"चञ्चद्भुजभ्रमितचण्डगदाऽभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि! भीमः॥" (ल)

---

(य) उदाहरति, प्रवृद्धमिति।—सन्धिकरणार्थमुद्यतस्य राज्ञः सन्देशं श्रावयन्तं सहदेवं प्रति भीमसेनस्य उक्तिरियम्। कुरुभिः,—धार्त्तराष्ट्रैः, शिशोरेव मम—भीमस्य, (यद्वा मम—भीमस्य, शिशोः,—शिशुकालम् आरभ्य एव) यत् वैरं—विद्वेषः, प्रवृद्धं खलु, [शिशुत्वेनात्मनिर्देशः वैरस्याविस्मरणीयत्वज्ञापकः] तत्र—वैरे, आर्य्यः,—गुरुत्वात् माननीयः, युधिष्ठिरः इति यावत, न हेतुः,—न कारणं, किरीटी—अर्जुनः, च न हेतुरिति शेषः, युवामपि—नकुलसहदेवावपीत्यर्थः, न हेतुः, भवति इत्यनेन सर्व्वत्रानुषङ्गः, अहमेव विद्वेषकारणं कुरूणामिति भावः; तस्मात् भीमः क्रुधा—कोपेन, विरूढं—संयोजितं, जरासन्धस्य उरःस्थलमिव सन्धिं पुनरपि विघटयति—विच्छेदयति, यूयं घटयत—योजयत। भवद्भिः कृतमपि सन्धिमहं भेत्स्यामीत्यर्थः; युष्माकं सन्ध्युत्पादनप्रयासः वृथेति भावः। (पुरा किल वृहद्रथनामधेयेन राज्ञा यज्ञशेषं पायितयोः धर्म्मपत्न्योः गर्भद्वयात् समार्द्धार्द्धशरीरेण विनिर्गतस्य श्मशानपातितस्य शिशोः शरीरे जराऽभिधानराक्षस्या संहिते "जरासन्धः" इति तन्नामाभूत्। तद्धि प्रथमसंहितं जरासन्धस्य उरः भीमेन विपाटितम्, इति महाभारते)। अत्र सन्धिविघटनेन वैरनिर्य्यातनस्य समधिकं सूचनम्। शिखरिणी वृत्तम्।

(र) परिन्यासमाह, तन्निष्पत्तिरिति।—तस्य—अधिकसूचितस्य काव्यार्थस्य, निष्पत्तिः,—निश्चयेन सङ्कीर्त्तनं, परिन्यासः।

(ल) उदाहरति, चञ्चदिति।—हे देवि!—पाञ्चालि! भीमः चञ्चता—स्फुरता, भुजेन, भ्रमिता—घूर्णिता, या चण्डा—भीषणा, गदा तस्याः अभिघातेन—प्रहारेण, सञ्चूर्णितम् ऊरुयुगलं यस्य तथाविधस्य, सुयोधनस्य—दुर्य्योधनस्य, स्त्यानं—स्निग्धं, ("स्त्यानं स्निग्धे प्रतिध्वाने घनलालस्ययोरपि" इति मेदिनी) तथा अवनद्धं—संलग्नं,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र उपक्षेपो नाम इतिवृत्तलक्षणस्य काव्याभिधेयस्य सङ्क्षेपेणोपक्षेपणमात्रं, परिकरस्तस्यैव बहुलीकरणं, परिन्यासस्ततोऽपि निश्चयापत्तिरूपतया परितो हृदये न्यसनम्, इत्येषां भेदः। एतानि च अङ्गानि उक्तेनैव पौर्व्वापर्य्येण भवन्ति। अङ्गान्तराणि तु अन्यथाऽपि। (व)

गुणाख्यानं विलोभनम् ॥३४६॥ (श)

यथा तत्रैव,—"द्रौपदी। णाध! किं दुक्करं तुए परिकुविदेण?" यथा वा मम चन्द्रकलायां चन्द्रकलावर्णने,—"सेयं, तारुण्यस्य विलासः" इत्यादि। यत्तु शकुन्तलादिषु,—"ग्रीवाभङ्गाभिरामम्" इत्यादि मृगादिगुणवर्णनं, तद्वीजार्थसम्बन्धाभावान्न सन्ध्यङ्गम्। एवमङ्गान्तराणामप्यूह्यम्। (ष)

सम्प्रधारणमर्थानां युक्तिः ॥३४७॥ (स)

---

यत् घनं—गाढं, शोणितं तेन शोणः,—रक्तः, पाणिर्यस्य तथाभूतः सन्, तव कचान्—केशान्, उत्तंसयिष्यति—अलङ्करिष्यति, रक्ताक्तहस्तेन संयमनादिति भावः। अत्रात्यन्तसूचितस्य गदाप्रहारादिना दुर्य्योधनोरुविघटनादिपूर्व्वकं द्रौपदीकेशसंयमनस्य निश्चयेन कर्त्तव्यत्वाभिधानम्। वसन्ततिलकं वृत्तम्।

(व) अत्रेत्यादि।—उपक्षेपणमात्रम्—उत्थापनमात्रम्। बहुलीकरणं—विस्तरेण सूचनम्। उक्तेनैव—कथितेनैव। अन्यथा—वैपरीत्येन, अपिकारात् क्रमेण अपीत्यर्थः।

(श) विलोभनमाह, गुणाख्यानमिति।—गुणानाम् आख्यानं—कथनं, विलोभनं—विशेषेण लोभप्रदर्शनमित्यर्थः, उत्तेजनं वा।

(ष) उपक्षेपादीनां त्रयाणां भेदं स्पष्टयति, यथा तत्रेत्यादिना।—णाधेति।—["नाथ! किं दुष्करं त्वया परिकुपितेन?" इति संस्कृतम्]। विलासः,—प्रकाशः। वीजार्थस्य—कार्य्यस्य। एवमङ्गान्तराणामित्यत्र वीजार्थसम्बन्धेऽङ्गत्वं, नान्यथा इत्यर्थोऽवगन्तव्यः।

(स) युक्तिमाह, सम्प्रधारणमिति।—अर्थानां—कर्त्तव्यानां, सम्प्रधारणं—निश्चयः, युक्तिः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा वेण्यां सहदेवो भीमं प्रति,—"आर्य्य ! किं महाराज-सन्देशोऽयमव्युत्पन्न (ह) एवार्य्येण गृहीतः ?" इति । अतः प्रभृति यावद्भीमवचनम्,—

"युष्मान् ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः ।
न लज्जयति दाराणां सभायां केशकर्षणम् ?॥" इति (क)

प्राप्तिः सुखागमः ॥३४८॥ (ख)

यथा तत्रैव,—"मथ्नामि कौरवशतं समरे न कोपात् ?" इत्यादि । द्रौपदी । [ श्रुत्वा सहर्षम् ] —"णाध ! अस्सुदपुव्वं क्खु एदं वअणं, ता पुणो पुणो भणाहि ।" (ग)

बीजस्यागमनं यत्तु तत् समाधानमुच्यते ॥३४९॥(घ)

यथा तत्रैव,—"[ नेपथ्ये ] भो भो विराटद्रुपदप्रभृतयः ! श्रूयताम्,—

यत् सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्त्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।

---

(ह) उदाहरति, यथेति ।—अव्युत्पन्नः,—अनवहितः, अविचार्य्य इति यावत् ।

(क) युष्मानिति ।—क्रोधात् शत्रूणां कुलक्षयः युष्मान् लोके—जगति, ह्रेपयति—लज्जयति, सभायां दाराणां—पत्न्या इत्यर्थः, केशकर्षणं न लज्जयति ? अत्र शत्रुकुलक्षयस्य कार्य्यस्य निश्चयेन कर्त्तव्यतासूचनम् । पथ्यावक्त्रं वृत्तम् ।

(ख) प्राप्तिमाह, प्राप्तिरिति ।—सुखस्य आगमः,—उदयः, लाभ इत्यर्थः, प्राप्तिः । यथोक्तं नाट्यशास्त्रकारैः,—"सुखार्थस्याभिगमनं प्राप्तिरित्यभिधीयते ।" इति ।

(ग) णाधेति ।—[ "नाथ ! अश्रुतपूर्व्वं खल्विदं वचनं, तत् पुनःपुनर्भण" इति संस्कृतम् । ] अत्र भीमवाक्यस्य सुखहेतुता पुनः पुनरिति सोत्कण्ठश्रवणावेदनेन द्रौपद्याः प्रतीयते ।

(घ) समाधानमाह, बीजस्येति ।—बीजस्य—मूलकारणस्य, आगमनं—प्रधान-लक्ष्यगतत्वेन कीर्त्तनं, प्रधाननायकाभिमतत्वेन ज्ञानं वा इत्यर्थः, यत् तत् तु समाधानम् उच्यते ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तद् द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत् कुरुवने यौधिष्ठिरं जृम्भते ॥" (ङ)

अत्र "स्वस्था भवन्ति मयि जीवति" इति आदिबीजस्य प्रधाननायकाभिमतत्वेन सम्यगाहितत्वात् समाधानम्। (च)

**सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम्॥३५०॥(छ)**

यथा बालचरिते,—

"उत्साहातिशयं वत्स! तव बाल्यञ्च पश्यतः।
मम हर्षविषादाभ्यामाक्रान्तं युगपन्मनः॥" (ज)

यथा वा मम प्रभावत्यां,—"नयनयुगासेचनकम्" इत्यादि।

---

(ङ) उदाहरति, यदिति।—सत्यव्रतस्य—सत्यरक्षणरूपनियमस्य, द्वादशवर्षवनवासरूपस्य एकवर्षाज्ञातवासरूपस्य चेत्यर्थः, भङ्गात् भीरु मनः यत्र तादृशेन, यत्नेन यत्—क्रोधज्योतिरित्यर्थः, एवमुत्तरत्रापि, मन्दीकृतं—खर्वीकृतं, कुलस्य शान्तिम्—इच्छतामित्यर्थः, इच्छता शमवता—शान्तेन मनसा, यत् विस्मर्त्तुमपि ईहितं—चेष्टितं, द्यूतमेव अरणिः,—अग्निमन्थनदारुविशेषः, तेन सम्भृतं—समुत्पादितं, नृपसुतायाः,—द्रौपद्याः, केशानाम् अम्बरस्य—वस्त्रस्य, च आकर्षणैः,—आकर्षणरूपैर्वायुभिरिति भावः, उद्दीपितमिति शेषः, तत् महत् इदं, युधिष्ठिरस्य इदं यौधिष्ठिरं, क्रोधज्योतिः,—कोपाग्निरित्यर्थः, कुरुवने—कुरव एव वनं, दाह्यत्वादिति भावः, तस्मिन्, जृम्भते—परिस्फुरति। शार्दूलविक्रीडितं वृत्तम्।

(च) अत्रेति।—आदिबीजस्य—भीमसेनोत्साहरूपस्य इत्यर्थः, सम्यगाहितत्वात्—सम्पूर्णतया उत्तेजितत्वादित्यर्थः।

(छ) विधानमाह, सुखेति।—सुखदुःखाभ्यां कृतः,—विमिश्रित इत्यर्थः, यः अर्थः,—कार्य्यं, तद्विधानमिति स्मृतम्। यथाऽऽहुः,—"विधानं दुःखसुखयोर्विमिश्रं यदि वर्णनम्" इति।

(ज) उदाहरति, उत्साहातिशयमिति।—श्रीरामं प्रति परशुरामस्योक्तिरियम्। हे वत्स! तव उत्साहातिशयं, बाल्यम्—अविचारितं कर्म्म, हरकार्मुकभङ्गरूपमित्याशयः, यद्वा,—बाल्यं—शैशवं, च पश्यतः मम मनः हर्षविषादाभ्यां युगपत् आक्रान्तम्। तत्र उत्साहदर्शने भविष्यन्महावीरत्वसम्भावनया हर्षः, बाल्यदर्शनेन "अहं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**कुतूहलोत्तरा वाचः प्रोक्ता तु परिभावना॥३५१॥(झ)**

यथा वेण्यां,—"द्रौपदी। [युद्धं स्यान्न वा इति संशयाना तूर्य्यशब्दानन्तरम्] णाध! किं दाणिं एसो पलअजलहरघणत्थणिदमंसलो क्खणे क्खणे समरदुंदुही ताड़ीअदि?" (ञ)

**बीजार्थस्य प्ररोहः स्यादुद्भेदः ॥३५२॥ (ट)**

यथा तत्रैव,—"[द्रौपदी] णाध! तुम्भेहिं पुणो वि समरादो आअच्छिअ अहं आस्सासइदव्वा। (ठ) भीमः,—

भूयः परिभवक्लान्तिलज्जाविधुरिताननम्।
अनिःशेषितकौरव्यं न पश्यसि वृकोदरम्॥" (ड)

**करणं पुनः।**
**प्रकृतार्थसमारम्भः ॥३५३॥ (ढ)**

---

क्षयमनेन सह योत्स्ये?" इति विषादः, इत्युभयोर्विमिश्रणं बोध्यम्। अत्र भार्गवस्य रामपराभवोद्यमरूपोऽर्थः सुखदुःखाभ्यां विहितः।

(झ) परिभावनामाह, कुतूहलेति।—कुतूहलम्—औत्सुक्यं, तदुत्तराः,—तद्भूयिष्ठा इत्यर्थः, वाचः,—वाक्यानि, परिभावना प्रोक्ता—कथिता।

(ञ) णाधेति।—["नाथ! किमिदानीमेष प्रलयजलधरघनस्तनितमांसलः क्षणे क्षणे समरदुन्दुभिस्ताड्यते?" इति संस्कृतम्]। घनस्तनितं—निरन्तरगर्जितं, तदिव मांसलः,—गभीर इत्यर्थः। अत्र समरदुन्दुभिताड़नं किमर्थमिदानीमित्यौत्सुक्यावेदनम्।

(ट) उद्भेदमाह, बीजेति।—बीजार्थस्य—मूलीभूतविषयस्य, प्ररोहः,—अङ्कुरोदयः, भवत्प्रायत्वेनोद्भावनमित्यर्थः, उद्भेदः स्यात्।

(ठ) णाधेति।—["नाथ! युष्माभिः पुनरपि समरादागत्य अहम् आश्वासयितव्या" इति संस्कृतम्]। अत्र केशसंयमनार्थस्य बीजं समरोद्योजनम्।

(ड) भूय इति।—परिभवेण—शत्रुभ्यः अवमानेन, या क्लान्तिः,ततो या लज्जा तया विधुरितम्—अवनतमित्यर्थः, [वन्धुरितेति पाठे—व्याप्तम्] आननं यस्य तम्, अनिःशेषिताः,—निःशेषतामनीताः, कौरव्याः येन तादृशं, वृकोदरं—भीमं, भूयः,—पुनः, न पश्यसि—न द्रक्ष्यसीत्यर्थः, [भविष्यत्सामीप्ये लट्]। अत्र बीजार्थस्य वैरनिर्य्यातनार्थमुत्पन्नस्य क्रोधस्य प्ररोहः।

(ढ) करणमाह, करणमिति।—प्रकृतस्य—प्रस्तुतस्य, अर्थस्य—विषयस्य,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा तत्रैव,—"देवि! गच्छामो वयमिदानीं कुरुकुल-क्षयाय" इति।

भेदः संहतिभेदनम् ॥३५४॥(ण)

यथा तत्रैव,—"अत एव अद्य प्रभृति भिन्नोऽहं भवद्भ्यः"। केचित्तु (त) "भेदः प्रोत्साहना" इति वदन्ति।

अथ प्रतिमुखाङ्गानि,—

विलासः परिसर्पश्च विधूतं तापनं तथा।
नर्म नर्मद्युतिश्चैव तथा प्रगमनं पुनः॥
विरोधश्च प्रतिमुखे तथा स्यात् पर्य्युपासनम्।
पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि ॥३५५॥ (थ)

तत्र,—

समीहा रतिभोगार्था विलास इति कथ्यते॥३५६॥(द)

रतिलक्षणस्य भावस्य यो हेतुभूतो भोगो विषयः प्रमदा पुरुषो वा, तदर्था समीहा विलासः। (ध)

---

समारम्भः,—सम्यक् आरम्भः, उद्योग इत्यर्थः, पुनः,—तु, करणम्। तथोक्तम्,—"आरम्भः प्रकृतार्थस्य करणं नाम तन्मतम्" इति।

(ण) भेदमाह, भेद इति।—संहतेः,—सङ्घातस्य, भेदनं—पृथक्करणं, भेदः, स्यादिति शेषः। ["संहतभेदनम्" इति पाठे,—संहतानाम्—अविरुद्धकर्म्मत्वेन मिलितानां, भेदनं—सङ्घातात् चालनमित्यर्थोऽवसेयः इति]।

(त) उदाहरति, यथेति।—भवद्भ्यः भिन्नः,—पृथग्भूतः, युष्माकं नानुमन्ये इति हृदयम्। केचित्तु—दशरूपक-रसगङ्गाधरकारादयस्तु इत्यर्थः।

(थ) प्रतिमुखाङ्गान्याह, विलास इति।—विलासादयस्त्रयोदश प्रतिमुखस्य अङ्गानि इति वक्ष्यमाणोऽर्थः।

(द) विलासमाह, समीहेति।—तत्र—तेषु मध्ये, रतिभोगार्था—सुरत-सम्भोगविषयिणी, समीहा—चेष्टा, स्पृहा वा, विलास इति कथ्यते।

(ध) तदर्था—तदुपभोगार्था। अन्यत् स्पष्टम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा शाकुन्तले,—

"कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥" (न)

**इष्टनष्टानुसरणं परिसर्पश्च कथ्यते ॥३५७॥ (प)**

यथा शाकुन्तले,—"राजा । ......भवितव्यम् । तथा हि,—

अभ्युन्नता पुरस्तादवगाढ़ा जघनगौरवात् पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥" (फ)

(न) उदाहरति, काममिति ।—प्रिया—शकुन्तला, कामं—सम्यक्, न सुलभा—न सुप्रापा, यद्वा,—[सा इत्यध्याहार्य्यं] शकुन्तला कामम्—अत्यर्थं, प्रिया—प्रियतमा, तर्हि तूष्णीं स्थीयतां, किं वृथा खेदेन ? इत्याह, न सुलभा इति ।—न सुखेन लभ्या, गुरुजनाधीनत्वात्, गुरोरपि दूरवर्त्तित्वादिति भावः । यद्येवं दुर्लभा, तर्हि किं प्रयत्नेन ? इत्याह,—तु—किन्तु, मनः,—चित्तवृत्तिः, तस्याः,—शकुन्तलायाः, भावदर्शनेन—मयि अनुरागव्यञ्जकताद्दशचेष्टाविशेषदर्शनेन, आश्वासि—आश्वस्तं, प्रिया लभ्येति आशास्ते, [ "तद्भावदर्शनायासि" इति पाठे,—तद्भावदर्शने—तच्चेष्टाऽवलोकने, आयासि—प्रयासयुक्तं, प्रयत्नपूर्व्वकं लालसमित्यर्थः ] यद्वा,—तस्याः प्रियायाः, भावः सुरतचेष्टा च, दर्शनञ्च ते आयसति वाञ्छति इत्यर्थः ; ( अस्मिन् पाठे तु-शब्दः खेदातिशयद्योतकः ) तथाहि,—मनसिजे—कामे, अकृतार्थे—असङ्गत्या अकृतकार्य्ये, अपि, उभयोः,—स्त्रीपुंसयोः, प्रियायाः प्रियस्य मम च इत्यर्थः, यद्वा,—प्रियाभावदर्शनयोः, प्रार्थना—कामना, रतिम्—अनुरागम्, "अहं तत्र गमिष्यामि, तामेवं वक्ष्ये" इत्यभिलाषजनितसन्तोषमिति यावत्, कुरुते—जनयति । अत्र नायिकासम्भोगविषयिणी स्पृहा प्रदर्शिता । आर्य्या जातिः ।

(प) परिसर्पमाह, इष्टेति ।—इष्टस्य—अभिलषितस्य, नष्टस्य—अदर्शनं गतस्य अनुसरणम्—अन्वेषणं, च परिसर्पः कथ्यते ।

(फ) उदाहरति, अभ्युन्नतेति ।—अस्य—लतामण्डपस्य, पाण्डुसिकते—पाण्डुवर्णा सिकता—वालुका यत्र तथाभूते, द्वारे—प्रवेशमार्गे, पुरस्तात्—अग्रतः, पादाग्रभागे इत्यर्थः, ( पश्चाद्भागापेक्षया ) अभ्युन्नता, पश्चात्—पार्ष्णिदेशे इति भावः, जघनस्य—श्रोणिपुरोभागस्य, गौरवात्—भारवत्त्वात्, अवगाढ़ा—अवनता, अतिनिम्ना इति यावत्, अभिनवा—अचिराङ्किता इत्यर्थः, पदपङ्क्तिः,—पदन्यासपद्धतिः, दृश्यते । अत्र अभिलषितान्वेषणं ज्ञेयम् । आर्य्या जातिः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**कृतस्यानुनयस्यादौ विधूतन्त्वपरिग्रहः ॥३५८॥ (ब)**

यथा तत्रैव,—"अलं वो अंतेउरविरहपज्जुस्सुएण राएसिणा उवरुद्धेण ?" केचित्तु "विधूतं स्यादरतिः" इति वदन्ति । (भ)

**उपायादर्शनं यत्तु तापनं नाम तद्भवेत् ॥३५९॥(म)**

यथा रत्नावल्यां सागरिका,—

"दुल्लहजणाणुराओ लज्जा गुरुई परवसो अप्पा ।
पियसहि ! विसमं पेम्मं मरणं सरणं णवरि एक्कं ॥" (य)

(ब) विधूतमाह, कृतस्येति ।—आदौ—अग्रतः, कृतस्य अनुनयस्य अपरिग्रहः,—अवधीरणं, विधूतम् ।

(भ) अलमिति ।—["अलं वोऽन्तःपुरविरहपर्य्युत्सुकेन राजर्षिणा उपरुद्धेन ?" इति संस्कृतम् ]। अन्तःपुरस्य—अन्तःपुरवर्त्तिनः महिलाजनस्य, विरहेण पर्य्युत्सुकः,—उत्कण्ठितः तेन, राजर्षिणा, वः,—युष्माकम्, उपरुद्धेन—अनुनीतेन, अलम्—व्यर्थम्, अस्यानुनयो न कर्त्तव्य इत्यर्थः । अत्र सख्या कृतस्य राजावस्थानानुनयस्य शकुन्तलया अपरिग्रहः सूचितः । केचित्तु—दशरूपककारादयः, अरतिः,—असन्तोषः ।

(म) तापनमाह, उपायेति ।—यत्तु उपायस्य अदर्शनं, तत् तापनं नाम भवेत् । दशरूपककारास्तु तापनस्थले शमः इति व्यवहरन्ति । [ तथाहि,—"तच्छमः शमः" इति ; तस्याः,—पूर्वं निरुक्ताया अरतेः, शमः शम उच्यते इति च तदर्थः ] ।

(य) उदाहरति, दुल्लहेति ।—[ "दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा । प्रियसखि ! विषमं प्रेम मरणं शरणं केवलमेकम् ॥" इति संस्कृतम् ]। णवरिशब्दः केवलार्थो देशीयः । दुर्लभे—दुष्प्रापे जने, अनुरागः, लज्जा गुर्वी—महती, आत्मा परवशः,—पराधीनः । हे प्रियसखि ! प्रेम विषमम्—उत्कटं, तस्मात् केवलं मरणम् एकं शरणम्—आश्रयः । अत्र इष्टलाभे उपायाभावेन सन्तापः । आर्य्या छन्दः । दशरूपककारमते तु उदाहरणं यथा रत्नावल्याम् ;—"राजा । वयस्य ! अनया लिखितोऽहमिति यत् सत्यम्, आत्मन्येव बहुमानः ; तत् कथं न पश्यामि ?" इति प्रक्रमे "सागरिका [ आत्मगतम् ] हिअअ ! समस्सस समस्सस । मणोरहो वि दे एत्तिअं भूमिं ण गदो ॥" इति किञ्चिदरत्युपशमाच्छमः । [ "हृदय ! समाश्वसिहि समाश्वसिहि, मनोरथोऽपि ते एतावतीं भूमिं न गतः" इति संस्कृतम् ] ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

परिहासवचो नर्म ॥३६०॥ (र)

यथा रत्नावल्याम् ;—"सुसङ्गता। सहि! जस्स किदे तुमं आअदा सो अअं दे पुरदो चिट्ठदि। सागरिका। [साभ्यसूयम्] कस्स किदे अहं आअदा? सुसङ्गता। [विहस्य] अइ अस्ससंकिदे! णं चित्तफलअस्स—"। (ल)

द्युतिस्तु परिहासजा।

नर्मद्युतिः ॥३६१॥ (व)

यथा तत्रैव,—"सुसङ्गता। सहि! अदक्खिणा दाणिंसि तुमं जा एवं भट्टिणा हत्थावलम्बिदावि कोवं ण मुञ्चसि। सागरिका। [सभ्रूभङ्गमीषद्विहस्य] सुसङ्गदे! दाणिं वि कीलिदं ण विरमसि?"(श) केचित्तु—"दोषस्याच्छादनं हास्यं नर्मद्युतिः" इति वदन्ति। (ष)

प्रगमनं वाक्यं स्यादुत्तरोत्तरम् ॥३६२॥ (स)

---

(र) नर्माह, परिहासेति।—परिहासवचः,—परिहासवाक्यं, नर्म। नाट्यशास्त्रकारा अप्याहुः,—"क्रीडाऽर्थं विहितं यत्र हास्यं नर्मेति तत् स्मृतम्" इति।

(ल) सहीति।—["सखि! यस्य कृते त्वमागता, सोऽयं ते पुरतः तिष्ठति।............। कस्य कृते अहमागता?............अयि! अन्यशङ्किते! ननु चित्रफलकस्य" इति संस्कृतम्]।

(व) नर्मद्युतिमाह, द्युतिरिति।—परिहासजा—परिहासेन जाता, द्युतिः,—शोभा, नर्मद्युतिः।

(श) सहीति।—["सखि! अदक्षिणा इदानीमसि त्वं, या एवं भर्त्रा हस्तावलम्बिताऽपि कोपं न मुञ्चसि।.........सुसङ्गते! इदानीमपि क्रीडितं न विरमसि?" इति संस्कृतम्]।

(ष) केचित्त्विति।—तथा हि भरतः,—"दोषप्रच्छादनार्थन्तु नर्मद्युतिरिति स्मृतम्" इति। "नर्मद्युतिः कोपगुप्तिः" इति काव्येन्दुप्रकाशकारस्य।

(स) प्रगमनमाह, प्रगमनमिति।—उत्तरोत्तरम्—उत्तरम्—उत्कृष्टतरम्, उत्तरं यस्य तत् वाक्यं प्रगमनं स्यात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा विक्रमोर्व्वश्याम्,—"उर्व्वशी। जअदु जअदु महाराओ। राजा। मया नाम जितं यस्य त्वया जय उदीर्य्यते" इत्यादि।(ह)

विरोधो व्यसनप्राप्तिः ॥३६३॥ (क)

यथा चण्डकौशिके,—"राजा। नूनमसमीच्यकारिणा मया अन्धेनेव स्फुरच्छिखाकलापो ज्वलनः पद्भ्यां समाक्रान्तः।" (ख)

कृतस्यानुनयः पुनः।

स्यात् पर्य्युपासनम् ॥३६४॥ (ग)

यथा रत्नावल्याम्;—"विदूषकः। भो! मा कुप्प, एसा हि कदलीघरंतरं गदा" इत्यादि। (घ)

---

(ह) जअदु इति।—[ "जयति जयति महाराजः" इति संस्कृतम् ]। मयेति।—यस्य (मम) त्वया जयः उदीर्य्यते—कीर्त्त्यते, (तेन) मया, जितं नाम—जितमेव। नामशब्दोऽत्र अवधारणार्थः।

(क) विरोधमाह, विरोध इति।—व्यसनस्य—विपदः, प्राप्तिः विरोधः। दशरूपककारस्तु विरोधमेव निरोधमाह; तथाहि,—"अथ निरोधः। हितरोधः।" इति यथा रत्नावल्याम्;—"राजा। धिङ्मूर्ख! प्राप्ता कथमपि दैवात्, कण्ठमनीतैव सा प्रकटरागा। रत्नावलीव कान्ता मम हस्ताद् भ्रंशिता भवता॥" इत्यनेन वत्सराजस्य सागरिकासमागमरूपहितस्य वासवदत्ताप्रवेशसूचकेन विदूषकवचसा निरोधात् निरोधनम्" इति।

(ख) उदाहरति, यथेति।—असमीच्यकारिणा—अविवेचकेन, मया अन्धेनेव—दृष्टिहीनेनेव, स्फुरन्—विराजन्, शिखाकलापः,—अर्चिःसमूहः, यस्य तथाभूतः, ज्वलनः,—अग्निः, पद्भ्यां समाक्रान्तः,—दलितः। अत्राग्निकल्पस्य कौशिकस्य कोपात् राज्ञः व्यसनप्राप्तिः।

(ग) पर्य्युपासनमाह, कृतस्येति।—कृतस्य—जातस्यापराधस्य, पुनः अनुनयः,—विनयोक्त्याऽनुसन्धानं, प्रशमनमिति यावत्, पर्य्युपासनं स्यात्। नाट्यशास्त्रेऽप्युक्तम्;—"क्रुद्धस्यानुनयो यस्तु भवेत् तत् पर्य्युपासनम्" इति।

(घ) भो! मा कुप्पेति।—[ "भो! मा कुप्य, एषा हि कदलीगृहान्तरं गता" इति संस्कृतम् ]।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पुष्पं विशेषवचनं मतम् ॥३६५॥(ङ)

यथा तत्रैव,—"[ राजा हस्ते गृहीत्वा स्पर्शं नाटयति ] विदूषकः। भो वअस्स! एसा अपुव्वा सिरी तुए समासादिदा। (च)

राजा। वयस्य! सत्यम्;—

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः ।
कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवः ॥" (छ)

प्रत्यक्षनिष्ठुरं वज्रम् ॥३६६॥ (ज)

यथा तत्रैव,—"राजा। कथमिहस्थोऽहं त्वया ज्ञातः?" सुसङ्गता। ण केवलं देवो, चित्तफलएण सह सव्वोवि वुत्तंतो मए विणादो, ता देवीए गदुअ णिवेदइस्सं"। (झ)

उपन्यासः प्रसादनम् ॥३६७॥(ञ)

यथा तत्रैव,—"सुसङ्गता। पसस्सो मे भट्टा, अलं संकाए।

(ङ) पुष्पमाह, पुष्पमिति।—विशेषस्य—प्रकर्षस्य, वचनम्—अनुरागजनकं वाक्यमित्यर्थः, पुष्पं मतम्।

(च) भो वअस्सेति।—["भो वयस्य! एषा अपूर्वा श्रीस्त्वया समासादिता" इति संस्कृतम्]।

(छ) श्रीरिति।—एषा—स्त्री, श्रीः,—लक्ष्मीस्वरूपा, अस्याः पाणिरपि—हस्तोऽपि, पारिजातस्य—देवतरुविशेषस्य, पल्लवः, अन्यथा कुतः,—कथम्, स्वेदच्छद्मा—घर्मव्याजः, एषः अमृतद्रवः स्रवति—निःसरति। एतत्सर्वमनुरागहेतुकत्वात् विशेषवचनम्। धनिकेनाप्युक्तम्—"इत्यनेन नायकयोः साक्षादन्योऽन्यदर्शनादिना सविशेषानुरागोद्घाटनात् पुष्पम्" इति। पथ्यावक्त्रं वृत्तम्।

(ज) वज्रमाह, प्रत्यक्षेति।—प्रत्यक्षं—साक्षात्, निष्ठुरं—परुषवचनं, वज्रवत् दुःखदत्वाद् वज्रम्। नाट्यशास्त्रेऽप्युक्तं,—"विरुक्षवचनप्रायं वज्रमित्यभिधीयते" इति।

(झ) ण केवलमिति।—["न केवलं देवः, चित्रफलकेन सह सर्वोऽपि वृत्तान्तो मया विज्ञातः, तद् देव्यै गत्वा निवेदयिष्यामि" इति संस्कृतम्]।

(ञ) उपन्यासमाह, उपन्यास इति।—प्रसादनं—प्रसन्नतासम्पादनम्, उपन्यासः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एदिणा भट्टिणो पसादेण मए कीलिदं एव्व, ता किं कस्साहरणेण ? अदो वि मे गुरुश्री पसादो एसो, जं तुए अहं एत्थ आलिहिदत्ति कुविदा मे पिअसही साअरिआ, एसा ज्जेव पसादीअदु ।" (ट)

केचित्तु,—"उपपत्तिकृतो योऽर्थ उपन्यासः स कीर्त्तितः ।" इति वदन्ति, उदाहरन्ति च तत्रैव,—"अदिमुहरा क्खु एसा गब्भदासी" इति । (ठ)

चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते ॥२६८॥ (ड)

यथा वीरचरिते तृतीयेऽङ्के,—

"परिषदियमृषीणामेष वीरो युधाजित्
सह नृपतिरमात्यैर्लोमपादश्च वृद्धः ।
अयमविरतयज्ञो ब्रह्मवादी पुराणः
प्रभुरपि जनकानामङ्ग ! भो ! याचकास्ते ॥" (ढ)

---

(ट) पसस्रो इति ।—["प्रसन्नो मे भर्त्ता, अलं शङ्कया । एतेन भर्त्तुः प्रसादेन मया क्रीड़ितमेव, तत् किं कर्णाभरणेन ? अतोऽपि मे गुरुकः प्रसाद एषः, यत् त्वया अहम् अत्र आलिखिता इति कुपिता मे प्रियसखी सागरिका, एषैव प्रसाद्यताम्" इति संस्कृतम् ] ।

(ठ) भरतादीनां मतमाह, केचित्त्विति ।—केचित्—नाट्यशास्त्रानुयायिनः, प्राहुः इति शेषः । उपपत्तिः,—युक्तिः, हेतुरित्यर्थः, तया कृतः यः अर्थः,—वस्तु, स उपन्यासः कीर्त्तितः इति । उदाहरन्ति पुनस्ते एव ; तत्रैव—रत्नावल्यां द्वितीयेऽङ्के, [ विदूषकः ] । अदीति ।—[ "अतिमुखरा खलु एषा गर्भदासी" इति संस्कृतम् ] । एषा—सुसङ्गता, अतिमुखरा—अत्यन्तं वाचाला, यतः गर्भदासी—गर्भेण—जन्मना, दासीत्यर्थः ।

(ड) वर्णसंहारमाह, चातुर्वर्ण्येति ।—चतुर्णां वर्णानां—ब्राह्मणक्षत्रियवैश्यशूद्राणां समाहारः, चत्वारो वर्णाः वा चातुर्वर्ण्यं, तस्य उपगमनं—मेलनं, वर्णसंहारः इष्यते ।

(ढ) उदाहरति, परिषदिति ।—अङ्गेत्यामन्त्रणे । भो अङ्ग ! भो जाम-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत्यत्र ऋषिचत्रादीनां वर्णानां मेलनम्। अभिनवगुप्त-पादास्तु,—"वर्णशब्देन पात्राण्युपलच्यन्ते।" "संहारो मेलनम्" इति व्याचक्षते ; उदाहरन्ति च रत्नावल्यां द्वितीयेऽङ्के,—"एसो एव्व मे अग्नं गरुअरो पसादो" इत्यादेरारभ्य "णं हत्थेगेह्णिअ पसादेहि णं।" (ण) राजा। "क्वासौ क्वासौ?" इत्यादि।

अथ गर्भाङ्गाणि,—

**अभूताहरणं मार्गो रूपोदाहरणे क्रमः।**
**सङ्ग्रहश्चानुमानञ्च प्रार्थना क्षिप्तिरेव च॥**
**त्रोटकाधिबलोद्वेगा गर्भे स्युर्विद्रवस्तथा।**
**तत्र व्याजाश्रयं वाक्यमभूताहरणं मतम्॥३६९॥(त)**

यथा वेणीसंहारे अश्वत्थामाऽङ्के,—

"अश्वत्थामा हत इति पृथा-सूनुना स्पष्टमुक्ता
स्वैरं शेषे गज इति पुनर्व्याहृतं सत्यवाचा॥" (थ)

---

दृत्य!—इयम् ऋषीणाम् [ ऋषन्ति—वेदं पश्यन्ति इति ऋषयः तेषां, गत्यर्थधातूनां ज्ञानार्थकत्वस्वीकारात् धातूनामनेकार्थवत्त्वसिद्धेर्वा ऋषतेर्दर्शनार्थे वृत्तिः यास्कमतानुरूपा ज्ञेया ; प्रत्यक्षीकरणमेव अत्र दर्शनं, न चाक्षुषज्ञानमिति ] परिषत्—सभा, समूह इति यावत्, एष वीरो युधाजित्—कैकेयीभ्राता, अमात्यैः सह नृपतिः,—दशरथः, वृद्धो लोमपादश्च, अयम् अविरतयज्ञः,—सततयज्ञानुष्ठायी, पुराणः,—स्थविरः, ब्रह्मवादी—वेदनिरतः, जनकानां—विदेहवंशीयानां, प्रभुः,—सीरध्वजः इति भावः, अपि ते—तव, याचकाश्च, एते सर्वे समवेता इति शेषः। अत्र मालिनी छन्दः।

(ण) एसो एव्व इति।—["एष एव मे अयं गुरुतरः प्रसादः" इति, "ननु हस्तेगृह्य प्रसादय एनाम्" इति च संस्कृतम् ]। अत्र राजविदूषकसागरिकासुसङ्गतारूपाणां पात्राणां मेलनम्। ["हस्तेगृह्य" इति समस्तत्वात् ल्यप् ]।

(त) गर्भसन्ध्यङ्गानि आह, अथेति।—अभूताहरणमिति।—अभूताहरणादीनि त्रयोदश गर्भसन्धेरङ्गानीत्यर्थः। तत्र—तेषु मध्ये, व्याजाश्रयं—कपटाश्रयं, वाक्यम् अभूतस्य—असत्यस्य, आहरणमित्यभूताहरणं मतं—कथितम्।

(थ) उदाहरति, यथेति।—अश्वत्थामेति।—अश्वत्थामा हतः,—विनाशितः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्त्वार्थकथनं मार्गः ॥३७०॥ (द)

यथा चण्डकौशिके,—"राजा। भगवन्!—

गृह्यतामर्ज्जितमिदं भार्य्यातनयविक्रयात्।
शेषस्यार्थे करिष्यामि चाण्डालेऽप्यात्मविक्रयम्॥" (ध)

रूपं वाक्यं वितर्कवत् ॥३७१॥ (न)

यथा रत्नावल्यां,—"राजा,—

मनः प्रकृत्यैव चलं दुर्लक्ष्यञ्च तथाऽपि मे।
कामिनैतत् कथं विद्धं समं सर्वैः शिलीमुखैः?॥" (प)

उदाहरणमुत्कर्षयुक्तं वचनमुच्यते ॥३७२॥ (फ)

इति पृथा—कुन्ती, तस्याः सूनुः,—सुतः तेन, युधिष्ठिरेणेत्यर्थः, सत्यवाचा—सत्यवादिना सता, स्पष्टं—सुव्यक्तम्, उक्त्वा, शेषे—वाक्यावसाने, पुनः स्वैरं—मन्दं, यथा स्यात् तथा, ["पुनः" इत्यत्र "किल" इति पाठान्तरम्] गज इति व्याहृतम्—उक्तम्। अत्र युधिष्ठिरस्य द्रोणाचार्य्यं श्रावयितुम् "अश्वत्थामा हतः" इत्युच्चैः, "गजः" इति तु वाक्यावसाने तत्रापि नीचैरिति स्फुटं कैतवपूर्णमिदं वचनम्।

(द) मार्गमाह, तत्त्वेति।—तत्त्वार्थस्य कथनं मार्गः।

(ध) उदाहरति,—गृह्यतामिति।—विश्वामित्रं प्रति राज्ञः हरिश्चन्द्रस्येयमुक्तिः। भार्य्या च तनयश्च तयोः विक्रयात्—मूल्यग्रहणपूर्वकार्पणात्, अर्जितं—लब्धम्, इदं धनं गृह्यतां, शेषस्य—अवशिष्टस्य, देयस्य इत्यर्थः, अर्थे—निमित्तं, चाण्डालेऽपि आत्मविक्रयं—दासमित्यर्थः, करिष्यामि। अत्र राज्ञः तत्त्वार्थभाषणम्।

(न) रूपमाह, रूपमिति।—वितर्कवत् वाक्यं रूपम्। नाट्यशास्त्रेऽप्युक्तं,—"चित्रार्थसमवायी यत्तद्रूपमिति कीर्त्तितम्" इति।

(प) उदाहरति, मन इति।—मनः,—चित्तं, प्रकृत्यैव—स्वभावेनैव, चलं—चञ्चलं, दुर्लक्ष्यञ्च—लक्षयितुं—शरव्यीकर्त्तुम्, अशक्यञ्च, तथाऽपि कामेन मे—मम, एतत्—मनः, समं—युगपत्, सर्वैः शिलीमुखैः,—शरैः, कथं विद्धम्? अत्र राज्ञः सवितर्कं वचनम्।

(फ) उदाहरणमाह, उदाहरणमिति।—उत्कर्षयुक्तं वचनं—वाक्यम्, उदाहरण मुच्यते—कथ्यते। काव्यप्रदीपकृता तु,—"परस्योद्वेगजनकं स्वात्मविक्रम-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा अश्वत्थामाऽङ्के,—

"यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदात् पाण्डवीनां चमूनां,
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्म्मसाक्षी, चरति मयि रणे यश्च यश्च प्रतीपः,
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ।"(ब)

**भावतत्त्वोपलब्धिस्तु क्रमः स्यात् ॥३७३॥(भ)**

यथा शाकुन्तले—"राजा।—स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि। तथाहि,—

---

कीर्त्तनम्। उदाहरणमित्युक्तं परिणामे सुखाऽर्थकम् ॥" इति लक्षयित्वा यथा कंसवधे,—"कंसः। अहो! कोऽयं नन्दगोपस्य बालः? सत्यमहं प्रतिजाने तमहं तृणमिव धक्ष्यामि। [सक्रोधम्] हन्त! को नाम मत्प्रतीपमाचरन् सुखं शयिता, यदि साक्षात् मृत्युरापतितः स्यात्" इत्युदाहृतम्।

(ब) उदाहरति, यो य इति।—पितरि द्रोणे अन्यायतः पाञ्चालसुतेन धृष्टद्युम्नेन निहते क्रुद्धस्य अश्वत्थाम्न उक्तिरियम्। पाण्डवीनां चमूनां—सेनानां मध्ये, यः यः स्वभुजगुरुमदात्—निजबाहुबलस्यातिदर्पादित्यर्थः, ["स्वभुजगुरुबलः" इति पाठे—आत्मबाहुमात्रसहाय इत्यर्थः] शस्त्रं बिभर्त्ति—धरति, पाञ्चालगोत्रे—द्रुपदवंशे, यः यः शिशुः, अधिकवयाः,—प्रवयाः, वा गर्भशय्यां—जरायुं गतः, मातृजठरस्थित इत्यर्थः, यः यः तस्य कर्म्मणः,—मत्पितृनिधनरूपस्येति भावः, साक्षी—साक्षात् द्रष्टा, दृष्टाऽपि प्रतीकारार्थं यत्नाभावेन उदासीन इव स्थित इत्यर्थः, तथा यश्च यश्च मयि रणे—सङ्ग्रामव्यापारे, चरति—भ्रमति सति, प्रतीपः,—प्रतिकूलो भविष्यतीत्यर्थः, अहं—द्रोणपुत्रः, अश्वत्थामेति यावत्, क्रोधेन—पितृनिधनजनितेन इति भावः, अन्धः,—कर्त्तव्याकर्त्तव्यविवेकशून्यः सन्, स्वयं—साक्षात्, (न तु अन्यसहायः) जगताम् अन्तकस्य—यमस्य अपि, सकललोकच्छेदनसमर्थस्यापीत्यर्थः, इह—रणभूमौ, (न तु अन्यत्र) तस्य तस्य अन्तकः,—विनाशकः, भविष्यामीति शेषः। स्रग्धरा वृत्तम्।

(भ) क्रममाह, भावेति।—भावस्य—निर्व्विकारचित्तस्य, प्रथमविक्रृतिरूपस्य, ("निर्व्विकारात्मके चित्ते भावः प्रथमविक्रिया" इति पूर्व्वोक्तलक्षणात्) तत्त्वोपलब्धिः,—याथार्थ्यानुभवः, क्रमः स्यात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन ॥" (म)

सङ्ग्रहः पुनः ।

सामदानार्थसम्पन्नः ॥३७४॥ (य)

यथा रत्नावल्यां—"राजा । साधु वयस्य ! इदं ते पारितोषिकम्" [ इति कटकं ददाति ] (र) ।

लिङ्गादूहोऽनुमानता ॥३७५॥ (ल)

यथा जानकीराघवे नाटके—"रामः,—
लीलागतैरपि तरङ्गयतो धरित्रीम्
आलोकनैर्नमयतो जगतां शिरांसि ।

(म) उदाहरति, उन्नमितैकभ्रूलतमिति ।—उन्नमिता—उत्क्षिप्ता, एका भ्रूलता यत्र तादृशं, पदानि—सुप्तिङन्तरूपाणि, व्यवसितानि वा, रचयन्त्याः अस्याः,—शकुन्तलायाः, आननं—मुखं, पुलकाञ्चितेन—पुलको रोमाञ्चो नाम सात्त्विकभावः, स जातोऽस्य तादृशेन, कपोलेन, ( यद्दिक्स्थभ्रूलतोन्नमनं तद्दिक्स्थकपोलस्यैव पुलकाञ्चितत्वमिति एकवचनस्वरसः ) मयि [ पुरुषवत्त्वं सुभगम्मन्यत्वं ध्वनयितुं, स्वस्याधिकरणम् ] अनुरागं—रतेः षष्ठ्यवस्थां, [ निरूपितश्च सुधाकरे—"अङ्कुरपल्लवकलिकाप्रसूनफलभोगभागियं क्रमशः । प्रेमा मानः प्रणयः स्नेहो रागोऽनुराग इत्युक्तेः"॥ इति ] कथयति—प्रकटयति, इव । अत्र शकुन्तलायाः प्रथमविकृतिरनुभवः । अत्र यद्यपि भावस्य अल्पसंलक्ष्यविकारत्वात् हावत्वप्रतीतिः, तथापि अत्र भावस्य एव विशेषतया स्थितिः इति नानुपपत्तिः । शाकुन्तलस्येदं पद्यम् । आर्य्या जातिः ।

(य) सङ्ग्रहमाह, सङ्ग्रह इति ।—साम्ना प्रियवाक्येन, दानेन च अर्थस्य सम्पत्तिः, समाधानमित्यर्थः, सङ्ग्रहः ।

(र) उदाहरति, साध्विति ।—स्पष्टम् । अत्र प्रियवचनदानाभ्यां दूतपरितोषद्वारा सागरिकासङ्घटनारूपस्य अर्थस्य समाधानम् ।

(ल) अनुमानमाह, लिङ्गादिति ।—लिङ्गात्—पक्षसत्त्व-सपक्षसत्त्व-विपक्षव्यावृत्तत्वविशिष्टात् साधनज्ञानात्, ऊहः,—साध्यज्ञानं, व्यापकताऽनुभव इत्यर्थः, अनुमानता—अनुमानमित्यर्थः । [ स्वार्थे ताप्रत्ययः ] । नाट्यशास्त्रेऽप्युक्तम् ;—"रूपानुरूपगमनेनमनुमानमिति स्मृतम्" इति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तस्यानुमापयति काञ्चनकान्तिगौर-
कायस्य सूर्य्यतनयत्वमधृष्यताञ्च ॥" (व)

रतिहर्षोत्सवानान्तु प्रार्थनं प्रार्थना भवेत् ॥३७६॥(श)

यथा रत्नावल्याम् ;—"प्रिये सागरिके !—
शीतांशुर्मुखमुत्पले तव दृशौ, पद्मानुकारी करौ,
रम्भास्तम्भनिभं तथोरुयुगलं, बाहू मृणालोपमौ।
इत्याह्लादकराखिलाङ्गि ! रभसान्निःशङ्कमालिङ्ग्य माम्
अङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥" (ष)

इदञ्च प्रार्थनाख्यमङ्गम्। यन्मते निर्वहणे इह भूतावसर-

---

(व) उदाहरति, लीलागतैरिति।—लीलागतैः,—सविलासगमनैः, धरित्रीं—पृथिवीं, तरङ्गयतः,—कम्पयतः, आलोकनैः,—दृष्टिभिः, जगतां शिरांसि नमयतः,—नतानि कुर्व्वतः, काञ्चनस्य—स्वर्णस्य, या कान्तिः तद्वत् गौरः कायो यस्य तादृशस्य, तस्य—लक्ष्मणस्य, सूर्य्यतनयत्वं—सूर्य्यवंशीयत्वम्, अधृष्यतां—दुरासदत्वं च, अनुमापयति—अनुमानविषयीकरोति। [लीलागतमालोकनञ्चेति कर्तृपदमध्याहार्य्यम्]। अत्र लीलागमनादिप्रयुक्तधरित्रीकम्पनादिरूपात् साधनात् साध्यस्य सूर्य्यतनयत्वस्य अधृष्यत्वस्य च अनुमानम्। वसन्ततिलकं वृत्तम्।

(श) प्रार्थनामाह, रतीति।—रतेः,—अनुरागात्, हर्षाच्च उत्सवानां प्रार्थनं—याञ्चा, प्रार्थना भवेत्।

(ष) उदाहरति, यथेति। शीतांशुरिति।—तव मुखं शीतांशुः,—चन्द्रः, दृशौ—नेत्रे, उत्पले—नीलोत्पले, इत्यर्थः, करौ—हस्तौ, पद्मानुकारौ—पङ्कजोपमौ, ऊरुयुगलं रम्भास्तम्भनिभं—कदलीगर्भस्तम्भदण्डसदृशं, तथा बाहू—भुजौ, मृणालोपमौ ; इत्थम् आह्लादकराणि—आनन्ददातॄणि, अखिलानि—सर्व्वाणि, अङ्गानि यस्यास्तत्सम्बुद्धौ, [शीतांश्वादिसमानत्वेनावयवानामनङ्गानलतापनिर्व्वापणपटुत्वं सूचितम्] त्वं रभसात्—वेगात्, हर्षाद्वा, ("रभसो वेगहर्षयोः" इत्यमरः) निःशङ्कं यथा स्यात् तथा, माम् आलिङ्ग्य अनङ्गतापविधुराणि—मदनसन्तापविक्लवानि, मम अङ्गानि निर्व्वापय—शीतलय, एहि एहि—आगच्छ आगच्छ [आभीक्ष्ण्ये द्विरुक्तिः]। शार्दूलविक्रीडितं वृत्तम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

त्वात् (स) प्रशस्तिनामाङ्गं नास्ति, तन्मतानुसारेणोक्तम्; अन्यथाऽङ्गानां पञ्चषष्टिसङ्ख्यत्वप्रसङ्गात् ।

रहस्यार्थस्य तूद्भेदः क्षिप्तिः स्यात् ॥३७७॥ (ह)

यथा अश्वत्थामाऽङ्के,—

"एकस्यैव विपाकोऽयं दारुणो भुवि वर्त्तते ।
केशग्रहे द्वितीयेऽस्मिन् नूनं निःशेषिताः प्रजाः ॥" (क)

त्रोटकं पुनः ।

संरब्धवाक् ॥ ३७८ ॥ (ख)

यथा चण्डकौशिके,—"कौशिकः । आः ! पुनः कथमद्यापि न सम्भूताः (ग) स्वर्णदक्षिणाः ?"

अधिबलमभिसन्धिश्छलेन यः ॥३७९॥ (घ)

(स) यन्मते इति ।—निर्वहणे—निर्वहणाख्ये सन्धौ, भूतावसरत्वात्—प्रार्थनानां प्राप्तविषयत्वात्, अन्यथा—निर्वहणे प्रशस्तिसत्त्वे, पञ्चषष्टिसङ्ख्यत्वे को दोषः ? इति चेत् सम्प्रदायविरोध इति । महर्षिप्रतिपादितः सम्प्रदायो यथा,—"चतुःषष्टिर्बुधैर्ज्ञेयान्येतान्यङ्गानि सन्धिषु" इति ।

(ह) क्षिप्तिमाह, रहस्येति ।—रहस्यस्य—गुप्तस्य अर्थस्य, उद्भेदः,—प्रकटनं, क्षिप्तिः स्यात् ।

(क) उदाहरति, यथेति ।—एकस्यैवेति ।—भुवि—पृथिव्याम्, एकस्य—द्रौपदीकेशग्रहस्य इत्यर्थः, एव अयं दारुणो विपाकः,—दुष्परिणामः, वर्त्तते, अस्मिन् द्वितीये केशग्रहे—द्रोणकेशाकर्षणे, नूनं—मन्ये, प्रजाः निःशेषिताः, भविष्यन्तीति शेषः । केशानाकृष्य द्रोणं निहतवान् धृष्टद्युम्न इति पुराणम् ।

(ख) त्रोटकमाह, त्रोटकमिति ।—संरब्धा—सकोपा, वाक् पुनः त्रोटकम् ।

(ग) उदाहरति, यथेति ।—सम्भूताः,—सम्प्राप्ताः इत्यर्थः । [ भूधातोः प्राप्त्यर्थं त्वमत्र बोध्यम् ] ।

(घ) अधिबलमाह, अधिबलमिति ।—छलेन—कपटेन, अभिसन्धिः,—अभिप्रायानुसरणम्, अधिबलम् । अन्येत्वाहुः,—"यद्दृष्टमनसन्धानं बुधा अधिबलं विदुः । त्रोटकस्यान्यथाभावं केचिच्चाधिबलं जगुः ॥" इति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा रत्नावल्याम्—"काञ्चनमाला। भट्टिणि ! इअं सा चित्तसालिआ, ता इध ज्जेव्व चिट्ठ ; अहं पि वसंतअस्स सण्णं देमि" इत्यादि । (ङ)

**नृपादिजनिता भीतिरुद्वेगः परिकीर्त्तितः॥३८०॥(च)**

यथा वेण्याम्—

"प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः ।
स कर्णारिः, स च क्रूरो वृककर्म्मा वृकोदरः ॥" (छ)

**शङ्का-भय-त्रासकृतः सम्भ्रमो विद्रवो मतः॥३८१॥(ज)**

"कालान्तककरालास्यं क्रोधोद्भूतं दशाननम् ।
विलोक्य वानरानीके सम्भ्रमः कोऽप्यजायत ॥" (झ)

(ङ) उदाहरति, यथेति ।—भट्टिणीति ।—["भर्त्त्रि ! इयं सा चित्रशालिका, तत् इहैव तिष्ठ, अहमपि वसन्तकस्य संज्ञां ददामि" इति संस्कृतम्] । चित्रशालिका—आलेख्यगृहं, संज्ञा—सङ्केतम् । आदिपदेन "किं पद्मस्य रुचिं न हन्ति" इत्यादि श्लोकपर्य्यन्तस्य परिग्रहः । अत्र काञ्चनमाला वासवदत्तावेषधारिण्योः सुसङ्गता सागरिकयोः छलेन काञ्चनमाला-वासवदत्ताभ्यां राजविदूषकयोरभिप्रायज्ञानम् ।

(च) उद्वेगमाह, नृपादीति ।—नृपादिः,—विपक्षनृपचौरादिना, जनिता—उत्पादिता, भीतिः,—भयम्, उद्वेगः परिकीर्त्तितः ।

(छ) उदाहरति, प्राप्ताविति ।—दुर्य्योधनं प्रति तदीयपुरुषस्य उक्तिरियम् । स कर्णारिः,—कर्णशत्रुः, अर्जुनः इत्यर्थः, स च क्रूरः,—निष्ठुरः, वृककर्म्मा—वृकः,—व्याघ्रविशेषः, तद्वत् कर्म्म यस्य तादृशः, दुःशासनोरःस्थलात् रुधिरपानादिति भावः, वृकोदरः,—भीमः, एकः,—अभिन्नः, रथः तमारूढौ इतस्ततः त्वां पृच्छन्तौ प्राप्तौ—आगतवन्तौ । अत्र दुर्य्योधनस्य भीमार्जुनाभ्यां जनिता भीतिः । पथ्यावक्त्रं वृत्तम् ।

(ज) विद्रवमाह, शङ्केति ।—शङ्कया—अनिष्टाशंसया, भयेन—त्रासेन, भयानुकूलव्यापारेण च सम्भ्रमः,—आवेगः, विद्रवः मतः,—कथितः ।

(झ) उदाहरति, कालान्तकेति ।—कालान्तकः,—प्रलयकालीनो यमः, तस्येव करालानि—भीषणानि, आस्यानि—मुखानि यस्य तादृशं, क्रोधोद्भूतं—कोपपूर्णं, दशाननं—दशमुखं रावणं, विलोक्य—दृष्ट्वा, वानराणाम् अनीके—सैन्ये, कोऽपि—अनिर्वचनीय इत्यर्थः, सम्भ्रमः,—आवेगः, अजायत—अभूत् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ विमर्षाङ्गाणि।

अपवादोऽथ सम्फेटो व्यवसायो द्रवो द्युतिः।
शक्तिः प्रसङ्गः खेदश्च प्रतिषेधो विरोधनम्॥
प्ररोचना विमर्षे स्यादादानं छादनं तथा। (ञ)
दोषप्रख्याऽपवादः स्यात्॥ ३८२॥ (ट)

यथा वेण्यां,—"युधिष्ठिरः। पाञ्चालक! क्वचिदासादिता तस्य दुरात्मनः पदवी? पाञ्चालकः। न केवलं पदवी, स एव दुरात्मा देवीकेशपाशस्पर्शपातकप्रधानहेतुरुपलब्धः।" (ठ)

सम्फेटो रोषभाषणम्॥३८३॥ (ड)

यथा तत्रैव,—"राजा। अरे रे मरुत्तनय! वृद्धस्य राज्ञः पुरतो निन्दितमप्यात्मकर्म्म श्लाघसे? (ढ) शृणु रे!—

कृष्टा केशेषु भार्य्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
प्रत्यक्षं भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी।

---

(ञ) विमर्षाङ्गाण्याह, अथेति।—अपवादादीनि त्रयोदश विमर्षाख्यस्य सन्धेः अङ्गानि।

(ट) अपवादमाह, दोषेति।—दोषस्य प्रख्या—कथनम्, अपवादः स्यात्।

(ठ) उदाहरति, पाञ्चालकेति।—आसादिता—प्राप्ता, दुरात्मनः,—दुष्टस्वभावस्य, तस्य—दुर्य्योधनस्य। देवीति।—देव्याः,—द्रौपद्याः, केशपाशस्य स्पर्शात् यत् पातकं तस्य प्रधानहेतुः,—मुख्यकारणं, दुर्य्योधन इत्यर्थः, उपलब्धः,—प्राप्तः। अत्र दुर्य्योधनस्य दोषकथनम्।

(ड) सम्फेटमाह, सम्फेट इति।—रोषेण—क्रोधेन, भाषणं—कथनं, सम्फेटः। क्रोधावस्थायामुक्तं वचनं सम्फेटो विमर्षाङ्गमिति भावः।

(ढ) उदाहरति, यथेति।—मरुत्तनय!—वायुपुत्त्र! भीम इत्यर्थः, वृद्धस्य राज्ञः,—धृतराष्ट्रस्य, पुरतः,—अग्रतः, निन्दितं—लोकगर्हितमपि, आत्मनः कर्म्म श्लाघसे—प्रशंससि?

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तस्मिन् वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्राः
बाह्वोर्वीर्य्यातिभारद्रविणगुरुमदं मामजित्वैव दर्पः ॥

भीमः। [ सक्रोधम् ] आः पाप ! राजा। आः पाप !" इत्यादि। (ण)

**व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसम्भवः ॥३८४॥ (त)**

यथा तत्रैव "भीमः,—

निहताशेषकौरव्यः क्षीबो दुःशासनासृजा ।
भङ्क्ता दुर्य्योधनस्योर्वोर्भीमोऽयं शिरसा नतः ॥" (थ)

**द्रवो गुरुव्यतिक्रान्तिः शोकावेगादिसम्भवा ॥३८५॥ (द)**

---

(ण) उदाहरति, कृष्टेति।—भीमार्ज्जुनौ प्रति दुर्य्योधनवचनम्। भुवनपतेः,—समस्तपृथिवीश्वरस्य, मम—दुर्य्योधनस्य, आज्ञया भूपतीनां—राज्ञां, प्रत्यक्षं द्यूतेन निर्जिता दासी—किङ्करी, द्यूतेन जितत्वात् दासीव अपमानयथेष्टाचरणयोग्यत्वात् इति भावः ; अत एव तत्र (इति भीमं प्रति उक्तिः) पशोः,—पशुतुल्यस्य इत्यर्थः, तव च (इति अर्जुनं प्रति उक्तिः) तस्य राज्ञः,—युधिष्ठिरस्य, तयोः,—नकुलसहदेवयोर्वा, वाशब्दोऽत्र आक्षेपे अनादरे वा ; भार्य्या—द्रौपदी, केशेषु कृष्टा—गृहीता, दुःशासनेनेति शेषः, तस्मिन् वैरस्य—विद्वेषस्य, अनुबन्धे—कारणे, जाते सतीति शेषः, ये नरेन्द्राः,—राजानः, हताः, युष्माभिरिति शेषः, तैः किम् अपकृतम् ? वद। बाह्वोः,—भुजयोः, वीर्य्यातिभारः,—अतिवीर्य्यं, तद् एव द्रविणं—धनं, तेन गुरुः,—महान्, मदः,—गर्व्वः, यस्य तादृशं, माम् अजित्वैव दर्पः,—अहङ्कारः, क्रियते युष्माभिरिति शेषः। अत्र क्रोधेन भीमदुर्य्योधनयोर्भाषणम्। स्रग्धरा वृत्तम्।

(त) व्यवसायमाह, व्यवसाय इति।—प्रतिज्ञायाः,—कार्य्यनिर्देशस्य, हेतोः,—साधननिर्देशस्य, च सम्भवः,—सम्मेलनं, व्यवसायः विज्ञेयः।

(थ) उदाहरति, निहतेति।—पूर्णप्रतिज्ञस्य भीमस्य धृतराष्ट्रं प्रति प्रणतिवचनम्। निहताः,—विनाशिताः, अशेषाः,—समस्ताः, कौरव्याः,—कुरुवंशीयाः, येन तादृशः, दुःशासनस्य असृजा—रक्तेन, रक्तपानेनेत्यर्थः, क्षीबः,—मत्तः, तथा दुर्य्योधनस्य ऊर्वोः,—ऊरुद्वयस्य, भङ्क्ता—भञ्जनकर्त्ता, अयं भीमः शिरसा नतः,—शिरसा प्रणमतीत्यर्थः। अत्र कार्य्यस्य कौरवहननादिकस्य क्षीवत्वहेतोश्च दुःशासनरुधिरपानस्य सम्मेलनम्।

(द) द्रवमाह, द्रव इति।—शोकावेगादिना—शोकः,—पुत्रादिवियोगदुःखम्,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा तत्रैव,—"युधिष्ठिरः। भगवन्! कृष्णाग्रज! सुभद्राभ्रातः!—

ज्ञातिप्रीतिर्मनसि न कृता, क्षत्त्रियाणां न धर्मो
रूढ़ं सख्यं तदपि गणितं नानुजस्यार्ज्जुनेन।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः
कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयि त्वम्?॥" (ध)

**तर्जनोद्वेजने प्रोक्ता द्युतिः ॥३८६॥ (न)**

यथा तत्रैव दुर्य्योधनं प्रति कुमारवृकोदरेणोक्तम्,—

"जन्मेन्दोर्विमले कुले व्यपदिशस्यद्यापि धत्से गदां
मां दुःशासनकोष्णशोणितमधुक्षीबं रिपुं मन्यसे।
दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
त्रासान्मे नृपशो! विहाय समरं पङ्केऽधुना लीयसे॥" (प)

---

आवेगः,—भयादिजनितमनसः सम्भ्रमः, तदादिना, सम्भवा—सम्भूता, गुरूणां—पूज्यानां, व्यतिक्रान्तिः,—व्यतिक्रमः, समादरलङ्घनमिति यावत्, द्रवः, कथ्यते इति शेषः।

(ध) उदाहरति, ज्ञातीति।—ज्ञातिप्रीतिः,—एकवंशजत्वनिबन्धनः प्रणयः इत्यर्थः, युधिष्ठिरबलदेवयोरेकचन्द्रवंशप्रभवत्वात् ज्ञातित्वमिति भावः, मनसि न कृता—न गणिता इत्यर्थः, क्षत्त्रियाणां धर्म्मः,—संग्रामे प्रणयिनि पक्षपाती नास्ति इत्येवंरूप इति भावः, "न गणितः" इत्यग्रेणान्वयः; अर्ज्जुनेन, समिति शेषः, अनुजस्य—कृष्णस्य, रूढ़ं—बद्धं, प्रसिद्धमिति यावत्, सख्यं—मित्रता, यत् तदपि न गणितं—तुच्छीकृतं, भवतेति सर्व्वत्राध्याहार्य्यम्। भवतः,—तव, शिष्ययोः,—गदायुद्धेऽन्तेवासिनोः भीमदुर्य्योधनयोः, स्नेहबन्धः कामं—सम्यक्, तुल्यः,—समानः, भवतु, स्नेहतुल्यत्वे एकस्य साहाय्यकरणमनुचितमिति भावः। अयं कः पन्थाः,—नयः, यत् मन्दभाग्ये—भाग्यहीने, मयि त्वं विमुखः,—प्रतिकूलः, असि?—भवसि? अत्र बलदेवं प्रति अनादरसूचकवचनात् गुरुव्यतिक्रमः। मन्दाक्रान्ता वृत्तम्।

(न) द्युतिमाह, तर्ज्जनेति।—तर्ज्जनं—भर्त्सनम्, उद्वेजनं—भयप्रदर्शनेन उद्वेगजननञ्च, द्युतिः प्रोक्ता—कथिता।

(प) उदाहरति, जन्मेति।—इन्दोः,—चन्द्रस्य, विमले—निर्मले, निर्दोषे



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शक्तिः पुनर्भवेत् ।

विरोधस्य प्रशमनम् ॥३८७॥ (फ)

यथा तत्रैव,—

"कुर्व्वन्त्वाप्ता हतानां रणशिरसि जना भस्मसाद्देहभारान्
अश्रून्मिश्रं कथञ्चिद्ददतु जलममी बान्धवा बान्धवेभ्यः ।
मार्गन्तां ज्ञातिदेहान् हतनरगहने खण्डितान् गृध्रकङ्कैः
अस्तं भास्वान्प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि ॥"(ब)

---

इत्यर्थः, कुले जन्म व्यपदिशसि—कथयसि, अयुक्तं ख्यापयसीत्यर्थः ; ननु सहाया-भावात् कथं योत्स्ये ? इत्याशङ्क्याह—अद्यापि गदां धत्से—गदासहायस्यान्यसहाया-पेक्षा नेति भावः ; अथवा भ्रात्रादिवधेन निर्वेदे गदात्याग एवोचितः, स च न त्वया कृतः, इत्यतोऽद्यापि युद्धश्रद्धास्तीति गम्यते इति भावः । मां दुःशासनस्य यत् कोष्णम्—ईषदुष्णं, प्रत्यग्रहतत्वात् तदानीमेव निःसरदिति यावत्, शोणितं—रुधिरं, तदेव मधु—सुरेति यावत्, तेन—तत्पानेनेत्यर्थः, क्षीवः,—मत्तः, तं, रिपुं—शत्रुं, मन्यसे—गणयसि, यद्वा,—मत्ततयाऽवज्ञायसे इत्यर्थः ; तथा दर्पान्धः सन्, मधुकैटभ-द्विषि—मधुदैत्य-कैटभदैत्यध्वंसिनि, हरौ—कृष्णे, अपि उद्धतं यथा स्यात् तथा, चेष्टसे, तस्य बन्धने कृतोद्योगत्वादिति भावः । हे नृपशो !—नृषु—नरेषु, पशुः,—पशुरिव, त्यक्तमनुष्यधर्म्मा, तत्सम्बुद्धौ तथोक्त, द्विपदपशो इत्यर्थः, नराधम इति यावत्, मे—मम, त्रासात्—भयात्, समरं—सङ्ग्रामं, विहाय—त्यक्त्वा, अधुना, पङ्के लीयसे —लीनः सन् तिष्ठसि । अत्र तर्ज्जनरूपा द्युतिः । उद्वेजनरूपा यथा,—"भो लङ्केश्वर ! दीयताम्" इत्यादि । शार्दूलविक्रीडितं वृत्तम् ।

(फ) शक्तिमाह, शक्तिरिति ।—विरोधस्य—विद्वेषस्य, प्रशमनं पुनः शक्तिः भवेत् ।

(ब) उदाहरति, कुर्वन्त्विति ।—आप्ताः,—पूज्याः, मान्या वा, जनाः,—बन्धुजना इति भावः, रणशिरसि—उद्धतरूपेण वर्त्तमाने सङ्ग्रामे इत्यर्थः, हतानां देहभारान्—शरीरचयान्, भस्मसात्—कार्त्स्न्येन वह्निसात्, कुर्व्वन्तु—दहन्तु इत्यर्थः, [ "वह्निसात्" इति पाठान्तरम् । कार्त्स्न्येन दग्धे अर्थे सात्प्रत्ययः ] तथा अमी बान्धवाः,—सपिण्डाः, बान्धवेभ्यः,—सपिण्डेभ्यः, रणहतेभ्यः इति शेषः, अश्रून्मिश्रं—नेत्रजलसंवलितं, जलं कथञ्चित् ददतु, तथा हतनरगहने—हतैः,—मारितैः, नरैः,—वीरैः, गहने—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रसङ्गो गुरुकीर्त्तनम् ॥२८८॥ (भ)

यथा मृच्छकटिकायां,—"चाण्डालकः। एसो क्खु सागलदत्तस्स सुदो अज्जविस्सदत्तस्स णत्तिओ चालुदत्तो वावादितुं वज्झट्ठाणं णिज्जइ। एदेण किल गणिआ वसंतसेणा सुअस्सलोहेण वावादिदत्ति। (म) चारुदत्तः। [सनिर्वेदं स्वगतम्]—

मखशतपरिपूतं गोत्रमुद्भासितं यत्
सदसि निविड़चैत्य-ब्रह्मघोषैः पुरस्तात्।
मम निधनदशायां वर्त्तमानस्य पापै-
स्तदसदृशमनुष्यैर्घुष्यते घोषणायाम् ॥" (य)

---

निविड़े, अस्मिन् चैवे इति शेषः, गृध्रैः, कङ्कैः,—पक्षिविशेषैरिति यावत्, खण्डितान् ज्ञातिदेहान्—वान्धवशरीराणि, मार्गन्ताम्—अन्विष्यन्तां, तानि अन्विष्यान्विष्य तेषामन्त्यं संस्कारं यथेष्टं विदधतु इति भावः, अयं भास्वान्—सूर्य्यः, रिपुभिः,—शत्रुभिः, सह, अस्तं—चरमाचलं, प्रयातः,—प्राप्तः, [वर्त्तमाने क्तप्रत्ययः] अतो बलानि—सैन्यानि, संह्रियन्तां—निवर्त्त्यन्ताम्। अत्र सह रिपुभिरित्युक्त्या सहोक्तिरलङ्कारः, तथा शत्रूणां निधनेन विरोधशान्तिरिति ध्येयम्। स्रग्धरा वृत्तम्।

(भ) प्रसङ्गमाह, प्रसङ्ग इति।—गुरु—अत्यर्थम्, अमर्षप्रयुक्ततयोद्धतमिति यावत्, कीर्त्तनं—दोषादिख्यापनं, प्रसङ्गः। अत एवोक्तं नाट्यशास्त्रकारैः,—"प्रसङ्गश्चैव विज्ञेयो वाक्यैरामर्षयोजितैः" इति।

(म) यथेति।—["एष खलु सागरदत्तस्य सुत आर्य्यविश्वदत्तस्य नप्ता चारुदत्तो व्यापादयितुं वध्यस्थानं नीयते। एतेन किल गणिका वसन्तसेना सुवर्णलोभेन व्यापादिता" इति संस्कृतम्] नप्ता—पौत्रः। स्पष्टमन्यत्।

(य) उदाहरति, मखेति।—मखानां—यज्ञानां, ("सप्ततन्तुर्मखः क्रतुः" इत्यमरः) शतैः,—शतशोऽनुष्ठानैरित्यर्थः, परिपूतं—विशुद्धं, यत् गोत्रं—मदीयं कुलं, पुरस्तात्—पूर्वं, सदसि—सभायां, निविड़चैत्यब्रह्मघोषैः,—निविड़ानि—लोकैः आकीर्णानि, यानि चैत्यानि—पूजाद्यायतनस्थानानि ("चैत्यमायतनं तुल्ये" इत्यमरः) तेषु ये ब्रह्मघोषाः,—वेदवादाः, वेदपाठकाः वा तैः, उद्भासितं—समुज्ज्वलीकृतम् इत्यर्थः, आसीदिति शेषः, (इदानीं) निधनदशायां—मृत्युदशायां, वर्त्तमानस्य—वध्यस्थानं प्रति नीयमानस्य, तथा कलङ्कितस्येति यावत्, मम तत्—गोत्रं,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत्यनेन चारुदत्तवधाभ्युदयाऽनुकूलप्रसङ्गाद् गुरुकीर्त्तनमिति प्रसङ्गः ।

**मनश्चेष्टासमुत्पन्नः श्रमः खेद इति स्मृतः ॥३८९॥ (र)**

मनःसमुत्पन्नो यथा मालतीमाधवे,—

"दलति हृदयं गाढ़ोद्वेगं, द्विधा न तु भिद्यते
वहति विकलः कायो मोहं, न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः, करोति न भस्मसात्
प्रहरति विधिर्मर्म्मच्छेदी, न कृन्तति जीवितम् ॥" (ल)

एवं चेष्टासमुत्पन्नोऽपि ।

**ईप्सितार्थप्रतीघातः प्रतिषेध इतीष्यते ॥३९०॥ (व)**

यथा मम प्रभावत्यां विदूषकं प्रति,—"प्रद्युम्नः । सखे ! कथमिह त्वमेकाकी वर्त्तसे ? क्व नु पुनः प्रियसखीजनानुगम्य-

---

पापैः,—नीचैः, असद्दृशमनुष्यैः,—स्वर्गमावस्थाप्यनर्हैरिति यावत्, घोषणायाम्—अपवादवाद्यध्वनौ, घुष्यते—विख्याप्यते, किमतःपरमाक्षेपकरम् ? इति भावः । मालिनी वृत्तम् ।

(र) खेदमाह, मन इति ।—मनसा, चेष्टया वा, समुत्पन्नः,—जातः, श्रमः खेदः इति स्मृतः ।

(ल) उदाहरति, दलतीति ।—मम हृदयं गाढ़ोद्वेगं—गुरुपीड़म्, अत एव दलति—स्वयं दलितं भवति, न तु द्विधा भिद्यते—द्विखण्डं नैव भवतीत्यर्थः; विकलः,—अवशः, कायः—शरीरमिति यावत्, मोहं—मूर्च्छां, वहति, चेतनां न मुञ्चति—न त्यजति ; अन्तर्दाहः,—अभ्यन्तरे वर्त्तमानः शोकाग्निरित्यर्थः, तनूं—शरीरं, ज्वलयति—उद्दीपयति, भस्मसात् न करोति ; मर्मच्छेदी विधिः प्रहरति, जीवितं न कृन्तति—न नाशयति । अत्र विरोधाभासालङ्कारः । उत्तरचरितेऽपि श्लोकोऽयं सीताशोकसन्तप्तचेतसो रामस्योक्तौ दृश्यते । हरिणी वृत्तम् ।

(व) प्रतिषेधमाह, ईप्सितार्थेति ।—ईप्सितार्थस्य—अभीष्टविषयस्य, प्रतीघातः प्रतिषेध इति इष्यते ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

माना प्रियतमा मे प्रभावती ? विदूषकः। असुरवइणा आआ-रिअ कहिं वि णीदा। (ग) प्रद्युम्नः। [दीर्घं निश्वस्य]—

हा पूर्णचन्द्रमुखि ! मत्तचकोरनेत्रे !
मामानताङ्गि ! परिहाय कुतो गताऽसि ? ।
गच्छ त्वमद्य ननु जीवित ! तूर्णमेव
दैवं कदर्थनपरं कृतकृत्यमस्तु ॥" (घ)

कार्य्यात्ययोपगमनं विरोधनमिति स्मृतम्॥३९१॥(ङ)

यथा वेण्यां युधिष्ठिरः,—

"तीर्णे भीष्ममहोदधौ, कथमपि द्रोणानले निर्वृते,
कर्णाशीविषभोगिनि प्रशमिते, शल्ये च याते दिवम्।
भीमेन प्रियसाहसेन रभसादल्पावशेषे जये
सर्व्वे जीवितसंशयं वयममी वाचा समारोपिताः॥" (च)

(ग) असुरवइणा इति।—["असुरपतिना आकार्य्य कुत्रापि नीता" इति संस्कृतम्]। आकार्य्य—आहूय, ("हूतिराकारणाह्वानम्" इत्यमरः)।

(घ) हा इति।—हा—इति खेदे, पूर्णचन्द्रमुखि!—पूर्णचन्द्र इव मुखं यस्यास्तत्सम्बुद्धौ तथोक्ते! मत्तचकोरनेत्रे!—मत्तौ चकोरौ यद्वा,—मत्तचकोरस्य इव नेत्रे यस्यास्तत्सम्बोधने; आनताङ्गि!—आनतानि—पयोधरभरक्रान्ततयाऽवनतानि, अङ्गानि यस्यास्तत्सम्बुद्धौ, मां परिहाय—त्यक्त्वा, कुतः गतासि ?—गता त्वम् ? ननु जीवित! त्वम् अद्य तूर्णं—शीघ्रम्, एव गच्छ, कदर्थनपरं—क्लेशदानतत्परं, दैवं—विधिः, कृतकृत्यं—कृतार्थम्, अस्तु—भवतु। अत्र ईप्सितस्य प्रतीघातः। वसन्ततिलकं वृत्तम्।

(ङ) विरोधनमाह, कार्य्येति।—कार्य्यस्य अत्ययः,—ध्वंसः, तस्य उपगमनं—प्राप्तिः, ज्ञापनम् इति यावत्, विरोधनमिति स्मृतम्।

(च) उदाहरति, तीर्ण इति।—भीष्म एव महोदधिः,—महासमुद्रः, [महार्णव इति पाठान्तरम्] तस्मिन्, तीर्णे—गतपारे सति, परास्ते इति भावः, द्रोण एव अनलः तस्मिन्, कथमपि—केनापि रूपेण, निर्वृते—निर्वाणतां नीते, (स्वयमस्त्रत्यागेन शान्ते, न तु जयादिना, अत एव "कथमपि" इत्युक्तम्) कर्ण एव आशीविषभोगी—आश्यां—दंष्ट्रायां, विषं—हालाहलं, यत्र तादृशः, भोगः,—देहः, विद्यते

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**प्ररोचना तु विज्ञेया संहारार्थप्रदर्शिनी ॥३९२॥(क)**

यथा वेण्यां,—"पाञ्चालक: ।...अहञ्च देवेन चक्रपाणिना" इत्युपक्रम्य, "कृतं सन्देहेन,—

पूर्य्यन्तां सलिलेन रत्नकलसा राज्याभिषेकाय ते,
कृष्णाऽत्यन्तचिरोज्झिते तु कबरीबन्धे करोतु क्षणम् ।
रामे शातकुठारभास्वरकरे क्षत्रद्रुमोच्छेदिनि,
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुत: संशय: ? ॥" (ख)

---

यस्य, सविषदन्तपन्नग: इति यावत्, ("भोग: सुखे स्त्र्यादिभृतावहेश्च फणकाययो:" इत्यमर: ) तस्मिन् प्रशमिते—प्रकर्षेण शान्तिं नीते, हते इति भाव:, शल्ये च दिवं—स्वर्गं, याते, युद्धे निधनादिति भाव:, इत्थं जये अल्पावशेषे—केवलं दुर्योधनवधमात्रावशिष्टे इत्यर्थ:, प्रियसाहसेन—अतिसाहसवता, भीमेन रभसात्—वेगात्, वाचा—"अद्यैव यदि दुर्योधनं न हन्मि तदाऽग्निं प्रवेक्ष्यामि" इत्येवंरूपेण वाक्येनेति भाव:, सर्वे अमी वयं जीवितसंशयं—जीवनं स्थास्यति न वा एवं सन्देहं, मरणसम्भावनामिति यावत्, समारोपिता:,—गमिता: । तत्प्रतिज्ञाश्रवणेन अदर्शनं गतस्य दुर्योधनस्यादर्शने युद्धाभावेन भीमस्याग्निप्रवेशे अस्माभिरपि मर्त्तव्यमिति भाव: । शार्दूलविक्रीडितं वृत्तम् ।

(क) प्ररोचनामाह, प्ररोचनेति ।—संहारस्य—उपसंहारस्य, अर्थ:,—विषय:, उपसंह्रियमाणप्रयोजन इति यावत्, तं प्रदर्शयति या सा, उक्तिरिति शेष:, प्ररोचना विज्ञेया ।

(ख) उदाहरति, पूर्य्यन्तामिति ।—["हे राजन् !" इत्यध्याहार्य्यम्] ते—तव, राज्याभिषेकाय रत्नकलसा: सलिलेन पूर्य्यन्ताम्; कृष्णा—द्रौपदी, अत्यन्तचिरोज्झिते—अतिचिरपरित्यक्ते, कबरीबन्धे—केशबन्धने, क्षणम्—अधिवासनमाल्यग्रथनरूपमुत्सवं, ("क्षण उद्धर्षो मह उद्धव उत्सव:" इत्यमर: ) करोतु, शातेन—शाणितेन, ["घोर" इति पाठान्तरे—घोरेण—भीषणेन इत्यर्थ: ] कुठारेण—परशुना, भास्वर:,—देदीप्यमान:, ["भासुर" इति पाठे—समुज्ज्वल: ] करो यस्य तादृशे, क्षत्रा:,—क्षत्रिया:, एव द्रुमा:,—वृक्षा:, तेषां छेदिनि रामे—भार्गवे, तथा क्रोधान्धे—अतिक्रुद्धे, वृकोदरे—भीमे, च आजौ—युद्धे, ("समित्याजिसमिद्युध:" इत्यमर: ) परिपतति—प्रवृत्ते सति इत्यर्थ:, संशय:,—सन्देह:, जये इति शेष:, कुत: ?—न कुतोऽपीत्यर्थ: । अत्र महावाक्यस्य उपसंहारदर्शनम् । शार्दूलविक्रीडितं वृत्तम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## कार्य्यसङ्ग्रह आदानम् ॥ ३९३ ॥ (ग)

यथा वेण्याम् ;—"ननु भो भोः समन्तपञ्चकचारिणः !(घ)— नाहं रक्षो, न भूतो, रिपुरुधिरजलाह्लादिताङ्गः प्रकामं निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि। भो भो राजन्यवीराः! समरशिखिशिखाभुक्तशेषाः, कृतं वः त्रासेनानेन, लीनैर्हतकरितुरगान्तर्हितैरास्यते यत् ॥" (ङ)

अत्र समस्तरिपुवधकार्य्यस्य सङ्गृहीतत्वादादानम्।

---

(ग) आदानमाह, कार्य्येति।—कार्य्याणां सङ्ग्रहः,—सम्यक् ग्रहणम्, उपपादनं, संहारो वेति भावः, आदानम्। तथोक्तं मुनिना,—"बीजकार्य्योपगमनमादानमिति संज्ञितम्।" इति। अभिनवगुप्ताचार्य्यास्तु,—"अर्थसंहार आदानम्" इति व्याचक्रुः। अत एव कविराजाः,—उपगमनसंहारोभयार्थतयाऽऽदानपदं प्रयुक्तवन्त इति बोध्यम्।

(घ) उदाहरति, यथेति।—समन्तपञ्चकचारिणः,—समन्तात् पञ्चकं—ह्रद-पञ्चकं, यत्र तथोक्तं, कुरुक्षेत्रस्थतीर्थविशेषः, यत्र कुरुपाण्डवसङ्ग्रामः समभवत् इति भावः, तत्र चारिणः, योद्धृवर्गा इति शेषः।

(ङ) नाहमिति।—भीमसेनं रिपुरुधिराक्तदेहं धावन्तं दृष्ट्वा भयात् निहत-पतितसैनिकगणान्तराले गोपितकलेवरान् सङ्ग्रामवर्त्तिनः योधान् प्रति भीमसेनोक्ति-रियम्। अहं न रक्षः,—राक्षसो नाहमित्यर्थः, न भूतः,—देवयोनिविशेषः न, रिपूणां रुधिरजलैः,—शोणितवारिभिः, आह्लादितानि—आप्यायितानि, विराजिता-नीत्यर्थः, [ प्लावित इति पाठे—प्लावितानि—संसिक्तानि ] अङ्गानि—अवयवाः, यस्य तथोक्तः, क्रोधनः, प्रकामं—सम्यक् यथा तथा, निस्तीर्णः,—उत्तीर्णः, उरुः,—महान्, प्रतिज्ञा एव जलनिधिः,—समुद्रः, येन सः, अत एव गहनः,—निविड़ः, दुरासद इत्यर्थः, क्षत्रियः अस्मि—भवामि ; भो भो राजन्यवीराः!—क्षत्रियेषु शौर्य्यशालिनः! यूयं समरशिखिनः,—रणाग्नेः, शिखाभिः,—ज्वालाभिः, भुक्तेभ्यः,—दग्धेभ्य इत्यर्थः, शेषाः,—अवशिष्टाः, नाधुना रणाग्निर्युष्मान् धक्ष्यतीति भावः, अतः वः,—युष्माकम्, अनेन त्रासेन—भीत्या, कृतम्—अलं, त्रासकारणं किमपि नास्तीत्यर्थः ; यत्—यस्मात्, त्रासादित्यर्थः, हतेषु—युद्धे मृतेषु, करिषु—हस्तिषु, तुरगेषु—अश्वेषु, च अन्तर्हितैः,—अन्तर्द्धानं गतैः, तिरोहितैरित्यर्थः, अत एव लीनैः,—विलयं प्राप्तैरिव स्थितैरिति भावः, सद्भिः आस्यते—स्थीयते, युष्माभिरिति शेषः। अत्र मालापङ्क्ति-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तदाहुश्छादनं पुनः ।

कार्य्यार्थमपमानादेः सहनं खलु यद्भवेत् ॥३९४॥(च)

यथा तत्रैव—"अर्जुनः । आर्य्य !—

अप्रियाणि करोत्वेष वाचा शक्तो न कर्म्मणा ।

हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा ॥" (छ)

अथ निर्वहणाङ्गानि ।

सन्धिर्विबोधो ग्रथनं निर्णयः परिभाषणम् ।

कृतिः प्रसाद आनन्दः समयोऽप्युपगूहनम् ॥

भाषणं पूर्व्ववाक्यञ्च काव्यसंहार एव च ।

प्रशस्तिरिति संहारे ज्ञेयान्यङ्गानि नामतः ॥३९५॥(ज)

तत्र,—

बीजोपगमनं सन्धिः ॥ ३९६ ॥ (झ)

---

रिति कुवलयानन्दकाराः, "भ्रान्तापह्नुतिरन्यस्य शङ्कातस्तथ्यवारणे" इति तदुक्तलक्षणात् । स्रग्धरा वृत्तम् ।

(च) छादनमाह, तदाहुरिति ।—कार्य्यार्थं यत् खलु अपमानादेः सहनं भवेत्, तत् पुनः छादनम् आहुः । काव्यप्रदीपकारास्तु,—"छलेन छादनं यत् स्यादर्थस्य छादनं तु तत्" इत्याहुः ।

(छ) उदाहरति, अप्रियाणीति ।—हतं—विनाशितं, भ्रातॄणां—दुःशासनादीनां, शतं यस्य तादृशः, अत एव दुःखी—अतिशोकार्त्त इत्यर्थः, एषः,—दुर्य्योधनः, वाचा अप्रियाणि करोतु—कटुवाक्यं वदतु, कर्म्मणा न शक्तः, अपकर्त्तुमिति शेषः, कार्य्येण किमपि अपकर्त्तुं न शक्नोति इति भावः; अस्य—दुर्य्योधनस्य, प्रलापैः,—अनर्थकैः वाक्यैः, व्यथा—वेदना, का?—न कापीत्यर्थः । यथा विकाररोगवतः प्रलापाः, एवं शतभ्रातृवधव्यसनविकारवतस्तेनास्य कार्य्यासामर्थ्यं ध्वनितम् । अत्र दुर्य्योधनस्य वाक्येन अपमानस्य कार्य्यकारित्वात् सहनम् ।

(ज) निर्वहणाङ्गान्याह, अथेति ।—सन्ध्यादीनि चतुर्द्दशप्रकाराणि निर्वहणाख्यस्य सन्धेरङ्गानीत्यर्थः ।

(झ) सन्धिमाह, बीजेति ।—बीजस्य (पूर्व्वोक्तस्य) उपगमनम्—उद्भावनं,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा वेण्यां,—"भीमः।···भवति यज्ञवेदिसम्भवे !···स्मरति भवती यन्मयोक्तं—चञ्चद्भुज—" इत्यादि। अनेन मुखे क्षिप्तबीजस्य पुनरुपगमनमिति सन्धिः। (ञ)

विबोधः कार्य्यमार्गणम् ॥३९७॥ (ट)

यथा तत्रैव,—"भीमः। मुञ्चतु मामार्य्यः क्षणमेकम्। युधिष्ठिरः। किमपरमवशिष्टम्? भीमः। सुमहदवशिष्टं, संयमयामि तावदनेन सुयोधनशोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम्। युधिष्ठिरः। गच्छतु भवान्, अनुभवतु तपस्विनी (ठ) वेणीसंहारम्" इति। अनेन केशसंयमनकार्य्यस्यान्वेषणाद्विबोधः।

उपन्यासस्तु कार्य्याणां ग्रथनम् ॥ ३९८ ॥ (ड)

यथा तत्रैव,—"भीमः। पाञ्चालि! न खलु मयि जीवति संहर्त्तव्या दुःशासनविलुलिता (ढ) वेणिरात्मपाणिभ्याम्।

---

सन्धिः। वृत्तिवार्त्तिकेऽप्ययदीक्षितैस्तु,—"दोषारोपेण नष्टस्य कार्य्यस्योन्नतये पुनः। अन्वेषणं भवेत् सन्धिः" इत्युक्तम्।

(ञ) उदाहरति, यथेति।—भवति!—इत्यामन्त्रणम्; यज्ञवेदिसम्भवे!—याज्ञसेनि! द्रौपदि! इत्यर्थः। मुखे—मुखाख्यसन्धौ, क्षिप्तस्य—उद्भूतस्य, बीजस्य—कार्य्यस्य, पुनरुपगमनं—पुनः सम्पादनम्, इति—अस्मात् हेतोः।

(ट) विबोधमाह, विबोध इति।—कार्य्यस्य—कर्त्तव्यस्य, मार्गणम्—अन्वेषणं, विबोधः। नाट्यशास्त्रकारेणाप्युक्तं,—"कार्य्यस्यान्वेषणं युक्त्या विबोध इति कीर्त्तितः" इति।

(ठ) उदाहरति, यथेति।—संयमयामि—बध्नामि। केशहस्तं—केशसमूहं, ("पाशो हस्तश्च पक्षश्च कलापार्थाः कचात् परे" इत्यमरः)। तपस्विनी—वराकी।

(ड) ग्रथनमाह, उपन्यास इति।—कार्य्याणाम् उपन्यासः,—कीर्त्तनं, ग्रथनम्।

(ढ) उदाहरति, यथेति।—दुःशासनविलुलिता—दुःशासनेन विपर्य्यासिता, आकर्षणेन बन्धनात् च्याविता इत्यर्थः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तिष्ठ, स्वयमेवाहं संहरामि" इति । अनेन कार्य्यस्योपक्षेपाद् ग्रथनम् ।



निर्णयः पुनः ।

अनुभूतार्थकथनम् ॥ ३९९ ॥ (थ)

यथा तत्रैव,—"भीमः। देव! अजातशत्रो!...कुतोऽद्यापि दुर्य्योधनहतकः!!...मया हि तस्य दुरात्मनः पाण्डुकुलपरिभाविणः,—

भूमौ क्षिप्तं शरीरं निहितमिदमसृक्चन्दनं भीमगात्रे
लक्ष्मीरार्य्ये निषिक्ता चतुरुदधिपयःसीमया सार्द्धमुर्व्या ।
भृत्या मित्राणि योधाः कुरुकुलमनुजा दग्धमेतद्रणाग्नौ,
नामैकं यद् ब्रवीषि क्षितिप! तदधुना धार्त्तराष्ट्रस्य शेषम् ॥"(त)

वदन्ति परिभाषणम् ।

परिवादकृतं वाक्यम् ॥ ४०० ॥ (द)

---

(थ) निर्णयमाह, निर्णय इति ।—अनुभूतस्य—भुक्तस्य, कृतस्य इत्यर्थः, अर्थस्य—कार्य्यस्य, कथनं निर्णयः ।

(त) उदाहरति, मया हीति ।—भूमाविति ।—तस्य धार्त्तराष्ट्रस्य—दुर्य्योधनस्य इत्यर्थः, शरीरं भूमौ—पृथिव्यां, क्षिप्तं—पातितं, भूमिसात् कृतमित्यर्थः, इदम् असृक्—रुधिरम्, एव चन्दनं भीमगात्रे—भयङ्करशरीरे, निहितम्—अर्पितम्, चतुर्णाम् उदधीनां—समुद्राणां, पयांसि—जलानि, ("पयो दुग्धं पयस्तोयम्" इति मेदिनी) सीमानो यस्यास्ताहृश्या, उर्व्या,—पृथिव्या, सार्द्धं लक्ष्मीः आर्य्ये—ज्येष्ठे भ्रातरि, भवतीत्यर्थः. निषिक्ता—अर्पिता; (तस्य) भृत्याः,—दासाः, मित्राणि—बान्धवाः, किं बहुना, कुरुकुलेषु ये मनुजाः,—मानवाः, योधाः,—युद्धार्थमुपस्थिता इत्यर्थः, एतत् सर्वं रणाग्नौ—सङ्ग्रामरूपायामग्निज्वालायामित्यर्थः, दग्धं—भस्मीकृतं, निहतमित्यर्थः, हे क्षितिप!—राजन्! यत् एकं नाम, दुर्य्योधनेति शेषः, ब्रवीषि—कथयसि, धार्त्तराष्ट्रस्य—धृतराष्ट्रपुत्रस्य, दुर्य्योधनस्येति यावत्, अधुना तत्—तन्मात्रमेव, शेषं, नामशेषः कृतो धार्त्तराष्ट्र इति भावः । अत्र कृतकार्य्यस्य कथनम् । स्रग्धरा वृत्तम् ।

(द) परिभाषणमाह, वदन्तीति ।—परिवादः,—कुत्सा, तेन कृतं वाक्यं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा शाकुन्तले—"राजा। आर्य्ये! अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी?" तापसी। को तस्य धम्मदारपरिच्चाइणो णामं गेह्णिस्सदि?" (द)

लब्धार्थागमनं कृतिः ॥ ४०१ ॥ (ध)

यथा वेण्यां,—"कृष्णः। एते भगवन्तो व्यासवाल्मीकिप्रभृतयोऽभिषेकं धारयन्तस्तिष्ठन्ति" इति। अनेन प्राप्तराज्यस्याभिषेकमङ्गलैः स्थिरीकरणं कृतिः। (न)

शुश्रूषादिः प्रसादः स्यात् ॥ ४०२ ॥ (प)

यथा तत्रैव,—भीमेन द्रौपद्याः केशसंयमनम्।

आनन्दो वाञ्छितागमः ॥ ४०३ ॥ (फ)

यथा तत्रैव,—"द्रौपदी। बिसुमरिदं एदं वावारं णाधस्स पसादेण पुणो बि सिक्खिस्सं"। (ब)

समयो दुःखनिर्याणम् ॥ ४०४ ॥ (भ)

---

परिभाषणं वदन्ति। उद्योतकारास्तु,—"प्रेम्णा द्वेषाच्छलाद्वाऽपि भाषणं परिभाषणम्" इत्याहुः।

(द) तापसीति।—["कस्तस्य धर्म्मदारपरित्यागिनो नाम ग्रहीष्यति?" इति संस्कृतम्]। अत्र कुत्साजनितवाक्यकथनम्।

(ध) कृतिमाह, लब्धेति।—लब्धस्य—प्राप्तस्य, अर्थस्य—विषयस्य, आगमनं—प्राकाश्येन स्थिरीकरणं, ["लब्धार्थशमनम्" इति पाठे—लब्धैरर्थैः शमनं—शोकादिनाशनमित्यर्थः] कृतिः।

(न) अनेनेति।—स्थिरीकरणं—शोकादिकृताऽस्थैर्य्यादिनाशनमित्यर्थः।

(प) प्रसादमाह, शुश्रूषादिरिति।—शुश्रूषादिः,—सेवादिः, प्रसादः स्यात्।

(फ) आनन्दमाह, आनन्द इति।—वाञ्छितस्य—अभीष्टस्य, आगमः,—तज्जनिता प्रीतिरिति भावः, आनन्दः।

(ब) उदाहरति, यथेति।—["विस्मृतमेतं व्यापारं, नाथस्य प्रसादेन पुनरपि शिक्षिष्ये" इति संस्कृतम्]। एतं व्यापारं—केशबन्धनकार्य्यमित्यर्थः।

(भ) समयमाह, समय इति।—दुःखस्य निर्याणम्—अपगमः, समयः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा रत्नावल्याम् ;—"वासवदत्ता। [ रत्नावलीमालिङ्ग्य ] समस्सस बहीणिए! समस्सस। (म)

तद्भवेदुपगूहनम्।

यत् स्यादद्भुतसम्प्राप्तिः॥ ४०५॥ (य)

यथा मम प्रभावत्याम् ;—नारददर्शनात् "प्रद्युम्नः। [ऊर्द्ध्वमवलोक्य]।—

"दधद्विद्युल्लेखामिव कुसुममालां परिमल-
भ्रमद्भृङ्गश्रेणीध्वनिभिरुपगीतां तत इतः।
दिगन्तं ज्योतिर्भिस्तुहिनकरगौरैर्धवलय-
न्नितः कैलासाद्रिः पतति वियतः किं पुनरिदम्?॥" (र)

सामदानादि भाषणम् ॥४०६॥ (ल)

यथा चण्डकौशिके,—"धर्म्मः। तदेहि, धर्म्मलोकमधितिष्ठ।" (व)

---

(म) समस्ससेति।—["समाश्वसिहि भगिनि! समाश्वसिहि" इति संस्कृतम्]।

(य) उपगूहनमाह, तदिति।—यत् अद्भुतस्य—आश्चर्य्यस्य, सम्प्राप्तिः,—समागमः, तत् उपगूहनं भवेत्।

(र) उदाहरति, यथेति।—दधदिति।—परिमलेन—सौरभेण हेतुना, भ्रमतां—सञ्चरतां, भृङ्गाणां याः श्रेण्यः,—समूहाः, तासां ध्वनिभिः,—गुनगुनरवैः, उपगीतां—शब्दितां, विद्युल्लेखामिव—तड़ित्पुञ्जमिव, कुसुममालां—पुष्पमालां, दधत्—धारयन्, तत इतः,—समन्तात्, तुहिनकरः,—चन्द्रः, तद्वत् गौरैः,—शुभ्रैः, ज्योतिर्भिः,—देहप्रभाभिः, दिगन्तं—दिशां पर्य्यन्तं, धवलयन्—श्वेतीकुर्व्वन्, वियतः,—आकाशात्, इतः,—अस्मिन् प्रदेशे, कैलासाद्रिः पतति? इदं पुनः किम्?—आश्चर्य्यमेतदित्यर्थः। अत्र अद्भुतप्रतिपत्तिः। शिखरिणी वृत्तम्।

(ल) भाषणमाह, सामेति।—साम—प्रियभाषणं, दानादि च, तत् भाषणम्। भरतेनाप्युक्तम् ;—"सामदानादिसम्पन्नं भाषणं समुदाहृतम्" इति।

(व) उदाहरति, यथेति।—स्पष्टम्। अत्र एहीति धर्म्मस्य प्रियवाक्यं, धर्म्मलोकमधितिष्ठ इति धर्म्मलोकस्य दानञ्च।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पूर्ववाक्यन्तु विज्ञेयं यथोक्तार्थोपदर्शनम् ॥४०७॥(अ)

यथा वेण्यां,—"भीमः। बुद्धिमतिके! क्व सा भानुमती? परिभवतु सम्प्रति पाण्डवदारान्।" (ष)

वरप्रदानसम्प्राप्तिः काव्यसंहार इष्यते ॥४०८॥(स)

यथा सर्व्वत्र,—(ह) "किन्ते भूयः प्रियमुपकरोमि?" इति।

नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते ॥४०९॥(क)

यथा प्रभावत्याम्,—

"राजानः सुतनिर्व्विशेषमधुना पश्यन्तु नित्यं प्रजाः
जीयासुः सदसद्विवेकपटवः सन्तो गुणग्राहिणः।
शस्यस्वर्णसमृद्धयः समधिकाः सन्तु क्षमामण्डले
भूयादव्यभिचारिणी त्रिजगतो भक्तिश्च नारायणे॥" (ख)

---

(अ) पूर्व्ववाक्यमाह, पूर्व्ववाक्यमिति।—यथोक्तस्य अर्थस्य उपदर्शनं—समुचितोत्तरदानं, पूर्व्ववाक्यं विज्ञेयम्।

(ष) उदाहरति, यथेति।—भानुमती—दुर्य्योधनपत्नी। पूर्व्वं भानुमत्या पाञ्चालीं प्रति परिहसितम्, इदानीं दुर्य्योधने निहते भीमसेनेन तस्य प्रत्युत्तरमभिहितम्।

(स) काव्यसंहारमाह, वरेति।—वरस्य—अभीष्टस्य, यत् प्रदानं तस्य सम्प्राप्तिः, काव्यस्य संहार इष्यते।

(ह) उदाहरति, यथेति।—सर्व्वत्र—नाटकप्रभृतिषु।

(क) प्रशस्तिमाह, नृपेति।—नृपस्य देशादेश्च, [ अत्रादिपदेन विप्रब्राह्मणादीनां ग्रहणम्]। शान्तिः,—अनिष्टवारणमिष्टप्राप्तिश्च, प्रशस्तिः अभिधीयते। साहित्यकौमुदीकाराः पण्डितराजास्तु,—"प्रशंसनं प्रशस्तिः स्याद् यशसः पृथिवीभृताम्" इत्याहुः।

(ख) उदाहरति, राजान इति।—अधुना—साम्प्रतं, राजानः सुतनिर्व्विशेषं—पुत्रवदित्यर्थः, प्रजाः,—लोकान्, ("प्रजा लोके च सन्ताने" इति मेदिनी) नित्यं—सततं, पश्यन्तु—अवलोकयन्तु, सदसतां विवेके पटवः,—समर्थाः, गुणग्राहिणः सन्तः,—साधवः, जीयासुः,—जययुक्ता भूयासुः; क्षमामण्डले—पृथिवीतले, समधिकाः,—प्रचुराः, शस्यानां स्वर्णानाञ्च समृद्धयः,—सम्पदः, सन्तु—भवन्तु, तथा त्रिजगतः,—



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र च उपसंहारप्रशस्त्योरन्ते एकेन क्रमेणैव स्थितिः। "इह च मुखसन्धौ उपक्षेपपरिकरपरिन्यासयुक्त्युद्भेदसमाधानानां, प्रतिमुखे च परिसर्पणप्रगमनवज्रोपन्यासपुष्पाणां, गर्भे अभूताहरणमार्गत्रोटकाधिबलक्षेपाणां, विमर्षे अपवादशक्तिव्यवसायप्ररोचनादानानां प्राधान्यम्। (ग) अन्येषाञ्च यथासम्भवं स्थितिः" इति केचित्।

**चतुःषष्टिविधं ह्येतदङ्गं प्रोक्तं मनीषिभिः।**
**कुर्य्यादनियते तस्य सन्धावपि निवेशनम्।**
**रसानुगुणतां वीक्ष्य रसस्यैव हि मुख्यता॥४१०॥(घ)**

यथा वेणीसंहारे तृतीयाङ्के,—दुर्य्योधनकर्णयोर्महत् सम्प्रधारणम्; एवमन्यत्रापि। यत्तु रुद्रटादिभिः "नियम एव" इत्युक्तं, तल्लक्ष्यविरुद्धम्। (ङ)

---

त्रिलोक्याः, नारायणे—परमात्मनि, अव्यभिचारिणी—अचला, भक्तिः भूयात्। शार्दूलविक्रीड़ितं वृत्तम्।

(ग) इह चेति।—निर्वहणे चेत्यर्थः। तयोः काव्यसंहार-प्रशस्त्योः "प्राधान्यम्" इत्यग्रेणान्वयः। एवमग्रेऽपि। प्राधान्यख्यापनं तत्तदङ्गानामावश्यकत्वमित्यर्थम्।

(घ) चतुःषष्टिविधमिति।—एतत् चतुःषष्टिविधम् अङ्गं, सन्धेरिति शेषः, मनीषिभिः,—विद्वद्भिः, प्रोक्तम्; (मुखस्य द्वादशावयवाः, प्रतिमुखस्य त्रयोदश, तावन्तः गर्भावयवाः, तावन्तः विमर्षावयवाः, तावन्त एव निर्वहणावयवाः, इति सम्मेलनेन चतुःषष्टिः, इति निर्वहणावयवस्वरूपप्रशस्तिममन्वानाः; प्रशस्तिसत्तां स्वीकुर्व्वन्तस्तु गर्भावयवस्वरूपायाः प्रार्थनाया अनङ्गीकारमाहुः, इत्युभयपक्षेऽपि चतुःषष्टिसङ्ख्या अव्याहता इति)। अनियते—अनिर्द्धारिते, उक्तरीत्या इति भावः, सन्धौ—मुखगर्भाद्यन्यतमसन्धौ, अपि रसानुगुणतां—शृङ्गाराद्यन्यतमरसपोषकत्वं, वीक्ष्य तस्य—चतुःषष्टिविधस्य अङ्गस्य, निवेशनं—समावेशं, कुर्य्यात्; नियताङ्गेऽपि मुखगर्भादिसन्धौ रसानुकूल्यविवेचनया अन्यसन्ध्यङ्गान्यपि निवेशयेदिति भावः; हि—यतः, रसस्यैव मुख्यता—प्राधान्यम्।

(ङ) उदाहरति, यथेति।—सम्प्रधारणं—युक्तिः, सा तु मुखसन्धेरङ्गम्। अन्य-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इष्टार्थरचनाऽऽश्चर्य्यलाभो वृत्तान्तविस्तरः ।
रागप्राप्तिः प्रयोगस्य गोप्यानां गोपनं तथा ॥
प्रकाशनं प्रकाश्यानामङ्गानां षड्विधं फलम् ।
अङ्गहीनो नरो यद्वन्नैवारम्भक्षमो भवेत् ॥
अङ्गहीनं तथा काव्यं न प्रयोगाय युज्यते ।
सम्पादयेतां सन्ध्यङ्गं नायकप्रतिनायकौ ॥
तदभावे पताकाऽऽद्यास्तदभावे तथेतरत् ॥ ४११ ॥ (च)

---

वापि—सन्धौ तद्दर्शनं दृश्यते। नियम इति।—यदङ्गं यस्य, तदङ्गं तस्यैव, नान्यस्य कदाऽपीति नियम इति भावः। लक्ष्यविरुद्धं—महाकवीनां प्रयोगस्य विरुद्धम् ; महाकवीनां निबन्धेषु न नियतं तथा विधानं दृश्यते इति नियमाभिधानं न सङ्गच्छते इति भावः ।

(च) अङ्गानां फलान्याह, इष्टेति ।—अङ्गानां—सन्ध्यङ्गानां, फलं—निवेशप्रयोजनमिति भावः, षड्विधम् । ता एव षड्विधा आह,—इष्टार्थरचना—अभिलषितार्थस्य विधानम्, आश्चर्य्यलाभः,—अलौकिकार्थप्राप्तिः, वृत्तान्तविस्तरः,—इतिवृत्तस्य स्पष्टीकरणं, रागप्राप्तिः,—अनुरागस्य लाभः, प्रयोगस्य—निबन्धस्य, अभिनयप्रेक्षकस्य, वा [प्रेक्षकस्येत्यर्थे (५।२।१२७ पा०) इति अर्श आदित्वादच् ] गोप्यानां—रहस्यार्थानां, गोपनं—गुप्ततया संरक्षणं, तथा प्रकाश्यानां—प्रकटनेनैव चमत्काराधायकानाम्, अङ्गानां प्रकाशनं,—प्रकटनम् इति। ननु अङ्गानामविधाने का हानिः ? इत्याशङ्क्याह,—अङ्गेति ।—अङ्गहीनः,—करचरणादिविकलः, नरः, यद्वत् आरम्भक्षमः,—कार्य्यक्षमः, नैव भवेत्, तथा अङ्गहीनं—मुखगर्भादिसन्धिरूपाङ्गशून्यं, काव्यं प्रयोगाय—व्यवहाराय, अभिनयाय, प्रेक्षकानुरागाय वा ; न युज्यते—न प्रयोगार्हं भवतीत्यर्थः। सन्ध्यङ्गानि केन सम्पादनीयानीत्याशंसायामाह, सम्पादयेतामिति ।—नायकप्रतिनायकौ—नायकः तत्प्रतिद्वन्द्वी च, सन्धेः अङ्गं सम्पादयेतां—प्रयुञ्जीयातां, प्रायस्तु तत्रापि नायक एवेति बोध्यम्। ननु यदि सन्ध्यङ्गनिवेशो न सम्पद्येत, तदा किं कार्य्यमित्याह, तदिति ।—तस्य—सन्ध्यङ्गस्य, अभावे—अनिवेशे, पताकाद्याः,—अर्थप्रकृतीः, पताकाप्रकर्य्यादीनि अङ्गानीति यावत्, सम्पादयेताम् ; तदभावे—पताकाद्यभावे, इतरत्—अन्यत्, बीजमिति यावत्, सम्पादयेतामित्यन्वयः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रायेण प्रधानपुरुषप्रयोज्यानि सन्ध्यङ्गानि भवन्ति । किन्तु उपक्षेपादित्रयं (छ) बीजस्याल्पमात्रसमुद्दिष्टत्वात् अप्रधानपुरुषप्रयोजितमेव साधु ।

**रसव्यक्तिमपेक्ष्यैषामङ्गानां सन्निवेशनम् ।**

**न तु केवलया शास्त्रस्थितिसम्पादनेच्छया ॥ ४१२ ॥ (ज)**

तथा च,—यद्वेण्यां दुर्य्योधनस्य भानुमत्या सह विप्रलम्भः दर्शितः, तत् तादृशेऽवसरेऽत्यन्तमनुचितम् । (झ)

**अविरुद्धन्तु यद्वृत्तं रसादिव्यक्तयेऽधिकम् ।**

**तदप्यन्यथयेद् धीमान् न वदेद्वा कदाचन ॥ ४१३ ॥ (ञ)**

अनयोरुदाहरणं सत्प्रबन्धेषु अभिव्यक्तमेव । (ट)

---

(छ) प्रायेण इत्यस्य व्यावृत्तिमाह, किन्त्विति ।—उपक्षेपादीति ।—[अत्रादिपदेन परिकरपरिन्यासयोर्ग्रहणम् ] ।

(ज) रसेति ।—रसव्यक्तिं—रसस्य प्रकटतामपेक्ष्य, एषाम् अङ्गानां सन्निवेशनं—प्रयोगः, कार्य्यमिति शेषः, न तु—न पुनः, केवलया शास्त्रस्थितिसम्पादनेच्छया, सन्निवेशनमिति शेषः, रसव्यक्तिर्भवतु, न वा भवतु, शास्त्रमर्य्यादारक्षणार्थमेव नैषां प्रयोगार्हतेति भावः । तथोक्तं मुनिना,—"सन्धिसन्ध्यङ्गघटनं रसादिव्यक्त्यपेक्षया । न तु केवलया शास्त्रस्थितिसम्पादनेच्छया ॥" इति ।

(झ) भानुमत्येति ।—भानुमत्या—तन्नाम्न्या स्वपत्न्या सह, विप्रलम्भः,—शृङ्गाररसभेदः । तादृशे—तथा प्रवर्त्तमाने सङ्ग्रामे, अनुचितं—न युक्तं, वीरस्यैव तदानीं युक्तत्वादिति भावः ।

(ञ) अविरुद्धमिति ।—धीमान्—अभिनेता जनः, अविरुद्धम्—अनुकूलम्, रसाद्युपकारकतयोपादेयमिति यावत्, यत् वृत्तं—चरितं, रसादीनां व्यक्तये—प्रकाशाय, तदपि अधिकं यथा तथा अन्यथयेत्—विपर्य्यासयेत्, अन्यथा कुर्य्यात् इति यावत्, वा—यद्वा, कदाचन न वदेत् । रसगङ्गाधरस्याभिनवगुप्तकृतायां मर्म्मप्रकाशव्याख्यायामुक्तम्,—"अविरुद्धं रसादीनामधिकं नापि वर्णयेत् । विपरीतन्तु सङ्क्षिप्य विस्तरेण न च क्वचित् ॥" इत्यादि ।

(ट) अनयोरिति ।—अनयोः,—अन्यथाकरणाकरणयोः, उदाहरणं सत्प्रबन्धेषु—महाकाव्येषु, अभिव्यक्तं—स्पष्टम् एव ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ वृत्तयः,—

शृङ्गारे कौशिकी वीरे सात्त्वत्यारभटी पुनः ।
रसे रौद्रे च बीभत्से वृत्तिः सर्व्वत्र भारती ॥
चतस्रो वृत्तयो ह्येताः सर्व्वनाट्यस्य मातृकाः ॥४१४॥(ट)
स्युर्नायकादिव्यापारविशेषा नाटकादिषु ॥४१५॥(ड)

तत्र कौशिकी, (ढ)—

या श्लक्ष्णनेपथ्यविशेषचित्रा
स्त्रीसङ्कुला पुष्कलनृत्यगीता ।
कामोपभोगप्रभवोपचारा
सा कौशिकी चारुविलासयुक्ता ॥४१६॥ (ण)

---

(ट) नाटकवृत्तीराह, अथेति ।—वृत्तयः,—वर्त्तन्ते रस आभिरिति तथोक्ताः, नायकादिचेष्टा इति यावत् । ता वृत्तयः चतस्रः,—चतुर्व्विधाः । अथासामुपयोगस्थान-निर्द्देशपूर्व्वकं नामानि निर्द्दिशति,—शृङ्गारे कौशिकी, वीरे सात्त्वती, रौद्रे बीभत्से च रसे पुनः आरभटी । सर्व्वत्र—एतद्व्यतिरिक्ते, भारती ; एताः चतस्रः वृत्तयः सर्व-नाट्यस्य मातृकाः,—जनन्यः । एतासामन्यतरया यथोक्तया यथोक्तरूपाणि नाटकानि रचयितव्यानीति भावः । व्यक्तिविवेककारास्त्वाहुः,—"कौशिक्यारभटी चैव सात्त्वती भारती तथा । वृत्तयः स्युश्चतस्रस्ता नाट्यशास्त्रस्य मातृकाः । शृङ्गारे कौशिकी रौद्रे रसे त्वारभटी पुनः । वीरे स्यात् सात्त्वती वृत्तिः भारती तु समन्ततः ॥ न तस्या रस-निर्देशः सर्व्वत्र यदसौ मता । शृङ्गारे वाऽपि हास्ये वा रौद्रे वीरेऽपि वा बुधैः ॥" इति ।

(ड) तासां स्वरूपमाह, स्युरिति ।—नाटकादिषु—नाटकप्रकरणभाणादिषु रूपकेषु, नाटिकाऽऽदिषूपरूपकेषु चेत्यर्थः, नायकादीनाम्, [ आदिपदेन नायिकादे-र्ग्रहणं ] व्यापारविशेषाः,—चेष्टाभेदाः, वृत्तय इति शेषः, स्युः,—भवेयुः ।

(ढ) तत्रेति ।—तत्र प्रसिद्धा इति शेषः, [ इयञ्च सामोद्भवा, तथाहि भरतः,— "ऋग्वेदाद् भारती वृत्तिर्यजुर्वेदात् तु सात्त्वती । कौशिकी सामवेदात् तु शेषा चाथर्वणी तथा ॥" इति ।

(ण) कौशिकीमाह, येति ।—या श्लक्ष्णेन—मनोहरेण, नेपथ्यविशेषेण—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नर्म च नर्मस्फूर्जो नर्मस्फोटोऽथ नर्मगर्भश्च ।
चत्वार्य्यङ्गान्यस्याः ॥ ४१७ ॥ (त)

तत्र,—

वैदग्ध्यक्रीड़ितं नर्म ।
इष्टजनावर्ज्जनकृत् ॥ ४१८ ॥ (थ)

तच्चापि त्रिविधं मतम् ।
विहितं शुद्धहास्येन सशृङ्गारभयेन च ॥४१९॥ (द)

तत्र केवलहास्येन विहितं यथा रत्नावल्यां,—"वासवदत्ता ।

---

नायिकादीनां भूषणविशेषेण, चित्रा—मनोज्ञा, शोभाऽतिशयवतीत्यर्थः, स्त्रीसङ्कुला—नारीभूयिष्ठा, पुष्कलनृत्यगीता—पुष्कलानि—प्रचुराणि, नृत्यगीतानि—नृत्यानि गानानि चेत्यर्थः, यस्यां तादृशी, कामोपभोगप्रभवोपचारा—कामोपभोगः,—शृङ्गारः, तस्य प्रभवः,—उत्पत्तिर्येभ्यः, एवंविधाः उपचाराः,—प्रयोज्यपदार्थाः, अङ्गानि इति यावत्, यस्याः तादृशी, तथा चारुविलासयुक्ता—चारुभिः,—मनोरमैः, विलासैः,—मुखनेत्रगत्यादिचेष्टाविशेषव्यञ्जकवाक्यैः इत्यर्थः, युक्ता च, सा वृत्तिः कौशिकी ।

(त) एवमस्याः स्वरूपमभिधाय विशेषजिज्ञासायां भेदानाह, नर्म्मेति ।—अस्याः,—कौशिक्याः, चत्वारि अङ्गानि—भेदाः;—नर्म्म, नर्म्मस्फूर्जः, नर्म्मस्फोटः तथा नर्म्मगर्भः इति ।

(थ) नर्म्माह, वैदग्ध्येति ।—इष्टजनानां—सामाजिकानाम्, आवर्जनकृत्—आह्लादकारि, मनोरञ्जकमिति यावत्, वैदग्ध्येन—चातुर्य्येण, क्रीड़ितं—क्रीड़नं, [ भावे क्तप्रत्ययः ] नर्म्म ।

(द) तस्य भेदानाह, तच्चेति ।—तच्चापि—निरुक्तमपि, कौशिक्या वृत्तेः नर्म्मनामकमङ्गमिति यावत्, त्रिविधं मतम्;—शुद्धहास्यविहितं, सशृङ्गारहास्यविहितं, सभयहास्यविहितञ्चेति । काव्यप्रदीपकारास्त्वाहुः,—"रहस्यार्थस्य कथनं क्रीड़ितव्यपदेशतः । नर्म्मेति गदितं तस्य त्रयो भेदाः पुनः स्मृताः ॥ प्रेमपात्रं कोपपात्रं प्रेमकोपास्पदं तथा ॥" इति । व्यक्तिविवेककारेण तु,—"औदासीन्याश्रयं नर्म्म चतुर्थमपि दृश्यते" इत्यप्युक्तम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

[फलकमुद्दिश्य सहासम्] एसा वि अवरा तव समीवे जधा लिहिदा, एदं किं अज्जवसंतस्स विसाणं ?" (ध)

सशृङ्गारहास्येन यथा शाकुन्तले,—[ "राजानं प्रति शकुन्तला ] असंतुट्टो उण किं करिस्सदि ? राजा। इदम्। [इति व्यवसितः। शकुन्तला वक्त्रं ढौकते" ]। (न)

सभयहास्येन यथा रत्नावल्याम् आलेख्यदर्शनावसरे,—"सुसङ्गता। जादो मए एसो वुत्तंतो समं चित्तफलएण। ता देवीए गदुअ णिवेदइस्सं" एतद्वाक्यसम्बन्धि नर्मोदाहृतम्। एवं वेषचेष्टासम्बन्ध्यपि। (प)

नर्मस्फूर्जः सुखारम्भो भयान्तो नवसङ्गमः॥४२०॥(फ)

यथा मालविकायां सङ्केतं सायमभिसृतायाम्,—"राजा,—

विसृज सुन्दरि ! सङ्गमसाध्वसं

तव चिरात् प्रभृति प्रणयोन्मुखे।

---

(ध) रत्नावल्यामिति।—[ "एषाऽप्यपरा तव समीपे यथा लिखिता, इदं किमार्य्यवसन्तकस्य विज्ञानम् ?" इति संस्कृतम् ]। वासवदत्ता—वत्सराजस्य महाराज्ञी।

(न) शकुन्तलेति।—["असन्तुष्टः पुनः किं करिष्यति ?" इति संस्कृतम् ]। असन्तुष्टो मधुकर इति पूर्वोक्तेनान्वयः। व्यवसितः,—प्रवृत्तः इत्यर्थः, उद्यत इति यावत्, चुम्बितुमिति शेषः। ढौकते—अपसारयति, आच्छादयति वा।

(प) सुसङ्गतेति।—["ज्ञातो मया एष वृत्तान्तः समं चित्रफलकेन, तत् देव्यै गत्वा निवेदयिष्यामि" इति संस्कृतम् ]। वेशसम्बन्धिसभयहास्यकृतं नर्म यथा,—"सुसङ्गता। [ दृष्ट्वा विहस्य ] अयि कातरे ! मा बिभीहि, न खल्वेष वानरः, आर्य्यवसन्तकः खल्वेषः"।

(फ) नर्मस्फूर्जमाह, नर्मस्फूर्ज इति।—सुखारम्भः,—प्रथमसुखकरः, भयान्तः,—भयावसानः, नवः सङ्गमः नर्मस्फूर्जः,—नर्म्मणः,—परिहासस्य, स्फूर्जः,—भयावहः शब्दः, लक्षणया तादृशाभिनयवर्णनमिति यावत्। मुनिनाऽप्युक्तं,—"नवसङ्गमसम्भोगो रतिसमुदयवेषवाक्यसंयुक्तः। ज्ञेयो नर्मस्फूर्जो ह्यवसानभयात्मकश्चैव॥" इति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

परिग्रहाण गते सहकारतां
त्वमतिमुक्तलताचरितं मयि ॥ (ब)

मालविका। देवीए भएण अप्पणो वि पिअं कादुं ण पारेमि" (भ) इत्यादि।

अथ नर्मस्फोटः,—

नर्मस्फोटो भावलेशैः सूचितोऽल्परसो मतः ॥४२१॥(म)

यथा मालतीमाधवे,—

"गमनमलसं, शून्या दृष्टिः, शरीरमसौष्ठवं,
श्वसितमधिकं, किं न्वेतत्? स्यात् किमन्यदितोऽथवा।
भ्रमति भुवने कन्दर्पाज्ञा, विकारि च यौवनं,
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥" (य)

---

(ब) उदाहरति, विसृजेति।—हे सुन्दरि! सङ्गमे साध्वसं—भयं, विसृज—त्यज, चिरात् प्रभृति तव प्रणयोन्मुखे—प्रणयार्थिनि, अत एव सहकारताम्—अत्यन्तसुगन्धशालिरसालभावं, गते—प्राप्ते, मयि, नायके इति शेषः, त्वम् अतिमुक्तलतायाः,—[शौक्ल्यान्मुक्ताम् अतिक्रान्ता इति अतिमुक्ता, सा चाऽसौ लता च तस्याः] माधवीलतायाः, ("अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवीलता" इत्यमरः) चरितं परिग्रहाण; यथा अतिमुक्तलता सहकारमालिङ्गति, तथा त्वं मामालिङ्गेति भावः। द्रुतविलम्बितं वृत्तं, "द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात्।

(भ) मालविकेति।—["देव्या भयेनात्मनोऽपि प्रियं कर्त्तुं न पारयामि" इति संस्कृतम्]।

(म) नर्मस्फोटमाह, नर्मस्फोट इति।—भावलेशैः,—ईषत्सूचितैः भावैरित्यर्थः, सूचितः,—प्रकाशितः, अत एव अल्परसः,—मनाक् प्रतीयमानो स्वादात्मकः शृङ्गारः, ["सूचिताल्परसः" इति पाठान्तरे—अल्पं सूचितः सूचिताल्पः, रसः,—शृङ्गारो यत्र तादृशः] नर्मस्फोटो मतः। मुनिनाऽप्युक्तम्;—"विविधानां भावानां लवैर्लवैर्भूषितो बहुविशेषैः। असमग्राक्षिप्तरसो नर्मस्फोटस्तु विज्ञेयः॥" इति।

(य) उदाहरति, गमनमिति।—माधवस्य पूर्व्वरागविप्रलम्भवर्णनमिदम्। गमनम् अलसम्—आलस्ययुक्तं, मन्दमित्यर्थः, दृष्टिः,—दृष्टिपातः, शून्या—नावहिता कुत्रापि पततीति भावः, शरीरम् असौष्ठवं—सौष्ठवरहितम्, आहार्य्यशोभादिवर्जनात्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अलसगमनादिभिर्भावलेशैर्माधवस्य मालत्यामनुरागः स्तोकः प्रकाशितः ।

**नर्मगर्भो व्यवहृतिर्नेतुः प्रच्छन्नवर्त्तिनः ॥ ४२२ ॥(र)**

यथा तत्रैव,—सखीरूपधारिणा माधवेन मालत्या मरणव्यवसायवारणम् ।

अथ सात्त्वती,—

**सात्त्वती बहुला सत्त्वशौर्य्यत्यागदयाऽऽर्जवैः ।**
**सहर्षा क्षुद्रशृङ्गारा विशोका साद्भुता तथा॥४२३॥(ल)**

---

गलाद्यपनयनाभावाच्च अरमणीयम् इति भावः, श्वसितं—निश्वासः, अधिकं—दीर्घमित्यर्थः, एतत्—अलसगमनादिकं सर्व्वं, किं नु—किं खलु? अथवा इतः,—अस्मात्, अन्यत्—भिन्नं, किं स्यात्? भुवने—जगति, कन्दर्पस्य आज्ञा समति, यौवनञ्च विकारि—[ विकरोति—विकृतं करोति, इत्येवं शीलमिति तथोक्तं, न तु विकारोऽस्यास्तीति, अस्मिन्नस्तीति वेति तथोक्तमिति वाच्यम् ; तथा सति वक्तव्यस्वारस्यानुदयः ] चित्तविकारकारणं, ते ते ललितमधुराः,—ललितेन—"वाग्वेषयोः मधुरता तद्वत् शृङ्गारचेष्टितं ललितम्" इति लक्षणोक्तेन भावविशेषेण, मधुराः,—अतिमनोहराः, भावाः,—प्रकाराः, धीरतां—धैर्य्यं, क्षिपन्ति—च्यावयन्ति च । हरिणी वृत्तम्।

(र) नर्मगर्भमाह, नर्मगर्भ इति ।—प्रच्छन्नवर्त्तिनः,—गूढ़चारिणः, नेतुः,—नायकस्य, व्यवहृतिः,—व्यवहारः, नर्मगर्भः,—नर्म—क्रीड़ायां रहस्यार्थकथनं, गर्भे यस्य तथोक्तः ।

(ल) सात्त्वतीमाह, अथेति ।—सत्त्वेन—महानुभावतया, शौर्य्येण—बलेन, त्यागेन—दानशक्त्या, दयया आर्जवेन च बहुला—पूर्णा, सहर्षा—सानन्दा, क्षुद्रशृङ्गारा—अल्पशृङ्गारभावा, विशोका—शोकरहिता, तथा साद्भुता—सचमत्कारा, वृत्तिः इति शेषः, सात्त्वती । एषा परिष्कृत्य यथोक्ता मुनिना,—"या सात्त्वजेनेह गुणेन युक्ता न्यायेन वृत्तेन समन्विता च । हर्षोत्कटा संहृतशोकभावा सा सात्त्वती नाम भवेत् तु वृत्तिः ॥ वागङ्गाभिनयवती सत्त्वोत्थानवचनप्रकरणेषु । सत्त्वाधिकारयुक्ता विज्ञेया सात्त्वती वृत्तिः ॥ वीराद्भुतरौद्ररसा निरस्तशृङ्गारकरुणनिर्वेदा । उद्धतपुरुषप्राया परस्पराधर्षणकृता च ॥" इति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उत्थापकोऽथ सङ्घात्यः संलापः परिवर्त्तकः।
विशेषा इति चत्वारः सात्त्वत्याः परिकीर्त्तिताः॥४२४॥(व)
उत्तेजनकरी शत्रोर्वागुत्थापक उच्यते ॥ ४२५ ॥(श)

यथा वीरचरिते पञ्चमाङ्के,—

"आनन्दाय च विस्मयाय च मया दृष्टोऽसि दुःखाय वा
वैतृष्ण्यन्तु ममापि सम्प्रति कुतस्त्वद्दर्शने चक्षुषः ?।
त्वत्साङ्गत्यसुखस्य नास्मि विषयस्तत् किं वृथा व्याहृतैः ?
अस्मिन् विश्रुतजामदग्न्यदमने पाणौ धनुर्जृम्भताम् ॥" (ष)

(व) एवं स्वरूपतो निर्दिश्य अस्या भेदानाह, उत्थापक इति।—तस्याश्चत्वारो विशेषाः,—भेदाः ;—उत्थापकः, सङ्घात्यः, संलापः, परिवर्त्तकश्च।

(श) उत्थापकमाह, उत्तेजनकरीति।—शत्रोः,—प्रतिनायकस्य, उत्तेजनकरी—क्रोधोद्दीपनी, उत्साहातिशय्यप्रवर्त्तिनी इति यावत्, वाक् उत्थापकः,—उत्थापयति—प्रथमं निवर्त्त्य युद्धार्थमुद्योजयति शत्रुं योऽभिनयः स तथोक्तः, उपचारात् तत्प्रयोजिका वागपीति यावत्, उच्यते। अयमेव विशिष्याभिहितो मुनिना,—"अहमप्युत्थास्यामि त्वं तावद्दर्शयात्मनः शक्तिम्। इति सङ्घर्षसमाश्रयमुत्थितमुत्थापको ज्ञेयः॥" इति।

(ष) उदाहरति, आनन्दायेति।—श्रीरामं प्रति वालिन उक्तिरियम्। आनन्दाय—प्रीतये, विस्मयाय—लोकोत्तरचरितरूपदर्शनजनितचमत्काराय, वा—पक्षान्तरे, दुःखाय—एतादृशोऽपि हन्तव्य इति विषादायेत्यर्थः, सम्प्रति मया दृष्टोऽसि, तु—किन्तु, तव दर्शने मम चक्षुषः वैतृष्ण्यमपि—तृष्णाऽभावोऽपि, तृप्तिरपीति यावत्, कुतः ?—नैव तृप्तिरस्तीत्यर्थः, पुनः पुनस्तव दर्शनेच्छा मम वर्त्तते इति भावः। त्वत्साङ्गत्यसुखस्य—तव साङ्गत्यं—सङ्ग इत्यर्थः, [ सङ्गतिरेव साङ्गत्यम्, अत्र स्वार्थे यण् ] तेन यत् सुखं—प्रमोदः, तस्य विषयः,—पात्रं, न अस्मि—अहं तव मैत्रीसुखभाजनं न इति भावः ; तत्—तस्मात् हेतोः, वृथा—निरर्थकैरित्यर्थः, व्याहृतैः,—भाषितैः, किम् ?—न किमपि प्रयोजनमित्यर्थः, अस्मिन् विश्रुतं—प्रसिद्धं, प्रख्यातमित्यर्थः, जामदग्न्यस्य—भार्गवस्य, दमनं येन तादृशे, [ "विश्रुतजामदग्न्यविजये" इति पाठस्तु चिन्त्यः ] पाणौ धनुः,—शरासनं, जृम्भतां—राजताम् ; धनुर्गृहाणेति भावः। शार्दूलविक्रीडितं वृत्तम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मन्त्रार्थदैवशक्त्यादेः सङ्घात्यः सङ्घभेदनम् ॥४२६॥(स)

मन्त्रशक्त्या यथा मुद्राराक्षसे,—राक्षससहायानां चाणक्येन स्वबुद्ध्या भेदनम्। अर्थशक्त्यापि तत्रैव। दैवशक्त्या यथा रामायणे,—रावणाद् विभीषणस्य भेदः।

संलापः स्याद्गभीरोक्तिर्नानाभावसमाश्रया ॥४२७॥(ह)

यथा वीरचरिते,—"रामः। अयं सः, यः किल पुरा सपरिवारकार्त्तिकेयविजयावर्जितेन भगवता नीललोहितेन परिवत्सरसहस्रान्तेवासिने तुभ्यं प्रसादीकृतः परशुः। परशुरामः। राम! दाशरथे! स एवायमाचार्य्यपादानां प्रियः परशुः" इत्यादि।(क)

प्रारब्धादन्यकार्य्याणां करणं परिवर्त्तकः ॥४२८॥(ख)

यथा वेण्यां,—"भीमः। सहदेव! गच्छ त्वं, गुरुमनुवर्त्तस्व, अहमप्यस्त्रागारं प्रविश्यायुधसहायो भवामीति यावत्, अथवा आमन्त्रयितव्यैव मया पाञ्चाली" इति। (ग)

---

(स) सङ्घात्यमाह, मन्त्रेति।—मन्त्रः,—मन्त्रणाबलम्, अर्थः,—धनं, दैवशक्तिः,—दैवी क्षमता, [आदिपदेन कौशलादिग्रहणम्] एतस्मात् कारणात्, सङ्घस्य—समवायस्य, भेदनं—पृथक्करणं, सङ्घात्यः। तथोक्तं भरतमुनिना,—"मन्त्रार्थवाक्ययुक्त्या दैववशादात्मदोषयोगाद्वा। सङ्घातभेदजननस्तज्ज्ञैः सङ्घात्यको ज्ञेयः॥" इति।

(ह) संलापमाह, संलाप इति।—नानाभावानां—नानाविषयाणां, समाश्रया—आश्रयरूपा, गभीरा—अर्थगुर्व्वी, उक्तिः, संलापः स्यात्।

(क) उदाहरति, यथेति।—सपरिवारेति।—सपरिवारस्य—सानुचरस्य, कार्त्तिकेयस्य विजयेन, परशुरामकर्त्तृकेणेति भावः, आवर्जितः,—वशीकृतः, प्रीणित इत्यर्थः, तेन, भगवता—अणिमाऽऽद्यैश्वर्य्यशालिना, नीललोहितेन—महादेवेन, ("धूर्जटिर्नीललोहितः" इत्यमरः) प्रसादीकृतः,—दत्तः। स्पष्टमन्यत्। अत्र देवविषयरतियुक्तेन वीररसस्य समाश्रयेण उक्तेर्गभीरता।

(ख) परिवर्त्तकमाह, प्रारब्धादिति।—प्रारब्धात्—कर्त्तुमुपक्रान्तात् कार्य्यात्, अन्यकार्य्याणां—तद्भिन्नानां कार्य्याणामित्यर्थः, करणं—विधानं, परिवर्त्तकः।

(ग) उदाहरति, यथेति।—गुरुं—युधिष्ठिरम्, अनुवर्त्तस्व—सेवस्व। अन्यत्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथारभटी,—

मायेन्द्रजालसङ्ग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।
संयुक्ता बधबन्धाद्यैरुद्धताऽऽरभटी मता ॥४२९॥ (घ)
वस्तूत्थापनसम्फेटौ सङ्क्षिप्तिरवपातनम् ।
इति भेदास्तु चत्वार आरभट्याः प्रकीर्त्तिताः॥४३०॥(ङ)
मायाद्युत्थापितं वस्तु वस्तूत्थापनमुच्यते ॥४३१॥ (च)

यथा उदात्तराघवे,—

"जीयन्ते जयिनो नितान्ततिमिरव्रातैर्वियद्व्यापिभि-
र्भास्वन्तः सकला रवेरपि कराः कस्मादकस्मादमी ? ।
एते चोग्रकबन्धकण्ठरुधिरैराध्मायमानोदराः
मुञ्चन्त्याननकन्दरानलमुचस्तीव्रान् रवान् फेरवाः ॥"इत्यादि(छ)

---

स्पष्टम् । अत्र आयुधागारप्रवेशरूपात् आरम्भात् पाञ्चालीसमानयनरूपस्य अन्यकार्य्यस्य करणम् ।

(घ) आरभटीमाह, मायेति ।—माया—छलविशेषः, इन्द्रजालम्—अद्भुतप्रदर्शकविद्याविशेषः, ("असतो वस्तुनो माया सद्रूपोद्भावना तथा ।" इति "इन्द्रजालं स्थितार्थस्य मन्त्रचूर्णौषधादिभिः । अदर्शनमपारोक्ष्यमन्यथाकृतिरुच्यते ॥" इति चोक्तरूपे मायेन्द्रजाले इति सारः ) सङ्ग्रामः,—युद्धं, क्रोधेन उद्भ्रान्तत्वादि, इत्येवं चेष्टितैः,—व्यापारैः, तथा बधबन्धनाद्यैश्च संयुक्ता उद्धता—दारुणा, वृत्तिः इति शेषः, आरभटी ।

(ङ) तद्भेदानाह, वस्त्वित्यादि ।—वस्तूत्थापनं, सम्फेटः, सङ्क्षिप्तिः, अवपातनं च इत्येते चत्वारः आरभट्याः भेदाः प्रकीर्त्तिताः ।

(च) तत्र वस्तूत्थापनमाह, मायेति ।—मायादिना [ आदिना तपःप्रभावादेर्ग्रहणम् ] उत्थापितं वस्तु, वस्तूत्थापनम् उच्यते ।

(छ) उदाहरति, जीयन्त इति ।—अमी—प्रत्यक्षीभूताः, जयिनः,—सर्वोत्कर्षशालिनः, भास्वन्तः,—दीप्यमानाः, सकलाः,—समग्राः, रवेः,—सूर्य्यस्य, कराः,—मयूखाः, अपि कस्मात्—कथम्, अकस्मात्—सहसा, वियद्व्यापिभिः,—गगनाच्छादिभिः, नितान्ततिमिरव्रातैः,—गाढान्धकारनिचयैः, जीयन्ते ?—पराभूयन्ते ? आच्छाद्यन्ते इत्यर्थः ; एते च फेरवाः,—"फे" इत्यव्यक्तो रवो येषां ते तथोक्ताः, शृगालाः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**सम्फेटस्तु समाघातः क्रुद्धसत्वरयोर्द्वयोः ॥४३२॥(ज)**

यथा मालत्यां,—माधवाघोरघण्टयोः ।

**सङ्क्षिप्ता वस्तुरचना शिल्पैरितरथाऽपि वा ।**

**सङ्क्षिप्तिः स्यान्निवृत्तौ च नेतुर्नेत्रन्तरग्रहः ॥४३३॥ (झ)**

यथा उदयनचरिते,—किलिञ्जहस्तिप्रयोगः । द्वितीयं यथा,—बालिनिवृत्त्या सुग्रीवः । यथा वा,—परशुरामस्यौद्धत्यनिवृत्त्या शान्तत्वापादनं, "पुण्या ब्राह्मणजातिः" इति । (ञ)

---

इत्यर्थः, ["फेरवः" इति पाठान्तरेऽप्ययमेवार्थः । अस्मिन् पक्षे फेरुशब्दः, "फे" इत्यव्यक्तं रौतीति फेरुः । "रु" शब्दे, ततो डुः] उग्राणां—भीषणानां, कबन्धानाम्—अशिरस्ककलेवराणां, ("कबन्धोऽस्त्री क्रियायुक्तव्यपमूर्द्धकलेवरे" इति मेदिनी ) कण्ठरुधिरैः आध्मायमानं—पूर्य्यमाणम्, अथवा ईषद्दह्यमानम्, उदरं येषां तादृशाः, तथा आननं—मुखम्, एव कन्दरा—गुहा, गर्त्तविशेष इत्यर्थः, तस्याः अनलम्—अग्निं, मुञ्चन्ति—त्यजन्ति इति तथोक्ताः, उल्कामुखा इत्यर्थः,सन्तः, तीव्रान्—उग्रान्, रवान्, मुञ्चन्ति—त्यजन्ति, कठोरं शब्दायन्ते इत्यर्थः । अत्र मायया अन्धकारकबन्धादीनां वस्तूनाम् उत्थापनम् । शार्दूलविक्रीड़ितं वृत्तम् । इन्द्रजालोत्थापितं वस्तु यथा,—"एष ब्रह्मा सरोजे रजनिकरकलाशेखरः शङ्करोऽयं, दोर्भिर्दैत्यान्तकोऽसौ सधनुरसिगदाचक्रचिह्नैश्चतुर्भिः । एषोऽप्यैरावतस्थस्त्रिदशपतिरमी देवि ! देवास्तथाऽन्ये नृत्यन्ति व्योम्नि चैताश्चलचरणरणन्नूपुरा दिव्यनार्य्यः ॥" इन्द्रजालोत्थापितवस्तुकथनमात्रमेवेदं, नारभटीभेदः, रौद्रवीभत्सान्यतरसूचकत्वाभावात् ।

(ज) सम्फेटमाह, सम्फेट इति ।—क्रुद्धसत्वरयोः,—क्रुद्धस्य शीघ्रं कार्य्यकारिणश्च, समाघातः,—सम्यक् प्रहारः, सम्फेटः ।

(झ) सङ्क्षिप्तिमाह, सङ्क्षिप्तेति ।—शिल्पैः इतरथाऽपि—शिल्पेतरेणापि, सङ्क्षिप्ता वस्तूनां रचना सङ्क्षिप्तिः ; च—किञ्च, नेतुः,—नायकस्य, निवृत्तौ, स्वव्यापारात् इति भावः, नेत्रन्तरस्य—अन्यनायकस्य, ग्रहः,—ग्रहणमित्यर्थः, सङ्क्षिप्तिः ।

(ञ) उदाहरति, यथेति ।—किलिञ्जहस्तिप्रयोगः,—काष्ठनिर्म्मितहस्तिप्रयोगः, अत्र शिल्पेन रचना । नेत्रन्तरत्वं व्यक्तिभेदाद्धर्म्मभेदाच्च भवति ; व्यक्तिभेदात् यथा,—बालि-इत्यादि । धर्म्मभेदान्नेत्रन्तरत्वमाह,—यथा परशुरामस्य औद्धत्यस्य—उद्धत-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रवेशत्रासनिष्क्रान्तिहर्षविद्रवसम्भवम् ।
अवपातनमित्युक्तम् ॥ ४३४ ॥ (ट)

यथा कृत्यरावणे षष्ठेऽङ्के,—"[ प्रविश्य खड्गहस्तः पुरुषः ]" इत्यतः प्रभृति निष्क्रमणपर्य्यन्तम् ।

पूर्व्वमुक्तैव भारती ॥ ४३५ ॥ (ठ)

अथ नाट्योक्तयः,—

अश्राव्यं खलु यद् वस्तु तदिह स्वगतं मतम् ।
सर्व्वश्राव्यं प्रकाशं स्यात्, तद्भवेदपवारितम् ।
रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते ॥
त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम् ।
अन्योऽन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम् ॥
किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते ।
श्रुत्वेवानुक्तमप्यर्थं तत् स्यादाकाशभाषितम् ॥ ४३६ ॥(ड)

स्वभावस्य, निवृत्त्या—अपगमेन, शान्तत्वस्य आपादनं—ग्रहणं, तद्वचनं निर्दिशति, पुण्या इति । महावीरचरिते स्पष्टमिदम् ।

(ट) अवपातनमाह, प्रवेशेति ।—विद्रवः,—पलायनम् । प्रवेशादिसम्भवं वस्तु अवपातनमित्यर्थः ।

(ठ) पूर्व्वमिति ।—पूर्व्वं—स्थापककर्त्तव्यकथनावसरे, भारती—तदाख्या वृत्तिः ।

(ड) नाट्योक्तीराह, अश्राव्यमिति ।—अश्राव्यम्—पात्रान्तरैः श्रोतुमनर्हमित्यर्थः । अन्यस्य परावृत्य—पश्चात् कृत्वा, पराङ्मुखीभूय वा स्थानान्तरं गत्वा वा, यत् रहस्यं—गुप्तं वस्तु, प्रकाश्यते—कथ्यते, तत् अपवारितं भवेत् । जनान्ते—जनः समीपे, तिस्रः पताकाः यस्य तादृशेन, उत्क्षिप्ताङ्गुलित्रयेणेत्यर्थः, करेण अन्यान् जनान् अपवार्य्य—आच्छाद्य, कथाम् अन्तरा—कथामध्ये, यत् अन्योऽन्यामन्त्रणं—परस्परं गुह्यालापः, स्यात्, तत् जनान्तिकम् । नाट्ये पात्रं—व्यक्तिं, वक्तृनटमित्यर्थः, विना

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यः कश्चिदर्थो यस्मात् गोपनीयः, तस्यान्तरत ऊर्द्धसर्व्वाङ्गुलि नामितानामिकं त्रिपताकलक्षणं करं कृत्वा अन्येन सह यन्मन्त्रयते, तत् जनान्तिकम्। परावृत्त्याऽन्यस्य रहस्यकथनमपवारितम् । शेषं स्पष्टम् ।

दत्ता सिद्धाश्च सेनाश्च वेश्यानां नाम दर्शयेत् ।
दत्तप्रायाणि बणिजां चेटचेट्योस्तथा पुनः ।
वसन्तादिषु वर्ण्यस्य वस्तुनो नाम यद्भवेत् ॥४३७॥ (ढ)

वेश्या यथा,—वसन्तसेनादिः । बणिक्,—विष्णुदत्तादिः । चेटः,—कलहंसादिः । चेटी,—मन्दारिकादिः ।

नाम कार्य्यं नाटकस्य गर्भितार्थप्रकाशकम् ॥ ४३८ ॥(ण)

यथा,—रामाभ्युदयादिः ।

नायिकानायकाख्यानां संज्ञा प्रकरणादिषु ॥४३९ ॥(त)

यथा,—मालतीमाधवादिः ।

---

अनुक्तमपि, अर्थं—विषयं, श्रुत्वेव—श्रवणाभिनयं कृत्वेवेत्यर्थः, किं ब्रवीषीति यत् प्रयुज्यते, तत् आकाशभाषितं स्यात् ।

(ढ) दत्तामिति ।—वेश्यानां दत्तां सिद्धां सेनाञ्च नाम—नामचरमाचलं, तेन दत्तान्तादिनाम इत्यर्थः, दर्शयेत् ; यथा,—कामदत्ता मदनसेना इत्यादि । तथा बणिजां दत्तप्रायाणि—दत्तान्तबहुलानि, नामानि दर्शयेत् । यथा,—धर्म्मदत्तो नाम बणिगित्यादि । प्रायशब्देन क्वचित् तद्व्यभिचारोऽपि द्रष्टव्यः । यथा शाकुन्तले—"धनवृद्धिर्नाम बणिक्" इति ; तथा वसन्तादिषु वर्ण्यस्य—वर्णनीयस्य, वस्तुनः यत् नाम भवेत्, यथा कलहंसादिः ; तत् चेटचेट्योः,—चेटस्य चेट्याश्च, प्रदर्शयेत् इति शेषः । अत्र एकशेषाभावश्चिन्त्यः ।

(ण) नामेति ।—नाटकस्य नाम गर्भितस्य—सन्दर्भसूचकव्युत्पत्तिलभ्यस्य, अर्थस्य प्रकाशकं—सूचकं, कार्य्यम् ।

(त) नायिकेति ।—प्रकरणादिषु [ आदिपदेन भाणादिपरिग्रहः ] नायिकानायकाख्यानां—नायिकया सहितो नायकः नायिकानायकः, तदाख्यानां—तन्नाम्नां,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नाटिकासट्टकादीनां नायिकाभिर्विशेषणम् ॥ ४४० ॥ (थ)

यथा,—रत्नावली-कर्पूरमञ्जर्य्यादिः ।

प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते ॥ ४४१ ॥ (द)

यथा शाकुन्तले,—"वैखा । "गच्छामः" इत्यर्थे "साधयामस्तावत्" ।

राजा स्वामीति देवेति भृत्यैर्भट्टेति चाधमैः ।
राजर्षिभिर्वयस्येति तथा विदूषकेण च ॥
राजन्नित्यृषिभिर्वाच्यः सोऽपत्यप्रत्ययेन च ।
स्वेच्छया नामभिर्विप्रैर्विप्र आर्य्येति चेतरैः ॥
वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः ।
वाच्यौ नटीसूत्रधारावार्य्यनाम्ना परस्परम् ॥
सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः ।
सूत्रधारो मारिषेति हण्डे इत्यधमैः समाः ॥
वयस्येत्युत्तमैर्हंहो मध्यैरार्य्येति चाग्रजः ।
भगवन्निति वक्तव्याः सर्व्वैर्देवर्षिलिङ्गिनः ॥

---

संज्ञा—नाम, कार्य्या इति शेषः । एतदुक्तं भवति—नायिकानायकयोरुभयोरेव नाम्ना प्रकरणादेः नाम कर्त्तव्यमिति । [एतत् प्रायिकं, तेन सौगन्धिकाहरणादि सञ्ज्ञाऽपि] ।

(थ) नाटिकेति ।—नाटिकासट्टकादीनां प्रयोगाणां, नायिकाभिर्विशेषणं—विशिष्य व्यवस्थापनं, संज्ञाकरणमित्यर्थः, तेषां नायिकाप्रधानत्वादिति भावः ।

(द) प्रायेणेति ।—ण्यन्तकः साधिः,—साधधातुः, गमेः,—गमधातोः, स्थाने प्रायेण प्रयुज्यते, न तु सर्व्वत्रेति भावः ; तेन अन्यदपि तत्समानार्थकं प्रयोज्यम् । यथा,—"सुहं चिट्ठउ अज्जउत्तो ! अहं गमिस्सं" इत्युत्थाय गच्छतीति रत्नावल्यां गमेः प्रयोगः, यथा वा उत्तरचरिते,—"तदेहि हरिणप्लुतैः पलायामहे" इति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वदेद्राज्ञीश्च चेटीश्च भवतीति विदूषकः ।
आयुष्मन् रथिनं सूतो वृद्धस्तातेति चेतरैः ॥
वत्स पुत्त्रक तातेति नाम्ना गोत्रेण वा सुतः ।
शिष्योऽनुजश्च वक्तव्योऽमात्य आर्य्येति चाधमैः ॥
विप्रैरयममात्येति सचिवेति च भण्यते ।
साधो इति तपस्वी च प्रशान्तश्चोच्यते बुधैः ॥
अगृहीताभिधः पूज्यः शिष्याद्यैर्विनिगद्यते ।
उपाध्यायेति चाचार्य्यो महाराजेति भूपतिः ॥
स्वामीति, युवराजस्तु कुमारो भर्त्तृदारकः ।
सौम्य भद्रमुखेत्येवमधमैस्तु कुमारकः ॥
वाच्या प्रकृतिभी राज्ञः कुमारी भर्त्तृदारिका ।
पतिर्यथा तथा वाच्या ज्येष्ठमध्याधमैः स्त्रियः ॥
हलेति सदृशी, प्रेष्या हञ्जे, वेश्याऽज्जुका तथा ।
कुट्टिन्यम्बेत्यनुगतैः पूज्या च जरती जनैः ॥
आमन्त्रणैश्च पाषण्डा वाच्याः स्वसमयागतैः ।
शकादयश्च सम्भाव्या भद्रदत्तादिनामभिः ॥
यस्य यत्कर्म्म शिल्पं वा विद्या वा जातिरेव वा ।
तेनैव नाम्ना वाच्योऽसौ ज्ञेयाश्चान्ये यथोचितम् ॥४४२॥(घ)

(घ) राजेति ।—राजा, भृत्यैः स्वामी इति, देव इति वा, अधमैः,—नीचैः जनैः, भट्टा इति, राजर्षिभिः, अन्यैरिति शेषः, तथा विदूषकेण च वयस्य इति, ऋषिभिः राजन् इति, अपत्यप्रत्ययेन—अपत्यप्रत्ययान्तपदेन च इत्यर्थः, यथा,—दाशरथे ! पौरव ! पाण्डव ! इत्यादिरूपेण, सः,—राजा, वाच्यः, एतच्च पुत्त्रादिसम्बन्धिपदोप-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

लक्षणं,तेन रघुनन्दन ! इत्यादिनाऽपीति ज्ञेयम्। विप्रः विप्रैः स्वेच्छया—अपत्यप्रत्ययेन इत्याशयः, नामभिर्वा, इतरैः,—क्षत्रियादिभिः, आर्य्य इति वाच्यः, तेन अनर्घराघवादौ विश्वामित्रेति कौशिकेति कुशिकनन्दनेत्यादिना शतानन्देन विश्वामित्रः उक्तः। विदूषकः राज्ञा वयस्य इति, नाम्ना वा वाच्यः। नटीसूत्रधारौ परस्परम् आर्य्यनाम्ना—नट्या सूत्रधारः आर्य्य इति, सूत्रधारेण नटी आर्य्या इति रूपेणेत्यर्थः, वाच्यौ। पारिपार्श्विकः,—सूत्रधारादवरो नटः, सूत्रधारं भाव इति वै वदेत्। सूत्रधारः तं पारिपार्श्विकं मारिष इति वदेत्। अधमैः,—नीचैः जनैः, समाः,—आत्मतुल्याः, हण्डे इति वाच्याः। [ "हण्डे" इत्यामन्त्रणद्योतकमव्ययम् ] उत्तमैर्जनैः समाः वयस्य इति, मध्यैः समाः हंहो इति च वाच्याः। अग्रजः,—ज्येष्ठः भ्राता, आर्य्यः इति वाच्यः, सर्वैः देवर्षिलिङ्गिनः,—देवलिङ्गिनः ऋषिलिङ्गिनश्च, भगवन् इति वक्तव्याः; विदूषकः राज्ञीञ्च, चेटीं—राज्ञ्याः सहचरीमित्यर्थः, च भवतीति वदेत्। अत्रैवं बोध्यम्;—"राजपत्न्यस्तु सम्भाष्याः सर्वाः परिजनेन तु। भट्टिनी स्वामिनी देवी इत्येवं नाटके बुधैः॥ देवीति महिषी वाच्या राज्ञा परिजनेन तु। भोगिन्य इति शेषास्तु स्वामिन्य इति वा पुनः॥" इति। सूतः,—सारथिः, रथिनम् आयुष्मन् इति वदेत्; वृद्धो जनः इतरैः,—कनिष्ठैः, तात इति, सुतः—पुत्रः, शिष्यः, अनुजः,—कनिष्ठश्च, वत्स पुत्रक तात इति नाम्ना, गोत्रेण—अपत्यप्रत्ययान्तेन इत्यर्थः, वा वाच्यः। अमात्यः अधमैः जनैः, आर्य्य इति वक्तव्यः, विप्रैः अयम् अमात्य इति, सचिव इति च भण्यते। तपस्वी च, प्रशान्तः,—वीतरागश्च जनः, बुधैः साधो इति उच्यते। शिष्याद्यैः,—शिष्यप्रभृतिभिः, [ आद्यशब्देन भ्रातृपुत्रादीनां ग्रहणम् ] पूज्यः,—पूजनीयो जनः, अगृहीताभिधः,—अगृहीता अभिधा यस्य तादृशः, नाम अगृहीत्वा सम्मानसूचकेन सम्बोधनेन इति भावः, विनिगद्यते—कथ्यते, [ "स्वगृहीताभिधः" इति पाठे—स्वगृहीता—स्वेच्छया प्रयुक्ता, अभिधा पूज्यत्वप्रकाशकनाम, भगवन्निति महाभागेत्यादि वा यस्य स इति विग्रहः ]। आचार्य्यः,—वेदाध्यापयिता—( "उपनीय ददद् वेदमाचार्य्यः स उदाहृतः" इति वचनात् ) गुरुर्वा, उपाध्याय इति, भूपतिः ( प्रजाभिः ) महाराज इति, स्वामी इति वा विनिगद्यते इत्यन्वयः। युवराजस्तु कुमारः, भर्त्तृदारको वा, वाच्यः। अधमैस्तु कुमारकः,—कुमारः, राजकुमार इति यावत्, सौम्य ! भद्रमुख ! इत्येवं वाच्यः। प्रकृतिभिः,—अमात्यादिभिः, राज्ञः कुमारी भर्त्तृदारिका वाच्या। यत् तु नाटकादेरन्यत्र कादम्बर्य्यां तरलिकया महाश्वेतासम्बोधने "भर्त्तृदारिके !" इत्युक्तं, तत् प्रयोगमधुरत्वख्यापनाय इति बोद्धव्यम्। पतिर्यथा ज्येष्ठमध्याधमैः,—उत्तमः उत्तमेन वयस्य इति, मध्यमेन मध्यमः हंहो इति, अधमेन

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ भाषाविभागः,—

पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनाम् ।
शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम् ॥
आसामेव तु गाथासु महाराष्ट्रीं प्रयोजयेत् ।
अत्रोक्ता मागधी भाषा राजान्तःपुरचारिणाम् ॥
चेटानां राजपुत्राणां श्रेष्ठिनाञ्चार्द्धमागधी ।
प्राच्या विदूषकादीनां, धूर्त्तानां स्यादवन्तिका ॥
योधनागरिकादीनां दाक्षिणात्या हि दीव्यताम् ।
शकाराणां शकादीनां शाकारीं सम्प्रयोजयेत् ॥
बाह्लीकभाषा दिव्यानां द्राविड़ी द्रविड़ादिषु ।
आभीरेषु तथाऽऽभीरी चाण्डाली पुक्कसादिषु ॥
आभीरी शावरी चापि काष्ठपत्रोपजीविषु ।
तथैवाङ्गारकारादौ पैशाची स्यात् पिशाचवाक् ॥

अधमः हण्डे इति वाच्यः, तथा स्त्रियः वाच्याः,—ज्येष्ठया स्त्रिया ज्येष्ठा स्त्री वयस्येति, मध्यमया स्त्रिया मध्यमा स्त्री हंहो इति, अधमया स्त्रिया अधमा स्त्री हण्डे इति वाच्येत्यर्थः। सदृशी—स्वसमाना स्त्री, हलेति वाच्या ; प्रेष्या—किङ्करी, हञ्जे इति, वेश्या अज्जुका इति वाच्या। [ "हला" इति "हञ्जे" इति चामन्त्रणद्योतके उभे अव्यये ] कुट्टिनी अनुगतैः,—सेवकैः, अम्ब इति, पूज्या तथा जरती—वृद्धा स्त्री च, जनैः अम्ब इति वाच्या ; यद्वा,—कुट्टिनी तथा—अज्जुका इति वाच्या। अनुगतैः, जनैरिति शेषः, पूज्या जरती च अम्ब इति वाच्या, पाषण्डाः,—शकारादयः, स्वसमयागतैः,—स्वसङ्केतानुसारिभिः, कापालिकेत्यादिभिरित्यर्थः, आमन्त्रणैः,—सम्बोधनपदैः, वाच्याः। शकादयः,—शकयवनकिरातप्रभृतयः, भद्रदत्तादिनामभिः सम्भाष्याः। यस्य यत् कर्म—मालाकरणादि, शिल्पं—कलाविज्ञानं, वा विद्या—मीमांसादिः, वा जातिः,—ब्राह्मणादिः, वा तेनैव—तदनुगतेनैव, नाम्ना असौ—मालाकारादिः, वाच्यः। अन्ये—एभ्यो भिन्नाः, यथोचितं (सम्भाषणे) ज्ञेयाः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

चेटीनामप्यनीचानामपि स्यात् शौरसेनिका ।
बालानां षण्डकानाञ्च नीचग्रहविचारिणाम् ।
उन्मत्तानामातुराणां सैव स्यात् संस्कृतं क्वचित् ॥
ऐश्वर्य्येण प्रमत्तस्य दारिद्र्योपस्कृतस्य च ।
भिक्षुबन्धधरादीनां प्राकृतं सम्प्रयोजयेत् ॥
संस्कृतं सम्प्रयोक्तव्यं लिङ्गिनीषूत्तमासु च ।
देवीमन्त्रिसुतावेश्यास्वपि कैश्चित् तथोदितम् ॥
यद्देश्यं नीचपात्रन्तु तद्देश्यं तस्य भाषितम् ।
कार्य्यतश्चोत्तमादीनां कार्य्यो भाषाविपर्य्ययः ॥
योषित्सखीबालवेश्याकितवाप्सरसां तथा ।
वैदग्ध्यार्थं प्रदातव्यं संस्कृतञ्चान्तरान्तरा॥४४३॥(न)

---

(न) भाषाविभागमाह, अथेति ।—अनीचानाम्—उत्कृष्टानाम्, उत्तममध्यमानामित्यर्थः, कृतात्मनां—विदुषां, भाषा संस्कृतं स्यात् । तादृशीनाम्—उत्कृष्टमध्यमानामित्यर्थः, योषितां शौरसेनी भाषा प्रयोक्तव्या । आसामेव—उत्कृष्टानां नारीणामेव, गाथासु—श्लोकेषु, सङ्गीतेषु वा, महाराष्ट्रीं प्रयोजयेत् । अत्र—नाट्ये, राज्ञः अन्तःपुरचारिणां—वामनादीनां, भाषा मागधी । चेटानां—भृत्यानां, राजपुत्राणां; श्रेष्ठिनां—धनवतां वैश्यानाञ्च, अर्द्धमागधी—मागधीं स्वदेशभाषां चान्तरान्तराश्रित्य वदतीति भावः, तथोक्तं साहित्यकौमुद्याम् ;—"राजपुत्रादिभाषा तु मागध्या स्वानुरूपतः" इति । ("स्वानुरूपतः,—स्वस्य यस्मिन् देशे जन्मादि, तदनुरूपतामाश्रित्य" इति तद्व्याख्यायां पण्डितराजैश्च व्याख्यातम्) । विदूषकादीनां भाषा प्राच्या—गौड़ीया, धूर्त्तानाम्—अक्षदेविनां, भाषा अवन्तिका । दीव्यतां—क्रीड़तां, योधनागरिकादीनाञ्च, दाक्षिणात्या—वैदर्भी भाषा । शकाराणां—राजश्यालकानां, ("सोऽयमनूढ़ाभ्राता राज्ञः श्यालः शकार इत्युक्तः") । शाकारीं—शकारदेशसम्बन्धिनीं, [ "शबराणां शकादीनां शाबरीम्" इति पाठान्तरे तु—"राज्ञः श्यालाः शका

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एषामुदाहरणान्याकरेषु बोद्धव्यानि। भाषालक्षणानि मम तातपादानां भाषार्णवे।

वाऽपि शाकार्थ्या प्रपठन्ति ते" इति रसगङ्गाधरादिविरोधापत्तिर्बोध्या ] भाषां सम्प्रयोजयेत्। दिव्यानां—दैवप्रभावसम्पन्नानां, वाह्लीकभाषा—वाह्लीकदेशीया भाषा, वाह्लीकदेशभवानां नराणां या भाषा साऽभिनेतव्येति यावत्, वाह्लीकदेशश्च गान्धारदेशतः उत्तरपश्चिमदिग्गतः। [ "वाह्लीकभाषोदीच्यानाम्" इति पाठे—उदीच्यानाम्—उत्तरदेशवासिनाम् ] द्रविडादिषु द्राविडी भाषा, प्रयोज्या इति शेषः। आभीरेषु आभीरी, पुक्कसादिषु ( आदिपदेन तत्सदृशादीनां ग्रहणम् ) चाण्डाली, काष्ठपत्रोपजीविषु—काष्ठजीविषु—तक्षकेषु, पत्रजीविषु—पत्रावलीविक्रयशीलेषु च, आभीरी शावरी च भाषा। अङ्गारकारादौ—अङ्गारकारः,—लौहपात्रादिनिर्म्माणोपजीवी, तदादौ तथैव—आभीरी वा शावरी भाषा। पिशाचानां वाक् पैशाची, अनीचानाम्—उत्कृष्टानाम् उत्तममध्यमानामित्यर्थः, चेटीनामपि शौरसेनिका—शौरसेनी भाषा। बालानां षण्डकानां—वर्षवराणां, नीचानां ग्रहविचारिणां—दैवज्ञानामित्यर्थः, उन्मत्तानाम् आतुराणाञ्च सैव—शौरसेनिका एवेत्यर्थः, क्वचित् संस्कृतञ्च प्रयोज्यम्। ऐश्वर्य्येण प्रमत्तस्य, दारिद्रेण उपद्रुतस्य—अभिभूतस्य, भिक्षूणां तथा बन्धधरादीनां—जैनबौद्धादीनां, [ "भिक्षुवल्कधरादीनाम्" इति पाठान्तरे तु—भिक्षवः,—सन्यासिनः, याचका वा, वल्कधराः,—वानप्रस्थाः, वनमानुषा वा, आदिपदेन असभ्यान्तरस्यापि ग्रहणम् ] प्राकृतं वचनं—शौरसेन्यादिद्राविडीपर्य्यन्तानामन्यतमं, महाराष्ट्रीं वेत्यर्थः, सम्प्रयोजयेत्। लिङ्गिनीषु—सन्यासादिचिह्नधारिणीषु, उत्तमासु—उत्कृष्टासु नारीषु, च संस्कृतं प्रयोक्तव्यम्। कैश्चित्—अन्यैराचार्य्यैः, देवीमन्त्रिसुतावेश्यासु अपि तथा—संस्कृतमित्यर्थः, उदितम्—उपदिष्टम्, नीचपात्रं—नीचं यत्पात्रं—नाटकीयपुरुष इति तथोक्तं, तु—पुनः, यद्देश्यं—यद्देशीयं, तस्य भाषितं—भाषा, तद्देश्यं—तद्देशोचितं, प्रयोक्तव्यम् इत्यर्थः। उत्तमादीनां कार्य्यतः,—कर्म्मानुसारेणेत्यर्थः, भाषाविपर्य्ययः,—देशानुरूपा भाषेत्यर्थः, कार्य्यः। तेन उत्तमस्य राजान्तःपुरचारित्वे मागधी, न तु संस्कृतम्; एवमन्यत्रापि। अत एवानर्घराघवादौ राजपुत्रस्यापि रामचन्द्रादेः उत्तमकार्य्यकारित्वेन संस्कृतेनैव व्यवहारो वर्णितः, न त्वर्द्धमागध्या इति सङ्क्षेपः। योषित्प्रभृतीनाम् अन्तरान्तरा—मध्ये मध्ये, तत्तद्भाषाणां मध्ये इत्यर्थः, वैदग्ध्यार्थं—वैचित्र्यार्थं, विलासितार्थं, वैदग्ध्यज्ञापनार्थं वा, संस्कृतं प्रदातव्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

षट्त्रिंशल्लक्षणान्यत्र नाट्यालङ्कृतयस्तथा ।
त्रयस्त्रिंशत् प्रयोज्यानि वीथ्यङ्गानि त्रयोदश ॥
लास्याङ्गानि दश यथालाभं रसव्यपेक्षया ॥ ४४४ ॥ (प)

यथालाभं प्रयोज्यानीति सम्बन्धः । अत्रेति—नाटके ।

तत्र लक्षणानि, (फ)—

भूषणाक्षरसङ्घातौ शोभोदाहरणं तथा ।
हेतुसंशयदृष्टान्तास्तुल्यतर्कः पदोच्चयः ॥
निदर्शनाभिप्रायौ च प्राप्तिर्विचार एव च ।
दिष्टोपदिष्टे च गुणातिपातातिशयौ तथा ॥
विशेषणनिरुक्ती च सिद्धिर्भ्रंशविपर्य्ययौ ।
दाक्षिण्यानुनयौ मालाऽर्थापत्तिर्गर्हणं तथा ॥
पृच्छा प्रसिद्धिः सारूप्यं सङ्क्षेपो गुणकीर्त्तनम् ।
लेशो मनोरथोऽनुक्तसिद्धिः प्रियवचस्तथा ॥ ४४५ ॥

तत्र,—

लक्षणानि गुणैः सालङ्कारैर्योगस्तु भूषणम् ॥ ४४६ ॥ (ब)

---

(प) नाट्यालङ्कृतीराह, षट्त्रिंशदिति । अत्र—नाटके, लक्षणानि षट्त्रिंशत्, तथा नाट्यालङ्कृतयः त्रयस्त्रिंशत्, वीथ्यङ्गानि त्रयोदश, लास्याङ्गानि दश, यथालाभं—यथोचितं, रसव्यपेक्षया—रसानुगुण्यमपेक्ष्य, रसाकाङ्क्षया वेत्यर्थः, प्रयोज्यानि । यस्मिन् रसे यदाकाङ्क्षितं, योग्यञ्च भवति, तत्तस्मिन् वर्णनीयमिति भावः ।

(फ) लक्षणान्याह, तत्रेति ।—तत्र—तेषु मध्ये, लक्षणानि—वक्ष्यमाणभूषणादीनि षट्त्रिंशत्सङ्ख्यकानि, भवन्ति ।

(ब) भूषणमाह, लक्षणानीति ।—सालङ्कारैः,—अलङ्काराः,—वक्ष्यमाणाः अनुप्रासोपमादयः, तैः सहितैः, गुणैः,—माधुर्य्यौजःप्रसादैः, योगस्तु—परस्परमेलनमेव, भूषणम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"आक्षिपन्त्यरविन्दानि मुग्धे ! तव मुखश्रियम् ।
कोषदण्डसमग्राणां किमेषामस्ति दुष्करम् ? ॥" (भ)

वर्णनाऽक्षरसङ्घातश्चित्रार्थैरक्षरैर्मितैः ॥ ४४७ ॥ (म)

यथा शाकुन्तले,—"राजा। कच्चित् सखीं वो नातिबाधते शरीरसन्तापः ? प्रियंवदा। संपदं लद्धोसधो उअसमं गमिस्सदि।" (य)

सिद्धैरर्थैः समं यत्र असिद्धोऽर्थः प्रकाशते ।
श्लिष्टलक्षणचित्रार्था सा शोभेत्यभिधीयते ॥४४८॥ (र)

---

(भ) उदाहरति, आक्षिपन्तीति।—हे मुग्धे!—सुन्दरि! अरविन्दानि—पद्मानि, तव मुखस्य श्रियं—कान्तिम्, आक्षिपन्ति—निन्दन्ति। तथाहि,—कोषदण्ड-समग्राणां,—कोषः,—बीजकोषः, धनागारश्च, दण्डः,—मृणालं, चतुर्थोपायश्च, तैः समग्राणां— सम्पूर्णानाम्, उत्कैश्वर्य्यशालिनाम् इति भावः, एषाम्—अरविन्दानां, किं दुष्करम्—असाध्यम्, अस्ति ?—सर्व्वमेव सुकरमित्यर्थः। अत्र अरविन्दानामचेतन-तया निन्दा न सम्भवतीति उपमा कल्प्यते इति असम्भवद्वस्तुसम्बन्धरूपा निदर्शना, तथा अर्थान्तरन्यासः, श्लेषश्च, एते अलङ्काराः माधुर्य्यप्रसादाभ्यां गुणाभ्यां सङ्गताः काव्यं भूषयन्तीति भूषणम्।

(म) अक्षरसङ्घातमाह, वर्णनेति।—चित्रार्थैः,—विदग्धमनोहरार्थसूचकैः, मितैः,—अल्पैः, अक्षरैः वर्णना—रचना, अक्षरसङ्घातः।

(य) उदाहरति, यथेति।—वः,—युष्माकं, सखीं—शकुन्तलां, शरीरसन्तापः,—शरीरे वर्त्तमानः स्मरकृतः सन्तापः, कच्चित्—किं ननु, ("कच्चित् कामप्रवेदने" इत्यमरः) न अतिबाधते—सन्तापयति। ["साम्प्रतं लब्धौषध उपशमं गमिष्यति" इति संस्कृतम्]। अत्र "संपदम्" इत्यादिचित्रार्थाल्पवर्णैः रचना।

(र) शोभामाह, सिद्धैरिति।—यत्र सिद्धैः,—साधयितुमारब्धैः, अर्थैः समं—सह, असिद्धः,—अनभिमतः, अर्थः प्रकाशते, सा श्लिष्टेन—श्लेषालङ्कृतेन, लक्षणेन, चित्रार्था—विदग्धमनोरञ्जनार्था, रचना इति शेषः, शोभा इति अभिधीयते—कथ्यते।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"सद्वंशसम्भवः शुद्धः कोटिदोऽपि गुणान्वितः ।
कामं धनुरिव क्रूरो वर्ज्जनीयः सतां प्रभुः ॥" (ल)

यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात् ।
साध्यतेऽभिमतश्चार्थस्तदुदाहरणं मतम् ॥४४९॥ (व)

यथा,—

"अनुयान्त्या जनातीतं कान्तं साधु त्वया कृतम् ।
का दिनश्रीर्विनाऽर्केण का निशा शशिना विना ? ॥" (श)

हेतुर्वाक्यं समासोक्तमिष्टकृद्धेतुदर्शनात् ॥४५०॥ (ष)

यथा वेण्यां,—"[ भीमं प्रति चेटी ] एवं मए भणिदं—भाणु-

---

(ल) उदाहरति, सद्वंशेति ।—सत्—साधुः, वंशः,—अन्ववायः, अन्यत्र—वेणुविशेषः तत्र, पक्षान्तरे,—तस्मात्, सम्भवो यस्य तादृशः; शुद्ध इति ।—उभयत्र समानम् ; कोटिद इति ।—कोटिः,—संख्याविशेषः, अन्यत्र,—अग्रभागः ; गुणान्वितः—गुणः,—शौर्य्यगाम्भीर्य्यादिः, अन्यत्र,—मौर्व्वी, तेन युक्तः, क्रूरः,—निष्ठुरः, निर्दयकार्य्यकारित्वादिति भावः, उभयत्र समानं, वक्र इति वा । अत्र साधयितुमारब्धैरन्वयादिभिः सर्वं श्लेषेण एकदैव प्रसिद्धानभिमतवैरुद्धाद्यर्थप्रकाशनात् शोभा ।

(व) उदाहरणमाह, यत्रेति ।—यत्र तुल्यार्थयुक्तेन वाक्येन अभिप्रदर्शनात्—दृष्टान्तरूपेण प्रदर्शनात्, वक्तुरभिप्रायात् इति यावत्, हेतोः, अभिमतः,—बोधयितुमिष्टः, अर्थः साध्यते—ज्ञाप्यते, प्रकाश्यते इत्यर्थः, तत् उदाहरणं मतम् ।

(श) उदाहरति, अनुयान्त्येति ।—सीतां प्रति लोपामुद्राया उक्तिरियम् । जनातीतम्—अलौकिकसामर्थ्यं, कान्तं—श्रीराममित्यर्थः, अनुयान्त्या—अनुगच्छन्त्या, त्वया साधु कृतम्—सदाचरितम् । तथा हि,—अर्केण—सूर्य्येण, विना—विरहिता इति भावः, दिनश्रीः,—दिवसशोभा, का ? शशिना—चन्द्रेण, विना—विरहितेति भावः, निशा—रजनी, का ? अत्र तुल्यार्थयुक्तवाक्येन पतिविहीना योषिन्न शोभते इत्येवमभिमतार्थसाधनम् । वाल्मीकीयरामायणस्यारण्यकाण्डे पद्यमिदम् ।

(ष) हेतुमाह, हेतुरिति ।—हेतुदर्शनात्—कारणप्रदर्शनात्, इष्टकृत्—अभिमतार्थप्रकाशकं, समासोक्तं—सङ्क्षिप्तं, वाक्यं हेतुः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भद्रि! तुह्माणं अमुक्केसु केसहत्थेसु कधं अह्माणं देवीए केसा संजमीअंति त्ति"। (स)

**संशयोऽज्ञाततत्त्वस्य वाक्ये स्याद् यदनिश्चयः॥४५१॥** (ह)

यथा ययातिविजये, (क)—

"इयं स्वर्गाधिनाथस्य लक्ष्मीः? किं यक्षकन्यका?।
किञ्चास्य विषयस्यैव देवता? किमु पार्व्वती?॥" (ख)

**दृष्टान्तो यस्तु पक्षार्थसाधनाय निदर्शनम्॥४५२॥** (ग)

यथा वेण्यां,—"सहदेवः। आर्य्ये! उचितमेवैतत् तस्याः, यतो दुर्य्योधनकलत्रं हि सा" इत्यादि। (घ)

**तुल्यतर्को यदर्थेन तर्कः प्रकृतगामिना॥४५३॥** (ङ)

---

(स) उदाहरति, यथेति।—एवमिति।—["एवं मया भणितम्,—भानुमति! युष्माकम् अमुक्तेषु केशहस्तेषु कथमस्माकं देव्याः केशाः संयम्यन्ते?" इति संस्कृतम्]। केशहस्तेषु—केशपाशेषु। अत्र देव्याः केशासंयमनस्य हेतुः भानुमत्याः केशसंयमः, तद्दर्शनेन दुर्य्योधनवधे सत्येव देव्याः केशसंयमनं भविष्यतीत्येवमभिमतार्थः प्रकाश्यते।

(ह) संशयमाह, संशय इति।—अज्ञाततत्त्वस्य—विशेषमजानतो जनस्येत्यर्थः, वाक्ये यत् [यदित्यव्ययं य इत्यर्थे] अनिश्चयः,—अनिर्द्धारणं, स संशयः स्यात्।

(क) उदाहरति, यथेति।—ययातिविजये—राजानकमम्मटभट्टरचिते नाटकविशेषे।

(ख) इयमिति।—देवयानीं कूपे दृष्टवतो राज्ञ उक्तिरियम्। इयं—देवयानी, स्वर्गाधिनाथस्य—इन्द्रस्य, लक्ष्मीः?—सम्पत्तिः? किमिति शेषः। किं च—किं वा, विषयस्य—देशस्य। किमु—उत, नेति भावः। अत्र नायिकायां ययातेरनिश्चयः।

(ग) दृष्टान्तमाह, दृष्टान्त इति।—पक्षे अर्थस्य—साध्यस्य, साधनाय—ज्ञापनाय, यः,—यदित्यर्थः, निदर्शनं—हेतुप्रदर्शनं, स दृष्टान्तः।

(घ) उदाहरति, यथेति।—तस्याः,—भानुमत्याः। सा—भानुमती। अत्र द्रौपद्यां भानुमतीकर्त्तृकः परिहासः दुर्य्योधनकलत्रसम्बन्धित्वेन निदर्शित इति बोध्यम्।

(ङ) तुल्यतर्कमाह, तुल्यतर्क इति।—प्रकृतगामिना—प्रस्तुतानुसारिणा,



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा तत्रैव,—

"प्रायेणैव हि दृश्यन्ते कामं स्वप्नाः शुभाशुभाः।
शतसङ्ख्या पुनरियं सानुजं स्पृशतीव माम्॥" (च)

**सञ्चयोऽर्थानुरूपो यः पदानां स पदोच्चयः॥४५४॥(छ)**

यथा शाकुन्तले,—

"अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्॥" (ज)

अत्र पदपदार्थयोः सौकुमार्य्यं सदृशमेव।

---

प्रकृतेनेति यावत्, न तु प्रकृतिविपर्य्यासरूपेण अद्भुतेनेत्यर्थः, अर्थेन—वस्तुना, यत्—यः, [ इदमव्ययं ] तर्कः,—भाव्यर्थस्य सूचनं, स तुल्यतर्कः।

(च) उदाहरति, यथेति।—प्रायेणेति।—कामम्—अकामम्, अनभिमतरूपमिति यावत्, अथवा,—कामं—यथेष्टमित्यर्थः। ("अकामानुमतौ कामम्" इति कोषः) शुभाः,—मङ्गलोदर्काः, कदाचिदिति शेषः, अशुभाः,—अनिष्टोदर्काः, वा, कदाचिदिति शेषः, स्वप्नाः प्रायेण दृश्यन्ते, जनैरिति शेषः। इयं—स्वप्नावस्थायां भानुमत्या दृष्टेन नकुलेन हन्यमानाऽहिसम्बन्धिनी इत्यर्थः, शतसङ्ख्या सानुजं मां स्पृशति—विषयीकरोति इव, तेषामिव अस्माकमपि शतसङ्ख्यावत्त्वादित्यर्थः; एतेन दुर्य्योधनादीनां शतभ्रातॄणां भाविनिधनरूपार्थस्य सूचनम्। अत्र तु शतसङ्ख्यायाः सादृश्यम् आत्मनि सम्भावना तुल्यतर्क इति। पथ्यावक्त्रं वृत्तम्।

(छ) पदोच्चयमाह, सञ्चय इति।—पदानाम् अर्थानुरूपः,—अभिधेयसदृशः, यः सञ्चयः,—समूहः, स पदोच्चयः। अर्थानुरूप इत्यनेन सुकुमारार्थे सुकुमारार्थसूचकपदप्रयोगः, उद्भटार्थे तत्सूचकपदप्रयोग इति बोध्यम्।

(ज) उदाहरति, अधर इति।—अधरः,—अधरोष्ठः, किशलयस्येव रागः,—लौहित्यं, यस्य तथाभूतः, बाहू, कोमलविटपौ—मृदुस्कन्धोर्द्ध्वशाखे, तदनुकारिणौ—तत्सदृशौ ("स्कन्धादूर्द्ध्वं तरोः शाखा कटपो विटपो मतः" इति कात्यः) अङ्गेषु—अवयवेषु, सन्नद्धं—कृतसन्नाहम्, अत्युत्कटमिति यावत्, [प्रकृते बाधितमुख्यार्थः सन्नद्धशब्दः, सन्नद्धुम् उत्साहान्विता भवति इति अन्वितत्वसम्बन्धेन यौवनं लक्षयंस्तद्गतमातिशय्यं व्यञ्जयति ] यौवनं—तारुण्यं, कुसुममिव लोभनीयं—चित्ताकर्षकं, द्रष्टॄणामिति भावः। आर्य्या वृत्तम्। अत्र तु प्रस्तुतार्थानाम् अधरादीनां तत्सदृशपल्लवादिभिः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्त्तनम्।
परपक्षव्युदासार्थं तन्निदर्शनमुच्यते ॥ ४५५ ॥ (झ)

यथा,—"क्षात्रधर्मोचितैर्धर्मैरलं शत्रुवधे नृपाः!
किन्तु बालिनि रामेण मुक्तो बाणः पराङ्मुखे ॥" (ञ)

अभिप्रायस्तु सादृश्यादद्भुतार्थस्य कल्पना ॥४५६॥ (ट)

यथा शाकुन्तले,—"इदं किलाव्याजमनोहरं वपु-
स्तपःक्षमं साधयितुं य इच्छति।
ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति ॥" (ठ)

---

पदसच्चयैरुपमानं पदोच्चयः। यथा वा,—"प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वेधाविधाऽऽविर्भवत्क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात्। उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथिर्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥" अत्र शब्दार्थयोरुद्भटत्वं सदृशम्।

(झ) निदर्शनमाह, यत्रार्थानामिति।—परपक्षः,—परमतं, तस्य व्युदासार्थं—निराकरणार्थं, यत्र प्रसिद्धानाम् अर्थानां—सत्यरूपविषयाणां, परिकीर्त्तनं क्रियते, तत् निदर्शनम्।

(ञ) उदाहरति, क्षात्त्रेति।—हे नृपाः! क्षत्र एवेति क्षात्रः, तस्य क्षात्रस्य धर्म्मः,—स्वभावः, तस्य उचिताः,—योग्याः तैः, धर्मैः,—"शौर्य्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्। दानमीश्वरभावश्च क्षात्रकर्म्म स्वभावजम् ॥" इति; इत्यादिना प्रदर्शितैः कर्म्मविशेषैः, अलं—समर्थाः, ("अलं व्यर्थसमर्थयोः" इत्यमरः) किन्तु [इति यथेत्यर्थे अव्ययः] मुक्तः,—त्यक्तः, पराङ्मुखे—अन्यासक्ते। अत्र क्षत्त्रियधर्म्मरूपस्य परपक्षस्य निराकरणाय प्रसिद्धस्य रामकर्त्तृकवालिहननरूपस्य अर्थस्य कीर्त्तनम्।

(ट) अभिप्रायमाह, अभिप्राय इति।—सादृश्यात्—साम्यात्, अद्भुतस्य—असम्भाविनः, ["अभूतार्थस्य" इति पाठे,—स एवार्थः] अर्थस्य—वस्तुनः, कल्पना अभिप्रायः।

(ठ) उदाहरति, इदमिति।—यः अव्याजमनोहरं—स्वभावमनोरमम्, अकृत्रिममनोरञ्जनम् इति यावत्, इदं—पुरो दृश्यमानमनुपमं, वपुः,—शकुन्तलाशरीरमित्यर्थः, तपःक्षमं—तपश्चरणक्लेशसहं, साधयितुं—कर्त्तुम्, इच्छति, सः ऋषिः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ज्ञप्तिः केनचिदंशेन किञ्चिद् यत्रानुमीयते ॥४५७॥(ड)

यथा मम प्रभावत्याम्,—"अनेन खलु सर्व्वतश्चरता चञ्चरीकेणावश्यं विदिता भविष्यति प्रियतमा मे प्रभावती ।" (ढ)

विचारो युक्तवाक्यैर्यदप्रत्यक्षार्थसाधनम् ॥४५८॥(ण)

यथा मम चन्द्रकलायाम् ;—"राजा। नूनमियमन्तःपिहितमदनविकारा वर्त्तते । यतः,—

हसति परितोषरहितं निरीक्ष्यमाणाऽपि नेक्षते किञ्चित् ।
सख्यामुदाहरन्त्यामसमञ्जसमुत्तरं दत्ते ॥" (त)

---

—कठिनः इत्यर्थः, ध्रुवं—निश्चितं, नीलोत्पलपत्रधारया—नीलकमलपत्राग्रभागेन, शमीलताम्—शम्याख्यं तरुमित्यर्थः; (उपमेये शकुन्तलावपुषि कोमलत्वसौभाग्यवत्त्वादिसाधारणधर्म्मसद्भावसूचनार्थं तरुपदोपादाने लिङ्गव्यत्ययेन अनौचित्यदोषप्रसङ्गाच्च शम्यां लतात्वारोप इति भाष्यम्) छेत्तुं—द्विधाकर्त्तुं, व्यवस्यति—उद्युङ्क्ते, इच्छतीत्यर्थः। अत्र नीलोत्पलपत्रधारया शमीलताच्छेदनमिव शकुन्तलाशरीरेण तपश्चरणं न सम्भवति। अनेन च शमीलतासादृश्योद्भावनात् अभिप्रायनामकं नाटकलक्षणमुपन्यस्तम्। अत्र निदर्शनाऽलङ्कारः। वंशस्थविलं वृत्तम्।

(ड) ज्ञप्तिमाह, ज्ञप्तिरिति।—केनचित् अंशेन—प्रकारेण, विशेषणेनेत्यर्थः, यत्र किञ्चित् अनुमीयते—ज्ञाप्यते, सा ज्ञप्तिः।

(ढ) उदाहरति, यथेति।—चञ्चरीकेण—भ्रमरेण। अत्र सर्वतश्चरता इति विशेषणरूपेण अंशेन भ्रमरस्य स्वप्रियतमाज्ञानानुमानं नायकेन क्रियते।

(ण) विचारमाह, विचार इति।—युक्तवाक्यैः,—युक्तियुक्तैः, हेतुबोधकैरित्यर्थः, वचनैः यत् अप्रत्यक्षस्य—अदृष्टस्य, अर्थस्य साधनं—ज्ञापनं, स विचारः।

(त) उदाहरति, हसतीति।—परितोषरहितम्—असन्तोषं यथा तथा, हसति, निरीक्ष्यमाणाऽपि किञ्चित् न ईक्षते—न पश्यति, तथा सख्यां—वयस्यायाम्, उदाहरन्त्याम्—आलपन्त्याम्, असमञ्जसम्—अयोग्यम्, उत्तरं दत्ते—ददाति। अत्र अपरितोषहासादिरूपैर्हेतुमद्वचनैः अप्रत्यक्षस्य मनोविकारस्य साधनम्। अयं भावः,—चन्द्रकलाऽन्तर्मदनविकारवतीति साध्यम्, अपरितोषहासादिमत्त्वादिति हेतुः, तथा च यत्र यत्र अपरितोषहासादिमत्त्वं, तत्र तत्रान्तर्मदनादिविकारत्वमिति युक्तिरन्तर्मदनादिविकारसाधिकेति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

देशकालस्वरूपेण वर्णना दिष्टमुच्यते ॥ ४५९ ॥ (थ)

यथा वेण्यां,—"सहदेवः,—

यद्‌ वैद्युतमिव ज्योतिरार्य्ये क्रुद्धेऽद्य सम्भृतम् ।
तत्प्रावृड़िव कृष्णेयं नूनं संवर्द्धयिष्यति ॥" (द)

उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः ॥४६०॥(ध)

यथा शाकुन्तले,—

"शुश्रूषस्व गुरून्, कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्त्तुर्विप्रकृताऽपि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने, भोगेष्वनुत्सेकिनी,
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥"(न)

(थ) दिष्टमाह, देशेति ।—देशकालस्वरूपेण—देशकालयोः साधर्म्येण, वर्णना—रचना, दिष्टम् उच्यते ।

(द) उदाहरति, यदिति ।—अद्य क्रुद्धे आर्य्ये—भीमसेने इति भावः, वैद्युतमिव—ताड़ितमिव, यत् ज्योतिः,—तेजः, सम्भृतं—समुत्थितं, तत् इयं कृष्णा—द्रौपदी, प्रावृट्—वर्षाकालः, इव नूनं—निश्चितं, संवर्द्धयिष्यति । अत्र देशकालानुरूपवर्णनम् ।

(ध) उपदिष्टमाह, उपदिष्टमिति ।—शास्त्रानुसारतः,—यथाशास्त्रं, मनोहारि—मनोरञ्जनकृत्, वाक्यम् उपदिष्टम्—उपदेशवचनमित्यर्थः ।

(न) उदाहरति, शुश्रूषस्वेति ।—पतिगेहं गच्छन्तीं शकुन्तलां प्रति कण्वस्योपदेशोऽयम् । गुरून्—पूज्यान् जनान्, श्वश्रूश्वशुरादीनिति यावत्, शुश्रूषस्व—सेवस्व ; सपत्नीजने प्रियसखीवृत्तिं—प्रियवयस्याव्यवहारं, कुरु ; विप्रकृताऽपि—अपमानिताऽपि, भर्त्रेति शेषः, रोषणतया—कोपनतया, भर्त्तुः प्रतीपं—प्रतिकूलभावमित्यर्थः, मा स्म गमः,—न गच्छ, प्रतिकूलवर्त्तिनी मा भवेत्यर्थः, परिजने—पोष्यवर्गे, भूयिष्ठम्—अत्यर्थं, दक्षिणा—सरला, भव ; तथा भोगेषु—सुखसम्पदां लाभेषु इत्यर्थः, अनुत्सेकिनी—अगर्विणी भवेति शेषः ; अथवा,—भोगेषु—विषयजसुखेषु, अनुत्सेकिनी—उत्साहाभाववती, अगर्व्विता वा सती, परिजने दक्षिणा भव इति पूर्वेणान्वयः । एवम्—इत्थम् अनुष्ठिते सति, युवतयः,—तरुण्यः, न केवलं त्वम्, अपि तु स्त्रीमात्रम् इति भावः, गृहिणीपदं—"गृहिणी" इति अधिकारं, यान्ति—लभन्ते ; वामाः,—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**गुणातिपातः कार्य्यं यद् विपरीतं गुणान् प्रति ॥४६१॥ (प)**

यथा मम चन्द्रकलायां,—[चन्द्रं प्रति],—

"जइ संहरिज्जइ तमो घेंप्पइ सअलेहिं ते पाओ ।
वससि सिरे पसुवइणो तहवि हा इत्थोअजोअणं हरसि ॥" (फ)

**यः सामान्यगुणोद्रेकः स गुणातिशयो मतः ॥४६२॥ (ब)**

यथा तत्रैव,—"राजा । [चन्द्रकलाया मुखं निर्दिश्य],—

असावन्तश्चञ्चद्विकचनवनीलाब्जयुगल-
स्तलस्फूर्जत्कम्बुर्विलसदलिसङ्घात उपरि ।
विना दोषासङ्गं सततपरिपूर्णाखिलकलः
कुतः प्राप्तश्चन्द्रो विगलितकलङ्कः सुमुखि ! ते ॥" (भ)

---

एतत्प्रतिकूलवर्त्तिन्य इत्यर्थः, कुलस्य—पितृश्वशुरवंशयोः इत्यर्थः, आधयः,—मनस्तापकारिण्यः, मनःपीड़ा इव इत्यर्थः, भवन्तीति शेषः । इह सङ्क्षेपेण वात्स्यायनकथितमेकचारिणीवृत्तं सङ्कलितं कालिदासेन । एतेन हि स्वामिसकाशावस्थानरूपशुभसम्भावनया मनोहारिवाक्येन शास्त्रानुसारतः प्रयोजनम् उपदिष्टमिति । अत्र गुरुशुश्रूषादिकं शास्त्रानुसारि मनोहारि वचनम् । शार्दूलविक्रीड़ितं वृत्तम् ।

(प) गुणातिपातमाह, गुणातिपात इति ।—गुणान् प्रति यत् विपरीतं कार्य्यं—गुणविरोधिकार्य्यमित्यर्थः, स गुणातिपातः ।

(फ) उदाहरति, जइ इति ।—["यदि संह्रियते तमो गृह्यते सकलैस्ते पादः । वससि शिरसि पशुपतेस्तथापि हा स्त्रीजीवनं हरसि ॥" इति संस्कृतम् ] । अत्र चन्द्रस्य तमोहरणादिगुणानां विपरीतं स्त्रीजनजीवनहरणम् ।

(ब) गुणातिशयमाह, य इति ।—यः सामान्यगुणेभ्यः,—उपमानोपमेयवृत्तिसाधारणधर्म्मेभ्यः, उद्रेकः,—आधिक्यम्, उपमेयस्येति शेषः, स गुणातिशयः मतः,—कथितः ।

(भ) उदाहरति, असाविति ।—हे सुमुखि ! ते—त्वया, अन्तः,—अभ्यन्तरे, चञ्चत्—स्फुरत्, विकचं—विकसितं, नवनीलाब्जयुगलं—नीलकमलद्वयं, यस्य तादृशः, तले—अधोभागे, स्फूर्जन्—विकसन्, कम्बुः,—शङ्खः, कण्ठरूप इति भावः, यस्य तथाविधः, उपरि—तदूर्द्ध्वदेशे, विलसन्तः—विचरन्तः, अलीनां—भ्रमराणां, सङ्घाताः,—समूहाः, यस्य तथाभूतः, सततं—निरन्तरं, पौर्णमासीव्यतिरिक्तेऽपि

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अर्थान् सिद्धान् बहूनुक्त्वा विशेषोक्तिर्विशेषणम्॥४६३॥(म)

यथा,—"तृष्णाऽपहारी विमलो द्विजावासो जनप्रियः।
ह्रदः पद्माकरः किन्तु बुधस्त्वं, स जड़ाश्रयः॥" (य)

पूर्वसिद्धार्थकथनं निरुक्तिरिति कीर्त्त्यते ॥४६४॥ (र)

---

काले इत्यर्थः, परिपूर्णाः अखिलाः,—समग्राः, कलाः,—कलाशास्त्राणि, षोड़श-भागश्च यस्य तथोक्तः, विगलितकलङ्कः,—निष्कलङ्कः, असौ चन्द्रः,—मुखचन्द्र इति भावः, दोषासङ्गं विना—दोषरहित इत्यर्थः, अथ च दोषा—रात्रिः, ("दोषा रात्रौ भुजेऽपि च" इति मेदिनी) तस्याः सङ्गं—सम्पर्कं, विना—रात्रिमन्तरेणेत्यर्थः, कुतः,—कस्मात्, प्राप्तः? अत्र कलाशब्देन चतुःषष्टिविद्याया अपि गम्यमानत्वात् दोषाणामासङ्गं विना सकलविद्यालाभः असम्भव इति ध्वनिः। इह आह्लादकत्वादि-साधारणधर्म्मेभ्यः नीलाब्जयुगलादिसम्बन्धात् उपमेयस्य मुखस्य चन्द्रादाधिक्यम्; चन्द्रे तु नीलाब्जादिसम्बन्धाभावान्न आधिक्यमिति बोध्यम्।

(म) विशेषणमाह, अर्थानिति।—सिद्धान्—प्रसिद्धान्, बहून् अर्थान् उक्त्वा विशेषेण उक्तिः,—भेदकथनमित्यर्थः, विशेषणं—विशिष्यते—विभिद्यतेऽनेनेति तथोक्तम्। [करणे ल्युट्]।

(य) उदाहरति, तृष्णेति।—विद्वांसं धनिनं प्रति उक्तिरियम्। ह्रदः त्वञ्च, तुल्य इति शेषः; तथाहि,—तृष्णा—जलपानेच्छा, धनाशा च; ("तृष्णा स्यात्तर्षलिप्सयोः" इति मेदिनी) तस्याः अपहारी—नाशकः, जलदानेन धनदानेन च इति भावः, विमलः,—स्वच्छः, निर्दोषश्च; द्विजावासः,—द्विजानां—पक्षिणां, जलचराणां हंसादीनामिति यावत्, ब्राह्मणानाञ्च; ("द्विजः पक्षिद्विजन्मनोः" इति गोपालः)। आवासः,—आश्रयः, जनानां प्रियः,—सन्तोषकरः, पद्माकरः,—पद्मानां—कमलानाम्, आकरः,—उत्पत्तिस्थानं, पद्मायाः,—लक्ष्म्याः ("लक्ष्मीः पद्मालया पद्मा" इत्यमरः) आकरः,—आवासः, धनवानित्यर्थश्च, किन्तु त्वं बुधः,—विद्वान्, सः,—ह्रदः, जड़ाश्रयः,—जड़स्य—जलस्य, जाड्यगुणस्य च [डलयोः सावर्ण्यमङ्गी-कृत्येदमुक्तम्] आश्रयः,—स्थानम्। ["जलाश्रयः" इति पाठेऽपि स एवार्थः], अत्र बहून् समानधर्म्मानुक्त्वा बुधत्वजड़ाश्रयत्वाभ्यां अन्त्यपादे भेदकथनम्। व्यतिरेका-लङ्कारोऽयम्।

(र) निरुक्तिमाह, पूर्व्वेति।—पूर्व्वसिद्धानां—पूर्व्वं निष्पन्नानां, पूर्व्वं कृतानां,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा वेण्याम् ;—

"निहताशेषकौरव्यः क्षीबो दुःशासनासृजा ।
भङ्क्ता दुर्य्योधनस्योर्व्वोर्भीमोऽयं शिरसा नतः ॥" (ल)

बहूनां कीर्त्तनं सिद्धिरभिप्रेतार्थसिद्धये ॥ ४६५ ॥ (व)

यथा,—"यद्वीर्य्यं कूर्म्मराजस्य यश्च शेषस्य विक्रमः ।
पृथिव्या रक्षणे राजन्! एकत्र त्वयि तत् स्थितम् ॥"(श)

दृप्तादीनां भवेद् भ्रंशो वाच्यादन्यतरद्वचः ॥४६६॥ (ष)

---

जातानां वेति यावत्, अर्थानां—कार्य्याणां, कथनं—पुनः प्रतिपादनं, निरुक्तिरिति कीर्त्त्यते ।

(ल) उदाहरति, निहतेति ।—धृतराष्ट्रं प्रति भीमस्योक्तिरियम् । निहताः,—विनाशिताः, अशेषाः,—समग्राः, कौरव्याः,—कौरवाणां इमे इति तथोक्ताः, कुरुपक्षीययोधा इत्यर्थः, येन सः, दुःशासनस्य असृजा—शोणितेन, वक्षोरक्तपानेन इत्यर्थः, क्षीवः,—मत्तः, उन्मत्त इत्यर्थः, दुर्य्योधनस्य ऊर्व्वोः,—ऊरुयुगस्य, भङ्क्ता—भाविभञ्जनकारी [भविष्यदर्थे तृन्] अयम्—उपस्थितः भीमः, शिरसा नतः,—प्रणतः, भवन्तमिति शेषः । ["शिरसाऽर्चति" इति पाठे—अर्चति—पूजयति, शिरोनमनपूर्व्वकं प्रणमतीत्यर्थः] । अत्र पूर्वं कृतस्य कौरव्यादिहननरूपस्य कार्य्यस्य निर्व्वचनात् निरुक्तिरिति बोध्यम् ।

(व) सिद्धिमाह, बहूनामिति ।—अभिप्रेतस्य—इष्टस्य, अर्थस्य—कार्य्यस्य, सिद्धये—निष्पत्तये, बोधनायेत्यर्थः, (एकमधिकृत्य) बहूनाम् (एतदनेकोपलक्षणं, तेन नोक्तोदाहरणासंग्रहः) कीर्त्तनं—गुणकथनमित्यर्थः, सिद्धिः ।

(श) उदाहरति, यदिति ।—हे राजन्! कूर्म्मराजस्य—कूर्म्मावतारस्य विष्णोः, यत् वीर्य्यं—बलं, यच्च शेषस्य—अनन्तस्य, विक्रमः,—वीर्य्यमित्यर्थः, तत्—उभयोः कूर्म्मशेषयोः सामर्थ्यं, पृथिव्याः रक्षणे—पालनविषये, एकत्र—एकस्मिन्, त्वयि स्थितम् । अत्र अभिप्रेतस्य राज्ञः पृथ्वीपालनभारसहिष्णुतातिशयबोधनाय तदुभयकीर्त्तनम् ।

(ष) भ्रंशमाह, दृप्तादीनामिति ।—दृप्तादीनाम्—[आदिपदेन हृष्टदुःखितादिसंग्रहणम्] अहङ्कृतहृष्टदुःखितादीनामित्यर्थः, वाच्यात्—विवक्षितादित्यर्थः, अन्यतरत्—भिन्नं, विपरीतमिति यावत्, वचः भ्रंशः भवेत् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा वेण्यां,—"दुर्य्योधनः। [ कञ्चुकिनं प्रति ],—

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम्।

स्वबलेन निहन्ति संयुगे न चिरात्पाण्डुसुतः सुयोधनम्॥" (स)

विचारस्यान्यथाभावः सन्देहात् तु विपर्य्ययः॥४६७॥(ह)

यथा,—"मत्वा लोकमदातारं सन्तोषे यैः कृता मतिः।

त्वयि राजनि ते राजन्! न तथा व्यवसायिनः॥" (क)

दाक्षिण्यं चेष्टया वाचा परचित्तानुवर्त्तनम्॥४६८॥(ख)

---

(स) उदाहरति, सहभृत्यगणमिति।—सहभृत्यगणं—भृत्यगणैः,—अनुचरजनैः, सह वर्त्तमानमित्यर्थः, सबान्धवं—बान्धवैः,—भ्रात्रादिभिः सुहृद्भिः, सह वर्त्तमानं, सहमित्रं—मित्रैः सह वर्त्तमानं, ससुतं—सपुत्रं, सहानुजं—कनिष्ठभ्रातृसहितं, सुयोधनं—दुर्य्योधनं, पाण्डुसुतः,—भीमसेनः, स्वबलेन—स्वपराक्रमेण, न चिरात्—अविलम्बेन, संयुगे—सङ्ग्रामे, निहन्ति—विनाशयति। अत्र "चिरादपि न हन्ति" इति विवक्षितम्; किन्तु न चिरात् हन्तीति कथनेन संग्राख्यं नाटकाङ्गं बोध्यमिति। सुन्दरी वृत्तं,—"विषमे ससजा गुरुः समे सभराल्वौ यदि सुन्दरी तदा।" इति लक्षणात्।

(ह) विपर्य्ययमाह, विचारस्येति।—सन्देहात्—संशयात्, विचारस्य—तत्त्वनिर्णयस्य, अन्यथाभावः,—विपरीततया ग्रहणं, स्वरूपस्यान्यथाकरणमित्यर्थः, विपर्य्ययः तन्नाम काव्यलक्षणविशेषः।

(क) उदाहरति, मत्वेति।—लोकं—जगतीस्थम्, अदातारम्—अवदान्यं, मत्वा—विचार्य्य, यैः सन्तोषे—धनतृष्णाऽपगमजन्यसुखे, मतिः,—विचारः, कृता—स्थापिता इत्यर्थः, सन्तुष्टैरेव स्थितं, न कुत्रापि याचितुं गतमिति भावः; हे राजन्! त्वयि राजनि—नृपे सति, ते तथा व्यवसायिनः,—तादृशाचारवन्तः, दातृत्वानिश्चयवन्त इत्यर्थः, न, भवन्तीति शेषः, सन्तोषमवलम्ब्य न तिष्ठन्तीति भावः। अत्र पूर्वं दातृत्वाभावस्य निश्चयो जातः, इदानीं त्वयि राज्ञि तन्निश्चयाभाव एव विचारस्य अन्यथाभावः इति बोध्यम्।

(ख) दाक्षिण्यमाह, दाक्षिण्यमिति।—चेष्टया—शारीरव्यापारेण, वाचा—वचनेन, च परचित्तस्य—अन्यदीयस्य मनसः, अनुवर्त्तनम्—अनुसरणम्, अनुरञ्जनमित्यर्थः, दाक्षिण्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वाचा यथा,—

"प्रसाधय पुरीं लङ्कां राजा त्वं हि विभीषण ! ।
आर्य्येणानुगृहीतस्य न विघ्नः सिद्धिमन्तरा ॥" (ग)

एवं चेष्टयाऽपि । (घ)

**वाक्यैः स्निग्धैरनुनयो भवेदर्थस्य साधनम् ॥४६९॥(ङ)**

यथा वेण्याम् ;—"कृपः । [ अश्वत्थामानं प्रति ],—दिव्यास्त्रग्राम-कोविदे भारद्वाजतुल्यपराक्रमे किं न सम्भाव्यते त्वयि ?" (च)

**माला स्याद् यदभीष्टार्थं नैकार्थप्रतिपादनम् ॥४७०॥(छ)**

यथा शाकुन्तले,—"राजा ।—

किं शीकरैः क्लमविमर्दिभिरार्द्रवातं
सञ्चालयामि नलिनीदलतालवृन्तम् ? ।
अङ्के निधाय चरणावुत पद्मताम्रौ
संवाहयामि करभोरु ! यथासुखं ते ? ॥" (ज)

---

(ग) उदाहरति, प्रसाधयेति ।—विभीषणं प्रति लक्ष्मणस्योक्तिः । हे विभीषण ! लङ्कां पुरीं प्रसाधय—अलङ्कुरु, हि—यतः, त्वं राजा, इदानीमिति शेषः, आर्य्येण—श्रीरामेण, अनुगृहीतस्य, जनस्य इति शेषः, सिद्धिं—फलनिष्पत्तिम्, अन्तरा—विना, मध्ये वा, न विघ्नः, स्यादिति शेषः । अत्र वाचा विभीषणचित्तानुवर्त्तनं दाक्षिण्यम् ।

(घ) चेष्टया यथा शाकुन्तले,—"तदहमेनामनृणां करोमि [ इत्यङ्गुलीयकं ददाति ]" । अत्राङ्गुलीयदानरूपया चेष्टया शकुन्तलाचित्तप्रीणनं दाक्षिण्यम् ।

(ङ) अनुनयमाह, वाक्यैरिति ।—स्निग्धैः,—स्नेहयुक्तैः, वाक्यैः अर्थस्य—कार्य्यस्य, प्रयोजनस्येत्यर्थः, साधनं—करणम्, अनुनयः भवेत् ।

(च) उदाहरति, दिव्येति ।—दिव्यास्त्राणां ग्रामः,—समूहः, तस्मिन् कोविदः,—विचक्षणः, तस्मिन् ; भारद्वाजः,—भरद्वाजस्य अपत्यं पुमान्, द्रोण इत्यर्थः, तस्य तुल्यः पराक्रमः यस्य तादृशे । अत्र स्निग्धवाक्येन अश्वत्थाम्नः सन्तोषरूपस्य कार्य्यस्य साधनम् ।

(छ) मालामाह, मालेति ।—अभीष्टार्थं—स्वाभीष्टसिद्धये इत्यर्थः, यत् नैकार्थप्रतिपादनम्—अनेककार्य्यस्य ज्ञापनं, सा माला स्यात् ।

(ज) उदाहरति, किमिति ।—हे करभोरु !—करभवत्—करस्य वाह्यभागवत्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**अर्थापत्तिर्यदन्यार्थोऽर्थान्तरोक्तेः प्रतीयते ॥४७१॥ (झ)**

यथा वेणाम् ;—"राजा। [द्रोणोऽश्वत्थामानं राज्येऽभिषेक्तुमिच्छतीति कथयन्तं कर्णं प्रति],—साधु अङ्गराज ! साधु। कथमन्यथा,—

दत्त्वाऽभयं सोऽतिरथो बध्यमानं किरीटिना।
सिन्धुराजमुपेक्षेत नैवं चेत् कथमन्यथा ? ॥" (ञ)

**दूषणोद्घोषणायां तु भर्त्सना गर्हणं तु तत्॥४७२॥(ट)**

---

("करस्य करभो बहिः" इत्यमरः) ऊरू यस्याः तत्सम्बुद्धौ तथोक्ते ["ऊरूत्तरपदादौपम्ये" (४।१।६९ पा०) इत्यूङ्] क्लमविमर्दिभिः,—श्रान्तिहरैः, शीकरैः,—अम्बुकणैः, आर्द्रैः,—सिक्तैः, शीतल इत्यर्थः, वातो यस्य तादृशं, नलिन्याः,—कमलिन्याः, दलं—पत्रं, तदेव तालवृन्तं—व्यजनम्, इति तथोक्तं, ("व्यजनं तालवृन्तकम्" इत्यमरः) किं सञ्चालयामि ?—मन्दं मन्दं चालयामीति भावः ; ["वृन्तैः" इति पाठे,—शीकरैः सह नलिनीदलतालवृन्तैः आर्द्रवातं सञ्चालयामि ?—अरतप्तशरीरं प्रीणयामि ? इत्यन्वयोऽवगन्तव्यः] उत—अथवा, पद्मताम्रौ—पद्मे इव ताम्रौ—आरक्तौ, ते—तव, चरणौ अङ्के—क्रोडे, निधाय—निवेश्य, यथासुखं संवाहयामि ?—मन्दविमर्दनेन खेदम् अपनयामि ? अत्र अभीष्टस्य शकुन्तलापरितोषस्य (सुखसाधकस्येत्यर्थः) साधनाय वातसञ्चालनादीनामनेकार्थानां प्रतिपादनम्। वसन्ततिलकं वृत्तम्।

(झ) अर्थापत्तिमाह, अर्थापत्तिरिति।—अर्थान्तरस्य उक्तेः हेतोः यत्—य इत्यर्थः, अन्यार्थः प्रतीयते, सा अर्थापत्तिः।

(ञ) उदाहरति, दत्त्वाभयमिति।—अतिरथः [अनेन विशेषणेन तस्य सामर्थ्येऽपि उपेक्षा अभिसन्धिसूचिकेति बोध्यम्] सः,—द्रोणः, अभयं—पूर्वेद्युः "मा त्वाम् अर्जुनो वधीत्" इत्येवं रूपमिति यावत्, दत्त्वा किरीटिना—अर्जुनेन, बध्यमानं—हन्यमानं, सिन्धुराजं—जयद्रथम्, उपेक्षेत। एवं—त्वदुक्तप्रकाराश्वत्थामाऽभिषेकरूपाभिसन्धिः; चेत्—यदि, न, स्यादिति शेषः, तर्हि अन्यथा—जयद्रथरक्षणरूपप्रतिज्ञापालने औदासीन्यं, कथं—किमर्थम् ? न किमपि उपेक्षणे हेतुरित्यर्थः। अत्र सिन्धुराजोपेक्षारूपार्थान्तरप्रकटनेन द्रोणस्य स्वपुत्राभिषेकाभिप्रायः प्रतीयते।

(ट) गर्हणमाह, दूषणेति।—दूषणस्य उद्घोषणायां, कृतायामिति शेषः, या भर्त्सना, तत् गर्हणम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा तत्रैव,—"अश्वत्थामा । [ कर्णं प्रति ],—

निर्वीर्य्यं गुरुशापभाषितवशात् किं मे तवेवायुधम् ?

सम्प्रत्येव भयाद्विहाय समरं प्राप्तोऽस्मि किं त्वं यथा ? ।

जातोऽहं स्तुतिवंशकीर्त्तनविदां किं सारथीनां कुले ?

क्षुद्रारातिकृताप्रियं प्रतिकरोम्यस्रेण नास्त्रेण किम् ?॥"(ठ)

**अभ्यर्थनापरैर्वाक्यैः पृच्छाऽर्थान्वेषणं मतम्॥४७३॥(ड)**

यथा तत्रैव,—"सुन्दरकः । अज्जा ! अज्ज अवि णाम सारहिदुइओ दिट्ठो तुह्मेहिं महाराओ दुज्जोधणो ण वेत्ति ?" (ढ)

---

(ठ) उदाहरति, निर्वीर्य्यमिति ।—गुरोः,—परशुरामस्य, शापभाषितवशात्—शापोक्त्या, तव आयुधम् इव मे,आयुधमिति शेषः, किं निर्वीर्य्यम् ?—अकिञ्चित्करम् ? त्वं यथा, भयात् समरं विहाय अवागतः, तथा इति शेषः, सम्प्रत्येव—अधुनैव, भयात् समरं विहाय—त्यक्त्वा, प्राप्तोऽस्मि—आगतोऽहं किम् ? स्तुतिवंशकीर्त्तनविदां—स्तुतिं—राज्ञां स्तवाय, मनोरञ्जनार्थेति यावत्, यत् वंशकीर्त्तनं—राज्ञां पूर्व्वपुरुषाणां नामगुणाद्युद्घोषणं, तत् विदन्तीति तेषां तथाविधानां, सारथीनां—सूतानां, कुले—वंशे, त्वमिवेति शेषः, किमहं जातः ?—उत्पन्नः ? क्षुद्रारातिकृताप्रियं—क्षुद्राः,—नगण्याः ये अरातयः,—भीमार्ज्जुनादिशत्रवः, तैः कृतः,—अनुष्ठितः यः अप्रियः,—दुष्टव्यवहारः, मत्पितृनिधनरूप इत्यर्थः, तं, किम् अस्रेण—नेत्रवारिणा, अश्रुवर्षणेनेति यावत्, प्रतिकरोमि—प्रतिविदधामि ? मत्पितृवधरूपवैरतायाः प्रतिकारं किं केवलम् अश्रुजलेनैव सम्पादयामि ? इत्यर्थः, अस्त्रेण न ? करोमीति पूर्व्वतोऽनुवृत्तम् । द्रोणपुत्त्रस्य महावीरस्य ममाश्वत्थाम्नः अस्त्रेणैव प्रतीकार्य्योऽयं विषयः, न पुनः समरपराङ्मुखस्य निर्वीर्य्यास्त्रस्य नीचस्य सूतपुत्त्रस्य तव इव अस्रेण इति भावः । अत्र अश्वत्थामकर्त्तृका कर्णभर्त्सना ।

(ड) पृच्छामाह, अभ्यर्थनेति ।—अभ्यर्थनापरैः,—प्रार्थनासूचकैः, सविनयैरित्यर्थः, वाक्यैः अर्थानाम् अन्वेषणं, पृच्छा इति मतम् ।

(ढ) उदाहरति, यथेति ।—अज्जेति ।—["आर्य्याः ! अद्य अपि नाम सारथिद्वितीयो दृष्टो युष्माभिः महाराजो दुर्य्योधनो न वेति ?" इति संस्कृतम् ] अत्र प्रार्थनासूचकवाक्येन दुर्य्योधनान्वेषणम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रसिद्धिर्लोकसिद्धार्थैरुत्कृष्टैरर्थसाधनम् ॥ ४७४ ॥ (ण)

यथा विक्रमोर्वश्याम् ;—"राजा ।—

सूर्य्याचन्द्रमसौ यस्य मातामहपितामहौ ।
स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः ॥" (त)

सारूप्यमभिभूतस्य सारूप्यात् क्षोभवर्त्तनम् ॥ ४७५ ॥ (थ)

यथा वेण्याम् ;—"युधिष्ठिरः । [दुर्य्योधनभ्रान्त्या भीमं प्रति] दुरात्मन्! दुर्य्योधनहतक !" इत्यादि । (द)

---

(ण) प्रसिद्धिमाह, प्रसिद्धिरिति ।—उत्कृष्टैः लोकसिद्धैः,—लोकप्रसिद्धैः, अर्थैः,—लोकख्यातवस्तुभिरित्यर्थः, अर्थस्य—कार्य्यस्य, साधनं—पदार्थपरिचय इति यावत्, प्रसिद्धिः ।

(त) उदाहरति, सूर्य्येति ।—पुरूरवस इयमुक्तिः । यस्य—पुरूरवसः, सूर्य्याचन्द्रमसौ मातामहपितामहौ—सूर्य्यः मातामहः, चन्द्रमाः पुनः पितामहः, यश्च उर्व्वश्या, भुवा—पृथिव्या, च द्वाभ्यां स्वयम्—आत्मनैव, स्वेच्छया एव इति यावत्, पतिः,—स्वामिरूपेण इत्यर्थः, वृतः । [पुरा किल स्वायम्भुवमनुपुत्त्रः सूर्य्यनप्ता सद्युम्नापरनामा इली नाम राजा मृगयाप्रसङ्गेन हरनिवारितपुरुषान्तरप्रवेशमुपवनं प्रविष्टः स्त्रीभावमाजगाम ; अतस्तस्यैव इला नामाभूत् ; ताञ्च तत्र परिभ्रमन्तीं चन्द्रतनयो बुधश्चकमे सा च तं, तयोः पुत्त्र ऐलापरनामधेयः पुरूरवा आसीत् । तेन पुरूरवसः सूर्य्यो मातामहः, चन्द्रश्च पितामहः ; इति कथानकमनुसन्धेयम्] । एवञ्च अत्र लोकप्रसिद्धैः सूर्य्यचन्द्रवंशीयत्वादिभिः आत्मपरिचयरूपस्य अर्थस्य साधनम् ।

(थ) सारूप्यमाह, सारूप्यमिति ।—सारूप्यात्—समानरूपत्वात्, रूपसादृश्यादिति यावत्, अभिभूतस्य—अभिभवं प्राप्तस्य, वैचित्त्यं गतस्य इत्यर्थः, समानरूपत्वेन सोऽयं, न वा ? इति तत्त्वविमूढ़स्य, जनस्येति शेषः, ["अनुभूतस्य" इति पाठे—सादृश्यादनुभूतस्य, भ्रमविषयस्येत्यर्थोऽवगन्तव्यः ; "अनुरूपस्य" इति पाठे—अनुरूपस्य—सदृशस्य, वस्तुन इति शेषः, सारूप्यात्—सादृश्यजनितभ्रमात्, उभयत्र द्रष्टुरित्यध्याहार्य्यं] यत् क्षोभेण वर्त्तनं—व्यवहारः, तत् सारूप्यम् ।

(द) उदाहरति, यथेति ।—अत्र दुर्य्योधनस्य सादृश्येनाभिभूतस्य युधिष्ठिरस्य क्षोभवर्त्तनम् ।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सङ्क्षेपो यत्तु सङ्क्षेपादात्माऽन्यार्थे प्रयुज्यते ॥४७६॥(ध)

यथा मम चन्द्रकलायाम् ;—"राजा। प्रिये !—

अङ्गानि खेदयसि किं शिरीषकुसुमपरिपेलवानि सुधा ?।

[ आत्मानं निर्दिश्य ]

अयमीहितकुसुमानां सम्पादयिता तवास्ति दासजनः ॥" (न)

गुणानां कीर्त्तनं यत्तु तदेव गुणकीर्त्तनम् ॥४७७॥ (प)

यथा तत्रैव,—"नेत्रे खञ्जनगञ्जने" इत्यादि । (फ)

स लेशो भण्यते वाक्यं यत् सादृश्यपुरःसरम् ॥४७८॥ (ब)

यथा वेण्याम् ;—"राजा ।—

हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम् ।

या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति ॥" (भ)

---

(ध) सङ्क्षेपमाह, सङ्क्षेप इति ।—सङ्क्षेपात्—साधारण्यात्, अविशेषादित्यर्थः, अन्यार्थे—अन्यस्य अर्थे, परकार्य्ये इति यावत्, अर्थान्तरस्थाने वा, यत् आत्मा—स्वयं, आत्मशब्दप्रयोगो वा, प्रयुज्यते—नियुज्यते, निर्दिश्यते वा, स तु सङ्क्षेपः ।

(न) उदाहरति, अङ्गानीति ।—शिरीषकुसुमवत् परिपेलवानि—परितः पेलवानि, सर्व्वतोभावेन विरलानीति यावत्, सुकोमलानीति भावः, ("पेलवं विरलं तनु" इत्यमरः) अङ्गानि, किं—कथं, सुधा—मृषा, खेदयसि ?—क्लेशयसि ? अयं दासजनः,—किङ्करः, तव—कोमलाङ्ग्याः इत्यर्थः, ईहितकुसुमानाम्—अभीष्टपुष्पाणां, सम्पादयिता—कर्त्ता, विकासयिता च, कुसुमपदसामर्थ्यात् इति बोध्यम्, अस्ति ; यत्ते अभीष्टं, तत् अयं दास एव सम्पादयति, किं तव आयासेन ? इति भावः । अत्र चन्द्रकलापरिचर्य्यार्थे राज्ञ आत्मनियोगः ।

(प) गुणकीर्त्तनमाह, गुणानामिति ।—स्पष्टम् ।

(फ) उदाहरति, यथेति ।—तत्रैव—चन्द्रकलायामेव । अत्र नायिकाया रूपगुणानां कथनम् ।

(ब) लेशमाह, स इति ।—सादृश्यपुरःसरं—सादृश्यतात्पर्य्यकं, यत् वाक्यं भण्यते—कथ्यते, स लेशः ।

(भ) उदाहरति, हते इति ।—शिखण्डिनं—तन्नामानं द्रुपदपुत्त्रं, पुरस्कृत्य—अग्रेकृत्य, जरति—वृद्धे, ("जरन् वृद्धोऽधिकवयाः प्रवया जीर्ण इत्यपि" इति गोपालः)

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मनोरथस्त्वभिप्रायस्योक्तिर्भङ्ग्यन्तरेण यत् ॥४७९॥ (म)

यथा,—"रतिकेलिकलः किञ्चिदेष मन्मथमन्थरः।
पश्य सुभ्रु! समाश्वस्तां कादम्बश्चुम्बति प्रियाम्॥" (य)

विशेषार्थोहविस्तारोऽनुक्तसिद्धिरुदीर्य्यते ॥४८०॥ (र)

यथा गृहवृक्षवाटिकायाम्; (ल)—
"दृश्येते तन्वि! यावेतौ चारुचन्द्रमसं प्रति।
प्राज्ञे! कल्याणनामानावुभौ तिष्यपुनर्वसू॥" (व)

---

गाङ्गेये—गङ्गानन्दने, भीष्मे इति यावत्, हते, अर्ज्जुनेनेति शेषः, पाण्डुपुत्राणां—युधिष्ठिरादीनां, या श्लाघा—विकत्थना, प्रशंसेति यावत्, अभूदिति शेषः, अस्माकं—कौरवाणां, सैव—तादृशी एव, श्लाघा भविष्यति, अभिमन्युवधे इति शेषः। यथा तेषां वृद्धस्य छलेन हनने श्लाघाऽनुपयुक्ता, तथा अस्माकमपि बालकस्यैकाकिनोऽभिमन्योर्बहुभिर्हनने भविष्यतीति भावः। अत्र अभिमन्युवधः भीष्मवधतुल्य इति सादृश्यम्।

(म) मनोरथमाह, मनोरथ इति।—भङ्ग्यन्तरेण—भङ्गिविशेषेण, सदृशदर्शनादिना इत्यर्थः, यत्—या [ अव्ययमिदम् ] अभिप्रायस्य उक्तिः,—ज्ञापनं, स मनोरथः।

(य) उदाहरति, रतीति।—नायिकां प्रति कस्यचिदुक्तिः। हे सुभ्रु! पश्य एषः मन्मथमन्थरः,—मदनपरवशः, कामेन व्याकुलीकृत इति यावत्, अत एव रतिकेलौ—सुरतविहारे, कलः,—मधुरवाक्, यद्वा,—रतिकेलिं कलयति—आचरितुमिच्छति, यः सः, कादम्बः,—कलहंसः ("कादम्बः कलहंसः स्यात्" इत्यमरः) समाश्वस्तां—विश्वस्ताम्, आदराधिक्यदर्शनेन विश्वासवतीम् इत्यर्थः, ["समालम्भात् इति पाठे,—आदराधिक्यादित्यर्थः ] प्रियां—भार्य्यां, हंसीमिति यावत्, किंचित्—ईषत्, चुम्बति; ईषच्चुम्बनन्तु अस्या उत्तरोत्तरकामोद्रेकाय इति भावः। अत्र नायकेन कादम्बस्य तत्प्रियाचुम्बनोक्तिरूपभङ्ग्या स्वाभिप्रेतस्य स्वकान्तायै चुम्बनस्य उक्तिः।

(र) अनुक्तसिद्धिमाह, विशेषार्थेति।—विशेषः,—रूपलावण्याद्यतिशयज्ञापनरूपः यः अर्थः,—प्रयोजनं, तस्मै ऊहविस्तारः,—तर्कातिशयः, अनुक्तसिद्धिः,—अनुक्तस्य अर्थस्य ज्ञापनमिति भावः, उदीर्य्यते—कथ्यते।

(ल) उदाहरति, यथेति।—गृहवृक्षवाटिकायां—गृहसमीपस्थां वृक्षवाटिकां प्रस्तुत्य रचिते रूपकविशेषे।

(व) दृश्येते इति।—गृहोपवने विश्वामित्रसमीपे श्रीरामलक्ष्मणौ दृष्ट्वा सीतां

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्यात् प्रमाणयितुं पूज्यं प्रियोक्तिर्हर्षभाषणम् ॥४८१॥ (ञ)

यथा शाकुन्तले;—"उदेति पूर्व्वं कुसुमं, ततः फलं,
घनोदयः प्राक्, तदनन्तरं पयः।
निमित्तनैमित्तिकयोरयं विधिः
तव प्रसादस्य पुरस्तु सम्पदः ॥" (ट)

प्रति तत्सखीनां सवितर्कमुक्तिरियम्। हे तन्वि!—कृशाङ्गि! चारुचन्द्रमसं प्रति—मनोहरचन्द्रं प्रति, चन्द्रसमीपे इत्यर्थः, यौ एतौ—प्रभाविशेषशालिनौ इति भावः, दृश्येते; हे प्राज्ञे!—विदुषि! उभौ, तावेताविति शेषः, कल्याणनामानौ—शुभाभिधौ, तिष्यपुनर्वसू—पुष्यपुनर्वसू इत्यर्थः, ("तिष्यः पुष्ये कलियुगे" इत्यमरः) इति तर्कयामो वयमिति शेषः। अत्र रूपलावण्यातिशयात् विश्वामित्ररामलक्ष्मणेषु पृथिव्याम् असम्भवेऽपि चन्द्रपुष्यपुनर्वसुत्वधर्मारोपेण तर्कातिशयरूपाऽनुक्तसिद्धिः।

(ञ) प्रियोक्तिमाह, स्यादिति।—पूज्यं जनं प्रमाणयितुं—प्रमाणं कर्त्तुं, तत् मर्य्यादां दर्शयितुमित्यर्थः, यत् हर्षभाषणं—प्रेम्णा सम्भाषणं, हर्षजनकं भाषणं वा, सा प्रियोक्तिः स्यात्।

(ट) उदाहरति, उदेतीति।—मारीचमुनिं प्रति दुष्मन्तस्योक्तिरियम्। पूर्व्वं—प्रथमं, फलोत्पत्तेः प्रागित्यर्थः, कुसुमम् उदेति—उदयं प्राप्नोति, विकसतीति यावत्, ततः,—अनन्तरं, कुसुमोदयात् परमित्यर्थः, फलम्, उदेतीत्यनेनान्वयः। प्राक्, वृष्टेरिति शेषः, घनानां—मेघानाम्, उदयः,—उद्गमः, भवतीति शेषः, तदनन्तरं—मेघोदयात् परं, पयः,—जलं, वृष्टिरित्यर्थः, उदेतीति योजना। निमित्तनैमित्तिकयोः,—कारणकार्य्ययोः, हेतुफलयोरिति यावत्, अयं—पौर्वापर्य्यरूप इत्यर्थः, विधिः,—क्रमः, सर्व्वत्र दृश्यते इति शेषः, तव—भवतः, प्रसादस्य—अनुग्रहस्य, ("प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यप्रसत्तिषु" इति मेदिनी) तु—पुनः, पुरः,—अग्रतः, अनुग्रहात् प्रागित्यर्थः, सम्पदः,—समृद्धयः, सम्भूता इति शेषः। अत्र कारणत्वात् सम्पदः पूर्व्वमेव अनुग्रहः, कार्य्यन्तु सम्पद तत्पश्चात् भवितुं युज्यते, तद्वैपरीत्येन तु पूज्यस्यातिप्रभावशालित्वकथनेन हर्षोत्पादनरूपा प्रियोक्तिः। अत्र कार्य्यकारणयोः पौर्व्वापर्य्यव्यत्ययरूपातिशयोक्तिरलङ्कारः। अत एव "सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते" इति वक्ष्यते। वंशस्थविलं वृत्तम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ नाट्यालङ्काराः,—

आशीराक्रन्दकपटाऽक्षमागर्वोद्यमाश्रयाः ।
उत्प्रासनं स्पृहाक्षोभपश्चात्तापोपपत्तयः ॥
आशंसाऽध्यवसायौ च विसर्पोल्लेखसंज्ञितौ ।
उत्तेजनं परीवादो नीतिरर्थविशेषणम् ॥
प्रोत्साहनञ्च साहाय्यमभिमानोऽनुवर्त्तनम् ।
उत्कीर्त्तनं तथा याच्ञा परीहारो निवेदनम् ॥
प्रवर्त्तनाख्यानयुक्तिप्रहर्षाश्चोपदेशनम् ।
इति नाट्यालङ्कृतयो नाट्यभूषणहेतवः ॥४८२॥ (स)

आशीरिष्टजनाशंसा ॥ ४८३ ॥ (ह)

यथा शाकुन्तले,—

"ययातेरिव शर्म्मिष्ठा पत्युर्बहुमता भव ।
पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥" (क)

---

(स) नाट्यालङ्कारानाह, आशीरिति ।—आशीःप्रभृतयः त्रयस्त्रिंशत् नाट्यालङ्कारा इत्यर्थः । अलङ्कृतिपदस्य यौगार्थमाह, नाट्यभूषणहेतव इति ।

(ह) आशिषमाह, आशीरिति ।—इष्टजनस्य—वन्धोः, आशंसा—अभिमतप्राप्तीच्छा, इष्टलाभाशंसनमिति यावत्, आशीः ।

(क) उदाहरति, ययातेरिति ।—शकुन्तलां प्रति कण्वस्य शुभाशंसनमिदम् । शर्म्मिष्ठा—वृषपर्व्वसुता, ययातेरिव त्वं पत्युः,—दुष्मन्तस्य, बहुमता—बहु आदरणीया, भव । सा—शर्म्मिष्ठा, पूरुं—तन्नामानम् इव, त्वमपि सम्राजं—चक्रवर्त्तिनं, पुत्त्रम् अवाप्नुहि—लभस्व । अत्र यद्यपि ययातेर्देवयान्येव महिषी बभूव, किन्तु दैत्यगुरोः शापात् प्राप्तां जरां पुत्त्रेष्वेकतमे सङ्क्रामयितुमुद्यतस्य यदुप्रभृतिभिः पुत्त्रैः प्रत्याख्यातस्य च तस्य तां गृह्णन् कनिष्ठपुत्त्रः पूरुरेव प्रियतम आसीत्, तेनैव पुनस्तन्माता शर्म्मिष्ठाऽपि प्रियतमाऽऽसीदिति विभावनीयम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ऽऽ(आ)क्रन्दः प्रलपितं शुचा ॥४८४॥(ख)

यथा वेण्यां,—"कञ्चुकी। हा देवि! कुन्ति! राजभवन-पताके!" इत्यादि।

कपटं मायया यत्र रूपमन्यद्विभाव्यते ॥४८५॥ (ग)

यथा कुलपत्यङ्के,—

"मृगरूपं परित्यज्य विधाय कपटं वपुः।
नीयते रक्षसा तेन लक्ष्मणो युधि संशयम् ॥" (घ)

अक्षमा सा परिभवः स्वल्पोऽपि न विषह्यते॥४८६॥(ङ)

यथा शाकुन्तले,—"राजा। भोः सत्यवादिन्! अभ्युपगतं तावदस्माभिः एवंविधा एव वयम्; किं पुनरिमामभिसन्धाय लभ्यते? शार्ङ्गरवः। विनिपातः" इत्यादि। (च)

---

(ख) आक्रन्दमाह, आक्रन्द इति।—शुचा—शोकेन, पुत्रादिमरणजन्येन आन्तरतापोद्रेकेणेति यावत्, प्रलपितं—प्रलापः, [भावे क्तः] आक्रन्दः।

(ग) कपटमाह, कपटमिति।—यत्र मायया—छलेन, अन्यत् रूपं विभाव्यते,—प्रदर्श्यते, तत् कपटम्। चित्रमीमांसायामप्युक्तं,—"प्रतारणार्थमन्यस्य यत् कर्म्म कपटन्तु तत्" इति।

(घ) उदाहरति, मृगरूपमिति।—तेन—मायिकेषु प्रसिद्धेन, रक्षसा—मारीचेन, मृगरूपं,—काञ्चनहरिणकायं, परित्यज्य—विहाय, कपटं—कृत्रिमं, वपुः,—शरीरं, विधाय लक्ष्मणः ["श्रीरामः" इति तु साधु] युधि—युद्धे, संशयं नीयते—प्राप्यते। अत्र मायया मृगरूपानन्तरं रूपान्तरप्रत्यायनमिति कपटाख्योऽलङ्कारः।

(ङ) अक्षमामाह, अक्षमेति।—स्वल्पः,—अत्यल्पः, अपि परिभवः यत्—यतः, न विषह्यते—सोढुं पार्य्यते, [अत्र "अभिसह्यते" इति पाठे—स एवार्थः] सा अक्षमा।

(च) उदाहरति, यथेति।—शार्ङ्गरवं प्रति राज्ञ उक्तिरियम्। भोः सत्यवादिन्! [विपरीतलक्षणयेयं सूचना]। अभ्युपगतं—स्वीकृतम्। एवंविधाः,—पराभिसन्धायिन इत्यर्थः। इमां—शकुन्तलाम्, अभिसन्धाय—प्रतार्य्य। अत्र राज्ञः "भोः सत्यवादिन्"! इति सोल्लुण्ठनोक्त्या परिभूतस्य शार्ङ्गरवस्य "विनिपातः" इति वचनेन अक्षमत्वद्योतनादक्षमा नाम नाट्यालङ्कारः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

गर्वोऽवलेपजं वाक्यम् ॥ ४८७ ॥ (छ)

यथा तत्रैव,—"राजा। ममापि नाम सत्त्वैरभिभूयन्ते गृहाः ?"। (ज)

कार्य्यस्यारम्भ उद्यमः ॥ ४८८ ॥ (झ)

यथा कुम्भाङ्के,—"रावणः। पश्यामि शोकविवशोऽन्तकमेव तावत्।" (ञ)

ग्रहणं गुणवत्कार्य्यहेतोराश्रय उच्यते ॥ ४८९ ॥ (ट)

यथा विभीषणनिर्भर्त्सनाङ्के,—"विभीषणः। राममेवाश्रयिष्यामि" इति। (ठ)

उत्प्रासनं तूपहासो योऽसाधौ साधुमानिनि ॥४९०॥ (ड)

यथा शाकुन्तले,—"शार्ङ्गरवः। राजन्! अथ पुनः पूर्व्व-

---

(छ) गर्व्वमाह, गर्व्व इति।—अवलेपजं—साहङ्कारमुक्तं, वाक्यं गर्व्वः।

(ज) उदाहरति, यथेति।—तत्रैव—शाकुन्तले एव। सत्त्वैः,—प्राणिभिः, अभिभूयन्ते—पराजीयन्ते ? अत्र ममापीत्यनेन राज्ञः गर्व्वातिशयः सूचितः।

(झ) उद्यममाह, कार्य्यस्येति।—कार्य्यस्य—अभिप्रेतार्थस्य, आरम्भः,—सम्पादनार्थं प्रथमप्रवृत्तिः, उद्यमः।

(ञ) उदाहरति, यथेति।—शोकविवशः,—अतिशोकार्त्तः; बहुपुत्रभ्रातृबन्धुवर्गनाशादिति भावः, अन्तकमेव—यममेव, तावत्—कार्त्स्न्येन, ("यावत् तावच्च साकल्ये" इत्यमरः) पश्यामि। अत्र रणकर्म्मणः उद्यमः सूचितः।

(ट) आश्रयमाह, ग्रहणमिति।—गुणवत्कार्य्यहेतोः,—उत्कृष्टकार्य्यनिमित्तमित्यर्थः, ग्रहणम् आश्रय उच्यते।

(ठ) उदाहरति, यथेति।—स्पष्टम्। अत्र विभीषणस्य स्वराज्यप्राप्तिरूपोत्कृष्टकार्य्यस्य हेतुः श्रीरामाश्रयः इति।

(ड) उत्प्रासनमाह, उत्प्रासनमिति।—साधुमानिनि—आत्मानं साधु मन्यते इति साधुमानी ["आत्ममाने खश्च" (३।२।८३ पा०) इति णिनिः] तस्मिन्, स्वं श्रेष्ठं मन्यमाने इति भावः, अत एव असाधौ यः उपहासः [स इत्यध्याहारः] उत्प्रासनम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वृत्तान्तः व्यासङ्गाद्विस्मृतो भवेत्, तत् कथमधर्म्मभीरोर्दारपरित्यागः ?" इत्यादि । (ढ)

आकाङ्क्षा रमणीयत्वाद् वस्तुनो या स्पृहा तु सा ॥४९१॥(ण)

यथा तत्रैव,—"राजा ।—

चारुणा स्फुरितेनायमपरिक्षतकोमलः ।
पिपासतो ममानुज्ञां ददातीव प्रियाधरः ॥" (त)

अधिक्षेपवचःकारी क्षोभः प्रोक्तः स एव तु॥४९२॥(थ)

यथा,—

"त्वया तपस्विचाण्डाल ! प्रच्छन्नवधवर्त्तिना ।
न केवलं हतो बाली, स्वात्मा च परलोकतः ॥" (द)

---

(ढ) उदाहरति, यथेति ।—अथ पुनरिति—वितर्के, पूर्ववृत्तान्तः,—शकुन्तलापरिणयरूपा पूर्व्वघटनेत्यर्थः, व्यासङ्गात्—भार्य्यान्तरसंसर्गात्, राजकार्य्यगौरवात्, मोहात् वा, विस्मृतः,—स्मृतिपथं न गतः, भवेत्—स्यात् ; तत्—तस्मात्, अधर्म्मभीरोः,—अधर्म्माद् विभ्यतस्ते, दारपरित्यागः,—स्त्रीपरित्यागः, कथं—कीदृक् ? स्त्रीत्यागे अधर्म्मसम्भवादिति भावः । अत्र धर्म्मपत्नीं परित्यक्तुकामस्य अत एव असाधौ राज्ञि अधर्म्मभीरुत्वाभिधानेन साधुमानित्वं प्रतिपाद्य उपहासः ।

(ण) स्पृहामाह, आकाङ्क्षेति ।—वस्तुनः,—विषयस्य, रमणीयत्वात्—मनोहरत्वात्, या आकाङ्क्षा—तत्प्राप्तीच्छा इत्यर्थः, सा स्पृहा ।

(त) उदाहरति, चारुणेति ।—अपरिक्षतः,—नायकेनादष्टतया अक्षतः, अत एव कोमलः, प्रियायाः,—शकुन्तलायाः, अयम् अधरः चारुणा—मनोहरेण, स्फुरितेन—स्फुरणेन, पिपासतः,—पातुमिच्छतः, मम अनुज्ञां ददातीव । अत्र अधरस्य रमणीयत्वात् पानाकाङ्क्षारूपा स्पृहा ।

(थ) क्षोभमाह, अधिक्षेपवच इति ।—अधिक्षेपवचःकारी—भर्त्सनोक्तिहेतुकः, क्षोभः,—मनोविकारविशेषः, स एव—क्षोभनामाऽलङ्कार एव, प्रोक्तः ।

(द) उदाहरति, त्वयेति ।—रामं प्रति बालिन उक्तिः । हे तपस्विचाण्डाल ! —तपस्विषु चाण्डालवत् नृशंसकर्म्मिन् इत्यर्थः, प्रच्छन्नवधवर्त्तिना—गुप्तभावेन स्थित्वा हिंसाकारिणा, त्वया केवलं बाली न हतः, किन्तु परलोकतः स्वात्मा च—अपि, हत इति शेषः । यादृशं दुष्कार्य्यं त्वया कृतम्, एतेन परलोके तव निस्तारो नास्ति, "धर्म्म

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मोहावधीरितार्थस्य पश्चात्तापः स एव तु ॥४९३॥(ध)

यथाऽनुतापाङ्के,—"रामः।—

किं देव्या न विचुम्बितोऽस्मि बहुशो मिथ्याऽभिशप्तस्तदा"

इति। (न)

उपपत्तिर्मता हेतोरुपन्यासोऽर्थसिद्धये ॥ ४९४ ॥ (प)

यथा बध्यशिलायाम्; (फ)—

"म्रियते म्रियमाणे या त्वयि जीवति जीवति।

तां यदीच्छसि जीवन्तीं रक्षात्मानं ममाऽसुभिः ॥ (ब)

---

एव हतो हन्ति" इति स्मरणादिति भावः। अत्र वालिकर्तृकः श्रीरामचन्द्रकर्ममूलकः "तपस्विचाण्डाल!" इत्यादिवाक्यार्थरूपः क्षोभः।

(ध) पश्चात्तापमाह, मोहेति।—मोहेन—अनवधानतया इत्यर्थः, अज्ञानेन वा, अवधीरितस्य—अवज्ञातस्य, अर्थस्य—विषयस्य, प्रयोजनस्येति यावत्, तु यः पश्चात्तापः,—अवज्ञाऽनन्तरं शोकः, स एव पश्चात्तापालङ्कारः। तथोक्तं मुनिना,—"अकार्य्यं सहसा कृत्वा कृत्वा कार्य्यमथापि वा। सन्तापो मनसो यस्तु पश्चात्तापः स कीर्त्तितः ॥" इति।

(न) उदाहरति, यथेति।—देव्या—सीतया। मिथ्याऽभिशप्तः,—मिथ्या-दत्तपरिवादः। अत्र चुम्बनरूपस्य अर्थस्य मोहेनावधीरणात् पश्चात्तापालङ्कारः।

(प) उपपत्तिमाह, उपपत्तिरिति।—अर्थस्य—कार्य्यस्य, सिद्धये हेतोः,—कारणस्य, उपन्यासः,—कीर्त्तनम्, उपपत्तिर्मता।

(फ) उदाहरति, यथेति।—बध्यशिलायां—यत्र गरुडेन भक्षणार्थं वधाय नागाः नीयन्ते तस्याम्।

(ब) म्रियते इति।—नागानुज्जीवयितुं गरुडाय स्वदेहार्पणं कर्त्तुकामं शङ्खचूड़ं प्रति नायकस्योक्तिरियम्। त्वयि—भवादृशे तनये इत्यर्थः, म्रियमाणे—मरणासन्ने सति, या म्रियते—मरणासन्ना भवति, त्वयि जीवति—वर्त्तमाने इत्यर्थः, सति, या जीवति—जीविता वर्त्तते, यदि तां, भवन्मातरमिति शेषः, जीवन्तीम् इच्छसि—जीववती-मभिलषसि, तदा मम असुभिः,—प्राणैः, मद्देहमुपायनीकृत्येत्यर्थः, आत्मानं—स्वं, रक्ष; अत्र प्रियस्य जीवितार्थे स्वोपस्थितप्रार्थनं सोपपत्तिकमित्युपपत्तिः। नागानन्दस्येदं पद्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आशंसनं स्यादाशंसा ॥ ४६५ ॥ (भ)

यथा श्मशाने,—"माधवः ।—

तत् पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम्" इति । (म)

प्रतिज्ञाऽध्यवसायकः ॥ ४६६ ॥ (य)

यथा मम प्रभावत्याम् ;—"वज्रनाभः ।—

अस्य वक्षः क्षणेनैव निर्मथ्य गदयाऽनया ।

लीलयोन्मूलयाम्येव भुवनद्वयमद्य वः ॥" (र)

विसर्पो यत् समारब्धं कर्म्मानिष्टफलप्रदम् ॥ ४६७ ॥ (ल)

---

(भ) आशंसामाह, आशंसनमिति ।—आशंसनम्—अभीष्टलाभे मनसो व्यापारणम्, आशंसा स्यात् । अत्र स्वस्याभीष्टलाभेच्छा, आशीरलङ्कारे तु बन्धुजनस्येति विशेषः ।

(म) उदाहरति, यथेति ।—तस्याः,—मालत्याः, अनङ्गस्य—कामदेवस्य, मङ्गलगृहं—महोत्सवार्थं निर्म्मितस्थानम्, उपचारात् तदभिन्नमिति यावत्, तत्—अनुभूतास्वादपूर्वं, मुखं भूयोऽपि—पुनरपि, पश्येयं—विलोकयेयम् । अत्र प्रियतमामुखावलोकनाशंसनादाशंसा । पादत्रयात्मकमस्य श्लोकस्य मालतीमाधवीयस्य,—"सम्भूयेव सुखानि चेतसि परं भूमानमातन्वते, यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः । यद्बालेन्दुकलोच्चयादवचितैः सारैरिवोत्पादितम्" इति ।

(य) अध्यवसायमाह, प्रतिज्ञेति ।—प्रतिज्ञा—"शरीरं वा पातयेयं, कार्य्यं वा साधयेयम्" इत्येवम्भूतः कार्य्यस्य कर्त्तव्यत्वेन दृढ़तरनिश्चयनिर्देशः, अध्यवसायकः,—अध्यवसायः, [ स्वार्थे कः ] ।

(र) उदाहरति, यथेति ।—अस्य—प्रद्युम्नस्य, वक्षः,—उरःस्थलं, क्षणेनैव—न तु विलम्बेनेति भावः, अनया—प्राणान्तकारिण्या, गदया निर्मथ्य—सञ्चूर्ण्य, लीलया—अनायासेन, अद्य वः,—युष्माकम्, [ इति अनादरे षष्ठी ] युष्मान् अनादृत्य इति भावः, भुवनद्वयं—स्वर्गं भुवञ्च, रसातलं विहाय इत्यर्थः, स्वस्य रसातलवासित्वादिति भावः, उन्मूलयाम्येव—उत्पाटयाम्येव । अत्र वज्रनाभस्य प्रद्युम्नवक्षोभेदनादिरूपकार्य्ये दृढ़तरनिर्देशरूपोऽध्यवसायः ।

(ल) विसर्पमाह, विसर्प इति ।—अनिष्टफलप्रदं यत् कर्म्म समारब्धं—प्रक्रान्तं, स विसर्पः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा वेण्याम्;—"एकस्य तावत् पाकोऽयम्" इत्यादि। (व)

कार्य्यग्रहणमुल्लेखः॥ ४९८॥ (श)

यथा शाकुन्तले,—"तापसौ। [राजानं प्रति] समिदाहरणाय प्रस्थितावावाम्। इह च अस्मद्गुरोः कण्वस्य साधिदैवत इव शकुन्तलया अनुमालिनीतीरमाश्रमो दृश्यते, न चेदन्यकार्य्यातिपातः, प्रविश्य गृह्यतामतिथिसत्कारः" इति। (ष)

उत्तेजनमितीष्यते।

स्वकार्य्यसिद्धयेऽन्यस्य प्रेरणाय कठोरवाक्॥४९९॥(स)

यथा,—

"इन्द्रजिच्चण्डवीर्य्योऽसि नाम्नैव बलवानसि।
धिग्! धिक्! प्रच्छन्नरूपेण युध्यसेऽस्मद्भयाकुलः॥" (ह)

---

(व) उदाहरति, यथेति।—एकस्य, द्रौपदीकेशग्रहस्य इति शेषः, पाकः,—फलम्, अयं—सङ्ग्रामे बहुराजन्यनिधनरूप इति भावः। अत्र द्रौपदीकेशग्रहणरूपस्य कर्म्मणोऽनेकानेकातिरथमहारथमरणरूपफलकतया द्रौणकेशग्रहरूपस्य विश्वविनाशारम्भकफलतया च विसर्पः। उक्तञ्च चित्रमीमांसाकृता जगन्नाथपण्डितराजेन,—"यत् कर्म्म परिणामे स्यात् सर्व्वतोऽनिष्टकारकम्। हालाहलमिवात्यन्तं विसर्पस्तु विसर्पणात्॥" इति।

(श) उल्लेखमाह, कार्य्यग्रहणमिति।—कार्य्यस्य ग्रहणं—सम्पादनार्था प्रवृत्तिः, उल्लेखः।

(ष) उदाहरति, यथेति।—समिदाहरणाय—हवनोपयोगिकाष्ठाहरणाय। अस्मद्गुरोः कण्वस्य शकुन्तलया—गुरुवर्य्येण दुहितृत्वेन कल्पितया, साधिदैवत इव—अधिदेवता—अधिष्ठातृदेवता, तया सहित इव, अनुमालिनीतीरं—मालिन्याः नद्याः तीरे इत्यर्थः। कार्य्यातिपातः,—कार्य्यस्य व्याघातः, ["अन्यकार्य्यातिपातः" इति पाठान्तरम्]। अत्र समिदाहरणरूपकार्य्यसम्पादनार्थं प्रवृत्तेरभिधानादुल्लेखः।

(स) उत्तेजनमाह, उत्तेजनमिति।—स्वकार्य्यस्य—स्वाभीष्टस्य, सिद्धये—सम्पत्तये, तथा अन्यस्य प्रेरणाय—प्रवर्त्तनाय, कठोरवाक्—कटुवाक्यम्, उत्तेजनमिति इष्यते—कथ्यते।

(ह) उदाहरति, इन्द्रजिदिति।—मेघनादं प्रति लक्ष्मणस्योक्तिः। हे इन्द्र-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भर्त्सना तु परीवादः ॥ ५०० ॥ (क)

यथा सुन्दराङ्के,—"दुर्य्योधनः । धिग् ! धिक् !! सूत ! किं कृतवानसि ? वत्सस्य मे प्रकृतिदुर्ल्ललितस्य पापः पापं विधास्यति" इत्यादि । (ख)

नीतिः शास्त्रेण वर्त्तनम् ॥ ५०१ ॥ (ग)

यथा शाकुन्तले,—"दुष्मन्तः । विनीतवेशप्रवेश्यानि तपोवनानि" इति । (घ)

उक्तस्यार्थस्य यत्तु स्यादुत्कीर्त्तनमनेकधा ।
उपालम्भस्वरूपेण तत् स्यादर्थविशेषणम् ॥५०२॥ (ङ)

जित् ! असि—( अव्ययमिदम् ) त्वमित्यर्थः, नाम्नैव—न तु कार्य्येत इति भावः, चण्डवीर्य्यः,—प्रचण्डपराक्रमः, बलवान् असि—भवसि, इन्द्रजिदाख्ययैव तव प्रचण्डत्वं बलवत्त्वञ्च ख्यायते इत्यर्थः, धिग् धिक्—त्वां पुनः पुनः निन्दामि इत्यर्थः, ( "धिक् निर्भर्त्सननिन्दयोः" इत्यमरः )। निन्दाबीजीभूतं दौर्ब्बल्यं समर्थयते, प्रच्छन्नेत्यादि ।—यस्त्वम् अत्यन्तभयाकुलः सन्, प्रच्छन्नरूपेण—अलक्षितरूपेण, युध्यसे, यदि तव निर्भयत्वं स्यात् तदाऽवश्यं प्रकाश्ययुद्धे तव वर्त्तनं स्यादिति भावः । अत्र प्रकाश्ययुद्धे इन्द्रजितो वर्त्तनं स्वकार्य्यम् ।

( क ) भर्त्सनामाह, भर्त्सनेति ।—परीवादः,—तिरस्कारः, तु—पुनः, भर्त्सना, स्यादिति शेषः ।

( ख ) उदाहरति, यथेति ।—मूर्च्छितदुर्य्योधनरक्षणाय रणात् रथं प्रत्यावर्त्तितवन्तं सूतं प्रति मोहावसाने दुर्य्योधनस्य भर्त्सनमिदम् । प्रकृतिदुर्ल्ललितस्य—प्रकृत्या—स्वभावेन, दुर्ल्ललितस्य—दुर्व्विलसितस्य, चञ्चलस्येति यावत्, वत्सस्य—दुःशासनस्य, पापः,—पापात्मा, भीम इत्यर्थः, पापम्—अनिष्टं, वक्षोविदारणरूपमित्यर्थः, विधास्यति—करिष्यति । अत्र सारथेः रणात् प्रत्यावर्त्तनकर्म्मणः तिरस्करणात् भर्त्सना ।

( ग ) नीतिमाह, नीतिरिति ।—शास्त्रेण—यथाशास्त्रं, वर्त्तनं—व्यवहरणं, शास्त्रानुसारेण कर्म्मानुष्ठानमित्यर्थः, नीतिः ।

( घ ) उदाहरति, यथेति ।—"तपोवनप्रवेशे औद्धत्यं त्यजेत्" इति शास्त्रमत्र द्रष्टव्यम् ।

( ङ ) अर्थविशेषणमाह, उक्तस्येति ।—उक्तस्य—कथितस्य, अर्थस्य—विषयस्य,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा शाकुन्तले,—"शार्ङ्गरवः। [ राजानं प्रति ] आः! कथमिदं नाम, किमिदमुपन्यस्तमिति। ननु भवानेव नितरां लोकवृत्तान्तनिष्णातः। (च)

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते।
अतः समीपे परिणेतुरिष्यते
प्रियाऽप्रिया वा प्रमदा स्वबन्धुभिः॥" (छ)

---

उपालम्भस्वरूपेण—तिरस्काररूपेण, अनेकधा—बहुधा, यत् उत्कीर्त्तनं—सूचनम्, उल्लेख इति यावत्, स्यात्, तत् अर्थविशेषणं स्यात्। [ "उपालम्भविशेषेण" इति पाठे तु—प्रतिकूलोक्तिखण्डनेनेति भावः ]।

( च ) उदाहरति, यथेति।—आः! कथमिदम्, उक्तमिति शेषः। उपन्यस्तं—वक्तुमारब्धम् ( "उपन्यासस्तु वाङ्मुखम्" इत्यमरः )। नितराम्—अतिशयेन, लोकवृत्तान्तनिष्णातः,—लोकवृत्तान्ते—लौकिकव्यवहारे इत्यर्थः, निष्णातः,—अभिज्ञः। [ "निनदीभ्यां स्नातेः कौशले" ( ८।३।८९ पा० ) इति षत्वम् ]।

( छ ) ननु "सत्यं परिणीता मया, यतो राजानो हि बहुपत्नीका भवन्ति, किन्तु कथं भवद्भिः असन्देशमानीता ?" इत्याशङ्क्याह, सतीमिति।—जनः,—लोकः, भर्तृमतीं—सधवां स्त्रियं, ज्ञातिकुलं—पितृकुलमित्यर्थः, एकः,—तन्मात्र इत्यर्थः, संश्रयः,—आश्रयः, यस्याः ताहृशीं, पित्रादिगृहमात्रवासिनीमित्यर्थः, सतीं—साध्वीमपि, अन्यथा—अन्यरूपाम्, [अत्र जनसंसदि तापसस्योक्तौ अनौचित्यदोषपरिहाराय कविना दुष्टेति पदमप्रयुज्य अन्यथेति प्रयुक्तमिति बोध्यम् ] विशङ्कते—विशेषेण आशङ्कते, तद्दोषं सम्भावयतीत्यर्थः; अतः ( कारणात् ) स्वबन्धुभिः, स्वस्याः,—स्त्रिया इत्यर्थः, बन्धुभिः,—पित्रादिभिः, प्रमदा—नारी, प्रकृष्टमदेत्यर्थः, ( वाईके तस्याः पितृभवनावस्थाने जनानां दोषशङ्काऽभावादिति भावः, अत एव स्त्रीसामान्यवाचकपदमपहाय प्रमदेति विशेषपदमुपात्तम्। "प्रमदः सम्मदे मत्ते स्त्रियामुत्तमयोषिति" इति मेदिनी ) प्रिया, अप्रिया वा, भवतु इति शेषः, परिणेतुः,—पत्युः, समीपे इष्यते, रक्षितुमिति शेषः। अत्र "किमिदमुपन्यस्तम्" इति राज्ञ उक्तौ तन्निर्भर्त्सनरूपेण "आः! कथम्" इत्यादिवाक्यद्वयेन "तदिदानीमापन्नसत्त्वेयं गृह्यतां सहधर्मचरणाय" इति स्वोक्तोऽर्थः शार्ङ्गरवेण मुहुः सूचितः इति अर्थविशेषणम्। अप्रस्तुतप्रशंसा च अर्थालङ्कारः। वंशस्थविलं वृत्तम्।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**प्रोत्साहनं स्यादुत्साहगिरा कस्यापि योजनम्॥५०३॥**(ज)

यथा बालरामायणे,—

"कालरात्रिकरालेयं स्त्रीति किं विचिकित्ससि ? ।
तज्जगत्त्रितयं त्रातुं तात ! ताड़य ताड़काम् ॥" (झ)

**साहाय्यं सङ्कटे यत् स्यात् सानुकूल्यं परस्य च॥५०४॥**(ञ)

यथा वेण्यां,—"अश्वत्थामा । [ कृपं प्रति ] त्वमपि तावद्राज्ञः पार्श्ववर्त्ती भव । कृपः । वाञ्छाम्यहमद्य प्रतिकर्त्तुम्"(ट) इत्यादि ।

**अभिमानः स एव स्यात् ॥ ५०५ ॥** (ठ)

यथा तत्रैव,—"दुर्य्योधनः,—
मातः ! किमप्यसदृशं कृपणं वचस्ते" इत्यादि । (ड)

(ज) प्रोत्साहनमाह, प्रोत्साहनमिति ।—उत्साहगिरा—उत्साहसूचकवाक्येन, कस्यापि योजनं—नियोजनं, कार्य्ये प्रवर्त्तनमित्यर्थः, प्रोत्साहनं, स्यात् । दशरूपककारस्तु "भेदः प्रोत्साहना मता" इत्याह ।

(झ) उदाहरति, कालरात्रीति ।—स्त्री इति हेतोः किं विचिकित्ससि ?—हन्यां न वेति संशयं करोषि ? ("विचिकित्सा तु संशयः" इत्यमरः ) हे तात ! (सप्रेमसम्बोधनमिदम् ) इयं, राक्षसीति शेषः, कालरात्रिवत्—प्रलयरात्रिवत, ("कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा" इति दुर्गासप्तशतीवाक्यव्याख्यायां गुप्तवतीसमाख्यायां कालरात्रिशब्दस्य व्याख्या यथा,—"कालरात्रिः सर्व्वजन्तुमरणोपलक्षिता कल्परात्रिः" इति सर्व्वमवदातम् ) कराला—दारुणा, त्रिलोकग्रासिनीत्यर्थः, तत्—तस्मात्, जगतां त्रितयं—त्रिभुवनमित्यर्थः, त्रातुं—रक्षितुं,—ताड़कां ताड़य—जहि । अत्र उत्साहवाक्येन रामस्य ताडकावधे प्रवर्त्तनम् ।

(ञ) साहाय्यमाह, साहाय्यमिति ।—सङ्कटे—विपदि, परस्य सानुकूल्यम्—अनुकूलतया सह वर्त्तनं, यत् तत् साहाय्यं स्यात् ।

(ट) उदाहरति, यथेति ।—प्रतिकर्त्तुं—प्रत्यर्थिनां शस्त्रातिपातं निवार्य्य तेषु शस्त्रातिपातविधानेन प्रतिकारायेत्यर्थः । स्पष्टमन्यत् । अत्र रणव्यापाररूपे सङ्कटे राज्ञो दुर्य्योधनस्य आनुकूल्यविधानम् ।

(ठ) अभिमानमाह, अभिमान इति ।—स एव—अभिमानालङ्कार एव ।

(ड) उदाहरति, यथेति ।—तत्रैव—वेणीसंहारे एव । मातरिति ।—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रश्रयादनुवर्त्तनम्।

अनुवृत्तिः॥ ५०६ ॥ (ढ)

यथा शाकुन्तले,—"राजा। [शकुन्तलां प्रति] अयि! तपो वर्द्धते ? अनसूया। दाणिं अदिधिविसेसलाहेण" (ण) इत्यादि।

भूतकार्य्याख्यानमुत्कीर्त्तनं मतम्॥५०७॥(त)

यथा बालरामायणे,—

"अत्रासीत् फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढ़ं वक्षसि ताड़िते हनुमता द्रोणाद्रिरत्राहृतः।"इत्यादि।(थ)

---

भीमेन दुःशासनादौ मारिते तेन सह पुनर्योद्धुमीहमानस्य मात्रा गान्धार्य्या च निषिद्धस्य दुर्य्योधनस्येयमुक्तिः। हे मातः!—गान्धारि! ते—तव, सुचरित्राया इति यावत, वचः,—वचनं, किमपि—अशोभनं, वक्तुमनर्हमित्यर्थः, असदृशम्—अयोग्यं, कृपणं—क्षुद्रम; ["कृपणम" इत्यत्र "विकृतम्" इति पाठे—विपरीतम्]। चरमपादद्वयौ त्वेषा—"सुचरिता क्व भवती क्व च दीनतैषा। निर्वत्सले! सुतशतस्य विपत्तिमेतां, त्वं नानुचिन्तयसि रचसि मामयोग्यम॥" इति। अत्र मातुराक्षेपेण दुर्य्योधनस्य अभिमानः सूच्यते। वसन्ततिलकं वृत्तम्।

(ढ) अनुवृत्तिमाह, प्रश्रयादिति।—प्रश्रयात्—विनयात्, अनुवर्त्तनम्—अनुसरणं, प्रतिवचनादिना सन्तोषणमिति यावत, अनुवृत्तिः।

(ण) उदाहरति, दाणिमिति।—["इदानीमतिथिविशेषलाभेन" इति संस्कृतम्]। अतिथिविशेषस्य—अतिथिश्रेष्ठस्य, भवत इत्यर्थः। अन्यत् स्पष्टम्। अत्र अनसूयायाः राजानं प्रत्युत्तरदाने प्रश्रयपूर्व्विकानुवृत्तिः।

(त) उत्कीर्त्तनमाह, भूतेति।—भूतस्य—वृत्तस्य, कार्य्यस्य आख्यानं—कथनम्, उत्कीर्त्तनं मतम्।

(थ) उदाहरति, अत्रेति।—अत्र—अस्मिन् देशे, फणिनां—नागानां, पाशस्तेन बन्धनं तस्य विधिः,—विधानम्, आसीत्; अत्र च भवद्देवरे—भवत्याः,—तव, सीताया इत्यर्थः, देवरः,—लक्ष्मण इति भावः, तस्मिन्, शक्त्या—मेघनादस्य शक्तिनामास्त्रविशेषेण, वक्षसि गाढ़म्—अत्यर्थं, ताड़िते—प्रहृते इत्यर्थः, सति हनुमता, तत्सञ्जीवनार्थमिति शेषः, द्रोणाद्रिः,—गन्धमादनपर्व्वत इत्यर्थः, आहृतः। एतस्य परार्द्धं त्वेतत्,—"दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं लम्भितः, केनाप्यत्र मृगाक्षि!

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

या त्वा तु क्वापि याञ्चा या स्वयं दूतमुखेन वा॥५०८॥(द)

यथा,—

"अद्यापि देहि वैदेहीं दयालुस्त्वयि राघवः ।
शिरोभिः कन्दुकक्रीड़ां किं कारयसि वानरान् ? ॥"(ध)

परिहार इति प्रोक्तः कृताऽनुचितमार्ज्जनम्॥५०९॥(न)

यथा,—

"प्राणप्रयाणदुःखार्त्त उक्तवानस्म्यनक्षरम् ।
तत् क्षमस्व विभो ! किञ्च सुग्रीवस्ते समर्पितः ॥" (प)

---

राक्षसपतेः कृत्ता च कण्ठाटवी ॥" इति । अत्र सीतां प्रति रामस्य मृतस्य नागपाशबन्धनादेः कार्य्यस्य कथनम् । शार्दूलविक्रीड़ितं वृत्तम् ।

(द) याञ्चामाह, याञ्चेति ।—स्वयं, वा दूतमुखेन क्वापि जने या याञ्चा—प्रार्थना, सा याञ्चा ।

(ध) दूतमुखेन उदाहरति, अद्यापीति ।—रावणं प्रति अङ्गदस्योक्तिरियम् । अद्यापि—इदानीमपि, वैदेहीं—सीतां, देहि—प्रत्यर्पय, राघवः,—रामः, त्वयि—आततायिनि, दयालुः, अस्तीति शेषः; शिरोभिः,—रामबाणप्रहारेण निपतितैः मस्तकैः, दशभिरिति भावः, वानरान् किं—कथं, कन्दुकक्रीड़ां कारयसि ? वानरास्तव संग्रामपतितैः शिरोभिः कन्दुकक्रीड़ां करिष्यन्ति, तत् कथं सहसे ? इति भावः । [ अत्र "हृक्रोरन्यतरस्याम्" (१।४।५३ पा०) इति सूत्रेण "वानरान्" इति प्रयोज्यकर्त्तुः पाक्षिकं कर्म्मत्वम् ] स्वयं याञ्चाया उदाहरणम् ;—"भो लङ्केश्वर ! दीयतां जनकजा रामः स्वयं याचते" इत्यादि ।

(न) परिहारमाह, परिहार इति ।—कृतस्य अनुचितस्य, कर्म्मण इति शेषः, मार्ज्जनं—तज्जन्यापराधक्षमापनं, परिहार इति प्रोक्तः ।

(प) उदाहरति, प्राणेति ।—रामं प्रति बालिन उक्तिः । प्राणप्रयाणे—प्राणान्तसमये, यत् दुःखं—यातना, तेन आर्त्तः,—व्यथितः, सन् यत् अनक्षरं—दुरक्षरमित्यर्थः, उक्तवान्—"त्वया तपस्विचाण्डाल !" इत्यादि कटुवाक्यं कथितवान्, अस्मि, हे विभो !—श्रीराम ! तत् क्षमस्व ; किञ्च—अन्यच्च, सुग्रीवः,—मम कनीयान् भ्राता, ते—तुभ्यं, समर्पितः । अत्र अनुचितकार्य्यस्य पूर्व्वकृतस्य क्षमाप्रार्थनारूपं मार्ज्जनम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अवधीरितकर्त्तव्यकथनन्तु निवेदनम् ॥ ५१० ॥(फ)

यथा राघवाभ्युदये,—"लक्ष्मणः। आर्य्य ! समुद्राभ्यर्थनया गन्तुमुद्यतोऽसि !! तत् किमेतत् ?" (ब)

प्रवर्त्तनन्तु कार्य्यस्य यत् स्यात् साधु प्रवर्त्तनम् ॥५११॥(भ)

यथा वेण्यां,—"राजा। कञ्चुकिन् ! देवस्य देवकीनन्दनस्य बहुमानात् वत्सस्य भीमसेनस्य विजयमङ्गलाय प्रवर्त्तन्ताम् ; तत्रोपचिताः समारम्भाः ।" (म)

आख्यानं पूर्व्ववृत्तोक्तिः ॥ ५१२ ॥ (य)

यथा तत्रैव,—"देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः" इत्यादि । (र)

---

(फ) निवेदनमाह, अवधीरितेति ।—अवधीरितस्य—अवज्ञातस्य, तिरस्कृतविषयस्येति यावत्, कर्त्तव्यकथनं—कर्त्तव्यत्वेनाभिधानं, निवेदनम् ।

(ब) उदाहरति, यथेति ।—स्पष्टम् । अत्र समुद्राभ्यर्थनया गमनं चिरमवज्ञातं, कथं पुनस्तद्द्वारा गमनमिति लक्ष्मणस्य तद्वारणं निवेदनम् ।

(भ) प्रवर्त्तनमाह, प्रवर्त्तनमिति ।—कार्य्यस्य यत् साधु प्रवर्त्तनं, तत् प्रवर्त्तनं स्यात् ।

(म) उदाहरति, यथेति ।—उपचिताः,—वर्द्धिताः, समारम्भाः,—समुद्योगाः । अत्र युद्धकार्य्यस्य सम्यक् प्रवर्त्तनम् ।

(य) आख्यानमाह, आख्यानमिति ।—पूर्व्ववृत्तस्य—पुराघटितस्य, उक्तिः,—कथनम्, आख्यानम् ।

(र) उदाहरति, यथेति ।—तत्रैव—वेणीसंहारे एव । देश इति ।—सः,—पुराणादौ श्रुतः, अयं—प्रत्यक्षः कुरुक्षेत्ररूपो देशः, यस्मिन्—यदेकदेशे, समन्तपञ्चकनामके, ह्रदाः,—जलाशयाः, अरातीनां—पितृवधकर्त्तॄणां हैहयानां, शोणितानि जलानीव तैः पूरिताः । अन्यं पादत्रयं तु एतस्य,—"क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः । तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे, यद्रामेण कृतं तदेव कुरुते द्रौणायनिः क्रोधनः ॥" अत्र हैहयशोणितैः ह्रदपूरणादिकं पूर्व्ववृत्तान्तः इति । शार्दूलविक्रीड़ितं वृत्तम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

युक्तिरर्थावधारणम् ॥ ५१३ ॥ (ल)

यथा तत्रैव,—

"यदि समरमपास्य नास्ति मृत्यो-
र्भयमिति युक्तमितोऽन्यतः प्रयातुम्।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः कुरुध्वम्?" ॥ (व)

प्रहर्षः प्रमदाधिक्यम् ॥ ५१४ ॥ (श)

यथा शाकुन्तले,—"राजा। तत् किमिदानीमात्मानं पूर्णमनोरथं नाभिनन्दामि?" (ष)

शिक्षा स्यादुपदेशनम् ॥ ५१५ ॥ (स)

यथा तत्रैव,—"सहि! ण जुत्तं अस्समवासिणो जणस्स अकिदसक्कारं अदिधिविसेसं उज्झिअ सच्छन्ददो गमणं"। (ह)

---

(ल) युक्तिमाह, युक्तिरिति।—अर्थस्य—प्रयोजनस्य, अवधारणं—कर्त्तव्यत्वनिश्चयः, युक्तिः।

(व) उदाहरति, यदीति।—यदि समरं—युद्धम्, अपास्य—त्यक्त्वा, (स्थितस्येत्यध्याहार्य्यं) मृत्योः भयं नास्ति—न भवेत् इत्यर्थः, तदा इतः,—समरात्, अन्यतः,—अन्यत्र, प्रयातुं—गन्तुं, युक्तम्—उचितम्, इति। अथ—पक्षान्तरे, जन्तोः,—प्राणिनः, मरणम् अवश्यमेव—निश्चितमेव, भविष्यतीति शेषः, ("मृत्युर्जन्मवतां वीर! देहेन सह जायते। अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः॥" इत्यादि भागवतवचनादिना तस्य समर्थितत्वात्) तदा किमिति—कथं, मुधा—वृथा, निष्कारणमित्यर्थः, यशः मलिनं कुरुध्वम्? अत्र समरः कर्त्तव्य एवेत्यर्थावधारणम्। पुष्पिताग्रा वृत्तम्।

(श) प्रहर्षमाह, प्रहर्ष इति।—प्रमदस्य—प्रकृष्टानन्दस्य, आधिक्यम्—औत्कर्ष्यम्, आतिशय्यमिति यावत्, प्रहर्षः।

(ष) उदाहरति, यथेति।—स्पष्टम्। अत्र शकुन्तलायाः पुनः प्राप्तौ आनन्दातिशयः।

(स) शिक्षेति।—शिक्षा—शास्त्राविरोधि उपदेशवचनम्, उपदेशनम्।

(ह) उदाहरति, सहीति।—["सखि! न युक्तमाश्रमवासिनो जनस्याकृत-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एषाञ्च लक्षणं नाट्यालङ्काराणां समान्यत एकरूपत्वेऽपि भेदेन व्यपदेशो गड्डलिकाप्रवाहेण। एषु च (क) केषाञ्चिद् गुणालङ्कारभावसन्ध्यङ्गविशेषान्तर्भावेऽपि नाटके प्रयत्नतः कर्त्तव्यत्वात् तद्विशेषोक्तिः। एतानि च, (ख)—

"पञ्चसन्धि चतुर्वृत्ति चतुःषष्ट्यङ्गसंयुतम्।
षट्त्रिंशल्लक्षणोपेतमलङ्कारोपशोभितम्॥
महारसं महाभोगमुदात्तरचनाऽन्वितम्।
महापुरुषसञ्चारं साध्वाचारं जनप्रियम्॥
सुश्लिष्टसन्धियोगञ्च सुप्रयोगं सुखाश्रयम्।
मृदुशब्दातिपातञ्च कविः कुर्य्यात्तु नाटकम्॥" (ग)

---

सत्कारमतिथिविशेषमुज्झित्वा स्वच्छन्दतो गमनम्" इति संस्कृतम्]। स्पष्टम्। अत्र शकुन्तलां प्रति तत्सख्या उपदेशवाक्यम्।

(क) ननु भूषणादीनि यानि लक्षणान्युक्तानि, तानि नाट्यभूषणहेतुत्वरूप-सामान्यधर्म्मयोगेण नाट्यालङ्कारमध्य एवान्तर्भवितुमर्हन्ति, तदेषां भिन्नत्वेनोपादान-मनतिप्रयोजनमित्यभिप्रायेणाह, एषामिति।—यदि च भूषणादीनि पूर्वोक्तानि नाट्य-भूषणहेतुत्वरूपसामान्यधर्म्मयोगात् नाट्यालङ्कारेऽन्तर्भवितुमर्हन्ति, तथाऽप्येषां भेदकथनं गड्डलिकाप्रवाहेण—गतानुगतिकन्यायेन इत्यर्थः, प्राचीनोक्तरीत्येति भावः। ननु भूषणस्य यथायथं गुणेऽलङ्कारे च, शोभायाः श्लेषे, विशेषणस्य विशेषोक्त्यलङ्कारे, एवमाशीरादिनाट्यालङ्काराणामाशीराद्यलङ्कारेषु, तथा युक्त्यादीनां युक्त्यादिसन्ध्यङ्गेषु चान्तर्भावे सिद्धे पुनरुपादानमनर्थकमित्यत आह, एषु चेति।—एषु—लक्षणनाट्याल-ङ्कारेषु।

(ख) एतानीति।—एतानि—लक्षणादीनि "नाटके अवश्यं कर्त्तव्यानि" इत्यग्रेणान्वयः।

(ग) पञ्चेति।—पञ्च सन्धयः,—मुखादयः, यत्र तत्, चत्वारः वृत्तयः,—कौशिक्यादयः, यत्र तत्, चतुःषष्ट्या अङ्गैः पूर्वोक्तैः संयुतं, षट्त्रिंशता लक्षणैः पूर्वोक्तैः, उपेतं—युक्तम्, अलङ्कारैः,—नाट्यालङ्कारैः पूर्वोक्तैः, उपशोभितं, महान्—परिपुष्ट इत्यर्थः, रसः,—शृङ्गारः वीरो वा, यत्र तादृशं, महान् भोगः,—भावादिः यत्र तादृशं, महासहायं वा, उदात्ता—विलासहर्षादिगुणयुक्ता इति भावः, या रचना तया

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इति मुनिनोक्तत्वात् नाटकेऽवश्यं कर्त्तव्यान्येव । वीथ्यङ्गानि वक्ष्यन्ते ।

लास्याङ्गान्याह,—

गेयपदं स्थितपाठ्यमासीनं पुष्पगण्डिका ।
प्रच्छेदकस्त्रिगूढ़ञ्च सैन्धवाख्यं द्विगूढ़कम् ॥
उत्तमोत्तमकञ्चान्यदुक्तप्रत्युक्तमेव च ।
लास्ये दशविधं ह्येतदङ्गमुक्तं मनीषिभिः ॥५१६॥(घ)

तत्र,—

तन्त्रीभाण्डं पुरस्कृत्योपविष्टस्यासने पुरः ।

---

अन्वितं—युक्तं, महापुरुषस्य—नायकप्रधानस्य, धीरोदात्तस्य इत्यर्थः, सञ्चारः,—स्थितिः, यस्मिन् तथोक्तं,["सञ्चारम्" इत्यत्र "सत्कारम्" इति वा पाठः ; तत्र सत्कारः,—गुणवर्णनं यत्र इति विग्रहः ] साधुः,—सद्भिरनुष्ठेय इत्यर्थः, आचारः,—व्यवहारः, यद्वा,—साधुः,—अविगीतः, आचारः,—वैदिकं कर्म्म, यत्र तादृशं, जनप्रियं—लोकरञ्जनं, सुश्लिष्टः सन्धिः,—मुखादिः, योगः,—समावेशः, यस्मिन् तथाभूतं, सुप्रयोगं—सुखाभिनयं, सुखाश्रयम्—आनन्दनिलयं, मृदुः,—सुकोमलः, शब्दानाम् अतिपातः,—प्रयोगः, ["अतिपातः" इत्यत्र "अभिपातः" "अभिधानम्" इति च पाठान्तरम् ] यस्मिन् तथाभूतं, नाटकं कविः कुर्य्यादित्यन्वयः । अत एव मुनिना पुनरन्यत्र समर्थितं,—"चेक्रीयते प्रभृतिभिर्विकृतैश्च शब्दैर्युक्ता न भान्ति ललिता भरतप्रयोगाः । यज्ञक्रियेव शरवर्म्मधरैर्घृताक्तैः वेश्या द्विजैरिव कमण्डलुदण्डहस्तैः ॥" इति । नाटकस्य प्राधान्यमपि तेनैव प्रतिपादितम् ;—"न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला । न तत् कर्म्म न वा योगो नाटके यन्न दृश्यते ॥" इति ।

(घ) गेयपदमिति ।—गेयपदादीनि दश लास्याङ्गानि मनीषिभिरुक्तानीत्यर्थः । "ताण्डवं नटनं नाट्य लास्यं नृत्यञ्च नर्त्तने" इत्यमरेण नृत्यपर्य्याये लास्यशब्दः कथितः ; अत्र तु गेयपदादिलक्षणेन लास्यशब्दस्य गानपरता तथा वक्ष्यमाणपुष्पगण्डिकालक्षणे,—"आतोद्यमिश्रितं" "स्त्रीपुंसयोर्विपर्य्यासचेष्टितम्" इत्युक्तेः नृत्यगन्धिगानपरता च । तेन अत्र लास्यशब्देन नृत्य-गीत-वाद्यान्येव लक्ष्यन्ते इति ; अत एवोक्तं मेदिनीकारेण "लास्यं तौर्य्यत्रिके मतम्" इति दिक् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शुष्कं गानं गेयपदम् ॥ ५१७ ॥ (ङ)

यथा गौरीगृहे वीणां वादयन्ती मलयवती,—

"उत्फुल्लकमलकेसरपरागगौरद्युते ! मम हि गौरि ! ।

अभिवाञ्छितं प्रसिध्यतु भगवति ! युष्मत्प्रसादेन ॥" (च)

स्थितपाठ्यं तदुच्यते ।

मदनोत्तापिता यत्र पठति प्राकृतं स्थिता॥५१८॥(छ)

अभिनवगुप्तपादास्त्वाहुः,—"उपलक्षणञ्चैतत् ; क्रोधोद्भ्रान्तस्यापि प्राकृतपठनं स्थितपाठ्यम्" इति ।

निखिलातोद्यरहितं शोकचिन्ताऽन्विताऽबला ।

अप्रसाधितगात्रं यदासीनासीनमेव तत् ॥५१९॥(ज)

---

(ङ) गेयपदमाह, तन्त्रीति।—तन्त्रीभाण्डं—वीणायन्त्रं, पुरस्कृत्य—अग्रेकृत्य, गानोपायोपयोगित्वेनादृत्येत्यर्थः, पुरः,—अग्रतः, आसने उपविष्टस्य यत् शुष्कं—शृङ्गारादिरसविरहितमित्यर्थः, गानं तत् गेयपदम्। उक्तञ्च भरतेन,—"आसनेषूपविष्टैर्यत् तन्त्रीभाण्डोपबृंहितम्। गायनैर्गीयते शुष्कं तद् गेयपदमुच्यते ॥" इति।

(च) उदाहरति, उत्फुल्लमिति।—उत्फुल्लं—विकसितं, यत् कमलं—पद्मं, तस्य केसरपरागवत्—किञ्जल्करजोरागवत् गौरी—गौरवर्णा, द्युतिः,—दीप्तिः यस्याः तादृशि ! कनकप्रभे ! इत्यर्थः, भगवति ! गौरि !—पार्व्वति ! युष्मत्प्रसादेन—भवत्याः अनुग्रहेण, मम अभिवाञ्छितं—प्रार्थितं, हि—निश्चितं, प्रसिध्यतु—सफलतामेतु। आर्य्या वृत्तम्। नागानन्दस्य पद्यमिदम्।

(छ) स्थितपाठ्यमाह, स्थितपाठ्यमिति।—यत्र मदनेन उत्तापिता स्थिता सती, प्राकृतं—यथायथमिति भावः, पठति, तत्—लास्यमित्यर्थः, स्थितपाठ्यम् उच्यते। यथा—विक्रमोर्व्वश्यामुर्व्वशीगानम्।

(ज) आसीनमाह, निखिलेति।—शोकेन चिन्तया चान्विता अबला अप्रसाधितम्—अनलङ्कृतं, गात्रं यस्मिन् तत् यथा तथा, आसीना—उपविष्टा सती, निखिलातोद्यरहितं—निखिलेन आतोद्येन—वाद्येन, ("चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्" इत्यमरः) रहितं, केनापि वाद्येन न सङ्गतमित्यर्थः, यत्, गायति इति शेषः, तत् आसीनम्। उदाहरणमूह्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आतोद्यमिश्रितं गेयं छन्दांसि विविधानि च ।
स्त्रीपुंसयोर्विपर्य्यासचेष्टितं पुष्पगण्डिका ॥५२०॥ (झ)
अन्यासङ्गं पतिं मत्वा प्रेमविच्छेदमन्युना ।
वीणापुरःसरं गानं स्त्रियाः प्रच्छेदको मतः ॥५२१॥ (ञ)
स्त्रीवेशधारिणां पुंसां नाट्यं श्लक्ष्णं त्रिगूढकम् ॥५२२॥ (ट)

यथा मालत्यां,—"मकरन्दः । एषोऽस्मि मालती संवृत्तः ।"

कश्चन भ्रष्टसङ्केतः सुव्यक्तकरणान्वितः ।
प्राकृतं वचनं वक्ति यत्र तत् सैन्धवं विदुः ॥५२३॥ (ठ)

करणं—वीणादिक्रिया ।

---

(झ) पुष्पगण्डिकामाह, आतोद्येति ।—आतोद्येन—वादित्रेण, मिश्रितं—सङ्गतं, गेयं, विविधानि—नानाप्रकाराणि, छन्दांसि—छन्दोबन्धनपूर्व्वकगीतानि इत्यर्थः, तथा स्त्रीपुंसयोः विपर्य्यासचेष्टितं—विपर्य्यासेन—वैपरीत्येन, चेष्टितं—नृत्यगीताद्यभिनयो यत्र तत्, वैपरीत्यप्रकटनमिति भावः, पुष्पगण्डिका । यदुक्तं भरतेन,—"नृत्यन्तु द्विविधं यत्र गीतमातोद्यमेव च । स्त्रियः पुंवच्च चेष्टन्ते सा ज्ञेया पुष्पगण्डिका ॥" इति ।

(ञ) प्रच्छेदकमाह, अन्येति ।—पतिम् अन्यासङ्गम्—अन्यस्याम् आसक्तमित्यर्थः, मत्वा प्रेमविच्छेदेन यः मन्युः,—शोकः, तेन हेतुना स्त्रियाः वीणापुरःसरं गानं प्रच्छेदकः मतः । यथा शाकुन्तले,—"अहिणवमहुलोहभाविदो" इत्यादि । [ "अभिनवमधुलोभभावितः" इति संस्कृतम् ] ।

(ट) त्रिगूढमाह, स्त्रीति ।—स्त्रीवेशधारिणां पुंसां श्लक्ष्णं—मनोज्ञं, नाट्यं—नर्त्तनादिविकं, त्रिगूढकं—त्रीणि नर्त्तनादीनि गूढानि यत्र तथोक्तम् । अत्र पुंस्त्व-वाक्य-भावानां त्रयाणां गोपनात् त्रिगूढत्वम् ।

(ठ) सैन्धवमाह, कश्चनेति ।—भ्रष्टसङ्केतः,—सङ्केतस्थाने नायिकाया अनागमनात् च्युतसङ्केतस्थान इत्यर्थः, सुव्यक्तेन—समग्रेणेत्यर्थः, करणेन—कामोद्दीपकवीणादिसाधनेनेत्यर्थः, अन्वितोऽपि कश्चन—कोऽपि पुरुषः, यत्र प्राकृतं वचनं वक्ति, तत् सैन्धवं विदुः । यथा उत्तरकाण्डे रावणधृतायाः रम्भायाः अनागमने नलकूबरः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

चतुरस्रपदं गीतं मुखप्रतिमुखान्वितम्।
द्विगूढं रसभावाढ्यम् ॥ ५२४ ॥ (ड)
उत्तमोत्तमकं पुनः।
कोपप्रसादजमधिक्षेपयुक्तं रसोत्तरम्।
हावहेलान्वितं चित्रश्लोकबन्धमनोहरम् ॥५२५॥ (ढ)
उक्तिप्रत्युक्तिसंयुक्तं सोपालम्भमलीकवत्।
विलासान्वितगीतार्थमुक्तप्रत्युक्तमुच्यते ॥ ५२६ ॥ (ण)
स्पष्टान्युदाहरणानि।
एतदेव यदा सर्वैः पताकास्थानकैर्युतम्।
अङ्कैश्च दशभिर्धीरा महानाटकमूचिरे ॥५२७॥ (त)

(ड) द्विगूढमाह, चतुरस्रपदमिति।—चतुरस्राणि—सामाजिकमनोहराणीति भावः, पदानि यत्र तादृशं, यद्वा,—चतुरस्रपदं—स्वरग्रामादिपूर्णं, मुखसन्धिप्रतिमुखसन्धिसमन्वितम्—उक्तिप्रत्युक्तिसहितं, रसभावाभ्याम् आढ्यं—पूर्णं चेति विशेषणत्रयविशिष्टं गीतं द्विगूढं, नाम ज्ञेयमिति शेषः।

(ढ) उत्तमोत्तमकमाह, उत्तमोत्तमकमिति।—कोपप्रसादाभ्यां जातम्, अधिक्षेपः,—तिरस्कारः, तद्युक्तं, रसोत्तरं—सरसमित्यर्थः, हावेन—"भ्रूनेत्रादिविकारैस्तु" इति लक्षणोक्तेन, हेलया—"हेलाऽत्यन्तसमालक्ष्यविकारः स्यात् स एव च" इत्युक्तलक्षणेन भावविशेषेण, अन्वितं, चित्रेण—मनोज्ञेन, श्लोकबन्धेन—पद्यरचनेन, मनोहरं गीतं पुनः उत्तमोत्तमकम्।

(ण) उक्तप्रत्युक्तमाह, उक्तीति।—उक्तिप्रत्युक्तिभ्यां—वचनोत्तराभ्यां, संयुक्तं, सोपालम्भ—तिरस्कारव्यञ्जकम्, अलीकवत्—मृषावादसहितम्, अप्रियवद्वा, विलासेन अन्वितः,—युक्तः, गीतस्य अर्थः यत्र तादृशं, गीतम् उक्तप्रत्युक्तम् उच्यते। एतेषामुदाहरणानि सनातनगीता-गीतगोविन्दादौ यथायथं मृग्याणि।

(त) महानाटकमाह, एतदिति।—एतत्—नाटकम्, एव यदा सर्वैः,—पूर्वोक्तैः, पताकास्थानकैः, दशभिरङ्कैश्च युतं, तदा धीराः,—विद्वांसः, महानाटकम् ऊचिरे—उक्तवन्तः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एतदेव नाटकम् । यथा,—बालरामायणम् ।

अथ प्रकरणम्,—

**भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितम् ।**
**शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् ।**
**सापायधर्म्मकामार्थपरो धीरप्रशान्तकः ॥ ५२८ ॥ (थ)**

विप्रनायकं यथा,—मृच्छकटिकम् । अमात्यनायकं,—मालतीमाधवम् । वणिङ्नायकं,—पुष्पभूषितम् ।

**नायिका कुलजा क्वापि वेश्या, क्वापि द्वयं क्वचित् ।**
**तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः ।**
**कितवद्यूतकारादिविटचेटकसङ्कुलः ॥ ५२९ ॥ (द)**

कुलस्त्री पुष्पभूषिते । वेश्या तु रङ्गदत्ते । द्वे अपि

---

(थ) नाटकमुक्त्वा प्रकरणमाह, अथेत्यादिना ।—भवेदिति ।—प्रकरणे वृत्तं—वर्णनीयं नायकचरितं, लौकिकं—लोकचरित्रमात्रप्रसिद्धम्, अत एव कविना कल्पितं—स्वकपोलरचितमित्यर्थः, न तु पुराणादिप्रसिद्धं, भवेत् । शृङ्गारः अङ्गी—प्रधानम्; नायकः धीरप्रशान्तकः,—पूर्वोक्तलक्षणकः, सापायाः,—अपायः,—क्षयः, तत्सहिताः, ये धर्माः,—स्वर्गसाधनभूताः, कामाः,—स्त्रीपुत्रादयः, अर्थाः,—भोगसाधनानि, धनादीनीति यावत्, तत्परः,—तदासक्तः, न तु अपायरहितमुक्तिकामोति भावः। धर्मस्य स्वर्गसाधनत्वेन, कामस्य पुत्रपश्वादिविषयकत्वेन, अर्थस्य भोगसाधनत्वेन सापायत्वं प्रसिद्धम् ।

(द) नायिकेति ।—क्वापि—प्रकरणे, नायिका कुलजा—कुलीना, क्वापि वेश्या—गणिका, क्वचिद्वा द्वयं—कुलजा वेश्या चेत्यर्थः, तेन—नायिकाभेदेन, (हेतुना) तस्य—प्रकरणस्य, त्रयः भेदाः,—विशेषाः । तत्र—तेषु भेदेषु, तृतीयः भेदः,—यत्र कुलजा वेश्या च नायिका, स इति भावः, कितवः,—धूर्त्तः, द्यूतकारः, [ आदिपदेन सभिकादीनां ग्रहणं ]. तथा विटः,—पूर्व्वोक्तलक्षणः, तथा चेटकः एतैः सङ्कुलः,—व्याप्तः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मृच्छकटिकायाम्। अस्य नाटकप्रकृतित्वात् (ध)। शेषं नाटकवत्।

अथ भाणः,—

भाणः स्याद्धूर्त्तचरितो नानाऽवस्थान्तरात्मकः।
एकाङ्क एक एवात्र निपुणः पण्डितो विटः॥
रङ्गे प्रकाशयेत् स्वेनानुभूतमितरेण वा।
सम्बोधनोक्तिप्रत्युक्ती कुर्य्यादाकाशभाषितैः॥
सूचयेद्वीरशृङ्गारौ शौर्य्यसौभाग्यवर्णनैः।
तत्रेतिवृत्तमुत्पाद्यं वृत्तिः प्रायेण भारती।
मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च॥५३०॥(न)

तत्र आकाशभाषितरूपं परवचनमपि स्वयमेवानुवदन्नुत्तरप्रत्युत्तरे कुर्य्यात्। शृङ्गारवीररसौ च सौभाग्यशौर्य्यवर्णनया

(ध) अस्येति।—"विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्" इत्युक्तेः अस्य—प्रकरणस्य, नाटकमेव प्रकृतिः,—मूलकारणं यस्य तथोक्तः, तस्य भावः तस्मात्।

(न) भाणमाह, भाण इति।—धूर्त्तस्य नायकस्य इति शेषः, चरितं यत्र सः, नानाविधम् अवस्थान्तरं—कार्य्यसाधर्म्यभेदः, दशाभेदः वा, आत्मा—स्वरूपं यस्य तादृशः, [निरुक्तप्रारम्भादिपञ्चविधावस्थातिरिक्तावस्थालाभाय अन्तरपदम्] तथा एकाङ्कः,—एकेनैव अङ्केन समापनीय इत्यर्थः, भाणः स्यात्। अत्र एक एव निपुणः,—चतुरः, पण्डितः विटः स्वेन—आत्मना, इतरेण वा अनुभूतं, वस्तु इति शेषः, रङ्गे—नाट्यशालायां, प्रकाशयेत्। आकाशभाषितैः सम्बोधनेन उक्तिप्रत्युक्ती कुर्य्यात्। शौर्य्यसौभाग्यवर्णनैः वीरशृङ्गारौ रसौ,—शौर्य्यवर्णनेन वीरं, सौभाग्यवर्णनेन शृङ्गारमित्यर्थः, सूचयेत्, न तु प्रधानत्वेन प्रयुञ्जीतेति भावः। तत्र—भाणे, इतिवृत्तं—वर्णनीयं वस्तु, उत्पाद्यं—कविभिः कल्पनीयं, न तु पुराणादिप्रसिद्धमित्यर्थः, प्रायेण—बाहुल्येन, मुख्यत्वेन इत्यर्थः, भारती वृत्तिः, मुखं निर्वहणञ्चेत्येतौ सन्धी, तथा लास्याङ्गानि दशापि, प्रयोज्यानीति शेषः।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सूचयेत् । प्रायो भारती, क्वापि कौशिक्यपि वृत्तिर्भवति । लास्याङ्गानि—गेयपदादीनि । उदाहरणं,—लीलामधुकरः ।

अथ व्यायोगः,—

ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः ।
हीनो गर्भविमर्षाभ्यां नरैर्बहुभिराश्रितः ॥
एकाङ्कश्च भवेदस्त्रीनिमित्तसमरोदयः ।
कौशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः ॥
राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः ।
हास्यशृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसाः ॥५३१॥ (प)

यथा,—सौगन्धिकाहरणम् ।

अथ समवकारः,—

वृत्तं समवकारे तु ख्यातं देवासुराश्रयम् ।
सन्धयो निर्विमर्षास्तु त्रयोऽङ्कास्तत्र चादिमे ॥
सन्धी द्वावन्त्ययोस्तद्वदेक एको भवेत् पुनः ।
नायका द्वादशोदात्ताः प्रख्याता देवमानवाः ॥
फलं पृथक् पृथक् तेषां वीरमुख्योऽखिलो रसः ।
वृत्तयो मन्दकौशिक्यो नात्र बिन्दुप्रवेशकौ ॥

---

(प) व्यायोगमाह, ख्यातेतिवृत्त इति ।—ख्यातं—पुराणादिषु प्रसिद्धम्, इतिवृत्तं यस्य यत्र वा तादृशः, व्यायुज्यन्तेऽस्मिन् बहवः पुरुषा इति व्यायोगः, गर्भविमर्षाभ्यां—तृतीयचतुर्थसन्धिभ्यां, हीनः,—गर्भविमर्षसन्धिरहित इत्यर्थः । अस्त्रीनिमित्तसमरोदयः,—स्त्रीनिमित्तं विना समरस्य—सङ्ग्रामस्य, उदयः,—उपस्थितिः, यस्मिन् तथाभूतः ; यथा—परशुरामस्य पितुर्वधं निमित्तीकृत्य हैहयवंश्यैः समं समरे प्रवृत्तिरिति बोध्यम् । कौशिकीति ।—कौशिक्या वृत्त्या रहितः, अत्र कौशिकीं वृत्तिं परित्यज्य अन्यया कयाऽपि वृत्त्या बन्धनं कुर्यात् इत्यर्थः । अन्यत् सुगमम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वीथ्यङ्गानि च तत्र स्युर्यथालाभं त्रयोदश।
गायत्र्युष्णिङ्मुखान्यत्र छन्दांसि विविधानि च॥
त्रिशृङ्गारस्त्रिकपटः कार्य्यश्चायं त्रिविद्रवः।
वस्तु द्वादशनाड़ीभिर्निष्पाद्यं प्रथमाङ्कगम्॥
द्वितीयेऽङ्के चतसृभिर्द्वाभ्यामङ्के तृतीयके॥५२२॥ (फ)

नाड़िका—घटिकाद्वयमुच्यते। विन्दुप्रवेशकौ च नाटकोक्तौ अपि नेह विधातव्यौ।

तत्र,—

धर्म्मार्थकामैस्त्रिविधः शृङ्गारः, कपटः पुनः।

(फ) समवकारमाह, वृत्तमिति।—देवासुराश्रयं—देवासुरसम्बद्धम्। निर्विमर्षाः,—विमर्षरहिताः, सन्धयः,—चतुर्थसन्धिं विना चत्वारः सन्धयः प्रयोज्या इत्यर्थः; अङ्काः,—तदाख्याः परिच्छेदाः, त्रयः, तत्र आदिमे अङ्के, द्वौ सन्धी—मुखप्रतिमुखे इति भावः, अन्त्ययोः,—द्वितीयतृतीययोरङ्कयोरित्यर्थः, एकः एकः,—गर्भः निर्वहणश्च, इत्यर्थः, सन्धिरिति शेषः, भवेत्। उदात्ताः,—धीरोदात्ताः, देवमानवाः,—दिव्यादिव्याः इत्यर्थः, ["देवमानवाः" इत्यत्र "देवदानवाः" इति पाठान्तरम्] तेषां—नायकानां, पृथक् पृथक्—भिन्नं भिन्नं, फलम्। अखिलः,—समग्रः, रसः वीरमुख्यः,—वीररस एव अङ्गी, अन्ये अङ्गानीति भावः। मन्दकौशिक्यः,—मन्दा कौशिकी यासु ताः, प्रायेण कौशिकीहीना इत्यर्थः। गायत्रीति।—गायत्री—षड़क्षरा वृत्तिः, उष्णिक्—सप्ताक्षरा वृत्तिः तत्प्रभृतीनि। विद्रवः,—गर्भसन्ध्यङ्गं, स च शङ्काभयत्रासकृतः सम्भ्रमः, नाटकप्रकृतित्वादेव विद्रवप्राप्तौ प्रकारत्रयस्यावश्यकत्वार्थमिदं वचनम्। द्वादशनाड़ीभिः,—चतुर्व्विंशतिघटिकाभिः, (उक्तञ्च दशरूपककृता,—"द्विसन्धिरङ्कः प्रथमः कार्य्यो द्वादशनालिकः। चतुर्द्विनालिकावन्त्यौ नालिका घटिकाद्वयम्॥" इति) प्रथमाङ्कगं—प्रथमाङ्कनिविष्टं वस्तु, निष्पाद्यं—सम्पादनीयम्। द्वितीयेऽङ्के चतसृभिः, नाड़ीभिः इति शेषः, घटिकाऽष्टकेन वस्तुनिष्पाद्यमिति भावः, ["चतसृभिः" इत्यत्र "च तिसृभिः" इति पाठान्तरम्] तथा तृतीये अङ्के द्वाभ्यां, नाड़ीभ्याम् इति शेषः, चतसृभिः घटिकाभिरिति भावः; तत्रत्यं वस्तु निष्पाद्यमिति शेषः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्वाभाविकः कृत्रिमश्च दैवजो, विद्रवः पुनः ॥
अचेतनैश्चेतनैश्च चेतनाचेतनैः कृतः ॥ ५३३ ॥ (व)

अत्र शास्त्राविरोधेन कृतो धर्म्मशृङ्गारः। अर्थलाभार्थ-कल्पितः अर्थशृङ्गारः। प्रहसनशृङ्गारः कामशृङ्गारः। तत्र कामशृङ्गारः प्रथमाङ्क एव ; अन्ययोस्तु न नियम इत्याहुः। चेतनाचेतनाः,—गजादयः। समवकीर्य्यन्ते (भ) बहवोऽर्था अस्मिन्निति समवकारः। यथा,—समुद्रमथनम्।

अथ डिमः,—

मायेन्द्रजालसङ्ग्रामक्रोधोद्भ्रान्तादिचेष्टितैः।
उपरागैश्च भूयिष्ठो डिमः ख्यातेतिवृत्तकः ॥
अङ्गी रौद्ररसस्तत्र सर्व्वेऽङ्गानि रसाः पुनः।
चत्वारोऽङ्का मता नेह विष्कम्भकप्रवेशकौ ॥

---

(व) शृङ्गारस्य कपटस्य विद्रवस्य च त्रैविध्यं दर्शयति, धर्म्मार्थेति।—शृङ्गारः धर्मार्थकामैः त्रिविधः,—धर्म्मशृङ्गारः, अर्थशृङ्गारः, कामशृङ्गारश्चेत्यर्थः ; कपटः,—कपटाचरणं, पुनः स्वाभाविकः, कृत्रिमः, दैवजः,—दैवेन जनितः इति त्रिविधः। विद्रवः,—शङ्का-भय-त्रासकृतः सम्भ्रमः, पुनः अचेतनकृतः, चेतनकृतः, तथा चेतनाचेतनकृत इति त्रिविधः। दशरूपककारस्त्वाह,—"प्रत्यङ्कञ्च यथासङ्ख्यं कपटाः। तथा—नगरोपरोधयुद्धवातान्ग्न्यादिविद्रवाणां मध्ये एकैको विद्रवः कार्य्यः। धर्म्मार्थकामशृङ्गाराणामेकैकः शृङ्गारः प्रत्यङ्कमेव विधातव्यः" इति। "अङ्कास्त्रयस्तत्र चाद्ये मुखप्रतिमुखौ तथा। वस्तुस्वभावदैवारिकृताः स्युः कपटास्त्रयः। कथामपि निबध्नीयात् तथा द्वादशनालिकाम्। द्वितीयेऽङ्केऽपि च चतुर्नालिकावधिकां कथाम्। पुररोधरणाग्न्यादिनिमित्ता विद्रवास्त्रयः॥ तृतीयेऽङ्के निबद्धव्या कथा चापि द्विनालिका। धर्म्मार्थकामानुगुणास्तिस्रः शृङ्गाररीतयः ॥" इति च मन्दारमरन्दकारः।

(भ) धर्म्मशृङ्गार इति।—निषिद्धकाले निषिद्धयोषिति कृतः शृङ्गारः शास्त्रविरुद्धः, तद्भिन्नो धर्म्मशृङ्गारः इत्यर्थः। समवकीर्य्यन्ते—सम्यक् प्रयुज्यन्ते, निबध्यन्ते इत्यर्थः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नायका देवगन्धर्व्वयक्षरक्षोमहोरगाः ।
भूतप्रेतपिशाचाद्याः षोड़शात्यन्तमुद्धताः ॥
वृत्तयः कौशिकीहीना निर्व्विमर्षाश्च सन्धयः ।
दीप्ताः स्युः षड्रसाः शान्तहास्यशृङ्गारवर्जिताः ॥ ५३४ ॥ (म)

अत्रोदाहरणञ्च,—"त्रिपुरदाहः" इति महर्षिः ।

अथ ईहामृगः,—

ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्त्तितः ।
मुखप्रतिमुखे सन्धी तत्र निर्व्वहणं तथा ॥
नरदिव्यावनियमौ नायकप्रतिनायकौ ।
ख्यातौ धीरोद्धतावन्यो गूढ़भावादयुक्तकृत् ॥
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः ।
शृङ्गाराभासमप्यस्य किञ्चित् किञ्चित् प्रदर्शयेत् ॥
पताकानायका दिव्या मर्त्त्या वाऽपि दशोद्धताः ।
युद्धमानीय संरम्भं परं व्याजान्निवर्त्तते ॥
महात्मानो बधप्राप्ता अपि बध्याः स्युरत्र नो ॥
एकाङ्को देव एवात्र नेतेत्याहुः परे पुनः ।
दिव्यस्त्रीहेतुकं युद्धं नायकाः षडितीतरे ॥५३५॥(य)

---

(म) डिममाह, अथेति ।—उपरागैः,—चन्द्रसूर्य्यग्रहणैः, चकारेण—निर्घातोल्कापातधूमकेतूदयाद्यैः, भूयिष्ठः,—बहुलः । ख्यातेति ।—ख्यातं—पुराणादिप्रसिद्धम्, इतिवृत्तं यस्य तादृशः । इह—डिमे इत्यर्थः । दीप्ताः,—उज्ज्वलाः, विभावादिसामर्थ्येन झटिति प्रतीयमाना इति भावः । अन्यत् स्पष्टम् ।

(य) ईहामृगमाह, अथेति ।—मिश्रवृत्तः,—ख्याताख्यातेतिवृत्तः । अनियमौ

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मिश्रं—ख्याताख्यातम् । अन्यः,—प्रतिनायकः । पताकानायकास्तु नायकप्रतिनायकयोर्मिलिता दश । नायको मृगवत् अलभ्यां नायिकामत्र ईहते—वाञ्छतीति ईहामृगः । यथा,—कुसुमशेखरविजयादिः ।

अथ अङ्कः,—

उत्सृष्टिकाङ्क एकाङ्को नेतारः प्राकृता नराः ।
रसोऽत्र करुणः स्थायी बहुस्त्रीपरिदेवितम् ॥
प्रख्यातमितिवृत्तञ्च कविर्बुद्ध्या प्रपञ्चयेत् ।
भाणवत् सन्धिवृत्ताङ्गान्यस्मिन् जयपराजयौ ॥
युद्धञ्च वाचा कर्त्तव्यं निर्वेदवचनं बहु ॥ ५३६ ॥ (र)

—नियमवर्जितौ, क्वचित् नरो नायकः, प्रतिनायको वा ; क्वचित् दिव्यः नायकः, प्रतिनायको वा, इति नायकप्रतिनायकयोर्नियमो नास्तीति भावः । अन्यः,—प्रतिनायकः, गूढ़भावात्,—गोपनभावात्, अयुक्तकृत्—अनुचितकार्य्यकारीत्यर्थः । अपहारादिना—बलात्कारादिना, [ आदिपदेन छलादिपरिग्रहः ] परं—शत्रुं, प्रतिनायकमित्यर्थः, संरम्भं—क्रोधम्, आनीय—प्रापय्य, क्रुद्धं कृत्वेत्यर्थः, स्थितस्य नायकस्येति शेषः, व्याजात्—कार्य्यान्तरच्छलात् । [ "निवर्त्तते" इत्यत्र "निवर्त्तयेत्" इति पाठे—परं युद्धस्थानमानीय संरम्भं निवर्त्तयेदित्यर्थः ] । महात्मान इति ।—वधप्राप्ताः,—वधप्राप्तियोग्या अपीत्यर्थः ; प्रतिनायकानां वधे पुराणादिप्रसिद्धेऽपि स न वर्णनीय इति भावः । अन्यत् सुगमम् ।

(र) अङ्कमाह, उत्सृष्टिकेति ।—उत्सृष्टिकाङ्कः,—अङ्कस्यैव नामान्तरमेतत् । प्राकृताः,—सामान्याः, नातिमहान्त इत्यर्थः ; अत्र करुणो रसः स्थायी—स्थिरतरः, प्रधानभूत इति यावत् ; अत एव बह्वीनां स्त्रीणां परिदेवितं—विलापः, तथा प्रख्यातं—प्रसिद्धम्, इतिवृत्तम् । प्रपञ्चयेत्—बहुलीकुर्य्यात् । अत एवोक्तं "प्रख्यातवस्तुविषयस्त्वप्रख्यातः कदाचिदेव स्यात् । दिव्यपुरुषैर्वियुक्तः शेषैरन्यैर्भवेत् पुंभिः ॥" इति । भाणवदिति ।—भाणे यथा मुखनिर्वहणे सन्धी, कौशिकी-भारत्यौ वृत्ती, दश लास्याङ्गानि, तथाऽत्रापीत्यर्थः । अस्मिन्—अङ्के, जयपराजयौ वाचा वर्णनीयौ ; अत एवोक्तं,—"वाचा युद्धं विधातव्यं तथा जयपराजयौ" इति । अन्यत् स्पष्टम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इममत्र केचित्,—"नाटकाद्यन्तःपात्यङ्कपरिच्छेदार्थम् उत्सृष्टिकाङ्कनामानम्" आहुः। अन्ये तु,—"उत्क्रान्ता—विलोमरूपा, सृष्टिर्यत्र" इति। उत्सृष्टिकाङ्कः यथा,—शर्मिष्ठाययातिः।

अथ वीथी,—

वीथ्यामेको भवेदङ्कः कश्चिदेकोऽत्र कल्प्यते।
आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः।
सूचयेद्भूरिशृङ्गारं किञ्चिदन्यान् रसानपि।
मुखनिर्वहणे सन्धी अर्थप्रकृतयोऽखिलाः ॥५३७॥ (ल)

कश्चिदिति—उत्तमो मध्यमोऽधमो वा। शृङ्गारबहुलत्वाच्च अस्याः कौशिकीवृत्तिबहुलत्वम्।

अस्यास्त्रयोदशाङ्गानि निर्दिशन्ति मनीषिणः।
उद्घात्यकावलगिते प्रपञ्चस्त्रिगतं छलम् ॥
वाक्केल्यधिबले गण्डमवस्यन्दितनालिके।
असत्प्रलापव्याहारमृदवानि च तानि तु ॥५३८॥ (व)

तत्र उद्घात्यकावलगिते प्रस्तावनाप्रस्तावे सोदाहरणं लक्षिते।

---

(ल) वीथीमाह, अथेति।—अत्र—वीथ्याम्, एकः,—अद्वितीय इत्यर्थः, कश्चित्, नायक इति शेषः, कल्प्यते—निबध्यते। अखिलाः,—समग्राः, पञ्चेति भावः, अर्थप्रकृतयः,—बीजादयः, प्रयोज्या इति शेषः। दशरूपकारस्त्वाह,—"वीथी तु कौशिकीवृत्तिः सन्ध्यङ्गाङ्गैस्तु भाणवत्। रसः सूच्यस्तु शृङ्गारः स्पृशेदपि रसान्तरम् ॥ युक्ता प्रस्तावनाख्यातैरङ्गैरुद्घात्यकादिभिः। एवं वीथी विधातव्या द्येकपात्रप्रयोजिता ॥"इति।

(व) अस्या इति।—अस्याः,—वीथ्याः, त्रयोदश अङ्गानि मनीषिणः,—विद्वांसः, निर्दिशन्ति—प्राहुरित्यर्थः। तान्येव नामतो गणयति,—उद्घात्यकम्, अवलगितं, प्रपञ्चः, त्रिगतं, छलं, वाक्केलिः, अधिबलं, गण्डम्, अवस्यन्दितं, नालिकम्, असत्प्रलापः, व्याहारः, मृदवं चेति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मिथो वाक्यमसद्भूतं प्रपञ्चो हास्यकृन्मतः ॥५३९॥ (श)

यथा विक्रमोर्वश्याम्;—बड़भीस्थविदूषकचेट्योरन्योऽन्यवचनम्।

त्रिगतं स्यादनेकार्थयोजनं श्रुतिसाम्यतः ॥५४०॥ (ष)

यथा तत्रैव,—"राजा ।—

सर्व्वक्षितिभृतां नाथ ! दृष्टा सर्व्वाङ्गसुन्दरी ।
रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया ? ॥"(स)

नेपथ्ये तत्रैव प्रतिशब्दः । "राजा । कथं दृष्टेत्याह" । अत्र प्रश्नवाक्यमेवोत्तरत्वेन योजितम् । "नटादित्रितयविषयमेवेदम्" (ह) इति कश्चित् ।

(श) प्रपञ्चमाह, मिथ इति ।—मिथः,—परस्परं, हास्यकृत्—हास्यजनकम्, असद्भूतं—मिथ्याभूतं, वाक्यं प्रपञ्चः ।

(ष) त्रिगतमाह, त्रिगतमिति ।—श्रुतिसाम्यतः,—शब्दसादृश्यात्, अनेकार्थयोजनं—बह्वर्थं कल्पनं, त्रिगतं स्यात् ।

(स) उदाहरति, सर्व्वेति ।—पर्व्वतं प्रति उर्व्वशीविरहितस्य पुरूरवसः प्रश्नात्मिकेयमुक्तिः, अर्थान्तरयोजनेन राजानं प्रति पर्व्वतस्यापि प्रतिध्वनिना तत्प्रतिवचनरूपा च प्रत्युक्तिरियम् । हे सर्व्वक्षितिभृतां—सर्वेषां पर्व्वतानां, नाथ !—श्रेष्ठ ! अस्मिन् रम्ये—सुभगे, वनान्ते—वनमध्ये, त्वया सर्व्वाङ्गसुन्दरी—सर्व्वावयवशोभना, अत्युत्कृष्टरूपा इत्यर्थः, मया विरहिता—मया वियुक्ता, रामा—उर्व्वशीत्यर्थः, दृष्टा ?—अवलोकिता ? (इति प्रश्नपक्षः; उत्तरपक्षे पुनः,—) हे सर्व्वक्षितिभृतां नाथ !—निखिलक्षितिपश्रेष्ठ ! मया कर्त्रा त्वया विरहिता रामा दृष्टा इत्येवं व्याख्येयम्, अन्यत् समानम् । अत्रास्य वाक्यस्य प्रतिध्वनेश्च साम्यात् "सर्व्वक्षितिभृतां नाथ !" इत्यस्य पर्व्वतश्रेष्ठ-राजश्रेष्ठरूपार्थद्वयघटितत्वेन, तथा "त्वया" इतिपदस्य प्रश्नपक्षे "दृष्टा" इति क्रियायां कर्तृत्वेनान्वयः, "मया" इत्यस्य च विरहितापदेनान्वयः; उत्तरपक्षे तु —"त्वया" इत्यस्य विरहितेतिपदेन, "मया" इत्यस्य च दर्शनक्रियायां कर्तृत्वेनान्वयः इति चोभयार्थप्रतिपादनेन अनेकार्थयोजनं बोध्यम् ।

(ह) त्रिगतपदव्युत्पत्तिमाह, नटादीति ।—आदिना नटीप्रतिनट्योर्ग्रहणम् । इदं—त्रिगतम् । तथाऽऽह दशरूपककारः,—"श्रुतिसाम्यादनेकार्थयोजनं त्रिगतन्त्विह । नटादित्रितयालापः पूर्व्वरङ्गे तदिष्यते ॥" इति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य च्छलना च्छलम्॥५४१॥(क)

यथा वेण्यां,—"भीमार्जुनौ।—

कर्त्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः।
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं
क्वास्ते दुर्य्योधनोऽसौ? कथयत न रुषा द्रष्टुमभ्यागतौ स्वः॥"(ख)

अन्ये त्वाहुश्छलं किञ्चित् कार्य्यमुद्दिश्य कस्यचित्।
उदीर्य्यते यद्वचनं वञ्चनाहास्यरोषकृत्॥५४२॥(ग)

(क) छलमाह, प्रियाभैरिति।—प्रियाभैः—प्रियसदृशैः, अप्रियैः वाक्यैः विलोभ्य छलना—परप्रतारणा, छलम्। तथोक्तम्;—"छलन्तु च्छलनावाक्यैः प्रियाभैरप्रियैः स्मृतः" इति।

(ख) उदाहरति, कर्त्तेति।—भृत्यान् प्रति भीमसेनस्योक्तिरियम्। द्यूतच्छलानां—द्यूतक्रीड़ारूपकपटानां, कर्त्ता, जतुमयं—जतुप्रचुरं, [प्रचुरार्थे मयट्] यत् शरणं—गृहं, ("शरणं गृहरक्षित्रोः" इत्यमरः) तस्य उद्दीपनः,—विरोचनद्वारा जतुगृहदाहक इत्यर्थः, अभिमानी—अहङ्कारवान्, कृष्णायाः,—द्रौपद्याः, केशानाम् उत्तरीयस्य च व्यपनयने—आकर्षणे, पटुः,—नियोजयिता इत्यर्थः, ["व्यपनयनपटुः" इत्यत्र "व्यपनयनमरुत्" इति पाठे—व्यपनयने—अपसारणे, मरुत्—वायुस्वरूपः] पाण्डवाः,—युधिष्ठिरादयः, यस्य दासाः,—किङ्कराः, द्यूतजयेन दासत्वेन सम्भाविता इति भावः; दुःशासनादेः,—दुःशासनप्रभृतिकस्य, अनुजशतस्य—कनिष्ठभ्रातृशतस्य, गुरुः, अङ्गराजस्य—कर्णस्य, मित्रं—बन्धुः, सः,—प्रसिद्धः, असौ राजा दुर्य्योधनः क्व—कुत्र, आस्ते?—तिष्ठति? कथयत, यूयमिति शेषः; रुषा—क्रोधेन, द्रष्टुं—तं साक्षात्कर्त्तुं, न अभ्यागतौ—उपस्थितौ, स्वः,—भवावः, आवामिति शेषः। द्यूतच्छलादिकर्त्तृत्वकथनेन अप्रियाभत्वं तथा,—"न रुषा, द्रष्टुमभ्यागतौ" इति वाक्ये तु प्रियाभत्वम् इत्युभाभ्यां दुर्य्योधनं प्रति छलना। स्रग्धरा वृत्तम्।

(ग) मतान्तरेण छलमाह, अन्ये त्विति।—किञ्चित् कार्य्यमुद्दिश्य कस्यचित् वञ्चनाहास्यरोषकरं यत् वचनम् उदीर्य्यते—कथ्यते, अन्ये—अपरे पण्डितास्तु, तत् छलम् आहुः,—कथयन्ति। उदाहरणम् अनुसन्धेयम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**वाक्केलिर्हास्यसम्बन्धो द्वित्रिप्रत्युक्तितो भवेत्॥५४३॥(घ)**

द्वित्रीत्युपलक्षणम् ; यथा,—

"भिक्षो ! मांसनिषेवणं प्रकुरुषे ? किं तेन मद्यं विना ?
मद्यञ्चापि तव प्रियम् ? प्रियमहो ! वाराङ्गनाभिः सह ।
वेश्याऽप्यर्थरुचिः, कुतस्तव धनम् ? द्यूतेन चौर्य्येण वा;
चौर्य्यद्यूतपरिग्रहोऽपि भवतः ? नष्टस्य काऽन्या गतिः ॥" (ङ)

केचित्,—"प्रक्रान्तवाक्यस्य साकाङ्क्षस्यैव निवृत्तिर्वाक्केलिः" इत्याहुः । अन्ये च,—"अनेकस्य प्रश्नस्यैकमुत्तरम् ।"

**अन्योऽन्यवाक्याधिक्योक्तिः स्पर्द्धयाऽधिबलं मतम्॥५४४॥(च)**

यथा मम प्रभावत्यां,—"वज्रनाभः ।—

अस्य वक्षः क्षणेनैव निर्मथ्य गदयाऽनया ।
लीलयोन्मूलयाम्येव भुवनद्वयमद्य वः ॥ (छ)

---

(घ) वाक्केलिमाह, वाक्केलिरिति ।—द्वे वा तिस्रो वा प्रत्युक्तयः,—प्रतिवचनानि, ताभ्यः [ समासप्रत्ययानामनित्यत्वादत्र डच्प्रत्ययाभावः ] यः हास्यसम्बन्धः, स वाक्केलिर्भवेत् । अनेकवाक्यस्यैकमुत्तरं वाक्केलिरिति भावः । तथाऽऽह,—"विनिवृत्त्याऽस्य वाक्केलिर्द्विस्त्रिःप्रत्युक्तितोऽपि वा" इति ।

(ङ) उदाहरति, भिक्षो इति ।—हे भिक्षो ! मांसनिषेवणं—मांसभोजनं, प्रकुरुषे ? (इति प्रश्नः) ; मद्यं विना तेन—मांसेन, किम् ? (इत्युत्तरम्) मद्यसहितमांसभोजनमेव रुचिकरमित्यर्थः ; मद्यञ्चापि तव प्रियम् ? ( इति प्रश्नः ); अहो ! प्रियं सत्यं, परन्तु वाराङ्गनाभिः सह ( इत्युत्तरम् );—विना वेश्याभिर्मद्यमपि न प्रीतिकरमित्यर्थः ; वेश्या—वाराङ्गना, अपि अर्थरुचिः,—अर्थाभिलाषिणी, ( त्वन्तु भिक्षुः ) कुतस्तव धनम् ? आयातीति शेषः, ( इति प्रश्नः ) ; द्यूतेन चौर्य्येण वा, धनम् उपार्ज्यते मयेति शेषः, ( इत्युत्तरम् ) ; भवतः चौर्य्यद्यूतयोरपि परिग्रहः,—स्वीकारः ? वर्त्तते इति शेषः, ( इति प्रश्नः ); नष्टस्य—आचारभ्रष्टस्य, अन्या—अपरा, गतिः,—सरणिः, का ?—न कापीत्यर्थः, ( इत्युत्तरम् ) । अत्र उक्तिप्रत्युक्तितः वाक्केलिः स्पष्टार्था ।

(च) अधिबलमाह, अन्योऽन्येति ।—स्पर्द्धया—अहङ्कारेण, अन्योऽन्यं—परस्परं, वाक्यस्य आधिक्येन—अतिशयेन, उक्तिः अधिबलं मतम् ।

(छ) उदाहरति, अस्येति ।—अस्य—प्रद्युम्नस्य, वक्षः क्षणेनैव अनया—हस्त-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रद्युम्नः। अरे रे असुरापसद! (ञ) अलममुना बहुप्रलापेन; मम खलु,—

अद्य प्रचण्डभुजदण्डसमर्पितोरु-
कोदण्डनिर्गलितकाण्डसमूहपातैः।
आस्तां समस्तदितिजक्षतजोक्षितेयं
क्षोणी क्षणेन पिशिताशनलोभनीया॥" (झ)

गण्डं प्रस्तुतसम्बन्धि भिन्नार्थं सत्वरं वचः॥५४५॥(ञ)

यथा वेण्यां,—"राजा।—

लोलांशुकस्य पवनाकुलितांशुकान्तं
त्वद्दृष्टिहारि मम लोचनबान्धवस्य।
अध्यासितुं तव चिराज्जघनस्थलस्य
पर्य्याप्तमेव करभोरु! ममोरुयुग्मम्॥" (ट)

---

स्थितयेति भावः, गदया निसंथ्य—चूर्णयित्वेत्यर्थः, लीलया—अवहेलया, अद्य वः,—युष्माकं, देवानामिति यावत्, [अनादरे षष्ठी] युष्माननादृत्येत्यर्थः, भुवनद्वयं—स्वर्गं पृथिवीञ्च, स्वस्य पातालवासित्वादिति भावः, उन्मूलयाम्येव—उत्पाटयाम्येव।

(ञ) असुरापसद!—असुराधम!

(झ) अद्येति।—प्रचण्डभुजदण्डे—भीषणबाहुदण्डे, समर्पितात्—निहितात्, स्थापितादिति यावत्, उरुकोदण्डात्—महाधनुषः, निर्गलितानां—निःसृतानां, काण्डानां—शराणां, समूहस्य पातैः,—क्षेपैः, इयं क्षोणी—पृथ्वी, क्षणेन—अत्यल्प-कालेन, समस्तानां दितिजानां—दैत्यानां, क्षतजैः,—रुधिरैः, उक्षिता—अभिषिक्ता, सती पिशिताशनानां—मांसभोजिनां, लोभनीया—अभिलषणीया, हर्षवर्द्धनीत्यर्थः, आस्तां—भवतु। पद्यद्वये परस्परस्पर्द्धया आधिक्यख्यापनम्। वसन्ततिलकं वृत्तम्।

(ञ) गण्डमाह, गण्डमिति।—प्रस्तुतसम्बन्धि—प्रकृतार्थसम्बद्धं, भिन्नार्थं—पृथगर्थं, सत्वरं—त्वरान्वितं, वचः गण्डम्।

(ट) उदाहरति, लोलांशुकस्येति।—भानुमतीं प्रति दुर्य्योधनस्योक्तिः। हे करभोरु!—करभाविवोरू यस्यास्तत्सम्बुद्धौ! लोलं—चञ्चलं, वातेन दोलायमान-मित्यर्थः, अंशुकं—वस्त्रं, यत्र तस्य लोलांशुकस्य, मम लोचनयोर्बान्धवं तादृशस्य, तव—त्वत्सम्बन्धिनः, जघनस्थलस्य चिरात्—चिरकालावधि, अध्यासितुम्—अधिष्ठातुं,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अनन्तरं प्रविश्य,—"कञ्चुकी । देव ! भग्नं भग्नम्" इत्यादि । अत्र रथकेतनभङ्गार्थं वचनमूरुभङ्गार्थे सम्बद्धे सम्बद्धम् । (ठ)

**व्याख्यानं स्वरसोक्तस्यान्यथाऽवस्यन्दितं भवेत् ॥५४६॥(ड)**

यथा छलितरामे,—"सीता ।—जाद ! कल्लं क्खु अओज्झाए गंतव्वं, तहिं सो राआ विणएण पणयिदव्वो ।" लवः ।—"अथ किमावाभ्यां राजोपजीविभ्यां भवितव्यम् ?" सीता ।—"जाद ! सो क्खु तुह्माणं पिदा ।" लवः ।—"किमावयोः रघुपतिः पिता ?" सीता । [साशङ्कम्]—"मा अण्णधा संकद्धं, ण क्खु तुह्माणं, सअलाए ज्जेव पहवीए त्ति ।" (ढ)

**प्रहेलिकैव हास्येन युक्ता भवति नालिका॥५४७॥(ण)**

संवरणकार्य्युत्तरं प्रहेलिका । यथा रत्नावल्यां,—"सुसङ्गता । सहि ! जस्स किदे तुमं आअदा, सो इध ज्जेव चिट्ठदि ।

पवनेन आकुलितः,—चञ्चलीकृतः, उड्डापित इत्यर्थः, अंशुकान्तः,—वस्त्रैकदेशो यत्र तादृशं, तत्र दृष्टिः,—नेत्रं, प्रेक्षणमिति यावत्, तां हर्त्तुं शीलमस्यास्तीति तत् त्वद्दृष्टिहारि—तव नेत्रोत्सववर्द्धकमित्यर्थः, मम—मत्सम्बन्धि, ऊरुयुग्मं, पर्य्याप्तमेव—समुचितमेव, समर्थमेव वा । अत्र राजोरुयुग्मं प्रस्तुतवर्णनं वक्ष्यमाणेन "भग्नं भग्नम्" इति कञ्चुकिवाक्येन भिन्नार्थमिति गण्डम् । वसन्ततिलकं वृत्तम् ।

(ठ) सम्बद्धे—प्रस्तुते । अन्यत् स्पष्टम् ।

(ड) अवस्यन्दितमाह, व्याख्यानमिति ।—स्वरसोक्तस्य—स्वभावत उक्तस्य, वाक्यस्य इति शेषः, अन्यथा व्याख्यानम् अवस्यन्दितं भवेत् ।

(ढ) उदाहरति, यथेति ।—जादेति । ["पुत्र ! कल्यं खलु अयोध्यायां गन्तव्यं, तत्र स राजा विनयेन प्रणयितव्यः" इति संस्कृतम् ] । जादेति ।—["पुत्र ! स खलु युष्माकं पिता" इति संस्कृतम् ] । मा इति ।—[ "मा अन्यथा शङ्कध्वं, न खलु युष्माकं, सकलाया एव पृथिव्याः" इति संस्कृतम् ] । अत्र स्वभावोक्तस्य "स युष्माकं पिता" इति वाक्यस्य सकलायाः पृथिव्याः इत्यनेन पितृशब्दस्य पालकरूपत्वेन अन्यथा व्याख्यानम् ।

(ण) नालिकामाह, प्रहेलिकैवेति ।—हास्येन युक्ता प्रहेलिका एव नालिका भवति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सामरिका। कस्स किदे अहं आअदा? सुसङ्गता। णं चित्त-फलअस्स।" अत्र त्वं राज्ञः कृते आगतेत्यर्थः संवृत्तः। (त)

**असत्प्रलापो यद्वाक्यमसम्बद्धं तथोत्तरम्।**
**अगृह्णतोऽपि मूर्खस्य पुरो यच्च हितं वचः॥५४८॥(थ)**

तत्राद्यं (द) यथा मम प्रभावत्यां,—"प्रद्युम्नः। [ सहकारवल्ली-मवलोक्य सानन्दम् ] अहो! कथमिहैव,—

**अलिकुलमञ्जुलकेशी परिमलबहुला रसावहा तन्वी।**
**किशलयपेशलपाणिः कोकिलकलभाषिणी प्रियतमा मे॥"** (ध)

एवमसम्बद्धोत्तरेऽपि। तृतीयं यथा वेण्यां,—दुर्योधनं प्रति गान्धारीवाक्यम्।

---

(त) उदाहरति, सहीति।—[ "सखि! यस्य कृते त्वमागता, स इह एव तिष्ठति" इति संस्कृतम् ]। कस्स इति।—[ "कस्य कृते अहमागता?" इति संस्कृतम् ]। णं इति।—[ "ननु चित्रफलकस्य" इति संस्कृतम् ]। अत्र राज्ञः कृते त्वमागतेति उत्तरं संवृत्तम्। इयं हास्ययुक्तेत्यवसन्दितादस्या भेदः।

(थ) असत्प्रलापमाह, असत्प्रलाप इति।—असम्बद्धं—पूर्वापरसम्बन्धरहितं, यत् वाक्यं तथा उत्तरं, यच्च अगृह्णतः,—हितवाक्यमशृण्वत इत्यर्थः, मूर्खस्य पुरः,—अग्रतः, हितं वचः असौ अपि असत्प्रलापः।

(द) आद्यम्—असम्बद्धं वाक्यमित्यर्थः।

(ध) अलीति।—अलिकुलं—भ्रमरसमूहः, तद्वत् मञ्जुलकेशी—मनोहरकेशा, परिमलः,—विमर्दोत्थगन्धः, ("स्यात् परिमलोऽतिमर्द्दातिमनोहरगन्धयोश्चापि" इति मेदिनी) तद्बहुला—पुरुषसंसर्गजगन्धशालिनी, अकृतपुरुषसंसर्गाणां रमणीनां तद्भावं मनसा अनुभवन्तीनाम् अपि घर्मादिना तद्गन्धसम्भवात् इयमुक्तिः, अन्यथा द्विचारिण्या खलनया भवितव्यम् इति बोद्धव्यम्। रसम्—अनुरागम्, आवह-तीति तथोक्ता, अत्यनुरागवतीत्यर्थः, तन्वी—कृशाङ्गी, किशलयः,—पल्लवः, तद्वत् पेशलौ,—कोमलौ, पाणी यस्यास्तादृशी, कोकिलवत् कलभाषिणी—मधुरभाषिणी, मे—मम, प्रियतमा—अतिप्रेयसी "कथमिहैव" इति गद्यस्थपदेन व्याख्यानेऽपि अन्वेतव्यम्। लतापक्षे व्याख्या तु सुगमा। अत्र सहकारलतायां स्वप्रियारोपः, इति वाक्यस्य असम्बद्धम्। गीतिरार्या छन्दः।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**व्याहारो यत् परस्यार्थे हास्यक्षोभकरं वचः॥५४९॥(न)**

यथा मालविकाऽग्निमित्रे,—"विदूषकः । [ लास्यप्रयोगावसाने मालविका निर्गन्तुमिच्छति ] मा दाव उवदेससुद्धा गमिस्ससि [ इत्युपक्रमेण ] दासः । [ विदूषकं प्रति ] आर्य्य ! उच्यतां यस्त्वया क्रमभेदो लक्षितः । विदूषकः । पढमं बह्मणपूआ भोदि, सा इमाए लङ्घिदा । (प) मालविका । स्मयते" इत्यादिना नायकस्य विशुद्धनायिकादर्शनप्रयुक्तेन हासलोभकारिणा वचसा व्याहारः ।

**दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत्॥५५०॥(फ)**

क्रमेण यथा,—

"प्रिय ! जीवितता क्रौर्य्यं निःस्नेहत्वं कृतघ्नता ।
भूयस्त्वद्दर्शनादेव ममैते गुणतां गताः ॥ (ब)

---

(न) व्याहारमाह, व्याहार इति ।—परस्य—नायकादेः, अर्थे—निमित्तं, यत् हास्यक्षोभकरं वचः असौ व्याहारः ।

(प) उदाहरति, यथेति ।—मा इति ।—["मा तावदुपदेशमुग्धा गमिष्यसि" इति संस्कृतम् ] । पढमं इति ।—["प्रथमं ब्राह्मणपूजा भवति, सा अनया लङ्घिता" इति संस्कृतम् ] ।

(फ) मृदवमाह, दोषा इति ।—यत्र—यस्मिन् वाक्ये, दोषाः गुणाः, गुणाः दोषाश्च, स्युः, तत् मृदवम् ।

(ब) उदाहरति, प्रिय इति ।—हे प्रिय ! जीवितता—त्वद्विरहे जीवनमित्यर्थः, देहे जीवनस्थितिरिति यावत्, क्रौर्य्यं—निष्ठुरता, ( जीवितताक्रौर्य्यमिति समस्तपदं—जीवनकाठिन्यं, तव विरहेऽपि देहे अवस्थानात् जीवनस्य क्रूरता इति भावः ) निःस्नेहत्वं—स्नेहशून्यता, तथा कृतघ्नता—उपकारिणोऽपकारकरणं, तदा जीवनेन देहत्याग एव प्रत्युपकारः, तदनाचरणात् कृतघ्नता इति तात्पर्य्यम् ; त्वद्विरहे मम जीवनेनैव क्रौर्य्यादयः सुव्यक्ता इति तव विरहेऽपि देहे मम जीवनस्थितिरतीव क्लेशावहा, तस्मात् तदानीं जीवनस्य देहादपगमः श्रेयान्, नो चेत् तस्य क्रौर्य्यादिकमवश्यं वक्तव्यमिति भावः । भूयः,—पुनः, त्वद्दर्शनात्—तव दर्शने प्राप्तेत्यर्थः, मम एते—जीवनस्य क्रौर्य्यादयः, गुणताम्—अनुकूलतां, गताः । एवं दोषाणां गुणत्वम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तस्यास्तद्रूपसौन्दर्य्यं भूषितं यौवनश्रिया।
सुखैकायतनं जातं दुःखायैव ममाधुना॥" (भ)

इति चाङ्गानि नाटकादिषु सम्भवन्त्यपि वीथ्यामवश्यं विधेयानि। विस्पष्टतया नाटकादिषु विनिविष्टान्यपीहोदाहृतानि। वीथीव नानारसानाञ्चात्र मालारूपतया स्थितत्वाद्वीथीयम्। यथा,—मालविका।

अथ प्रहसनम्,—

भाणवत्सन्धिसन्ध्यङ्गलास्याङ्गाङ्गैर्विनिर्म्मितम्।
भवेत् प्रहसनं वृत्तं निन्द्यानां कविकल्पितम्॥५५१॥ (म)
अत्र नारभटी नापि विष्कम्भकप्रवेशकौ।
अङ्गी हास्यरसस्तत्र वीथ्यङ्गानां स्थितिर्न वा।
तपस्विभगवद्विप्रप्रभृतिष्वत्र नायकः॥ ५५२ ॥ (य)

---

(भ) तस्या इति।—वत्सं प्रति विरहिणो नायकस्योक्तिरियम्। तस्याः—कान्तायाः, यौवनश्रिया—तारुण्यलक्ष्म्या, भूषितं—विराजितं, यत् रूपसौन्दर्य्यं—रूपमाधुर्य्यं, मम सुखैकायतनं—सुखस्य एकम् आयतनं—स्थानं, सुखमात्राधारमित्यर्थः, जातम्, अधुना—विरहे इत्यर्थः, तत् दुःखाय एव—दुःखप्राप्तये एव। अत्र गुणानां दोषत्वम्।

(म) प्रहसनमाह, भाणवदिति।—भाणवत्—भाण इव, सन्धिना, सन्ध्यङ्गैः, लास्याङ्गैः, अङ्केन च विनिर्म्मितं—योजितमित्यर्थः, तथा कविना कल्पितं—स्वप्रतिभया उद्भावितं, निन्द्यानां वृत्तं प्रहसनं भवेत्। इतिवृत्तनिष्पादने नियमो यथा भरतशास्त्रे,—"लोकोपचारयुक्ता या वार्त्ता यश्च दम्भसंयोगः। तत्प्रहसनेषु योज्यं धूर्त्तोक्तिविवादसंयुक्तम्॥" इति।

(य) तत्र विशेषमाह, अत्रेति।—अत्र—प्रहसने, आरभटी वृत्तिर्न, प्रयोज्येति शेषः; वीथ्यङ्गानां स्थितिः,—अवस्थानं, न वा—नैव, अथवा,—वीथ्यङ्गानां स्थितिः,—नियतेत्यर्थः। अत्र—प्रहसने, तपस्व्यादिषु मध्ये कश्चित् नायको वाच्यः। तत्र भगवच्छब्देन सन्न्यासी प्रोच्यते। अन्यत् सुगमम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एको यत्र भवेद् धृष्टो हास्यं तच्छुद्धमुच्यते ॥५५३॥(र)

यथा,—कन्दर्पकेलिः ।

आश्रित्य कञ्चन जनं सङ्कीर्णमिति तद् विदुः ॥५५४॥ (ल)

यथा,—धूर्त्तचरितम् ।

वृत्तं बहूनां धृष्टानां सङ्कीर्णं केचिदूचिरे ।
तत् पुनर्भवति द्व्यङ्कमथवैकाङ्कनिर्म्मितम् ॥५५५॥(व)

यथा,—लटकमेलकादिः । (श) मुनिस्त्वाह,—

"वेश्याचेटनपुंसकविटधूर्त्ता बन्धकी च यत्र स्युः ।
अविकृतवेषपरिच्छदचेष्टितकरणन्तु सङ्कीर्णम् ॥" (ष) इति ।

विकृतन्तु विदुर्यत्र षण्डकञ्चुकितापसाः ।
भुजङ्गचारणभटप्रभृतिर्वेशवाग्युताः ॥ ५५६ ॥ (स)

इदन्तु सङ्कीर्णेनैव गतार्थमिति मुनिना पृथक् नोक्तम् ।

---

(र) प्रहसनस्य भेदत्रयं वक्तुमारभते, एक इत्यादि ।—यत्र एकः,—मुख्यः, नायक इत्यर्थः, धृष्टः,—प्रगल्भः, भवेत्, तत् हास्यं—प्रहसनं, शुद्धम् उच्यते ।

(ल) सङ्कीर्णमाह, आश्रित्येति ।—कञ्चन जनं—धृष्टभिन्नं नायकम्, आश्रित्य, यत् हास्यं क्रियते इति शेषः, तत् सङ्कीर्णम् इति विदुः ।

(व) मतान्तरे सङ्कीर्णमाह, वृत्तमिति ।—यत्र बहूनां धृष्टानां वृत्तं—चरितं, तत् केचित् सङ्कीर्णम् ऊचिरे—उक्तवन्तः ; तत्—सङ्कीर्णप्रहसनं, पुनः द्व्यङ्कम्—अङ्कद्वयघटितं, वा एकेनैव अङ्केन निर्म्मितं भवति ।

(श) उदाहरति, यथेति ।—लटकानां—दुर्जनानां, मेलकं तदादिः। ["लटको दुर्जनः" इत्युणादिसूत्रवृत्तावुज्ज्वलदत्तः] "नटकमेलकादिः" इति पाठान्तरन्तु न साधु ।

(ष) वेश्येति ।—यत्र—प्रहसने, वेश्याऽऽदयः स्युः,—वर्णनीया भवेयुरित्यर्थः, तथा तेषामविकृतानां—यथाऽवस्थितानामिति भावः, वेषाणां, परिच्छदानां, चेष्टितानाञ्च करणम्—अनुकरणमित्यर्थः, तत् सङ्कीर्णम् ।

(स) विकृतमिति ।—यत्र षण्डकञ्चुकितापसाः भुजङ्गस्य—विटस्य, चारणस्य—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथोपरूपकाणि। तत्र,—

नाटिका क्लृप्तवृत्ता स्यात् स्त्रीप्राया चतुरङ्किका।
प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः॥
स्यादन्तःपुरसम्बद्धा सङ्गीतव्यापृताऽथवा।
नवानुरागा कन्याऽत्र नायिका नृपवंशजा॥
सम्प्रवर्त्तेत नेताऽस्यां देव्यास्त्रासेन शङ्कितः।
देवी पुनर्भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा॥
पदे पदे मानवती तद्वशः सङ्गमो द्वयोः।
वृत्तिः स्यात् कौशिकी स्वल्पविमर्षाः सन्धयः पुनः॥५५७॥(ह)

द्वयोः,—नायिकानायकयोः। यथा,—रत्नावली-विद्धशालभञ्जिकादिः।

अथ त्रोटकम्,—

सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम्।
त्रोटकं नाम तत् प्राहुः प्रत्यङ्कं सविदूषकम्॥५५८॥(क)

---

नटस्य, भटप्रभृतेश्च वेशयुक्ताः वचनयुक्ताश्च, भवेयुरिति शेषः, तत् (हास्यमिति पूर्व्वतोऽनुवृत्तं) विकृतं विदुः।

(ह) उपरूपकाण्याह, अथेति।—नाटिकेति।—क्लृप्तवृत्ता—कल्पितवृत्तान्ता, न तु पुराणादिषु प्रसिद्धवृत्तेति भावः, स्त्रीप्राया—नारीबहुला नटीबहुला वा, चतुरङ्किका—चतुर्भिरङ्कैः सम्पाद्या इत्यर्थः, प्रख्यातः,—प्रसिद्धः, धीरललितः,—"निश्चिन्तो मृदुरनिशम्" इति लक्षणोक्तः। अन्तःपुरसम्बद्धा—अन्तःपुरसम्बन्धवती, अन्तःपुरचारिणीत्यर्थः। नेता—नायकः, देव्याः,—महिष्याः, त्रासेन—भयेन, शङ्कितः सन्, अस्यां—नायिकायां, सम्प्रवर्त्तेत—समासज्जेत। द्वयोः,—नायिकानायकयोः, सङ्गमः तद्वशः,—देव्यधीनः। स्वल्पविमर्षाः,—प्रायेण विमर्षाख्यसन्धिहीना इत्यर्थः। अन्यत् सुगमम्।

(क) त्रोटकमाह, सप्तेति।—सप्त वा, अष्टौ वा, नव वा, पञ्च वा अङ्काः यत्र

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रत्यङ्कं सविदूषकत्वादेवात्र शृङ्गारोऽङ्गी । समाङ्कं यथा,—स्तम्भितरम्भम् । पञ्चाङ्कं यथा,—विक्रमोर्व्वशी ।

अथ गोष्ठी,—

**प्राकृतैर्नवभिः पुंभिर्दशभिर्वाप्यलङ्कृता ।**
**नोदात्तवचना गोष्ठी कौशिकीवृत्तिशालिनी ॥**
**हीना गर्भविमर्षाभ्यां पञ्चषड्योषिदन्विता ।**
**कामशृङ्गारसंयुक्ता स्यादेकाङ्कविनिर्म्मिता ॥५५९॥ (ख)**

यथा,—रैवतमदनिका ।

अथ सट्टकम्,—

**सट्टकं प्राकृताशेषपाठ्यं स्यादप्रवेशकम् ।**
**न च विष्कम्भकोऽप्यत्र प्रचुरश्चाद्भुतो रसः ।**
**अङ्का जवनिकाख्याः स्युः स्यादन्यन्नाटिकासमम् ॥५६०॥ (ग)**

यथा,—कर्पूरमञ्जरी ।

अथ नाट्यरासकम्,—

**नाट्यरासकमेकाङ्कं बहुताललयस्थिति ।**
**उदात्तनायकं तद्वत् पीठमर्दोपनायकम् ॥**

---

तथोक्तं, दिव्यमानुषसंश्रयं—देवमनुष्यसम्बद्धं, दिव्यादिव्यनायकमिति यावत्, प्रत्यङ्कं, सविदूषकं—विदूषकचरित्रसहितं, यत् नाट्यमिति शेषः, तत् त्रोटकं नाम प्राहुः ।

(ख) गोष्ठीमाह, प्राकृतैरिति ।—प्राकृतैः,—नातिविदग्धैः । नोदात्तवचना—संस्कृतान्यभाषिणी । पञ्चभिः षड्भिर्वा योषिद्भिरन्विता । [ डच्प्रत्ययस्यानित्यत्वात्तद्रूपसिद्धिः ] कामशृङ्गारः प्रागुक्तः । अन्यत् स्पष्टम् ।

(ग) सट्टकमाह, सट्टकमिति ।—प्राकृतं—संस्कृतादन्यत्, अशेषं—समस्तं, पाठ्यं—वाक्यं, यस्मिन् तत्, अप्रवेशकं—प्रवेशकवर्जितं, प्रचुरः,—बहुलः । जवनिकाख्याः अङ्काः स्युः,—अङ्कस्थाने जवनिकाशब्दः प्रयोज्य इत्यर्थः । अन्यत्—अङ्कसंख्यादिकम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

हास्योऽङ्गयत्र सशृङ्गारो नारी वासकसज्जिका ।
मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च ॥
केचित् प्रतिमुखं सन्धिमिह नेच्छन्ति केवलम् ॥५६१॥(घ)

तत्र सन्धिद्वयवती यथा,—नर्मवती। सन्धिचतुष्टयवती यथा,—विलासवती ।

अथ प्रस्थानम्,—

प्रस्थाने नायको दासो हीनः स्यादुपनायकः ।
दासी च नायिका वृत्तिः कौशिकी भारती तथा ॥
सुरापानसमायोगादुद्दिष्टार्थस्य संहृतिः ।
अङ्कौ द्वौ लयतालादिर्विलासो बहुलस्तथा ॥५६२॥(ङ)

यथा,—शृङ्गारतिलकम् ।

अथोल्लाप्यम्,—

उदात्तनायकं दिव्यवृत्तमेकाङ्कभूषितम् ।
शिल्पकाङ्गैर्युतं हास्यशृङ्गारकरुणै रसैः ॥

---

(घ) नाट्यरासकमाह, नाट्येति ।—बह्वी तालस्य—कालक्रियामानस्य, लयस्य—साम्यस्य, च स्थितिर्यस्मिन् तत्, ("तालः कालक्रियामानं लयः साम्यम्" इत्यमरः) उदात्तनायकम्—"अविकत्थनः क्षमावान्" इत्याद्युक्तलक्षणधीरोदात्त-नायकयुतं, पीठमर्दः,—"दूरानुवर्त्तिनि स्यात्तस्य" इत्याद्युक्तलक्षणः नायकात् किञ्चिद् गुणहीनः सहायविशेषः, उपनायकः,—नायकसहकारी, यत्र तत्; सशृङ्गारः,—शृङ्गाररससहितः, हास्यः अत्र अङ्गी—प्रधानम्, नारी—नायिका, वासकसज्जिका—"कुरुते मण्डनं यस्याः" इत्याद्युक्तलक्षणा। केचिदिति ।—केचित्, पण्डिता इति शेषः, प्रतिमुखसन्धिं वर्ज्जयित्वा मुखनिर्वहणगर्भविमर्षाख्याः चत्वारः सन्धय इच्छन्ति इत्यर्थः। अन्यत् स्पष्टम् ।

(ङ) प्रस्थानमाह, प्रस्थाने इति ।—हीनः,—दासादपि इतर इत्यर्थः । सुरापानसमायोगात्—मद्यपानवशात्, उद्दिष्टस्य—प्रस्तुतस्य, अर्थस्य—इतिहासस्य, संहृतिः,—समापनम् । अन्यत् सुगमम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उल्लाप्यं बहुसङ्ग्रामं त्र्यस्रगीतमनोहरम् ।
चतस्रो नायिकास्तत्र त्रयोऽङ्का इति केचन ॥५६३॥ (च)

शिल्पकाङ्गानि वक्ष्यमाणानि । यथा,—देवीमहादेवम् ।

अथ काव्यम्,—

काव्यमारभटीहीनमेकाङ्कं हास्यसङ्कुलम् ।
खण्डमात्रा-द्विपदिका-भग्नतालैरलङ्कृतम् ॥
वर्णमात्राच्छड्डलिकायुतं शृङ्गारभाषितम् ।
नेता स्त्री चाप्युदात्तात्र सन्धी आद्यौ तथान्तिमः ॥५६४॥ (छ)

यथा,—यादवोदयः ।

---

(च) उल्लाप्यमाह, उदात्तेति ।—उदात्तः,—धीरोदात्तः, नायको यत्र तत्, दिव्यवृत्तं—दिव्यनायकोचितचरित्रयुक्तम्, एकेनाङ्केन भूषितं, शिल्पकाङ्गैः, वक्ष्यमाणैरिति शेषः, तथा हास्येन शृङ्गारेण करुणेन च रसेन युतं, बहुसङ्ग्रामं—बहुविधसङ्ग्रामवर्णनसम्पन्नं, त्र्यस्रेण—त्रिभागेण इति भावः, गीतेन, यद्वा,—त्रिपदीगीतेन, मनोहरम् । [ "अस्रगीतमनोहरम्" इति पाठान्तरे तु—अस्रगीतेन—"उत्तरोत्तररूपं यत् प्रस्तुतार्थपरिष्कृतम् । अन्तर्ध्वनिकं गीतमस्रगीतं तदुच्यते ॥" इत्युक्तेन गीतविशेषेण, मनोहरम् ] केचन, पण्डिता इति शेषः, इदम् उल्लाप्यं वदन्तीति शेषः ।

(छ) काव्यमाह, काव्यमिति ।—आरभटी—वृत्तिविशेषः, तया हीनम् । खण्डमात्रा-द्विपदिका-भग्नतालैः,—तत्तदाख्यगीतविशेषैरित्यर्थः, वर्णमात्रा तथा छड्डलिका—छन्दोभेदौ ताभ्यां युतं, [ "वर्णमात्राच्छगणिकायुतम्" इति पाठान्तरे तु,—वर्णमात्रेण अच्छा—स्वच्छा या गणिका, तया—तच्चरितेनेत्यर्थः, युतम् । मात्रपदेन मनसो व्यवच्छेदः । अत एवोक्तं काव्येन्दुप्रकाशकृता,—"वर्णमात्रस्वच्छवेश्यायुतम्" इति, "वर्णमात्रस्वच्छा न तु मनःस्वच्छा" इति तदर्थः ; "वर्णमात्राङ्गुलिकायुतम्" इति पुस्तकान्तरे पाठस्तु नितान्तमसत्, छन्दोभङ्गस्यापि सद्भावात् ] शृङ्गारभाषितं—शृङ्गारसूचकवाक्यसमन्वितम् ; नेता—नायकः, उदात्तः, स्त्री—नायिका, च उदात्ता । अत्र—काव्ये, आद्यौ—मुखप्रतिमुखे इत्यर्थः, अन्तिमः,—निर्वहणमित्यर्थः । अन्यत् सुगमम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ प्रेङ्खणम्,—

गर्भावमर्षरहितं प्रेङ्खणं हीननायकम्।
असूत्रधारमेकाङ्कमविष्कम्भप्रवेशकम्॥
नियुद्धसम्फेटयुतं सर्व्ववृत्तिसमाश्रितम्।
नेपथ्ये गीयते नान्दी तथा तत्र प्ररोचना॥५६५॥(ञ)

यथा,—बालिबधः।

अथ रासकम्,—

रासकं पञ्चपात्रं स्यान्मुखनिर्वहणान्वितम्।
भाषाविभाषाभूयिष्ठं भारतीकौशिकीयुतम्॥
असूत्रधारमेकाङ्कं सवीथ्यङ्गं कलाऽन्वितम्।
श्लिष्टनान्दीयुतं ख्यातनायिकं मूर्खनायकम्॥
उदात्तभावविन्याससंश्रितं चोत्तरोत्तरम्।
इह प्रतिमुखं सन्धिमपि केचित् प्रचक्षते॥५६६॥(झ)

यथा,—मेनकाहितम्।

---

(ञ) प्रेङ्खणमाह, गर्भेति।—गर्भावमर्षरहितं—गर्भविमर्षसन्धिद्वयवर्जितं, हीनः,—प्राकृतः, नायको यत्र तत्, नीचनायकमित्यर्थः, नियुद्धं—बाहुयुद्धं, तथा सम्फेटः,—सरोषभाषणं, ताभ्यां युतं, सर्व्वाभिः वृत्तिभिः,—कौशिक्यादिभिः, समाश्रितं—युक्तम्। केन नान्दी पाठ्या? प्ररोचना वा केन कार्य्या? इत्याह, नेपथ्ये इति। —गीयते—पठ्यते। तत्र—नेपथ्ये, प्ररोचना—भारत्या प्रवृत्तेरङ्गविशेषः, सा च कविपरिषदादीनां प्रशंसया सामाजिकानाम् उन्मुखीकरणम्। तथा चात्र नेपथ्यस्थेन येन केनचित् नटेन नान्दी पठनीया, प्ररोचना च कर्त्तव्या इति भावः।

(झ) रासकमाह, रासकमिति।—पञ्चपात्रं—पञ्चभिः पात्रैः,—नटैः, सम्पाद्य-मित्यर्थः, मुखस्य निर्वहणस्य ताभ्यां सन्धिविशेषाभ्यामन्वितं, भाषया विभाषया च—संस्कृतेन प्राकृतेन च इत्यर्थः, भूयिष्ठं—पर्य्याप्तं, भारत्या कौशिक्या च वृत्त्या युतं,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ संलापकम्,—

संलापकेऽङ्काश्चत्वारस्त्रयो वा नायकः पुनः ।
पाषण्डः स्याद्रसस्तत्र शृङ्गारकरुणेतरः ॥
भवेयुः पुरसंरोधच्छलसङ्ग्रामविद्रवाः ।
न तत्र वृत्तिर्भवति भारती न च कौशिकी ॥५६७॥(ञ)

यथा,—मायाकापालिकम् ।

अथ श्रीगदितम्,—

प्रख्यातवृत्तमेकाङ्कं प्रख्यातोदात्तनायकम् ।
प्रसिद्धनायिकं गर्भविमर्षाभ्यां विवर्जितम् ॥
भारतीवृत्तिबहुलं श्रीतिशब्देन संयुतम् ।
मतं श्रीगदितं नाम विद्वद्भिरुपरूपकम् ॥५६८॥ (ट)

यथा,—क्रीडारसातलम् ।

---

क्वचित् भारतीवृत्तिप्रधानं, क्वचित् पुनः कौशिकीवृत्तिप्रधानमिति भावः । वीथ्यङ्गाभ्यां सह वर्त्तमानं, कला—नृत्यादिकं चतुःषष्टिप्रकारं, तया अन्वितं, श्लिष्टया—भिन्नार्थया, काव्यार्थं प्रकारान्तरेण संसूचयन्त्येति यावत्, नान्द्या युतं, ख्याता—प्रसिद्धा, नायिका यत्र तत् । उदात्तभावस्य—नायकमहत्त्वस्य, विन्यासेन—वर्णनेन, संश्रितम् । सुगममन्यत् ।

(ञ) संलापकमाह, संलापके इति ।—पाषण्डः,—मूर्खः, अधार्म्मिको वा । पुरसंरोधः,—नगरावरोधः, छलं—"प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य छलना छलम्" इत्युक्तलक्षणं, सङ्ग्रामः,—युद्धं, विद्रवः,—"शङ्काभयत्रासकृतः सम्भ्रमो विद्रवो मतः" इत्युक्तलक्षणः । अन्यत् स्पष्टम् ।

(ट) श्रीगदितमाह, प्रख्यातेति ।—प्रख्यातवृत्तं—पुराणादिप्रसिद्धवृत्तान्तम् । प्रसिद्धा नायिका यत्र तत् ; गर्भविमर्षसन्धिद्वयवर्जितं, भारतीवृत्तिबहुलञ्च, श्री-इति शब्देन संयुतं—बहुशः श्रीशब्दप्रयोगयुतं, [ "सङ्कुलम्" इति पाठे—"श्री" इति शब्देन सङ्कुलं—बहुलम् इत्यर्थः ] ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

श्रीरासीना श्रीगदिते गायेत् किञ्चित् पठेदपि।
एकाङ्को भारतीप्राय इति केचित् प्रचक्षते॥५६९॥(ठ)

ऊह्यमुदाहरणम्।

अथ शिल्पकम्,—

चत्वारः शिल्पकेऽङ्काः स्युश्चतस्रो वृत्तयस्तथा।
अशान्तहास्याश्च रसा नायको ब्राह्मणो मतः॥
वर्णनाऽत्र श्मशानादेर्हीनः स्यादुपनायकः।
सप्तविंशतिरङ्गानि भवन्त्येतस्य तानि तु॥
आशंसातर्कसन्देहतापोद्वेगप्रसक्तयः।
प्रयत्नग्रथनोत्कण्ठाऽवहित्थाप्रतिपत्तयः॥
विलासालस्यवाम्यानि प्रहर्षाश्वाससूढताः।
साधनानुगमाच्छ्वासविस्मयाः प्राप्तयस्तथा॥
लाभविस्मृतिसम्फेटा वैशारद्यं प्रबोधनम्।
चमत्कृतिश्चेत्यमीषां स्पष्टत्वाल्लक्ष्म नोच्यते॥५७०॥(ड)

---

(ठ) श्रीरिति।—श्रीगदिते आसीना—उपविष्टा, श्रीः,—लक्ष्मीवेशधारिणी नटीत्यर्थः, किञ्चित् गायेत् पठेदपि, तथा एकाङ्कः,—एकेनैव अङ्केन समाप्यः, भारतीप्रायः,—भारतीवृत्तिबहुलः सन्दर्भः, इति केचित्—पण्डिताः प्रचक्षते। यथा,—श्रीशिवनाथसूरिरचितम् अजितं नाम श्रीगदितम्।

(ड) शिल्पकमाह, चत्वार इति।—वृत्तयः,—कौशिक्यादयः, अशान्तहास्याः,—शान्तहास्याभ्यामन्ये इत्यर्थः। श्मशानादेरित्यादिना शवादेर्ग्रहणम्। उपनायकः,—नायकसहकारी, हीनः,—इतरः; एतस्य—शिल्पकस्य, आशंसादीनि चमत्कृत्यन्तानि सप्तविंशतिः अङ्गानि। प्रसक्तिः,—आसक्तिः, अवहित्था—आकारगोपनं, प्रतिपत्तिः,—क्रियार्थावगमः। ["विलासालस्यवाम्यानि" इत्यत्र "विलासालस्यवाष्पाणि" तथा "प्रहर्षाश्वाससूढताः" इत्यत्र "प्रहर्षाश्लीलमूढताः" इति पाठान्तरद्वयम्] साधनानु-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सम्फेटग्रथनयोः (ढ) पूर्व्वमुक्तत्वादेव लक्ष्म सिद्धम् । यथा,—कनकावतीमाधवः ।

अथ विलासिका,—

शृङ्गारबहुलैकाङ्का दशलास्याङ्गसंयुता ।
विदूषकविटाभ्याञ्च पीठमर्द्देन भूषिता ॥
हीना गर्भविमर्षाभ्यां सन्धिभ्यां हीननायका ।
स्वल्पवृत्ता सुनेपथ्या विख्याता सा विलासिका ॥५७१॥ (थ)

केचित् तत्र विलासिकास्थाने "विनायिका" इति पठन्ति, तस्यास्तु "दुर्मल्लिकायामन्तर्भावः" इत्यन्ये ।

अथ दुर्मल्लिका,—

दुर्मल्ली चतुरङ्का स्यात् कौशिकीभारतीयुता ।
अगर्भा नागरनरा न्यूननायकभूषिता ॥
त्रिनालिः प्रथमोऽङ्कोऽस्यां विटक्रीड़ामयो भवेत् ।
पञ्चनालिर्द्वितीयोऽङ्को विदूषकविलासवान् ॥
षड्नालिकस्तृतीयस्तु पीठमर्दविलासवान् ।
चतुर्थो दशनालिः स्यादङ्कः क्रीड़ितनायकः ॥५७२॥ (त)

यथा,—बिन्दुमती ।

---

गमः,—साधनस्य—इष्टसाधनस्य, अनुगमः । अमीषाम्—अङ्गानां, स्पष्टत्वात्—सहजत्वात्, लक्ष्म—लक्षणं, न उच्यते ।

(ढ) "सम्फेटो रोषभाषणम्" तथा "उपन्यासस्तु कार्य्याणां ग्रथनम्" इत्युक्तः लक्षणे सम्फेटग्रथने ।

(थ) विलासिकामाह, शृङ्गारेति ।—स्वल्पानि—नातिबहुलानि, वृत्तानि—पद्यानि, इतिवृत्तानि वा यत्र तादृशी । अन्यत् स्पष्टम् ।

(त) दुर्मल्लिकामाह, दुर्मल्लीति ।—अगर्भा—गर्भसन्धिवर्जिता, नागरनराः,—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ प्रकरणिका,—

नाटिकैव प्रकरणी सार्थवाहादिनायका।
समानवंशजा नेतुर्भवेद्यत्र च नायिका ॥५७३॥ (थ)

मृग्यमुदाहरणम्।

अथ हल्लीशः,—

हल्लीश एक एवाङ्कः सप्ताष्टौ दश वा स्त्रियः।
वागुदात्तैकपुरुषः कौशिकीवृत्तिसङ्कुलः॥
मुखान्तिमौ तथा सन्धी बहुताललयस्थितिः॥५७४॥ (द)

यथा,—केलिरैवतकम्।

अथ भाणिका,—

भाणिका श्लक्ष्णनेपथ्या मुखनिर्वहणान्विता।
कौशिकीभारतीवृत्तियुक्तैकाङ्कविनिर्म्मिता॥
उदात्तनायिका मन्दपुरुषात्राङ्गसप्तकम्।
उपन्यासोऽथ विन्यासो विबोधः साध्वसं तथा॥

---

नागराः,—नगरे जाताः, नराः वर्ण्यमानाः यत्र तादृशी, चतुरजनबहुलेति भावः, न्यूनेन—जात्या निकृष्टेन, नायकेन भूषिता; अस्यां प्रथमः अङ्कः त्रिनालिः,—षड्घटिकासाध्येतिवृत्तरुचिरः, विटस्य क्रीडामयः,—केलिबहुलः; पञ्चनालिः,—दशघटिकासम्पाद्यः। षड्नालिकः,—द्वादशघटिकासम्पादनीयः। दशनालिः,—विंशतिघटिकानिर्वाह्यः। अन्यत् स्पष्टम्।

(थ) प्रकरणिकामाह, नाटिकैवेति।—सार्थवाहः—वणिक्। अन्यत् स्पष्टम्।

(द) हल्लीशमाह, हल्लीश इति।—हल्लीशे एकः एवाङ्कः, न तु ततोऽधिकाऽङ्करचना कर्त्तव्येति भावः; सप्तसङ्ख्यातो न न्यूनाः, दशसङ्ख्यातश्च नाधिकाः स्त्रियः कर्त्तव्याः इति शेषः, वाक्—भाषणं, च उदात्ता, एकपुरुषः,—एकमात्रनटः, कौशिक्या वृत्त्या सङ्कुलः,—प्रायेण कौशिकीवृत्त्या निष्पादितेतिवृत्त इति भावः। मुखान्तिमौ—आद्यचरमौ, मुखनिर्वहणौ इत्यर्थः। अन्यत् स्पष्टम्।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

समर्पणं निवृत्तिश्च संहार इति सप्तमः ॥५७५॥ (ध)
उपन्यासः प्रसङ्गेन भवेत् कार्य्यस्य कीर्त्तनम् ।
निर्वेदवाक्यव्युत्पत्तिर्विन्यास इति स स्मृतः ॥
भ्रान्तिनाशो विबोधः स्यान्मिथ्याऽऽख्यानन्तु साध्वसम् ।
सोपालम्भवचः कोपपीडयेह समर्पणम् ॥
निदर्शनस्योपन्यासो निवृत्तिरिति कथ्यते ।
संहार इति च प्राहुर्यत् कार्य्यस्य समापनम् ॥५७६॥ (न)

स्पष्टान्युदाहरणानि यथा,—कामदत्ता ।

एषां सर्व्वेषामपि नाटकप्रकृतिकत्वेऽपि यथौचित्यं यथालाभं नाटकोक्तविशेषपरिग्रहः । यत्र च नाटकोक्तस्यापि पुनरुपादानं, तत्र तत्सद्भावस्य नियमः ।

अथ श्रव्यकाव्यानि,—

श्रव्यं श्रोतव्यमात्रं तत् पद्यगद्यमयं द्विधा ॥५७७॥ (प)

(ध) भाणिकामाह, भाणिकेति ।—सूक्ष्मनेपथ्या—परिच्छन्नपरिच्छदा । मन्दः,—हीनः, पुरुषः,—नायकः यस्यां तादृशी । अङ्गसप्तकम्—उपन्यासादीनि सहाराल्तानि अस्या भाणिकायाः सप्ताङ्गानि, तानि च स्पष्टानि इति नोदाह्रियन्ते । अन्यत् स्पष्टम् ।

(न) उपन्यासादिसप्ताङ्गानां लक्षणान्याह, उपन्यास इति ।—प्रसङ्गेन कार्य्यस्य कीर्त्तनं—सूचनम् उपन्यासः भवेत् । निर्वेदः,—"तत्त्वज्ञानापदीर्षादिः" इत्युक्तलक्षणः, तस्य वाक्ये—तत्सूचकवचसि, व्युत्पत्तिः,—विशेषज्ञता, विन्यासः इति स्मृतः । भ्रान्तेः,—भ्रमस्य, अज्ञानस्य इत्यर्थः, नाशः,—विच्छेदः, विबोधः स्यात् ; मिथ्या आख्यानं—कथनं, साध्वसम् ; इह—भाणिकायां, कोपेन पीड़या वा सोपालम्भवचः,—तिरस्कारवचनं समर्पणम् ; निदर्शनस्य—दृष्टान्तस्य, उपन्यासः,—कीर्त्तनं, निवृत्तिरिति कथ्यते । कार्य्यस्य यत् समापनं, तत् संहार इति प्राहुः, प्राश्च इति शेषः ।

(प) दृश्यकाव्यमुक्त्वा श्रव्यकाव्यमाह, श्रव्यमिति ।—श्रोतव्यमात्रमिति मात्रशब्देन दृश्यकाव्यव्यवच्छेदः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र पद्यमयान्याह,—

छन्दोबद्धपदं पद्यं तेनैकेन च मुक्तकम् ।
द्वाभ्यान्तु युग्मकं सन्दानितकं त्रिभिरिष्यते ॥
कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम् ॥५७८॥(फ)

तत्र मुक्तकं यथा मम,—

"सान्द्रानन्दमनन्तमव्ययमजं यद्योगिनोऽपि क्षणं
साक्षात्कर्त्तुमुपासते प्रति मुहुर्ध्यानैकतानाः परम् ।
धान्यास्ता मथुरापुरीयुवतयस्तद् ब्रह्म याः कौतुकाद्
आलिङ्गन्ति समालपन्ति शतधाऽऽकर्षन्ति चुम्बन्ति च ॥"(ब)

युग्मकं यथा मम,—

"किं करोषि ? करोपान्ते कान्ते ! गण्डस्थलीमिमाम् ।
प्रणयप्रवणे कान्तेऽनैकान्ते नोचिताः क्रुधः ॥

(फ) छन्द इति ।—छन्दोभिः,—गायत्र्यादिभिः, बद्धानि—रचितानि, पदानि—सुप्तिङन्तरूपाणि, यत्र तादृशम् । एकेन तेन—पद्येन, [ "तेन मुक्तेन" इति पाठे—मुक्तेन—पद्यान्तरनिरपेक्षेण एकेन इत्यर्थः ] द्वाभ्यां—परस्परापेक्षाभ्यां पद्याभ्याम्, एवमग्रेऽपि ; सन्दानितकमिति ।—अस्यैव विशेषकमिति तिलकमिति च संज्ञा । पञ्चभिरिति न्यूनसंख्याव्यवच्छेदः, तेन माघादौ दशादिभिः श्लोकैः कुलकं सङ्गच्छते ।

(ब) मुक्तकमुदाहरति सान्द्रेति ।—मुहुः,—पुनः पुनः, ध्यानैकतानाः,—ध्यानैकाग्रचित्ताः, समाधिनिष्ठा इति भावः, योगिनः अपि सान्द्रानन्दम्—आनन्दघनम्, अनन्तम्—अपारम्, अव्ययम्—अच्युतम्, अजं—जन्मरहितं, परं यत् ब्रह्म क्षणं—क्षणमपि, प्रतिसाक्षात्कर्त्तुं—प्रत्यक्षीकर्त्तुम्, उपासते—भजन्ते, ताः,—प्रसिद्धाः, मथुरापुरीयुवतयः, धन्याः,—पुण्यवत्यः, [ "मधुरापुरी" इति पाठे— स एवार्थः, तत्र मधुसूदनसरस्वतीपद्यं प्रमाणं यथा,—"काञ्ची ते धृतयोगसम्पदभितो जाता विशाखाकृतिर्यावन्ती मधुरा ध्वनिं विदधती पश्चादयोध्याऽभवत् । माया द्वारवती शिवाधिवसतिः सा काशिका दृश्यते तच्चित्रं न वदामि माधव ! यतः त्वां सा सदा संश्रिता ॥" इति ] याः तत्—परं ब्रह्म, कौतुकात्—आनन्दात्, शतधा—बहुधा इत्यर्थः, आलिङ्गन्ति, समालपन्ति, आकर्षन्ति, क्रीड़ार्थमाह्वरन्ति, चुम्बन्ति च । शार्दूलविक्रीड़ितं वृत्तम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इति यावत् कुरङ्गाचीं वक्तुमीहामहे वयम् ।
तावदाविरभूच्चूते मधुरो मधुपध्वनिः ॥" (भ)

एवमन्यान्यपि,—

सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः ।
सद्वंशः क्षत्रियो वाऽपि धीरोदात्तगुणान्वितः ॥
एकवंशभवा भूपाः कुलजा बहवोऽपि वा ।
शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते ॥
अङ्गानि सर्व्वेऽपि रसाः सर्व्वे नाटकसन्धयः ।
इतिहासोद्भवं वृत्तमन्यद् वा सज्जनाश्रयम् ॥
चत्वारस्तस्य वर्गाः स्युस्तेष्वेकञ्च फलं भवेत् ।
आदौ नमस्क्रियाऽऽशीर्वा वस्तुनिर्द्देश एव वा ॥
क्वचिन्निन्दा खलादीनां सताञ्च गुणकीर्त्तनम् ।
एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः ॥
नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह ।
नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते ॥

---

(भ) किमिति।—हे कान्ते ! करस्य उपान्ते—प्रान्तभागे, करतले इत्यर्थः, इमां गण्डस्थलीं किं—कथं करोषि ? न एकान्तः,—एकावसानं यस्य सः नैकान्तः, अन्यासक्त इति यावत्, स न भवतीति अनैकान्तः तस्मिन्,—अव्यभिचारिणि, त्वन्माव-वल्लभे इत्यर्थः, प्रणयप्रवणे—प्रणयाकाङ्क्षिणीत्यर्थः, कान्ते क्रुधः,—कोपाः, न उचिताः ; इति—एवं प्रकारेण, यावत् वयं कुरङ्गाचीं—मृगनयनां, वक्तुम् ईहामहे—चेष्टामहे, तावत् चूते—रसाले, मधुरः,—मनोहरः, मधुपध्वनिः,—भ्रमरझङ्कारः, आविरभूत्—अजायत ; भ्रमररवेणैव मानभङ्गो जातः, नास्माकं प्रयासस्यावश्यकतेति भावः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत् ।
सन्ध्यासूर्य्येन्दुरजनीप्रदोषध्वान्तवासराः ॥
प्रातर्मध्याह्नमृगयाशैलर्त्तुवनसागराः ।
सम्भोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः ॥
रणप्रयाणोपयममन्त्रपुत्त्रोदयादयः ।
वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह ॥
कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा ।
नामास्य सर्गोपादेयकथया सर्गनाम तु ॥५७९॥(म)

(म) महाकाव्यमाह, सर्गबन्ध इति ।—सर्गैः,—अवान्तरार्थवर्णनैः, उपलक्षितः बन्धः,—पद्यबन्ध इत्यर्थः, महाकाव्यम् तत्र—महाकाव्ये इत्यर्थः, सुरः,—देवविशेषः, यथा,—किरातादि । बहवः,—अनेके, नायका वा इत्यर्थः, यथा,—रघुवंशे । नाटकसन्धयः,—नाटकोक्तमुखप्रतिमुखगर्भविमर्षनिर्वहणाख्याः पञ्चसन्धयः, प्रयोज्याः इति शेषः; इतिहासेषु पुराणादिषु, उद्भवम्—उत्पन्नं, वृत्तं—चरितं, भारतादिप्रसिद्धमित्यर्थः, अन्यत्—लोकप्रसिद्धमित्यर्थः, सज्जनाश्रयं—साधुजनाचरितमित्यर्थः, चत्वारो वर्गाः,—धर्मार्थकाममोक्षाः, ("त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः" इत्यमरः) तेषु—चतुर्वर्गेषु मध्ये एकञ्च [ इति चकारो वार्थः ] फलं—वर्गः, भवेत् । आदौ—आरम्भे, महाकाव्यस्येति शेषः, नमस्क्रिया—देवतादीनां नमस्कारः, आशीर्वा—शुभाशंसनं वा, लोकानामिति शेषः, वस्तुनिर्द्देशः,—वस्तुनः,—इतिवृत्तसम्बन्धिनः प्रधानस्य, वर्णनीयनायकस्य नाम्ना वा, निर्देशः,—कीर्त्तनम् । खलादीनां—दुर्ज्जनादीनाम् । एकवृत्तमयैः,—एकविधच्छन्दोनिबद्धैरित्यर्थः, अवसाने—सर्गसमाप्तौ, अन्यवृत्तकैः,—भिन्नच्छन्दोविरचितैरित्यर्थः, उपलक्षिताः, अष्टाधिकाः,—अष्टान्यूनाः, इह—महाकाव्ये ; नानावृत्तमयः,—बहुभिश्छन्दोभिः रचित इत्यर्थः ; यथा,—माघे चतुर्थः सर्गः, किराते—पञ्चमः, रघुवंशे—नवमः । उपयमः,—विवाहः । यथायोगं—यथासम्भवं, साङ्गोपाङ्गाः,—अङ्गप्रत्यङ्गसहिताः, वर्णनीयाः ; एतेन नयेन केनाप्यङ्गेन हीनमपि काव्यं न दुष्टमिति भावः, [ अवाहुरलङ्कारशेखरकाराः,—"नृपे विद्या नयः शक्तिर्बलं तस्कर-चाचमः । प्रजाशास्तिः प्रजारागो धर्मकामार्थतुल्यता ॥ प्रयाणरणखड्गादिशास्त्र-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्वरिपराजयः। अरिनाशोऽरिशैलादिवासोऽरिपुरशून्यता ॥ महःश्रीदानकीर्त्याद्या गुणौघा रूपवर्णनम्। महामात्ये नयः शास्त्रं धैर्य्यं बुद्धिर्गभीरता ॥ शक्तिः शस्त्रमलोभत्वं जनरागो विवेकिता ॥ पुरोहिते स्मृतिर्वेदा निमित्तापत्प्रतिक्रिया। दण्डनीतिज्ञता शुद्धिधर्म्मशीलकुलक्रमाः ॥ देव्यां विज्ञानचातुर्य्यं त्रपाशीलव्रतादयः। रूपलावण्यसौभाग्यप्रेमशृङ्गारमन्मथाः। वेणीधम्मिल्लसीमन्तभालभ्रूश्रवणनासिकाः। कपोलाधरनेत्रभ्रूकटाक्षदशनोक्तयः॥ कण्ठबाहुकरोरोजनाभयो मध्यं वलित्रयम्। रोमालिश्रोणिजङ्घोरुगतिक्रमनखाः क्रमात् ॥ कुमारे शस्त्रशास्त्रश्रीकलाबलगुणोच्छ्रयाः। बाल्यालीखुरलो राजभक्तिः शुभगतादयः॥ सेनापतौ महोत्साहः स्वामिभक्तिरभीरुता। अभ्यासो वाहने शास्त्रे शस्त्रे च विजयी रणे। देशे बहुखनिद्रव्यपण्यधान्याकरोद्भवाः। दुर्गग्रामजनाधिक्यनदीमातृकतादयः॥ ग्रामे धान्यलतावृक्षसरसीपशुपुष्टयः। क्षेत्रारघट्टकेदारग्रामेयीमुग्धविभ्रमाः ॥ पुरेऽट्टपरिखावप्रप्रतोलीतोरणादयः। प्रासादाध्वप्रपाऽऽरामवाप्यो वेश्या सतीत्वरी॥ सरस्यम्भोलहर्य्यम्भोगजाद्यम्बुजषट्पदाः। हंसचक्रादयस्तीरोद्यानस्त्रीपान्थकेलयः॥ अब्धौ द्वीपाद्रिरत्नोर्मिपीतयादोजगत्प्लवाः। विष्णुकुल्यागमचन्द्राहृद्विरौर्वोऽब्दपूरणम् ॥ सरित्यम्बुधियायित्वं वीच्यो जलगजादयः। पद्मानि षट्पदा हंसचक्राद्याः कूलशाखिनः॥ उद्याने सरणिः सर्व्वफलपुष्पलताद्रुमाः। पिकालिकेकिहंसाद्याः क्रीड़ावाप्यध्वगस्थितिः॥ शैले मेघौषधीधातुवंशकिन्नरनिर्झराः। शृङ्गपादगुहारत्नवनजीवाद्युपत्यकाः॥ अरण्येऽहिवराहेभयूथसिंहादयो द्रुमाः। काकोलूककपोताद्याः भिल्लभल्लदवादयः॥ आश्रमेऽतिथिपूजैणविश्वासो हिंस्रशान्तता। यज्ञधूमो मुनिसुता द्रुसेको वल्कलद्रुमाः॥ मन्त्रे पञ्चाङ्गता शक्तिषाड्गुण्योपायसिद्धयः। उदयाश्चिन्तनीयाश्च स्थैर्य्योन्नत्यादिसूक्तयः॥ दूते स्वस्वामितेजःश्रीविक्रमोन्नत्यकत्थनः। शत्रुक्षोभकरी चेष्टा धार्ष्ट्यं दाक्ष्यमभीरुता॥ युद्धे तु वर्म्मबलवीररजांसि तूर्य्यविश्वसनादशरमण्डपरक्तनद्यः। छिन्नातपत्ररथचामरकेतुकुम्भिमुक्तासुरोद्धृतभटामरपुष्पवर्षाः॥ प्रयाणे भेरिनिस्वानभूकम्पबलधूलयः। करभोक्षध्वजच्छत्रवणिक्छकटवेसराः॥ मृगयायां श्वसञ्चारो वागुरा नीलवेशता। भटढक्कामृगत्रासःसिंहयुद्धं त्वरागतिः॥ अश्वे खरखुरोत्खातरजः सन्नद्धसंस्थितिः। तेजो वेगित्वमौन्नत्यं जातिर्धाराप्रपञ्चनम् ॥ गजे सहस्रयोधित्वमुच्चत्वं कर्णचापलम्। अरिव्यूहविभेदित्वं कुम्भमुक्तामदालिनः॥ सुरभौ दोलाकोकिलमारुतसूर्य्यगतितरुदलोद्भेदाः। जातीतरपुष्पचयाम्रमञ्जरीभ्रमरझङ्काराः॥ ग्रीष्मे पाटलमल्लीतापसरःपथिकशोषवाताढ्याः। सक्तुप्रपाप्रपास्त्रीमृगतृष्णासादिफलपाकाः॥ वर्षासु घनशिखिस्मयहंसगमाः पङ्ककन्दलोद्भेदौ। जातीकदम्बकेतकझञ्झानिलनिम्नगा हलिप्रीतिः। शरदीन्दुरविपटुत्वं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

जलाच्छतागस्त्यहंसवृषदर्पाः। सतच्छदपद्मसिताभधान्यशिखिपचमदपाताः॥ हेमन्ते दिनलघुता शीतयवस्तम्बमरुवकहिमानि। शिशिरे करीषधूमः कुमुदाम्बुजदाहशिखिरतोत्कर्षाः॥ सूर्य्येऽरुणता रविमणिचक्राम्बुजपथिकलोचनप्रीतिः। तारेन्दुदीपकौषधिघूकतमश्चौरकुमुदकुलटार्त्तिः॥ चन्द्रे कुलटाचक्राम्बुरुहविरहितमोहानिरौज्ज्वल्यम्। जलधिजलनेत्रकैरवचकोरचन्द्राश्मदम्पतिप्रीतिः॥ विवाहे स्नानशुभ्राङ्गभूषालुलुलवधीरवाः। वेदी सीमन्ततारेचा लाजामङ्गलवर्त्तनम्॥ विरहे तापनिश्वासचिन्ता मौनं कृशाङ्गता। अब्दशय्या निशादैर्घ्यं जागरः शिशिरोष्णता॥ स्वयंवरे शचीरचा मञ्चमञ्चपसज्जता। राजपुत्रीरूपाकारान्वयचेष्टाप्रकाशनम्॥ सुरापाने विकलता स्खलनं वचने गतौ। लज्जा मानच्युतिः प्रेमाधिक्यं रतोत्सवभ्रमाः॥ पुष्पावचये पुष्पावचयः पुष्पार्पणार्थिने दयिते। मानाद्यं गोत्रस्खलनेर्ष्यावक्रोक्तिसम्भ्रमाश्लेषाः॥ जलकेलौ सरःक्षोभचक्रहंसापसर्पणम्। पद्मम्लानिः पयःक्षेपो ह्याशी भूषणच्युतिः॥ सुरते सात्त्विका भावाः सीत्कारः कुड्मलाक्षता। काञ्चीकङ्कणमञ्जीररवोऽधरनखक्षते॥ प्रातः कोकाम्बुजोत्कर्षौ मध्याह्ने तापसंप्लवः। सायं सूर्य्यातिलौहित्यं चक्रपद्मादिविप्लवः॥ अन्धकारेऽतिसान्द्रत्वं विश्वलोपसमर्थता। आकस्मिकसमारम्भा निःशङ्कमभिसारिकाः॥ वर्ण्येषु वर्ण्यभावानां दिशावमिह दर्शितम्। चिद्रूपैश्चिन्त्यमानानां भवत्येषामनन्तता॥" इति]। कवेः,—प्रणेतुः, वा इतरस्य—वर्णनीयचरित्रस्य, वा नायकस्य, वा इतरस्य—अन्यस्य, नाम्ना अस्य—महाकाव्यस्य, नाम, कर्त्तव्यमिति शेषः। तत्र कविनाम यथा,—माघभारविप्रभृति। वृत्तनाम यथा,—कुमारसम्भवादि। नायकनाम यथा,—रघुवंशादि। इतरनाम यथा,—भट्टिप्रभृति। तु—किन्तु, सर्गनाम सर्गे उपादेया—वर्णनीया, या कथा तया, कर्त्तव्यमिति शेषः; यथा,—रतिविलापो नाम चतुर्थः सर्ग इत्यादि। अत्र प्रकाराः यथा,—"शास्त्रं काव्यं शास्त्रकाव्यं काव्यशास्त्रं च भेदतः। चतुष्प्रकारः प्रसरः सतां सारस्वतो मतः॥ शास्त्रं काव्यविदः प्राहुः सर्व्वकाव्याङ्गलक्षणम्। काव्यं विशिष्टशब्दार्थसाहित्यसदलङ्कृति॥ शास्त्रकाव्यं चतुर्व्वर्गप्रायं सर्वोपदेशकृत्। भट्टिभौमककाव्यादि काव्यशास्त्रं प्रचक्षते॥ शास्त्रं कुर्य्यात् प्रयत्नेन प्रसन्नार्थमनुष्टुभा। येन सर्वोपकाराय याति सुस्पष्टसेतुताम्॥ काव्ये रसानुसारेण वर्णनानुगुणेन च। कुर्व्वीत सर्व्ववृत्तानां विनियोगं विभागवित्॥ शास्त्रकाव्येऽतिदीर्घाणां वृत्तानां न प्रयोजनम्। काव्यशास्त्रेऽपि वृत्तानि रसायत्तानि काव्यवित्॥ पुराणप्रतिबिम्बेषु प्रसन्नोपायवर्त्मसु। उपदेशप्रधानेषु कुर्य्यात् सर्वेष्वनुष्टुभम्॥ नानावृत्तविशेषास्तु कवेः शक्तस्य शासनात्। यान्ति प्रभोरिवात्यन्तमयोग्या अपि योग्यताम्॥" इति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सन्ध्यङ्गानि यथालाभमत्र विधेयानि। "अवसानेऽन्यवृत्तकैः" इति बहुवचनमविवक्षितम्। साङ्गोपाङ्गा इति जलकेलि-मधुपानादयः। (य) यथा,—रघुवंश-शिशुपालवध-नैषधादयः। यथा वा,—मम राघवविलासादिः।

**अस्मिन्नार्षे पुनः सर्गा भवन्त्याख्यानसंज्ञकाः॥५८०॥(र)**

अस्मिन्—महाकाव्ये, यथा,—महाभारतम्। (ल)

**प्राकृतैर्निर्म्मिते तस्मिन् सर्गा आश्वाससंज्ञकाः।**
**छन्दसा स्कन्धकेनैतत् क्वचिद्गलितकैरपि ॥५८१॥(व)**

यथा,—सेतुबन्धः। यथा वा,—मम कुवलयाश्वचरितम्।

**अपभ्रंशनिबन्धेऽस्मिन् सर्गाः कड़वकाभिधाः।**
**तथाऽपभ्रंशयोग्यानि च्छन्दांसि विविधान्यपि ॥५८२॥(श)**

यथा,—कर्णपराक्रमः।

---

(य) रसेषु शृङ्गारस्यैव प्राधान्यात् जलकेलिमधुपानादयः तदुदाहरणत्वेन प्रदर्शिताः। एवं वीरादिषु यथासम्भवं साङ्गोपाङ्गोदाहरणं मृग्यम्।

(र) अस्मिन्निति।—आर्षे—ऋषिप्रणीते, अस्मिन्—महाकाव्ये, सर्गाः आख्यानसंज्ञकाः भवन्ति। सर्गस्थाने आख्यानशब्दः प्रयोज्य इति भावः।

(ल) महाभारतमिति।—महाभारतादौ गद्यसत्त्वेऽपि पद्यप्राचुर्य्येणैव महाकाव्यत्वव्यवहारः।

(व) प्राकृतैरिति।—प्राकृतैः,—भाषाविशेषैः, निर्म्मिते—प्रणीते, तस्मिन्—महाकाव्ये। स्कन्धकेन—तदाख्येन, ["छन्दसाऽऽस्कन्दकेन" इति पाठे तु,—आस्कन्दकेन—तदाख्येन, छन्दसा इति बोध्यम्] एतत्—प्राकृतं महाकाव्यमित्यर्थः। गलितकैः,—तदाख्यच्छन्दोविशेषैरित्यर्थः।

(श) अपभ्रंशेति।—अपभ्रंशः,—अपभाषा, तद्रचितनिबन्धः यत्र तादृशे, अस्मिन्—महाकाव्ये। सर्गाः कड़वक इत्यभिधा येषां तथोक्ताः, पद्यानि पुनः अपभ्रंशयोग्यैः विविधैः छन्दोभिः निबद्धानि भवन्ति इति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भाषाविभाषानियमात् काव्यं सर्गसमुज्झितम्।
एकार्थप्रवणैः पद्यैः सन्धिसामग्र्यवर्जितम् ॥५८३॥(ष)

यथा,—भिक्षाटनम्, आर्य्याविलासश्च।

खण्डकाव्यं भवेत् काव्यस्यैकदेशानुसारि च ॥५८४॥(स)

यथा,—मेघदूतादिः।

कोषः श्लोकसमूहस्तु स्यादन्योऽन्यानपेक्षकः।
व्रज्याक्रमेण रचितः स एवातिमनोरमः ॥५८५॥(ह)

सजातीयानामेकत्र सन्निवेशो व्रज्या। यथा,—मुक्तावल्यादिः।

अथ गद्यकाव्यानि। तत्र गद्यम्,—

वृत्तबन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च।
भवेदुत्कलिकाप्रायं चूर्णकञ्च चतुर्व्विधम् ॥

(ष) काव्यमाह, भाषेति।—भाषा—संस्कृतादि, विभाषा—विरुद्धभाषा, अपभ्रंशादिरिति यावत्, तयोर्नियमात्—भाषया रचिते न विभाषा, विभाषया रचिते न भाषा प्रयोक्तव्या इति नियमेन, रचितमिति शेषः, सर्गसमुज्झितं—सर्गबन्धरहितम्, एकार्थप्रवणैः,—एकार्थप्रतिपादकैः, एकवाक्यतापन्नैरिति यावत्, पद्यैः, रचितमिति शेषः, सन्धिसामग्र्यवर्जितं—मुखप्रतिमुखादिसन्धिसमुदायहीनं यत, तत् काव्यम्।

(स) खण्डकाव्यमाह, खण्डेति।—काव्यस्य—अनन्तरनिरूपितस्य, एकदेशानुसारि—किंयदंशानुरूपमित्यर्थः; तेनाऽत्र भाषानियमो नास्ति, एकार्थप्रवणैः संस्कृतपद्यैः निर्म्मितं काव्यं खण्डकाव्यं भवेत्।

(ह) कोषमाह, कोष इति।—अन्योऽन्यापेक्षकः,—परस्परनिरपेक्षः, श्लोकानां समूहः कोषः। स एव—कोषः, व्रज्याक्रमेण—सजातीयसन्निवेशनियमेन, रचितश्चेत् अतिमनोरमः,—अतिप्रशंसनीय इत्यर्थः। यथा,—अमरकोषादिः। यद्वा,—अकारादि-हकारान्ताद्यक्षरपद्यसमूहो व्रज्या, तत्पक्षे,—व्रज्याघटितस्य आर्य्यासप्तशत्यादयः उदाहरणं, तद्भिन्नस्य सुभाषितावलिप्रभृतयः इति बोध्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**आद्यं समासरहितं वृत्तभागयुतं परम्।**
**अन्यद्दीर्घसमासाढ्यं तुर्य्यं चाल्पसमासकम्॥५८६॥** (क)

मुक्तकं यथा,—"गुरुर्वचसि पृथुरुरसि" इत्यादि। वृत्तगन्धि यथा मम,—"समरकण्डूयननिविड़भुजदण्डकुण्डलीकृतकोदण्ड-शिञ्जिनीटङ्कारोज्जागरितवैरिनगर!"। (ख) अत्र "कुण्डलीकृतकोदण्ड" इत्यनुष्टुब्वृत्तस्य पादः। "समरकण्डूयन" इति च प्रथमाक्षरद्वयरहितस्तस्यैव पादः। उत्कलिकाप्रायं यथा ममैव —"अणिसं विसुमरणिसिददरसरविसरविदलितसमरपरिगदपवरपरवल!"(ग) इत्यादि। चूर्णकं यथा मम—"गुणरत्नसागर! जगदेकनागर! कामिनीमदन! जनरञ्जन!" इत्यादि।

**कथायां सरसं वस्तु गद्यैरेव विनिर्म्मितम्।**
**क्वचिदत्र भवेदार्य्या क्वचिद् वक्त्रापवक्त्रके॥**

---

(क) गद्यमाह, वृत्तेति।—वृत्तबन्धेन—पद्यबन्धेन, उज्झितं—त्यक्तं, श्रव्यकाव्यमिति शेषः, गद्यम्। तच्च गद्यमित्यवाध्याहार्य्यं, चतुर्विधं—मुक्तकं, वृत्तगन्धि, उत्कलिकाप्रायं, चूर्णकञ्च। आद्यं—मुक्तकमित्यर्थः, समासरहितम्; परं—वृत्तगन्धि, वृत्तभागयुतं—वृत्तस्य—पद्यस्य, भागेन—अंशेन, पादपादांशेनेत्यर्थः, युतम्; अन्यत्—उत्कलिकाप्रायमित्यर्थः, दीर्घसमासेन आढ्यं—युतम्; तुर्य्यं—चतुर्थं, चूर्णकमित्यर्थः, अल्पसमासकम्—अल्पेन समासेन युक्तमित्यर्थः। एतच्च स्पष्टीकृतमस्माभिः अस्मत्कृतायां वृत्तरत्नाकरस्य छन्दोमञ्जर्य्याश्च टीकायाम्।

(ख) समरेति।—समरस्य कण्डूयनाय—कण्डूतिनिवृत्त्यर्थमित्यर्थः, निविड़ाभ्यां—दृढ़ाभ्यां, भुजदण्डाभ्यां कुण्डलीकृतं—मण्डलीकृतं, यत् कोदण्डं—धनुः, तस्य शिञ्जिन्याः,—मौर्व्याः, टङ्कारः तेन उज्जागरितं वैरिणः,—शत्रोः, नगरं येन तत्सम्बुद्धौ।

(ग) अणिसं इति।—["अनिशं विस्मरनिशितशरशरविसरविदलितसमरपरिगतप्रवरपरबल!" इति संस्कृतम्]। अनिशम्—अनवरतं, विस्मराः,—प्रसरन्तः, ये निशिततराः,—शाणिततराः, अतितीक्ष्णा इत्यर्थः, शराः, तेषां विसरेण—विक्षेपेण, विदलितं समरपरिगतं—सङ्ग्रामस्थितं, प्रवरं—प्रबलमित्यर्थः, परबलं—शत्रुसैन्यं येन तत्सम्बुद्धौ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनम् ॥५८७॥(घ)

यथा,—कादम्बर्य्यादिः ।

आख्यायिका कथावत् स्यात् कवेर्वंशादिकीर्त्तनम् ।
अस्यामन्यकवीनाञ्च वृत्तं पद्यं क्वचित् क्वचित् ॥
कथांशानां व्यवच्छेद आश्वास इति बध्यते ।
आर्य्यावक्त्रापवक्त्राणां छन्दसा येन केनचित् ॥
अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम् ॥५८८॥ (ङ)

यथा,—हर्षचरितादिः ।

"अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात् ।" इति दण्ड्याचार्य्यवचनात् केचित्,—"आख्यायिका नायकेनैव निबद्धव्या" इत्याहुः, तदयुक्तम् । (च) आख्यानादयश्च कथाऽऽख्यायि-

(घ) गद्यभेदरूपां कथामाह, कथायामिति ।—कथायां सरसं वस्तु—इतिवृत्तं, गद्यैरेव विनिर्म्मितं, भवेदिति शेषः । अत्र—कथायां, क्वचित् आर्य्या भवेत्, क्वचिद्वा वक्त्रम् अपवक्त्रकञ्च छन्दसी, प्रयोज्ये इति शेषः । आदौ—कथारम्भात् प्राक्, पद्यैः,—श्लोकैः, नमस्कारः, तथा खलादेः,—दुर्ज्जनादेः, वृत्तस्य—चरित्रस्य, कीर्त्तनं, भवेदिति शेषः ।

(ङ) गद्यस्यापरभेदरूपामाख्यायिकामाह, आख्यायिकेति ।—आख्यायिका कथावत् स्यात्—कथायां यथा सरसं वस्तु प्रयोज्यं, पद्यैर्नमस्कारः, खलचरित्रवर्णनञ्च, तथा आख्यायिकायामपीति भावः । विशेषस्त्वेतावान् यत्—कवेः वंशादीनां कीर्त्तनम्, [ अत्र "कविवंशानुकीर्त्तनम्" इत्यपि पाठान्तरमस्ति ] अस्याम्—आख्यायिकायाम्, अन्यकवीनाञ्च वृत्तं—चरित्रं क्वचित्, क्वचिद्वा पद्यं प्रयोज्यमिति शेषः । कथांशानां व्यवच्छेदः,—विशेषः, आश्वास इति नाम्ना बध्यते । आश्वासस्य मुखे—प्रारम्भे, आर्य्यावक्त्रापवक्त्राणां छन्दसां मध्ये येन केनचित् छन्दसा अन्यापदेशेन—अपरच्छलेन, भाविनः,—भविष्यतः, अर्थस्य—वस्तुनः, सूचनं—प्रकटनं, भवेदिति शेषः ।

(च) अपीति ।—तत्रापि—आख्यायिकायामपि, अन्यैः,—नायकव्यतिरिक्तैरपि, उदीरणात्—उच्चारणात्, अनियमः,—अनिश्चयस्तु, दृष्टः इति दण्ड्याचार्य्यस्य वचनात् नायकेनैव आख्यायिका निबद्धव्येति केषाञ्चिन्मतमयुक्तमिति फलितार्थः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कयोरेवान्तर्भावान्न पृथगुक्ताः । यदुक्तं दण्डिनैव,—"अत्रैवान्तर्भविष्यन्ति (क) शेषाश्चाख्यानजातयः" इति । एषामुदाहरणं,—पञ्चतन्त्रादि: ।

अथ गद्यपद्यमयानि, (ज)—

**गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते ॥ ५८९ ॥**

यथा,—देशराजचरितम् ।

**गद्यपद्यमयी राजस्तुतिर्विरुदमुच्यते ॥ ५९० ॥**

यथा,—विरुदमणिमाला ।

**करम्भकन्तु भाषाभिर्विविधाभिर्विनिर्मितम् ॥ ५९१ ॥**

यथा मम,—षोडशभाषामयी प्रशस्तिरत्नावली । एवमन्येऽपि भेदा उद्देशमात्रप्रसिद्धत्वादुक्तभेदानतिक्रमाच्च न पृथग् लक्षिताः । (झ)

इति श्रीमन्नारायणचरणारविन्दमधुव्रतसाहित्यार्णवकर्णधारध्वनिप्रस्थापनपरमाचार्य-
कविसूक्तिरत्नाकराष्टादशभाषावारविलासिनीभुजङ्गसान्धिविग्रहिकमहापात्र-
श्रीविश्वनाथकविराजकृतौ साहित्यदर्पणे दृश्यश्रव्यकाव्यनिरूपणो
नाम षष्ठः परिच्छेदः ॥ ६ ॥

---

(क) अत्रेति ।—अत्रैव—कथायाम्, आख्यायिकायां वेत्यर्थः ।

(ज) अथेति ।—गद्यपद्यमयानि—श्रव्यकाव्यानीत्यर्थः ।

(झ) एवमिति ।—अत्रैवं बोध्यम्;—"येन केनाऽपि तालेन गद्यपद्यसमन्वितम् । जयेत्युपक्रमं मालिन्यादिप्रासविचित्रितम् ॥ तदुदाहरणं नाम्ना विभक्त्यष्टाङ्गसंयुतम् । सम्बोधनविभक्त्या यत्प्रचुरं पद्यपूर्वकम् ॥ विमुक्तपुनराक्रुष्टशब्दः स्यान्नकतालकम् । आद्यन्तपद्यसंयुक्ता संस्कृतप्राकृतात्मिका ॥ अष्टभिर्वा चतुर्भिर्वा वाक्यैः स्कन्धसमन्विता ॥ प्रतिस्कन्धं भिन्नवाक्यरीतिर्देवनृपोचिता ॥ सर्वतो देवशब्दादिरेवा भोगावली मता । वर्णनासाङ्गविरुदवर्णनप्रचुरोज्ज्वला ॥ वाक्याडम्बरसंयुक्ता कथिता विरुदावली । ताराणां सङ्ख्यया पद्यैर्युक्ता तारावली मता ॥ विश्वेषां सङ्ख्यया पद्यैर्युक्ता विश्वावली मता । रत्नानां सङ्ख्यया पद्यैर्युक्ता रत्नावली मता ॥ पद्यैश्च पञ्चभिर्युक्ता प्रोक्ता पञ्चाननावली ॥" इत्यादयः भेदाः,—कविकर्मप्रकारविशेषाः, श्रव्यकाव्य-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# सप्तमः परिच्छेदः ।



इह हि प्रथमतः काव्ये दोषगुणरीत्यलङ्काराणामवस्थितिक्रमो दर्शितः । सम्प्रति के ते ? (क) इत्यपेक्षायामुद्देशक्रमप्राप्तानां दोषाणां स्वरूपमाह,—

**रसापकर्षका दोषाः ॥५८२॥ (ख)**

---

विशेषा इत्यर्थः, कविकर्म्मणः द्विप्रकारौ परिपाकौ प्रायः प्रसिद्धौ यथा,—"अर्थगम्भीरिमा पाकः स द्वेधा कविसम्मतः । द्राक्षापाको नारिकेलपाकश्च प्रस्फुटान्तरौ ॥ द्राक्षापाकः स कथितो बहिरन्तःस्फुरद्रसः । स नारिकेलपाकः स्यादन्तर्गूढ़रसोदयः ॥" इति । उद्देशमात्रेति ।—उद्देशमात्रेण—नाममात्रेण, प्रसिद्धाः,—विख्याताः, तद्भावात्, उक्तभेदानतिक्रमात्—उक्तभेदेष्वन्तर्भावात्, तेषां नामत एव भिन्नत्वं, न वस्तुगत्या इति तात्पर्य्यम् ; न पृथक्लक्षिताः,—ते नातिचमत्काराधायकत्वात् विश्वनाथेन परित्यक्ताः ।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन-पण्डितकुलपतिना बि, ए, उपाधिधारिणा
श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां
पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोधविद्यारत्नाभ्यां
प्रतिसंस्कृतायां विमलाख्यायां साहित्यदर्पणव्याख्यायां
षष्ठः परिच्छेदः ॥ ६ ॥

---

(क) अथ काव्यलक्षणं निर्णीय तदीयदोषादीन् विवक्षुः श्रीविश्वनाथकविः तस्य प्रकृतत्वं दोषनिरूपणस्यादिकर्त्तव्यताञ्चोपपादयति, इहेति ।—प्रथमतः,—दोषादिनिरूपणात् प्राक् । काव्ये—काव्यलक्षणे । रीतेश्छन्दोऽनुरोधेन पश्चान्निर्देशेऽपि वक्ष्यमाणयुक्त्या अलङ्कारनिरूपणात् प्रागेव तां निरूपयिष्यति, इति तस्या अलङ्कारात् प्रागिह निर्द्देशः । ते—दोषादयः । "हेयहानपूर्वकमुपादेयोपादानमिति सूचयितुं दोषनिरूपणस्य प्राथमिकत्वम्" इत्यपरे ।

(ख) दोषाणां तावत् सामान्यलक्षणमाह, रसेति ।—रसं—काव्यात्मभूतं चमत्कारविशेषम्, अपकर्षयन्ति—स्वसन्निधानेन क्वचित्तस्य तिरो यकतया, क्वचित् विरुद्धतोपस्थापकतया, क्वचित् स्वरूपतश्रावकतया, क्वचिदवश्यतप्रत्यायकतया



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अस्यार्थः प्रागेव स्फुटीकृतः । (ग) तद्विशेषानाह—

ते पुनः पञ्चधा मताः ।

पदे पदांशे वाक्येऽर्थे सम्भवन्ति रसेऽपि यत् ॥५६३॥(घ)

तत्र,—

दुःश्रवत्रिविधाश्लीलाऽनुचितार्थाऽप्रयुक्तताः ।

ग्राम्योऽप्रतीतसन्दिग्धनेयार्थनिहतार्थताः ॥

अवाचकत्वं क्लिष्टत्वं विरुद्धमतिकारिता ।

अविमृष्टविधेयांशभावश्च पदवाक्ययोः ।

---

न्यभावं नयन्तीति तथोक्ताः, दोषाः, भवन्तीति शेषः । रसस्य न शृङ्गारादिव्यपदेश एव चमत्कारः, किन्तु तदाभासादिरूपोऽपीति प्रागेव प्रथमे परिच्छेदे "वाक्यं रसात्मकं काव्यम्" इति काव्यं लक्षयता कविराजेन हन्ती प्रतिपादितम् । अयं भावः,—काव्यं हि पुरुषविशेषस्थानीयं, वाक्यञ्च शरीरं, रसश्च तदन्तर्यामी आत्मा । तत्र दोषाः केचिद् यथा आगन्तुका भवन्ति, केचित् पुनर्जन्मसिद्धाः, तेष्वपि केचित् शरीरगताः, केचित् पुनरात्मगताः ; तथैव वाक्यगताः, रसगताः, अनित्याः, नित्याश्चेति काव्यदोषा अप्यनेकविधाः । तत्रागन्तुकाः प्रायोऽनित्याः, जन्मसिद्धाः पुनः प्रायो नित्याः, एष्वपि केचित् शरीरगताः ; यथा,—आगन्तुकाः,—वातप्रकोपादयः, जन्मसिद्धाः,—असुन्दरत्वादयः, आत्मगता आगन्तुकाः,—दुःखित्वप्रत्ययादयः, मौढ्यादयः पुनर्जन्मसिद्धाः ; एवं दुःश्रवत्वादयो वाक्यमात्रादृश्या अनित्याः, च्युतसंस्कारत्वादयो नित्याः, तथा रसगताः तस्य तस्य स्वशब्दवाच्यत्वादयो नित्या अनित्याश्चेति तत्र तत्र निर्देक्ष्यन्ते ।

(ग) नन्वेतल्लक्षणं श्रुतिदुष्टापुष्टार्थत्वादौ अव्याप्तं, तस्य शब्दार्थदोषत्वेन रसापकर्षकत्वाभावात्, अत आह, अस्येति ।—प्रागेव—"दोषास्तस्यापकर्षकाः" इति प्रतिपादनावसर एव । श्रुतिदुष्टत्वादेः शब्दार्थापकर्षकद्वारेण रसापकर्षकत्वमिति नाव्याप्तिरिति भावः ।

(घ) तांश्च विभज्य दर्शयितुमुपक्रममाणस्तावत् तेषां सम्भवस्थलं निर्दिशति, ते इति ।—ते—दोषाः, पुनः पदं, पदांशे—पदैकदेशे, वाक्ये—पदसमुदायविशेषे, अर्थे—वाच्ये, रसे—शृङ्गारादौ, निर्वेदादौ च, अपि यत्—यतः, सम्भवन्ति इति हेतोः पञ्चधा—पञ्चप्रकाराः, मताः,—कीर्त्तिताः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

दोषाः केचिद्भवन्त्येषु पदांशेऽपि पदेऽपरे ।
निरर्थकासमर्थत्वे च्युतसंस्कारता तथा ॥५८४॥(ङ)

परुषवर्णतया श्रुतिदुःखावहत्वं दुःश्रवत्वम् । यथा,—
"कार्त्तार्थ्यं यातु तन्वङ्गी कदाऽनङ्गवशंवदा ।" (च)
अश्लीलत्वं व्रीडाजुगुप्साऽमङ्गलव्यञ्जकत्वात् त्रिधा । (छ)
क्रमेणोदाहरणम् ;—

---

(ङ) तेषां नामानि गणयति, दुःश्रवेति ।—अत्र भावप्रत्ययः प्रत्येकं प्रयुज्यते, तथा च—दुःश्रवता, त्रिविधाऽश्लीलता, अनुचितार्थता, अप्रयुक्तता, ग्राम्यता, अप्रतीतता, सन्दिग्धता, नेयार्थता, निहतार्थता, अवाचकत्वं, क्लिष्टत्वं, विरुद्धमतिकारित्वम्, अविमृष्टविधेयांशत्वं, निरर्थकत्वम्, असमर्थत्वं, च्युतसंस्कारत्वञ्चेति । तत्र दुःश्रवत्वमारभ्याऽविमृष्टविधेयांशत्वान्तास्त्रयोदश दोषाः पदे वाक्ये चेत्युभयत्रैव सम्भवन्ति । एषु—त्रयोदशसु दोषेषु, केचित्—दुःश्रवत्वाश्लीलत्वनिहतार्थत्वावाचकत्वनेयार्थत्वाख्याः पञ्च दोषाः पदांशेऽपि भवन्ति, अपरे—निरर्थकत्वम्, असमर्थत्वं, च्युतसंस्कारत्वं चेति त्रयो दोषाः, पद एव, न तु वाक्ये पदांशे वा, सम्भवन्तीति शेषः । एतेष्वपि दुःश्रवत्वाश्लीलत्वनिहतार्थत्वाप्रयुक्तत्वाप्रतीतत्वसन्दिग्धत्वग्राम्यत्वाभिधेयाः सप्त अनित्या दोषाः, अत एवैषां प्रतिप्रसवः प्रदर्शिष्यते । अन्ये नेयार्थच्युतसंस्कारत्वादयोऽष्टौ पुनर्नित्या दोषाः । नित्यत्वं नाम—अनुक्तिमनुद्दिश्य सहृदयेन सति स्वस्वरूपावधाने प्रयोक्तुमशक्यत्वम् ; अनित्यत्वं पुनः,—तदन्यथाभूतत्वमिति स्पष्टम् ।

(च) अथ यथाक्रमं दुःश्रवत्वादिलक्षणं सोदाहरणमाह, परुषेति ।—केषाञ्चित् नामत एव लक्षणस्य स्पष्टबोधात् उदाहरणस्यैव दर्शनम् । श्रुतिदुःखावहत्वं—श्रुतिमात्रतः क्लेशजनकत्वं, दुःश्रवत्वं नाम दोषः यथा,—कार्त्तार्थ्यमिति ।—कार्त्तार्थ्यं—कृतार्थस्य भावः कार्त्तार्थ्यम्, अत्र तयोः रेफयोगात् कषायाः परुषत्वेन श्रोतुर्दुःखजनकत्वम् । तेनात्र शृङ्गारस्य प्रकर्षहानिरिति रसापकर्षः । यथा वा,—"अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः । आलिङ्गितः स तन्वङ्ग्या कार्त्तार्थ्यं लभते कदा ॥" इति । इदमेव पारुष्यं "श्रुतिकटु" इत्यभिधीयते । ननु एतत् पदांशपारुष्यमेव, न तु पदपारुष्यमिति चेत् ? न, वाक्यघटकद्वित्वादिपदपारुष्यप्रयुक्तवाक्यदुःश्रवत्ववत् पदघटकद्वित्वादिवर्णपारुष्यप्रयुक्तपददुःश्रवत्वस्य स्वीकारात् ।

(छ) अश्लीलत्वम्—असभ्यार्थान्तरव्यञ्जकत्वम् ; पदांशाश्लीलत्वन्तु असभ्यश्रुति-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"हृप्तारिविजये राजन्! साधनं सुमहत् तव।"

"प्रससार शनैर्वायुर्विनाशे तन्वि! ते तदा॥"

अत्र साधन-वायु-विनाशशब्दा अश्लीलाः। (ज)

"शूरा अमरतां यान्ति पशुभूता रणाध्वरे॥"

अत्र पशुपदं कातर्य्यमभिव्यनक्तीत्यनुचितार्थत्वम्। (झ)

---

हेतुत्वमेव, तच्च व्रीडाव्यञ्जकत्वेन जुगुप्साव्यञ्जकत्वेनामङ्गलव्यञ्जकत्वेन च त्रिधाभूतम्। व्रीड़ा—लज्जा, जुगुप्सा—घृणा, अमङ्गलं—माङ्गल्यप्रातिकूल्यम्। व्यञ्जकत्वमिह जनकत्वमेव इति सारः। अत्रैवं बोध्यम्;—अश्लीलार्थप्रासा अवधारयितुः प्रातिकूल्यमत्र दूषकत्वकारणम्; यत्र सुभगा-भगिनी-शिवलिङ्ग-ब्रह्माण्डादीनान्तु बोधनीयार्थस्य प्रसिद्धत्वेनाश्लीलार्थो न वर्त्तते, न तत्र दूषकत्वमिति हृदयम्।

(ज) उदाहरति, हृप्तारीति।—हे राजन्! हृप्ता ये अरयः,—शत्रवः, तेषां विजये सुमहत्—अतिशयितं, तव साधनं—सैनिकाद्युपायः, वर्त्तते इति शेषः, (अत्र हि सैन्याद्युपायार्थे प्रयुक्तः साधनशब्दो देशविशेषे पुंश्चिह्नवाचकत्वेन व्यवह्रियते, इत्यस्य व्रीडाव्यञ्जकाश्लीलत्वं स्फुटम्। प्रकाशकृता तु,—"साधनं सुमहद् यस्य यन्नान्यस्य विलोक्यते। तस्य धीशालिनः कोऽन्यः सहेतारालितां भुवम्?॥" इत्युदाहृतम्)। प्रससारेति।—हे तन्वि!—कृशाङ्गि! ते—तव, विनाशे—दर्शनाभावे जाते सति, तदा वायुः,—मलयसमीरणः इत्यर्थः, येनाहं मदनार्द्दितः इति भावः। शनैः,—मन्दं मन्दं, प्रससार—सञ्चचार। अत्र च समीरणे प्रयुक्तो वायुशब्दः अपानवायुवाचकतया प्रसिद्धः इत्यस्य घृणाव्यञ्जकाश्लीलत्वम्; विनाशशब्दः अदर्शनार्थकतया अप्रसिद्धः, मरणार्थकतया पुनः प्रसिद्धः इत्यस्यामङ्गलव्यञ्जकाश्लीलत्वम्। दूषकताबीजन्तु अश्लीलार्थोपस्थित्या श्रोतुर्वैमुख्यापादकत्वम्। अत्र राजविषयकरतिभावस्य तथा शृङ्गारस्य तत्तच्छब्दानां तादृशार्थव्यञ्जकतया प्रकर्षप्रतिबन्धकः इति। इदन्तु तत्त्वम्;—येषां नैतैः शब्दैरश्लीलत्वावगमस्तेषां कृते अत्र दोषोऽपि न इति।

(झ) अनुचितार्थमुदाहरति, शूरा इति।—शूराः,—वीराः, रणाध्वरे—सङ्ग्रामयज्ञे, पशुभूताः,—छेद्यस्वरूपाः, निहता इति भावः, अमरतां—देवत्वं, यान्ति—प्राप्नुवन्ति। अत्र वाच्यार्थानां शूराणां स्तवार्हाणां कातर्य्यं दोषः, तस्य व्यञ्जकत्वात् पशुत्वकथनसंयुक्तमिति अनुचितार्थत्वं, तेन चात्र वीररसस्य प्रकर्षहानिरिति बोध्यम्। वाच्यार्थदोषप्रतिपादकत्वेन, अर्थासम्भवेन, असत्समर्थकत्वेन च तत् त्रिविधम्। आद्यस्योदाहरणं ग्रन्थकृता प्रदर्शितम्; द्वितीयस्य यथा,—"प्रज्वलज्जलधारावत्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अप्रयुक्तत्वं—तथा प्रसिद्धावपि कविभिरनादृतत्वम् । यथा,—

"भाति पद्मः सरोवरे ।" अत्र पद्मशब्दः पुंलिङ्गः । (ञ)

ग्राम्यत्वं यथा,—"कटिस्ते हरते मनः ।" अत्र कटिशब्दो ग्राम्यः । (ट)

अप्रतीतत्वम्—एकदेशमात्रप्रसिद्धत्वम् । यथा,—"योगेन दलिताशयः ।" अत्र योगशास्त्र एव वासनार्थं आशयशब्दः । (ठ)

"आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ।"

अत्र "वन्द्याम्" इति किं वन्दीभूतायाम् उत वन्दनीयायाम् ? इति सन्देहः । (ड)

---

निपतन्ति शरास्तव" अत्र जलधाराया विशेषणरूपेण प्रयुक्तं प्रज्वलदिति पदम् अर्थासङ्गत्या अनुचितार्थम् । तृतीयस्य यथा,—"दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् । क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसामतीव ॥" इत्यत्र असङ्गतस्य अन्धकारभयस्य समर्थकं द्वितीयार्द्धमसत्समर्थकरूपमनुचितार्थम् । एवमन्यदपि यथासम्भवं ज्ञेयम् ।

(ञ) अप्रयुक्तत्वमिति ।—तथा—तेन प्रकारेण, प्रसिद्धौ अपि—कोषादिषु प्रसिद्धिसत्त्वेऽपि । पुंलिङ्गः, कविभिरप्रयुक्त इति शेषः ।

(ट) ग्राम्यत्वमिति ।—ग्राम्यत्वं—हालिकादिसाधारणजनप्रसिद्धार्थकप्रयोज्यत्वम् । कटिरिति ।—अत्र शृङ्गारस्य अगूढत्वप्रकटनेन वैचित्र्यापगमात् प्रकर्षहानिरित्यवधेयम् । अत्रेदं तत्त्वम् ;—श्रोणिनितम्बादिकमेव रसिकैः व्यवह्रियते, कटिशब्दस्तु जनसाधारणव्यवहार्यत्वात् ग्राम्यः । अस्य पादत्रयं यथा,—"राकाविभावरीकान्तसङ्क्रान्तद्युति ते मुखम् । तपनीयशिलाशोभा—" इति । इदन्तु विप्रकारकं,—ग्राम्यनागरोपनागरभेदात् ; तत्राद्यस्य लक्षणमुक्तं, नागरन्तु प्राज्ञमात्रप्रसिद्धम् ; ग्राम्यनागरान्तरस्थितमुपनागरम् । अत्र नागरोपनागरे त्यक्त्वा ग्राम्य एव दोषापातः, इत्ययमी विदूषकादौ प्रयोक्तरि न दुष्टत्वं, तस्य तथैव योग्यत्वेन निर्देशात् ।

(ठ) अप्रतीतत्वमिति ।—अप्रतीतत्वम् एकदेशमात्रे, न तु सर्व्वत्र प्रसिद्धत्वं—ख्यातत्वम् । योगेन—जीवब्रह्मणोरैक्यचिन्तनं योगः तेन, दलितः,—खण्डितः, आशयः,—वासना, यस्य तथोक्तः । अत्र वासनार्थत्वम् आशयशब्दस्य अजानतां योगशास्त्रानभिज्ञानां योगिविषयभावबोधविलम्बकरत्वम् इति बोध्यम् ।

(ड) आशीरिति ।—आशीःपरम्पराम्—आशीर्वादसूचकवाक्यावलीं कर्णे

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नेयार्थत्वं—रूढ़िप्रयोजनाभावादशक्तिकृतं लक्ष्यार्थप्रकाशनम्। (ढ) यथा,—

"कमले चरणाघातं मुखं सुमुखि! तेऽकरोत्।"

अत्र चरणाघातेन निर्जितत्वं लक्ष्यम्। (ण)

---

कला—स्तुत्येत्यर्थः। इह प्रकरणादिनियमाभावात् वन्द्यामिति पदं श्लेषवशात् अर्थसन्देहजननात् सन्दिग्धम्। अत्र सन्देहवशात् शाब्दबोधविलम्बेन राजविषयरतिभावरूपस्य रसनधर्म्मयोगात् रसपदप्रतिपाद्यस्य प्रकर्षहानिः।

(ढ) नेयार्थत्वमिति।—"निरूढ़ा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्। क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तितः॥" इति भाट्टनियमेन लक्षणाया रूढ़िप्रयोजनान्यतरहेतुकत्वनियमात् अपि तदभावे अशक्तिकृतं—कवेरसामर्थ्यप्रयुक्तम्, अव्युत्पत्तिविजृम्भितं तृतीयलक्षणाविषयमिति यावत्।

(ण) कमले इति।—निर्जितत्वं—पराभव इत्यर्थः, मुखस्य चरणासम्भवेन मुख्यार्थबाधः, स्वजन्यचरणाघातपराभवः स्वजन्यवृत्तिपराभवत्ववत्त्वं मुख्यलक्ष्ययोः सामान्यविशेषभावः सम्बन्धः। अत्र रूढ़िप्रयोजनयोरन्यतरं विना प्रथमं कवेरशक्तिनिश्चयः, तदनन्तरं कथञ्चित् लक्ष्यार्थोपस्थितिः, ततः शाब्दबोधः, इति विलम्बेन रसप्रतीतेः प्रतिबन्धकत्वमिति बोध्यम्। प्रकाशकृता तु,—"शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम्। करोति ते मुखं तन्वि! चपेटापातनातिथिम्॥" इत्युदाहृतम्। तथा च,—चरणाघातचपेटापातशब्दाभ्यां निर्जितत्वं लक्ष्यं, तच्चात्र रूढ़िप्रयोजनमूलयोर्विषयत्वाभावात् कवेर्व्युत्पत्त्यभावं बोधयत् श्रोतुर्वैरस्यमापादयतीति तदेव दूषकताबीजम्। केचित्तु,—"निर्जितत्वातिशयस्य प्रयोजनस्यैवोपस्थितेरत्र कथं नेयार्थत्वम्? इति चेत्, न, रूढ़िप्रयोजनाभावपदस्य मुख्यार्थग्रहाऽभावोपलक्षणपरतया प्रकृते तत एव नेयार्थत्वाभ्युपगमात्" इति। केचित्तु,—"पद्मनिर्जितत्वं हि शोभयैव जनितं, न तु चरणाघातेनेति तयोर्जन्यजनकभावसम्बन्धाभावः" इत्याहुः, तन्न; अत्र हि लक्षणाजन्यबोधानन्तरं सादृश्यप्रतीतिरेवानुभवसिद्धा, न तु निर्जितत्वातिशयप्रतीतिः; तात्पर्य्याभावात्, मुख्यलक्ष्ययोरुपदर्शितसम्बन्धसम्भवाच्च। न चात्र सादृश्यप्रतीतिरेव प्रयोजनमिति वाच्यम्; वक्त्रादिवैशिष्ट्यसचिवयार्थव्यञ्जनया एव तस्या जननात्। लक्षणाप्रयोजनस्य तु लक्षणामूलव्यञ्जनाजन्यत्वनियमात्, सादृश्यस्य च लक्ष्यार्थतद्वृत्तिधर्मान्यतरसम्बन्धत्वाभावात्, प्रयोजनस्य तदन्यतरवृत्तित्वनियमात् इति ध्येयम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

निहतार्थत्वम्—उभयार्थस्य शब्दस्याप्रसिद्धेऽर्थे प्रयोगः। यथा,—

"यमुनाशम्बरमम्बरं व्यतानीत्।"

शम्बरशब्दो दैत्ये प्रसिद्धः, इह तु जले निहतार्थः। (त)

"गीतेषु कर्णमादत्ते।"

अत्र आङ्पूर्वो दाञ्धातुः दानार्थेऽवाचकः। यथा वा,—

"दिनं मे त्वयि सम्प्राप्ते ध्वान्तच्छन्नाऽपि यामिनी।"

अत्र दिनमिति प्रकाशमयार्थेऽवाचकम्। (थ)

---

(त) निहतेति।—निहतार्थत्वम् उभयार्थस्य—प्रसिद्धाप्रसिद्धरूपार्थद्वयप्रतिपादकस्य। यमुनेति।—यमुनाशम्बरं—कालिन्दीसलिलम्, अम्बरम्—आकाशं, व्यतानीत्—ऊर्द्धस्फीततया व्याप्तवत्। अत्र शम्बरशब्दः श्रुतिमात्रतः प्रसिद्धार्थं प्रति प्रधावितः, ततस्तदसङ्गतेस्तस्मात् निवृत्तः जलं प्रत्याययन् शाब्दबोधविलम्बात् यमुनाविषयरतिभावस्य प्रकर्षहानिरिति बोध्यम्। यदि तु नपुंसकलिङ्गस्य शम्बरशब्दस्य न दैत्यविशेषवाचकत्वमिति मन्यते, तदेदं नोदाहर्त्तव्यं, किन्तु,—"यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन। मुग्धा साध्वसतरला विलोक्य परिचुम्बिता सहसा॥" इत्युदाहर्त्तव्यम्, अत्र च शोणितशब्दो रुधिरार्थकतयैव प्रसिद्धः, इत्यस्य निहतार्थकत्वम्।

(थ) अवाचकत्वं यथा गीतेष्विति।—न च दाधातोर्दानेऽभिधासत्त्वेन कथमवाचकत्वमिति वाच्यम्; धात्वर्थबाधकोपसर्गरहितदाधातोरेव दानेऽभिधाकल्पनात्। एतदस्वीकारे तूदाहरणान्तरमाह, यथा वेति।—दिनमिति।—त्वयि सम्प्राप्ते—उपस्थिते, मे—मम, ध्वान्तच्छन्नाऽपि—तिमिरावृताऽपि, यामिनी दिनम्। अत्र दिनशब्दः अभिधया सूर्य्यकिरणावच्छिन्नप्रहरचतुष्टयार्थकः इति प्रकाशमयार्थप्रतीतौ विलम्बात् शाब्दबोधः, तस्मात् रसप्रतीतेः प्रतिबन्धकत्वम्। अत्र तत्त्वम्,—रूढ्यादिसत्त्वे लाक्षणिकपदप्रयोगेऽवाचकत्वं, तदसत्त्वे नेयार्थत्वमिति भेदः; निरूढलक्षणादौ शाब्दबोधविलम्बाभावान्न रसादिबोधविलम्बनमिति नास्यावसरः इत्यवधेयम्। "हा धिक् सा किल तामसी शशिमुखी दृष्टा मया यत्र सा तद्विच्छेदरुजान्धकारितमिदं दग्धं दिनं कल्पितम्" इत्यादौ प्रकाशमये दिनपदप्रयोगदर्शनाद्रूढ़िः प्रकाशातिशयप्रतीतिप्रयोजनं वा। एवमन्यत्रापि बोध्यम्। केचित्तु,—"अमीनायकसत्त्वेऽवाचकत्वं, तदसत्त्वे नेयार्थत्वम्" इति वदन्ति, तन्न; दिनमित्यादौ दिनपदस्य प्रकाशमयेऽर्थे अभिधाभ्रमजनकाभावात्, "वचोबाणत्वमागता" इत्यादिवक्ष्यमाणनेयार्थोदाहरणे

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्लिष्टत्वम्—अर्थप्रतीतेर्व्यवहितत्वम्। यथा,—

"क्षीरोदजावसतिजन्मभुवः प्रसन्नाः।"

अत्र क्षीरोदजा—लक्ष्मीस्तस्या वसतिः,—पद्मं, तस्य जन्मभुवः,—जलानि। (द)

"भूतयेऽस्तु भवानीशः।"

अत्र भवानीशशब्दो भवान्याः पत्यन्तरप्रतीतिकारित्वाद् विरुद्धमतिकृत्। (ध)

---

अमीन्नायकसत्त्वेऽप्यवाचकत्वानङ्गीकाराच्च इति सङ्क्षेपः। यथा वा,—"अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव सम्पदः। अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषाऽऽदरः॥" इति। अत्र हि जन्तुपदं विवक्षितामपि कृपणार्थतां नाभिधत्ते इत्यवाचकत्वम्।

(द) क्लिष्टत्वमिति।—अर्थप्रतीतेः,—अर्थावबोधस्य, पदार्थोपस्थितेरिति यावत्, व्यवहितत्वं—व्यवधानेन उपस्थाप्यत्वम्। पदगतक्लिष्टत्वस्योदाहरणं समासगतत्वेनैव सम्भवति। समासेऽन्वितान्वयलभ्यानतिप्रसक्तविशेष्यतावच्छेदककल्पनेन विलम्बो हि व्यवधानं, वाक्यक्लिष्टत्वस्थले तु आसत्तिकल्पनेन विलम्बः। पदगतं क्लिष्टत्वं यथा,—क्षीरोदः,—समुद्रविशेषः, तस्माज्जाता इति तथोक्ता लक्ष्मीः तस्याः वसतिः,—निवासस्थानं, "लक्ष्मीः पद्मालया" इत्याद्युक्तेः, तस्य जन्मभुवः,—"पुष्कराम्भोरुहाणि च" इत्याद्युक्त्या जलानि ताः, प्रसन्नाः,—स्वच्छाः इति। अत्र क्रमेण अन्वितान्वयलभ्यानां क्षीरोदजात्व-क्षीरोदजावसतित्व-क्षीरोदजावसतिजन्मस्थानत्वानां व्याप्यानि लक्ष्मीत्व-पद्मत्व-जलत्वानि प्रकृतोपयोगित्वप्रतिसन्धानेन कल्पनीयानि, ततः शाब्दबोधविलम्बात् रसादिप्रतीतेः प्रतिबन्धकमित्यपकर्षः।

(ध) विरुद्धमतिकारिता—विपरीतबुद्धिघटकत्वम्; यथा भूतये इति।—भवस्य पत्नी भवानी, तस्याः ईशः,—पतिः। अत्र भवान्याः पत्यन्तरप्रतीतिकारित्वात् देवविषयकरतेरपकर्षः। अयं भावः,—[भवशब्दात् "इन्द्र—" (४।१।४९ पा०) इत्यानुकि ङीषि च भवानीति निष्पद्यते,] अतः भवपत्नीपातरितिवत् भवानीशशब्दोऽपि पार्वत्याः पत्यन्तरासक्तिप्रत्यायकमिति विरुद्धार्थमतिकारित्वमेतस्य विदितचरम्। यदि तु पङ्कजादिशब्दवत् साधुत्वार्थकेन योगार्थेन "शिवा भवानी" इत्याद्युक्त्या न तथा प्रत्यायकत्वं, तदा नेदमुदाहार्य्यम् इति बोध्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अविमृष्टविधेयांशत्वं यथा,—

"स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ?"

अत्र वृथात्वं विधेयं, तच्च समासे गुणीभावादनुवाद्यत्वप्रतीतिकृत्। यथा वा,—

"रक्षांस्यपि पुरः स्थातुमलं रामानुजस्य मे।"

अत्र रामस्येति वाच्यम्।

यथा वा,—

"आसमुद्रक्षितीशानाम्।"

अत्र आसमुद्रमिति वाच्यम्। यथा वा,—

"यत्र ते पतति सुभ्रु! कटाक्षः षष्ठबाण इव पञ्चशरस्य।"

अत्र षष्ठ इवेत्युत्प्रेक्ष्यम्। यथा वा,—

"अमुक्ता भवता नाथ! मुहूर्त्तमपि सा पुरा।"

अत्र अमुक्तेत्यत्र नञः प्रसज्यप्रतिषेधत्वमिति विधेयत्वमेवोचितम्। (न) यदाहुः,—

(न) अविमृष्टेति।—अविमृष्टः,—प्राधान्येन अनिर्दिष्टः, विधेयांशः यत्र तस्य भावः तत्त्वम्; पदार्थानां मध्ये विधेयस्यैव उपादेयत्वेन प्राधान्यं, तस्य च प्राधान्येन निर्देश एव उचितः, तद्वैपरीत्यम्—"अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्" इति नियमस्य अन्यथात्वमित्यर्थः, स च क्वचित् समासे गुणीभावेन, क्वचित् उद्देश्यात् प्राक् विधेयस्य उपादानेन भवति। तत्राद्ये पददोषत्वं, द्वितीये वाक्यदोषता। अनुवाद्यत्वप्रतीतिकृत्—उद्देश्यत्वबोधजनकम्। तेनात्र शाब्दबोधे कष्टता, तया च वीररसप्रतीतेरपकर्षः। रक्षांसीति।—अलं—समर्थानि,("अलं व्यर्थसमर्थयोः" इत्यमरः) इह काकुस्वरवशादसमर्थत्वं व्यज्यते। अत्र राक्षसवधे रामस्यैव प्राधान्येन उपादेयत्वात् तस्य पृथक् निर्देश एवोचितः, तदकरणात् तादृगुपादेयताप्रतीतेः प्रतिरोधः, तेन च वीररसस्यापकर्षः। आसमुद्रेति।—अत्र रघुवंशीयानामधिकारस्य समुद्रपर्य्यन्ततायाः एव उपादेयतया प्राधान्यं, तच्च समासे गुणीभावात् न तथाप्रतीतिकृत् इति रसस्यापकर्षः। यत्रेति।—अत्र षष्ठत्वस्यैव उपादेयतया प्राधान्यं, तदकरणात् रसस्य किञ्चिदपकर्षः। उत्प्रेक्ष्यम्—उत्प्रेक्षितुं योग्यम्। नञि समासगते अविमृष्टविधेयांशस्योदाहरणमाह, अमुक्तेति।—अत्र प्रसज्यप्रतिषेधे नञो विधेयतैवोचिता, समासे गुणीभावेन

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्॥" (प)
यथा,—
"नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः।" (फ)

तद्विपर्ययात् विधेरप्रधानत्वादिति भावः, अर्थबोधस्य कष्टतया रसापकर्ष इति बोध्यम्।

(प) अप्राधान्यमिति।—यत्र—वाक्ये, विधेः—विध्यर्थस्य; पदार्थान्तरस्येति यावत्, अप्राधान्यम्—उद्देश्यतया अमुख्यत्वं, प्रतिषेधे—निषेधे, नञर्थे इत्यर्थः; प्रधानता—विधेयतया मुख्यत्वं, यत्र—यदर्थे, क्रियया—समभिव्याहृतपदार्थतावच्छेदकेन, सह नञ्, तिष्ठतीति शेषः, असौ प्रसज्यप्रतिषेधः।

(फ) नवजलधर इति।—गन्धर्वेणोर्वश्यां हृतायां तद्वियोगेन खिन्नस्य पुरूरवसो नवजलधरादौ निशाचरत्वादिप्रतीतिवर्णनमिदम्। अत्र उद्देश्यत्वेन सन्नद्धनवजलधरस्य दृप्तनिशाचरत्वविधानमप्रधानं,नञर्थस्य तदभावरूपस्य विधेयत्वेन प्राधान्यं, क्रियया समभिव्याहृतपदार्थतावच्छेदकसम्बन्धेन भवतीत्याद्यध्याहृतया नञर्थस्य सम्बन्धश्च, तदत्र प्रसज्यप्रतिषेधत्वम्; न च विधेर्भावपदार्थस्येति व्याख्येयम्, अभावो न जातिमानित्याद्यसङ्ग्रहापत्तेः। अत्र तत्त्वम्;—क्रियया इति यथाश्रुतार्थविवक्षणे तु "अयं न पाकवान्" इत्याद्यसङ्ग्रहेऽप्युक्तोदाहरणाद्यसङ्ग्रहप्रसङ्गः, न च नञर्थस्य क्रियान्वयित्वाभावेनोक्तोदाहरणादौ नञः प्रसज्यप्रतिषेधत्वमेव नास्तीति वाच्यं, तत्र विधेर्विधेयत्वाभावेन पर्युदासत्वासम्भवात् तृतीयप्रकारानभिधानाच्च प्रसज्यप्रतिषेधत्वस्यैवावश्यं वाच्यत्वात्, अत एवाव्ययीभावसमासप्रकरणे गौडचन्द्रेणोक्तम्;—"धर्माभावे प्रसज्यप्रतिषेधो मा भूत्" "ब्राह्मणोऽयं न भवति" "ब्राह्मणत्वं धर्मोऽत्र निषिध्यते" इति; "मुनिरधनः" इत्यादौ समासस्थविद्यमानादिपदार्थैकदेशे नञर्थस्य सम्बन्धः। वस्तुतस्तु,—"घटो गेहे न चत्वरे" "धनं चैत्रस्य,न मैत्रस्य" इत्यादौ विभक्त्यर्थेन सह नञर्थस्यान्वयेऽपि प्रसज्यप्रतिषेधत्वं वाच्यं, नञर्थस्य विधेयत्वेनैव तत्स्वीकारात्, क्रियान्वयित्वस्यानियतत्वाच्च; एवञ्च "घटो न पटः" इत्यादावुत्तरपदार्थेन पटादिना नञर्थस्य भेदस्य सम्बन्धसत्त्वेऽपि विधेयतामात्रेण प्रसज्यप्रतिषेधत्वम्। न चात्र पटत्वाभाव एव विधेयः, न तु पटभेद इति वाच्यम्; पटभेदस्यापि विधेयत्वेन नञर्थस्य विधेयत्वेनैव तत्स्वीकारात् क्रियान्वयित्वस्यानित्यत्वाच्च बाधकाभावात्। न च भेदबोधकस्य नञः नित्यसमासविधानमेव बाधकमिति वाच्यं, "यजतिषु ये

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उक्तोदाहरणे तत्पुरुषसमासे गुणीभावे नञः पर्य्युदासतया निषेधस्य विधेयताऽनवगमः । (व) यदाहुः,—

"प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥" (भ)

तेन,—

"जुगोपात्मानमत्रस्तो भेजे धर्म्ममनातुरः ।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत् ॥" (म)

अत्र अत्रस्तताद्यनूद्यात्मगोपनाद्येव विधेयमिति नञः पर्य्युदासतया गुणभावो युक्तः । (य)

---

यजामहं कुर्वीत (करोति) नानुयाजेषु" इत्यादौ व्यभिचारदर्शनात् कालापानां नित्यसमासविधानस्यायुक्तत्वात् ; नित्यसमासवादिमतेऽपि "अयमब्राह्मणः" इत्यादौ ब्राह्मणभेदस्य विधेयत्वमवश्यं वाच्यम् ; न चात्रापि ब्राह्मणत्वाभाववानित्येवार्थ इति वाच्यं, समस्यमानपदार्थयोरन्वयाभावे तत्पुरुषानङ्गीकारात् ।

(व) नन्वेवं प्रकृते किमनुपपन्नमित्यत आह, उक्तोदाहरणे इति ।—उक्तोदाहरणे —अमुक्तेत्यादौ इत्यर्थः । पर्य्युदासतया—पर्य्युदासवदनुवाद्यत्वप्रतीतिकारितया, विधेयतानवगमः,—विधेयताया न स्पष्टावगमः, यथाश्रुतार्थत्वेऽत्र नञः प्रसज्यप्रतिषेधत्वमिति प्रागुक्तेन सह विरोधः स्यात्, विधेर्विधेयत्वाभावे पर्य्युदासासङ्गतिश्च स्यात् ।

(भ) पर्य्युदासस्यानुवाद्यत्वमुपपादयति, यदाहुरिति ।—प्रधानत्वमिति ।—यत्र —वाक्ये, विधेः,—विध्यर्थस्य, पदार्थान्तरस्येत्यर्थः, प्रधानत्वं—विधेयतया मुख्यत्वं, प्रतिषेधे—नञर्थे, अप्रधानता—गुणभावः, उद्देश्यतावच्छेदकतया अमुख्यत्वमित्यर्थः ; यत्र—यदर्थे, उत्तरपदेन—परवर्त्तिपदार्थेन, सह सम्बन्धः, तत्र वाक्ये स नञ् पर्य्युदासः विज्ञेयः । "रात्रौ श्राद्धं न कुर्वीत" इत्यादौ तु रात्रौ इति योजनया रात्रावित्यस्योत्तरपदत्वमुपपन्नमिति सङ्क्षेपः ।

(म) उदाहरति, जुगोपेति ।—सः,—दिलीपः, अत्रस्तः,—अभीतः सन्, आत्मानं जुगोप—ररक्ष, अनातुरः,—अपीडितः सन्, धर्म्मं भेजे—सिषेवे, अगृध्नुः,—अलुब्धः सन्, अर्थान्—करानिति यावत्, आददे, असक्तः,—अनासक्तः सन्, सुखम् अन्वभूत्—बुभुजे । अत्र विध्यर्थस्य आत्मगोपनस्य प्राधान्यं, प्रतिषेधे अत्रस्त इत्यादिषु स्थिते नञर्थे अप्रधानता, उत्तरपदार्थेन त्रस्ततादिना नञः सम्बन्धश्च ।

(य) अत्रेति ।—अत्रस्ततादि—त्रस्तभिन्नत्वादि, अनूद्य—उद्देश्यतावच्छेदकी-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ननु "अश्राद्धभोजी ब्राह्मणः", "असूर्य्यम्पश्या राजदाराः" इत्यादिवत् "अमुक्ता" इत्यत्रापि प्रसज्यप्रतिषेधो भवतीति चेत् ? न ; अत्रापि यदि भोजनादिरूपक्रियांशेन नञः सम्बन्धः स्यात्, तदैव तत्र प्रसज्यप्रतिषेधत्वं वक्तुं शक्यम् । न च तथा, विशेष्यतया प्रधानेन तद्भोज्याद्यर्थेन कर्त्रंशेनैव नञः सम्बन्धात् (र)। यदाहुः,—

"श्राद्धभोजनशीलो हि यतः कर्त्ता प्रतीयते ।
न तद्भोजनमात्रन्तु कर्त्तरीनेर्विधानतः ॥" इति (ल)

"अमुक्ता" इत्यत्र च क्रिययैव सह सम्बन्धः इति दोष एव। एते च क्लिष्टत्वादयः समासगता एव पददोषाः । (व)

---

क्तस्य इत्यर्थः ; तत्पुरुषसमासेनात्यन्ताभावानभिधानात, वस्तुत्वाभावादेरत्र नोद्देश्यताव च्छेदकत्वमित्यवगन्तव्यम् ; एवञ्च नञः प्रसज्यप्रतिषेधत्वं, पर्य्युदासत्वञ्च विधेयोद्देश्य-भावविवक्षाऽधीनं, न तु नियतम् ; गुणभावः,—गौणार्थप्रतिपादकत्वम् ।

(र) ननु अश्राद्धभोजीति ।—समस्तेनापि नञा भोजनदर्शनरूपाभावविधेयत्वस्य सम्यक्प्रतीतौ कथमविमृष्टविधेयांशत्वमिति प्रश्नस्य उत्तरमाह, नदिति ।—तद्भोज्याद्य-र्थेन—श्राद्धभोज्यादिरूपार्थेन, कर्त्रंशेनैव—भोजनकर्त्त्रर्थाद्यंशेन, तत्सम्बन्धाङ्गीकारं विनाद्यर्थस्य कर्त्तुरनन्वयापत्तेः, कृदुपस्थापितस्य कर्त्तुर्धात्वर्थेनैवान्वयस्य व्युत्पत्तिसिद्ध-त्वात् । अतः श्राद्धभोजिपदात तद्भोजनमात्रं, श्राद्धभोजनमात्रं, प्रतीयते इत्यनुषङ्गः ।

(ल) अमुमेवार्थं कारकया विशदयति, श्राद्धेति ।—यतः,—यस्मात्, श्राद्ध-भोजनशीलः कर्त्ता प्रतीयते, कर्त्तरि—[ "व्रते" ३।२।८० इति सूत्रेण ] इनप्रत्ययस्य विधानतः,—विधानात्, न तु तस्य—कर्त्तुः, भोजनमात्रं, प्रतीयते इति पूर्वेणान्वयः ।

(व) क्रिययैव सह सम्बन्ध इति ।—भवत्कर्तृकमोचनाभावप्रतीतिबोधस्यानु-भवसिद्धत्वादिति भावः, दोष एव—अविमृष्टविधेयांशत्वमेव, एतन्मते,—समस्यमान-पदार्थैकदेशे नञर्थान्वयेऽपि समासस्वीकारः ; यदि पुनः क्तप्रत्ययार्थस्य कर्मणोऽन्वया-प्रच्या क्रियया सह नञंशस्य सम्बन्धमनङ्गीकृत्य मोचनकर्मणैव सम्बन्धः स्वीक्रियते, तदा पुनः "अयमब्राह्मणः" इत्यादिवदत्रापि मोचनकर्मपदस्यैव विधेयत्वं बोध्यम् । किन्तु नञः समस्ततया यस्य न स्पष्टावगमः इत्यविमृष्टविधेयांशत्वमित्यवगन्तव्यम् ; अत्रापि रसादिप्रतीतिविलम्बनं दूषकताबीजम् । एते चेति ।—आदिपदात् विरुद्ध-मतिकारित्वविधेयाविमर्षयोर्ग्रहणं, विना समासं तेषामसम्भवादिति भावः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वाक्ये दुःश्रवत्वं यथा,—

"स्मरार्त्त्यन्धः कदा लप्स्ये कार्त्तार्थ्यं विरहे तव।" (अ)

"कृतप्रवृत्तिरन्यार्थे कविर्वान्तं समश्नुते॥"

अत्र जुगुप्साव्यञ्जकाश्लीलता। (ब)

(अ) सम्प्रति वाक्यगतं दुःश्रवत्वमुदाहरति, स्मरेति।—तव विरहे स्मरस्य—कामस्य, आर्त्तिः,—पीड़ा, तया अन्धः,—मोहित इत्यर्थः, अहं कदा कार्त्तार्थ्यं—कृतार्थतां, लप्स्ये—प्राप्स्यामि। अत्र अनेकपदस्य परुषवर्णघटितत्वेन वाक्यगतं दुःश्रवत्वम्; यथा वा,—"सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट, पितॄनतार्प्सीत् सममंस्त बन्धून्। व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च॥" इति भट्टौ।

(ब) जुगुप्साव्यञ्जकमश्लीलत्वमुदाहरति, कृतेति।—अन्यस्य—कवेः, अर्थे—वर्णिते वस्तुनीत्यर्थः, कृता प्रवृत्तिर्येन तादृशः, परकवितामनुसृत्य रचयन्नित्यर्थः, कविः वान्तम्—उद्गीर्णम्, समश्नुते—भक्षयति। अत्र "वान्तं समश्नुते" इति वाक्यं जुगुप्साव्यञ्जकत्वात् अश्लीलत्वम्। यथा वा,—"तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गं च भुञ्जते। इतरार्थग्रहे येषां कवीनां स्यात् प्रवर्त्तनम्॥" इति। इह हि वान्तोत्सर्गप्रवर्त्तनशब्दानां घृणाऽभिव्यञ्जकत्वेनाश्लीलत्वम्। व्रीडाव्यञ्जकमश्लीलत्वं यथा,—"भूपतेरुपसर्पन्ती कम्पना वामलोचना। तत्तत्प्रहरणोत्साहवती मोहनमादधौ॥" इति। अत्र हि उपसर्पणप्रहरणमोहनशब्दानां कामुकसविधागमन-नितम्बप्रहार-कामसमोहार्थबोधकतया लज्जाव्यञ्जकमश्लीलत्वम्। यथा वा,—"न साधनोन्नतिर्या स्यात् कलत्ररतिदायिनी" इति। अमङ्गलव्यञ्जकमश्लीलत्वं वाक्यगतं यथा,—"पितृवसतिमहं व्रजामि तां सह परिवारजनेन यत्र मे। भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकम्॥" इत्यत्र पितृवसति-पावकशब्दौ जनकवेश्म-पवित्रकारिवाचकौ श्मशान-तदङ्गिरूपार्थप्रतीतिकारित्वात् अमङ्गलव्यञ्जकौ। अनुचितार्थत्वं यथा,—"कुविन्दस्त्वं तावत् पटयसि गुणग्राममभितो यशो गायन्त्येते दिशि दिशि च नग्नास्तव विभो!। शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा तथापि त्वत्कीर्त्तिर्भ्रमति विगताच्छादनमिह॥" नग्नाः,—स्तुतिपाठकाः, पक्षे—दिगम्बराः। अन्यत् स्पष्टम्। अत्र कुविन्दादिशब्दः अर्थान्तरं प्रतिपादयन् स्तुत्यस्य तिरस्कारं व्यनक्तीत्यनुचितार्थत्वम्। अप्रयुक्तत्वं यथा,—"स रातु वो दुश्च्यवनो भावुकानां परम्पराम्। अनेडमूकताद्यैश्च द्यतु दोषैरसंमतान्॥" अत्र राधातुर्दाने, दुश्च्यवन इन्द्रे, भावुकं मङ्गले, अनेडमूकौ मूकवधिरे, दोधातुः खण्डने प्रसिद्धा अपि कविभिरनादृतत्वादप्रयुक्ताः। "अनुत्तमं पश्य" इत्यत्रानुत्तम-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"उद्यत्कमललौहित्यैर्वक्राभिर्भूषिता तनुः ।"

अत्र कमललौहित्यं—पद्मरागः । वक्राभिः,—वामाभिः इति नेयार्थता । (स)

पदस्य उत्तमवाचकत्ववत् अनेडमूकपदस्यावेडमूकवाचकत्वम् । ग्राम्यत्व यथा,—"ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः । करोति खादनं पानं सदैव च यथा तथा ॥" गल्लः,—कपोलः, भल्लं—भद्रम् । अत्र गल्लभल्लमानुषखादनपानशब्दाः ग्राम्याः । अप्रतीतत्वं यथा,—"तस्याधिमात्रोपायस्य तीव्रसंवेगिताजुषः । दृढभूमिः प्रियप्राप्तौ यत्नः स फलितः सखे ॥" अधिमात्रनामा क्रियाविशेषः उपायो यस्य ; संवेगिता—समाधिविशेषः, दृढ़भूमिः,—दृढ़ाभ्यासदायी, प्रियप्राप्तौ—तत्त्वज्ञानलाभे । अत्राधिमात्रादयः शब्दा योगशास्त्रमात्रप्रसिद्धत्वात् अप्रतीताः । सन्दिग्धत्वं यथा,—"सुरालयोल्लासकरः प्राप्तपर्य्याप्तकम्पनः । मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम् ॥" अत्र सुरकम्पनमार्गणभूतिशब्दाः किं देवसेनाशरविभूत्यर्थाः ? किं वा मदिराकम्पनपर्य्यटनसम्पदर्थाः ? इति सन्देहः ।

(स) नेयार्थत्वमाह, उद्यदिति ।—उद्यद्भिः,—विकस्वरैः, कमललौहित्यैः,—पद्मरागैः, [अत्र करणे तृतीया] वक्राभिः,—वामाभिः, नारीभिरित्यर्थः, तनुः भूषिता—अलङ्कृता । अत्र कमललौहित्यवक्राशब्दौ लक्षणया पद्मरागवामारूपार्थबोधकौ, सा च लक्षणा रूढ़िप्रयोजनाभावात् अशक्तिकृतेति पदद्वयगतत्वेन वाक्यगतं नेयार्थत्वम् । एतत्तु विशदीकृतं रामचरणेन यथा,—"उत्पूर्वस्य इणधातोरुदयगिरिशिखरारोहणं मुख्योऽर्थः; तस्य पद्मरागे बाधात् तज्जन्यप्रकाशे लक्षणा । अत्र रूढ़िसत्त्वेऽपि पद्मरागप्रकाशस्य उदयाजन्यत्वात् मुख्यार्थयोगाभावात् नेयार्थत्वमवगन्तव्यम् । अन्यदपि नेयार्थत्वमुपपादयति, अत्रेति ।—पद्मरागपदस्य परिहार्य्यसहत्वात् कमलपदस्य पद्मशब्दे, लौहित्यपदस्य च रागशब्दे, वक्रापदस्य वामाशब्दे लक्षणा, लक्षितैः पद्मादिभिः पदैरभिधया पद्मरागवामानामुपस्थितिः ; यथा,—द्विरेफपदेन बहुव्रीहिलक्षणयोपस्थापितात् रेफद्वययुक्तभ्रमरपदादभिधयैव भृङ्गोपस्थितिः, अत्र रूढ़िरस्ति ; प्रकृते तु रूढ़िप्रयोजनाभावान्नेयार्थत्वम्, इयमेव लक्षितलक्षणेत्युच्यते । न च लक्षणाद्वयाभावात् कथमियं लक्षितलक्षणा ? इति वाच्यम् ; यत्र लक्षिताच्छब्दादर्थाभिधानं, तत्रैव लक्षितलक्षणायाः परिभाषितत्वात् । ननु द्विरेफपदस्य रेफद्वययुक्तभ्रमरशब्द एवार्थः, तथा सति "द्विरेफं पश्य" इत्यादौ द्वितीयार्थकर्म्मतायाः भृङ्गेनान्वयः ; तथा हि,—"प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानाम्" इति नियमादिति चेत्, न ; प्रकृत्यर्थाभिन्नत्वे ऽनाद्यन्तस्यापि प्रकृत्यर्थत्वात् । अत एव "मुखचन्द्रं पश्य" इत्यादौ चन्द्राभिन्नत्वे

"धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः।
रज्यत्यपूर्व्वबन्धव्युत्पत्तेर्मानसं शोभाम्॥"

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धः क्लिष्टः। (ह)

---

नाध्यासिते मुखे कर्म्मतायाः अन्वयः; तथाहि,—द्विरेफशब्दाद्भ्रमरशब्दस्य, द्वितीयातश्च कर्म्मतायाः, लक्षितभ्रमरशब्दाद् भृङ्गस्य चोपस्थितौ भृङ्गे भ्रमरशब्दाभेदं कर्म्मतान्वयं ग्राहमानः आंशिकाध्यारोपरूपी बोधो जायते; शब्दतदर्थयोरभेदारोपश्च "हिरण्यपूर्ब्बं कशिपुं प्रचचते" इत्यादौ दृष्टः। नैयायिकास्तु,—"द्विरेफपदस्य भ्रमरशब्दे एका लक्षणा, लक्षितभ्रमरशब्दवाच्यत्वसम्बन्धेन भृङ्गे चापरलक्षणा, ततश्च प्रकृत्यर्थे भृङ्गे कर्म्मतान्वयबोधः" इत्याहुः, तन्न; सकृदुच्चरितशब्दादावृत्तिं विना क्रमिकबोधाननुभवात्। अजनितान्वयबोधस्य शब्दस्यावृत्त्यभावात्, आवृत्तौ च द्वितीयाया अप्यावृत्तौ प्रथमोक्तद्वितीयाया अन्वयानुपपत्तेः। अस्मद्गुरुचरणैः "मुखचन्द्रं पश्य" इत्यत्रावश्यमाश्रयणीयत्वाच्चेत्यास्तां विस्तरः।" यथा वा,—"वस्त्रवैदूर्य्यचरणैः चतसत्त्वरजःपरा निष्कम्पा रचिता नेत्रयुद्धं वेदय साम्प्रतम्॥" इति, इह हि वस्त्रशब्दः अम्बरापरपर्य्यायाकाशार्थकतया, वैदूर्य्यशब्दो मण्यर्थकतया, चरणशब्दः पादापरपर्य्यायकिरणार्थकतया, सत्त्वरजःशब्दस्तमोऽर्थकतया, निष्कम्पाशब्दोऽचलार्थकतया युद्धशब्दो युग्मार्थकतया, वेदयशब्दो बोधयेत्यर्थकतया च नेयः। वाक्यगतं निहतार्थत्वं यथा,—"सायकसहायबाहोर्मकरध्वजनियमितक्षमाऽधिपतेः। अब्जरुचिभास्वरस्ते भातितरामवनिप! श्लोकः॥" इति। अत्र हि सायक-मकरध्वज-क्षमा-ऽब्ज-श्लोकशब्दाः शर-मदन-सहिष्णुता-कमल-पद्यानामेव वाचकाः प्रसिद्धा अपि, करवाल-सागर-धरणी-चन्द्र-यशसां वाचकतया प्रयुक्ता इति निहतार्थत्वम्। अवाचकत्वं यथा,—"नमन्नृपतिमण्डलीमुकुटचन्द्रिकादुर्द्दिनस्फुरच्चरणपल्लवप्रतिपदोक्तदोःसम्पदा। अनेन जनतेऽन्तरां तुरगमेधमुक्तभ्रमत्तुरङ्गखुरचन्द्रकप्रकरदन्तुरा मेदिनी।" इति। अत्र हि चन्द्रिकादुर्द्दिनशब्दौ किरण-कृत्स्नयोर्वाचकतया प्रयुक्तावपि न व्यक्ता इति स्फुटमवाचकत्वम्।

(ह) धम्मिल्लस्येति।—कुरङ्गशावाक्ष्याः अपूर्वा बन्धव्युत्पत्तिः,—विन्यासविशेषः यस्य तादृशस्य, धम्मिल्लस्य—संयतकेशपाशस्य, ("धम्मिल्लाः संयताः कचाः" इत्यमरः) शोभां प्रेक्ष्य—दृष्ट्वा, कस्य—जनस्य, मानसं निकामम्—अतिमात्रं यथा तथा, न रज्यति? अत्र पदार्थानाम् अन्वययोजनस्य कष्टसाध्यत्वात् रसास्वादस्य प्रतिबन्धकत्वेन क्लिष्टत्वम्। विरुद्धमतिकारित्वं यथा,—"श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्त्तयः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"न्यक्कारो ह्ययमेव मे यदरयः" इति । अत्र च अयमेव न्यक्कार इति न्यक्कारस्य विधेयत्वं विवक्षितम् । तच्च शब्दरचनावैपरीत्येन गुणीभूतम् । रचना च पदद्वयस्य विपरीतेति वाक्यदोषः । (क)

"आनन्दयति ते नेत्रे योऽसौ सुभ्रु ! समागतः ।" (ख)

इत्यादिषु "यत्तदोर्नित्यः सम्बन्धः" इति न्यायादुपक्रान्तस्य यच्छब्दस्य निराकाङ्क्षत्वप्रतिपत्तये तच्छब्दसमानार्थतया प्रतिपाद्यमाना इदमेतददःशब्दा विधेया एव भवितुं युक्ताः । अत्र तु यच्छब्दनिकटस्थतया अनुवाद्यत्वप्रतीतिकृत्, तच्छब्दस्यापि यच्छब्दनिकटस्थितस्य प्रसिद्धपरामर्शित्वमात्रम् । (ग) यथा,—

---

विपक्षक्षपणेनाद्य शेरते ते गतासुखाः ॥" गतासुखाः,—गतदुःखाः, पक्षे,—गतानि असवः खानि—इन्द्रियाणि च येषां ते तथा । अत्र क्षमादिगुणयुक्ताः सुखमासते इति विवक्षिते हता इति विरुद्धार्थप्रतीतिः ।

(क) अविमृष्टविधेयांशत्वमाह, न्यक्कार इति ।—अत्र वाक्यगतः विधेयाविमर्शः सहृदयमनःसु तादृशवीररसास्वादस्य मनाक् प्रतिघातं जनयतीति बोद्धव्यम ।

(ख) आनन्दयतीति ।—हे सुभ्रु! योऽसौ समागतः ते—तव, नेत्रे आनन्दयति।

(ग) इत्यादिष्विति ।—इत्यादिषु वाक्येषु, यत्तदोः,—यत्तच्छब्दयोः, नित्यः,—सर्व्वकालिकः, सम्बन्धः,—संयोगः, इति न्यायात्—न्यायमुपाश्य, उपक्रान्तस्य—अनुवाद्यत्वेनोपात्तस्य, यच्छब्दस्य—यच्छब्दार्थस्य, निराकाङ्क्षत्वप्रतिपत्तये—निराकाङ्क्षताप्रत्यायनाय,तच्छब्दसमानार्थकतया प्रतिपाद्यमानाः,—प्रयुज्यमानाः,इदमेतददःशब्दाः, विधेयाः,—अनुवाद्यतामप्राप्ताः, विधेयत्वबोधकाः इत्यर्थः, एव भवितुं युक्ताः, किन्तु अत्र यच्छब्दस्य निकटस्थतया अनुवाद्यत्वस्य प्रतीतिं करोतीति तथोक्तः, अदःशब्द इति शेषः । अयं भावः,—यद्यपि "यत्तदोर्नित्यसम्बन्धः" इति न्यायात् यत्र यच्छब्दस्तत्र तच्छब्दो यावन्न प्रयुज्यते, तावदेव साकाङ्क्षत्वं वाक्यस्य । यत्र च यच्छब्दः प्रयुक्तः, तत्र तच्छब्दसमानार्थकतया यदि इदमेतददःशब्दान्यतमः प्रयुक्तः, तत्रापि यच्छब्दोत्थापिताऽऽकाङ्क्षा पूर्य्यते, तदेव "योऽसौ" इति प्रयोगेऽपि यच्छब्दोत्थापिता आकाङ्क्षा पूर्णा स्यादिति शक्यते वक्तुं, तथाऽपि अयं नियमस्तत्रैव, यत्र यत्तदोः पृथक् पृथक् प्रयोगः, विलक्षणविभक्त्यन्ततया वा पार्थक्यम् ; अत्र तु समानविभक्त्यन्ततया

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"यः स ते नयनानन्दकरः सुभ्रु ! स आगतः।"

यच्छब्दव्यवधानेन स्थितास्तु निराकाङ्क्षत्वमवगमयन्ति। यथा,—

"आनन्दयति ते नेत्रे योऽधुनाऽसौ समागतः।"

एवमिदमादिशब्दोपादानेऽपि। यत्र च यत्तदोरेकस्यार्थत्वं सम्भवति, तत्रैकस्य उपादानेऽपि निराकाङ्क्षत्वप्रतीतिरिति न क्षतिः। तथाहि,—यच्छब्दस्योत्तरवाक्यगतत्वेनोपादाने सामर्थ्यात् पूर्ववाक्ये तच्छब्दस्यार्थत्वम्। यथा,—"आत्मा जानाति यत् पापम्।" (घ)

एवम्,—

"यं सर्व्वशैलाः परिकल्प्य वत्सं
मेरौ स्थिते दोग्धरि दोहदक्षे।

यच्छब्दसमीपप्रयुक्ततया च अदःशब्दस्यानुवाद्यत्वप्रत्यायकत्वम्, अत एव यच्छब्दोत्थाप्याया आकाङ्क्षायाः नात्र अदःशब्दः पूरकः, तस्मात् विधेयस्यादःशब्दस्यानुवाद्यत्वादप्राधान्येन निर्देश इति विधेयाविमर्षदोषत्वादवश्यम्। प्रसिद्धपरामर्शित्वमात्रं—प्रसिद्धार्थबोधकत्वं, न तु विधेयार्थप्रतिपादनेन निराकाङ्क्षत्वप्रत्यायकत्वमित्यर्थः। यत्र तु प्रसिद्धादिपरामर्शिनामपि तदिदमादिशब्दानां यत्पदेन सम्बन्धः सम्भवति, तत्र विधेयत्वप्रतीतिकारित्वमस्त्येव। तदुक्तं,—"ख्यातार्थमनुभूतार्थं प्रक्रान्तार्थञ्च तत्पदम्। यत्पदापेक्षया हीनं न विधेयत्वबोधकत् ॥" इति। क्रमेण तदुदाहरणानि यथा,—"करबदरसदृशमखिलभुवनतलं यत्प्रसादतः कवयः। पश्यन्ति सूक्ष्ममतयः सा जयति सरस्वती देवी ॥"। "यदङ्गलावण्यमनङ्गभङ्गदं यदाननं निन्दति विम्बमैन्दवम्। मम क्षणं मुञ्चति मानसं न या विहाय तां हन्त न शान्तिरस्ति मे ॥" "रसैः कथा यस्य सुधाऽवधीरिणी नलः स भूजानिरभूद् गुणाद्भुतः ॥" इति।

(घ) यत्र चेति।—आर्थत्वम्—अर्थवशलभ्यत्वम्। सामर्थ्यात्—योग्यताबलात्, परस्पराकाङ्क्षानैयत्यात् इत्यर्थः। एतेनोत्तरवाक्यस्थं यत्पदं तत्पदनिराकाङ्क्षमिति ज्ञेयम्। अ त्मेति।—यत् पापं तत् आत्मा जानातीति सामर्थ्यात् अन्तःकरणीयमिति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भास्वन्ति रत्नानि महौषधींश्च
पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥" इत्यादावपि।

तच्छब्दस्य प्रक्रान्तप्रसिद्धानुभूतार्थत्वे यच्छब्दस्यार्थत्वम्। (ङ)
क्रमेण यथा,—

"स हत्वा वालिनं वीरस्तत्पदे चिरकाङ्क्षिते।
धातोः स्थान इवादेशं सुग्रीवं सन्न्यवेशयत् ॥" (च)
"स वः शशिकलामौलिस्तादात्म्यायोपकल्पताम्।" (छ)
"तामिन्दुसुन्दरमुखीं हृदि चिन्तयामि ॥" (ज)

---

(ङ) यमिति।—अत्र "स हिमालयः अस्ति" इति पूर्ववाक्यं आर्थेन तच्छब्देनान्वयः। उत्तरवाक्यस्थयत्पदस्य पूर्ववाक्यस्थतत्पदेन शाब्दः सम्बन्धोऽपि, यथा,—"अन्यास्ताः गुणरत्नरोहणभुवः" इत्यादि। एवं पूर्ववाक्यस्थयत्पदस्योत्तरवाक्ये प्रतीयमानतत्पदापेक्षा; यथा,—"यस्त्वां विसृजते मर्त्यः आत्मानं प्रियमीश्वरम्। विपर्य्ययेन्द्रियार्थार्थं विषमत्यमृतं त्यजेत् ॥" इति।

(च) स इति।—स वीरः,—रामः, वालिनं हत्वा धातोः स्थाने आदेशमिव चिरकाङ्क्षिते तत्पदे—तस्य—वालिनः, पदे—राज्ये, सुग्रीवं सन्न्यवेशयत्—अभिषिक्तवान्। अत्र स इति यः सुग्रीवमित्रमिति आर्थेन यच्छब्देन सम्बध्यते। अत्र तच्छब्दस्य प्रक्रान्तत्वम्। रघुवंशस्येदं पद्यम्।

(छ) स इति।—सः,—प्रसिद्धः, शशिकला मौलौ यस्य तथोक्तः, शिव इत्यर्थः, वः,—युष्माकं, तादात्म्याय—मुक्तये इत्यर्थः, उपकल्पतां—मुक्तिप्रदो भवतु इत्यर्थः। अत्र यः युष्माभिराराध्यते इति आर्थेन यच्छब्देन स इति सम्बध्यते, प्रसिद्धार्थकश्चेह तच्छब्दः।

(ज) तामिति।—अत्र या मया कीर्त्तिता इति आर्थेन यच्छब्देन तामिति सम्बध्यते। यद्वा,—या रूपलावण्यपूर्णा इत्यर्थतोऽवगम्यते। एवमेव चण्डीदासादयः; तेषामयमाशयः,—प्रक्रान्तादिपरामर्शकस्य तत्पदस्य यत्पदनिराकाङ्क्षत्वे "यत्तदोर्नित्यः सम्बन्धः" इति नियमभङ्गश्च स्यात्। एवञ्च "यत्पदापेक्षया हीनम्" इति प्रागुक्तं तूत्थिताकाङ्क्षाविरहपरम्। "स हत्वा" इत्यादौ सः कः? इत्युत्थाप्याकाङ्क्षयैव सङ्गतिरिति नियमो तु यत्पदसन्निहितत्वेन यत्पदप्रसिद्धार्थकं यत्पदं तद्वेदो निवेशनीय इति। अत्र अनुभूतार्थकस्तच्छब्दः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यत्र च यच्छब्दनिकटस्थितानामपीदमादिशब्दानां भिन्नलिङ्गविभक्तित्वं, तत्रापि निराकाङ्क्षत्वमेव। क्रमेण यथा,—

"विभाति मृगशावाक्षी येदं भुवनभूषणम्।" (झ)

"इन्दुर्विभाति यस्तेन दग्धाः पथिकयोषितः॥" (ञ)

क्वचिदनुपात्तयोर्द्वयोरपि सामर्थ्यादवगमः। (ट) यथा,—

"न मे शमयिता कोऽपि भारस्येत्युर्वि! मा शुचः।

नन्दस्य भवने कोऽपि बालोऽस्त्यद्भुतपौरुषः॥" (ठ)

अत्र योऽस्ति स ते भारस्य शमयितेति बुध्यते।

"यद् यद्विरहदुःखं मे तत् को वाऽपहरिष्यति?"

इत्यत्रैको यच्छब्दः साकाङ्क्ष इति न वाच्यम्। तथाहि,—यद् यदित्यनेन येन केनचिद्रूपेण स्थितं सर्व्वात्मकं वस्तु विवक्षितम्। तथाभूतस्य तस्य तच्छब्देन परामर्शः। एवमन्येषामपि वाक्यगतत्वेनोदाहरणं बोध्यम्। (ड)

---

(झ) विभातीति।—या मृगशावाक्षी विभाति इदं भुवनानां भूषणम्—अलङ्कारः। अत्र निकटस्थितोऽपि इदं शब्दः क्लीवलिङ्गः।

(ञ) इन्दुरिति।—य इन्दुर्विभाति तेन—इन्दुना, पथिकानां योषितः,—कान्ताः, दग्धाः। अत्र निकटस्थितोऽपि तच्छब्दः भिन्नविभक्तिकत्वान्न दुष्टः।

(ट) क्वचिदिति।—अनुपात्तयोः,—अप्रयुक्तयोः, द्वयोः,—यत्तच्छब्दयोरित्यर्थः, सामर्थ्यात्—योग्यताबलात्, आकाङ्क्षातः इत्यर्थः, अवगमः,—प्रतीतिः।

(ठ) नेति।—हे उर्व्वि!—पृथिवि! कोऽपि—जनः, मे—मम, भारस्य शमयिता न, अस्तीति शेषः, इति मा शुचः,—शोकं मा कुरु, [ माङ्योगे लुङ्, अडागमप्रतिषेधश्च ] नन्दस्य भवने कोऽपि अद्भुतपौरुषः,—अलौकिकपराक्रमः, बालः,—शिशुः, अस्ति।

(ड) ननु यत्र पूर्व्ववाक्ये यत्पदद्वयं, तत्र कथमेकतत्पदेन निराकाङ्क्षत्वप्रतीतिः? तत्र तत्पदद्वयस्यैव वक्तुं योग्यत्वात्; यथा,—"यं यं कामयते कामं तं तमाप्नोति लीलया" इति; अत आह, यद् यदिति।—अत्र यच्छब्दद्वयम्; तत्र एकः एकेन तच्छब्देन निराकाङ्क्षः, अपरः साकाङ्क्षः इति न वक्तव्यम्। सर्वात्मकमिति।—विरहदुःखत्वेन सामान्येन सर्वं विरहदुःखमित्यर्थः; तथाभूतस्य—विरहदुःखत्व-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पदांशे श्रुतिकटु यथा,—

"तद्गच्छ सिद्ध्यै कुरु देवकार्य्यम्।" (ढ)

"धातुमत्तां गिरिर्धत्ते।" अत्र मत्ताशब्दः क्षीबार्थे निहितः। (ण)

"वर्ण्यते किं महासेनो विजेयो यस्य तारकः।"

अत्र विजेय इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः। (त)

"पाणिः पल्लवपेलवः।" पेलवशब्दस्याद्याक्षरे अश्लीले। (थ)

"संग्रामे निहताः शूरा वचोबाणत्वमागताः।"

अत्र वचःशब्दस्य गीःशब्दवाचकत्वे नेयार्थत्वम्। तथा तत्रैव बाणस्थाने शरेति पाठे। अत्र पदद्वयमपि न परिवृत्ति-

---

च्छिन्नस्य; तथा च,—वीप्सायाः वक्तृतात्पर्य्यमेव नियामकम्; सामान्यरूपेणोपस्थापने वक्तृतात्पर्य्ये सति न तत्पदे वीप्सा, तत्तद्व्यक्तित्वेनोपस्थापने तात्पर्य्ये सति तत्पदे वीप्सा। क्वचित्तु तत्पदे एव वीप्सा, न तु यत्पदे, यथा,—"ते ते सत्पुरुषाः परार्थघटकाः स्वार्थस्य बाधेन ये।" एवमिति।—अन्येषाम्—अनुचितार्थत्वादीनाम्, तच्च मया दर्शितमेव इति सारः।

(ढ) "दोषाः केचिद् भवन्त्येषु पदांशेऽपि पदेऽपरे।" इत्युक्तेः पदांशगतदोषस्योदाहरणं प्रदर्शयति, तद्गच्छेति।—अत्र "सिद्ध्यै" इति पदस्य अंशभूतः "द्ध्यै" इति शब्दः श्रवणकार्कश्यमवगमयतीति भावः।

(ण) धातुमत्तामिति।—अत्र मत्ताशब्दः क्षीबार्थे प्रसिद्धो विद्यमानत्वरूपेऽर्थे प्रयुक्त इति निहितार्थत्वम्। स च धातुमत्तामिति पदस्य अंशभूत इति तस्य पदांशगतत्वम्।

(त) वर्ण्यते इति।—यस्य तारको विजेयः स महासेनः,—कार्त्तिकेयः, किं वर्ण्यते? यद् ["अचो यत्" (३।१।९७ पा०) इति शास्त्रेण विहितः "अर्हे कृत्यतृचश्च" (३।३।१६९ पा०)] इत्यर्हार्थे विजेय इति पदस्यांशभूतः कृत्यसंज्ञो यत्प्रत्ययः विजितभूतत्वरूपे क्तप्रत्ययार्थे अवाचक इति भावः।

(थ) पाणिरिति।—आद्याक्षरे—पेल इति द्वे अक्षरे इत्यर्थः, अश्लीले, लाटभाषासु वृषणरूपगुह्यावयवबोधकतया व्रीडाव्यञ्जकत्वादिति भावः। जुगुप्साव्यञ्जकं यथा,—"पूयते" इत्यत्र पूयशब्दः; अमङ्गलव्यञ्जकं यथा,—"अभिप्रेतः" इत्यत्र प्रेतशब्दः इति ज्ञेयम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सहम्; जलध्यादौ तु उत्तरपदं, वाड़वानलादौ पूर्व्वपदम्; एवमन्येऽपि यथासम्भवं पदांशदोषा ज्ञेयाः। निरर्थकत्वादीनां त्रयाणाञ्च पदमात्रगतत्वेनैव लक्ष्ये सम्भवः।(द)

क्रमेण यथा,—"मुञ्च मानं हि मानिनि!" अत्र हिशब्दो वृत्तिपूरणमात्रप्रयोजनः। "कुञ्जं हन्ति कृशोदरी।" तत्र हन्तीति गमनार्थे पठितमपि न तत्र समर्थम्।(ध)

"गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः।" (न)

(द) सङ्ग्रामे इति।—शूराः,—वीराः, सङ्ग्रामे—युद्धे, निहताः सन्तः, वचोबाणत्वं—गीर्वाणत्वं, देवत्वमिति यावत्, आगताः,—प्राप्ताः। अत्र "वचोबाणत्वम्" इतिपदस्य अंशभूतो वचःशब्दो गीरित्यर्थं बोधयितुं प्रयुक्तोऽपि तस्य परिवृत्त्यसहत्वात् नेयार्थत्वं सम्पादयति; एवं "वाग्बाणत्वमुपागताः" "गीःशरत्वमुपागताः" इति वाक्यस्याप्ययमेव दोषः, न परिवृत्तिसहं—श्रुतशब्दपरित्यागेन तत्पर्य्यायशब्दान्तरप्रयोगेऽपि न तदर्थबोधकमित्यर्थः। जलध्यादाविति।—उत्तरपदं—"धि" इत्यंशभूतमित्यर्थः, न परिवृत्तिसहमित्यनुषङ्गः। अन्योक्तमररिसिंहेन,—"जलदादिषु पूर्व्वपदे, सरोजमुख्येषु चोत्तरपदेषु। सुरपतिसमेषु चोभयपदेषु पर्य्यायपरिवृत्तिः॥ इति परिवृत्तिसहाये योगात्ते यौगिकाः शब्दाः। परिवृत्त्यसहाये तु मिश्रा गीर्वाणतुल्यास्ते॥" पूर्वपदं—"वाड़व" इत्यंशभूतमित्यर्थः, अत्रापि न परिवृत्तिसहमित्यनुषज्यते। अत्र "धि"स्थाने "ध" इति प्रयोगे तथा वाड़वस्थाने अश्वादिपदप्रयोगे नेयार्थत्वमिति भावः। एवमिति।—"प्रकटितम्" इत्यादौ कटिशब्दः ग्राम्यः। "कस्मिन् कर्म्मणि सामर्थ्यमस्य नोत्तपते तराम्। अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह॥" इत्यादिषु सन्दिग्धत्वं पदैकदेशे ज्ञेयम्; तथाहि अत्र साधुचरशब्दः पूर्वं साधुरित्यर्थे ["भूतपूर्वे चरट्" (५।३।५३ पा०) इति सूत्रेण, एवं "चरेष्टः" (३।२।१६ पा०)] इति सूत्रेण वा साधितः साधुषु चरतीत्यर्थकः प्रसङ्गाद्यभावे वक्तृतात्पर्य्यसन्देहजनकः इति दिक्। "सम्भवन्ति पदेऽपरं" इति यदुक्तं, तदुदाजिहीर्षुः आह, निरर्थकत्वेति।—निरर्थकत्वादीनां—निरर्थकाऽसमर्थच्युतसंस्कारत्वानामित्यर्थः।

(ध) मुञ्चेति।—अत्र हिशब्दो निरर्थक इति भावः। कुञ्जमिति।—समर्थं—बोधयितुं शक्तं, प्रतिपत्तिक्षममित्यर्थः।

(न) गाण्डीवीति।—गाण्डीवी—अर्जुनः, भुजाभ्यां—बाहुभ्यां, कनकशिला-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"आङो यमहनः" [ पा० १।३।२८। ] "स्वाङ्गकर्म्मकाच्च" [ पा० १।३।२८। सू० वा० ] इत्यनुशासनबलादाङ्पूर्व्वस्य हनः स्वाङ्गकर्म्मकस्यैवात्मनेपदं नियमितम्। इह तु तल्लङ्घितमिति व्याकरणलक्षणहीनत्वात् च्युतसंस्कारत्वम्।

ननु अत्र "आजघ्ने" इति पदस्य स्वतो न दुष्टता, अपि तु पदान्तरापेक्षयैव, इत्यस्य वाक्यदोषता। मैवम्। तथाहि; गुणदोषालङ्काराणां शब्दार्थगतत्वेन व्यवस्थितेस्तदन्वयव्यतिरेकानुविधायित्वं हेतुः। इह तु दोषस्य "आजघ्ने" इति पदमात्रस्यैवान्वयव्यतिरेकानुविधायित्वम्। पदान्तराणां परिवर्त्तनेऽपि तस्य तादवस्थ्यादेव इति पददोष एव; तथा यथेहात्मनेपदस्य परिवृत्तावपि न पददोषः, तथा हन्प्रकृतेरपीति न पदांशदोषः। एवं "पद्मः" इत्यत्राप्रयुक्तस्य पदगतत्वं बोध्यम्। एवं प्राकृतादिव्याकरणलक्षणहीनावपि च्युतसंस्कारत्वमूह्यम्। इह तु शब्दानां सर्व्वथा प्रयोगाभावेऽसमर्थत्वं, विरलप्रयोगे निहतार्थत्वम्। निहतार्थत्वमनेकार्थशब्दविषयम्, अप्रतीतत्वं त्वेकार्थस्यापि शब्दस्य सार्व्वत्रिकप्रयोगविरहः। अप्रयुक्तत्वमेकार्थशब्दविषयम्। असमर्थत्वमनेकार्थशब्दविषयम्। असमर्थत्वे हन्त्यादयोऽपि गमनार्थे पठिताः। अवाचकत्वे दिनादयः प्रकाशमयाद्यर्थे, न तथेति परस्परभेदः। एवं पददोषसजातीया वाक्यदोषा उक्ताः; सम्प्रति तद्विजातीया उच्यन्ते। (प)—

निभं—काञ्चनपाषाणसदृशं, विषमविलोचनस्य—त्रिनेत्रस्य, वचः आजघ्ने—आहतवान्।

(प) गुणेति।—गुणानां—वक्ष्यमाणानां माधुर्य्यादीनां, दोषाणां—दुःश्रवत्वादीनाम्, अलङ्काराणाम्—अनुप्रासोपमाऽऽदीनां, शब्दार्थगतत्वेन व्यवस्थितेः,—एते शब्दगुणाः, एते अर्थगुणाः, एते शब्ददोषाः, एते अर्थदोषाः, एते शब्दालङ्काराः, एते अर्थालङ्कारा इत्येवं व्यवस्थाया इत्यर्थः, हेतुः,—कारणम्। तदन्वयव्यतिरेकानुविधायित्वं —तत्सत्त्वे तत्सत्ता अन्वयः, तदसत्त्वे तदसत्ता व्यतिरेकः, तौ अनुविदधातीति अन्वय-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वर्णानां प्रतिकूलत्वं लुप्ताहतविसर्गते ।
अधिकन्यूनकथितपदता-हतवृत्तताः ॥
पतत्प्रकर्षता सन्धौ विश्लेषाश्लीलकष्टताः ।
अर्द्धान्तरैकपदता समाप्तपुनरात्तता ॥
अभवन्मतसम्बन्धाक्रमामतपरार्थताः ।
वाच्यस्यानभिधानञ्च भग्नप्रक्रमता तथा ॥
त्यागः प्रसिद्धेरस्थाने न्यासः पदसमासयोः ।
सङ्कीर्णता गर्भितता दोषाः स्युर्वाक्यमात्रगाः॥५९५॥(फ)

---

व्यतिरेकानुविधायी, तेषां—शब्दार्थगतानां गुणदोषालङ्काराणाम्, अन्वयव्यतिरेकानुविधायी तदन्वयव्यतिरेकानुविधायी तस्य भावः तत्त्वम् । अयं भावः,—यत्र तत्तच्छब्दसद्भावे, न तु तत्परिवृत्तौ तत्तद्गुणादिसद्भावः, तत्र तत्तद्गुणादीनां शब्दगतत्वं, यत्र न तथा तत्र तेषामर्थगतत्वमिति । एवं पद्य इति ।—अप्रयुक्तस्य—अयुक्तत्वस्य, पदगतत्वं—न तु पदांशगतत्वमित्यर्थः । इदानीं केषाञ्चिद्दोषाणां परस्परभेदं दर्शयति,—इह त्विति । सर्व्वथेति ।—यत्र ज्ञापकं नास्ति तत्रैव प्रयोगाभावः, ज्ञापकसत्त्वे तु प्रयोगोऽस्त्येव, यथा,—हनधातोर्गतौ जङ्घा पद्धतिरित्यादिप्रयोगः ; अत्र यङ्लोपपच्छब्दौ ज्ञापकौ ; कुटिलं गम्यतेऽनया इति जङ्घा, पद्भ्यां गम्यतेऽत्र इति पद्धतिः ; एतदर्थमेव हनधातोर्गतौ पाठः । केचित्तु,—"पुनःपुनः गम्यतेऽनया" इति यङन्ते वाक्यं कुर्व्वन्ति, तन्न ; गत्यर्थधातोः [ "नित्यं कौटिल्ये गतौ ( ३।१ २३ पा० ) इति सूत्रेण ] अत्यर्थे पौनःपुन्ये च यङ्प्राप्त्यभावात् ।" विरलेति ।—श्लेषादौ प्रयोगो न त्वन्यत्र, एतेनासमर्थत्वनिहतार्थत्वयोर्भेदो दर्शितः । निहतार्थत्वाप्रतीतत्वयोर्भेदमाह,—निहतार्थत्वमिति । अप्रयुक्तत्वासमर्थत्वयोर्भेदमाह,—अप्रयुक्तत्वमिति । असमर्थत्वावाचकत्वयोर्भेदमाह,—असमर्थत्वे इति । न तथा, पठिता इति शेषः । तद्विजातीयाः,—पददोषविजातीया वाक्यदोषाः, उच्यन्ते ।

(फ) वर्णानामिति ।—( १ ) वर्णानां प्रतिकूलत्वं—प्रतिकूलवर्णता इत्यर्थः, ( २ ) लुप्तविसर्गता, ( ३ ) आहतविसर्गता, ( ४ ) अधिकपदता, ( ५ ) न्यूनपदता, ( ६ ) कथितपदता, ( ७ ) हतवृत्तता, ( ८ ) पतत्प्रकर्षता, ( ९ ) सन्धिविश्लेषः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वर्णानां रसानुगुण्यविपरीतत्वं प्रतिकूलत्वम्। (ब)

यथा मम,—

"ओवट्टइ उल्लट्टइ सअणे कहिं पि मोट्टाअइ णो परिहट्टइ।
हिअएण फिट्टइ लज्जाइ खुट्टइ दिहीए सा।" (भ)

अत्र टकाराः शृङ्गाररसपरिपन्थिनः केवलं शक्तिप्रदर्शनाय निबद्धाः। एषाञ्चैकद्वित्रिचतुःप्रयोगेण न तादृग् रसभङ्ग इति न दोषः। (म)

---

(१०) सन्व्यश्लीलता, (११) सन्धिकष्टता, (१२) अर्द्धान्तरैकपदता, (१३) समाप्तपुनरात्तता, (१४) अभवन्मतसम्बन्धता, (१५) अक्रमता, (१६) अमतपरार्थता, (१७) वाच्यानभिधानम, (१८) भग्नप्रक्रमता, (१९) प्रसिद्धित्यागः, (२०) अस्थाने पदन्यासः, (२१) अस्थाने समासन्यासः, (२२) सङ्कीर्णता, (२३) गर्भितता; एते त्रयोविंश वाक्यमात्रगाः,—केवलवाक्यगताः, दोषाः स्युः। एतेष्वपि दोषेषु मध्ये सन्ध्यश्लीलत्वं, कथितपदत्वं, सन्धिकष्टत्वं, पुनरुक्तत्वं, न्यूनपदत्वम्, अधिकपदत्वं, समाप्तपुनरात्तत्वं, गर्भितत्वं, पतत्प्रकर्षत्वं चेत्येते नव दोषा अनित्याः, अन्ये पुनश्चतुर्दश दोषा नित्याः।

(ब) वर्णानामिति।—रसानुगुण्यविपरीतत्वञ्च प्रकृतरसविरोधिरसगतगुणव्यञ्जकत्वेन ज्ञेयम्।

(भ) वर्णानां प्रातिकूल्यमुदाहरति,—यथेति। ओवट्टइ इति।—["उद्वर्तयति उल्लोटयति शयने कस्मिन्नपि मोट्टायति न परिघट्टति। हृदयेन स्फिटयति लज्जया खुट्टयति धृतेः सा॥" इति संस्कृतम्] विप्रलम्भवर्णनमिदम्। उद्वर्त्तयति—देहमुत्तानीकरोति, उल्लोटयति—पार्श्वपरिवर्त्तनं करोति। मोट्टायति—मोट्टायितभावं प्रकटयति, न परिघट्टति—परिघट्टनं न करोति। स्फिटयति—भ्रश्यति। खुट्टयति—कुण्ठिता भवति इत्यर्थः।

(म) शृङ्गाररसपरिपन्थिनः,—शृङ्गारविरुद्धवीरबीभत्सरौद्रगतौजोगुणव्यञ्जकत्वेन शृङ्गारप्रकर्षबोधप्रतिबन्धकाः इत्यर्थः। अत्र टकारवर्णानाम् ओजोव्यञ्जकतया वीरबीभत्सादिषु एव उपयोगित्वात्, तादृक्—वर्णप्रतिकूलत्वनिबन्धनः, रसभङ्गः,—शृङ्गारप्रकर्षबोधप्रतिबन्धः इति भावः। इह दुःश्रवत्वदोषो वर्त्तत एवेति विभाव्यम्। अत एव "निर्वर्ण्यं पत्युर्मुखम्" इत्यत्र रेफयुक्तस्य वर्णत्रयस्य सत्त्वेऽपि नायं दोषः, दुःश्रवत्वन्तु वर्त्तते एव। ननु उक्तोदाहरणं दुःश्रवत्वमेव दोषः इति चेत्,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"गता निशा इमा बाले!" अत्र लुप्तविसर्गाः। (य)

आहताः,—ओत्वं प्राप्ताः, विसर्गा यत्र। यथा,—"धीरो वरो नरो याति" इति। (र)

"पल्लवाकृतिरक्तोष्ठी" अत्राकृतिपदमधिकम्। एवं "सदा शिवं नौमि पिनाकपाणिम्" इति विशेषणमधिकम्। "कुर्य्यां हरस्यापि पिनाकपाणेः" इत्यत्र तु पिनाकपाणिपदं विशेषप्रतिपत्त्यर्थमुपात्तत्वाद् युक्तमेव। यथा वा,—"वाचमुवाच कौत्सः" अत्र वाचमित्यधिकम्, उवाचेत्यनेनैव गतार्थत्वात्। क्वचित्तु विशेषणदानार्थं तत्प्रयोगो युज्यते। यथा,—"उवाच मधुरां वाचम्" इति। केचित्त्वाहुः,—"यत्र विशेषणस्यापि क्रियाविशेषणत्वं सम्भवति, तत्रापि तत्प्रयोगो न घटते।" यथा,—"उवाच मधुरं धीमान्" इति। (ल)

---

उदाहरणान्तरं बोध्यम्; यथा,—"वृन्दारकप्रकरमद्य करोम्यशङ्कमानन्दयामि मुनिवृन्दममन्दमङ्ग। भङ्गं भुजङ्गमगणस्य भयं नयामि त्वामन्तकातिथिमसन्तमहं विधाय॥" रावणं प्रति श्रीरामस्योक्तिरियम्। अत्र माधुर्य्यव्यञ्जकवर्णप्राचुर्य्यं वीररसस्य परिपन्थि ज्ञेयम्।

(य) लुप्तविसर्गतामुदाहरति, गता इति।—बहुशः प्रयोगे एव दोषत्वमस्याः, श्रोतृवैरस्यापादकत्वादिति बोध्यम्। अधिकविसर्गस्थितौ दुःश्रवत्वमेव यथा,—"स्मरः खलः खलः कान्तः" इति।

(र) आहतविसर्गतामुदाहरति, धीर इति।—अस्या अपि बहुधा प्रयोगे एव दोषत्वमिति बोध्यम्।

(ल) अधिकम्—अनुपयोगि, पदं यत्र तद्भावः अधिकपदता; यथा—पल्लवेति। अत्राधिकपदप्रयोगे तात्पर्य्यानुधावनेन सहृदयानां रसास्वादप्रतिबन्ध इति ध्येयम्। अत्राकृतिरिति।—"शिलापुत्रस्य शरीरम्" इतिवत् पल्लवाकृतेः पल्लवाऽनतिरिक्तत्वादाकृतिपदमनुपयुक्तार्थमिति भावः। अन्ये तु,—"आकृतिः,—संस्थानं, तच्च संयोगस्वरूपमेव, तत्र रक्तत्वस्य बाधादधिकपदम्" इत्याहुः, तन्न; बाधे अभवन्मतयोगत्वस्यैव प्रसक्तेः, न त्वधिकपदत्वस्य, "प्रभातवाताहतिकम्पिताकृतिः" इत्यादिप्रयोगादाकृतिशब्दस्य शरीरवाचकत्वाच्च; "अन्यथा तत्र संयोगकल्पनाऽनुपपत्तेः" इत्यपरे।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"यदि मय्यर्पिता दृष्टिः किं ममेन्द्रतया तदा ।"

अत्र प्रथमे त्वयेति पदं न्यूनम् । (व)

"रतिलीलाश्रमं भिन्ते सलीलमनिलो वहन् ।"

अत्र लीलाशब्दः पुनरुक्तः । (श) एवं—

"सस्नुः पयः पपुरनेनिजुरम्बराणि
जक्षुर्विसं धृतविकाशिविसप्रसूनाः ।

---

कुर्य्यामिति।—विशेषप्रतिपत्त्यर्थं पिनाकपाणेरित्यनेन हरस्य दुर्द्धर्षस्वरूपविशेषस्य बोधः, तस्यापि धैर्य्यच्युतिकरणेनात्मनः शौर्य्यातिशयस्य प्रतिपादितः इति भावः। वाचमिति।—यथा,—"देवं यजति" "गन्धं जिघ्रति" इत्यादौ "सम्भेदेनान्यतरवैयर्थ्यम्" इति न्यायेन यजादेः पूजाग्रहणमात्रार्थता, तथाऽत्रापि वचधातोरुच्चारणमात्रार्थत्वं, न तु वचनोच्चारणार्थत्वम्, अन्यथा पौनरुक्त्यं स्यात्। एवञ्च तादृशकल्पनमेवात्र शाब्दबोधविलम्बनकृत् इति दोषत्वमस्य। गतार्थत्वादिति।—वचधातुनैव वागुच्चारणस्य प्रतिपादनात् वाचमित्यस्य प्रयोगोऽनुपयुक्त एव, प्रत्युतार्थान्तरकल्पनाकर इति भावः।

(व) न्यूनपदतामाह,—न्यूनम्—उपादेयमप्यनुपात्तं, पदं—वाचकपदं यत्र, तस्य भाव इत्यर्थः। वाचकेति विशेषणात् वाच्यानभिधानादस्य भेदो दर्शितः, तस्य द्योतकपदानभिधानस्वरूपत्वात्। केचित्तु,—"अध्याहारपूरणीयं पदं न्यूनपदम्; वाच्यानभिधाने त्वध्याहारस्यैवाऽसम्भवादनयोः भेदः। तथाहि,—"व्यतिक्रमलवं कं मे वीक्ष्य वामाक्षि! कुप्यसि" इत्यत्र व्यतिक्रमलवयोः समासस्थलेऽध्याहार्य्यापिकारेणापि व्यतिक्रमीयस्थूलभागसमुच्चयस्यासम्भवात्, किन्तु वस्त्वन्तरस्यैव समुच्चयात्" इत्याहुः, तन्न; "गुणशतमपि दोषः कश्चिदेकोऽतिवृद्धः क्षपयति यदि नान्यस्तद्विरोधी गुणोऽस्ति" इत्यादौ गुणशतयोः समासत्वेऽप्यपिकारेणैकत्वादिगुणसमुच्चयदर्शनात्। न्यूनपदतामुदाहरति, यदीति।—यदि मयि दृष्टिः अर्पिता, त्वयेति शेषः, तदा मम इन्द्रतया किम्? नायिकां प्रति नायकस्योक्तिरियम्। अत्र त्वयेति पदाप्रयोगे अपरस्यापि कर्त्तृपदस्याध्याहारसम्भवेन रसप्रतीतिप्रतिरोध इति दोषत्वम्।

(श) कथितपदतामाह, रतीति।—कथितम्—अर्थपौनरुक्त्याभावेऽपि द्विरुपात्तं, पदं यत्र तस्य भाव इत्यर्थः। तदुदाहरणमाह, रतीति।—एकस्यैवार्थस्यैकशब्देन द्विरुपादाने किमिदं पदं नानार्थत्वेन अर्थान्तरबोधकम्, उत तस्यैवार्थस्य प्रतिपादकम्? इति प्रतिसन्धानप्रसङ्गे शाब्दबोधविलम्बनं दूषकताबीजमत्र बोध्यम्। लीलाशब्दप्रयोगे श्रोतुरर्थान्तरानुधावनात् रसभङ्ग इति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सैन्याः श्रियामनुपभोगनिरर्थकत्व-
दोषप्रवादममृजन्नगनिम्नगानाम् ॥" (ष)

अत्र विसशब्दस्य धृतपरिस्फुटतत्प्रसूना इति सर्व्वनाम्नैव परामर्शो युक्तः। (स)

वृत्तवृत्तं—लक्षणानुसरणेऽप्यश्रव्यं, रसाननुगुणम्, अप्राप्तगुरुभावान्तलघु च। क्रमेण यथा;—"हन्त ! सततमेतस्या हृदयं भिन्ते मनोभवः कुपितः"। "अयि ! मयि मानिनि ! मा कुरु मानम्।" इदं वृत्तं हास्यरसस्यैवानुकूलम्। "विकसितसहकार-भारहारिपरिमल एष समागतो वसन्तः।" यत्पादान्ते लघोरपि गुरुभाव उक्तस्तत् सर्व्वत्र द्वितीयचतुर्थपादविषयम्। प्रथम-तृतीयपादविषयन्तु वसन्ततिलकादेरेव। अत्र "प्रमुदितसौरभ आगतो वसन्तः" इति पाठो युक्तः। (ह) यथा वा,—

---

(ष) उदाहरणान्तरमुपस्थापयति,—एवमित्यादि। ससृरिति ;—सैन्याः,—सैनिकजनाः, नगनिम्नगानां—पर्व्वतेभ्यः सम्भूतानां नदीनां, तत्सम्बन्धिनीनामिति यावत्, श्रियां—सम्पदाम्, अनुपभोगेन यन्निरर्थकत्वं तदेव यो दोषस्तेन यः प्रवादः तम, अमृजन्—निराकृतवन्तः। कथमित्याह,—सस्नुः,—स्नानं चक्रुः, पयः,—जलं, पपुः,—पिबन्ति स्म, अम्बराणि—वस्त्राणि, अनेनिजुः,—क्षालितवन्तः, धृतानि विकाशीनि—विकसितानि, विसप्रसूनानि—कमलानि यैस्तथाभूताः सन्तः, विसं—मृणालं, जक्षुः,—भक्षितवन्तः। वसन्ततिलकं वृत्तम्। शिशुपालवधस्येदं पद्यम्।

(स) अत्रेति।—अत्र विसशब्दः पुनरुक्तः, तस्मात् विसशब्दस्य "धृतपरिस्फुट-तत्प्रसूनाः" इत्येवं सर्व्वनाम्ना एव परामर्शः युक्तः, अन्यथा दोषतादवस्थ्यम् इति भावः।

(ह) हतवृत्ततां त्रिविधामाह,—हतेति। रसानुगुणमिति।—केषाञ्चि-द्वृत्तानां रसानुगुण्यं निर्दिश्यते,—[ "आरम्भे सर्गबन्धस्य कथाविस्तरसङ्ग्रहे। शमोप-देशवृत्तान्ते सन्तः शंसन्त्यनुष्टुभम् ॥ शृङ्गारालम्बनोदारनायिकारूपवर्णनम्। वस-न्तादि तदङ्गञ्च सच्छायमुपजातिभिः ॥ रथोद्धता विभावेषु भव्या चन्द्रोदयादिषु। षाड्गुण्यप्रगुणा नीतिः वंशस्थेन विराजते ॥ वसन्ततिलकं भाति सङ्करे वीररौद्रयोः। कुर्य्यात् सर्गस्य पर्य्यन्ते मालिनीं द्रुततालवत् ॥ उपपन्नपरिच्छेदकाले शिखरिणी वरा।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
सम्भाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा ।
श्रीमत्कान्तिजुषां द्विषां करतलात् स्त्रीणां नितम्बस्थलात्
दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥" (क)

अत्र वस्त्राणि चेति बन्धस्य श्लथत्वश्रुतिः। "वस्त्राण्यपि" इति पाठे तु दार्ढ्यमिति न दोषः। "इदमप्राप्तगुरुभावान्तलघु" इति काव्यप्रकाशकारः। वस्तुतस्तु—"लक्षणानुसरणेऽप्यश्रव्यत्वम्" इत्यन्ये। (ख)

---

औदार्यरुचिरौचित्यविचारे हरिणी मता ॥ साक्षेपक्रोधधिक्कारे परं पृथ्वी भरक्षमा । प्रावृट्प्रवासव्यसने मन्दाक्रान्ता विराजते ॥ शौर्यस्तवे नृपादीनां शार्दूलक्रीडितं मतम् । सावेगपवनादीनां वर्णने स्रग्धरा वरा ॥ दोधकतोटकनर्कुटयुक्तं मुक्तकमेव विराजति सूक्तम् । निर्विषयस्तु रसादिषु तेषां निर्नियमस्य सदा विनियोगः ॥" ] इति सङ्क्षेपः।

हन्तेति।—अथ प्रथमद्वितीयगणयोर्भकारसकारयोः सान्निध्यं वैरस्यापादकत्वेन सामाजिकानामनुभवसिद्धमिति दोषः। गुरुभाव उक्त इति।—"सानुस्वारश्च दीर्घश्च विसर्गी च गुरुर्भवेत् । वर्णः संयोगपूर्वश्च तथा पादान्तगोऽपि वा ॥" इत्यादिना इति शेषः। द्वितीयचतुर्थपादविषयमिति।—इह प्रथमपादान्तस्य गुरुत्वाप्राप्तेर्दोष इति भावः।

(क) प्रकारान्तरमुदाहरति, अन्या इति।—ताः गुणरत्नानां रोहणभुवः,—उत्पत्तिस्थानानि, अन्याः,—विलक्षणा इत्यर्थः, सा धन्या—प्रशंसनीया, पुण्यवती वा, मृत्—मृत्तिका, अन्या—विलक्षणेत्यर्थः, ते सम्भाराः,—उपादानानि इत्यर्थः, अन्ये—विलक्षणाः इत्यर्थः, खलु—निश्चये, विधिना—विधात्रा, यैः,—सम्भारैः, एष युवा सृष्टः,—उत्पादितः, यत्र—यूनि, दृष्टे सति, मूढमनसाम्—इतिकर्त्तव्यविमूढमतीनां, श्रीमत्कान्तिजुषां—श्रीमती या कान्तिः तां जुषन्ते तेषां, सुरूपाणामित्यर्थः, अपिरत्राध्याहार्य्यः, तेन परमरूपवतामपि इत्यर्थः, द्विषां—शत्रूणां, करतलात् अस्त्राणि स्त्रीणां नितम्बस्थलात् वस्त्राणि च पतन्ति। परमसुन्दरो महावीरश्चायमिति भावः। शार्दूलविक्रीडितं वृत्तम्।

(ख) अत्रेति।—श्लथत्वश्रुतिः,—शैथिल्यश्रवणम्। लक्षणानुसरणेऽपि—चतुर्थपादान्तस्य लघोर्गुरुत्वप्रापकशासनसत्त्वेऽपि।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"प्रोज्ज्वलज्ज्वलनज्वालाविकटोरुसटाच्छटः ।
श्वासक्षिप्तकुलक्ष्माभृत् पातु वो नरकेशरी ॥" (ग)

अत्र क्रमेण अनुप्रासप्रकर्षः पतितः । (घ)

"दलिते उत्पले एते अक्षिणी अमलाङ्गि ! ते ।" एवंविध-सन्धिविश्लेषस्य असकृत्प्रयोग एव दोषः । अनुशासनमुल्लङ्घ्य वृत्तभङ्गभयमात्रेण सन्धिविश्लेषस्य तु सकृदपि । यथा,—

"वासवाशामुखे भाति इन्दुश्चन्दनबिन्दुवत् ।" (ङ)

"चलण्डामरचेष्टितः" इति । अत्र सन्धौ जुगुप्साव्यञ्जक-मश्लीलत्वम् । (च)

---

(ग) पतत्प्रकर्षतामाह,—तच्च द्विविधं,—बन्धस्य पूर्वापेक्षया उत्तरोत्तरञ्च शैथिल्यादनुप्रासपाताच्च निकर्षविशेषः, तदुक्तम्—"पतत्प्रकर्षं बन्धस्य शैथिल्यादुत्तरोत्तरम् । पूर्वानुसारतः कोऽपि निकर्षो यत्र जायते ॥" तत्र प्रथमस्योदाहरणं यथा,—"अन्यास्ता गुणरत्नरोहणभुवः" इत्यादि । अत्र "वस्त्राणि च" इत्यत्र बन्धस्य श्लथत्वश्रुतिरूपः आद्यः पतत्प्रकर्षदोषो बोध्यः । द्वितीयमुदाहरति, प्रोज्ज्वलन्निति ।—प्रोज्ज्वलन्—प्रोद्योतमानः, यः ज्वलनः,—अग्निः, तस्य ज्वालाः,—शिखाः, तद्वत् विकटाः,—उग्राः, उरवः,—महान्तः, सटानां—जटानां, छटाः,—समूहाः यस्य तादृशः, तथा श्वासेन—निःश्वासमारुतेन, क्षिप्ताः,—दूरमपसारिताः, कुलक्ष्माभृतः,—कुलाचलाः, येन तथाभूतः, नरकेशरी—नृसिंहः, वः,—युष्मान्, पातु—रक्षतु । अत्र उत्कर्षपतनेन वैरस्यावगमात् देवविषयकरतेः प्रकर्षहानिरिति दोषः ।

(घ) अत्र क्रमेणेति ।—प्रथमपादे संयुक्तवर्णत्रयेण चानुप्रासः इत्यत्यन्तमुत्कृष्टः, द्वितीयपादे टकारत्रयेणैवेति तदपेक्षयाऽपकृष्टः, तृतीयपादे तु क्षकारद्वयेनैवेति ततोऽप्यपकृष्टः, चतुर्थपादे तु मृदुवर्णद्वयेनैवेति सर्व्वापकृष्टः इत्यर्थः । अत्र चतुर्थपादस्य शैथिल्येन निकर्षो बोध्यः ।

(ङ) सन्धिविश्लेषमुदाहरति,—दलिते इति । एवंविधेति ।—अनुशासनसिद्धेत्यर्थः । सकृदपीति ।—सकृत्प्रयोगेऽपि, दोष इत्यन्वयः । वासवेति ।—वासवाशामुखे—पूर्वदिशि । अत्र "नित्यं संहितैकपदवत् पादेष्वर्द्धान्तवर्ज्जम्" इत्यनुशासनात् पद्ये सन्धेर्नित्यत्वमिति तल्लङ्घनाद्दोषः इत्यर्थः ।

(च) सन्ध्यश्लीलतामाह, चलण्डेति ।—"वेगादुड्डीय गगने चलण्डामरचेष्टितः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः ।" अत्र सन्धौ कष्टत्वम् । (छ)

"इन्दुर्विभाति कर्पूरगौरैर्धवलयन् करैः ।
जगन्मा कुरु तन्वङ्गि ! मानं पादानते प्रिये ॥" (ज)

अत्र जगदिति प्रथमार्द्धे पठितुमुचितम् ।

"नाशयन्तो घनध्वान्तं तापयन्तो वियोगिनः ।
पतन्ति शशिनः पादा भासयन्तः क्षमातलम् ॥"

अत्र चतुर्थपादो वाक्यसमाप्तावपि पुनरात्तः । (झ)

---

अयमुड्डीयते पक्षी ततोऽत्रैव रुचिं कुरु ॥" इति सम्पूर्णश्लोकः । चलन् यथा स्यात्तथा डामरम्—उद्भटं, चेष्टितं यस्य सः, उद्धतव्यापारवानित्यर्थः । अत्रेति ।—चलड्डामरे इत्यर्थः, सन्धावुत्पन्नलड्डाशब्दस्यापभ्रंशविधया पुरीषव्यञ्जकत्वाज्जुगुप्सा ; "रुचिङ्कुरु" इत्यत्र स्त्रीगुह्याङ्गव्यञ्जकचिङ्कुशब्दोत्पत्त्या व्रीडा, अमङ्गलाश्लीलसन्धिस्तु,—"भजते भुवन्तम्" इत्यत्र बोध्यः ; ऋतं—सत्यं, भजते इति सन्धिवशादमङ्गलम् ।

(छ) सन्धिकष्टतामाह, उर्वीति ।—मर्वन्ते—मरोः,—ऊषरभूमेः, अन्ते—अवसाने, असौ उर्वी—महती, चारु—सुन्दरी, अवस्थितिर्यस्याः तादृशी, तर्वाली—तरूणाम् आली—श्रेणी ।

(ज) अर्द्धान्तरैकपदतामाह,—अर्द्धान्तरे—भिन्नवाक्यघटितपद्यार्द्धे, एकमेव पदं यस्य, अत्र षष्ठ्यर्थो घटकत्वम् ; तथा च—यद्घटकमेकमेव पदं भिन्नवाक्यघटितपद्यार्द्धे वर्त्तते तस्य भावः, तां, सा चोत्तरार्द्धादौ पूर्वार्द्धान्ते च सम्भवति ; तत्राद्यामुदाहरति, इन्दुरिति ।—इन्दुः,—चन्द्रः, कर्पूरवत् गौरैः,—धवलैः, करैः,—किरणैः, जगत् धवलयन्—श्वेतीकुर्वन्, विभाति—विराजते । हे तन्वङ्गि !—कृशाङ्गि ! पादानते—चरणप्रणते, प्रिये मानं मा कुरु । यदि झटिति प्रियानुनयनेऽपि मानं न प्रहास्यसि, तदा त्वं स्वयं प्रियाऽनुनयाभावेऽपि मदनार्दिता मानं प्रजहासि, इति वरं ततः पूर्वमिति भावः । अन्त्यां यथा,—"जगत्प्रकाशयन्निन्दुः करैः शुभ्रैर्विभाति मा । मानमायतनेत्रान्ते ! कुरु पादानते प्रिये ॥" अत्र मेति पदमुत्तरार्द्धे पठितुमुचितम् । अत्रार्द्धान्तरोक्तपदस्य यथायथमुत्तरत्र पूर्व्वत्र वा वाक्ये निराकाङ्क्षत्वप्रतिसन्धानेन शाब्दबोधविलम्बनमेव दूषकताबीजम् ।

(झ) समाप्तपुनरात्ततामाह—समाप्तम्—अन्वयबोधजननान्निराकाङ्क्षमपि, [illegible] पुनः,—नि[illegible]षयान्तराकाङ्क्षया इत्यर्थः, आत्तं—गृहीतम्, उक्तमिति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अभवन्मतसम्बन्धो यथा,—

"या जयश्रीर्मनोजस्य यया जगदलङ्कृतम् ।
यामेणाक्षीं विना प्राणा विफला मे कुतोऽद्य सा ? ॥" (ञ)

अत्र यच्छब्दनिर्द्दिष्टानां वाक्यानां परस्परनिरपेक्षत्वात् तदेकान्तःपातिना एणाक्षीशब्देन अन्येषां सम्बन्धः कवेरभिमतो नोपपद्यत एव ।

"यां विनामी वृथा प्राणा एणाक्षी सा कुतोऽद्य मे ? ।"

इति तच्छब्दनिर्दिष्टवाक्यान्तःपातित्वे तु सर्व्वैरपि यच्छब्दनिर्द्दिष्टवाक्यैः सम्बन्धो घटते । यथा वा,—

"ईक्षसे यत्कटाक्षेण तदा धन्वी मनोभवः ।"

अत्र यदित्यस्य तदेत्यनेन सम्बन्धो न घटते । "ईक्षसे चेत्" इति तु युक्तः पाठः । यथा वा,—

"ज्योत्स्नाचयः पयःपूरस्तारकाः कैरवाणि च ।
राजति व्योमकासारराजहंसः सुधाकरः ॥" (ट)

अत्र व्योमकासारशब्दस्य समासे गुणीभावात्तदर्थस्य न सर्व्वैः संयोगः । विधेयाविमर्षे (ठ) यदेवाविमृष्टं तदेव दुष्टम् ।

---

यावत्, यत्र तस्य भावः तत्ता, समाप्तपुनरात्तता । उदाहरति, नाश्रयन्त इति ।—स्पष्टम् ।

(ञ) अभवन्मतसम्बन्धतामाह,—अभवन्—न सम्भवन्, मतः,—इष्टः, सम्बन्धः यत्र तत्ता । उदाहरति, येति ।—या मनोजस्य—कामस्य, जयश्रीः,—विजयलक्ष्मीः, यया जगत् अलङ्कृतं—भूषितं, यामेणाक्षीं—हरिणनयनां, विना मे—मम, प्राणाः विफलाः, अद्य सा कुतः,—कुत्र, विद्यते इति शेषः ।

(ट) ज्योत्स्नेति ।—ज्योत्स्नानां चयः,—राशिः, पयसां—जलानां, पूरः,—राशिः, तारकाः,—नक्षत्राणि, कैरवाणि—उत्पलानि च, व्योम—आकाशमेव, कासारः,—सरः, ("कासारः सरसी सरः" इत्यमरः) तस्य राजहंसः सुधाकरः,—चन्द्रः, राजति—शोभते ।

(ठ) अत्र वाक्यद्वये एव कासारशब्दस्य योगः कवेरभिमतः, स तावत् समभि-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इह तु प्रधानस्य कासारपदार्थस्य प्राधान्येनाप्रतीतेः सर्वोऽपि पयःपूरादिपदार्थस्तदङ्गतया न प्रतीयते, इति सर्व्ववाक्यार्थविरोधावभास इत्युभयोर्भेदः।

"अनेन छिन्दता मातुः कण्ठं परशुना तव।
बद्धस्पर्द्धः कृपाणोऽयं लज्जते मम भार्गव!॥" (ड)

अत्र "भार्गवनिन्दायां प्रयुक्तस्य मातृकण्ठछेदनकर्तृत्वस्य परशुना सह सम्बन्धो न युक्तः" इति प्राच्याः। "परशुनिन्दामुखेन भार्गवनिन्दाऽऽधिक्यमेव वैदग्ध्यं द्योतयति" इति आधुनिकाः।(ढ)

अक्रमता (ण) यथा,—

"समय एव करोति बलाबलं
प्रणिगदन्त इतीव शरीरिणाम्।

---

व्याहारविशेषरूपाकाङ्क्षाविरहात् न घटते इत्याह, अत्रेति।—गुणीभावात्—विशेषणत्वेन अन्वितया विशेषाभावात्, तदर्थस्य—कासारशब्दस्य, सर्वैः,—पयःपूरादिभिः। ["व्योम्नि सरसि" इति तु युक्तः पाठः]। विधेयाविमर्षस्य भेदं दर्शयति—विधेयेति।

(ड) अनेनेति।—परशुरामं प्रति रामस्योक्तिरियम्। हे भार्गव! मातुः कण्ठं छिन्दता अनेन तव परशुना बद्धस्पर्द्धः अयं मम कृपाणः,—चन्द्रहासाख्यः असिः, लज्जते।

(ढ) अत्र भार्गवनिन्दायामिति।—प्रतिपाद्यायामित्यर्थः, मातृकण्ठच्छेदनकर्तृत्वस्य इत्यत्र परशौ छेदनस्य करणत्वमेव, न तु कर्तृत्वम्; यद्वा,—परशौ मातुरित्यस्य सम्बन्धाभावात् अवशिष्टस्य सम्बन्धो न सम्भवति। प्राच्याः,—प्राचीनाः। आधुनिका इति।—अयमाशयः,—"तव" इत्यनुषक्तेन "मातुः" इत्यस्य सम्बन्धः, "स्थाली पचति" इतिवत् करणस्यापि कर्तृत्वारोपः; परशोरारोपितेनापि स्त्रीवधकर्तृत्वेन पातकं सम्भाव्यते, तव तु मुख्येनैव मातृवधकर्तृत्वेन सुतरामतिपातकमिति। अस्य शाब्दबोधविघटकत्वं दूषकताबीजम्।

(ण) अक्रमतामाह, अक्रमतेति।—अविद्यमानः स्वार्थान्वितार्थकपदप्रत्यासत्तिरूपः क्रमो यत्र तत्त्वमित्यर्थः। वाचकपदस्योत्क्रमाभावे अस्थानस्थपदत्वम्, इदन्तु तदितरपदस्यैव इति ततोऽस्य भेदः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शरदि हंसरवाः परुषीकृत-
स्वरमयूरमयू रमणीयताम्॥" (त)

अत्र परामृश्यमानवाक्यानन्तरमेव इति शब्दप्रयोगो युक्तः,(थ) न तु प्रणिगदन्त इत्यनन्तरम्। एवम्,—

"द्वयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया कपालिनः।
कला च सा कान्तिमती कलावतः
त्वमस्य लोकस्य च नेत्रकौमुदी॥" (द)

अत्र त्वमित्यनन्तरमेव चकारो युक्तः।

अमतपरार्थता यथा,—

"राममन्मथशरेणताड़िता—" इत्यादि। अत्र शृङ्गाररसस्य व्यञ्जको द्वितीयोऽर्थः प्रकृतरसविरोधित्वादनिष्टः। (ध)

---

(त) उदाहरति, समय इति।—समय एव शरीरिणां बलाबलं—सबलतां दुर्बलताञ्च, करोति—जनयति, इति प्रणिगदन्त इव—कथयन्त इव, शरदि—शरत्-काले, हंसानां रवाः, परुषीकृताः स्वरा येषां तादृशाः, मयूराः यत्र तत् यथा तथा, रमणीयतां—मनोज्ञताम्, अयुः,—प्राप्तवन्तः। वर्षासु मयूरनिस्वनस्य प्राशस्त्यं, शरत्सु, तेषां न तथा प्रादुर्भावः, तत्र हंसानामेवोत्सव इति प्रसिद्धेरिति भावः। द्रुतविलम्बितं वृत्तम्।

(थ) अत्रेति।—परामृश्यमानवाक्यस्य—समय एव करोति बलाबलमित्यस्य, अनन्तरमेव।

(द) उदाहरणान्तरं दर्शयति, द्वयमिति।—शिवप्राप्तये तपस्यन्तीं पार्व्वतीं प्रति ब्रह्मचारिरूपधारिणः शिवस्योक्तिरियम्। कलावतः,—चन्द्रस्य, कान्तिमती सा—प्रसिद्धा, कला—अंशविशेषः, ("कला तु षोड़शो भागः" इत्यमरः) अस्य लोकस्य—जगतः, नेत्रकौमुदी—नयनानन्ददायिनीति भावः, त्वञ्च एतत् द्वयं कपालिनः,—पिनाकिनः, गृहीतशवशिरसः हरस्य इति यावत्, समागमप्रार्थनया—संसर्गाभिलाषेण, शोचनीयतां गतं—प्राप्तम्। अस्य प्रत्यासत्तिकल्पनेन शाब्दबोध-विलम्बनं दूषकताबीजम्। वंशस्थविलं वृत्तम्।

(ध) अमतपरार्थतामाह, अमतेति।—अमतपरार्थता—अमतः,—प्रकृत-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वाच्यस्यानभिधानं यथा,—

"व्यतिक्रमलवं कं मे वीक्ष्य वामाक्षि ! कुप्यसि ।"

अत्र व्यतिक्रमलवमपीत्यपिरवश्यं वक्तव्यो नोक्तः। न्यूनपदत्वे वाचकपदस्यैव न्यूनता विवक्षिता, अपेस्तु न तथात्वमित्यनयोर्भेदः ; एवमन्यत्रापि । यथा वा,—

"चरणानतकान्तायास्तन्वि ! कोपस्तथाऽपि ते ।"

अत्र चरणानतकान्ताऽसि" इति वाच्यम् । (न)

भग्नप्रक्रमता यथा, (प)—

"एवमुक्तो मन्त्रिमुख्यै रावणः प्रत्यभाषत ।"

अत्र वचधातुना प्रक्रान्तं प्रतिवचनमपि तेनैव वक्तुमुचितम्; तेन "रावणः प्रत्यवोचत" इति पाठो युक्तः। एवञ्च सति न कथितपदत्वदोषः; तस्योद्देश्यप्रतिनिर्देश्यव्यतिरिक्तविषयकत्वात्। इह हि वचनप्रतिवचनयोरुद्देश्यप्रतिनिर्देश्यत्वम् । (फ) यथा,—

विरुद्धः, प्रकृतरसविरोधिरसव्यञ्जकः इत्यर्थः, अनभिमत इति यावत्, परार्थः,—श्लेषादिना व्यज्यमानः अन्यार्थः यत्र तत्त्वावस्त्वा । उदाहरति,—रामेति । अत्र प्रकृतरसस्य—बीभत्सस्य इत्यर्थः, विरोधित्वात्—विसंवादित्वात्, अनिष्टः,—असतः ।

(न) वाच्यस्यानभिधानमाह,—व्यतिक्रमेति । अपेस्तु इति ।—"उपसर्गाणां द्योतकत्वमेव न वाचकत्वम्" इति नियमादिति भावः । न्यूनपदत्वे वाचकत्वाविवक्षायां पुनरुक्तोदाहरणं तस्यैवेत्युदाहरणान्तरमाह,—चरणेति । अत्र चरणेति ।—तथापीत्यस्य भिन्नवाक्यार्थसापेक्षत्वादिति भावः । पूर्वत्र अपेरध्याहारेण शाब्दबोधविलम्बनम्, उत्तरत्र तथापीत्यन्वयेन शाब्दबोधविलम्बनं दूषकताबीजम् ।

(प) भग्नप्रक्रमतामाह, भग्नप्रक्रमतेति ।—भग्नः,—विच्छिन्नः, प्रक्रमः,—प्रस्तावो यस्य तस्य भावः, प्रस्तावश्चात्राकाङ्क्षितप्रकारकोऽर्थः, यद् येन प्रकारेण प्राङ्निर्दिष्टं, तस्य तत्प्रकारेणानुक्तिरेव भङ्गः ; तथा च, प्रत्युत्थिताकाङ्क्षाविषयीकृतेन प्रकारेण पश्चादनुक्तिः क्रमभङ्ग इति फलितम् ।

(फ) उदाहरति, एवमुक्त इति ।—अत्रैवमुक्त इति साकाङ्क्षवाक्येनोत्थापिता प्रतिवचनस्याकाङ्क्षा, सा च पूर्व्वोक्तशब्दविशिष्टस्यैव प्रतिवचनं विषयीकरोति ; अत्राकाङ्क्षितायाः वचधातुरूपप्रकृतेः प्रकारस्य भाषधातुनिर्देशात् भङ्गः इति सारः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"उदेति सविता ताम्रस्ताम्र एवास्तमेति च।
सम्पत्तौ च विपत्तौ च महतामेकरूपता॥"

इत्यत्र यदि पदान्तरेण स एवार्थः प्रतिपाद्यते, तदाऽन्योऽर्थः इव प्रतिभासमानः प्रतीतिं स्थगयति। (ब) यथा वा,—

तेनैवेति।—तेनैव—वचधातुनैव; तथा सति प्रथमोत्थापिताकाङ्क्षापूरणं भवतीति भावः। ननु "प्रत्यवोचत" इति पाठे कथितपदत्वदोषप्रसङ्गः? इत्यत आह, एवञ्च सतीति। एवञ्च सति—प्रत्यब्रोचत इति पाठे क्रतेऽपि सतीत्यर्थः, कथं न कथित-पदत्वदोष इत्यत आह, तस्येति।—तस्य—कथितपदद्वचस्य, उद्देश्यप्रतिनिर्द्देश्यत्वव्यति-रिक्तविषयकत्वात्—उद्देश्यः,—प्राक् प्रयुक्त एव, प्रतिनिर्द्देश्यः,—पुनः प्रयोज्यः यत्र तस्मात्, व्यतिरिक्तः,—भिन्नः, विषयः,—अर्थः, प्रतिपाद्य इति यावत्, यस्य तत्त्वात्। पूर्वापरयोः अभिन्नत्वप्रतिपादनाय यत्र प्राक् प्रयुज्यस्यार्थस्य तेन शब्देन तेनैव च प्रका-रेण पुनः प्रयोगस्य प्रयोजनीयता, तदितरस्थाने कथितपदत्वदोषः; अत्र तु भेदा-भावज्ञापनार्थं पुनः कथनं प्रकर्षावहम्। अयञ्चार्थः अग्रतः "उदेति" इत्यादिश्लोके स्पष्टीकृतः। तथा च,—उद्देश्यप्रतिनिर्देश्यभावे कथितपदत्वं गुण एव, न पुनर्दोषः; तदुक्तम्;—"प्रक्रमस्यान्यथाभावे स एव तु महान् गुणः" इति। चण्डीदासास्तु,— "उद्देश्यः,—अनूद्यः, स एव प्रतिनिर्देश्यः,—प्रतीतिमान्थर्य्यपरिहारार्थं पुनरभिधेयो यत्र स तथोक्तः" इत्याहुः। तेषामयमाशयः,—उद्देश्यपदं प्राङ्निर्दिष्टोद्देश्यविधेयान्य-तरपरम्; प्रतिनिर्द्देश्यपदञ्च चरमनिर्दिष्टोद्देश्यविधेयान्यतरपरम्; तथा सति सर्व्वं समञ्जसम्। अत्र प्रसङ्गतः उक्तस्य उद्देश्यप्रतिनिर्द्देश्यभावस्य भेदा अपि ज्ञातव्याः,— स च त्रिविधः,—एकविधेयार्थमुद्दिष्टस्य विधेयान्तरे प्रतिनिर्देशः १। एकोद्देशेन विहितस्य उद्देश्यान्तरे विधेयतया प्रतिनिर्देशः २। एकोद्देशेन विहितस्य विधेयान्तरे उद्देश्यतया प्रतिनिर्देशः ३। तत्र प्रतिलोमतन्त्रयुक्त्या आदौ प्रथममनुल्लिख्य द्वितीय-स्योदाहरणम् "एवमुक्त" इत्यादि श्लोके अनुसन्धेयम्। उक्तश्लोकस्य द्वितीयोद्देश्य-प्रतिनिर्देशत्वं बोधयितुमाह, इह हीति।—अत्रोदाहरणे रावणोद्देशेन विहितस्य वचनस्य उद्देश्यान्तरे मन्त्रिरूपे विधेयतया प्रतिवचनस्य निर्देश इति भावः। प्रति-वचनेऽपि वचनसत्त्वादेकत्वम्।

(ब) प्रथमोद्देश्यप्रतिनिर्द्देश्यभावे एकशब्दस्य पुनः प्रयोगे कथितपदत्वरूपदोषा-भावमुदाहरणप्रदर्शनेन प्रमाणयति, उदेतीति।—अत्रोदयकालीनताम्रत्वविधौ उद्दिष्टस्य सवितुः अस्तमयकालीनताम्रत्वविधावुद्देश्यतया प्रतिनिर्देशः इति न दोषः। ताम्र-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धञ्चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥"

अत्र "अस्मै" इति इदमा प्रक्रान्तस्य तेनैव, तत्समानाभ्यामेतददःशब्दाभ्यां वा परामर्शो युक्तः, न तच्छब्देन। (भ) यथा वा,—

"उदन्वच्छिन्ना भूः स च पतिरपां योजनशतम् ।" (म)

अत्र "मिता भूः पत्यापां स च पतिरपाम्" इति युक्तः पाठः । एवम्,—

"यशोऽधिगन्तुं सुखलिप्सया वा
मनुष्यसङ्ख्यामतिवर्त्तितुं वा ।
निरुत्सुकानामभियोगभाजां
समुत्सुकेवाङ्कमुपैति सिद्धिः ॥" (य)

---

पर्यायरक्तशब्ददाने भग्नप्रक्रमत्वं प्रदर्श्य तस्य दूषकताबीजं प्रदर्शयति,—इत्यवेति। यदीति।—पदान्तरेण—अन्येन तान्नभिन्नेन पदेन इत्यर्थः, प्रतिपाद्यते—उपस्थाप्यते। अन्योऽर्थ इवेति।—"न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते" इति नियमात् ताम्ररक्तशब्दरूपविशेषणभेदात् अन्यार्थवन्नासमानत्वं, तथा सति "सम्पत्तौ च विपत्तौ च महतामेकरूपता" इत्युत्तरार्द्धस्य शाब्दबोधविलम्बनमिति भावः। प्रतीतिं—बोधं, स्थगयति—तिरोदधाति।

(भ) सर्व्वनामपदस्य प्रक्रमभङ्गं दर्शयति, ते हिमालयमामन्त्र्येति।—यद्यपि सर्व्वनाम्ना प्रतिनिर्द्देशे दोषो नास्तीति प्रसिद्धं, तथाऽप्यनुभवबलेनासर्व्वनामनिर्दिष्टस्य सर्व्वनाम्ना प्रतिनिर्देशे तद्बोध्यं, सर्व्वनामनिर्द्दिष्टस्य नेति बोध्यम् । इदमा—इदं शब्देन। तेनैव—इदमैव। समानाभ्यां—समानार्थाभ्याम्। एतदादिशब्दत्रयस्य समानार्थकत्वं सुप्रसिद्धमिति शब्दभेदेऽपि न तु तद्दूषणावकाश इति भावः।

(म) उद्देश्यप्रतिनिर्देश्यभावस्य तृतीयं प्रकारं दर्शयति, उदन्वदिति।—उदन्वच्छिन्ना—समुद्रपरिच्छिन्ना इत्यर्थः। "मिता भूः पत्यापां स च पतिरपां योजनशतम्" इति, अत्र पृथिव्युद्देशेन विहितस्य अपां पत्युः योजनशतविधौ उद्देश्यतया प्रतिनिर्देशः।

(य) यश इति।—यशः अधिगन्तुं—लब्धुं, सुखलिप्सया—सुखलाभेच्छया, वा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र "सुखमीहितुम्" इत्युचितम्। अत्राद्ययोः प्रकृतिविषयः प्रक्रमभेदः। तृतीये पर्य्यायविषयः, चतुर्थे प्रत्ययविषयः; एवमन्यत्रापि। (र)

प्रसिद्धित्यागो यथा,—"घोरो वारिमुचां रवः।" अत्र मेघानां गर्जितमेव प्रसिद्धम्। (ल) यदाहुः,—

"मञ्जीरादिषु रणितप्रायं पक्षिषु तु कूजितप्रभृति।
स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम्॥"इत्यादि। (व)

मनुष्यसद्मां—मनुष्येषु गणनाम्, अतिवर्त्तितुम्—अतिक्रमितुं, वर निरुत्सुकानां—निरुद्वेगानाम्, अभियोगभाजां—यत्नवतां, सिद्धिः समुत्सुकेव—उत्कण्ठिता कामिनीव, अङ्कं—क्रोड़म्, उपैति—प्राप्नोति। अत्रेच्छार्थक"तुम्"प्रत्ययेनोपक्रमस्य तत्समानार्थकसन्प्रत्ययेन भङ्गः, यशोऽधिगमनोद्देशेन विहितायाः इच्छायाः सुखलोभोद्देशेनापि विधेयतया निर्देशः। किरातार्ज्जुनीयस्येदं पद्यम्। उपेन्द्रवज्रा वृत्तम्।

(र) दर्शितोदाहरणानां विशेषमाह, अत्राद्ययोरिति।—एषूदाहरणेषु आद्ययोः "एवमुक्तः" इति "ते हिमालयम्" इत्येतयोः। तृतीये "उदन्वच्छिन्ना" इत्यादौ। चतुर्थे "यशोऽधिगन्तुम्" इत्यादौ बोध्यम्। एवमन्यत्रेति।—कारकोपसर्गादौ अपि प्रक्रमभङ्गो बोद्धव्य इत्यर्थः। तत्र कारकविषयो यथा,—"गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताड़ितं छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु। विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले विश्रामं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः॥" अत्र प्रत्ययोक्तकर्त्तृकारकोपक्रमस्य क्रियतामित्यत्र भङ्गः, कर्म्मकारकस्योक्तत्वात्। परे तु कर्त्तृकारकाणां प्रथमोपक्रमस्य वराहपतिभिरिति तृतीयायां भेदः; "विस्रब्धा रचयन्तु शूकरवरा मुस्ताक्षतिं पल्वले" इति युक्तः पाठः। उपसर्गविषयो यथा,—"चपलाचपलास्वेव नापत्सु विकलो भवेत्। विपत्सु धीरता यस्य भाजनं स हि सम्पदः॥" चपलाचपलासु,—विद्युच्चञ्चलासु इत्यर्थः, अत्र "आपत्सु" इत्यत्र आङुपसर्गोपक्रमस्य "विपत्सु" इत्यत्र वैरूप्यादानाद्भङ्गः।

(ल) मेघानामिति।—मेघानां शब्दे गर्ज्जितमेव—गर्ज्जितादिशब्द एव। तत्परित्यागात् रसादिप्रकर्षबोधप्रतिरोधः इति बोध्यम्।

(व) प्रसिद्धमाह, मञ्जीरादिष्विति।—आदिना रसादीनां ग्रहणम्। रणितप्रायमित्यत्र प्रायशब्द आद्यर्थः, तेन शिञ्जितादीनां ग्रहणम्। मञ्जीरादिशब्देषु रणितादिशब्दः प्रयोक्तव्यः, एवमग्रेऽपि। मेघादिषु इति।—अत्रादिना हस्त्यादिपरिग्रहः।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अस्थानस्थपदता यथा,—

"तीर्थे तदीये गजसेतुबन्धात् प्रतीपगामुत्तरतोऽस्य गङ्गाम् ।
अयत्नबालव्यजनीबभूवुर्हंसा नभोलङ्घनलोलपक्षाः ॥" (श)

अत्र तदीयपदात् पूर्वं "गङ्गाम्" इत्यस्य पाठो युक्तः। एवं,—"हितान् न यः संशृणुते स किं प्रभुः।" अत्र "संशृणुते" इत्यतः पूर्वं नञः स्थितिरुचिता। अत्र च "पदमात्रस्यास्थाने निवेशेऽपि सर्व्वमेव वाक्यं विवक्षितार्थप्रत्यायने मन्थरम्" (ष) इति वाक्यदोषता। एवमन्यत्रापि।

इह केऽप्याहुः,—"पदशब्देन वाचक एव प्रयोगो निगद्यते, न च नञो वाचकता निर्व्विवादात् स्वातन्त्र्येणार्थबोधनविरहात्" इति। यथा "द्वयं गतम्" इत्यादौ "त्वम्" इत्यनन्तरं चकारानुपादानादक्रमता, तथाऽत्रापीति। (स)

---

प्रमुखमित्यनेन रसादिग्रहणम्। एवं भ्रमरादिषु गुञ्जितादि, मण्डूकादिषु रवादि, हयेषु ह्रेषितादि, हस्तिषु बृंहितादि ; एवमन्यदपि बोद्धव्यम्।

(श) अस्थानपदन्यासमुदाहरति, तीर्थे इति।—तदीये—तस्याः,—गङ्गायाः इदं तदीयं तस्मिन्, गङ्गासम्बन्धिनि इत्यर्थः, तीर्थे—जलावतारे, गजसेतुबन्धात्—हस्तिभिः सेतुं रचयित्वा इत्यर्थः, प्रतीपगां—प्रतिकूलगामिनीं, समुद्गतामित्यर्थः, गङ्गाम् उत्तरतः,—गङ्गाया अपरतीरं गन्तुमिच्छतः, अस्य—कुशस्य, नभसः,—आकाशस्य, लङ्घनाय लोलाः,—चपलाः, पक्षा येषां तथाभूताः, पक्षान् धूनयन्त इत्यर्थः, हंसाः अयत्नं यथा तथा अबालव्यजनानि बालव्यजनानि बभूवुः,—बालव्यजनकार्य्यं चक्रुरित्यर्थः। हस्तिसाधनेन गङ्गामुत्तर्त्तुमिच्छतः कुशस्य मस्तकोपरि उड्डीयमानबलाकाश्रेणीभिः तस्य चामरवीजनकार्य्यं निष्पन्नमिवेति भावः। उपजातिवृत्तम्।

(ष) ननु पदमात्रस्य अस्थानस्थितिः पददोष एव, कथमस्य वाक्यदोषत्वम्? अत आह, अत्र च पदमात्रस्येति।—सर्व्वपदमत्रावयवसमुदायपरम्। मन्थरं—विलम्बसहम्।

(स) नञ इति।—वाचकता—अर्थप्रतिपादकता, द्योतकतामात्रस्यैवेति भावः, निर्विवादात्—कस्यापि अस्मिन्नर्थे विवादो नास्तीति भावः, स्वातन्त्र्येण—स्वाधीनतया, पदान्तरसमभिव्याहारविरहेण इत्यर्थः, इति शब्दो हेतौ। अत्रापि—हितान् न यः संशृणुते इत्यत्रापीत्यर्थः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अस्थानस्थसमासता (ह) यथा,—

"अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोषनिःसरदलिश्रेणीकृपाणं शशी॥ (क)

अत्र कोपिन उक्तौ समासो न कृतः, कवेरुक्तौ कृतः। (ख)
वाक्यान्तरपदानां वाक्यान्तरेऽनुप्रवेशः सङ्कीर्णत्वम्। यथा,—

"मुञ्च चन्द्रं कुरङ्गाक्षि! पश्य मानं नभोऽङ्गने।"

अत्र नभोऽङ्गने चन्द्रं पश्य मानं मुञ्चेति युक्तम्। "क्लिष्टत्व-मेकवाक्यविषयम्" इत्यस्माद्भिन्नम्। (ग)

---

(ह) अस्थानस्थसमासतामाह, अस्थानेति।—रसगुणव्यञ्जकस्य समासस्य तद्रसाव्यञ्जकस्थानपातोऽस्थानस्थसमासता।

(क) तामुदाहरति, अद्यापीति।—एष मानः अद्यापि—इदानीमपि, ममोदयकालेऽपीत्यर्थः, सीमन्तिनीनां—नारीणां, स्तनौ एव शैलौ—पर्वतौ, स्तनशैलौ तावेव दुर्गे ताभ्यां विषमे—दुर्गमे इति भावः, हृदि स्थातुं वाञ्छति—अभिलषति, धिक्, समयान्तरे तु एतदन्तराले वर्त्ततां, तत्र न मे कोऽपि आक्रोशः, मदुदये सत्यपि यदत्र स्थातुमभिलषति, तन्मां धिक् इति भावः, इति क्रोधादिव आलोहितः,—रक्तवर्णः, असौ शशी—चन्द्रः, प्रोद्यन्,—प्रकर्षेण उदयं गच्छन्, दूरतरं प्रसारिताः कराः,—किरणाः हस्ताश्च यस्य, ("बलिहस्तांशवः कराः" इत्यमरः) तादृशः सन्, तत्क्षणात् फुल्लतां—विकसतां, कैरवाणाम्—उत्पलानां, कोषेभ्यः निःसरन्ती—निर्गच्छन्ती, या अलीनां—भ्रमराणां, श्रेणी, तद्रूपं कृपाणम्—असिं, कर्षति—आकर्षति। [कोषपदश्लेषात् कुड्मलस्य खड्गपिधानत्वं व्यङ्ग्यम्]। शार्दूलविक्रीड़ितं वृत्तम्।

(ख) अत्रेति।—कोपिनः,—क्रुद्धस्य, चन्द्रस्य इति यावत्, उक्तौ—वाक्ये, अद्यापीत्यादिधिक्पर्य्यन्तायामित्यर्थः। कवेरुक्तौ—इतीत्यादिशशीत्यन्तायामित्यर्थः।

(ग) सङ्कीर्णत्वमुदाहरति, मुञ्चेति।—नन्वत्र व्यवहितान्वयत्वात् क्लिष्टत्वमेवेदम् इत्यत आह, क्लिष्टत्वमिति।—सङ्कीर्णत्वन्तु वाक्यद्वयविषयम्, इत्यस्मात्—सङ्कीर्णात्, तस्य भेदः इत्यर्थः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वाक्यान्तरे वाक्यान्तरानुप्रवेशो गर्भितता । यथा,—

"रमणे चरणप्रान्ते प्रणतिप्रवणेऽधुना ।
वदामि सखि ! ते तत्त्वं कदाचिन्नोचिताः क्रुधः ॥" (घ)

अर्थदोषानाह,—

अपुष्टदुष्क्रमग्राम्यव्याहताश्लीलकष्टताः ।
अनवीकृतनिर्हेतुप्रकाशितविरुद्धताः ॥
सन्दिग्धपुनरुक्तत्वे ख्यातिविद्याविरुद्धते ।
साकाङ्क्षता सहचरभिन्नताऽस्थानयुक्तता ॥
अविशेषे विशेषश्चानियमे नियमस्तथा ।
तयोर्विपर्य्ययो विध्यनुवादायुक्तते तथा ॥
निर्मुक्तपुनरुक्तत्वमर्थदोषाः प्रकीर्त्तिताः ॥५९६॥ (ङ)

तद्विपर्य्ययः,—विशेषेऽविशेषो नियमेऽनियमः ।

---

(घ) गर्भिततामुदाहरति, रमणे इति ।—हे सखि ! रमणे—कान्ते, चरणप्रान्ते प्रणतिप्रवणे—प्रणामपरायणे, अधुना कदाचित् अपि क्रुधः,—कोपाः, न उचिताः, इति ते—तुभ्यं, तत्त्वं—याथार्थ्यं, ब्रवीमि । अत्र प्रथमद्वितीयचतुर्थचरणस्थितैकवाक्ये तृतीयचरणरूपवाक्यप्रवेशः ।

(ङ) अर्थदोषानाह, अपुष्टेति ।—भावप्रत्ययः प्रत्येकमभिसम्बध्यते । तथा च,—अपुष्टता, दुष्क्रमता, ग्राम्यता, व्याहतता, अश्लीलता, कष्टता, अनवीकृतता, निर्हेतुता, प्रकाशितविरुद्धता, सन्दिग्धत्वं, पुनरुक्तत्वं, ख्यातिविरुद्धता, विद्याविरुद्धता, साकाङ्क्षता, सहचरभिन्नता, अस्थानयुक्तता, अविशेषे विशेषार्थता, अनियमे नियमार्थता, विशेषे अविशेषार्थता, नियमे अनियमार्थता, विध्ययुक्तता, अनुवादायुक्तता, निर्मुक्तपुनरुक्तत्वं चेत्येते त्रयोविंशतिसङ्ख्यका अर्थदोषाः । तत्र सन्दिग्धार्थत्वं, कष्टार्थत्वम्, अश्लीलार्थत्वं, ग्राम्यार्थत्वं, निर्हेत्वर्थत्वं, ख्यातिविरुद्धार्थत्वं, पुनरुक्तार्थत्वं चेत्यत्र सप्ताऽनित्या दोषाः, अन्ये पुनः षोड़श दोषा नित्याः । एषां चार्थनिष्ठत्वं शब्दपरिवृत्तावपि अर्थपरिवृत्तिपर्य्यन्तस्थायित्वेनेति बोध्यम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र अपुष्टत्वं—मुख्यानुपकारित्वम्। यथा,—

"विलोक्य वितते व्योम्नि विधुं मुञ्च रुषं प्रिये।"

अत्र विततशब्दो मानत्यागं प्रति न किञ्चिदुपकुरुते। अधिकपदत्वे पदार्थान्वयप्रतीतेः समकालमेव बाधप्रतिभासः, इह तु पश्चादिति विशेषः। (च)

दुष्क्रमता यथा,—

"देहि मे वाजिनं राजन्! गजेन्द्रं वा मदालसम्॥"

अत्र गजेन्द्रस्य प्रथमं याचनमुचितम्। (छ)

"स्वपिहि त्वं समीपे मे स्वपिम्येवाधुना प्रिय!।" (ज)

अत्रार्थो ग्राम्यः।

---

(च) अपुष्टत्वमाह, अत्रेति।—मुख्यानुपकारित्वं—मुख्यस्य—प्रतिपाद्यस्य, विशेषणादीनां पर्य्यवसितार्थादुत्कर्षस्येत्यर्थः, अनुपयोगित्वम्। विततशब्द इति।—स्वार्थबोधद्वारेति शेषः; एतदुपलक्षणं, व्योमवृत्तित्वमपि विशेषणमपुष्टम्; उद्दीपकत्वेन प्रसिद्धस्य चन्द्रस्य दर्शनमेव मानत्यागस्य मुख्यार्थस्य उपकारि, न तु तस्य व्योमवृत्तित्वं व्योम्नो विततत्वं वा; ननु एवं पदद्वयमत्राधिकमित्यधिकपदत्वमेवात्र दोषः, किमपुष्टत्वस्य दोषत्वस्वीकारेण? इत्यतोऽस्य भेदं दर्शयति, अधिकेति।—बाधप्रतिभासः,—मुख्यार्थोपकारविरहप्रत्ययः इति सारः।

(छ) दुष्क्रमतामाह, दुष्क्रमतेति।—दुष्क्रमता—अर्थस्य क्रमविपर्य्यासः, "प्राग्वाच्य उच्यते पश्चात् पश्चाद्वाच्योऽथवाऽग्रतः। कविना शक्तिवैकल्याद् योऽर्थस्तं दुष्क्रमं विदुः॥" इति लक्षणात्। अक्रमतायां यथाक्रमेण पदस्य न्यासराहित्यम्, इह तु अर्थस्येति भेदो बोध्यः। उदाहरति, देहीति।—प्रथमं बहुमूल्यं वस्तु लोकैः प्रार्थ्यते, तदप्राप्तौ स्वल्पमूल्यमिति नियमः प्रचलति, अत्र स्वल्पमूल्यं वस्तु प्रथमं याच्यते, ततो बहुमूल्यं वस्तु इति याचनक्रमवैपरीत्यात् दुष्क्रमत्वम्। अनयोरर्थस्यापुष्टत्वदुष्क्रमत्वप्रतिसन्धानेन रसादिप्रतीतिविलम्बनमेव दूषकताबीजम्।

(ज) ग्राम्यत्वमुदाहरति, स्वपिहीति।—कान्तादिषु वैदग्ध्यचेष्टितेन स्वेच्छाप्रकटनं सभ्यानां प्रसिद्धं, तदन्यथाप्रवर्त्तनं ग्राम्यत्वम्। "स ग्राम्यः स्वरिरंसायां पामरैर्यत्र कथ्यते। वैदग्ध्यविक्रमलयं हित्वैव वनितादिषु॥" लयः,—सम्बन्धः; इत्युक्तलक्षणात्। अत्रोदाहरणे "स्वपिहि स्वपिमि" इति पदद्वयप्रयोगो वैदग्ध्यरहित एवेति ग्राम्यत्वमिति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कस्यचित् प्रागुत्कर्षमपकर्षं वा अभिधाय पश्चात्तदन्यप्रतिपादनं व्याहतत्वम्। (झ) यथा,—

"हरन्ति हृदयं यूनां न नवेन्दुकलाऽऽदयः।
वीक्ष्यते यैरियं तन्वी लोकलोचनचन्द्रिका॥" (ञ)

अत्र येषामिन्दुकला न आनन्दहेतुस्तेषामेवानन्दाय तन्व्याश्चन्द्रिकात्वारोपः।

"हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः।
यथाऽऽशु जायते पातो न तथा पुनरुन्नतिः॥" (ट)

अत्र अर्थोऽश्लीलः। (ठ)

---

(झ) व्याहतत्वमाह, कस्यचिदिति।—प्रतिपादितोत्कर्षस्यापकर्षप्रतिपादनं प्रतिपादितापकर्षस्योत्कर्षप्रतिपादनं व्याहतत्वम् इत्यर्थः। तत्र प्रथमं यथा,—"कान्ते! तव मुखाम्भोजं सुतरां हृदयङ्गमम्। जितानि येन पद्मानि वसन्ति सलिले सदा॥" अत्र मुखे पद्मत्वारोपणेनोत्कर्षकथनं, पश्चान्मुखेन पराभवादपकर्षकथनम् इत्याशयः।

(ञ) द्वितीयमुदाहरति, हरन्तीति।—नवेन्दुकलादयः यूनां—तरुणानां, हृदयं न हरन्ति—न आकर्षन्ति, यैः,—युवभिः, लोकानां लोचनचन्द्रिका—नयनज्योत्स्ना, नेत्रानन्दविधायिनीत्यर्थः, इयं तन्वी—कृशाङ्गी, वीक्ष्यते—दृश्यते। अत्र इन्दुकलादीनामपकर्षमुक्त्वा पश्चात् नायिकायाः उत्कर्षार्थं चन्द्रकलाकिरणरूपचन्द्रिकात्वारोपेण उत्कर्षोऽभिहित इति बोध्यम्।

(ट) अश्लीलत्वमाह, हन्तुमिति।—हन्तुं—विनाशयितुं, शत्रूनिति शेषः, प्रवृत्तस्य—अभिलषतः, किन्तु स्तब्धस्य—निश्चलस्य, अस्त्रक्षेपणकुण्ठस्य, विवेकरहितस्य वेति यावत्, विवरैषिणः,—परच्छिद्रान्वेषणतत्परस्य, यथा आशु—शीघ्रं, पातः,—पतनम्, अभिभव इत्यर्थः, जायते, तथा पुनः उन्नतिः,—जयः, न, भवतीति शेषः। अर्थान्तरन्तु,—हन्तुं—प्रवेष्टुमित्यर्थः, [हननं—वात्स्यायनादिप्रसिद्धं निर्घातादि वा] प्रवृत्तस्य—उद्यतस्य, स्तब्धस्य—दृढ़स्थितस्य, अदृढ़लिङ्गस्य वा, विवरं—योनिच्छिद्रम्, इच्छतीति तथोक्तस्य, तद्गामिन इत्यर्थः, लिङ्गस्येति शेषः, यथा आशु—शीघ्रं, पातः,—रेतःस्खलनेन नम्रता इति भावः, तथा पुनः आशु—शीघ्रम्, उन्नतिः,—पुनरुद्गमः, न, भवतीति शेषः।

(ठ) अत्र प्रकरणे योद्धृरूपार्थप्रतीतिसमकालमेव स्तब्धलिङ्गरूपस्य अदृढ़लिङ्ग-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"वर्षत्येतदहःपतिर्न तु घनो धामस्थमच्छं पयः
सत्यं सा सवितुः सुता सुरसरित्पूरो यया प्लावितः।
व्यासस्योक्तिषु विश्वसित्यपि न कः श्रद्धा न कस्य श्रुतौ ?
न प्रत्येति तथाऽपि मुग्धहरिणी भास्वन्मरीचिष्वपः॥"(ड)

अत्र यस्मात् सूर्य्याद् वृष्टेर्यमुनायाश्च प्रभवस्तस्मात्तयोर्जलमपि सूर्य्यप्रभवम्; ततश्च सूर्य्यमरीचीनां जलप्रत्ययहेतुत्वमुचितम्। तथाऽपि मृगी भ्रान्तत्वात्तत्र जलप्रत्ययं न करोति,

---

रूपस्य वा द्वितीयार्थस्य अर्थवशात् प्रतीतेरर्थस्य सहृदयहृदये लज्जाऽऽधायकतया अश्लीलार्थत्वं दोषः, पुंव्यञ्जकप्रकाशकत्वादिति भावः। इदं व्रीडाव्यञ्जकं, जुगुप्साऽमङ्गलव्यञ्जकयोरुदाहरणमूह्यम्।

(ड) कष्टत्वमुदाहरति, वर्षतीति।—अहःपतिः,—सूर्य्यः, एतत् धामस्थं—निजकिरणस्थं, चन्द्रमण्डलस्थं वा, अच्छं—निर्म्मलं, पयः,—जलं, वर्षति, न तु घनः,—मेघः, वर्षणकर्त्तृत्वं सूर्य्यस्य, घनस्य तु आधारत्वमात्रमिति भावः, "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा॥" इति स्मृतेः। सा—यमुना इत्याशयः, सवितुः,—सूर्य्यस्य, सुता—पुत्री सत्यं, यया—यमुनया, सुरसरित्पूरः,—गङ्गाप्रवाहः, प्लावितः,—परिवर्द्धितः इति यावत्, (तथा च विष्णुपुराणे,—"सूर्य्यस्य पत्नी संज्ञाऽभूत् तनया विश्वकर्म्मणः। मनुर्यमो यमी चैव तदपत्यानि वै मुने!॥" यमी—यमुना इत्यर्थः) व्यासस्य—द्वैपायनस्य, उक्तिषु—वचनेषु, पुराणरूपेषु इत्यर्थः, को जनः न विश्वसिति? कस्य वा जनस्य श्रुतौ—वेदशास्त्रे, न श्रद्धा? अपि तु सर्व एव पुराणेषु श्रुतिषु च विश्वसितीत्यर्थः; सूर्य्यस्य जलकर्त्तृत्वं पुराणेषु वेदेषु च प्रसिद्धमिति भावः। तथाऽपि—तादृशप्रमाणसद्भावेऽपीत्यर्थः, मुग्धहरिणी—भ्रान्ता हरिणी, भास्वतः,—सूर्य्यस्य, मरीचिषु—किरणेषु, (तथा च विष्णुपुराणम्;—"विवस्वानष्टभिर्मासैरादायापो रसात्मिकाः। वर्षत्यम्बु ततस्तस्मादन्नादप्यखिलं जगत्॥ विवस्वानंशुभिस्तीक्ष्णैरादाय जगतो जलम्। सोमं पुष्यत्यथेन्दुश्च वायुनाड़ीमयैर्दिवि॥ नालैर्विक्षिपतेऽभ्रेषु धूमाग्न्यनिलमूर्त्तिषु। न भ्रश्यन्ति ततस्तेभ्यो जलान्यभ्राणि तान्यतः॥ अभ्रस्थाः प्रपतन्त्यापो वायुना समुदीरिताः। संस्कारं कालजनितं मैत्रमासाद्य निर्म्मलाः॥" इति) अपः,—जलानि, न प्रत्येति—न विश्वसिति। अत्रासत्यादिसत्त्वेऽपि क्लिष्टत्वबोधो अत्र कष्टत्वम्। शार्दूलविक्रीडितं वृत्तम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अयमप्रस्तुतोऽप्यर्थो दुर्बोधः, दूरे च अस्मात् प्रस्तुतार्थबोध इति कष्टार्थत्वम्। (ढ)

"सदा चरति खे भानुः सदा वहति मारुतः।
सदा धत्ते भुवं शेषः सदा धीरोऽविकत्थनः॥" (ण)

अत्र सदेत्यनवीकृतत्वम्। अत्र अस्य पदस्य पर्य्यायान्तरेण उपादानेऽपि यदि नान्यद्विच्छित्त्यन्तरं तदाऽस्य दोषस्य सद्भावः, इति कथितपदत्वाद्भेदः। (त) नवीकृतत्वं यथा, (थ)—

"भानुः सकृद्युक्ततुरङ्ग एव, रात्रिन्दिवं गन्धवहः प्रयाति।
बिभर्त्ति शेषः सततं धरित्रीं, षष्ठांशवृत्तेरपि धर्म्म एषः॥"(द)

---

(ढ) कष्टत्वमुपपादयति, अत्रेति।—प्रभवः,—उत्पत्तिः, तयोः,—दृष्टियमुनयोरित्यर्थः। अप्रस्तुतः,—अप्रकृतः। अस्मात्—अप्रस्तुतार्थात्, प्रस्तुतस्य अर्थस्य—मुग्धनायिकायाः नायकसकाशात् अभीष्टलाभाप्रत्ययरूपस्य, बोध इति कष्टार्थत्वम्—अर्थस्य प्रणिधानेन विलम्बबोध्यत्वमित्यर्थः। अयं भावः,—"वर्षत्येतत्" इत्यादौ "तथापि मुग्धहरिणी न प्रत्येति" इति वाक्यार्थस्तु तात्पर्य्यवशादवगतेर्दुर्बोधः; स चात्र अप्रस्तुतः, तात्पर्य्यस्य ग्राहकाभावात् विलम्बबुद्ध्य एव। अस्माच्च बोद्धव्यमुग्धनायिकाया नायकसकाशादभीष्टप्राप्त्यभावस्वरूपः प्रस्तुतोऽर्थः अतीव वक्तृविशेषगवेषणापेक्षी इत्यर्थस्य दुर्बोध्यतया शाब्दबोधबाधनं दूषकताबीजमिति कष्टार्थत्वम्।

(ण) अनवीकृततामुदाहरति, सदेति।—अविकत्थनः,—अनात्मश्लाघाकरः।

(त) अनवीकृतत्वम्—अनूतनीकृतत्वं, बहुशः प्रतिपादनीयार्थस्य प्रकारपरावृत्तिं विना एकेनैव प्रकारेण पुनःपुनरर्थस्य वचनमित्यर्थः। अत्रैकेन सदाशब्देन बहुशः प्रतिपादनीयोऽर्थः पुरातनवस्तुसमानो रसादेरपकर्षकः। ननु कथितपदत्वादस्य को भेदः? इत्यत आह, अत्रास्येति।—अस्य—अनवीकृतार्थबोधकस्य, उपादानेऽपीत्यपिना तच्छब्दोपादाने च, अन्यत्—पूर्व्वपदविभक्तिसमासादिप्रतिपादितभिन्नं, विच्छित्त्यन्तरं—विभक्तिसमासादिप्रतिपादितार्थविशेषः, अस्य—अनवीकृतत्वस्य, तथा चोक्तविच्छित्तिविशेषसद्भावे एव कथितपदत्वदोषः।

(थ) नवीकृतत्वग्रहं विना अनवीकृतत्वप्रतीतिर्न जायते इति नवीकृतत्वमाह, नवीकृतत्वमिति।—भङ्ग्यन्तरेण प्रतिपादने नूतनवस्तुसमानमित्यर्थः।

(द) भानुरिति।—भानुः,—सूर्य्यः, सकृत्—एकवारं, युक्ततुरङ्गः,—रथे

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"गृहीतं येनासीः परिभवभयान्नोचितमपि,
प्रभावाद् यस्याभून्न खलु तव कश्चिन्न विषयः।
परित्यक्तं तेन त्वमपि सुतशोकान्न तु भयाद्
विमोच्ये शस्त्र! त्वामहमपि यतः स्वस्ति भवते॥" (घ)

अत्र द्वितीयशस्त्रमोचने हेतुर्नोक्त इति निर्हेतुत्वम्। (न)

"कुमारस्ते नराधीश! श्रियं समधिगच्छतु॥"

अत्र "त्वं म्रियस्व" इति विरुद्धार्थप्रकाशनात् प्रकाशित-विरुद्धत्वम्। (प)

तुरङ्गान् योजयित्वा, धमितुं प्रवृत्त एव, न तु कदाचित् तस्य विश्राम इति भावः, गन्धवहः,—वायुः, रात्रिन्दिवं—निरन्तरं, प्रयाति—वहति, न कदाचित् विरमतीति भावः, शेषः,—अनन्तनागः, धरित्रीं—पृथ्वीं, सततं बिभर्त्ति—धत्ते, न तु कदाचित् त्यजतीति भावः, षष्ठांशः,—धान्यादीनामुत्पन्नवस्तूनामिति भावः, वृत्तिः,—जीवनोपायः, यस्य तथोक्तस्य, प्रजाभ्यः कररूपेण षष्ठांशं गृहीत्वा जीवतः इत्यर्थः, राज्ञः इति शेषः, अपि एषः,—सदा कार्य्यदर्शनरूपः, धर्म्मः। अभिज्ञानशकुन्तलस्येदं पद्यम्। उपजातिः वृत्तम्।

(घ) निर्हेतुतामुदाहरति, गृहीतमिति।—कर्णं प्रति कोपात् त्यज्यमानं शस्त्रं लक्षीकृत्य अश्वत्थाम्नः सवैराग्यं कथनम्। हे शस्त्र! येन—मम पित्रा इत्यर्थः, परिभवभयात्—परधर्षणत्रासात्, नोचितं—ब्राह्मणानां शस्त्रग्रहणस्य निषिद्धत्वात् अनुचितग्रहणमपीत्यर्थः, त्वं गृहीतम् आसीः,—अभवः, यस्य—मत्पितुः, प्रभावात् तव कश्चित्—कोऽपि जन इत्यर्थः, विषयः,—लक्ष्यीभूतः, न अभूत् इति न, मत्पिता त्वां बहुषु लक्ष्येषु प्रयुक्तवानिति भावः; तेन—मत्पित्रा द्रोणेनापि, सुतशोकात्—अलीकपुत्रशोकं प्राप्येत्यर्थः, न तु भयात्, शत्रुभ्य इति शेषः, त्वं परित्यक्तम्, अहमपि त्वां विमोच्ये—त्यक्ष्यामि, यतः—गच्छते, मत्सकाशादिति भावः, ["यतः" इति पाठे,—यतो मोचणादित्यर्थः] भवते—तुभ्यं, स्वस्ति—शुभमस्तु इत्यर्थः। अत्र हेतोरप्रसिद्धत्वेनाकाङ्क्षा। शिखरिणी वृत्तम्। वेणीसंहारस्येदं पद्यम्।

(न) अत्रेति।—द्वितीयशस्त्रमोचने, अश्वत्थामकर्त्तृके इति शेषः, हेतुः,—कारणम्, आकाङ्क्षित इति भावः। निर्हेतुत्वं—हेत्वाकाङ्क्षासत्त्वे तदनभिधानं तत्त्वम् इत्यर्थः।

(प) प्रकाशितविरुद्धतामाह, कुमार इति।—हे नराधीश!—नृपते! ते—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"अचला अबला वा स्युः सेव्या ब्रूत मनीषिणः ! ॥

अत्र प्रकरणाभावाच्छान्तशृङ्गारिणोः (फ) को वक्तेति निश्चयाभावात् सन्दिग्धत्वम्।

"सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥" (ब)

अत्र द्वितीयार्द्धं व्यतिरेकेण द्वितीयपादस्यैवार्थः (भ) इति पुनरुक्तता।

प्रसिद्धिविरुद्धता यथा,—

"ततश्चचार समरे शितशूलधरो हरिः।"

अत्र हरेः शूलं लोकेऽप्रसिद्धम्।

---

तथ, कुमारः श्रियं—राजलक्ष्मीं, समधिगच्छतु—प्राप्नोतु। प्रकाशितेति।—प्रकाशितं—प्रकटितं, प्रणिधानेन व्यक्तीकृतमिति यावत्, विरुद्धं—प्रकृतस्य राज्ञो मङ्गलरूपस्य विपरीतम्, अमङ्गलरूपं मरणमिति भावः, तस्य भावस्तत्त्वम्।

(फ) सन्दिग्धत्वमुदाहरति, अचला इति।—हे मनीषिणः!—विद्वांसः! अचलाः,—पर्वताः, वा अबलाः,—कामिन्यः, सेव्याः,—सेवनीयाः, स्युः,—भवेयुः, पर्वतमाश्रित्य तपश्चरणं कर्त्तव्यम्, उत कान्तासम्भोगः कर्त्तव्यः ? इति भावः। ब्रूत—कथयत, यूयमिति शेषः। अत्र अचलसेवनस्य वक्तुरभिप्रेतत्वे शान्तो रसः, तथा अबलासेवनस्य वक्तुरभिप्रेतत्वे शृङ्गारः व्यज्यते, अनयोरेकतरस्मिन् तात्पर्य्यनिश्चयाभावात् रसनिश्चयाभावेन सामाजिकानां रसप्रतीतिप्रतिबन्धः, इत्यस्य दोषत्वं बोध्यम्। शान्तशृङ्गारिणोः इति।—[ निर्द्धारणे षष्ठी सप्तमी वा ]।

(ब) पुनरुक्तत्वमुदाहरति, सहसेति।—सहसा—अविविच्येत्यर्थः, क्रियां—कार्य्यं, न विदधीत—न कुर्य्यात्, अविवेकः,—अविमृश्यकारित्वमित्यर्थः, परम् आपदां पदं—स्थानं, कारणमिति यावत्, भवतीति शेषः ; सम्पदः,—समृद्धयः, गुणलुब्धाः,—गुणाकृष्टा इति भावः, सत्यः स्वयमेव विमृश्यकारिणं—विवेकिनं, हि—निश्चितं, वृणते—आश्रयन्तीत्यर्थः। किरातार्ज्जुनीयस्येदं पद्यम्।

(भ) अत्र द्वितीयार्द्धं—द्वितीयार्द्धस्थितार्थः इत्यर्थः, व्यतिरेकेण—विपर्य्यासेन, द्वितीयपादस्य—"अविवेकः परमापदां पदम्" इत्यस्यैव, अर्थः। यथा,—"धर्म्मः सुखसाधनम्" इत्युक्तौ अधर्म्मस्य दुःखसाधनत्वमर्थादुपलभ्यते, तथाऽत्रापीति बोध्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा वा,—"पादाघातादशोकस्ते सञ्जाताङ्कुरकण्टकः ॥"

अत्र पादाघातादशोकेषु पुष्पमेव जायते इति प्रसिद्धं, न तु अङ्कुर इति कविसमयख्यातिविरुद्धता । (म)

"अधरे करजक्षतं मृगाक्ष्याः ।"

अत्र शृङ्गारशास्त्रविरुद्धत्वाद्विद्याविरुद्धता (य) । एवमन्यशास्त्रविरुद्धत्वमपि ।

"ऐशस्य धनुषो भङ्गं क्षत्रस्य च समुन्नतिम् ।
स्त्रीरत्नञ्च कथं नाम मृष्यते भार्गवोऽधुना ? ॥" (र)

अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षता । (ल)

---

(म) ख्यातिविरुद्धतामुदाहरति, प्रसिद्धेति ।—प्रसिद्धेः,—ख्यातेः, विरुद्धता—लोककविसम्प्रदायवैपरीत्यम् । शितेति ।—शाणितेत्यर्थः । अत्र "शितशूलधरो हरिः" इत्युक्ते सामाजिकानां शूलशब्दार्थसंशयेन प्रथमं तावत् अर्थावबोधवैकल्यात् वीररसस्य साक्षादप्रतिबन्धः, इत्यस्य दोषत्वं बोध्यम् । पादेति ।—ते—तव, कामिन्या इत्यर्थः । अङ्कुर एव कण्टकः,—रोमोद्गमः । कविसमयेति ।—कवीनां समयः,—नियमः, कविसम्प्रदायसिद्धान्त इति भावः, तत्र या ख्यातिः,—प्रसिद्धिः, तद्विरुद्धता—तद्वैपरीत्यं, कविसमयप्रसिद्धिश्च वक्ष्यमाणा बोद्धव्या ।

(य) विद्याविरुद्धतामुदाहरति, अधरे इति ।—करजक्षतं—करेषु जायन्ते इति करजाः,—नखाः, तैः क्षतं, नखाघात इत्यर्थः । शृङ्गारेति ।—शृङ्गारशास्त्रे हि स्तनयोर्नखाघातः प्रसिद्धः, न तु अधरे, अत तद्विपर्य्यासात् विद्यायाः,—शास्त्रस्य, विरुद्धता—वैपरीत्यम् ।

(र) साकाङ्क्षतामुदाहरति, ऐशस्येति ।—भार्गवः,—भृगुनन्दनः परशुरामः, अधुना—इदानीम्, ऐशस्य धनुषः,—हरकार्मुकस्य, भङ्गं क्षत्रस्य—क्षत्रियजातेः, समुन्नतिञ्च, तथा स्त्रीरत्नं—सीतामित्यर्थः, कथं नाम मृष्यते ?—सहते ?

(ल) अत्र ऐशधनुर्भङ्गस्य क्षत्रोन्नतेश्च द्वेष्यत्वात् असह्यता, स्त्रीरत्नस्य तु न द्वेष्यत्वम् अतस्तदुपेक्षणस्यैव असह्यत्वाकाङ्क्षा इत्यत आह, उपेक्षितुमिति ।—ननु न्यूनपदत्वादस्य को विशेषः ? इति चेत्, तत्र शब्दाध्याहारः, इह त्वर्थाध्याहारः इति विशेषः ; वस्तुतस्तु,—अनन्वयित्वभमेण प्रयुक्तस्य पदार्थस्य अनुपपत्तिपदार्थसाकाङ्क्षत्वं तत्त्वम् ; न्यूनपदे तु नेदृशो भ्रमः इति सङ्क्षेपः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"सज्जनो दुर्गती मग्नः कामिनी गलितस्तनी।
खलः पूज्यः समज्यायां तापाय मम चेतसः॥" (व)

अत्र सज्जनः कामिनी च शोभनी, तत्सहचरः खलोऽशोभनः इति सहचरभिन्नत्वम्। (श)

"आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी।
उत्पत्तिर्द्रुहिणान्वये, च तदहो! नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः, क्व नु पुनः सर्व्वत्र सर्व्वे गुणाः?॥"(ष)

(व) उत्कृष्टैः सह निकृष्टस्य, निकृष्टैः सहोत्कृष्टस्य चैकान्वयित्वेन निर्देशरूपां सहचरभिन्नतामुदाहर्त्तुं प्राक् आद्यामाह, सज्जन इति।—समज्यायां—सभायाम्।

(श) अत्रेति।—सहचरभिन्नत्वम्—उत्कृष्टेन सह उत्कृष्टस्य ग्रथनम्, अपकृष्टेन सह अपकृष्टस्य ग्रथनञ्च उचितम्, उत्कृष्टापकृष्टयोरेकत्र इति नियमवैपरीत्यम्। तथा कृते सहृदयमनसि वैरस्यभावोदयेन रसास्वादापकर्षः स्यादिति बोध्यम्। द्वितीया यथा,—"दुष्टसङ्गेन दौःशील्यं व्यसनेन तथा विपत्। अपथ्यचर्य्यया व्याधिर्विद्याऽभ्यासेन वर्द्धते॥" तत्र दौःशील्यविपद्व्याधयो हेयत्वान्निकृष्टाः, विद्या उपादेयत्वादुत्कृष्टा इति भावः।

(ष) अस्थानयुक्ततामुदाहर्त्तुमाह, आज्ञेति।—तत्र अनुपयुक्तस्थाने समापितवाक्यार्थत्वम् अस्थानयुक्तता; तच्च द्विविधम्;—वाक्यार्थस्याधिकोपयोगि समापनं, समापनोपयोगि चाधिक्यम्। तदुक्तम्;—"युक्ताधिक्ये विसर्गः स्याद्वाधिक्यञ्च समापने। अर्थे प्रकल्पिते यत्र सोऽस्थाने स्यात् समुज्झितः॥" इति। तत्राद्या यथा,—"मातुलो माधवो यस्य पिता यस्य धनञ्जयः। स शेते समरे श्रीमानभिमन्युर्महाबलः॥" अत्र "नियतिः केन बाध्यते" इत्यधिकं वक्तुं योग्यम्। द्वितीयामुदाहरति, आज्ञेति।—बालरामायणे रावणपुरोहितेन रावणार्थं सीताप्रार्थने कृते जनकपुरोहितस्य शतानन्दस्य रावणस्य प्रशंसापूर्व्वकमुपेक्षाबीजप्रदर्शनोक्तिरियम्। आज्ञा—आदेशः, शक्रस्य—इन्द्रस्य, शिखायां यः मणिः,—किरीटस्थं रत्नमित्यर्थः, तस्य प्रणयिनी—सङ्गिनी, शक्रेण शिरोमणिरिव रावणाज्ञा धार्य्यते इति भावः, [ एतेनास्य वीरत्वं सूचितं, तच्च स्त्रीणाम[न]भिमतम् ] शास्त्राणि एव नवं—नूतनं, विंशतिलोचनेभ्यः अतिरिक्तमिति भावः, चक्षुः, शास्त्रदृष्ट्या कर्म्मकरणात्, [ एतेन श्रीभावः सूचितः। "युवा धीमान् जनप्रियः" इत्यनेन वरगुणत्वेनास्योक्तत्वात् ] भूतपतौ—भूतानामीश्वरे,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र न रावण इत्येतावतैव समाप्यम्। (स)

"हीरकाणां निधेरस्य सिन्धोः किं वर्णयामहे ?"

अत्र रत्नानां निधेरित्यविशेष एव वाच्यः। (ह)

"आवर्त्त एव नाभिस्ते नेत्रे नीलसरोरुहे।
तरङ्गा वलयस्तेन त्वं लावण्याम्बुवापिका॥" (क)

अत्रावर्त्त एवेति नियमो न वाच्यः।

---

पिनाकिनि—हरे, भक्तिः, [ एतेन सम्पदैश्वर्य्यप्रभाभोगित्वं सूचितम् ; सम्पदादीनां शिवसेवाफलत्वेनोक्तत्वात् ; तेन धनवत्त्वमपि वरगुणो लभ्यते ;—"माता वरयते वित्तं पिता वरयते कुलम्। कन्या वरयते रूपं सौभाग्यमितरे जनाः॥" इति। सौभाग्यं—जनप्रियत्वम् ] लङ्का इति प्रसिद्धा, दिव्या—उत्तमा, पुरी पदं—स्थानं, द्रुहिणस्य—ब्रह्मणः, अन्वये—वंशे, उत्पत्तिः,—जननं, [ ब्रह्मणः पुलस्त्यः, तस्मात् विश्रवाः, ततो रावणः, इति पुराणमतानुसन्धेयम् ; एतेन सत्कुलजातत्वं वरगुणः सूचितः ] तत्—तस्मात्, अहो !—आश्चर्य्यम्, ईदृक्—एतादृशः, वरः,—अभिलषितं वस्तु, न लभ्यते—न प्राप्यते, केनापीति शेषः ; ईदृक् वरः,—जामाता न लभ्यते इति वाऽर्थः। उपेक्षाबीजमाह, स्यादिति।—चेत्—यदि, एषः रावयति क्रन्दयति, पीड़नेन लोकानिति रावणः, न स्यात्—दुर्वृत्तत्वेन ख्यातनामा न स्यात्, [ एतेन जनप्रियत्वस्य वरगुणस्य वैकल्यं दर्शितम् ] वरगुणत्वं कुत्रापि नास्तीति आह, क्व न्विति।—क्व—कुत्र, देशे इति शेषः, नु—खलु, सर्व्वत्र—सर्व्वस्मिन् जने, पुनः सर्वे गुणाः ? वर्त्तन्ते इति शेषः, न कुत्रापीति भावः। अत्र पुंसां प्रातिस्विकरूपेण सर्व्वगुणाभाववत्त्वं, यावत्त्वेन तु सर्व्वगुणसद्भाव एव, यद्वा,—सर्वेषु पुरुषेषु मध्ये कुत्र पुरुषे सर्वे वरगुणाः ? न कुत्रापीत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम्।

(स) एतच्च न रावणोपेक्षाबीजमित्येतत्पर्य्यन्तमस्थाने तत्र वाक्यार्थसमापनमयुक्तमित्याह, अत्रेति।—अत्र अस्थाने "क्व नु" इत्यादिपदानां योगः निष्प्रयोजनः, इत्यर्थस्य सहृदयानभिमतत्वेन रसास्वादस्यापकर्ष इति बोध्यम्।

(ह) अविशेषे विशेषमाह, हीरकाणामिति।—अत्र अविशेषे—सामान्ये वक्तव्ये विशेष उक्त इति बोध्यम्।

(क) अनियमे नियममुदाहरति, आवर्त्त एवेति।—तरङ्गाः,—भङ्गाः, वलयः,—त्रिवल्यः। अत्र अनियमे वक्तव्ये नियमोऽभिहितः।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"यान्ति नीलनिचोलिन्यो रजनीष्वभिसारिकाः ॥"

अत्र तमिस्रास्विति रजनीविशेषो वाच्यः । (ख)

"आपातसुरसे भोगे निमग्नाः किं न कुर्व्वते ? ।"

अत्र आपात एवेति नियमो वाच्यः । (ग)

ननु वाच्यस्यानभिधाने "व्यतिक्रमलवम्" इत्यादावपेरभावः, इह च एवकारस्येति कोऽनयोर्भेदः ? अत्राह,—"नियमस्य अवचनमेव पृथग्भूतं नियमपरिवृत्तेर्विषयः" इति, तन्न ; तथा सत्यपि द्वयोः शब्दार्थदोषतायां नियामकाभावात् । तत् का गतिरिति चेत् "व्यतिक्रमलवम्" इत्यादौ शब्दोच्चारणानन्तरमेव दोषप्रतिभासः ; इह तु अर्थप्रत्ययानन्तरमिति भेदः । एवञ्च शब्दपरिवृत्तिसहत्वासहत्वाभ्यां पूर्वैराहतोऽपि शब्दार्थदोषविभागः एवं पर्य्यवस्यति,—यो दोषः शब्दपरिवृत्त्यसहः स शब्ददोष एव ; यश्च पदार्थान्वयप्रतीतिपूर्व्वबोध्यः, सोऽपि शब्ददोषः । यस्त्वर्थप्रतीत्यनन्तरं बोध्यः, सोऽर्थाश्रय इति । एवञ्च अनियमपरिवृत्तित्वादेरप्यधिकपदत्वादेर्भेदो बोद्धव्यः । अमतपरार्थत्वे तु "राममन्मथशरेण—" इत्यादौ नियमेन वाक्यव्यापित्वाभिप्रायाद्वाक्यदोषता । अश्लीलत्वादौ तु न नियमेन वाक्यव्यापित्वम् । (घ)

---

(ख) विशेषे अविशेषमुदाहरति, यान्तीति ।—अभिसारिकाः,—कान्तार्थिन्यः, नीलनिचोलिन्यः,—नीलवसनपरिधायिन्यः सत्यः, रजनीषु यान्ति, कान्तागारमिति शेषः । अत्र विशेषे वक्तव्ये सामान्यमभिहितम् । तमिस्रासु—तमोयुक्तरात्रिषु, ज्योत्स्नीष्वभिसारिकाणां शुक्लपटावरणत्वस्यैवोचितम् इति भावः ।

(ग) नियमे अनियममाह,—नियमः,—निर्द्धारणं, तेन वक्तव्ये अनियमेनाभिधानं नियमानियमः । तमुदाहरति, आपातेति ।—भोगे—विषयभोगे, निमग्नाः,—एकान्तमासक्ताः । अत्र नियमे वक्तव्ये अनियमोऽभिहितः ।

(घ) वाच्यानभिधानान्नियमपरिवृत्तेर्भेदं निरूपयितुमाह,—नन्विति । नियमस्येति ।—अवचनम्—अनभिधानं, नियमद्योतकपदानभिधानमित्यर्थः, पृथग्भूतं—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"आनन्दितस्वपक्षोऽसौ परपक्षान् हनिष्यति।"
अत्र "परपक्षं हत्वा स्वपक्षमानन्दयिष्यति" इति विधेयम्।(ङ)

"चण्डीशचूडाभरण! चन्द्र! लोकतमोऽपह!।
विरहिप्राणहरण! कदर्थय न मां वृथा॥" (च)

अत्र विरहिण उक्तौ तृतीयपादस्यार्थो नानुवाद्यः।

---

विशेषः इति भावः, एवञ्च नियमद्योतकपदानभिधाने नियमपरिवृत्तिः, तदितरद्योतकपदानभिधानन्तु वाच्यानभिधानस्य विषय इति भेदः। नियामकाभावात—निश्चायकाभावात्। गतिः,—सिद्धान्तः। दोषप्रतिभासः,—दोषस्फुरणम्, इह तु—नियमपरिवृत्तौ इत्यर्थः, अर्थप्रत्ययानन्तरम्—अर्थबोधनात् अनन्तरम्। निरुक्तभेदे प्राचीनस्वरसमाह,—एवञ्चेति। शब्दपरिवृत्तौति।—यत्र दोषः शब्दपरिवृत्तिं न सहते, तत्र शब्ददोषः, यत्र न तथा तत्र अर्थदोष इति भावः, पूर्वैः,—प्राचीनैः आचार्य्यैः। पर्य्यवस्यति—परिणमति, परिवृत्तिः,—पर्य्यायशब्दान्तरदानं स्वार्थबोधेन निवृत्तिश्चेति भावः। पदार्थेति।—पदार्थानाम् अन्वयप्रतीतेः पूर्वं बोध्यः,—अनुभवनीयः, सोऽपि शब्ददोषः, शब्दश्रवणादेव दोषप्रतिभासादिति भावः। अनियमपरिवृत्तित्वादेः,—अनियमनियमादेरित्यर्थः। अधिकपदत्वे शब्दश्रवणानन्तरमेव दोषप्रतिभासः, अनियमे नियमे तु अर्थप्रतिसन्धानादेवेति परस्परं भेद इति भावः। नन्वेवममतपरार्थत्वादौ पदार्थबोधानन्तरमेव दोषप्रतिभासादर्थदोषत्वमेव, कथं वाक्यदोषत्वम्? अत आह, अमतेति।—अमतपरार्थत्वं वाक्यव्यापकमेव। नियमेन—निश्चयेन, वाक्यव्यापित्वाभिप्रायात—वाक्यान्वयव्यतिरेकानुविधायित्वात् इत्यर्थः। अश्लीलत्वादौ त्विति।—"हन्तुम्" इत्यादौ अर्थाश्लीलत्वे हनधात्वादेः पारिभाषिकनिर्घातादिबोधकत्वं नियमतो नोपपद्यते, परन्तु समभिव्याहारवशात् तात्पर्य्यपर्य्यालोचनया तदर्थकत्वकल्पनेनेति भावः, इति नियमानियमाभ्याम् अनयोः परस्परं भेद इति भावः।

(ङ) विधेयताप्रर्य्याप्तययोग्ये तात्पर्य्यारोपणं विध्ययुक्तता। तामुदाहरति,—आनन्दितेति। अत्रेति।—परपक्षहननस्वपक्षानन्दनयोः द्वयोरपि विधेयत्वेऽपि परपक्षहननानन्तरमेव स्वपक्षानन्दनविधावेव विधेयतापर्य्याप्तिरुचिता, परपक्षहननविधौ तत्करणाद्दोषः; नन्वत्र विधेयाविमर्ष एव दोषः, इति चेत् "आनन्दयति पक्षं स्वं परपक्षं हनिष्यति" इति पाठपरिवर्त्तनेनास्योदाहरणं वेदितव्यम्।

(च) अनुवाद्यविशेषणस्य विधिविरोधित्वम् अनुवादायुक्तता। तामुदाहरति, चण्डीशेति।—चण्डीशस्य—हरस्य, चूडाभरण!—शिखामणे! लोकानां—जगतां,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"लग्नं रागावृताङ्ग्या सुदृढ़मिह ययैवासियष्ट्याऽरिकण्ठे,
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किञ्चिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिति गतेवाम्बुधिं यस्य कीर्त्तिः॥"(छ)

अत्र "विदितं तेऽस्तु" इत्यनेन समापितमपि वचनं "तेन" इत्यादिना पुनरुपात्तम् । (ज)

तमोऽपह !—ध्वान्तविध्वंसिन् ! विरहिणां प्राणहरण !—जीवनहारिन् ! मां हथा—अकारणं, विनाऽपराधमिति भावः, न कदर्थय—न क्लेशय । त्वं मदनार्त्या पीड़यन्तं चन्द्रं प्रति विरहिण उक्तिरियम् । तस्मात् "प्रमोदाधाननिपुण" इत्यभिधेयम् ; तच्च परित्यज्य प्रार्थनीयम् अन्यथाऽनुदितं विरहिप्राणहरस्य अनुवाद्यचन्द्रविशेषणस्य तद्विधिविरोधित्वात् इति अयुक्तत्वमवधेयम् ।

(छ) आकाङ्क्षितस्य कारकस्य क्रियाऽन्वयेन समाप्तावपि पुनः तत्कारकोपादाने निर्मुक्तपुनरुक्तत्वम् ; समाप्तपुनरुक्तत्वं तु विशेष्यानुषङ्ग एव इत्यनयोर्भेदः । उदाहरति, लग्नमिति ।—राज्ञः स्तुतिरियम् । रागेण—रक्तेन अनुरागेण च, आवृतानि—लिप्तानि पूर्णानि च, अङ्गानि यस्याः तादृश्या, ययैव असियष्ट्या—करवालेन, [स्त्रैरिण्या कयाचिदिति ध्वनिः] अरीणां—शत्रूणां, कण्ठे सुदृढं लग्नं—शत्रुशिरांसि छिन्नानीति भावः, अन्यत्र,—गाढ़मालिङ्गितम् ; या च—असियष्टिः, परपुरुषैः,—अरातिभिः स्वामिभिन्नैश्च, मातङ्गानां—हस्तिनाम्, उपरि पतन्ती दृष्टा, असिना शत्रूणां हस्तिनो निहता इति भावः ; अन्यत्र,—अतिकामुकत्वात् हस्तिभिः,—कामशास्त्रोक्तपुरुषविशेषैः सह, विहरन्ती परैः दृष्टा, तत्सक्तः,—तस्याम्—असियष्ट्यां, सक्तः,—आसक्तः, केवलं युद्धव्यासक्त इति भावः, अयं—मत्स्वामीति भावः, न किञ्चित् गणयति—मदर्थं न चिन्तयति, मद्रक्षणार्थं न यतते इति भावः, ते—तव, [ "क्तस्य च वर्त्तमाने" (२।३।६७ पा० ) इति कर्त्तरि षष्ठी ] विदितं—ज्ञातं, [ "मतिबुद्धिपूजार्थेभ्यश्च" (३।२।१८८ पा० ) इति वर्त्तमाने क्तप्रत्ययः ] अस्तु तेन अस्मि—अहं, भृत्येभ्यः दत्ता—भृत्येषु मन्त्र्यादिषु, राजकार्य्यं निहितमिति भावः, श्रीनियोगात्—लक्ष्म्याः आदेशात्, इति गदितुं—पित्रे कथयितुमिव, यस्य कीर्त्तिः अम्बुधिं गता । स्रग्धरा वृत्तम् ।

(ज) अत्रेति ।—गणयतीति पर्य्यन्तस्य कर्म्मकारकस्य विदितक्रियान्वयेन समाप्तावपि तेनास्मीत्यादेः पुनरुपादानादिति भावः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ रसदोषानाह,—

रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि।
परिपन्थिरसाङ्गस्य विभावादेः परिग्रहः॥
आक्षेपः कल्पितः कृच्छ्रादनुभावविभावयोः।
अकाण्डे प्रथनच्छेदौ तथा दीप्तिः पुनः पुनः॥
अङ्गिनोऽननुसन्धानमनङ्गस्य च कीर्त्तनम्।
अतिविस्तृतिरङ्गस्य प्रकृतीनां विपर्य्ययः।
अर्थानौचित्यमन्यच्च दोषा रसगता मताः॥५९७॥(झ)

रसस्य स्वशब्दो रसशब्दः शृङ्गारादिशब्दश्च।

---

(झ) रसदोषानाह, रसस्येति।—स्वशब्देन रसस्य—रसशब्दस्य शृङ्गारादेश्च, स्थायिसञ्चारिणोरपि—स्थायिभावस्य रत्यादेः, सञ्चारिणश्च निर्वेदादेः, स्वशब्देन—तत्तत्स्वप्रतिपादकशब्देन, उक्तिः;—कथनं, परिपन्थिनः;—विरोधिनः, रसस्य अङ्गं तस्य, विभावादेः परिग्रहः,—उपादानं, कृच्छ्रात्—कष्टेन, अनुभावविभावयोः कल्पितः आक्षेपः,—ऊहकल्पनमित्यर्थः, अकाण्डे—असमये, सहसा वा, प्रथनच्छेदौ—विस्तृति-विच्छेदौ, तथा पुनः पुनः दीप्तिः,—औज्ज्वल्यम्, अङ्गिनः,—प्रधानस्य, अननुसन्धानम्, अनङ्गस्य—यत् अङ्गं न तस्य, कीर्त्तनम्; अङ्गस्य अतिविस्तृतिः, प्रकृतीनां—नायकोचितधर्म्माणां, विपर्य्ययः,—वैपरीत्यम्, अन्यथावर्णनमिति भावः, इदमेकमनौचित्यम्; तथा अन्यत्—प्रकृतिविपर्य्ययभिन्नम्, अर्थानौचित्यम्—अर्थायुक्तत्वमित्यर्थः, एते रसगताः दोषाः मताः,—कथिताः। अत्रेदं बोद्धव्यम्;—रसशब्दवाच्यत्वं, स्थायिशब्दवाच्यत्वं, सञ्चारिशब्दवाच्यत्वं, परिगृहीतविरुद्धरसाङ्गविभावादित्वम्, अनुभावस्य कष्टाक्षिप्तत्वं, विभावस्य कष्टाक्षिप्तत्वं, रसस्याकाण्डे प्रथितत्वं, रसस्याकाण्डे छिन्नत्वं, रसस्य पुनःपुनरुद्दीपितत्वम्, अनङ्गस्य कीर्त्तनम्, अङ्गस्यातिविस्तरः, प्रकृतिविरुद्धत्वम्, अर्थानौचित्य चेति रसगतास्त्रयोदशदोषाः। तत्र सञ्चारिशब्दवाच्यत्वं, परिगृहीतविरुद्धरसाङ्गविभावादित्वञ्चेत्येतद्दोषद्वयमनित्यम्, अन्ये पुनर्नित्याः। "सञ्चार्य्यादेर्विरुद्धस्य वाध्यत्वेन वचो गुणः" इति वदता प्रकाशकृताऽपि केषाञ्चित् गुणत्वमप्युक्तम् इति सुधीभिरत्र विभाव्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्रमेण यथा,—

"तामुद्वीक्ष्य कुरङ्गाक्षीं रसो नः कोऽप्यजायत ।"

"चन्द्रमण्डलमालोक्य शृङ्गारे मग्नमन्तरम् ।" (ञ)

स्थायिभावस्य स्वशब्दवाच्यत्वं यथा,—

"अजायत रतिस्तस्यास्त्वयि लोचनगोचरे ।" (ट)

व्यभिचारिण: स्वशब्दवाच्यत्वं यथा,—

"जाता लज्जावती मुग्धा प्रियस्य परिचुम्बने ।" (ठ)

अत्र प्रथमे पादे "आसीन्मुकुलिताक्षी सा" इति लज्जाया अनुभावमुखेन कथने युक्त: पाठ: ।

---

(ञ) क्रमेणोदाहरति, तामिति ।—तां कुरङ्गाक्षीम्, उद्वीक्ष्य—दृष्ट्वा, न:,—अस्माकं, कोऽपि—अनिर्वचनीय:, रस: अजायत । अत्र रसशब्देन रसस्य स्वशब्दवाच्यत्वम् । चन्द्रेति ।—चन्द्रमण्डलमालोक्य अन्तरम्—अन्त:करणं, शृङ्गारे—सुरतार्थमित्यर्थ:, मग्नम्—आसक्तमित्यर्थ: । अत्र शृङ्गारशब्देन रसस्य स्वशब्दवाच्यत्वम् । यथा वा,—"तामनङ्गजयमङ्गलश्रियं किञ्चिदुच्चभुजमूललोकिताम् । नेत्रयो: कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तर: ॥" "आलोक्य कोमलकपोलतलाभिषिक्तव्यक्तानुरागसुभगामभिरामरूपाम् । पश्यैष बाल्यमतिवृत्य विवर्त्तमान: शृङ्गारसीमनि तरङ्गितमातनोति ॥" इति ।

(ट) स्थायीति ।—स्वशब्दवाच्यत्वं—रसादिप्रकर्षबोधप्रतिबन्धकम् इत्यर्थ: । अजायतेति ।—त्वयि लोचनगोचरे—दृष्टे सति, तस्या:,—कान्ताया:, रति:,—अनुराग:, अजायत । अत्र स्थायिभावस्य रते: स्वशब्देनोपादानम् । यथा वा,—"सम्प्रहारे प्रहरणै: प्रहाराणां परस्परम् । ठणत्कारै: श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥" इति । अत्रोत्साहस्य ।

(ठ) व्यभिचारिण इति । जातेति ।—मुग्धा—बाला, प्रियस्य परिचुम्बने लज्जावती जाता । अत्र व्यभिचारिभावस्य लज्जाया: स्वशब्देनोपादानम् । यथा वा,—"सव्रीडा दयितानने, सकरुणा मातङ्गचर्म्माम्बरे, सत्रासा भुजगे, सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि । सेर्ष्या जह्नुसुताऽवलोकनविधौ, दीना कपालोदरे, पार्वत्या नवसङ्गमप्रणयिनी दृष्टि: शिवायाऽस्तु व: ॥" इति । व्यभिचारिणां स्वातन्त्र्येणोपादान एव स्वशब्दवाच्यत्वं दोष:, रसव्यञ्जनार्थमुपादाने तु न दोष: ; यथा,—"लज्जानम्रमुखी" इति "अमर्षविह्वलमुख" इति च ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"मानं मा कुरु तन्वङ्गि! ज्ञात्वा यौवनमस्थिरम्।"

अत्र यौवनास्थैर्य्यनिवेदनं शृङ्गाररसस्य परिपन्थिनः शान्तरसस्य अङ्गं शान्तस्यैव च विभाव इति शृङ्गारे तत्परिग्रहो न युक्तः। (ड)

"धवलयति शिशिररोचिषि भुवनतलं लोकलोचनानन्दे।
ईषत्क्षिप्तकटाक्षा स्मेरमुखी सा निरीक्ष्यतां तन्वी॥" (ढ)

अत्र रसस्योद्दीपनालम्बनविभावावनुभावपर्य्यवसायिनौ स्थिताविति कष्टकल्पना। (ण)

"परिहरति रतिं मतिं लुनीते,
स्खलतितरां, परिवर्त्तते च भूयः।
इति वत विषमा दशाऽस्य देहं
परिभवति प्रसभं, किमत्र कुर्म्मः?॥" (त)

(ड) विरोधिरसाङ्गपरिग्रहमुदाहरति,—मानमिति। अत्रेति।—अत्र शृङ्गाररसस्य विरोधिनः शान्तरसस्य अङ्गं यौवनास्थैर्य्यनिवेदनम्। शान्तस्यैव चेति—च शब्दो हेतौ, विभावः उद्दीपनाख्य इति शेषः, तत्परिग्रहः,—यौवनस्थैर्य्यनिवेदनवर्णनमित्यर्थः।

(ढ) अनुभावस्य कष्टाक्षेपमाह, धवलयतीति।—लोकानां लोचनानन्दे—नयनानन्दविधायिनि, शिशिररोचिषि—चन्द्रमसि, भुवनतलं धवलयति—मयूखजालेन धवलं कुर्व्वति सति, ईषत्—अल्पं यथा तथा, क्षिप्तकटाक्षा स्मेरमुखी सा—या अतिप्रयत्नेनाप्यलभ्यमाना इत्यर्थः, तन्वी, निरीक्ष्यतां—दृश्यताम्।

(ण) अत्रेति।—अत्र उद्दीपनविभावाः चन्द्रकटाक्षमोक्षमन्दहासाः, आलम्बनं नायिका, एषां बहुत्वेऽप्युद्दीपनविभावत्वेनैकत्वमिति द्विवचनोपपत्तिः, अनुभावपर्य्यवसायिनौ—प्रणिधानेनानुभावस्य नायकचक्षुःप्रसारणस्य बोधकौ; नायकस्य शृङ्गारित्वनिश्चायकाभावात् रत्यनुभावस्य, नायिकायां चक्षुःप्रसारणस्य कष्टकल्पनया आक्षेपः; नायकस्याशृङ्गारित्वे दर्शनाभावस्यापि सम्भवात् तादृशसमये तादृशनायिकायां मुनेरपि प्रायो मनःक्षोभो भवति इत्यौत्सर्गिकमेव चक्षुःप्रसारणमिति कष्टकल्पना बोध्या। काव्यप्रकाशे तु,—"कर्पूरधूलिधवलद्युतिपूरधौतदिङ्मण्डले शिशिररोचिषि तस्य यूनः। लीलाशिरोंऽशुकनिवेशविशेषक्लृप्तिव्यक्तस्तनोन्नतिरभून्नयनावनौ सा॥" इत्युदाहृतम्।

(त) विभावस्य कष्टकल्पनामाह, परिहरतीति।—कमपि युवानं कस्यामपि

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र रतिपरिहारादीनां करुणादावपि सम्भवात् कामिनी-रूपो विभावः कृच्छ्रादाक्षेप्यः । (थ)

अकाण्डे प्रथनं यथा,—वेणीसंहारे द्वितीयेऽङ्के प्रवर्त्तमानानेकवीरसङ्क्षये काले दुर्य्योधनस्य भानुमत्या सह शृङ्गार-प्रथनम् । (द)

छेदो यथा,—वीरचरिते राघवभार्गवयोर्द्धाराधिरूढे सङ्ग्रामे "कङ्कणमोचनाय गच्छामि" (ध) इति राघवस्योक्तिः ।

पुनःपुनर्दीप्तिर्यथा,—कुमारसम्भवे रतिविलापे । (न)

---

अनुरागपरं दृष्ट्वा तत्सख्युरन्यं प्रति उक्तिरियम् । रतिं—वस्त्वन्तरेषु अनुरागं, परिहरति—परित्यजति, मतिं—बुद्धिं, धैर्य्यावलम्बनविषयिणीमिति भावः, लुनीते—छिनत्ति, धैर्य्यं नालम्बते इति भावः, स्खलतितराम्—अतिशयेन भूमौ पतति, भूयः परिवर्त्तते—पार्श्वपरिवृत्तिं करोति, लुण्ठति इति यावत् ; [ सर्व्वत्रायमिति कर्तृपदमूह्यम् ] बत—खेदे, इति—इत्थ, विषमा—दारुणा दुष्प्रतीकारेति यावत्, दशा—अवस्था, अस्य देहं प्रसभं—बलात्, परिभवति—आकुलयति, अत्र—अस्मिन् विषये, किं कुर्मः, वयमिति शेषः । पुष्पिताग्रा वृत्तम् ।

(थ) कृच्छ्रादाक्षेप्य इति ।—प्रकरणादिप्रतिसन्धानमेवात्र कृच्छ्रम् ।

(द) अकाण्ड इति ।—प्रवर्त्तमानेति ।—प्रवर्त्तमानः स्वपुत्रादिरूपाणामनेकवीराणां सङ्क्षयो यत्र तस्मिन् इत्यर्थः । शृङ्गारप्रथनं—शृङ्गारस्य प्रथनं—विस्तरः ।

(ध) छेद इति ।—द्वाराधिरूढे—द्वारम् अधिरूढः तस्मिन्, प्रारब्धे इत्यर्थः । [ "धाराऽधिरूढे" इति पाठान्तरे तु,—धारया—प्रवाहेण, अधिरूढः,—उद्भूत इति तथोक्ते इत्यर्थः ] । कङ्कणमोचनाय—विवाहार्थं हस्तबद्धसूत्रमोचनाय इत्यर्थः । इदञ्च विवाहादष्टमदिवसीयोत्सव इति बहवः ; सम्प्रति तु द्वितीये तृतीये पञ्चमे षष्ठेऽपि वा दिवसे सम्पद्यत इति बोध्यम् । धीरोदात्तस्य रामस्य तथाऽसमये समापनं व्यान-निर्गमनं प्रत्याययत् अवीरतां प्रत्याययति इति दोषसद्भावः ।

(न) पुनःपुनरिति ।—रतिविलाप इति ।—अयं भावः,—"अथ सा पुनरेव विह्वला वसुधाऽऽलिङ्गनधूसरस्तनी । विललाप विकीर्णमूर्द्धजा समदुःखामिव कुर्व्वती स्थलीम् ॥" इत्युपक्रम्य प्रवर्त्तिते विलापे, "तमवेक्ष्य रुरोद सा भृशं स्तनसम्बाधमुरो जघान च । स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते ॥" इत्यादिना पुनः प्रवर्त्तनम्, इति पुनःपुनस्तथाविधस्य विस्तरः अमाङ्गलिकतयाऽनुचितः इति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अङ्गिनोऽननुसन्धानं यथा,—रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः। (प)

अनङ्गस्य कीर्त्तनं यथा,—कर्पूरमञ्जर्य्यां राजनायिकयोः स्वयं कृतं वसन्तस्य वर्णनमनादृत्य वन्दिवर्णितस्य प्रशंसनम्। (फ)

अङ्गस्यातिविस्तृतिर्यथा,—किराते सुराङ्गनाविलासादिः।

प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्चेति। तेषां धीरोदात्तादिता, तेषामप्युत्तमाधममध्यमत्वम्। तेषु च यो यथाभूतः, तस्याऽयथावर्णने प्रकृतिविपर्य्ययो दोषः। (ब) यथा,—

(प) अङ्गिन इति।—प्रधानस्येत्यर्थः। बाभ्रव्यागमन इति।—सागरिकायाः पितृगृहादागतः कञ्चुकी बाभ्रव्यः, तदागमने विजयवर्म्मवृत्तश्रवणाऽऽकृष्टचेतसा नृपेण सागरिकाया अभिधानमात्रस्याप्यनालम्बनादिविस्मरणम्; तेन ग्रन्थनिर्दिष्टः शृङ्गाररसः खण्डितप्राय इति वैरस्यम्।

(फ) अनङ्गस्येति।—रसानपकारकस्येत्यर्थः। यथा कर्पूरमञ्जर्य्यामिति।—अयं भावः,—"जधा किल णिवेदिदं वंदीहिं, पउट्ठा ज्जेव्व मलआणिला। तधा हि" इतः प्रभृति विदूषकोक्त्यन्तेन ग्रन्थेनाप्रधानस्य वसन्तवर्णनस्य प्रशंसनं प्रकृतानुपयुक्तत्वेऽपि कृतमिति दोषतादवस्थ्यम्।

(ब) प्रकृतिविपर्य्ययमुदाहर्त्तुं प्रकृतीराह, प्रकृतय इति।—नायका इत्यर्थः, दिव्याः,—देवासुरयक्षगन्धर्व्वराक्षसादयः, अदिव्याः,—तदितरे मानुषादयः, दिव्यादिव्याः प्रागेवोक्ताः, तेषां—दिव्यादिनायकानां, धीरोदात्तादिता, तेषामपीति।—उत्तममध्यमाधमत्वमपि प्रकृतिरित्यर्थः। तेषु चेति।—दिव्यादिनायकानामनुचितवर्णनं प्रकृतिविपर्य्ययः; तज्ज्ञापनाय तेषामनुचितं वर्णनीयं वर्णयामि यथा,—"रतिमयैव हासश्च शोक आश्चर्य्यमेव च। दिव्यानामुचितं वर्ण्यमदिव्योत्तमनेतृवत्॥ किन्तु सम्भोगशृङ्गारो वर्ण्यो नोत्तमदेवयोः। सद्यः फलप्रदः क्रोधो भ्रुकुट्यादिविवर्जितः॥ उत्साहः स्वर्गपातालगमनाब्धिलङ्घनादिषु। दिव्यानामेव नेतॄणां वर्ण्यन्ते उचितो बुधैः॥ ख्यातं लोकपुराणादौ यच्चान्यत् स्यादबाधितम्। वर्णनीयमदिव्यानामन्येषामुभयं बुधैः॥ पूज्यादौ तु तत्रभवन् भगवन्निति चोच्यते। भट्टारकेति राजादौ परमेशेति चोच्यते॥ इत्याद्युचितमेतेषां विरुद्धं दूषणं भवेत्॥" (अन्येषां—दिव्यादिव्यानाम्, उभयं—दिव्यसाधर्म्यमदिव्यासाधर्म्यं चोचितमित्यर्थः) यथा,—अर्ज्जुनस्य स्वःपातालादिलङ्घनोत्साहः भ्रुकुट्यादिरहितः क्रोधश्च।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

धीरोदात्तस्य रामस्य धीरोद्धतवत् छद्मना वालिवधः । यथा वा,—कुमारसम्भवे उत्तमदेवतयोः पार्व्वतीपरमेश्वरयोः सम्भोगशृङ्गारवर्णनम् । "इदं पित्रोः सम्भोगवर्णनमिवात्यन्तमनुचितम्" इत्याहुः ।

अन्यदनौचित्यं—देशकालादीनामन्यथा यद्वर्णनम् । तथा सति हि काव्यस्यासत्यताप्रतिभासेन विनेयानामुन्मुखीकारासम्भवः । (भ)

**एभ्यः पृथगलङ्कारदोषाणां नैव सम्भवः ॥५९८॥ (म)**

एभ्यः,—उक्तदोषेभ्यः ।

तथा हि,—उपमायामसादृश्यासम्भवयोरुपमानस्य जाति-

(भ) अन्यदिति ।—देशकालादीनामिति ।—देशः,—अद्रिवनराष्ट्रादिः. कालः,—रात्रिदिनर्त्तवः। तत्तदनौचित्यम् : क्रमेण यथा,—"कर्पूरपादपामर्शी सुरभिर्मलयानिलः । कलिङ्गवनसम्भूता मृगप्राया मतङ्गजाः ॥ चोलाः कालागुरुश्यामाः कावेरीतीरभूमयः ॥" अत्र मलये कर्पूरवृक्षस्य, कलिङ्गवने हस्त्युत्पत्तेः, चोलेषु कालागुरूणामसम्भवादनौचित्यम् । "पद्मिनी नक्तमुन्निद्रा स्फुटत्यह्नि कुमुद्वती । मधुरुत्फुल्लनिचुलो निदाघो मेघदुर्दिनः ॥ श्रव्यहंसगिरो वर्षाः शरदो मत्तवर्हिणः । हेमन्तो निर्म्मलादित्यः शिशिरः श्लाघ्यचन्दनः ॥" आदिपदेन लोकजातिवयःप्रभृतीनां ग्रहणम् : "चराचराणां भूतानां प्रवृत्तिर्लोकसंज्ञिता ।" तदनौचित्यं यथा,—"आधूतकेसरो हस्ती तिग्मशृङ्गस्तुरङ्गमः । गुरुसारोऽयमेरण्डो निःसारः खदिरद्रुमः ॥" इत्याद्यनौचित्यस्य न केवलं रसापकर्षकत्वं दूषकताबीजं, काव्यस्य प्रवृत्तिनिवृत्त्युपदेशपरत्वव्याघातकत्वमपीत्याह, तथा सतीति ।—अयथावर्णने सतीत्यर्थः । असत्यताप्रतिभासेन—अप्रामाण्यप्रतिपत्त्या, विनेयानां—धर्म्मादिजिज्ञासूनां, काव्याध्ययने प्रवृत्त्युन्मुखीकारः ।

(म) नन्वसादृश्यादीनामलङ्कारदोषाणां परम्परया रसापकर्षकत्वेन काव्यदोषत्वसम्भवात् काव्यदोषाणां पञ्चविधत्वमनुपपन्नम्, अतः तानुक्तदोषेषु यथायथमन्तर्भावयति, एभ्य इति ।—एभ्यः,—उक्तेभ्यः काव्यदोषेभ्यः, पृथक्—भिन्नानाम्, अलङ्कारदोषाणां नैव सम्भवः,—सम्भवो नास्तीत्यर्थः, अलङ्कारदोषा अपि एतेष्वन्तर्भवन्तीति भावः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रमाणगतन्यूनत्वाधिकत्वयोरर्थान्तरन्यासे उत्प्रेक्षितार्थसमर्थने चानुचितार्थत्वम् । (य) क्रमेण यथा,—

"ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम् ।" (र)

"प्रज्वलज्ज्वलधारावत् निपतन्ति शरास्तव ।" (ल)

"चण्डाल इव राजाऽसौ सङ्ग्रामेऽधिकसाहसः ।" (व)

"कर्पूरखण्ड इव राजति चन्द्रबिम्बम् ।" (श)

"हरवन्नीलकण्ठोऽयं विराजति शिखावलः ।" (ष)

"स्तनावद्रिसमानौ ते ।" (स)

"दिवाकराद्रक्षति यो गुहासु
लीनं दिवाभीतमिवान्धकारम् ।

---

(य) अन्तर्भावप्रकारमाह, तथा हीति ।—उपमायामसादृश्यासम्भवयोरनुचितार्थत्वं पर्य्यवस्यतीत्यध्याहृतेनान्वयः। एवमग्रेऽपि । साधारणधर्म्माप्रसिद्धिरसादृश्यम्, उपमानाप्रसिद्धिरसम्भवः इति सङ्क्षेपः ।

(र) ग्रथ्नामीति ।—वितताः अर्थाः रश्मयः,—किरणा इव यस्य तं, काव्यशशिनं—काव्यं शशीव तम् [ इत्युपमाने समासः ] ग्रथ्नामि—आनुपूर्व्या निवेशयामि, रचयामीत्यर्थः। अत्र अर्थरश्म्योः काव्यशशिनोश्च कोऽपि साधारणो धर्म्मो न प्रसिद्धः ; काव्यशशिनोः आह्लादकत्वरूपैकधर्म्मसम्भवेऽपि अर्थरश्म्योर्न तादृशः धर्म्मः सम्भवति, तस्मादत्रासादृश्येन अनुचितार्थत्वमुपमायाः, न चात्र रूपकसम्भवोऽपीति वाच्यं, तस्यापि सादृश्यमूलकत्वेन तत्रापि तद्दोषतादवस्थ्यादित्यवधेयम् ।

(ल) उपमानासम्भवमुदाहरति, प्रज्वलदिति ।—अत्राग्निकार्य्यस्य ज्वलनस्य जले बाधात् तद्विशिष्टत्वं जलधाराणामसम्भव इत्यनुचितार्थत्वमुपमाया इति बोध्यम् ।

(व) उपमानस्य जातिन्यूनत्वमुदाहरति, चण्डाल इति ।—अत्र चण्डालपदस्य उपमानस्य जातिगतं न्यूनत्वम् उपमेयस्यातिनीचत्वं व्यञ्जयतीति उपमायामनौचित्यम् ।

(श) उपमानस्य प्रमाणन्यूनत्वमुदाहरति, कर्पूरेति ।—अत्रोपमेयस्य चन्द्रबिम्बस्य अतिक्षुद्रत्वव्यञ्जकं कर्पूरखण्डपदमिति उपमानस्य प्रमाणगतं न्यूनत्वम् ।

(ष) उपमानस्य जात्यधिकत्वमुदाहरति, हरवदिति ।—शिखावलः,—मयूरः । अत्र उपमानस्य जातिगतमाधिक्यम् ।

(स) उपमानस्य प्रमाणाधिकत्वमुदाहरति, स्तनाविति ।—अत्र स्तनयोरतिमहत्त्वव्यञ्जकमद्रिपदमनुचितार्थमिति उपमानस्य प्रमाणगतमाधिक्यम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैःशिरसां सतीव ॥" (ङ)

एवमादिषु उत्प्रेक्षितार्थस्यासम्भूततयैव प्रतिभासनं स्वरूपमित्यनुचितमेव तत्समर्थनम्। (क)

यमकस्य पादत्रयगतस्य अप्रयुक्तत्वं दोषः (ख)। यथा,—

"सहसाऽऽलिजनैः स्निग्धैः सह-सा कुञ्जमन्दिरम्।
उदिते रजनीनाथे सहसा याति सुन्दरी ॥" (ग)

उत्प्रेक्षायां यथाशब्दस्योत्प्रेक्षाद्योतकत्वेऽवाचकत्वम्।

यथा,—

"एष मूर्त्तो यथा धर्मः क्षितिपो रक्षति क्षितिम्।" (घ)

---

(ङ) उत्प्रेक्षितार्थसमर्थनमुदाहरति, दिवाकरादिति।—यः,—हिमाद्रिः, गुहासु—कन्दरासु, लीनम् अन्धकारं दिवाभीतमिव—पेचकमिव, दिवाकरात्—सूर्य्यात्, रक्षति; तथा हि,—क्षुद्रे—नीचेऽपि जने, शरणम्—आश्रयं, प्रपन्ने—प्राप्ते, शरणागते सति इत्यर्थः, सतीव—साधाविव, उच्चैःशिरसां—महात्मनाम्, ["उच्चैःशिरसामतीव" इति पाठान्तरे—अतीव ममत्वम् इति योज्यम्] ममत्वं—स्नेहः, भवतीति शेषः, नूनं—तर्कयामीत्यर्थः। उपजातिवृत्तम्। कुमारसम्भवस्येदं पद्यम्।

(क) एवमिति।—अत्र उत्प्रेक्षितार्थस्य—अचेतनान्धकारत्रासस्य, असम्भूततया—सम्भावनाविषये वस्तुन्यवृत्तितया, ["असद्भूततया" इति पाठे,—मिथ्यात्वेनेत्यर्थः] प्रतिभासनं—स्फुरणं, स्वरूपं, ["प्रतिभासनस्वरूपम्" इति पाठे,—प्रतिभासनस्वरूपम्—आरोपणमात्रम्] तस्मात् तत्समर्थनं—तस्यार्थस्य दृढ़ीकरणम्, न मिथ्येत्युपपादनमित्यर्थः, अनुचितम्—अयोग्यम्; तच्चासम्भूते वस्तुनि न सम्भवतीति भावः इति उत्प्रेक्षाया अनौचित्यमवधेयम्।

(ख) पादत्रयगतस्य—पादत्रयमात्रवृत्तित्वस्य, अप्रयुक्तत्वं नाम दोषः, स्वरूपमिति पूर्वेणान्वयः।

(ग) उदाहरति, सहसेति।—सा सुन्दरी रजनीनाथे—चन्द्रे, उदिते सति, स्निग्धैः,—प्रणयपेशलैः, आलिजनैः,—सखीभिः, सह सहसा—हासयुक्ता, हसन्ती सतीत्यर्थः, सहसा—अविचारेण, कुञ्जमन्दिरं—लताऽऽदिपिहितस्थानरूपं गृहं, याति।

(घ) एष इति।—एष क्षितिपः,—राजा, मूर्त्तः,—साक्षात् धृततनुः, यथा—किल, धर्मः क्षितिं रक्षति। अत्र यथाशब्दस्य सादृश्यमात्रद्योतकत्वेऽपि सम्भावनाऽर्थक-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एवमनुप्रासे वृत्तिविरुद्धस्य प्रतिकूलवर्णत्वम् । यथा,—"ओवट्टइ उल्लट्टइ" इत्यादौ । (ङ)

उपमायाञ्च साधारणधर्मस्याधिकन्यूनत्वयोरधिकपदत्वं न्यूनपदत्वञ्च । क्रमेण उदाहरणम्,—

"नयनज्योतिषा भाति शम्भुर्भूतिसितद्युतिः ।
विद्युतेव शरन्मेघो नीलवारिदखण्डधृक् ॥" (च)

अत्र भगवतो नीलकण्ठत्वस्य अप्रतिपादनाच्चतुर्थपादोऽधिकः । (छ)

"कमलालिङ्गितस्तारहारहारी मुरं द्विषन् ।
विद्युद्विभूषितो नीलजीमूत इव राजते ॥" (ज)

अत्रोपमानस्य सबलाकत्वं वाच्यम् । (झ)

अस्यामेवोपमानोपमेययोर्लिङ्गवचनभेदस्य कालपुरुष-

---

तया प्रयोग इति दुष्टत्वम् । यथा वा,—"उदययौ दीर्घिकागर्भात् मुकुलं मेचकोत्पलम् । नारीलोचनचातुर्य्यशङ्कासङ्कुचितं यथा ॥" इति ।

(ङ) वृत्तिविरुद्धस्य—प्रकृतरसविरोधिरसानुगुणवर्णघटितस्येत्यर्थः । ओवट्टइ इति ।—अत्र वृत्तिविरुद्धस्य शृङ्गारविरोधिवीराद्यनुगुणटकारघटितस्य अनुप्रासस्य शृङ्गारे प्रतिकूलवर्णत्वम् ; एवं वीरवृत्तिविरुद्धस्य अनुप्रासघटकवर्णस्य वीरे प्रतिकूलवर्णत्वमित्यादि बोध्यम् ।

(च) नयनेति ।—भूतिभिः,—भस्मभिः, ("भूतिर्भस्मनि सम्पत्तिश्चक्रिशृङ्गारयोः स्त्रियाम्" इति मेदिनी ) सिता—धवला, द्युतिः यस्य तादृशः, शम्भुः नयनज्योतिषा नीलवारिदखण्डधृक्—नीलमेघखण्डधारी, शरन्मेघः विद्युता इव भाति—विराजते ।

(छ) अत्रेति ।—भगवतः,—शम्भोः, अप्रतिपादनात्—अप्रतियोगात्, चतुर्थपादः,—नीलवारिदखण्डधृगिति पदम्, अधिकः ।

(ज) कमलेति ।—कमलया—लक्ष्म्या, आलिङ्गितः,—आश्लिष्टः, तारेण—महता, हारेण हारी—मनोहारीत्यर्थः, शुद्धहारहारी वा, मुरं द्विषन्—मुरारिः, विद्युता विभूषितः नीलजीमूत इव—नीलमेघ इव, राजते ।

(झ) अत्रेति ।—उपमानस्य—जीमूतस्य, सबलाकत्वं—बलाका—बकपङ्क्तिः, तद्विशिष्टत्वं, वाच्यं—वक्तुं योग्यम् । तदकथनात् न्यूनपदत्वमवधेयम् ।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विध्यादिभेदस्य च भग्नप्रक्रमत्वम्। क्रमेण उदाहरणम्,—
"सुधेव विमलश्चन्द्रः।" "ज्योत्स्नाः इव सिता कीर्त्तिः।" (ञ)

"काऽप्यभिख्या तयोरासीद् व्रजतोः शुद्धवेशयोः।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव॥" (ट)

अत्र तथाभूतचित्राचन्द्रमसोः शोभा न खलु आसीत्, अपि तु सर्व्वदाऽपि भवति। (ठ)

"लतेव राजसे तन्वि!" अत्र लता राजते, त्वं तु राजसे। (ड)

"चिरं जीवतु ते सूनुर्मार्कण्डेयमुनिर्यथा।"

अत्र मार्कण्डेयमुनिर्जीवत्येव, न खलु एतदस्य जीवतु इत्यनेन विधेयम्। (ढ)

---

(ञ) अस्यामेव—उपमायामेव। सुधेवेति।—अत्र पुंलिङ्गस्य विमलशब्दस्य सुधायामन्वयासम्भवात् लिङ्गव्यत्ययेनान्वयः, एवञ्च प्रक्रान्तलिङ्गभङ्गः। वचनभेदमाह, ज्योत्स्ना इवेति।—अत्र वचनव्यत्ययेन प्रक्रान्तवचनभङ्गः।

(ट) कालभेदमुदाहरति, काऽपीति।—व्रजतोः,—गच्छतोः, शुद्धवेशयोः,—पवित्रपरिच्छदयोः, तयोः,—दिलीपसुदक्षिणयोः दम्पत्योः, हिमनिर्मुक्तयोः,—शिशिरावरणशून्ययोरित्यर्थः, चित्राचन्द्रमसोर्योगे इव काऽपि—अनिर्वचनीया, अभिख्या—शोभा, आसीत्। इदं रघुवंशस्य पद्यम्।

(ठ) अत्रेति।—अत्रोपमाने अतीतकालस्य बाधाद् वर्त्तमानोद्देशेनान्वयः, इति प्रक्रान्तकालभङ्गः।

(ड) पुरुषभेदमुदाहरति, लतेवेति।—अत्रोपमाने मध्यमपुरुषान्वयस्य बाधात् प्रथमपुरुषोद्देशेनान्वयमुपपादयति, लता राजते इति।—अत्र प्रक्रान्तपुरुषभङ्गः।

(ढ) विधिभेदमाह,—चिरमिति। न खल्विति।—एतत्—जीवनम्, अस्य—मार्कण्डेयस्य, विधेयं—विधिविषयः। अत्रादिपदग्राह्याया: अभीष्टाशंसनरूपाया: आशिष एव भेदः, न तु "प्रेष्यादिर्वाऽथ सङ्कल्पभेदोऽथेष्टाभ्युपायता। शब्दव्यापारभेदो वा कार्य्यभेदोऽथवा विधिः॥" इत्युक्तपञ्चविधस्य विधेः असम्भवात्, विधिभेदस्योदाहरणमेवं बोध्यम्; "चमूरियं दूरविमुक्तभङ्गा गङ्गेव मे यौघमनुप्रयातु। ययाऽरिसञ्जा विभटाः प्रकामं नश्यन्त्वधर्म्मा इव खेदसाध्याः॥" अत्र गङ्गा प्रयाति, चमूः प्रयातु, इति प्रक्रान्तविधिभङ्गः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इह तु यत्र लिङ्गवचनभेदेऽपि न साधारणधर्म्मस्यान्यथाभावस्तत्र न दोषः। (ण)

क्रमेण उदाहरणम्। "मुखं चन्द्र इवाभाति।" (त)

"तद्वेशोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः।
दधते स्म परां शोभां तदीया विभ्रमा इव॥" (थ)

पूर्वोदाहरणेषु उपमानोपमेययोरेकस्यैव साधारणधर्मेणान्वयसिद्धेः प्रक्रान्तस्यार्थस्य स्फुटोऽनिर्वाहः। (द)

---

(ण) इह त्विति।—साधारणधर्म्मस्य—निर्द्दिश्यमानसामान्यस्य, अन्यथाभावः,—उपमानान्वयानुपयोगित्वं, न दोषः,—नोपमादोषः, भग्नप्रक्रमत्वस्य तु प्रसक्त्यभावेन तन्निषेधस्यात्र न सम्भवः।

(त) मुखमिति।—अवाभातीत्ति उपमानेनाप्यन्वेति इति ज्ञेयम्।

(थ) वचनभेदेनापि दोषाभावमाह, तद्वेश इति।—तद्वेशः,—तस्याः वेशः, अन्याभिः स्त्रीभिः असदृशः,—असाधारणः, तथा मधुरतां बिभर्तीति मधुरताभृतः,—मधुरतया सौन्दर्य्येण भृतः,—पूरितः, माधुर्य्यजुषः इत्यर्थः, तदीया विभ्रमाः,—स्मरविलासा इव, परां शोभां दधते स्म—धारयति स्म। अत्र असदृश इत्यस्य वेश इत्यस्य विशेषणत्वे टक्प्रत्ययान्ततया अकारान्तत्वात् एकवचनान्तता, विभ्रमा इत्यस्य विशेषणत्वे क्विबन्ततया शकारान्तत्वात् बहुवचनान्तता, तथा मधुरताभृत इत्यस्य वेश इत्यस्य विशेषणत्वे क्तप्रत्ययान्ततया अकारान्तत्वात् एकवचनान्तता, विभ्रमा इत्यस्य विशेषणत्वे क्विबन्ततया तकारान्तत्वात् बहुवचनान्तता। एवं दधते इति क्रियापदस्य वेश इत्यस्य कर्त्तृत्वे "दध धारणे" इति आत्मनेपदिनः दधधातोः प्रथमपुरुषैकवचनान्तता, विभ्रमा इत्यस्य कर्त्तृत्वे "डु धा ञ् धारणपोषणयोः" इति धातोः प्रथमपुरुषीयबहुवचनान्ततेति वचनभेदेऽपि असदृश इत्यादिपदानां श्लेषेणोपमानान्वययोगितया साधारणधर्म्मांशैकरूपत्वात् न दोष इति बोध्यम्। उदाहरणान्तरं यथा,—"अपि लोकयुगं दृशावपि, श्रुतदृष्टा रमणीगुणा अपि। श्रुतिगामितया दमस्वसुः, व्यतिभाते सुतरां धरापते॥" अत्र "व्यतिभाते" इति एकक्रियापदस्य एक-द्वि-बहुवचनान्तत्वं बोध्यम्।

(द) एतदुदाहरणानां पूर्व्वोदाहरणापेक्षया वैलक्षण्यं दर्शयितुं पूर्वोदाहरणेषु भग्नप्रक्रमत्वं दर्शयति, पूर्वेति।—पूर्वोदाहरणेषु—"सुधेव विमलश्चन्द्रः" इत्यादिषु। एकस्यैव—उपमेयस्यैवेत्यर्थः, साधारणधर्म्मेण—यथा विमल इति पदं चन्द्र इत्यने-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एवमनुप्रासे वैकल्यस्य अपुष्टार्थत्वम् । (ध) यथा,—

"अनणुरणन्मणिमेखलमविरलशिञ्जानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे ! रणरणकमकारणं कुरुते ॥ (न)

एवं समासोक्तौ साधारणविशेषणवशात् परार्थस्य (प) प्रतीतावपि पुनस्तस्य शब्देनोपादानस्य अप्रस्तुतप्रशंसायां व्यञ्जनयैव प्रस्तुतार्थावगतेः शब्देन तदभिधानस्य च पुनरुक्तत्वम् । क्रमेण उदाहरणम्,—

"अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम् ।
निरकासयद्रविमपेतवसुं वियदालयादपरदिग्गणिका ॥" (फ)

---

नान्वेति, न तु सुधेत्यनेन, एवमादिषु अन्वयसिद्धेः,—अन्वयबोधनिष्पत्तेः, योग्यत्वादिति शेषः, प्रक्रान्तस्य अर्थस्य—आकाङ्क्षितसाधारणधर्मस्य, स्फुटः,—सम्यक् इत्यर्थः, अनिर्वाहः,—उपमानेनान्वयस्यानुपपत्तिः अयोग्यत्वात् इति शेषः । लिङ्गव्यत्ययादिना योग्यसामानाधिकरण्योपपादने प्रथमोत्थापिताऽऽकाङ्क्षाविषयीकृतेन प्रकारेण पश्चादनुक्तिरिति भग्नप्रक्रमत्वमिति भावः । "अत्रोभयान्वयाभिप्रायेण प्रयुक्तस्यैकतरान्वयसम्भवे अभवन्मतयोग्यत्वम्" इत्यपरे ।

(ध) एवमिति ।—वैकल्यस्य—निरर्थकस्य, रसाद्युत्कर्षानाधायकस्येति यावत्, तच्च मुख्यार्थानुपकारित्वरूपापुष्टार्थत्वं पर्यवस्यति ।

(न) उदाहरति, अनणिवति ।—वेश्याविरक्तस्य कस्यचिदुक्तिरियम् । हे अरुणचरणे !—अलक्तकरञ्जितत्वादिति भावः, अनणु,—अमल्पं, यथा तथा रणन्ती मणिमेखला यस्मिन् तत्, तथा अविरलं—घनं, शिञ्जानौ—स्वनन्तौ, मञ्जू—मनोहरौ, मञ्जीरौ—नूपुरौ, यस्मिन् तत् तथाविधं, परिसरणं—सञ्चरणं, तवेति शेषः, अकारणं—निरर्थकं, रणरणकं—पुंसाम् औत्सुक्यविशेषं, कुरुते । अत्र लघुरकारलकारादिघटितानुप्रासस्य माधुर्य्यातिशयव्यञ्जकतया शृङ्गारादेरेवोपकारित्वं, पुनः पर्य्यवसितार्थस्य वेश्याविरागस्य न किञ्चिदुपकारित्वम् इति अपुष्टार्थत्वमवधेयम् ।

(प) परार्थस्य—रूपकस्य, उपमानस्य वेत्यर्थः ।

(फ) अनुरागवन्तमिति ।—अपरा—पश्चिमा, दिक् एव गणिका—वेश्या, अनुरागः,—रक्तिमा प्रेम च, तद्वन्तं, लोचनयोः,—नेत्रयोः, सुखं—सुखजनकं, मनोहरमिति भावः, अतापकरं—सौम्यमित्यर्थः, वपुः,—शरीरं, दधतं—धारयन्तमपि,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्रापरदिगित्येतावतैव तस्या गणिकात्वं प्रतीयते। (ब)

"आह्रतेषु विहङ्गमेषु मशको नायान् पुरो वार्य्यते
मध्ये वा धुरि वा वसंस्तृणमणिर्धत्ते मणीनां धुरम्।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक् सामान्यमचेतसं प्रभुमिवानामृष्टतत्त्वान्तरम्॥" (भ)

अत्र अचेतसः प्रभोरभिधानम् अनुचितम्। (म)

---

अपेतवसुम्—अपगतकिरणं निर्द्धनञ्च, रविं—दिवाकरं, [नायकञ्च इति ध्वनिः] वियदालयात्—आकाशभवनात्, निरकासयत्—द्वीपान्तरं प्रापयामास अथ च दूरीचकार। प्रमिताक्षरा वृत्तम्। माघस्य इदं पद्यम्।

(ब) अत्र रविमित्यनेनैव यथा भुजङ्गत्वमायाति, तथैव अपरदिगित्युक्त्यैव गणिकाप्रतीतिरिति भावः।

(भ) आह्रतेष्विति।—अत्र यत्तदर्थयोराकाङ्क्षया लाभः, विहङ्गमेषु—विहायसा—आकाशेन गच्छन्तीति तथोक्तेषु, कोकिलादिषु इत्यर्थः, आह्रतेषु—आकारितेषु, पुरः,—अग्रतः, आयान्—अहमपि विहायोगमनात् विहङ्गम इति मत्वा आगच्छन्, मशकः न वार्य्यते—न निषिध्यते, येनेति शेषः, तृणमणिः,—क्षुद्राकारमणिविशेषः, मध्ये वा धुरि—अग्रे, यानमुखे इत्यर्थः, वा वसन् मणीनां धुरं—भारं, मर्य्यादामित्यर्थः, धत्ते—धारयति, ["मध्ये यद्धुरि वा" इति पाठे,—यस्य धुरि—यानमुखे, मध्ये वा—अर्थादुपस्थितस्य यानस्यैव मध्ये वा वसंस्तृणमणिः,—तृणाकर्षकः मणिः, अल्पमणिरित्यर्थः, यानशोभाजनकमहामणीनां धुरं—साम्यं, धत्ते; यानस्य पश्चाद्भागस्तावत् तृणमणेः स्थानं, तद्भिन्ने मध्यादौ तद्विन्यासात् तत्स्वामिनोऽविवेचकत्वमिति भावः। ("धूः स्त्री क्लीवे यानमुखम्" इति कोषः)। "मध्ये वा धुरि वा वसन्" इति पाठो न रमणीयः, अनन्वयात् इति ज्ञेयम्]। खद्योतोऽपीति।—पुर इत्यनुषज्यते, यस्य पुरः खद्योतोऽपि तेजस्विनां मध्येऽपि प्रचलितुं—गन्तुं, न कम्पते—न बिभेति इत्यर्थः, अनामृष्टम्—अविवेचितं, तत्त्वान्तरं—वस्तुतत्त्वं, येन तथाविधं, प्रभुमिव अचेतसं—सदसद्विवेकरहितं, तमिति शेषः, सामान्यं—प्राकृतं, जनं धिक्; सत्स्वपि गुणवत्सु प्रधानेषु हीनानां धार्ष्ट्यं केवलं धिक्कारायैवेति भावः। शार्दूलविक्रीड़ितं वृत्तम्। भल्लटशतकस्येदं पद्यम्।

(म) अप्रस्तुतेन तादृशासामान्येनैव विशेषस्याचेतनस्य प्रभोरभिव्यक्तिरिति तदभिधानमनुचितमित्यभिप्रायेणाह,—अत्रेति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एवमनुप्रासे प्रसिद्धाभावस्य (य) ख्यातविरुद्धत्वम् । यथा,—

"चक्राधिष्ठिततां चक्री गोत्रं गोत्रभिदुच्छ्रितम् ।
वृषं वृषभकेतुश्च प्रायच्छद् यस्य भूभुजः ॥" (र)

उक्तदोषाणाञ्च क्वचिददोषत्वं क्वचिद् गुणत्वमित्याह, (ल)—

**वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते ।**
**रौद्राऽऽदौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत्॥५८८॥(व)**

एषु च आस्वादस्वरूपविशेषात्मकतया मुख्यगुणप्रकर्षोपकारित्वाद् गुण इति व्यपदेशो भाक्तः । (श) क्रमेण यथा,—

(य) एवमिति ।—प्रसिद्धाभावस्य—अनुप्रासितपदार्थयोर्विवचितेऽन्वये लोकतः शास्त्रतो वा प्रसिद्धिविरहस्येत्यर्थः ।

(र) चक्रेति ।—चक्री—नारायणः, चक्राधिष्ठिततां—चक्रवर्त्तित्वं, मण्डलाधिकारित्वमित्यर्थः, गोत्रभित्—इन्द्रः, उच्छ्रितम्—उन्नतं, गोत्रं—वंशं, वृषभकेतुः,—हरश्च, वृषं—धर्म्ममित्यर्थः, यस्य भूभुजः,—राज्ञः, प्रायच्छत्—प्रददौ । [ "प्रायच्छन्नस्य भूभुजः" इति पाठान्तरे,—एते चक्र्यादयः अस्य—पुरोवर्त्तिन इत्यर्थः, भूभुजः प्रायच्छन् —प्रददुः ] अत्र कर्त्तृकर्म्मनियमेन स्तुतिः अनुप्रासानुरोधेनैव प्रतिपादिता, नारायणकर्त्तृकचक्रवर्त्तित्वदानम्, इन्द्रकर्त्तृकं गोत्रदानं, शिवकर्त्तृकञ्च धर्म्मदानं न पुनः पुराणेतिहासादिषु तथा प्रसिद्धम्, इति प्रसिद्धिविरहात् ख्यातविरुद्धता ।

(ल) सम्प्रति दोषाणां नित्यत्वाऽनित्यत्वप्रतिपत्त्यर्थमनित्यदोषानाह,—उक्तेति । क्वचिदिति ।—यत्र रसादीनामपकर्षकत्वं प्रकर्षकत्वञ्च नास्ति तत्रेत्यर्थः । यत्र तु रसादीनामपकर्षकत्वं नास्ति, प्रत्युत प्रकर्षकत्वमेव, तत्र गुणत्वम् ।

(व) तत्र दोषोद्देशकक्रमेण यथासम्भवं तान् दर्शयति, वक्तरीति ।—क्रोधसंयुक्ते वक्तरि तथा समुद्धते—औद्धत्यव्यञ्जके, वाच्ये—अर्थे प्रतिपाद्ये इत्यर्थः, च सति दुःश्रवत्वं रौद्रादिरसे तु—पुनः, अत्यन्तं गुणः भवेत् । आदिशब्दाद्वीरबीभत्सयोर्ग्रहणम् ।

(श) ननु गुणानां रसधर्म्मत्वं त्रिविधत्वञ्च वक्ष्यति, दुःश्रवत्वादीनां तदुभयाभावात् कथं गुणत्वम् ? इत्यत आह, एषु चेति ।—दुःश्रवत्वादिष्वित्यर्थः, आस्वादानां—रसानां, स्वरूपविशेषात्मकतया—साधर्म्यविशेषरूपतया, ये मुख्यगुणाः,—माधुर्यादयः, तत्कृतो यः प्रकर्षः,—रसाद्युत्कर्षः, तस्योपकारित्वात्—अनुकूलत्वात्, व्यपदेशः,—कथनं, भाक्तः,—गौणः, गौणव्यवहार इत्यर्थः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"तद्विच्छेदकृशस्य कण्ठलुठितप्राणस्य मे निर्दयं
क्रूरः पञ्चशरः शरैरतिशितैर्भिन्दन् मनो निर्भरम्।
शम्भोर्भूतकृपाविधेयमनसः प्रोद्दामनेत्रानल-
ज्वालाजालकरालितः पुनरसावास्तां समस्तात्मना॥"(ष)

अत्र शृङ्गारे कुपितो वक्ता। (स)

"मूर्द्धव्याधूयमानध्वनदमरधुनीलोलकल्लोलजालो-
द्भूताम्भःक्षोददम्भात् प्रसभमभिनभः क्षिप्तनक्षत्रलक्षम्।
ऊर्द्ध्वन्यस्ताङ्घ्रिदण्डभ्रमिभवरभसोद्यन्नभस्वत्प्रवेश-
भ्रान्तब्रह्माण्डखण्डं प्रवितरतु शिवं शाम्भवं ताण्डवं वः॥"(ह)

---

(ष) वक्तरि क्रोधसंयुक्ते दुःश्रवत्वस्य गुणमुदाहरति, तदिति।—तस्याः विच्छेदेन कृशस्य—क्षीणस्य, कण्ठलुठितप्राणस्य—कण्ठागतजीवनस्य, मे—मम, मनः निर्दयं यथा तथा अतिशितैः,—अतितीक्ष्णैः, शरैः निर्भरम्—अतिमात्रं, भिन्दन्—विध्यन्, अत एव क्रूरः,—घातुकः, ("नृशंसो घातुकः क्रूरः" इत्यमरः) असौ पञ्चशरः,—कामः, समस्तात्मना—सर्व्वशरीरेण, भूतेषु—प्राणिषु, या कृपा—दया, तस्याः विधेयं—वशवर्त्ति, मनो यस्य तादृशस्य, शम्भोः,—हरस्य, प्रोद्दामः,—अतिदारुणः, यः नेत्रानलः तस्य ज्वालानां—शिखानां, जालैः,—समूहैः, करालितः,—दग्धः, पुनः आस्तां—भवतु, पूर्वं पाञ्चभौतिकं शरीरं दग्धम्, इदानीं तस्य लिङ्गशरीरमपि दग्धं भूयादिति भावः। इदं ग्रन्थकर्त्तुः पद्यम्। शार्दूलविक्रीड़ितं वृत्तम्।

(स) अत्र क्रोधस्यास्वाद्यमानत्वेऽपि प्राकरणिकतया प्रधानत्वेन रतेरास्वाद्यमानत्वात् शृङ्गारत्वमेव, न तु रौद्रत्वम्, अत एवाह, अत्र शृङ्गारे इति।—सुगमम्।

(ह) वाच्यस्योद्धतत्वे दुःश्रवत्वं गुणमुदाहरति, मूर्द्धेति।—मूर्द्धनि—शिरसि, व्याधूयमाना—सञ्चरन्ती, अत एव ध्वनन्ती—स्वनन्ती, या अमरधुनी—देवनदी, गङ्गा इत्यर्थः, तस्याः लोलं—चपलं, यत् कल्लोलजालं—महातरङ्गसन्ततिः, तस्मात् उद्भूताः,—उत्क्षिप्ताः, ये अम्भसां—जलानां, क्षोदाः,—बिन्दवः, तेषां दम्भात्—व्याजात्, प्रसभं—सहसा, अभिनभः,—नभसि, [ विभक्त्यर्थे अव्ययीभावः ] क्षिप्तानि नक्षत्राणां लक्षाणि—तारासमूहाः, यस्मिन् तत्, तथा ऊर्द्ध्वं न्यस्तः,—निक्षिप्तः, उत्क्षिप्त इत्यर्थः, यः अङ्घ्रिदण्डः,—पाददण्डः, तस्य, या भ्रमिः,—भ्रामणं, घूर्णनमित्यर्थः, तस्मात् भवः,—उत्पन्नः, यः रभसः,—वेगः तेन, उद्यन्—उद्गच्छन्, उत्तिष्ठन्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र उद्धतताण्डवं वाच्यम्। इमे पद्ये मम। रौद्रादिरसे तु एतद्वितयापेक्षयाऽपि दुःश्रवत्वमत्यन्त गुणः। (क) यथा,— "उत्कृत्योत्कृत्य कृत्तिम्" इत्यादि। अत्र बीभत्सो रसः।

**सुरतारम्भगोष्ठ्यादावश्लीलत्वं तथा पुनः ॥६००॥(ख)**

तथा पुनरिति गुण एव। यथा,—

"करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोड़िते।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते॥" (ग)

---

इत्यर्थः, [ "भ्रमिभररभसोद्यन्" इति पाठे,—भ्रमिभरेण—भ्रमणातिशयेन यो रभसः,—वेगः, तस्मादुद्यन्—जायमान इत्यर्थः।] यः नभस्वान्—वायुः, तस्य प्रवेशेन ["प्रवेश" इत्यत्र "प्रवेग" इति पाठान्तरम्] भ्रान्तं—कुलालचक्रवत् घूर्णितं, ब्रह्माण्डखण्डं यस्मिन् तथाभूतं, शम्भोरिदं शाम्भवं ताण्डवं—नृत्यं, ( "ताण्डवं नटनं नृत्यम्" इत्यमरः ) वः,—युष्माकं, शिवं—मङ्गलं, प्रवितरतु—ददातु। शार्दूलविक्रीड़ितं वृत्तम्।

(क) अत्र ताण्डवस्य लोकसंहारकारित्वात् उद्धतत्वम्; एतद्वितयापेक्षया—क्रुद्धवक्तृसमुद्धतवाच्यापेक्षया। रौद्रे दुःश्रवत्वं यथा,—"चित्रीयच्चत्रपक्षे मयि सति सुतरां चन्द्रबिम्बेन शम्भोश्चापाचार्य्यस्य चण्डध्वनि धनुरधुना ध्वंसितं धिक् तितिक्षाम्। सद्यव्याकुण्ठधारं कठिनमतितरां तस्य कण्ठे कुठारं क्रीड़ा पीड़ाम्बुराशेः परिभवसरितश्चाद्य पारं प्रपद्ये॥" अत्र क्रोधस्यास्वाद्यमानतया भार्गवस्य वक्तुः क्रुद्धतया च सुतरां दुःश्रवत्वस्य गुणत्वम्; सर्वथा आस्वादरहिते काव्याभ्यासे दुःश्रवत्वादीनां न दोषत्वं न वा गुणत्वम्। काव्यधर्म्माणां दोषगुणानां तत्राप्रवेशादिति सारः।

(ख) अश्लीलत्वस्य गुणत्वमाह, सुरतेति।—सुरतस्य आरम्भः,—चेष्टा, तस्य गोष्ठी—सभा, सम्भोगार्थसमवेतस्त्रीपुरुषसमूह इत्यर्थः, तत्प्रभृतिषु अश्लीलत्वं तथा पुनः,—गुण एव इत्यर्थः।

(ग) उदाहरति, करीति।—सम्बाधे—सङ्कुलेऽपि, नराश्वादिनैबिड्येन दुष्प्रवेशे इत्यर्थः, करिणां—हस्तिनां, हस्तेन—शुण्डादण्डेन, अन्तः,—अभ्यन्तरदेशे, विलोड़िते—विस्फारिते, साधनानां—सैन्यानाम्, अन्तः,—मध्ये प्रविश्य पुंसः,—जिगीषोर्वीरस्य इति भावः, ध्वजः,—केतुः, उपसर्पन्—सञ्चरन्, विराजते—शोभते। अश्लीलार्थस्तु,—सम्बाधे—सङ्कुचितेऽपि, करिहस्तेन—कामशास्त्रोक्तकरविमर्शलिङ्गेन, संसक्तायतर्ज्जन्यनामिकापृष्ठारूढ़मध्यमाङ्गुलिरूपेण गजतुण्डमुद्रया इत्यर्थः, तदुक्तं,—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र हि सुरतारम्भगोष्ठ्यां "द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु" इति कामशास्त्रस्थितिः। आदिशब्दात् शमकथाप्रभृतिषु बोद्धव्यम्। (घ)।

**स्यातामदोषौ श्लेषादौ निहतार्थाऽप्रयुक्तते ॥६०१॥(ङ)**

यथा,—

"पर्व्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतं गहनम्।
हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत ॥"(च)

---

"तर्जन्यनामिकायुक्ता मध्यमा पृष्ठतो यदि। करिहस्त इति प्रोक्तः कामशास्त्रविशारदैः॥" इति शास्त्रात्; अन्तः विलोड़िते—विस्फारिते, साधनान्तः,—योनिमध्ये, प्रविश्य उपसर्पन्—गतागतं कुर्व्वन्, पुंसः ध्वजः,—लिङ्गं, विराजते। अत्र व्रीड़ाव्यञ्जकमश्लीलम्।

(घ) गुणत्वमुपपादयति, अत्र हीति।—पिशुनयेत्—सूचयेत्, रहस्यवस्तु—गोप्यं विषयं, कामशास्त्रस्थितिः,—कामशास्त्रनियमः, रहस्यव्यञ्जनस्य सुरतोद्रेकानुकूलत्वात् गुणत्वमिति भावः। शमकथाप्रभृतिषु इति।—प्रभृतिशब्दाद्वैराग्योत्पादककथाग्रहणम्; तत्र शमकथायां यथा,—"उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे। क्लेदिनि स्त्रीव्रणे सक्तिः अकृमेः कस्य जायते ?" इति। अत्र जुगुप्साव्यञ्जकाश्लीलत्वस्य गुणत्वम्। प्रभृतिशब्दात् छद्मकथादीनां ग्रहणम्, छद्मकथा—छलोक्तिः; अमङ्गलाश्लीलत्वस्य गुणवत्त्वं छद्मकथायां यथा,—"निर्वाणवैरदहनाः" इति। कुरूणाममङ्गलसूचनं नटस्य वचनमिदम्। अत्र प्रशमादयः शब्दाः मरणरूपाऽमङ्गलसूचका अपि छद्मोक्तौ गुणा एव इति ज्ञेयम्।

(ङ) स्यातामिति।—श्लेषादौ निहतार्थत्वम् अप्रयुक्तत्वञ्च अदोषौ स्यातां, नापि गुणः नापि दोष इत्यर्थः।

(च) पर्वतेति।—(हे जनाः)। पृथिव्यां पतत् सुरसरिदम्भः,—गङ्गाजलं, यूयं नमत, कीदृशम् ? पर्वतभेदि—हिमालयभेदकरं, हिमालयं भित्त्वा निर्गमनशीलमित्यर्थः, पवित्रं—पावनं, पापध्वंसकरमित्यर्थः, नरकस्य—पारलौकिकदुःखस्य, जैत्रं—विनाशकं, बहुभिर्मतं—पूजितं, गहनं—महावेगित्वाद् दुरवगाहं, यद्वा,—गहनं—घनम्, अतिप्रवृद्धमित्यर्थः, हरिमिव—विष्णुमिव, पर्व्वतभेदी—गोवर्द्धनोद्धारी, स चासौ पवित्रश्च इति तम्; नरकस्य—नरकनाम्नोऽसुरस्य, जैत्रं—विनाशकं, पराजय-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र इन्द्रपक्षे पवित्रशब्दो निहतार्थः, सिंहपक्षे मतङ्गशब्दो मातङ्गार्थेऽप्रयुक्तः ।

**गुणः स्यादप्रतीतत्वं ज्ञत्वं चेद्वक्तृवाच्ययोः ॥६०२॥ (छ)**

यथा,—"त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्त्तिनीम् ।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥" (ज)

**स्वयं वापि परामर्षे ॥ ६०३ ॥ (झ)**

अप्रतीतत्वं गुण इत्यनुषज्यते । यथा,—

"युक्तः कलाभिस्तमसां विवृद्ध्यै
क्षीणश्च ताभिः क्षतये य एषाम् ।

---

करमित्यर्थः, गहनं—दुर्बोधतत्त्वं, हरिमिव—इन्द्रमिव, पर्व्वतानां पक्षच्छेदकत्वात् पर्व्वतभेदी, पविं—वज्रं, त्रायते—धारयति इति पवित्रः, स चासौ स चेति तं, जैत्रं—जयशीलं, नरकस्य—मनुष्यसमूहस्य, बहुमतं—भृशं पूजितं, गहनं—दुर्ज्जयम्; हरिमिव—सिंहमिव, "मृगाणाञ्च मृगेन्द्रोऽहम्" इति स्मरणात् सिंहस्य वन्दनीयत्वं, पर्व्वतभेदी—गिरिगह्वरमाश्रयत्वेन सोऽस्यास्तीति, पवित्रः,—देवरूपत्वात्, नरकस्य—मनुष्यसङ्घस्य, जैत्रं, बहून् मतङ्गान् हन्तीति तम्, इति सङ्क्षेपः ।

(छ) गुण इति ।—वक्तृवाच्ययोः,—वक्तुः बोद्धव्यस्य च, ज्ञत्वं—सङ्केतज्ञानित्वं, चेत् तदा अप्रतीतत्वं गुणः स्यात् ।

(ज) उदाहरति, त्वामिति ।—तारकोपद्रुतदेवगणकृता ब्रह्मणः स्तुतिरियम् । त्वां पुरुषार्थप्रवर्त्तिनीं—पुरुषार्थौ—भोगापवर्गौ, तयोः प्रवर्त्तिनीं—साधयित्रीं, प्रकृतिं—मूलकारणं, ("प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे" इत्यमरः) आमनन्ति—कथयन्ति, बुधा इति शेषः । त्वामेव तद्दर्शिनं—तस्याः,—प्रकृतेः, द्रष्टारं, साक्षित्वेनेति भावः, उदासीनं—कूटस्थं, पुरुषं विदुः,—जानन्ति । अत्र प्रकृतिपदं प्रधानवाचकं योगशास्त्र एव प्रयोगप्राचुर्य्येण प्रसिद्धं, "प्रधानं प्रकृतिः स्त्रियाम्" इति सङ्केताभिज्ञत्वे तु गुण एव; एवं पुरुषपदं परमात्मवाचकं योगशास्त्र एव प्रसिद्धं "क्षेत्रज्ञ आत्मा पुरुषः" इति सङ्केताभिज्ञत्वे तु गुण एव; तथा हि,—वक्तॄणां देवानां, बोद्धव्यस्य ब्रह्मणश्च ज्ञत्वात् योगशास्त्रप्रसिद्धप्रकृतिपुरुषशब्दौ अप्रतीतौ अपि गुणाय कल्पेते इति सारः । कुमारसम्भवस्येदं पद्यम् ।

(झ) स्वयमिति ।—परामर्षे—कथने ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शुद्धं निरालम्बपदावलम्बं
तमात्मचन्द्रं परिशीलयामि ॥" (ञ)

कथितञ्च पदं पुनः।
विहितस्यानुवाद्यत्वे विषादे विस्मये क्रुधि ॥
दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने।
अर्थान्तरसङ्क्रमितवाच्ये हर्षेऽवधारणे ॥६०४॥ (ट)

---

(ञ) युक्त इति।—यः तमसां—तमोगुणानाम्, अज्ञानानामित्यर्थः, विवृद्ध्यै—विशेषेण वर्द्धनाय, कलाभिः,—पृथिव्यादितत्त्वैः, युक्तः स्यात्, यश्च एषां—तमसां, क्षतये—ध्वंसाय, ताभिः,—कलाभिः, क्षीणः,—रहितः, स्यात्, शुद्धं—पूतं, कामादिदोषरहितमित्यर्थः, केवलं वा निरालम्बपदावलम्बं—निरालम्बपदं—शिरःस्थाधोमुखकमलकर्णिकामध्यं तदवलम्बं—तदाश्रयं, तं—प्रसिद्धम्, आत्मा एव चन्द्रः तं, परमात्मानमित्यर्थः, चन्द्रपक्षे—कलाभिः,—षोड़शभागैकभागैः, क्षीणः,—हीनः, तमसां—तिमिराणां, विवृद्ध्यै यो भवति, यश्च ताभिर्युक्तः, एषां—तमसां, क्षतये भवति, तं शुद्धं—शुभ्रप्रकाशं, निरालम्बपदम्—आकाशम् अवलम्बो यस्य तं, परिशीलयामि—चिन्तयामि। अत्र कलानिरालम्बपदात्मपदानां तत्त्वादिवाचकत्वं योगशास्त्र एव प्रसिद्धम्; आत्मभावप्रतीतेरुद्देश्यत्वादस्य गुणवत्त्वम् इत्याशयः। उपजातिः वृत्तम्।

(ट) कथितमिति।—कथितपदत्वं विहितानुवाद्यत्वादिषु एकादशप्रकारेषु गुणः स्यादित्यर्थः। विहितस्येति।—उद्देश्यप्रतिनिर्देश्यस्थले उक्तपदप्रयोगादर्थान्तरप्रतीत्यभावेन झटित्येव शाब्दबोधः, ततो रसादिधीरविलम्बेनैवेत्यत्र कथितपदत्वस्य गुणवत्त्वम् इति भावः। विषाद इत्याद्युपलक्षणं,यत्र यत्र द्विरुक्तं पदं लक्षणयाऽर्थान्तरबोधकं तत्रापि कथितपदत्वं गुणः इत्याशयः; अत एव वक्ष्यति, एवमन्यत्रापीति।—तेन "रटति रटति त्र्यम्बकपुरन्ध्रिवर्गम्" इत्यत्र द्विरुक्तं रटतिपदं सकले लाक्षणिकं पार्वत्यां सर्व्वजनानुरागं व्यञ्जयति; "पीत्वा पीत्वा सुरभिमदिरामादरात् कान्तदत्तां कण्ठं तस्य प्रसितु रभसाद् बाहुपाशद्वयेन। वद्दं दन्तव्रणकिणकलङ्काकुलं कारयेन्दुं मत्तानान्तु व्रजति गुणतां दातुरापत्प्रदत्वम् ॥" अत्र द्विरुक्तं पीत्वेति पदं पीनःपुन्यलक्षकमत्र हृढ़िरेव। "रक्ष रक्ष रघुव्याघ्र! भवन्नाथमनाथवत्। घोरदंष्ट्रा करालास्यं रक्षो भक्षति मामिदम् ॥"

गुण इत्येव यथा,—"उदेति सविता ताम्रः" इत्यादि । अत्र विहितानुवादः ।

"हन्त ! हन्त ! गतः कान्तो वसन्ते सखि नागतः ।" (ठ)

अत्र विषादः ।

"चित्रं चित्रमनाकाशे कथं सुमुखि ! चन्द्रमाः ।" (ड)

अत्र विस्मयः ।

"सुनयने नयने निधेहि—" इति । (ढ)

---

अत्र रचेति इति लाक्षणिकं भयातिशयं व्यञ्जयति ; "याहि याहि सुमुखि ! प्रियधाम याहि कान्तमशरीरशराधेः । बन्धुरेव विपदः प्रतिकारे सन्दधाति सुतरामुपयोगम् ॥" अत्र याहि याहीति पदं इते लाक्षणिकं त्वरातिशयं व्यञ्जयतीत्यादावपि कथितपदत्वं गुणः । पदानुप्रास एव लाटानुप्रासः वक्ष्यते ; तस्य शब्दवैचित्र्यद्वारा रसाद्युपकारकत्वम् इति गुणत्वमेव, अर्थान्तरसङ्क्रमितवाच्यो ध्वनिप्रभेदस्तत्वार्थविशेषव्यञ्जकत्वमिति गुणकत्वम् । क्रुधि यथा,—"यातु यातु किमनेन तिष्ठता मुञ्च मुञ्च सखि ! सादरं वचः । पामरीवदनलोलुपो युवा नैष वेत्ति कुलजाधरासवम् ॥" अत्र द्विरुक्तं पदं समभिव्याहृतपदार्थस्य अयोगव्यवच्छेदं लक्षयति क्रोधातिशयं व्यञ्जयति च । क्रोधिनोक्तावप्यर्थान्तराव्यञ्जकत्वात् कथितपदत्वं दोष एव ; यथा,—"तद्विच्छेद-कृशस्य" इत्यादौ मनःपदम् । दैन्ये यथा,—"देहि देहि रूपमेव तु चित्तम् ।" अत्र द्विरुक्तं पदं दानप्रयुक्तिपौनःपुन्यं लक्षयद्दैन्यातिशयं व्यञ्जयति । अनुकम्पायां यथा, —"दीन रे वसु गृहाण गृहाण ।" अत्र द्विरुक्तं पदं ग्रहणप्रयुक्तिपौनःपुन्यं लक्षयदनुकम्पाऽतिशयं व्यञ्जयति । प्रसादने यथा,—"मुञ्च मुञ्च सखि ! नेत्रमुद्रणं न क्षमा मयि पदानते क्षमा ।"

(ठ) हन्त हन्तेति ।—अत्र द्विरुक्तं पदं वाच्यस्य विषादस्य अतिशयं व्यञ्जयति ।

(ड) चित्रमिति ।—नायिकाया मुखं दृष्ट्वा नायकस्य उक्तिरियम् । एवं चित्रचित्रमित्यत्र वाच्यस्य विस्मयातिशयम् ।

(ढ) सुनयने इति ।—अत्र द्वितीयनयनपदं भाग्यवत्त्वादिगुणविशिष्टनयनबोधकत्वाद् गुणः । हर्षे यथा,—"कथय कथय दूत ! क्वागतो रामभद्रः ।" यद्वा,—"हन्त हन्तागतः कान्तः श्रीमानद्य मदाश्रयम्" । अवधारणमयोगव्यवच्छेदोऽन्ययोगव्यवच्छेदश्च । तत्रायोगव्यवच्छेदे,—"हन्ति हन्ति रिपुं वीरः" । अन्ययोगव्यवच्छेदे

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र लाटानुप्रासः। "नयने तस्यैव नयने च" इत्यादौ अर्थान्तरसङ्क्रमितवाच्यो ध्वनिः।

**सन्दिग्धत्वं तथा व्याजस्तुतिपर्य्यवसायि चेत् ॥६०५॥ (ण)**

गुण इत्येव। यथा,—

"पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव!।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम्॥" (त)

**वैयाकरणमुख्ये तु प्रतिपाद्येऽथ वक्तरि।**
**कष्टत्वं दुःश्रवत्वं वा ॥ ६०६ ॥ (थ)**

---

यथा,—"तद्गच्छनाह्नितमतिर्बहुचाटुगर्भं कार्य्योन्मुखः खलु जनः कृतकं ब्रवीति। तत् साधवो ननु विदन्ति विदन्ति किन्तु कर्त्तुं वृथा प्रणयमस्य न पारयन्ति॥" अत्र "विदन्ति" इति द्वितीयं पदं साधव एव विदन्तीत्यन्ययोगव्यवच्छेदपरम्। अयोग-व्यवच्छेदस्तु नञ्द्वयेनैव प्रतीयते।

(ण) सन्दिग्धत्वमिति।—व्याजस्तुतौ पर्य्यवस्यतीति व्याजस्तुतिपर्य्यवसायि—व्याजस्तुतिप्रत्यायकमित्यर्थः।

(त) पृथ्विति।—राजानं प्रति कस्यचित् दरिद्रस्योक्तिरियम्। हे देव! सम्प्रति आवयोः,—तव मम च इत्यर्थः, सदनं—गृहं, समं—तुल्यम्; त्वत्तो धनलाभे तु मद्गृहमनेवंभावात् पश्चात् समं न भविष्यतीत्यर्थः। साम्यं प्रतिपादयति,—पृथूनि—प्रचुराणि, कार्त्तस्वरपात्राणि—स्वर्णभाजनानि, यस्मिन् तदित्येकोऽर्थः; पृथुकानां—शिशूनां, ("पृथुकः शावकः शिशुः" इत्यमरः) आर्त्तस्वरस्य क्षुधया, इति भावः, पात्रं—स्थानम् इत्यपरोऽर्थः; भूषिताः,—रत्नाद्यलङ्कृताः, निःशेषाः,—सर्व्वे, परिजनाः,—परिवाराः, यस्मिन् तदित्येकोऽर्थः; भुवि उषिताः,—गेहाभावात् आसनाभावाद्वा कृतवासाः, निःशेषाः परिजनाः,—पुत्रकलत्रादयः,यत्र तदित्यपरोऽर्थः; विलसद्भिः,—शोभमानैः, करेणुभिः,—हस्तिभिः, यद्वा,—विलसन्तीभिः करेणुभिः,—हस्तिनीभिः, ("करेणुरिभ्यां स्त्री नेभे" इत्यमरः) गहनं—निविड़ं, दुष्प्रवेशमिति भावः, इत्येकोऽर्थः; विलेषु सीदन्तीति विलसदः ते एव इति विलसत्काः,—[स्वार्थे कन्प्रत्ययः] मूषिका इत्यर्थः, तेषां रेणुभिः,—धूलिभिः गहनं—पूर्णमित्यर्थः, इत्यपरोऽर्थः। अत्र विशेषणपदानां सन्देहयोग्यत्वेऽपि व्याजस्तुत्यां पर्य्यवसानात् गुणवत्त्वम्।

(थ) वैयाकरणेति।—व्याकरणं वेत्ति अधीते वा वैयाकरणः, सः मुख्यः,—



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

गुण इत्येव। यथा,—

"दीधीवेवीट्समः कश्चिद् गुणवृद्ध्योरभाजनम्।
क्विप्प्रत्ययनिभः कश्चिद् यत्र सन्निहिते न ते॥" (द)

अत्रार्थः कष्टः, वैयाकरणस्य वक्ता। एवमस्य प्रतिपाद्यत्वेऽपि।

"अत्रातार्प्सीमुपाध्याय! त्वामहं न कदाचन।"

अत्र दुःश्रवत्वम्। वैयाकरणो वाच्यः। एवमस्य वक्तृत्वेऽपि। (ध)

**ग्राम्यत्वमधमोक्तिषु॥ ६०७॥ (न)**

आदिर्यस्य तादृशे, वक्तरि, प्रतिपाद्ये—बोद्धव्ये वा। [आदिपदेन नीरसतार्किकादीनां ग्रहणम्]।

(द) वैयाकरणे कर्त्तरि कष्टत्वस्य गुणत्वमुदाहरति, दीधीति।—कश्चित्—जनः, दीधीवेवीट्समः,—दीधीवेवीधातुभ्यां इडागमेन च समः,—तुल्यः, गुणवृद्ध्योः,—दाक्षिण्यादिगुणस्य अभ्युन्नतेश्च इत्यर्थः, अभाजनम्—अनाश्रयः; अन्यत्र,—["अदेङ्गुणः" (१।१।२ पा०) "वृद्धिरादैच्" (१।१।१ पा०) इति सूत्राभ्यां] विहिते गुणवृद्धी ["दीधीवेवीटाम्" (१।१।६ पा०) इति] निषेधेन दीधीवेव्योरिटश्च न विद्येते इति भावः। तथा कश्चित्—जनः, क्विप्प्रत्ययनिभः,—विलुप्त इवेत्यर्थः, ["वेरपृक्तस्य" (६।१।६७ पा०) इति क्विपः] सर्वाभावस्य कथनादिति भावः, यत्र—जने क्विपि च, ते—गुणवृद्धी, न सन्निहिते। [क्विपि परे "क्ङिति च" (१।१।५ पा०) इति गुणवृद्धिनिषेधश्च द्रष्टव्यः]। अत्र दीधीवेवीटाम् गुणवृद्धिनिषेधाऽनभिज्ञानां क्विपः सर्वाभावानभिज्ञानाच्च झटिति प्रतीतिर्न भवतीति एतत्प्रतीतौ कष्टत्वं, परन्त्वत्र वैयाकरणस्य वक्तृत्वात् न दोषः।

(ध) वैयाकरणे वाच्ये दुःश्रवत्वगुणमुदाहरति, अत्रेति।—हे उपाध्याय! अहम् अत्र कदाचन त्वां न अतार्प्सम्—न तर्पितवान्, [अस्मार्षमिति वा पाठः]। अत्र—"अतार्प्सम्" इत्यत्र, दुःश्रवत्वं, गुणः इत्यनुषज्यते। अस्य—वैयाकरणस्य। यथा,—"सोऽध्येष्टवेदांस्त्रिदशानयष्ट" इति। शुष्कतार्किकवक्तृत्वे कष्टत्वं गुणो यथा,—"न्यायानुमानविगुणं कुरुषे महीपते।। हेत्वाभासवदुन्नाव्यं विदुषो याति निग्रहम्॥" अत्र पञ्चावयवन्यायप्रयोगे दुष्टहेतुप्रयोगे वादिनिग्रहकर इत्यर्थः। एतदनभिज्ञानां कष्टम्। एवमन्यस्य बोध्यत्वे बोध्यम्।

(न) ग्राम्यत्वमिति।—अधमानां—नीचानाम्, उक्तिषु—अविदग्धवाक्येषु इत्यर्थः, ग्राम्यत्वं गुणः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

गुण इत्येव। यथा मम,—

"एसो ससहरबिम्बो दोसइ हेअङ्गवीणपिंडो ब्व।
एदे अस्रसमोहा पडन्ति आसासु दुद्धधार ब्व॥" (प)

इयं विदूषकोक्तिः।

निर्हेतुता तु ख्यातेऽर्थे दोषतां नैव गच्छति॥६०८॥ (फ)

यथा,—"सम्प्रति सन्ध्यासमयश्चक्रद्वन्द्वानि विघटयति।"(ब)

कवीनां समये ख्याते गुणः ख्यातविरुद्धता॥६०९॥(भ)

---

(प) उदाहरति, एसो इति।—["एष शशधरविम्बो दृश्यते हैयङ्गवीनपिण्ड इव। एते चांशुसमूहाः पतन्त्याशासु दुग्धधारा इव॥" इति संस्कृतम्]। एष इति।—अत्र हैयङ्गवीनपिण्डदुग्धधाराशब्दप्रयोगो ग्राम्यः वक्तुरधमत्वप्रतीतिकारत्वाद् गुण एव। "मुग्धा दुग्धधिया" इत्यादौ अनुप्रासविशेषादौ ग्राम्यत्वस्यादोषत्वं बोध्यम्।

(फ) निर्हेतुनेति।—निर्हेतुता—हेतुशून्यत्वं, ख्याते—प्रसिद्धे, अर्थे दोषतां नैव गच्छति—प्राप्नोति।

(ब) उदाहरति, सम्प्रतीति।—अत्र सन्ध्यासमयस्य चक्रवाकमिथुनविघटकत्वं प्रसिद्धं, नात्र हेतोराकाङ्क्षेति न दोषः।

(भ) कवीनामिति।—ख्याते—प्रसिद्धे, समये—सिद्धान्ते, नियमे वा, ख्यातविरुद्धता—लौकिकप्रसिद्धिविरोधिता इत्यर्थः, गुणः। अत्र सिद्धान्तविशेषः, स च त्रिप्रकारः, तथा चोक्तमलङ्कारशेखरे,—"असतोऽपि निबन्धेन सतामप्यनिबन्धनात्। नियमस्य पुरस्कारात् सम्प्रदायस्त्रिधा कवेः॥" असतः निबन्धने उदाहरणम्,—"रत्नानि यत्र तत्राद्रौ हंसाद्यल्पजलाशये। जलेभाद्यं नभोनद्यामम्भोजाद्यं नदीष्वपि॥ शुक्लत्वं कीर्त्तिपुण्यादेः कृष्णत्वं ध्वान्तपापयोः। आकाशकर्तृकं नक्तं तमसो वर्षणं तथा॥ प्रतापे रक्ततोष्णत्वे रक्तत्वं क्रोधरागयोः। ज्योत्स्नापानं चकोराणां शैवालं सर्ववारिषु॥ केसराशोकयोः स्त्रीणां गण्डूषात् पादघाततः। मासान्तरेऽपि पुष्पाणि रोमालिस्त्रिवलिः स्त्रियाम्॥" सतामप्यनिबन्धने यथा काव्यचिन्तामणौ,—"वसन्ते मालतीपुष्पं फलपुष्पे च चन्दने। कामिदन्तेषु कुन्दानां कुड्मलेषु च रक्तता। नारीणां श्यामतापातः स्तनयोर्यच्च वा ह्रियै॥" नियमपुरस्कारे यथा,—"हिमवत्येव भूर्जत्वक् चन्दनं मलये परम्। हेमन्तशिशिरौ त्यक्त्वा सर्व्वदा कमलस्थितिः॥ सामान्यग्रहणे शौक्ल्यं पुष्पाभ्रच्छत्रवाससाम्। ध्वजचामर-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कविसमयख्यातानि च,—

**मालिन्यं व्योम्नि पापे, यशसि धवलता,**

**वर्ण्यते हासकीर्त्त्योः,**

हंसानां हारस्य बकभस्मनोः ॥ कृष्णत्वं शैलहस्त्यादिमेघवारिधिवीरुधाम् । भिल्लानामसुराणाञ्च धूपपङ्कशिरोरुहाम् ॥ लौहित्यं धातुमाणिक्यजपारवविवस्वताम् । पद्मपल्लवबन्धूकदाडिमीकरजादिषु ॥ पीतत्वं शालिमण्डूकवल्कलेषु परागके । वर्षास्विव शिखिप्रौढ़िर्मधावेव पिकध्वनिः ॥" अन्यच्च,—"कमलासम्पदोः कृष्णहरितोर्नागसर्पयोः । पीतलोहितयोः स्वर्णपरागाग्निशिखादिषु ॥ चन्द्रे शशैणयोः कामध्वजे मकरमत्स्ययोः । दानवासुरदैत्यानामैक्यमेवाभिसंहितम् ॥" तथा च,—"चिरन्तनस्यापि तथा शिवचन्द्रस्य बालता । मानवा मौलितो वर्ण्या देवाश्चरणतः पुनः ॥" अलङ्कारशेखरे,—"भुवनानि निबध्नीयात् त्रीणि सप्त चतुर्दश । चतस्रोऽष्टौ दश दिशश्चतुरः सप्त चाम्बुधीन् ॥ अष्टादश स्मृताः विद्याः चतस्रश्च चतुर्दश । ये स्थले ते जले जीवा भिन्दन्त्यर्कं रणे मृताः । महत्त्वमाद्रौ मर्गान्ते सूक्ष्मता जगतामपि । शैलादिर्भिद्यते शब्दाम्भः शतधनूपरि ॥ नाम तत्तदुपाधौ स्याच्छङ्करो वृषवाहनः । चिह्नत्व च वृषाङ्कोऽयं ध्वजे सत्त्वाद् वृषध्वजः ॥ शूली न सर्पी गिरिशः शशी न हरिणो विधुः । इन्दुमौलिर्महादेवो गङ्गामौलिर्न तु क्वचित् ॥" अन्यदपि तथा चित्रमीमांसायाम् ;—"श्वेतानि चन्द्र-शक्राश्व-शम्भु-भार्गव-नारदाः । हली शेषाहि-शक्रेभौ सिंह-सौध-शरद्-घनाः ॥" रसगङ्गाधरे,—सूर्य्येन्दुकान्त-निर्मोक-मन्दारद्रु-हिमाद्रयः । हिम-हास-मृणालानि स्वर्गङ्गैरदाश्वकम ॥" काव्यमीमांसायाम् ;—"सिकताऽमृतलोभ्राणि गुणकैरवशर्करा: । नीलानि कृष्ण-चन्द्राङ्क-व्यास-राम-धनञ्जयाः ॥ शनिद्रुंपदजा-काली-राजपट्टविदूरजम् । विषाकाशकङ्कशस्त्रागुरुपापतमोनिशाः ॥ रसावहृतशृङ्गारौ मदतापिच्छराहवः । सौरिचीरं यमी रक्षः कण्ठः खञ्जनकेकिनोः । कृत्या छाया गजाङ्गारखलान्तःकरणादयः । शोणानि च्छत्रधर्म्मश्च त्रेता रौद्ररसस्तथा ॥ चकोरकोकिलापारावतनेत्रं कपेर्मुखम् । तेजःसारसमस्तञ्च भौमकुङ्कुमतक्षकाः ॥ धूसराणि रजो लूता करभो गृहगोधिका । कपोतमूषकौ दुर्गा काककण्ठखरादयः ॥" एतदुपलक्षणम्, "हरिताः सूर्य्यतुरगा बुधो मरकतादयः ।" अवेदं बोध्यम् । "द्वैरूप्ये चाप्रसिद्धौ च नियमोऽयमुदाहृतः । अन्यत्त्वत्र यथा यत् स्यात् तत् तथैवोपवर्ण्यते ॥" इति सङ्क्षेपः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रक्तौ च क्रोधरागौ, सरिदुदधिगतं
पङ्कजेन्दीवरादि ।
तोयाधारेऽखिलेऽपि प्रसरति च
मरालादिकः पक्षिसङ्घः,
ज्योत्स्ना पेया चकोरैः, जलधरसमये
मानसं यान्ति हंसाः ॥
पादाघातादशोकं विकसति, वकुलं
योषितामास्यमद्यैः,
यूनामङ्गेषु हाराः, स्फुटति च हृदयं
विप्रयोगस्य तापैः ।
मौर्वी रोलम्बमाला, धनुरथ विशिखाः,
कौसुमाः पुष्पकेतोः,
भिन्नं स्यादस्य बाणैर्युवजनहृदयं,
स्त्रीकटाक्षेण तद्वत् ॥
अह्न्यम्भोजं, निशायां विकसति कुमुदं,
चन्द्रिका शुक्लपक्षे,
मेघध्वानेषु नृत्यं भवति च शिखिनां,
नाप्यशोके फलं स्यात् ।
न स्याज्जाती वसन्ते, न च कुसुमफले
गन्धसारद्रुमाणाम्,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत्याद्युन्नेयमन्यत् कविसमयगतं
सत्कवीनां प्रबन्धे ॥ ६१० ॥ (म)

एषामुदाहरणान्याकरेषु स्पष्टानि ।

धनुर्ज्याऽऽदिषु शब्देषु शब्दास्तु धनुरादयः ।
आरूढत्वादिबोधाय ॥ ६११ ॥ (य)

यथा,—"पूरिते रोदसी ध्वानैर्धनुर्ज्याऽऽस्फालनोद्भवैः ।"

(म) मालिन्यमिति ।—व्योम्नि—आकाशे, पापे च मालिन्यं, यशसि तथा हासकीर्त्त्योश्च धवलता—शुभ्रता, वर्ण्यते, कविभिरिति शेषः; क्रोधरागौ—कोपानुरागौ, रक्तौ—रक्तवर्णौ, वर्ण्येते इति शेषः; पङ्केजेन्दीवरादि—पद्मकुवलयादि, सरिदुदधिगतं—सरित्सु—नदीषु, उदधिषु—समुद्रेषु च, विकसतीति शेषः; अखिलेऽपि—सर्वस्मिन्नेव, तोयाधारे—जलाशये, मरालादिकः,—हंसादिः पक्षिसङ्घः, प्रसरति—विचरति च; चकोरैः,—पक्षिभेदैः, ज्योत्स्ना पेया—पातव्या, जलधरसमये—वर्षासु इत्यर्थः, हंसाः मानसं—तदाख्यसरोवरं, यान्ति; योषितां—रमणीनां, पादाघातात्—चरणकर्तृकताड़नात्, अशोकं—तदाख्यपुष्पं, तथा आस्यमद्यैः,—मुखनिःसृतसीधुगण्डूषैः, बकुलं विकसति; यूनां—तरुणानाम्, अङ्गेषु हाराः, वर्णनीया इति शेषः; विप्रयोगस्य—विरहस्य, तापैः,—सन्तापैः, हृदयं स्फुटति—विदीर्य्यते; पुष्पकेतोः,—कामस्य, मौर्वी—ज्या, रोलम्बमाला—भ्रमरश्रेणी, धनुः कौसुमं, विशिखाः,—बाणाश्च, कौसुमाः,—कुसुमनिर्म्मिताः; अस्य—कामस्य, बाणैः युवजनानां हृदयं भिन्नं—विदीर्णं, स्यात्, तथा स्त्रीणां कटाक्षेण तद्वत्—भिन्नं स्यादित्यर्थः । अह्नि—दिवसे, अम्भोजं—पद्मं, दिनादौ पद्माद्यसत्त्वेऽपि तत्प्रकाशो वर्णनीयः, निशायां कुमुदं तथा शुक्लपक्षे चन्द्रिका विकसति; चन्द्रिकायाः शुक्लपक्षीयसमस्तरात्रिभागे असद्भावेऽपि सा वर्णनीया इति भावः; मेघानां ध्वाने—ध्वनौ सति, शिखिनां—मयूराणां, नृत्यं भवति, अशोके च फलं नापि—नैव स्यात्; वसन्ते जाती—जातीपुष्पं, न स्यात्; गन्धसारद्रुमाणां—चन्दनवृक्षाणां, (अत्र बहुवचनेन इक्षुप्रभृतीनां ग्रहणं) कुसुमं फलञ्च न स्यात् इत्यादि । अन्यत् कवीनां समयगतं—सिद्धान्तसिद्धं, वस्तु सत्कवीनां प्रबन्धे—ग्रन्थे, उन्नेयं—द्रष्टव्यम् ।

(य) पुनरुक्ततायाः गुणत्वमाह, धनुरिति ।—ज्याशब्देनैव धनुर्ज्याया बोधनात्, धनुःशब्दो निरर्थकोऽपि अत्र आरूढत्वबोधनेन गुणः इति ज्ञेयम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र ज्याशब्देनापि गतार्थत्वे धनुःशब्देन ज्याया धनुष्याततीकरणं बोध्यते। आदिशब्दात् "भाति कर्णावतंसस्ते।" अत्र कर्णस्थितत्वबोधनाय कर्णशब्दः। एवं श्रवणकुण्डलशिरःशेखरप्रभृतिः। एवं निरुपपदो (र) मालाशब्दः पुष्पस्रजमेवाभिधत्ते इति स्थितावपि "पुष्पमाला विभाति ते।" अत्र पुष्पशब्द उत्कृष्टपुष्पबुद्धेः। एवं "मुक्ताहारः" इत्यत्र मुक्ताशब्देन अन्यरत्नामिश्रितत्वम्।

**प्रयोक्तव्याः स्थिता अमी ॥६१२॥ (ल)**

धनुर्ज्यादयः सत्काव्यस्थिता एव निबद्धव्याः, न तु अस्थिता जघनकाञ्चीकरकङ्कणादयः। (व)

**उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः॥६१३॥(श)**

यथा,—

"गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा।

(र) उदाहरति, पूरिते इति।—धनुषां ज्याऽऽस्फालनेन उद्भवन्तीति तथोक्तैः, ध्वानैः,—ध्वनिभिः, रोदसी—द्यावापृथिव्यौ पूरिते। ("—भूद्यावौ रोदसौ रोदसी च ते" इत्यमरः)। अत्रेति।—आततीकरणं—विस्तारणम्; श्रवणेति।—कुण्डलशब्द एव कर्णभूषणविशेषं, शेखरशब्दश्च शिरोभूषणं किरीटमभिधत्ते; एतयोः श्रवणशिरःसंयोगः तत्र स्थितत्वं बोधयतीत्यर्थः। अत्रेदं बोध्यम्;—धनुर्ज्यादयः शब्दाः स्थिताः एवैवं समर्थनीया इत्यनेन क्वचिदेतेषां प्रयोगोऽपि अदुष्ट इति बोधितं, न तु एवंविधः पुनः प्रयोगः साधुरित्युपपादनीयः इति। निरुपपदः,—उपपदरहितः, पदान्तरसंयोगविरहित इत्यर्थः।

(ल) प्रयोक्तव्या इति।—अमी—धनुर्ज्याऽऽदयः शब्दाः।

(व) सत्काव्येषु—महाकविप्रयोगेषु, स्थिताः, इतस्ततो दृश्यन्ते, इत्यमी अदुष्टा इति स्वीक्रियन्ते इति भावः, न तु जघनकाञ्च्यादयः, निबद्धव्या इति शेषः, एतेषां प्रायस्तथा प्रयोगादर्शनादिति भावः।

(श) उक्ताविति।—आनन्देन मग्नादेः जनस्य, [अत्रादिपदेन दुःखमग्नादेः ग्रहणम्] उक्तौ—वचने, न्यूनपदता गुणः स्यात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मा मा मानद ! माऽति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु ? मृता नु किम् ? मनसि मे लीना विलीना नु किम्?॥"(ष)

अत्र पीड़येति न्यूनम् ।

**क्वचिन्न दोषो न गुणः ॥ ६१४ ॥**

न्यूनपदत्वमित्येव । यथा,—

"तिष्ठेत् कोपवशात् प्रभावपिहिता ? दीर्घं न सा कुप्यति,
स्वर्गायोत्पतिता भवेत् ? मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्त्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्त्तिनीं,
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥" (स)

---

(ष) उदाहरति, गाढ़ेति ।—सखायं प्रति कस्यचित् नायकस्य उक्तिरियम् । गाढ़ं—दृढं, यत् आलिङ्गनम्—आश्लेषः, तेन वामनीकृतौ—खर्वीकृतौ, कुचौ यस्याः तथोक्ता, अत एव प्रोद्भिन्नः—प्रकर्षेण उद्भेदं गतः, रोमोद्गमः,—रोमाञ्चः यस्यास्तादृशी, [गाढ़ालिङ्गनवामनीकृतकुचा चासौ प्रोद्भिन्नरोमोद्गमा चेति विग्रहः ; अत्र परपदस्यैव विशेष्यकल्पना कर्त्तव्या, तेन "विशेषणं विशेष्येण बहुलम्" (२।१।५७ पा० ) इति कर्मधारयः, "पुंवत् कर्मधारय—" (६।३।४२ पा० ) इति सूत्रस्य नित्यस्त्रीलिङ्ग-परतायां पुंवद्भावश्च सङ्गच्छते । गाढ़ालिङ्गनवामनीकृतकुचयोः प्रोद्भिन्नौ रोमोद्गमौ यस्या इति समासो न युक्तः, कुचे रोमोद्गमस्यासम्भवात्] सान्द्रः,—घनः, यः स्नेहरसः—प्रणयः, तस्य अतिरेकेण—आतिशय्येन, विगलत्—स्खलत्, श्रीमतः,—मनोहरात्, नितम्बात्, अम्बरं—वसनं यस्यास्तथाभूता, सा इति पदमूह्यम् । हे मानद ! मा—मां, मा, पीड़य इति अनुक्तः शेषो बोध्यः, मां मा अति—अत्यर्थं पीड़य इति पूर्ववत् बोध्यम् ; अलं, बहुव्यापारेणेति शेषः, इति क्षामाक्षरोल्लापिनी—अल्पाक्षरभाषिणी, [पीड़येत्यादेरनुक्तत्वात् अल्पत्वमक्षरस्य ; मानदस्य पीड़ाकरत्वमनुपपन्नमित्यवगमाय तत्पदेन सम्बोधनम् ; एते तावन्निषेधाभासाः विधिषु पर्य्यवसन्नाः] सती, सुप्ता—निद्रायिता, किं नु ? मृता किं नु ? मे—मम, मनसि लीना किं नु ? विलीना किं नु ? इह सुप्तेत्यादिवितर्कचतुष्टयं निस्पन्दत्वादिना ज्ञेयम् । तथा च,—निस्पन्दत्वेन सुप्तेति, अतिनिस्पन्दत्वेन मृतेति, अत्यन्तत्वे लयः, अवहिर्भावे विशेषलयश्च बोध्यः । अत्र पीड़येत्यादियोग्यस्य पदस्य न्यूनता हर्षग्लानिसम्मोहप्रहर्षबोधनद्वारा रसं पुष्णाति इति गुणवत्त्वम् । शार्दूलविक्रीड़ितं वृत्तम् । अमरुशतकस्येदं पद्यम् ।

(स) तिष्ठेदिति ।—उर्वशीविच्छेदातुरस्य राज्ञः पुरूरवसो वितर्कवचनमिदम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र "प्रभावपिहिता" इति "भवेत्" इति चेत्यनन्तरं "नैतद्-यतः" इति पदानि न्यूनानि। एषां पदानां न्यूनतायामपि एत-द्वाक्यव्यङ्ग्यस्य वितर्काख्यव्यभिचारिभावस्योत्कर्षाकरणान्न गुणः। "दीर्घं न सा" इत्यादिवाक्यजन्यया च प्रतिपत्त्या तिष्ठेदित्यादि-वाक्यप्रतिपत्तेर्बोधः (ङ) स्फुटमेवावभासते इति न दोषः।

गुणः क्वाप्यधिकं पदम् ॥ ६१५ ॥

यथा,—

"आचरति दुर्जनो यत् सहसा मनसोऽप्यगोचरानर्थान्।
तन्न न जाने जाने स्पृशति मनः किन्तु नैव निष्ठुरताम् ॥"(क)

अत्र "न न जाने" इत्यनेन अयोगव्यवच्छेदः। द्वितीयें "जाने" इत्यनेन अहमेव जाने इत्यन्ययोगव्यवच्छेदाद्विच्छित्ति-विशेषः। (ख)

---

कोपवशात्—प्रणयकोपात्, प्रभावेण—दिव्यमहिम्ना इत्यर्थः, पिहिता—आवृता सती, तिष्ठेत्? अथवा प्रभौ मयि कोपवशात् अपिहिता तिष्ठेत्, नैतत् सम्भवति, इति मनसिकृत्य आह, दीर्घमिति।—(यतः) सा दीर्घं न कुप्यति, स्वर्गाय उत्पतिता—प्रस्थिता भवेत्? मयि पुनः अस्याः,—उर्व्वश्याः, मनः भावार्द्रं—प्रणयप्रवणं, प्रेम-क्लिन्नमिति भावः, मे—मम, पुरोवर्त्तिनीम्—अग्रस्थितां, तां हर्त्तुं विबुधद्विषः,—असुराः अपि, न च शक्ताः,—समर्थाः, इत्यमङ्गलत्वे हेतुर्भावेव किमहद्भेति विस्मया-दाह, सा चेति।—किन्तु सा अत्यन्तं नयनयोरगोचरं याता—गता, इति अयं को विधिः?—नियतिः, व्यापारो वा? शार्दूलविक्रीड़ितं वृत्तम्। विक्रमोर्व्वशीयम्।

(ङ) अवेति।—अगुणत्वमदोषत्वञ्चोपपादयति, एषामिति।—प्रतिपत्त्या—प्रतीत्या, वाक्यप्रतिपत्तेः,—वाक्यजन्यबोधस्य।

(क) आचरतीति।—दुर्जनः सहसा—अतर्कितभावेन, मनसोऽपि अगोचरान्—अविषयान्, कदाऽपि मनसि अचिन्तितानित्यर्थः, अर्थान्—कार्य्याणीति यावत्, यत् आचरति—करोति, तत् न जाने इति न, जाने; किन्तु मनः निष्ठुरतां नैव स्पृशति—आश्रयति। दुर्ज्जनस्य दौर्ज्जन्यनिवारणे निष्ठुरता आवश्यकी, मनस्तु तामवलम्बितुं नेच्छतीति फलितार्थः।

(ख) ननु द्वितीयजाने इत्यनेनायोगव्यवच्छेद एव प्रतीयते, इत्यत आह,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**समाप्तपुनरात्तत्वं न दोषो न गुणः क्वचित्॥ ६१६॥(ग)**

यथा,—"अन्यास्ता गुणरत्न" इत्यादि ।

अत्र प्रथमार्द्धेन वाक्यसमाप्तावपि द्वितीयार्द्धवाक्यं पुनरुपात्तम्। एवञ्च विशेषणमात्रस्य पुनरुपादाने समाप्तपुनरात्तत्वं न वाक्यान्तरस्येति विज्ञेयम् ।

**गर्भितत्वं गुणः क्वापि ॥ ६१७ ॥**

---

अत्रेति ।—अयोगव्यवच्छेदः,—अयोगस्य—ज्ञानायोग्यस्य इत्यर्थः, व्यवच्छेदः,—निरासः। इत्यनेन—इत्यनेनैवेत्यर्थः। अन्ययोगेति।—अन्यस्य योगः,—ज्ञानयोगः इत्यर्थः, तस्य व्यवच्छेदः,—निराकरणं तस्मात्, विच्छित्तिविशेषः,—वैचित्र्यातिशयः, गुणत्वं प्रतीयते इति शेषः। अत्र कथितपदत्वस्यावधारणबोधकत्वात् "यद्वचनेन" इत्यादि प्राक्प्रदर्शितवत् गुणत्वमस्ति; अस्य शुद्धोदाहरणन्तु,—"याहि माधव! याहि केशव! मा वद कैतववादम्। तामनुसर सरसीरुहलोचन! या तव हरति विषादम् ॥" अत्र माधवकेशवसरसीरुहलोचनपदानाम् अन्यतमेनैव अन्वयोपपत्तौ सर्वेषामुपपादनम् अर्थान्तरबोधकत्वाद् गुण एव। तथा हि,—माधवपदेन लक्ष्मीपतित्वेऽपि तव वैदग्ध्यं नास्तीति, केशवपदेन वीरत्वेऽपि तव रतिसामर्थ्यं नास्तीति, सरसीरुहलोचनपदेन विलक्षणचक्षुःसत्त्वेऽपि रात्रौ पद्मस्य मुद्रणात् रात्रावन्धत्वमवाप्य मम रूपलावण्यातिशयं न पश्यसीति व्यज्यते। यथा वा,—"कुर्य्यां हरस्यापि पिनाकपाणेः धैर्य्यच्युतिं के मम धन्विनोऽन्ये।" अत्र पिनाकपाणेरपीत्यनेनैव प्रकृतान्वयोपपत्तौ हरस्य इत्यधिकमपि हरस्यैव पिनाकसम्बन्धेन दुर्जयत्वम् इति व्यञ्जकत्वाद् गुणत्वम्। "नायं भिक्षुर्वरयुवतिमान् नो तितिक्षुर्वनुष्मान् राज्ञः पुत्रो न हि न हि जटाजूटभारं दधानः। नायं व्याधो नवगुणधरः पश्य कस्मादकस्मात् पुष्पेऽरण्ये नवजलधरश्यामलः कोऽयमेति ? ॥" अत्र द्वितीयस्य नहीति निपातसमुदायस्य वाचकत्वाभावेन कथितपदस्य न विषयः; किन्तु अधिकोऽपि राजपुत्रस्य जटाधारणमत्यन्तासम्भवोति व्यञ्जकत्वाद् गुण एव इति ज्ञेयम्।

(ग) समाप्तेति ।—समाप्तपुनरात्तत्वं—समाप्तं सत् पुनरात्तं—पुनर्गृहीतं तस्य भावः। क्वचिदिति।—यत्र विशेषणमात्रस्य पुनरुपादानं, तत्रैवास्य दोषत्वं,वाक्यान्तरस्य पुनरुपादानेन न दोषः इति भावः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा साऽपि वदन्त एव हि वयं रोमाञ्चिताः पश्यत।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मात् प्रादुरभूत् कथाऽद्भुतमिदं यत्रैव चास्तं गतम्॥" (घ)

अत्र "वदन्त एव" इत्यादि वाक्यं वाक्यान्तरप्रवेशात् चमत्कारातिशयं पुष्णाति। (ङ)

पतत्प्रकर्षता तथा॥ ६१८॥

तथेति क्वचित् (च) गुणः। यथा,—"चञ्चद्भुज" इत्यादि। अत्र चतुर्थपादे सुकुमारार्थतया शब्दाडम्बरत्यागो गुणः।

**क्वचिदुक्तौ स्वशब्देन न दोषो व्यभिचारिणः।**
**अनुभावविभावाभ्यां रचना यत्र नोचिता॥६१९॥(छ)**

---

(घ) दिङ्मातङ्गेति।—दिङ्मातङ्गानां—दिग्गजानां, घटाभिः,—समूहैः, विभक्ताः,—परिच्छिन्नाः, चत्वारः आघाटाः,—सीमानः यस्यास्तादृशी, मही साध्यते—उपार्ज्यते, वशीक्रियते इत्यर्थः, सा—मही, सिद्धाऽपि—समस्तदिग्विजयेन उपार्जिताऽपीत्यर्थः, वदन्त एव—कथयन्त एव, वयं रोमाञ्चिताः, भवाम इति शेषः, पश्यत—अवलोकयत; विप्राय—कश्यपाय इत्यर्थः, प्रतिपाद्यते—समर्प्यते, किमपरम्—अन्यत्, वक्तव्यमिति शेषः, यस्मात् इदं—समस्तायाः पृथिव्याः सम्प्रदातृत्वरूपं, कथाद्भुतम्—कथैवाद्भुतम् अद्भुततापात्रभूतम्, अद्भुता कथा इत्यर्थः, [अन्ये तु—"कथाया अद्भुतम्" इति "कथायामद्भुतम्" इति वा विग्रहं स्वीकुर्वन्ति] प्रादुरभूत्, यत्रैव अस्तं गतं, तत्तुल्यः कश्चिन्न भूवः, न वर्त्तमानः न वा भविष्यन् इति भावः, तस्मै रामाय—भार्गवाय नमः। ईदृगद्भुतं कर्म्म केनापि कर्त्तुं न शक्यते कदाऽपीति भावः। शार्दूलविक्रीडितं वृत्तम्। भट्टप्रभाकरस्येदं पद्यम्।

(ङ) पुष्णाति इति।—युद्धवीर-दानवीरयोः परिपोषः इति सारः।

(च) क्वचिदिति।—यत्र पर्यायो सुकुमारार्थत्वं, तत्र इत्यर्थः।

(छ) इदानीं रसदोषाणां विषयविशेषे यथायथमदोषत्वं गुणत्वञ्चाह, क्वचिदिति।—क्वचित् व्यभिचारिणः स्वशब्देन उक्तौ न दोषः। कुत्र न दोषः? इत्या-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यत्र अनुभावविभावमुखेन प्रतिपादने विशदप्रतीतिर्नास्ति, यत्र च विभावानुभावकृतपुष्टिराहित्यमेवानुगुणं, (ञ) तत्र व्यभिचारिणः स्वशब्देनोक्तौ न दोषः। यथा,—

"औत्सुक्येन कृतत्वरा सहभुवा व्यावर्त्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताऽभिमुख्यं पुनः।
दृष्ट्वाऽग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः॥" (झ)

अत्रौत्सुक्यस्य त्वरारूपानुभावमुखेन प्रतिपादने सङ्गमे न झटिति प्रतीतिः, त्वराया भयादिनाऽपि सम्भवात्। ह्रियोऽनुभावस्य च व्यावर्त्तनस्य कोपादिनाऽपि सम्भवात्। साध्वसहासयोस्तु विभावादिपरिपोषस्य प्रकृतरसप्रतिकूलप्रायत्वादित्येषां स्वशब्दाभिधानमेव न्याय्यम्। (ञ)

शंसायामाह, यत्रेति।—यत्र अनुभावविभावाभ्यां रचना—उद्भावनं, व्यञ्जनमिति यावत्, नोचिता, तत्र इति शेषः।

(ञ) विभावादिकृतरचनानौचित्यं विकल्पयति, यत्रेति।—प्रतिपादने—कथने, विशदप्रतीतिः,—स्फुटावभासः। पुष्टिराहित्यं—पोषणाभावः, अनुगुणम्—अनुकूलम्।

(झ) औत्सुक्येनेति।—नवे सङ्गमे औत्सुक्येन—चिरात् पतिसङ्गमलाभकौतूहलेन, कृतत्वरा—तद्गृहगमने त्वरावती, ततश्च सहभुवा—स्वभावजातया, ह्रिया—लज्जया, व्यावर्त्तमाना—गन्तुमनिच्छन्तीत्यर्थः, ततश्च बन्धुवधूजनस्य—सखीजनस्य, तैः तैः,—तत्कालोचितैरित्यर्थः, वचनैः पुनः आभिमुख्यं नीता, तथा अग्रे—पुरतः, स्थितमिति शेषः, वरं दृष्ट्वा, आत्तः,—गृहीतः, साध्वसरसः,—भयावेशः यया तादृशी, ततः हसता हरेण श्लिष्टा—आलिङ्गिता, अत एव संरोहत्पुलका—रोमाञ्चिताङ्गी, गौरी—पार्व्वती, वः,—युष्माकं, शिवाय—कल्याणाय, अस्तु—भवतु। रत्नावल्याम्।

(ञ) अत्रेति।—प्रतिपादने—कथने, झटिति न प्रतीतिः, औत्सुक्यस्येति शेषः। व्यावर्त्तनस्य—विमुखीभावस्य। साध्वसेति।—यदि साध्वसं विभावादिभिः परिपोष्यते, तदाऽसौ भयानकरसत्वमायाति, स च प्रकृतरसस्य—शृङ्गारस्य प्रतिकूलः, हासस्तु यदि विभावादिभिः परिपोष्यते, तदाऽसौ हास्यरसत्वमिति; तथात्वे अस्य प्राधान्यात् प्रकृतरसस्य शृङ्गारस्य नाङ्गत्वं स्यादिति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सञ्चार्य्यादेर्विरुद्धस्य बाध्यत्वेन वचो गुणः॥६२०॥(ट)

यथा,—"क्वाकार्य्यं शशलक्ष्मणः क्व च कुलं……" इत्यादि।

अत्र प्रशमाङ्गानां वितर्कमतिशङ्काधृतीनामभिलाषाङ्गौत्सुक्यस्मृतिदैन्यचिन्ताभिस्तिरस्कारः, पर्य्यन्ते चिन्ताप्रधानमास्वादप्रकर्षमाविर्भावयति। (ठ)

विरोधिनोऽपि स्मरणे साम्येन वचनेऽपि वा।
भवेद्विरोधो नान्योऽन्यमङ्गिन्यङ्गत्वमाप्तयोः॥६२१॥(ड)

क्रमेण यथा,—"अयं स रशनोत्कर्षी" इत्यादि। अत्र

---

(ट) परिपन्थिरसविभावादिसङ्करस्य गुणत्वमाह, सञ्चार्य्यादेरिति।—विरुद्धस्य—प्रतिकूलरसाङ्गस्य, सञ्चार्य्यादेः,—व्यभिचारिभावादेः, [आदिपदेन विभावानुभावयोः ग्रहणम्] बाध्यत्वेन—खण्डनीयत्वेन, प्रतिरुद्धस्वजन्यरसपरिपुष्टिकत्वेन इत्यर्थः, वचः,—कथनं, गुणः।

(ठ) उदाहरति, क्वेति।—भावशवलस्योदाहरणमिदम्। (व्याख्यातपद्यमिदं २७७ पृष्ठे) गुणत्वमुपपादयति, अत्रेति।—प्रशमाङ्गानां—शान्तरसानुकूलानाम्। अभिलाषाङ्गं—शृङ्गाररसानुकूलम्। तिरस्कारः,—स्वजन्यरसपरिपोषखण्डनं, निरास इत्यर्थः। ननु वितर्कादीनामिव औत्सुक्यादीनाम् अपि बाध्यत्वमस्तीति कथं विप्रलम्भस्य परिपुष्टिः? इत्यत आह, पर्य्यन्त इति।—पर्य्यन्ते—पर्य्यवसाने, चिन्तायां विश्रान्तौ सत्यामित्यर्थः। चिन्तेति।—चिन्ता प्रधानम्—अबाधितत्वेन मुख्यं कारणं यस्य तादृशम्, आस्वादप्रकर्षं—रसोत्कर्षं, विप्रलम्भशृङ्गारपरिपोषम् इत्यर्थः, आविर्भावयति—जनयति। तथाविधास्वादप्रकर्षज्ञापनं गुण इति बोध्यम्।

(ड) "प्रत्यनीकौ रसौ द्वौ द्वौ तत्सम्पर्कं विवर्ज्जयेत्" इति नियमात् विरुद्धयोः समावेशो दोषः इत्युक्तम्; साम्प्रतं तयोर्विषयविशेषे समावेशमाह, विरोधिन इति।—विरोधिनः,—विरुद्धस्य, स्मरणे—पूर्व्वानुभूतस्य व्यञ्जनया ज्ञाने, वा साम्येन—सादृश्येन, वचने—कीर्त्तने, तथा अङ्गिनि—प्रधाने विशेष्ये, [एतच्च अङ्गिनि इत्युपादानात् लभ्यते, अन्यथा "अङ्गत्वमाप्तयोः" इत्यनेनैव अङ्गलाभे तदुपादानमनर्थकं स्यात्] अङ्गत्वम् आप्तयोः—प्राप्तयोः, अङ्गभावेन स्थितयोरित्यर्थः, [द्विवचनमुपलक्षणं बहूनामपीति द्रष्टव्यम्] अन्योन्यं—परस्परं, विरोधः न भवेत्



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आलम्बनविच्छेदेन रतेररसात्मतया स्मर्यमाणानां तदङ्गानां शोकोद्दीपकतया करुणाऽनुकूलता । (ढ)

"सरागया स्रुतघनघर्मतोयया,
कराहतिध्वनितपृथूरुपीठया ।
मुहुर्मुहुर्दशनविलङ्घितोष्ठया,
रुषा नृपाः प्रियतमयेव भेजिरे ॥" (ण)

(ढ) अयमिति ।—व्याख्यातमिदं महाभारतीयपद्यं ३२७ पृष्ठे । अत्र विरुद्धस्यापि शृङ्गारस्य स्मर्यमाणतया करुणेन सम्पर्को न दोषः । ननु तदानीमपि रतिरस्ति, अतः तस्या रसत्वप्राप्तिः अविहतैव इति कथं शृङ्गारस्य स्मर्यमाणत्वम् ? इत्यत आह, अत्रेति ।—आलम्बनविच्छेदेन—आलम्बनस्य—नायकस्य, विच्छेदेन—नाशेन, रतेः,—अनुरागस्य, अरसात्मतया—तदानीन्तनानुभावाद्यभावेन अप्राप्तरसभावतया ; स्मर्यमाणानामित्यनेन शृङ्गारस्यापि स्मरणं दर्शितम् ; तदङ्गानां—तस्य शृङ्गारस्य, अङ्गानां—करस्य रशनोत्कर्षित्वादीनाम् । मृतस्य उपकारस्मरणं बन्धनाम् अत्यन्तशोकजनकमिति भावः ।

(ण) साम्येनोक्तौ विरुद्धयोः समावेशं दर्शयति, सरागयेति ।—कृष्णं प्रति कटुभाषिणं शिशुपालं दृष्ट्वा राज्ञां क्रोधोदयवर्णनमिदम् । नृपाः,—सभासदो राजानः, सरागया—रागः,—मुखलौहित्यं, "रक्तौ च क्रोधरागौ" इति दर्शनात् ; पक्षे,—अनुरागश्च, तत्सहितया, स्रुतानि—चरितानि, घनानि—अविरलानि, घर्मतोयानि यस्याः तथाभूतया, क्रोधेन सत्त्वोद्रेकेण च खेदनिर्गमादिति भावः ; कराहत्या—कराघातेन, ध्वनितं—शब्दितं, पृथु—विशालम्, ऊरुपीठं—बहुमूल्यमासनं, यस्याम् ; यद्वा,—ऊरुः पीठञ्च यस्याम् ; ( क्रोधे सति वीरैः ऊरुः पीठं वा आहन्यते ) तथाभूतया, पक्षे—ऊरुरेव पीठं यस्याः, अन्यत् समानम् ; ( अतिप्रौढकामाभिः नायिकाभिः करेण ऊरुः आहन्यते इति कामशास्त्रप्रसिद्धम् ) तथा मुहुर्मुहुः,—पुनःपुनः, दशनैः विलङ्घितः,—दष्टः, ओष्ठः यस्यां, पक्षे—कान्तदशनेन आपीड़ितः ओष्ठो यस्याः, तादृश्या, रुषा—क्रोधेन, प्रियतमयेव ( कान्तया ) भेजिरे—सिषेविरे । अत्र शृङ्गारवीरयोः समावेशः । उक्तानुभावानाम् अन्यत्रापि सम्भवात् झटिति रुषः प्रतीतिः न भवतीति तस्याः स्वशब्देन उपादानं न दोषः । प्रकरणात् उत्साहस्य आस्वाद्यमानत्वेन वीरत्वं, स्थायिनः क्रोधस्य स्वशब्देन उपादानात् आस्वा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र सम्भोगशृङ्गारो वर्णनीयस्य वीरव्यभिचारिणः क्रोधस्यानुभावसाम्येन विवक्षितः।

"एकं ध्याननिमीलनान्मुकुलितप्रायं, द्वितीयं पुनः
पार्व्वत्या वदनाम्बुजस्तनभरे सम्भोगभावालसम्।
अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं
शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः॥" (त)

अत्र शान्तशृङ्गाररौद्ररसपरिपुष्टा भगवद्विषया रतिः।

यथा वा,—

"क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः॥"(थ)

ह्याभावेन न रौद्रत्वमिति भावः। अत्र रुचिरा वृत्तं,—"जभौ सजौ गिति रुचिरा चतुर्ग्रहैः" इति तल्लक्षणात्। शिशुपालवधस्य पद्यमिदम्।

(त) एकस्मिन् अङ्गत्वमाप्तानां रसानां समावेशमुदाहरति, एकमिति।—एकं—नेत्रमित्यर्थः, ध्याननिमीलनात् मुकुलितप्रायं—प्रायेण मुकुलभावमापन्नं, द्वितीयं, नेत्रमिति शेषः, पुनः,—तु, पार्व्वत्याः,—गौर्य्याः, वदनमेव अम्बुजं—पद्मं, तथा स्तनयोर्भरः,—उच्छ्रायः तस्मिन्, सम्भोगभावेन—चुम्बनालिङ्गनाद्यभिप्रायेण, अलसं—सतृष्णमित्यर्थः, अन्यत्—तृतीयं नेत्रमित्यर्थः, दूरम्—अतिमात्रं, विकृष्टः चापः येन, यद्वा,—दूरे विकृष्टः चापो येन, तादृशो यो मदनः तस्मिन् यः क्रोधः एव अनलः,—अग्निः, तेन उद्दीपितम्—उज्ज्वलितम्, अत एव समाधिसमये—योगावसरे, भिन्नः,—पृथक्, रसः,—भावो यस्य तादृशं, विरुद्धबहुरसव्यञ्जकमित्यर्थः, शम्भोः,—शिवस्य, नेत्रत्रयं—त्रीणि लोचनानि, वः,—युष्मान्, पातु—रक्षतु। अत्र अङ्गिनि भगवद्विषयकरतिभावे अङ्गतां प्राप्तानां शान्तशृङ्गारवीराणां न विरोधः, तथा शृङ्गारिणोऽपि न समाधिभङ्ग इति शृङ्गारस्य परम्परया क्रोधस्य समाधिविघ्ननिवारकत्वेन तत्परिणामिनो रौद्रस्य साक्षादेव देवविषयकरतिपरिपोषकत्वम्। शार्दूलविक्रीड़ितं वृत्तम्।

(थ) परम्परयाऽपि अङ्गभावमापन्नयोः रसयोः समावेशं दर्शयति, क्षिप्त इति।—यः शाम्भवः,—शम्भुसम्बन्धी, शराग्निः, त्रिपुरदाहार्थं निक्षिप्त इति शेषः; आर्द्रः,—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र कविगता भगवद्विषया रतिः प्रधानम्। तस्याः परिपोषकतया भगवतस्त्रिपुरविध्वंसं प्रति उत्साहस्य अपरिपुष्टतया रसपदवीमप्राप्ततया भावमात्रस्य करुणोऽङ्गम्। तस्य च "कामीव" इति साम्यबलादायातः शृङ्गारः। (द)

एवञ्चाविश्रान्तिधामतया करुणस्याङ्गतैवेति द्वयोरपि करुण-

---

अभिनवः, अपराधो यस्य तादृशः, अचिरकृतापराध इत्यर्थः, कामीव—कान्त इव, साश्रूणि—सजलानि, नेत्रोत्पलानि—नयनेन्दीवराणि यासां तादृशीभिः, पतिवियोगात् पत्यपराधाद्वेति भावः; त्रिपुरयुवतिभिः,—त्रिपुरस्थिताभिरसुराङ्गनाभिरित्यर्थः, हस्तावलग्नः,—गृहीतहस्त इत्यर्थः, सन् क्षिप्तः,—निराकृतः, (एवमुत्तरोत्तरक्रियास्वपि कामीति दृष्टान्तः) प्रसभं—बलात्, अभिहतः,—ताडितोऽपि, अंशुकान्तं—वसनदशाम्, आददानः,—गृह्णन्, तथा केशेषु गृह्णन्—गृहीतकेशः, एकत्र दहनार्थम् अपरत्र चुम्बनार्थमिति भावः; अपास्तः,—निराकृतः, ततः चरणयोः निपतितः, दहनार्थम् अपराधभञ्जनार्थञ्चेति भावः, सम्भ्रमेण—भयेन गौरवेण च, न ईक्षितः,—न दृष्टः, एकत्र—भयजन्यत्वरया ईक्षणाभावः, पक्षे—अभिमानात् नेक्षितः, ततश्च आलिङ्गन्, एकत्र—सर्वशरीरमाक्रामन्, अन्यत्र—आश्लिष्यन्, अवधूतः,—निराकर्तुं चेष्टितः; अन्यच्च—तिरस्कृतः, सः वः,—युष्माकं, दुरितं—पापं, दहतु—भस्मीकरोतु। स्रग्धरा वृत्तम्। अमरुशतकस्येदं पद्यम्।

(द) अङ्गाङ्गिभावमुपपादयति, अत्रेति।—प्रधानं, निराकाङ्क्षवाक्यप्रतिपाद्यत्वादिति भावः, तस्याः,—भगवद्विषयकरतेः, परिपोषकतया—पोषणकारित्वेन, अङ्गस्येति शेषः। अपरिपुष्टतया—परिपोषणमप्राप्ततया, विभावानुभावयोरनुपादानादिति भावः; रसपदवीं—रसत्वमित्यर्थः, अप्राप्ततया, विभावादिभिः परिपुष्टस्यैव रसत्वादिति भावः। भावमात्रस्य—उद्बुद्धमात्रतया भावशब्दप्रतिपाद्यस्येत्यर्थः, "उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते" इति वचनात्; करुणोऽङ्गमिति।—दुष्टनिग्रहं प्रति भगवदुत्साहस्यानुभावेन करुणस्थायिभावेन स्त्रीणां शोकेन व्यञ्जनमिति करुणस्याङ्गत्वम्। तस्य—करुणस्य। कामीवेति।—प्राग् यथा कामुक आचरति स्म, तथा अद्य शराग्निरिति साम्यबलात्—सादृश्यवशात्, आयातः,—उपस्थितः, श्रुतिविषयतां प्राप्त इति यावत्, शृङ्गारः,—ईर्ष्यामानाख्यविप्रलम्भः, अङ्गमिति अनुषङ्गेणान्वयः; स्मर्यमाणपूर्व्वावस्थायाः रतेः करुणस्थायिभावः स्त्रीशोकोद्दीपकतया अङ्गत्वमिति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शृङ्गारयोर्भगवदुत्साहपरिपुष्टतद्विषयरतिभावास्वादप्रकर्षकतया यौगपद्यसद्भावादङ्गत्वेन न विरोधः। (ध)

ननु समूहालम्बनात्मकपूर्णघनानन्दस्वरूपस्य रसस्य तादृशेनेतररसेन कथं विरोधः सम्भावनीयः? एकवाक्ये निवेश्य-प्रादुर्भावयौगपद्यविरहेण परस्परोपमर्दकत्वानुपपत्तेः। नाप्यङ्गाङ्गिभावः; द्वयोरपि पूर्णतया स्वातन्त्र्येण विश्रान्तेः। सत्यमुक्तम्। अत एव अत्र प्रधानेतरेषु रसेषु स्वातन्त्र्यविश्राम-

(ध) ननु अत्र स्त्रीशोकस्य वाच्येनानुभावेनाश्रुणा, व्यङ्ग्येनोद्दीपनविभावेन झटित्याक्षेपलभ्येन, म्रियमाणपत्यालम्बनविभावेन परिपुष्टिरिति करुणस्य प्रधानत्वमेव, कथमङ्गत्वम्? इत्याशङ्क्याह, एवञ्चेति।—अनया रीत्या इत्यर्थः, अविश्रान्तिधामतयां—विश्रामस्य अनाश्रयतया, साकाङ्क्षवाक्यव्यङ्ग्यतया इत्यर्थः, करुणस्य, अङ्गिनोऽपीति शेषः, अङ्गतैव—अप्राधान्यमेव। एवं पदैः सकलपदार्थोपस्थितौ खले कपोतन्यायेन विशिष्टविशेषणं, तत्रापि विशेषणान्तरमिति रीत्या शाब्दबोधे सति व्यङ्ग्यबोधेऽपीयं रीतिरिति भावः। भगवदुत्साहस्तत्र करुणस्तत्रापि शृङ्गारो व्यञ्जनया एकदैवाङ्गितया अवगम्यते इत्युक्त्या अवान्तरवाक्यार्थबोधक्रमेण शाब्दबोधपक्षे व्यङ्ग्यार्थबोधस्यापि तद्रीतित्वेन विशिष्टवैशिष्ट्यमिति रीत्या शृङ्गारविशिष्टकरुणबोधे सति करुणविशिष्टभगवदुत्साहबोधः, तदनन्तरं भगवदुत्साहविशिष्टभावबोधः क्रमाज्जायते इति मतेन परम्परया प्रधानोपकारमुपपादयति,—द्वयोरपीति। करुणशृङ्गारयोरिति।—स्वपरिपुष्टतया इति प्रधानस्य भूयस्युपकारे वर्त्तते इति प्रथममते स्वपरिपोषकं परिपोषणमात्रं प्रधानस्योपकारः; द्वितीये तु,—निरुक्तक्रमेण आस्वादातिशयजननमपीति विशेषः; आस्वादप्रकर्षकतया इति।—"गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते। उपकारे प्रधानस्य तथा भूयसि वर्त्तते॥" इति न्यायेन इति भावः। (अस्यार्थः;—गुणः,—विशेषणं, कृतात्मसंस्कारः,—स्वविशेषणेन कृतोपकारः, प्रधानं—पार्यन्तिकविशेष्यं, प्रतिपद्यते—अन्वेति) यौगपद्यसद्भावात्—समकालसमावेशात् (अपरिबाध्याहर्त्तव्यः) "स्थायिभावानामङ्गाङ्गिभावेनैव रसानामङ्गाङ्गिभावः" इति काव्यप्रकाशकारः। यद्वा,—यासां पूर्व्वं प्राणेश्वराः हस्तधारणादिना प्रसादनपरा आसन्, तासामेवेदानीं शम्भुशरस्तत्कर्मणैव तादृशीं दुर्दशां जनयति इति शृङ्गारेण परिपोषितः कविकरुण एव स्वजन्यभगवद्दुष्टनिग्रहोत्साहोद्बोधेन कविगतां भगवद्विषयां रतिं जनयित्वा तामेव सामाजिकानामास्वादकन्दतामुपनयतीति रसयोरेवाङ्गत्वम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

राहित्यात् पूर्णरसभावमात्राच्च विलक्षणतया सञ्चारिरस नाम्ना व्यपदेशः प्राच्यानाम् । अस्मत्पितामहानुजकविपण्डितमुख्य-श्रीचण्डीदासपादानान्तु खण्डरसनाम्ना (न) यदाहुः,—

"अङ्गं वाध्योऽथ संसर्गी यद्यङ्गी स्याद्रसान्तरे ।
नास्वाद्यते समग्रं तत्ततः खण्डरसः स्मृतः इति ॥" (प)

(न) एतन्मते प्रद्वेषमाह, नन्विति ।—समूहः,—विभावादिसमष्टिरित्यर्थः, आलम्बनम्—आश्रयः, यस्य तदात्मकः,—विभावादिपदार्थसमूहविषयकज्ञानरूप इत्यर्थः, यः पूर्णः,—समधिकः, घनः,—सुखान्तरतिरोधायकः, आनन्दः, स एव स्वरूपं यस्य तथाभूतस्य । तादृशेन—समूहालम्बनात्मकपूर्णघनानन्दस्वरूपेण, इतरेण—अपरेण, रसेन । एकवाक्ये इति ।—निवेशः,—स्थितिः, प्रादुर्भावः,—उद्भवः, तथा यौगपद्यं—समकालिकत्वं, तेषां विरहेण—अभावेन, यतो द्वौ नैकत्र तिष्ठतः, नोद्भवतः, नापि समकालिकौ स्त इति भावः । अन्यथाऽपि केचित् व्याख्यानयन्ति ; तद्यथा,—एकस्मिन् वाक्ये यो निवेशः,—व्यञ्जकतासम्बन्धेन वृत्तिः, स च प्रादुर्भाव-यौगपद्यञ्च तयोर्विरहेण इत्यर्थः ; यद्वा,—एकवाक्यार्थग्रहेण यौ प्रादुर्भावौ—उत्पत्ती, तयोः यौगपद्यविरहेण—एककालीनत्वविरहेण परस्परस्य—अन्योऽन्यस्य, उपमर्दकत्वानुपपत्तेः,—परस्परपरिपोषकव्याघातकत्वासम्भवादित्यर्थः । "राममन्मथशरेण" इत्यादौ बीभत्सशृङ्गारयोः न युगपदुत्पत्ती, किन्तु अभिधेयबोधानन्तरं बीभत्सस्य, व्यङ्ग्यबोधानन्तरं शृङ्गारस्य, इति क्रमेण एवेति नानुपपत्तिः । नापि, रसयोरपीति शेषः, अङ्गाङ्गिभावः,—गुणप्रधानभावः । अत एव—उक्तनिर्वाहादेव ; प्रधानेतरेषु—अङ्गेषु इत्यर्थः । स्वातन्त्र्येण—स्वाधीनतया इत्यर्थः । पूर्णरसभावमात्राच्च—पूर्णरसत्वमात्रात्, विलक्षणतया—विभिन्नतया, सञ्चारिरसनाम्ना व्यपदेशः,—कीर्त्तनं, प्राच्यानां—पूर्वपण्डितानाम् ; पूर्वाचार्य्या हि तादृशमङ्गं रसं सञ्चारिणं ( व्यभिचारिभावमित्यर्थः ) कथयन्तीति भावः । खण्डरसेति ।—अपरिपुष्टस्थायिभावत्वेन भावत्वमभिप्रेत्य प्रधानत्वाभावाद् विलक्षणभावप्रदर्शनं खण्डरसनाम्ना व्यपदेशः इति बोध्यम् ।

(प) अङ्गमिति ।—अङ्गी—रसः, यदि रसान्तरे—अन्यस्मिन् रसे, अङ्गम्—अप्रधानम्, अथ—वा, वाध्यः,—विरुद्धस्मरणादिना बाधितोऽपि विरोधपरिहारात् लब्धसमावेशः, यद्वा,—विरुद्धोऽपि स्मरणादिबलात् लब्धसमावेशः, यदि वा संसर्गी—अविरोधी, प्रधानानुपकारितया स्वातन्त्र्येण संसृष्टः, स्यात्, तत्—तदा, समग्रं—सम्यक् यथा तथा, नास्वाद्यते—न आस्वादं प्रति नीयते, ततः सः खण्डरसः स्मृतः,—कथितः ।

.CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ननु "आद्यः करुणबीभत्सरौद्रवीरभयानकैः" इत्युक्तनयेन विरोधिनोर्वीरशृङ्गारयोः कथमेकत्र (फ)—

"कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरस्फारोड्डमरपुलकं वक्त्रकमलम्।
मुहुः पश्यन् शृण्वन् रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः॥" (ब)

इत्यादौ समावेशः? अत्रोच्यते,—इह खलु रसानां विरो-

(फ) ननु स्मरणादावेव विरुद्धयोः समावेशः प्रतिप्रसूतः, तदभावात् कथं वक्ष्यमाणे "कपोले" इत्यादौ विरुद्धयोः वीरशृङ्गारयोः समावेशः? इत्यभिप्रायेणाह,—नन्विति। एकत्रेति।—"समावेशः" इत्यग्रेणान्वयः।

(ब) कपोले इति।—रघूणां परिवृढः,—प्रभुः, रामः इत्यर्थः [परिपूर्व्वकस्य वृहः वृन्हः वा निष्ठायां "प्रभौ परिवृढः" (७।२।२१ पा०) इति निपातः] करिकलभस्य—हस्तिशावकस्य, यः दन्तः, तस्य द्युतिं—कान्तिं, मुष्णाति—हरतीति तथोक्ते, अतिस्वच्छे इत्यर्थः, जानक्याः,—सीतायाः, कपोले—गण्डे [अवच्छेदे सप्तमी] गण्डावच्छेदे इत्यर्थः, (कपोलस्य किञ्चित् पाण्डुत्वेन विमलत्वेन वा करिकलभदन्तोपमा बोध्या) स्मरेण—कामोद्रेकेण, स्मेरः,—विकसन् [स्मेरस्तु "नमिकम्पिस्म्यजस—" (३।२।१६७ पा०) इति सूत्रेण अत्र ताच्छील्ये रः] स्फारोड्डमरः [स्फुर्य्यते इति भावे घञ्। "स्फुरति-स्फुलत्योर्घञि" (६।१।४७पा०) इति ओकारस्य आत्वम्] इति स्फारः,—स्फोरणं, स्फूर्त्ति-रिति यावत्, तेन उड्डमरः,—विकासितः इत्यर्थः, अत्युत्कटः इति यावत्, पुलकः,—लोमाञ्चः यत्र तादृशं, वक्त्रकमलं—वदनपङ्कजं, पश्यन्, सन्निति शेषः, तथा रजनी-चराणां—राक्षसानां, याः सेनास्तासां कलकलं—सिंहनादमित्यर्थः, मुहुः शृण्वन्—आकर्णयन्, [उभयत्र "लक्षणहेत्वोः क्रियायाः" (३।२।१२६ पा०) इति फले शतृ-प्रत्ययः] जटाजूटग्रन्थिं द्रढयति—दृढं करोति, युद्धार्थमिति भावः। [दृढशब्दात् तत्करोतीति इत्यर्थे णिचि इष्ठवद्भावे "पृथुमृदु—"इति वार्त्तिकात् ऋकारस्य रत्वम्]। अत्र वीरः शृङ्गारश्च विरोधिनौ स्थितौ। तथाहि वीरस्यात्र रजनीचरसेना आलम्बन-विभावः। तदीयकलकलस्वनः उद्दीपनम्। जटाजूटग्रन्थनम् अनुभावः। वीरस्य निराकाङ्क्षवाक्यव्यङ्ग्यतया प्रधानत्वम्। शृङ्गारस्य तु जानकी आलम्बनं, तस्याः कपोले पुलकाङ्कितत्वम् उद्दीपनविभावः। तन्मुखकमलावलोकनमनुभावेन बोद्धव्यम्। शिखरिणी वृत्तम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

धिताया अविरोधितायाश्च त्रिधा व्यवस्था। कयोश्चिदालम्बनैक्येन, कयोश्चिदाश्रयैक्येन, कयोश्चिन्नैरन्तर्य्येण इति। तत्र वीरशृङ्गारयोरालम्बनैक्येन विरोधः, तथा हास्यरौद्रबीभत्सैः सम्भोगस्य, वीरकरुणरौद्रादिभिर्विप्रलम्भस्य, आलम्बनैक्येन आश्रयैक्येन च वीरभयानकयोः, नैरन्तर्य्यविभावैक्याभ्यां शान्तशृङ्गारयोः, त्रिधाऽपि अविरोधो वीरस्याद्भुतरौद्राभ्यां, शृङ्गारस्याद्भुतेन, भयानकस्य बीभत्सेनेति। तेनात्र वीरशृङ्गारयोर्भिन्नालम्बनत्वान्न विरोधः।

एवञ्च वीरस्य नायकनिष्ठत्वेन, भयानकस्य प्रतिनायकनिष्ठत्वेन निबद्धे भिन्नाश्रयत्वेन विरोधः। यच्च नागानन्दे प्रशमाश्रयस्यापि जीमूतवाहनस्य मलयवत्यनुरागो दर्शितः, तत्र "अहो गीतमहो वादित्रम्" इति अद्भुतस्यान्तरानिवेशनान्नैरन्तर्य्याभावान्न शान्तशृङ्गारयोर्विरोधः। एवमन्यदपि विज्ञेयम्। "पाण्डुक्षामं वदनम्" इत्यादौ च पाण्डुतादीनामङ्गभावः करुणविप्रलम्भेऽपीति न विरोधः। (भ)

(भ) अरण्यादौ आलम्बनाश्रयभेदनैरन्तर्य्याभावेष्वपि विरोधिनोरेकस्मिन् समावेश इति समाधत्ते, इहेति।—त्रिधा—त्रिविधा, व्यवस्था—स्थितिः, नियम इति यावत्। आश्रयैक्येन—नायकैक्येन, नैरन्तर्य्येण—अव्यवधानेन, शान्तशृङ्गारयोर्विरोध इत्यग्रेणान्वयः। अत्र विशिष्य दर्शयति, तत्रेति।—वीरशृङ्गारयोः,—वीरसम्भोगयोः; तथा—आलम्बनैक्येन, हास्यरौद्रबीभत्सैः सम्भोगस्य, विरोध इत्यन्वयः; एवं वीरकरुणेत्यादावग्रेऽपि बोध्यम्। त्रिधेति।—त्रिप्रकारेण, आलम्बनैक्येन, आश्रयैक्येन, नैरन्तर्य्येण चेत्यर्थः, वीरस्य अद्भुतरौद्राभ्यां सह अविरोधः; एवं शृङ्गारस्य अद्भुतेन; भयानकस्य बीभत्सेन तु नैरन्तर्य्यमावेश्य अविरोधः ज्ञेयः। वीरशृङ्गारयोरालम्बनभेदेन अविरोधं दर्शयति, तेनेति।—उक्तनियमेनेत्यर्थः। अत्र—"कपोले—" इत्यत्र, वीरशृङ्गारयोः भिन्नालम्बनत्वात्—वीरस्य आलम्बनं रजनीचरसेना, शृङ्गारस्य आलम्बनं जानकी इत्येवम् आलम्बनभेदादिति भावः। भिन्नाश्रयत्वेनेति।—उत्साहस्य प्रतिनायकविषयत्वेन नायकैक्येन निबद्धे भिन्नालम्बनत्वेन अविरोधः ज्ञेयः। प्रशमाश्रयस्य—शान्तरसाश्रयस्य। अद्भुतस्य—तदाख्यरसस्य, अन्तरानिवेशात्—मध्यसन्निवेशात्, नैरन्तर्य्याभावात्—अव्यवधानेनास्थितेरित्यर्थः। विरुद्धरसस्य विभावादिपरिग्रहस्याप्य-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अनुकारे च सर्वेषां दोषाणां नैव दोषता॥६२२॥(म)

सर्वेषां—दुःश्रवत्वप्रभृतीनाम् । यथा,—"एष दुश्च्यवनं नौमीत्यादि जल्पति कश्चन ।" अत्र दुश्च्यवनशब्दोऽप्रयुक्तः । (य)

अन्येषामपि दोषाणामित्यौचित्यान्मनीषिभिः ।

अदोषता च गुणता ज्ञेया चानुभयात्मता॥६२३॥(र)

अनुभयात्मता—अदोषगुणात्मता ।

इति श्रीमन्नारायणचरणारविन्दमधुव्रतसाहित्यार्णवकर्णधारध्वनिप्रस्थापनपरमाचार्य-कविसूक्तिरत्नाकराष्टादशभाषावारविलासिनीभुजङ्गसान्धिविग्रहिकमहापात्र-श्रीविश्वनाथकविराजकृतौ साहित्यदर्पणे दोषनिरूपणो नाम

सप्तमः परिच्छेदः ॥ ७ ॥

---

दोषत्वं दर्शयति, पाण्डु इति ।—पाण्डुतादीनां—करुणरसाङ्गानामिति भावः, एतेन विरुद्धरसीयासाधारणाङ्गस्य परिग्रह एव दोषः, न तु साधारणाङ्गस्येति भावः ।

(म) अनुकारे चेति ।—अनुकारे—अनुकरणे, परकृतवाक्यकथने इत्यर्थः । अनुकरणे दुःश्रवस्य अदोषत्वं यथा,—"मृगचक्षुषमद्राक्षीदित्यादि कथयत्ययम्" । शब्दस्यानुकरणे च्युतसंस्कारस्यादोषत्वं यथा,—"पश्यैष च गवित्याह सूत्रामाणं यजेति च ॥" अत्र प्रथमपादे गोशब्दस्य निर्विभक्तिकतया च्युतसंस्कारत्वम्; द्वितीयपादे सूत्रामशब्दोऽप्रयुक्तो न दोषः ।

(य) उदाहरति, एष इति ।—दुश्च्यवनः,—इन्द्रः । अत्रेति ।—अप्रयुक्तः, न दोष इति शेषः ।

(र) अन्येषामिति ।—इति—इत्थम्, औचित्यात् हेतोः मनीषिभिः,—विद्वद्भिः, अन्येषामपि दोषाणाम् अदोषता, गुणता, तथा अनुभयात्मता—अदोषत्वं गुणत्वञ्च इत्यर्थः । अदोषगुणात्मता—अदोषात्मत्वं गुणात्मत्वञ्च रसादेर्निकर्षप्रकर्षबीजत्वा-भावात् उभयरूपम् ।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन-पण्डितकुलपतिना बि, ए, उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोधविद्यारत्नाभ्यां प्रतिसंस्कृतायां विमलाख्यायां साहित्यदर्पणव्याख्यायां

सप्तमः परिच्छेदः ॥ ७ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# अष्टमः परिच्छेदः ।

गुणानाह, (क)—

**रसस्याङ्गित्वमाप्तस्य धर्म्माः शौर्य्यादयो यथा ।**
**गुणाः ॥ ६२४ ॥** (ख)

यथा खल्वङ्गित्वमाप्तस्यात्मन उत्कर्षहेतुत्वात् शौर्य्यादयो गुणशब्दवाच्याः, तथा काव्ये अङ्गित्वमाप्तस्य रसस्य धर्माः स्वरूपविशेषाः माधुर्य्यादयोऽपि । स्वसमर्पकपदसन्दर्भस्य काव्यव्यपदेशस्यौपयिकानुगुणभाज इत्यर्थः । यथा चैषां रसमात्रस्य धर्म्मत्वं, तथा दर्शितमेवं । (ग)

---

(क) काव्यलक्षणकारिकोद्देशक्रमप्राप्तान् गुणान् निरूपयति,—गुणानिति ।

(ख) रसस्येति ।—अङ्गित्वं—शरीरित्वं, प्रधानत्वमिति यावत्, आप्तस्य—प्राप्तस्य, यथा शौर्य्यादयः, तथा ये इति ऊहनीयं, रसस्य धर्म्माः, ("रसस्य" इत्यनेन काव्यशरीरस्य शब्दार्थयोः व्यवच्छेदः) ते इति शेषः, गुणाः । अयं भावः,—यथा शरीरे शरीरिणो धर्म्माः शौर्य्यौदार्य्यादयः, [आदिपदेन दयादाक्षिण्यादीनां ग्रहणम्] तथा ये काव्ये रसस्य धर्म्मास्ते गुणाः । धर्म्माश्च नालङ्कारा इव, इत्यमी यावद्रसं स्थायिनो ज्ञेयाः । अत एवोक्तं प्रकाशकृता,—"ये रसस्याङ्गिनो धर्म्माः शौर्य्यादय इवात्मनः । उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥" इति ।

(ग) श्लिष्टपदं यथासम्भवं दृष्टान्तदार्ष्टान्तयोर्व्याख्यायते, यथेत्यादिना ।—यथा खलु "लोके" इति शेषः, अङ्गित्वं—शरीरित्वं, विभावाद्यङ्गसमुदाययोगेन पूर्णत्वमिति यावत्, ("अङ्गं गात्रे प्रतीकोपाययोः पुं भूम्नि नीवृति । क्लीवैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके ॥" इति मेदिनी) आप्तस्य आत्मनः उत्कर्षहेतुत्वात्—उत्कर्षाधायकत्वात्, शौर्य्यादयः,—शौर्य्यौदार्य्यादयो धर्म्माः, गुणशब्दवाच्याः,—गुणा इत्युच्यन्ते, तथा काव्ये—कविभणितौ, अङ्गित्वं विभावाद्यङ्गसमुदाययोगेन पूर्णत्वम्, आप्तस्य रसस्य धर्म्माः स्वरूपविशेषाः,—उत्कर्षाधायकतया अचलावस्थितिकतया च स्वरूपविशेष-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

माधुर्य्यमोजोऽथ प्रसाद इति ते त्रिधा ॥६२५॥(घ)

ते—गुणाः।

रूपेणावस्थिताः, माधुर्य्यादयोऽपि, गुणशब्दवाच्या इत्यन्वयः। एतेन स्वस्वरसे माधुर्य्यादीनामन्यतमस्य काव्यत्वव्यापकतया उत्कर्षहेतुत्वात् गुणव्यवहारौपयिकं धर्म्मान्तरमाह, स्वसमर्पकेति।—स्वम्—आत्मानं, रसमिति यावत्, समर्पयन्ति—समुद्बोधयन्तीति स्वसमर्पकाणि यानि पदानि तेषां सन्दर्भस्य तथाभूतस्य, काव्यव्यपदेशस्य—काव्यपदवाच्यस्य, औपयिकम्—उपयोगि, यदानुगुण्यम—आनुकूल्यं, तद्भजन्तीति तथोक्ताः, भवन्तीति शेषः। अत एषां गुणशब्दवाच्यत्वमिति भावः। एतच्च गुणालङ्कारसंस्कृतयोः शब्दार्थयोः काव्यशब्दोऽयं वर्त्तते इति प्राचीनमतानुसारेणोक्तम्; स्वमते तु,—रसवत्त्वमेव काव्यव्यवहारौपयिकं, न तु गुणत्वम्। यद्वा,—रसवत्त्वं काव्यलक्षणम्; व्यवहारबीजन्तु गुणालङ्कारसंस्कृतशब्दार्थत्वमेवेति स्वमतेनैवेदमुक्तम्; एवञ्च काव्यव्यवहारप्रयोजकत्वे सति रसधर्म्मवत्त्वं गुणलक्षणम्; रसत्वादिव्यावृत्त्यर्थं सत्यन्तम्, अलङ्कारव्यावृत्त्यर्थं विशेष्यम्। ननु गुणानां शब्दार्थधर्म्मत्वं प्राचीनैरुक्तं, भवता तु कथं रसधर्म्मत्वमुच्यते? इत्यत आह, यथा चेति।—एषां—गुणानां, मात्रपदेन शब्दार्थयोर्व्यवच्छेदः। दर्शितं—दर्शयितुमारब्धम्। माधुर्य्यादिस्वरूपनिरूपणेनैव अमीषां रसधर्म्मत्वं व्यक्तीभविष्यति इति भावः।

(घ) गुणान् विभजते, माधुर्य्यमिति।—सुगमम्। वामनप्रमुखास्तु ओजआदीनां गुणानां दशविधत्वं प्रतिपादयामासुः; यथा हि,—"पदन्यासस्य गाढत्वं वदन्त्योजः कवीश्वराः। अनेनाधिष्ठिताः प्रायः शब्दाः श्रोत्ररसायनम्॥ श्लथत्वमोजसा मिश्रं प्रसादञ्च प्रचक्षते। अनेन न विना सत्यं स्वदते काव्यपद्धतिः॥ यत्रैकपदवद्भावः पदानां भूयसामपि। अनालक्षितसन्धीनां स श्लेषः परमो गुणः॥ प्रतिपादं प्रतिश्लोकमेकमार्गपरिग्रहः। दुर्बन्धो दुर्विभावश्च समतेति मतो गुणः॥ आरोहन्त्यवरोहन्ति क्रमेण यतयो हि यत्। समाधिर्नाम स गुणस्तेन पूता सरस्वती॥ बन्धे पृथक्पदत्वञ्च माधुर्य्यमुदितं बुधैः। अनेन हि पदन्यासाः कामं धारा मधुश्च्युतः॥ यथा हि च्छिद्यते रेखा चतुरं चित्रपण्डितैः। तथैव वागपि प्राज्ञैः समस्तगुणगुम्फिता॥ बन्धस्याजठरत्वञ्च सौकुमार्य्यमुदाहृतम्। एतेन वर्जिता वाचो रूक्षत्वान्न श्रुतिक्षमाः॥ विकटत्वञ्च बन्धस्य कथयन्ति ह्युदारताम्। वैचित्र्यं न प्रपद्यन्ते यया शून्याः पदक्रमाः॥ पश्चादिव गतिर्वाचः पुरस्तादिव वस्तुनः। यत्रार्थव्यक्तिहेतुत्वात् सोऽर्थव्यक्तिः स्मृतो गुणः॥ औज्ज्वल्यं कान्तिरित्याहुर्गुणं गुणविशारदाः। पुराणचित्रस्थानीयं तेन बन्ध्यं कवेर्वचः॥"

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इति । कण्ठाभरणकारास्तु तान् चतुर्व्विंशतिप्रकारानाहुः, तद्यथा,—"श्लेषः प्रसादः समता माधुर्य्यं सुकुमारता । अर्थव्यक्तिस्तथा कान्तिरुदारत्वमुदात्तता ॥ ओजस्तथाऽन्यदौर्जित्यं प्रेयानथ सुशब्दता । तद्वत् समाधिः सौक्ष्म्यञ्च गाम्भीर्य्यमथ विस्तरः ॥ सङ्क्षेपः सम्मितत्वञ्च भाविकत्वं गतिस्तथा । रीतिरुक्तिस्तथा प्रौढिरथैषां लक्ष्यलक्षणे ॥" इति । एतेषु दश वामनादिसम्मताः पूर्व्वं लक्षिता एव इति नात्र पुनर्निर्द्दिश्यन्ते ; अवशिष्टास्तु व्याख्यायन्ते ; तथा हि,—सार्थकविशेषणविशिष्टत्वम् उदात्तता ; निविड़बन्धनवत्त्वम् और्ज्जित्यम् ; निरर्थकपरितापकवाक्ये तत्समर्थकतया मधुरवचनविन्यासः प्रेयः ; सुबन्तानां तिङन्तानाञ्च व्युत्पत्तिः सुशब्दता ; यथा,—"तस्याजीवनिरस्तु मातरव मा जीवस्य मा जीवतो भूयाद्राजननेः किमम्ब जनिना जन्तोर्हया जीविनः । यस्तामेव न वन्दते न यजते नोपैति नःलोकते नोपस्तौति न मन्यते न मनुते नाध्येति न ध्यायति ॥" इह अजीवन्यजनन्यादिसुबन्तपदानां,तथा वन्दते यजते प्रभृतितिङन्तपदानाञ्च व्युत्पादनं सुशब्दतासाधकम् । पदानामाभ्यन्तरीणनिगूढ़ाभिप्रायवत्त्वं सौक्ष्म्यम् ; यथा,—"केवलं दधति कर्त्तृवाचिनः प्रत्ययानिह न जातु कर्म्मणि । धातवः सृजतिसंहृशास्तयः स्तौतिरत्र विपरीतकारकः ॥" इह श्रवणमात्रमेव प्रतीतस्य अर्थस्य सृजत्यादिशब्दानामन्तर्निगूढ़ार्थरूपेण सूक्ष्मत्वेन सौक्ष्म्यम् । व्यङ्ग्यार्थवच्छब्दवत्त्वं गाम्भीर्य्यम् ; यथा,—"मौलौ धारय पुण्डरीकममितं तन्वात्मनो विक्रमं चक्राङ्कं वह पादयुग्ममवनीं दीर्णां समभ्युद्धर । लक्ष्मीं भूनिकटे निवेशय भव व्यायान्दिवौकस्पतेर्विश्रान्तःकरणैकचौर ! तदपि ज्ञातो हरिः खल्वसि ॥" अत्र व्यञ्जनया हत्या नाभ्यवच्छेदेन पुण्डरीकधारणम्, अमितबलशालित्वं, करावच्छेदेन चक्रधारित्वं, दण्डाघातेन भूविदारणं, चञ्चलाऽलङ्कतोरःस्थलत्वम्, उपेन्द्रत्वञ्च बोध्यन इति गाम्भीर्य्यम् । विस्तृतरूपेण वाक्यविन्यासः विस्तरः ; अनतिविस्तृतैः पदैः अभिप्रेयार्थप्रतिपादनं सङ्क्षेपः ; यथा हि,—"स मारुतिसमानीतमहौषधिहृतव्यथः । लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्य्यकं शरैः ॥" अत्र प्रस्तुतस्य युद्धवर्णनप्रसङ्गस्य अवान्तरवाक्यविस्तारेण विच्छेदे रसभङ्गभिया अतिविस्तृतस्यापि प्रतिपाद्यस्य पादद्वयेनैव समापनात् सङ्क्षेपलक्षणसङ्गतिः । अर्थसम्मितपदवत्त्वं सम्मितत्वम् ; यथा,—"केचिद्वस्तुनि नो वाचि केचिद्वाचि न वस्तुनि । वाचि वस्तुनि चाप्यन्ये नान्ये वाचि न वस्तुनि ॥" इह पदपदार्थयोः तुलातुलितः पदार्थवत् समत्वेन सम्मितत्वम् । भावेन वाक्यस्य अभिव्यक्तिर्भाविकम् ; गतिर्नाम आरोहावरोहयोः क्रमः ; यथा,—"वराहः कल्याणं वितरतु स वः यस्य शशभृत्कलाकोटीकान्तं क्रमविदलदभ्युन्नतिभिया । मिथः सम्मूर्च्छन्निश्चतुरुदधिकल्लोलपटलैरनास्पृष्टं दंष्ट्राशिखरमधिशेते वसुमती ॥" अत्र पूर्व्वस्मिन्नंशे स्वरस्य उत्थानेन, परांशे च मान्द्येन

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र—

**चित्तद्रवीभावमयो ह्लादो माधुर्य्यमुच्यते॥६२६॥(ङ)**

यत्तु केनचिदुक्तं "माधुर्य्यं द्रुतिकारणम्" इति, तन्न; द्रवीभावस्य आस्वादस्वरूपाह्लादाभिन्नत्वेन तत्कार्य्यत्वाभावात्। द्रवीभावश्च स्वाभाविकानाविष्टत्वात्मककाठिन्यमन्युक्रोधादिकृतदीप्तत्वविस्मयहासाद्युपहितविक्षेपपरित्यागेन रत्याद्याकारानुविद्धानन्दोद्बोधेन सहृदयचित्तार्द्रप्रायत्वम्। तच्च, (च)—

---

गतिर्वेदितव्या। प्रक्रान्तस्य परिरक्षणं रीतिः। विशेषप्रकारेण अभिधानम् उक्तिः, यथा,—"कुशलं तस्याः? जीवति, कुशलं पृच्छामि, जीवतीत्युक्तम्। पुनरपि तदेव कथयसि? मृतां नु कथयामि या श्वसिति?॥" क्षेमप्रश्ने तस्यैव सत्त्वमसत्त्वं वा उत्तरयितुमुचितम्; तदनुक्त्वा उक्तिचातुर्य्येण जीवितमात्रशेषत्वप्रतिपादनात् अयमुक्तेर्विषयः। उक्तेः प्रौढः परिपाकः प्रौढिः स्यात्; यथा,—"अभ्युद्धृता वसुमती दलितं रिपूरः क्षिप्तक्रमा कवलिता बलिराज्यलक्ष्मीः। अत्रैकजन्मनि कृतं यदनेन यूना जन्मत्रये तदकरोत् पुरुषः पुराणः॥" इति सङ्क्षेपः।

(ङ) माधुर्य्यमाह, चित्तेति।—चित्तस्य—मनसः, द्रवीभावमयः,—द्रवभावस्वरूप इत्यर्थः, [ स्वार्थे मयट् ] ह्लादः,—आनन्दविशेषः, माधुर्य्यम् उच्यते। "आह्लादकत्वं माधुर्य्यं शृङ्गारे द्रुतिकारणम्" इति काव्यप्रकाशः। (शृङ्गारादिषु अनुभवसिद्धमेव आह्लादजनकत्वं, तदेव माधुर्य्यम्; तस्योत्कर्षाधायकत्वमाह,—द्रुतिकारणमिति)।

(च) तन्मतं दूषयति, यत् त्विति।—आस्वादस्वरूपः यः आह्लादः तस्मात् अभिन्नत्वेन—अभेदेन, तस्य—माधुर्य्यस्य, कार्य्यत्वाभावात्—माधुर्य्यजन्यत्वासम्भवात्। आह्लादातिरिक्तस्य द्रवीभावस्य निर्वक्तुमशक्यतया आह्लाद एव पर्य्यवसानम्; एवमाह्लादजनकत्वापेक्षया लघुन आह्लादस्यैव माधुर्य्यपदशक्यतावच्छेदकत्वमुचितम्, इत्याह्लाद एव माधुर्य्यपदार्थ इति भावः। ननु द्रवीभावस्तावदाह्लाद एव भवता उच्यते,—तस्य रसाभिन्नतया रसधर्म्मत्वं नोपपद्यते इत्यत आह,—द्रवीभाव इति। काठिन्यादिपरित्यागस्य रसोद्बोधहेतुत्वं दर्शयति, स्वाभाविकेति।—स्वाभाविकं—सहजं, यत् अनाविष्टत्वात्मकम्—असनोयोगितारूपं, काठिन्यं—दुर्बोधत्वं, तथा मन्युः,—शोकः, क्रोधः,—कोपः, [ आदिपदेन मोहादीनां परिग्रहः ] तैः कृतं—जनितं, यत् दीप्तत्वं—मनसो ज्वलितत्वं, दग्धप्रायत्वमिति यावत्, विस्मयः,—चकितता, हासः,—



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात्॥६२७॥(छ)

सम्भोगादिशब्दा उपलक्षणानि, तेन सम्भोगाभासादिषु अप्येतस्य (ज) स्थितिर्ज्ञेया ।

यथा,—

मूर्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान् विना ।
रणौ लघू च तद्व्यक्तौ वर्णाः कारणतां गताः ॥

अबोधपूर्वं हास्यम्, [ आदिपदेन अवज्ञादीनां ग्रहणं ] तैः उपहितः,—उत्पादितः, यः विक्षेपः,—आवरणम्, आस्वादप्रतिरोध इत्यर्थः, तस्य परित्यागेन—वर्जनेन, रत्यादीनाम् [ आदिपदेन शोकप्रशमयोः परिग्रहः ] आकारेण—परिणत्या, परिपोषेणेत्यर्थः, अनुविद्धस्य—संवलितस्य, आनन्दस्य उद्बोधेन—आविर्भावेण, सहृदयानां—सामाजिकानां, चित्तस्य आर्द्रप्रायत्वं—प्रायेण आर्द्रीभावः, गलितत्वमिति यावत् । एवञ्च शृङ्गारकरुणशान्तरसोद्बोधानन्तरं जायमानो रत्याद्यविषयः सहृदयचित्तद्रवीभावरूपकेवलानन्दसन्दोहानुभवो माधुर्यं, तस्य जनकतासम्बन्धेन रससम्बन्धितया रसधर्मत्वमज्ञातमेवेति भावः । केचित्तु,—"रतिशोकप्रशमेषु गुर्जर्यादिरागवृत्तिरिव कश्चिदेको धर्मः अस्ति, स एव माधुर्यं, येन सामाजिकानां चित्तं द्रवीभवति, रत्यादीनां रसरूपतया परिणामेन तस्य रसवृत्तित्वम्" इति वदन्ति ; तन्न, तत्र तादृशधर्मसत्त्वे मानाभावात् । न च द्रुतिरूपकार्य्यान्यथाऽनुपपत्त्या तत् कल्पनमिति वाच्यं, तस्य रसस्वभावेनैव सिद्धत्वात् ; तदर्थं धर्मान्तरकल्पनाऽनौचित्यात्, गुर्जर्यादौ तु प्रत्यक्षसिद्ध एव तादृशधर्मः । अन्ये तु,—"सुशब्दत्वमेव माधुर्यं काव्यधर्मः" इत्याहुः, तन्न, असुशब्दत्वेऽपि काव्ये माधुर्य्यस्योपलम्भात् । तच्चेति ।—माधुर्य्यञ्च इत्यर्थः ।

(छ) माधुर्य्यविषयानाह, सम्भोगे इति ।—सम्भोगापेक्षया करुणे, करुणापेक्षया विप्रलम्भे, तदपेक्षया शान्ते, क्रमात्—उत्तरोत्तरम्, अधिकं—सातिशयमित्यर्थः । केचित्तु,—"करुणे" इति विप्रलम्भविशेषणमाहुः, तन्न ; "अश्रुपातादयस्तत्र द्रुतत्वात् चेतसो मताः" इत्यनेन करुणेऽपि चित्तद्रवीभावस्याङ्गीकारेण माधुर्य्यस्वीकारात्, "अपसारय घनसारम्—" इत्यादौ विप्रलम्भान्तरेऽपि माधुर्य्योपलम्भाच्च । अत एव प्रकाशकृताऽप्युक्तं,—"शृङ्गारे" ( अर्थात् सम्भोगे ) इत्युक्त्वा "करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् ।" इति ।

(ज). एतस्य—माधुर्य्यस्य ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा ॥६२८॥ (झ)

यथा,—

"अनङ्गमङ्गलभुवस्तदपाङ्गस्य भङ्गयः।
जनयन्ति मुहुर्यूनामन्तः सन्तापसन्ततिम् ॥" (ञ)

यथा वा मम,—

"लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन्
समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन्।
मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्
रजोवृन्दं विन्दन् किरति मकरन्दं दिशि दिशि ॥" (ट)

---

(झ) माधुर्य्यव्यञ्जकानाह, मूर्ध्नीति।—मूर्ध्नि—शिरसि, वर्गाणां—कवर्गादीनाम्, अन्त्यवर्णेन—चरमवर्णेन, युक्ताः, कादयो मान्ता इत्यर्थः, वर्णाः, टठडढान् विना—टठडढानां मूर्ध्नि अन्त्यवर्णयोगेऽपि न माधुर्य्याभिव्यक्तिरिति भावः, लघू—वर्णान्तरयोगराहित्येन स्वल्पप्रयत्नोच्चार्य्यौ, विसर्गवर्णान्तरायुक्तौ अयुक्तान्तौ च इत्यर्थः, न तु गुरुविपरीतौ इति भावः, रणौ—रेफणकारौ, "स्वयं हाराकारा वहति जलधारा कुवलयात्" इत्यादौ, तथा,—"अपसारय घनसारं कुरु हारं दूर एव किं कमलैः" इत्यादौ च दीर्घानुस्वारयोगेन गुरोरपि रेफस्य माधुर्य्यव्यञ्जकत्वदर्शनात्; केचित्तु,—"लघू ह्रस्वान्तौ" इत्याहुः, तन्न; "स्मरः खरः खलः कान्तः" इत्यादौ, तथा,—"परस्परस्पर्द्धिवरः स्वयंवरः" इत्यादौ च रेफस्य ह्रस्वान्तत्वेन माधुर्य्यव्यञ्जकत्वापत्तेः, "पुरो रेवापारे गिरिरिति दुरारोहशिखरः" इत्यादौ ह्रस्वान्तत्वाभावेन माधुर्य्यव्यञ्जकत्वानुपपत्तेः। तद्व्यक्तौ—तस्य माधुर्य्यस्य, व्यक्तौ—व्यञ्जने, कारणतां गताः। तथा अवृत्तिः,—वृत्तिः समासः, तद्रहिता; वा—अथवा, अल्प वृत्तिः,—अल्पसमासा, मधुरा—मनोहारिणी, रचना—पदसन्दर्भः, तद्व्यक्तौ कारणतां मता इति शेषः।

(ञ) उदाहरति, यथेति।—अनङ्गस्य—कामस्य, मङ्गलभुवः,—मङ्गलनिकेतनानि, तस्याः,—कान्तायाः, अपाङ्गस्य भङ्गयः,—नेत्रान्तकौटिल्यानि, मुहुः,—पुनःपुनः, यूनां—तरुणानाम्, अन्तः,—अन्तःकरणे, सन्तापसन्ततिं—सन्तापातिशयं, जनयन्ति—उत्पादयन्ति।

(ट) लतेति।—वसन्तवायुवर्णनमिदम्। मरुत्—पवनः, गुञ्जन्तः,—स्वनन्तः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते ।**
**वीरबीभत्सरौद्रेषु क्रमेणाधिक्यमस्य तु ॥६२८॥(ठ)**

अस्य—ओजसः । अत्रापि वीरादिशब्दा उपलक्षणानि, तेन वीराभासादावप्यस्यावस्थितिः ।

**वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ ।**
**उपर्य्यधो द्वयोर्वा सरेफष्टठडढैः सह ॥**

---

मदवन्तः,—मत्ताः, अलिपुञ्जाः,—भ्रमरसमूहाः यस्मिन् तादृशं, लताकुञ्जं—लतावेष्टितविहारस्थानम्, (अत्र लतापदं सुरभिपुष्पलताबोधकतया सार्थकम्) चपलयन्—कम्पयन्, अङ्गं—शरीरं, समालिङ्गन्—स्पृशन्, द्रुततरम्—अतिशीघ्रम्, अनङ्गं—कामं, प्रबलयन्—वर्द्धयन्, दलितं—विकसितम्, अरविन्दं—पद्मं, मन्दं मन्दं तरलयन्—कम्पयन्, रजोवृन्दं—परागपुञ्जं, विन्दन्—लभमानः सन्, दिशि दिशि मकरन्दं—पुष्परसं, किरति—विक्षिपति । शिखरिणी वृत्तम् । अत्र प्रसङ्गक्रमेण अवृत्तेः माधुर्य्यव्यञ्जकत्वं यथा,—"मुद्रितामिन्दुमालोक्य पद्मिनीं पश्य सुन्दरि ! । हन्त ! कान्तस्य विच्छेदे मधुरोऽपि न रोचते ॥" इति । सुकुमारार्थद्योतकरचनाया माधुर्य्यव्यञ्जकत्वं यथा,—"उचितं गोपनमनयोः स्तनयोः कनकाद्रिधर्म्मतस्करयोः । अवमानितविधुमण्डलमुखमण्डलगोपनं किमिति ॥"

(ठ) ओजोगुणमाह, ओज इति ।—चित्तस्य—मनसः, विस्ताररूपं—विस्तारस्वरूपं, दीप्तत्वं—विकासविशेषः, उत्साहाद्याकारानुविद्धचमत्कारोद्बोधेन जायमान उत्साहाद्यविषयकचमत्कारोद्बोध इत्यर्थः, (केचित्तु,—"दीप्तत्वं कटुवर्णश्रवणजन्यश्रोत्रदुःखसम्भिन्नसुखविशेषः, स एव चित्तविस्तारः" इत्याहुः, तन्न ; अनिष्ठुराक्षरप्रायबन्धव्यज्यमाने वीरादौ तदभावप्रसङ्गात् । "चित्तविस्ताररूपदीप्तत्वजनकम् ओजः" इति काव्यप्रकाशः, तन्न ; वीरादिभ्य एव जायमानदीप्तत्वस्यैव ओजःस्वीकारेण उपपत्तौ तज्जनकधर्म्मान्तरकल्पने मानाभावात्) ओज उच्यते । ओजोविषयानाह, वीरेति ।—वीरापेक्षया बीभत्से, तदपेक्षया रौद्रे, अस्य—ओजस इत्यर्थः, आधिक्यम्—आतिशय्यम् । "रौद्रवीरे च निष्प्रतिभम् ओजः, बीभत्से तु माधुर्य्यलेशानुविद्धं, हास्याद्भुतभयानकेषु द्वयोः समावेशः ध्वनिसिद्धान्तसङ्ग्रहोक्तरीत्या ज्ञेयः" इति चण्डीदासः । एतन्मते बीभत्सापेक्षया रौद्रवीरयोरोजसः आधिक्यम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शकारश्च षकारश्च तस्य व्यञ्जकतां गताः।
तथा समासबहुला घटनौद्धत्यशालिनी ॥६३०॥ (ड)

यथा,—"चञ्चद्भुज" इत्यादि।

चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः।
स प्रसादः समस्तेषु रसेषु रचनासु च ॥६३१॥ (ढ)

व्याप्नोति—आविष्करोति।

शब्दास्तद्व्यञ्जका अर्थबोधकाः श्रुतिमात्रतः॥६३२॥ (ण)

यथा,—

"सूचीमुखेन सकृदेव कृतव्रणस्त्वम्
मुक्ताकलाप! लुठसि स्तनयोः प्रियायाः।

---

(ड) ओजोव्यञ्जकान् वर्णादीनाह, वर्गस्येति।—वर्गस्य आद्यतृतीयाभ्यां वर्णाभ्यां युक्तौ तदन्तिमौ—द्वितीयचतुर्थावित्यर्थः, तत्राद्येन युक्तो द्वितीयः, तृतीयेन युक्तश्चतुर्थः इति बोध्यम्। उपरि—शिरसि, अधः,—पदतले, वा द्वयोः,—उपर्य्यधोभागयोरित्यर्थः, सरेफः,—रेफयुक्तः वर्णः; क्रमेण यथा,—अर्कः, अग्रम्, आर्द्रम् इत्यादि। एतदुपलक्षणं, माधुर्य्यव्यञ्जकातिरिक्तौ युक्तौ विसर्गयुक्तश्च वर्णः ओजोव्यञ्जकः; अत एव "उत्कृत्योत्कृत्य" इत्यादौ, "यो यः पाञ्चालगोत्रे" इत्यादौ च ओजोव्यञ्जकत्वमक्षतमेव; टादयस्तु केवला अप्योजोव्यञ्जकाः। समासबहुलेति।—ओजोव्यञ्जकवर्णघटितसमासाधिक्यमपि ओजोव्यञ्जकम् इति पृथगुपादानम्। औद्धत्यशालिनी—उल्बणार्थप्रतिपादिनीत्यर्थः, घटना—रचना। द्वितीयप्रकारसङ्ग्रहाय एतदुपादानं सार्थकम्; तेन,—"आपतन्तममुं दूरादूरीकृतपराक्रमः। बलोऽवलोकयामास मातङ्गमिव केशरी॥" इत्यादौ ओजोव्यञ्जकत्वमुपपन्नम्।

(ढ) प्रसादमाह, चित्तमिति।—अनलः,—अग्निः, शुष्कं—नीरसम्, इन्धनमिव—काष्ठमिव, यः क्षिप्रं चित्तं व्याप्नोति—सहसार्थबोधेन विमलयतीत्यर्थः, सः प्रसादः। प्रकाशकृताऽप्युक्तं;—"शुष्केन्धनादिवत् स्वच्छजलवत् सहसैव यः। व्याप्नोत्यन्यत् प्रसादोऽसौ सर्व्वत्र विहितस्थितिः॥" इति।

(ण) शब्दा इति।—श्रुतिमात्रतः,—श्रवणमात्रेणैवेत्यर्थः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

बाणैः स्मरस्य शतशो विनिकृत्तमर्मा
स्वप्नेऽपि तां कथमहं न विलोकयामि" ॥ (त)

**एषां शब्दगुणत्वञ्च गुणवृत्त्योच्यते बुधैः ॥६३३॥(थ)**

"शरीरस्य शौर्य्यादिगुणयोग इव" इति शेषः ।

**श्लेषः समाधिरौदार्य्यं प्रसाद इति ये पुनः ।**
**गुणाश्चिरन्तनैरुक्ता ओजस्यन्तर्भवन्ति ते ॥६३४॥(द)**

ओजसि—भक्त्या ओजःपदवाच्ये शब्दार्थधर्मविशेषे। तत्र श्लेषो बहूनामपि पदानामेकपदवद्भासनात्मा । (ध)

(त) उदाहरति,—यथेति। सूचीति।—हे मुक्ताकलाप!—मौक्तिकहार! त्वं सूचीमुखेन—अतिसूक्ष्माग्रेणेति भावः, सकृत्—एकवारमेव, न तु पुनःपुनरिति भावः, कृतव्रणः,—छिद्रित इत्यर्थः, सूत्रप्रवेशार्थमिति भावः, (तथापि) प्रियायाः स्तनयोः लुठसि—लुण्ठितो भवसि, अहं स्मरस्य—कामस्य, बाणैः,—शरैः, शतशः विनिकृत्तं—विशेषेण छिन्नं, मर्म्म यस्य तथाभूतोऽपि, स्वप्नेऽपि तां—प्रियां, कथं न विलोकयामि?—पश्यामि? वसन्ततिलकं वृत्तम् ।

(थ) एषामिति।—एषां—माधुर्य्यौजःप्रसादानां, शब्दगुणत्वं गुणवृत्त्या—आश्रयरसव्यञ्जकत्वरूपपरम्परया इत्यर्थः, बुधैः,—वामनादिभिः, उच्यते—कथ्यते। शौर्य्यादेरात्मधर्म्मस्य यथा शरीरवृत्तित्वं, यथा वा स्थूलत्वादेः शरीरधर्म्मस्य आत्मवृत्तित्वं परम्परासम्बन्धेन, तथा इत्यर्थः। ननु गुणानां रसवृत्तित्वस्य निरुक्तपरम्परायाः सम्बन्धत्वस्य च कल्पने गौरवम्, अतः शब्दार्थवृत्तित्वमेव कल्पयितुमुचितम्, इति चेत्, न; क्वचित् नीरसे गुणाभिव्यञ्जकशब्दार्थयोः सम्भवेऽपि माधुर्य्यादेरनुपलम्भात्, क्वचित्तु तदसम्भवेऽपि रसत्वेनैव तदुपलम्भाच्च रसान्वयव्यतिरेकानुविधायित्वेन रसवृत्तित्वकल्पनस्यैव औचित्यात्। गुणवृत्तिश्चात्र स्वाश्रयोपस्थापकत्वरूपेति बोद्धव्यम्। प्रकाशकृताऽप्यभिहितम्;—"गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता।" इति।

(द) साम्प्रतं प्राचीनोक्तानां श्लेषसमाध्यौदार्य्यप्रसादाख्यानां शब्दगुणानां समाधानमाह, श्लेष इति।—श्लेषादयः चत्वारो ये गुणाः चिरन्तनैः,—प्राचीनैः, उक्ताः, ते ओजसि—परम्परया ओजःपदप्रतिपाद्ये शब्दार्थगुणविशेषे, अन्तर्भवन्ति—अन्तर्भूताः भवन्ति।

(ध) ओजसीति।—भक्त्यालक्षणया। श्लेषमाह, तत्रेति।—तत्र—तेषु मध्ये

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"उन्मज्जज्जलकुञ्जरेन्द्ररभसाऽऽस्फालानुबन्धोद्धतः
सर्वाः पर्वतकन्दरोदरभुवः कुर्वन् प्रतिध्वानिनीः ।
उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथाऽयं तथा
प्रायःप्रेङ्खदसङ्ख्यशङ्खधवला वेलेयमुद्गच्छति ॥" (न)

अयं बन्धवैकट्यात्मकत्वादोज एव । (प)

समाधिः,—आरोहावरोहक्रमः ; आरोहः,—उत्कर्षः, अवरोहः,—अपकर्षः, तयोः क्रमः,—वैरस्यतानावहो विन्यासः । यथा "चञ्चद्भुज" इत्यादि । अत्र पादत्रये क्रमेण बन्धस्य गाढ़ता । चतुर्थपादे तु अपकर्षः । तस्यापि च तीव्रप्रयत्नोच्चार्य्यतया ओजस्विता । ( फ )

---

इत्यर्थः । एकपदवत् भासनं—स्फुरणम्, आत्मा—रूपं यस्य तादृशः, शब्दधर्म्मविशेषः श्लेषः ; अत एवोक्तं प्रकाशकृता,—"बहूनामपि पदानामेकपदवद्भासनात्मा यः श्लेषः, यश्च आरोहावरोहक्रमरूपः समाधिः, या च विकटत्वलक्षणा उदारता, यश्चौजोमिश्रितशैथिल्यात्मा प्रसादः, तेषामोजसि अन्तर्भावः ।" इति ।

( न ) उदाहरति,—यथेति । उन्मज्जदिति ।—प्रलयकालीनसमुद्रवर्णनमिदम् । उन्मज्जतां—जलादुत्तिष्ठतां, जलकुञ्जरेन्द्राणां—जलीयगजेन्द्राणां, रभसेन—वेगेन, यः आस्फालः,—शुण्डास्फालनं, तस्य अनुबन्धेन—सातत्येन, उद्धतः,—उन्नतः, ( पक्षे,—तेषां रभसेन—हर्षेण, यः आस्फालः,—उत्थानव्यापारातिशयः, तस्य अनुबन्धेन—आरम्भेण, उद्धतः, ) श्रुतिपथोन्माथी—कर्णविवरविदारी, ( पक्षे,—श्रुतीनां—वेदानां, पथां च उन्माथी, ) उच्चैः,—महान्, अयं—सिन्धुसम्बन्धी, ध्वनिः सर्वाः पर्व्वतानां कन्दरोदरभुवः,—गुहाभ्यन्तरस्थानानि, प्रतिध्वानिनीः,—प्रतिध्वनिमतीः, कुर्व्वन्, ( पक्षे,—शब्दनिरुद्धाः,—जलपूरणेन निःशब्दाः कुर्व्वती, ) यथा उच्चरति—उत्तिष्ठति, तथा प्रायः,—बाहुल्येन, प्रेङ्खद्भिः,—चलद्भिः, असङ्ख्यैः शङ्खैः धवला इयं वेला—विकृतसिन्धुजलं, ( "अब्ध्यम्बुविकृतौ वेला कालमर्य्यादयोरपि" इत्यमरः ) उद्गच्छति—उत्तिष्ठति । शार्दूलविक्रीड़ितं वृत्तम् ।

(प) अयं—गुण इत्यर्थः, बन्धस्य—रचनायाः, वैकट्यात्मकत्वात्—डम्बररूपत्वात् ।

(फ) समाधिमाह, समाधिरिति ।—उत्कर्षः,—गाढ़बन्धत्वम्, अपकर्षः,—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उदारता—विकटत्वलक्षणा। विकटत्वञ्च पदानां नृत्यत्प्रायत्वम्। (व) यथा,—

"स्वचरणविनिविष्टैर्नूपुरैर्नर्त्तकीनां
झणिति रणितमासीत् तत्र चित्रं कलञ्च।" (भ)

अत्र च तन्मतानुसारेण रसानुसन्धानमन्तरेणैव शब्दप्रौढ़ोक्तिमात्रेणौजः। (म)

---

बन्धशैथिल्यम्; वैरस्यानावहः,—उत्कर्षमध्ये अपकर्षोपादाने अपकर्षमध्ये उत्कर्षोपादाने च वैरस्यं तद् यत्र न भवति स इत्यर्थः। ननु क्रमनिबन्धयोरुत्कर्षापकर्षयोः समावेशः समाधिरिति फलितम्; तत्रापकर्षस्य कथमोजस्यन्तर्भावः? इत्यत आह, तस्यापीति।—तस्यापि—चतुर्थपादस्यापि इत्यर्थः, तीव्रेण—द्रुतेन, प्रयत्नेन उच्चार्य्यतया—कीर्त्तनीयतया, ओजस्विता—ओजोगुणवत्त्वम्। पद्यस्य पादे पादे आरोहावरोहक्रमः सम्भवतीति, तत्रारोहपूर्व्वोऽवरोहो यथा,—"निरानन्दः कौन्दे मधुनि मधुरो बालवकुले, न साले ऽनालम्बो लवमपि लवङ्गे न रमते। प्रियङ्गौ नासङ्गं रचयति, न चूते विरमति, स्मरंल्लक्ष्मीलीलाकमलमधुपानं मधुकरः॥" लवङ्ग इति लघुप्रयत्नोच्चारणीनावरोहः। अवरोहपूर्व्व आरोहो यथा,—"अयमुदयति मुद्राभञ्जनः पद्मिनीनाम्, उदयगिरिवनालीबालमन्दारपुष्पम्। विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्, कुपितकपिकपोलक्रोड़ताम्रस्तमांसि॥" इति।

(व) औदार्य्यमाह, उदारतेति।—विकटत्वं लक्षणं—स्वरूपं यस्यास्तथाभूता। नृत्यत्प्रायत्वं—प्रायेण नर्त्तनशीलत्वं, प्रत्येकं पदच्छेदात् इति भावः।

(भ) उदाहरति,—यथेति। स्वचरणेति।—नर्त्तकीनां—नृत्यकर्त्रीणां गणिकानां, स्वचरणविनिविष्टैः ["सुचरण" इति पाठे,—शोभनपादे, सुकोमलपादे इत्यर्थः] नूपुरैः, तत्र—नृत्यशालायां, चित्रं—विचित्रं, कलं—मधुरं, झणिति—"झण्" इत्याकारकं, रणितं—रणनं, शब्द इति यावत्, आसीत्।

(म) नन्वत्र वीरादिरसाभावादोज एव नास्ति, तद्व्यञ्जके एतदीयबन्धगाढ़त्वे उदारतायाः कथमन्तर्भावः? इत्यत आह, अत्रेति।—तन्मतानुसारेण—तेषां प्राचीनानां, मतानुसारेण, ये गुणानां शब्दार्थधर्म्मत्वमेव वदन्ति, तन्मतेनेत्यर्थः, अन्तरेण—विना, शब्दानां प्रौढ़ोक्तिमात्रेण—विकटोक्तिवशेन, ओजः, व्यवह्रियते इति शेषः; तथा च,—प्रकृते योग्यतामादायैव बन्धगाढ़त्वस्य ओजोव्यञ्जकत्वमिति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रसादः,—ओजोमिश्रितशैथिल्यात्मा। (य)

यथा,—

"यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम्"॥ (र)

**माधुर्य्यव्यञ्जकत्वं यदसमासस्य दर्शितम्।**
**पृथक्पदत्वं माधुर्य्यं तेनैवाङ्गीकृतं पुनः॥६३५॥(ल)**

यथा,—"श्वासान् मुञ्चति" इत्यादि। (व)

---

(य) प्रसादमाह, प्रसाद इति।—श्रोजोमिश्रितं शैथिल्यं—बन्धनश्लथीभावः, आत्मा—स्वरूपं यस्य तादृशः, शैथिल्ययुक्तबन्धनगाढ़त्वमित्यर्थः। समाधौ श्लेषे तत्पादे वा श्रोजःप्रसादयोरन्यतरस्य पुनरुन्मज्जनं नास्ति, अत्र तु उभयोः निमज्जनो-न्मज्जनक्रमेण सम्पर्कः। तदुक्तं वामनेन,—"सम्पृक्तौ खल्वोजःप्रसादौ नदीवेणिका-वदुद्वहतः" इति।

(र) उदाहरति,—यथेति। य इति।—व्याख्यातपूर्व्वोऽयं श्लोकः ४२६ पृष्ठे। अत्र प्रतिपाद्यं बन्धस्य गाढ़त्वं मध्यमवर्णानां शैथिल्यञ्चास्तीति द्रष्टव्यम्।

(ल) प्राचीनोक्तं माधुर्य्यं शब्दगुणं समाधत्ते, माधुर्य्येति।—असमासस्य—अवृत्तिरल्पवृत्तिर्वेति वचनोक्तस्य समासाभावस्य, यत् माधुर्य्यव्यञ्जकत्वं—माधुर्य्यगुणावि-ष्कारकत्वं, दर्शितं, मयेति शेषः, तेनैव पृथक्पदत्वं पुनः माधुर्य्यं, प्राचीनोक्तमिति शेषः, अङ्गीकृतं—स्वीकृतम्। एतेनास्य परम्परया स्वोक्ते माधुर्य्ये एव अन्तर्भाव इति बोध्यम्। अत एव प्रकाशकृताऽप्युक्तम्—"पृथक्पदत्वरूपं माधुर्य्यं भङ्ग्या साक्षादुपात्तम्" इति।

(व) उदाहरति, श्वासानिति।—(व्याख्यातमिदं प्राक् १६६ पृष्ठे)। अत्र भुजावल्लरीमिति प्राणसमानेति च समाससत्त्वेऽपि पृथक्पदत्वस्य दीर्घसमासराहित्ये तात्पर्य्यान्न दोषः। यद्वा,—"बाले! नाथ! विमुञ्च मानिनि! रुषं, रोषान्मया किं कृतम्? खेदोऽस्मासु न मेऽपराध्यति भवान् सर्व्वेऽपराधा मयि। तत् किं रोदिषि गद्गदेन वचसा? कस्याग्रतो रुद्यते? नन्वेतन्मम, का तवास्मि? दयिता, नास्मीत्यतो रुद्यते॥" एतदुदाहरणं बोध्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अर्थव्यक्तेः प्रसादाख्यगुणेनैव परिग्रहः ।
अर्थव्यक्तिः पदानां हि झटित्यर्थसमर्पणम् ॥६३६॥(श)

स्पष्टमुदाहरणम् ।

ग्राम्यदुःश्रवतात्यागात् कान्तिश्च सुकुमारता॥६३७॥(ष)

अङ्गीकृतेति सम्बन्धः । कान्तिः,—औज्ज्वल्यम् । तच्च हालिकादिपदविन्यासवैपरीत्येनालौकिकशोभाशालित्वम् । सुकुमारता—अपारुष्यम् । अनयोरुदाहरणे स्पष्टे । (स)

(श) प्राचीनोक्तामर्थव्यक्तिं समाधत्ते, अर्थव्यक्तेरिति ।—प्रसादाख्यगुणेनैव—प्रसादगुणव्यञ्जकेनैवेत्यर्थः; अर्थव्यक्तेः,—चिरन्तनोक्तशब्दगुणविशेषस्य, परिग्रहः,—ग्रहणं, हि—यतः, पदानां झटिति अर्थसमर्पणम्—अर्थावबोधः, एवेति अध्याहार्य्यम्, अर्थव्यक्तिः । एतेन अस्य प्रसादे एव अन्तर्भावो बोद्धव्यः । प्रकाशकृदप्याह,—"प्रसादेनार्थव्यक्तिर्गृहीता" इति ।

(ष) चिरन्तनोक्तां कान्तिं सुकुमारताञ्च समाधत्ते, ग्राम्येति ।—ग्राम्यस्य—दोषविशेषस्य, दुःश्रवतायाश्च त्यागात्—परिहारात्, कान्तिर्नाम शब्दगुणः सुकुमारतानाम शब्दगुणश्च, अङ्गीकृत इति शेषः । तत्र ग्राम्यदोषपरित्यागेन कान्तिः, दुःश्रवतापरित्यागेन सुकुमारता इति बोध्यम् ।

(स) कान्तिमाह,—कान्तिरिति । हालिकेति ।—हालिकः,—हले—हलकर्म्मणि, कर्षणकर्म्मणीति यावत्, नियुक्त इति हालिकः । ["तत्र नियुक्तः" (४।४।६९ पा०) इति ठक्] हलेन भूमिकर्षणकर्त्ता शस्यरोपणनिपुणो निकृष्टजातिविशेषः, चाषेति प्रसिद्धः । [आदिपदेन तथाविधप्राकृतनरबालादिपरिग्रहः] तेषां यः पदविन्यासः,—शब्दप्रयोगः, तस्य वैपरीत्येन—साधुपदप्रयोगेणेत्यर्थः, अलौकिकी—विलक्षणा, या शोभा तया शालते—शोभते इति तथात्वम् । सुकुमारतामाह, सुकुमारतेति ।—अपारुष्यं—श्रुतिकटुशब्दानाम् अप्रयोगेण श्रवणसुभगत्वमित्यर्थः । प्रकाशकृताऽप्युक्तम्—"कष्टत्वग्राम्यत्वयोर्दुष्टत्वाभिधानात् तन्निराकरणेन अपारुष्यरूपं सौकुमार्य्यम्, औज्ज्वल्यरूपा कान्तिश्च स्वीकृता" इति । स्पष्टे इति ।—क्रमेण यथा,—"ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानवः ।" विपर्ययस्तु,—"ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः ।" अत्र भल्लगल्लमानुषशब्दाः ग्राम्याः । "आनन्दमियमायातु कदा कामवशंवदा ।" विपर्य्ययस्तु,—"कार्त्तार्थ्यमियमायातु" इति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**क्वचिद्दोषस्तु समता मार्गाभेदस्वरूपिणी।**
**अन्यथोक्तगुणेष्वस्या अन्तःपातो यथायथम्॥६३८॥(ह)**

मसृणेन विकटेन वा मार्गेणोपक्रान्तस्य सन्दर्भस्य तेनैव परिनिष्ठानं मार्गाभेदः। स (क) च क्वचिद् दोषः। तथाहि,—

"अव्यूढाङ्गमरूढपाणिजठराभोगञ्च बिभ्रद्वपुः
पारीन्द्रः शिशुरेष पाणिपुटके सम्मातु किं तावता।
उद्यद्दुर्द्धरगन्धसिन्धुरशतप्रोद्दामदानार्णव-
स्रोतःशोषणरोषणात् पुनरितः कल्पाग्निरल्पायते॥" (ख)

(ह) प्राचीनोक्तां समतां समाधत्ते, क्वचिदिति।—मार्गस्य—रीतेः, अभेदः,—अभिन्नता, अपरित्याग इत्यर्थः; एव स्वरूपं तद्विद्यते अस्या इति तथाविधा, समता—समभावेन पदरचना इत्यर्थः, क्वचित्—कुत्रचित् प्रदेशे, सुकुमारवन्धमध्ये उद्धतार्थोपस्थितौ, प्रौढवन्धमध्ये सुकुमारोपस्थितौ चेत्यर्थः, दोषः स्यात्। अन्यथा—प्रक्रान्तमार्गयोग्यार्थानुपस्थितौ इत्यर्थः, उक्तगुणेषु—कथितेषु माधुर्य्यसौकुमार्य्यौजःसु गुणेषु, अस्याः,—समतायाः, यथायथं—यथासम्भवं, सुकुमारमार्गभेदस्य माधुर्य्यसौकुमार्य्ययोः, प्रौढमार्गभेदस्य तु ओजसीत्यर्थः, अन्तःपातः,—अन्तर्भावः।

(क) मार्गाभेदपदस्यार्थमाह, मसृणेति।—मसृणेन—सुकुमारेण, विकटेन—डम्बरेण, वा मार्गेण—प्रणाल्या, उपक्रान्तस्य—आरब्धस्य, सन्दर्भस्य—प्रबन्धस्य, तेनैव—उक्तमार्गेणैव, पूर्वप्रणाल्यां एवेत्यर्थः, परिनिष्ठानं—समापनम्; सः,—मार्गाभेदः।

(ख) मार्गाभेददोषत्यागस्य गुणत्वमुदाहरति, अव्यूढेति।—अव्यूढानि—विशेषेण अपरिपुष्टानि, अङ्गानि यस्य तादृशं, तथा अरूढः,—असञ्जातः, पाणेः,—करतलस्य, जठरस्य—उदरस्य, च आभोगः,—विस्तारः, यस्य तथाभूतं, वपुः,—शरीरं, बिभ्रत्—दधानः, एषः शिशुः पारीन्द्रः,—सिंहशावकः ("कण्ठीरवस्तु पारीन्द्रः केसरी गजमोहनः" इति हारावली) पाणिपुटके—पुटकाकारेण संयुक्ते पाणिद्वये इत्यर्थः, सम्मातु—सम्यक् परिमाणं प्राप्नोतु, तावता—तेन अव्यूढाङ्गत्वादिना किम्? न कापि तस्य माहात्म्यहानिरिति भावः। हानेरभावमाह, उद्यदिति।—उद्यताम्—उदयं गच्छतां, वर्द्धमानानामित्यर्थः, दुर्द्धराणां—दुरासदानां, गन्धसिन्धुराणां—गन्धगजानां, "यस्यैवमदगन्धेन हस्तिनो भयविह्वलाः। दूरादेव पलायन्ते गन्धहस्ती स उच्यते॥" इत्युक्तलक्षणगजविशेषाणामित्यर्थः, शतस्य प्रोद्दामः,—उत्कटः, यः दानार्णवः,—मद-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र उद्धतेऽर्थे वाच्ये सुकुमारबन्धत्यागो गुण एव । अनेवं-विधस्थले माधुर्य्यादावेवान्तःपातः । (ग) यथा, "लताकुञ्जं गुञ्जन्" इत्यादि ।

**ओजः प्रसादो माधुर्य्यं सौकुमार्य्यमुदारता ।**
**तदभावस्य दोषत्वात् स्वीकृता अर्थगा गुणाः॥६३९(घ)**

ओजः,—साभिप्रायत्वरूपम् । प्रसादः,—अर्थवैमल्यम् । माधुर्य्यम्—उक्तिवैचित्र्यम् । सौकुमार्य्यम्—अपारुष्यम् । उदारता—अग्राम्यत्वम् । एषां पञ्चानामप्यर्थगुणानां यथाक्रममपुष्टार्थाधिकपदानवीकृतामङ्गलरूपाश्लीलग्राम्याणां निराकरणेनैवाङ्गीकारः । स्पष्टान्युदाहरणानि । (ङ)

---

जलराशिः, तस्य स्रोतसः,—प्रवाहस्य, भीषणे रोषण—क्रोध., यस्य तथाविधात्, इतः,—अस्मात् सिंहशिशोः, कल्पाग्निः,—प्रलयानलः, अल्पायते—अल्प इव आचरति। शार्दूलविक्रीडितं वृत्तम् ।

(ग) अत्रेति ।—अत्र—द्वितीयार्द्धे, उद्धते—उत्कटे, वाच्ये—वक्तव्ये, (माधुर्य्यादौ इत्यनेन सौकुमार्य्यौजसोर्ग्रहणम् । ओजोविपर्य्यासः सौकुमार्य्यं, तच्च दीर्घसमासराहित्येन परुषवर्णानां त्यागेन च भवति) एवंविधस्थानेषु सुकुमारमार्गाभेदस्य माधुर्य्यसौकुमार्य्ययोरन्तःपातः इति बोद्धव्यम् ।

(घ) साम्प्रतं प्राचीनोक्तानाम् ओजःप्रभृतीनां पञ्चानां तथा वक्ष्यमाणार्थव्यक्त्यादिसमाख्यानानाञ्च पञ्चानामर्थगुणानां दोषाभावादिभिरङ्गीकारमगुणत्वञ्च यथायथमुपपादयति,ओज इति ।—ओजःप्रभृतयः पञ्च तदभावस्य—तेषामोजःप्रभृतीनाम्, अभावस्य असद्भावस्येत्यर्थः, दोषत्वात्—दोषत्वेन अङ्गीकारादित्यर्थः, अर्थगाः गुणाः स्वीकृताः । ओजःप्रभृतीनामभावस्य दोषत्वेन स्वीकारात् तत्सद्भावस्यास्माभिः दोषाभावत्वेनाङ्गीकृताः, न पुनर्गुणत्वेन इति भावः । "अर्थप्रौढ़िरोजः" इति तु प्राचीनलक्षणम् ; सा च पञ्चविधा,—"पदार्थे वाक्यरचना, वाक्यार्थे च पदाभिधा । प्रौढ़िर्व्याससमासौ च साभिप्रायत्वमस्य च ॥" इति ; तत्राद्यप्रकारचतुष्टयस्य वैचित्र्यमात्रप्रयोजकत्वेन गुणत्वाभावमग्रे दर्शयिष्यति, चरमप्रकारन्तु दोषाभावत्वेनैव सङ्गृह्णाति ।

(ङ) ओज इत्यादि ।—साभिप्रायत्वरूपम्—अभिप्रायप्रकाशकत्वम्, अर्थस्य प्रकृतोपकाराभिप्रायेण प्रयुक्तत्वमित्यर्थः ; अपुष्टार्थत्वदोषराहित्यमेव इति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**अर्थव्यक्तिः स्वभावोक्त्याऽलङ्कारेण तथा पुनः ।**
**रसध्वनिगुणीभूतव्यङ्ग्याभ्यां कान्तिनामकः॥६४०॥(च)**

अङ्गीकृत इति सम्बन्धः । अर्थव्यक्तिः,—वस्तुस्वभावस्फुटत्वम् । कान्तिः,—दीप्तरसत्वम् । (छ) स्पष्टे उदाहरणे ।

---

अर्थानां वैमल्यं—विशदीभावः, प्रसादः; अधिकपदत्वदोषराहित्यमेव इति भावः । उक्तिवैचित्र्यं—विभिन्नरूपत्वं, विचित्रया उक्त्या तस्यैव अर्थस्य पुनः समर्पणमिति यावत्, माधुर्य्यम्; अनवीकृतत्वदोषराहित्यमेव इति भावः । अपारुष्यम्—अश्रुतिकटुत्वं, अमङ्गलार्थस्य उक्तिवैचित्र्यवशात् सुकुमारप्रायत्वेन प्रतिपादनमित्यर्थः, सौकुमार्य्यम्; अमङ्गलरूपाश्लीलत्वदोषराहित्यमेव इति भावः । अग्राम्यत्वं—रिरंसया पामरप्रयुज्यमानत्वं ग्राम्यत्वं, तद्भिन्नत्वमग्राम्यत्वम; इतरजनाप्रयोज्यत्वरूपमित्यर्थः, उदारता, ग्राम्यतादोषराहित्यमेवेति फलितार्थः । प्रकाशकृताऽप्युक्तम्;—"अपुष्टार्थत्वाधिकपदत्वानवीकृतत्वामङ्गलरूपाश्लीलग्राम्याणां निराकरणेन च साभिप्रायत्वरूपमोजः, अर्थवैमल्यात्मा प्रसादः, उक्तिवैचित्र्यरूपं माधुर्य्यम्, अपारुष्यरूपं सौकुमार्य्यम्, अग्राम्यत्वरूपा उदारता च स्वीकृता" इति । स्पष्टानीति ।—सप्तमपरिच्छेदे अपुष्टार्थत्वादिकानां पञ्चानामुदाहरणविपर्य्ययार्थकानि इत्यर्थः । क्रमेण यथा,—"कुर्य्यां हरस्यापि पिनाकपाणेः" इति; विपर्य्ययस्तु,—"सदाशिवं नौमि पिनाकपाणिम्" इति । "सुवर्णा कन्यका रूपयौवनारम्भशालिनी" अत्र यौवननवीनत्वप्रतिपादकमारम्भपदमधिकम्; विपर्य्ययस्तु,—"अपाङ्गो हस्तो मे विमलमणिकाञ्चीपदगतः ।" अत्र काञ्चीपदमित्यनेनैव नितम्बस्य बोधात् विशेषणमप्रयोजकम् । "भानुः सदा युक्ततुरङ्ग एव" इत्यादि; विपर्य्ययस्तु,—"सदा चरति" इति; "सरसीव कीर्त्तिशेषं गतवति भुवि विक्रमादित्ये" अत्र मरणे कीर्त्तिशेषशब्दः; विपर्य्ययस्तु,—हतादिशब्दः । "कामं कन्दर्पचाण्डालो मयि वामाक्षि! निर्दयः । त्वयि निर्मत्सरः किमु?॥" विपर्य्ययस्तु,—"कन्ये! कामयमानं मां न त्वं कामयसे कथम्?" इति ।

(च) प्राचीनाक्तामर्थगुणरूपामर्थव्यक्तिं कान्तिञ्च समाधत्ते, अर्थव्यक्तिरिति ।—स्वभावोक्त्या—तन्नाम्ना अलङ्कारेण अर्थव्यक्तिः, तथा पुनः रसध्वनिना—रसरूपेण ध्वनिना, गुणीभूतेन व्यङ्ग्येन च कान्तिनामकः, अर्थगुणः स्वीकृत इति शेषः ।

(छ) अर्थव्यक्तिमाह, अर्थव्यक्तिरिति ।—वस्तूनां—पदार्थानां, स्वभावस्य स्फुटत्वं—सम्यगाविष्करणमित्यर्थः । कान्तिमाह, कान्तिरिति ।—दीप्तरसत्वं—रसस्योज्ज्वलत्वमित्यर्थः । क्रमेणोदाहरणे,—"पृष्ठेषु शङ्खधवलच्छविषु च्छदानां रागोभिरङ्कित-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

श्लेषो विचित्रतामात्रमदोषः समता परम्॥६४१॥(ज)

श्लेषः क्रमकौटिल्यानुल्वणत्वोपपत्तियोगरूपघटनात्मा। तत्र क्रमः,—क्रियासन्ततिः, विदग्धचेष्टितं कौटिल्यम्, अप्रसिद्धवर्णनाविरहोऽनुल्वणत्वम्, उपपादकयुक्तिविन्यास उपपत्तिः, एषां योगः,—सम्मेलनं स एव रूपं यस्या घटनायास्तद्रूपः श्लेषो वैचित्र्यमात्रम्, अनन्यसाधारणरसोपकारित्वातिशयविरहादिति भावः। (झ)

यथा,—"दृष्ट्वैकासनसंस्थिते प्रियतमे" इत्यादि।

अत्र दर्शनादयः क्रियाः। उभयसमर्थनरूपं कौटिल्यम्। लोकसंव्यवहाररूपमनुल्वणत्वम्। "एकासनसंस्थिते" "पश्चादुपेत्य," "नयने पिधाय" "ईषद्वक्रितकन्धरः" इति चोपपादकानि एषां योगः। अनेन च वाच्योपपत्तिग्रहणव्यग्रतया रसाऽऽस्वादो व्यवहितप्रायः इत्यस्य अगुणता।

समता च प्रक्रान्तप्रकृतिप्रत्ययविपर्य्यासेनार्थस्य विसंवादिताविच्छेदः; स च प्रक्रमभङ्गरूपदोषविरह एव। स्पष्टमुदाहरणम्। (ञ)

---

मलक्तकरागिणीभिः। गोरोचनाहरितबभ्रुर्वहिःपलाशमामोदते कुमुदमम्भसि पल्वलस्य॥" दीप्तरसत्वं यथा,—"शून्यं वासगृहम्—" इत्यादि।

(ज) प्राचीनोक्तार्थगुणं श्लेषं समताञ्च समाधत्ते, श्लेष इति।—विचित्रतामात्रं—केवलं वैचित्र्यमित्यर्थः, श्लेषः; समता परं—केवलम्, अदोषः,—दोषराहित्यम्।

(झ) उपपादकेति।—प्रकृतानुकूलहेतूपन्यास इत्यर्थः। वैचित्र्यमात्रं—न तु गुणशब्देनाभिधीयत इति भावः। अत्र हेतुमाह, अनन्येति।—तादृशरसोपकारित्वातिशयस्य रसव्यञ्जकवाक्यस्य काव्यव्यपदेशयोगित्वम्। यो हि असाधारण्येन रसमुपकरोति, स एव गुणशब्दवाच्य इति भावः।

(ञ) उदाहरति,—दृष्टेति। अत्रेति।—दर्शनादयः इत्यत्र आदिपदेन उपगमनादीनां ग्रहणम्; उभयोः,—ज्येष्ठाकनिष्ठयोः कान्तयोः, समर्थनं—रञ्जनम्, अनुरूपप्रीणनमिति यावत्, तदेव रूपं यस्य तादृशं, यद्वा,—उभयस्य—ज्येष्ठाप्रीणनस्य

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

न गुणत्वं समाधेश्च ॥ ६४२॥ (ट)

समाधिश्च अयोन्यन्यच्छायायोनिरूपद्विविधोऽर्थदृष्टिरूपः। (ठ) तत्र अयोनिरर्थो यथा,—

"सद्योमुण्डितमत्तहूणचिबुकप्रस्पर्द्धिनारङ्गकम्।" (ड)

अन्यच्छायायोनिर्यथा,—

"निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता काऽपि।
नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावी॥" (ढ)

---

कनिष्ठप्रतारणस्य च, समर्थनम्—अनुष्ठानमित्यर्थः। लोकेति।—लोकानां संव्यवहारः,—तादृग्व्यवहारः,एव रूपं यस्य तथाभूतम्। उपपादकानि—अभीष्टार्थसम्पादकानि। योगः,—मेलनम्। निरुक्तश्लेषस्य दोषत्वमेव प्रसक्तं, कुतो गुणत्वम्? इत्युपपादयति, अनेन चेति।—निरुक्तश्लेषेणेत्यर्थः, वाच्यस्य—अभिधेयार्थस्य, उपपत्तिः,—युक्तिः तस्याः, यद्वा,—वाच्यायाः उपपत्तेः,—कारणस्य, ग्रहणे—बोधे, व्यग्रतया—आसक्ततया, कष्टेन तज्जनकतया इत्यर्थः, सामाजिकानामिति शेषः, व्यवहितप्रायः,—प्रायेण व्यवहितः, विलम्बेनोत्पादित इत्यर्थः, अस्य—श्लेषस्य, अगुणता—गुणविरोधित्वं, दोषत्वमिति यावत्। प्रक्रान्तेति।—प्रक्रान्तयोः,—आरब्धयोः, प्रकृतिप्रत्यययोः विपर्य्यासेन—वैपरीत्येन, अर्थस्य या विसंवादिता—विभिन्नता, तद्विच्छेदः, यादृशेन प्रकृतिप्रत्यययोगेन उपक्रान्तं, तादृशेनैव समापनमिति भावः। स्पष्टमिति।—"उदेति सविता ताम्रः" इत्यादि।

(ट) समाधिमर्थगुणं समाधत्ते,—नेति।—सुगमम्।

(ठ) समाधिरिति।—समाधिः,—अर्थदृष्टिविशेषः, द्विविधः अयोनिः,—मूलरहितः, केनापि कविना अनिबद्धपूर्व्व इत्यर्थः, अन्यच्छायायोनिः,—अन्यस्य काव्यान्तरस्य छायावर्णनं योनिः यस्य सः, कविसमयप्रसिद्ध इत्यर्थः।

(ड) अयोनिमुदाहरति, सद्य इति।—सद्यः,—तत्क्षणं, मुण्डितं—चौरकर्मणा कृतनिर्लोमकमित्यर्थः, यत् मत्तस्य, मद्यपानेनेति भावः, हूणस्य—हूणदेशोत्पन्नम्लेच्छजातिविशेषस्य, चिबुकं तस्य प्रस्पर्द्धि—प्रकर्षेण स्पर्द्धकं, तत्सदृशमिति यावत्, नारङ्गकं—पक्वनारङ्गम्। अत्र मुण्डितहूणचिबुकेन नारङ्गस्य उपमा न केनापि निबद्धेति अयोनित्वम्।

(ढ) अन्यच्छायायोनिमुदाहरति, निजेति।—काऽपि कुसुमलावी—माला-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र नीलोत्पलनयनयोरतिप्रसिद्धं सादृश्यं विच्छित्तिविशेषेण निबद्धम्। अस्य च असाधारणशोभानाधायकत्वान्न गुणत्वं, किन्तु काव्यशरीरमात्रनिवर्त्तकत्वम् (ण)।

क्वचित् "चन्द्रम्" इत्येकस्मिन् पदार्थे वक्तव्ये "अत्रेर्नयनसमुत्थं ज्योतिः" इति वाक्यवचनम्; क्वचित् "निदाघशीतलहिमकालोष्णसुकुमारशरीरावयवा योषित्" इति वाक्यार्थे वक्तव्ये "वरवर्णिनी" इति पदाभिधानम्; क्वचित् एकस्य वाक्यार्थस्य किञ्चिद्विशेषनिवेशादनेकैर्वाक्यैरभिधानमित्येवंरूपो व्यासः; क्वचिद् बहुवाक्यप्रतिपाद्यस्य एकवाक्येनाभिधानमित्येवंरूपः समासश्च; इत्येवमादीनामन्यैरुक्तानां न गुणत्वमुचितम्, अपि तु वैचित्र्यमात्रावहत्वम्। (त)

---

कारी, मालिनीत्यर्थः, निजनयनयोः प्रतिबिम्बैः अम्बुनि बहुशः,—पुनः पुनः, प्रतारिता सती, नीलोत्पलेऽपि करम् अर्पयितुं, चयनार्थमिति शेषः, विमृशति—विचारयति, संशेते इत्यर्थः। आर्य्यावृत्तम्।

(ण) ननु अच्छायायोनेरर्थस्य निबन्धनमप्रयोजनम्? अत आह, अत्रेति।—अतिप्रसिद्धं—काव्यान्तरैः सहस्रशो निबद्धं, विच्छित्तिविशेषेण—वैचित्र्यविशेषाधायकत्वेन, निबद्धं—रचितम्; तथा च अर्थान्तरयोगेन प्रसिद्धमपि सादृश्यं विलक्षणवैचित्र्यं जनयति इति भावः। अस्य च—समाधेश्च, असाधारणशोभाऽनाधायकत्वात्—रसस्य अनन्यसामान्यशोभाया अनिर्वाहकत्वादित्यर्थः। काव्यशरीरेति।—केवलं काव्यशरीरस्य पोषकत्वमित्यर्थः।

(त) "पदार्थे वाक्यरचना—" इत्यादिवामननिर्दिष्टपञ्चविधानामोजसाम् अन्तिमं प्रकारं प्रथममेव दूषितम्; इदानीं चतुर्विधार्थप्रौढिरूपस्यौजसो गुणत्वाभावमाह,—क्वचिदिति। चन्द्रमिति पश्चेत्येकदेशम्। निदाघेति।—"शीतकाले भवेदुष्णा उष्णकाले च शीतला। सुकुमारशरीरा च सा ज्ञेया वरवर्णिनी॥" व्यासः,—एकपदेन वा एकवाक्येन वाच्यस्य किञ्चित् वैशिष्ट्यप्रतिपत्तये बहुभिः पदैर्वाक्यैर्वा कथनम्; यथा, —"असौ नानाऽऽकारो भवति सुखदुःखव्यतिकरः सुखं वा दुःखं वा भवति न भवत्येव च ततः। पुनस्तस्मादूर्द्ध्वं भवति सुखदुःखं किमपि तत्पुनस्तस्मादूर्द्ध्वं भवति न च दुःखं न च सुखम्॥" अत्र येन संसारिणा यथाविधं कर्म्म कृतं तदनुसारेणैव

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तेन नार्थगुणाः पृथक् ॥ ६४३ ॥

तेन—उक्तप्रकारेण। अर्थगुणाः,—ओजःप्रभृतयः, प्रोक्ताः। (थ)

इति श्रीमन्नारायणचरणारविन्दमधुव्रतसाहित्यार्णवकर्णधारध्वनिप्रस्थापनपरमाचार्य-
कविसूक्तिरत्नाकराष्टादशभाषावारविलासिनीभुजङ्गसान्धिविग्रहिकमहापात्र-
श्रीविश्वनाथकविराजकृतौ साहित्यदर्पणे गुणविवेचनो नाम
अष्टमः परिच्छेदः ॥ ८ ॥

---

विविधत्वमाश्रितः सुखदुःखभोगः क्रियते; यदि कुतश्चिदध्यात्मसाक्षात्कारः स्यात्, तदैवास्य प्रवाहस्य शान्तिः, इत्येव विरचितं वैचित्र्यमुच्यते। समासः,—बहुभिः पदैः वाक्यैर्वा प्रतिपाद्यस्य अर्थस्य एकपदेन वाक्येन वा कथनम्। तस्योदाहरणं यथा,—"श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्। आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥" अत्र परद्रव्यं न हरेत्, परदारान् न गच्छेत्, परापवादो न वक्तव्यः, इत्यादि वाक्यगताभिधेयस्य द्वितीयार्द्धेनाभिधानम्। अन्यैः,—प्राचीनैरित्यर्थः, न गुणत्वं, रसव्यञ्जकवाक्यस्य काव्यव्यपदेशोपयोगित्वाभावादिति शेषः।

(थ) उपसंहरति, तेनेति।—परोक्ताः, दण्ड्याद्याचार्यनिरूपितानामपि दशविध-गुणानां यथासम्भवं स्वोक्तगुणव्यञ्जकादौ अन्तर्भावो बोद्धव्यः इति दिक्। प्रकाशकृताऽप्युक्तम्,—"अर्थव्यक्तेरुदारत्वमर्थस्य गाढत्वेनैव वा। यदि न भवति दर्शनं तत् कथं काव्यम्?॥ इत्यर्थदृष्टिरूपः समाधिरपि च गुणः" इति।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन-पण्डितकुलपतिना बि, ए, उपाधिधारिणा
श्रीमज्जीवानन्दविद्यासागरभट्टाचार्येण विरचितायां, तदात्मजाभ्यां
पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोधविद्यारत्नाभ्यां
प्रतिसंस्कृतायां विमलाख्यायां साहित्यदर्पणव्याख्यायां
अष्टमः परिच्छेदः ॥ ८ ॥

---

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# नवमः परिच्छेदः ।

अथोद्देशक्रमप्राप्तमप्यलङ्कारनिरूपणं बहुवक्तव्यत्वेनोल्लङ्घ्य रीतिमाह (क),—

**पदसङ्घटना रीतिरङ्गसंस्थाविशेषवत् ।**
**उपकर्त्त्री रसादीनाम् ॥ ६४४ ॥ (ख)**

रसादीनाम्—अर्थात् शब्दार्थशरीरस्य काव्यस्यात्मभूतानाम् । (ग)

---

(क) उद्देशक्रमप्राप्तमलङ्कारनिरूपणं विहाय, रीतिं निरूपयितुम् अस्याः प्राथमिकत्वे युक्तिमाह, अथेति ।—गुणनिरूपणानन्तरमित्यर्थः । उद्देशेति ।—"उत्कर्षहेतवः प्रोक्ताः गुणालङ्काररीतयः" इत्युद्देशक्रमप्राप्तकालमित्यर्थः । उल्लङ्घ्य—सूचीकटाहन्यायेन प्रथमं कृत्वेत्यर्थः ।

(ख) पदेति ।—पदानां सङ्घटना—सम्यक् योजना, यथास्थानविनिवेशनमित्यर्थः, रीतिः,—रीयते गुणानां विशेषो ज्ञायते अनया तथोक्ता, ( "रीङ् गतौ," इत्यनेन साधुः, गत्यर्थानां ज्ञानार्थत्वात् तथा व्युत्पत्तिः ) सा च अङ्गानां संस्था—संस्थानं, यथायथं विन्यास इत्यर्थः, तद्वत्, विलक्षणमुखाद्यवयवसन्निवेशविशेषवदित्यर्थः। रसादीनाम्—अवादिपदेन भावरसाभासादीनां ग्रहणम् । ननु पदसङ्घटनाविशेषस्य काव्यातिरिक्तेऽपि सत्त्वादतिव्याप्तिः, अत आह, उपकर्त्त्रीति ।—उपकर्त्त्री—परिपोषिका, स्वाश्रयव्यङ्ग्यरसादिवृत्तिगुणव्यञ्जकतया रसादीनामुत्कर्षाधायिकेत्यर्थः। एवञ्च गुणाभिव्यञ्जकपदविन्यासो रीतिरिति फलितम् । वामनादयस्तु,—"रीतिरात्मा काव्यस्य" इत्युक्त्वा "विशिष्टपदरचना रीतिः, विशेषो गुणात्मा" इत्याहुः ।

(ग) ननु रीतेः साक्षादेव शब्दस्योत्कर्षाधायकत्वं निरुक्तं, परम्परया तु रसादीनामित्युपपन्नं, तथाऽपि तस्याः काव्योत्कर्षाधायकत्वमनुपपन्नमित्यत आह, रसादीनामिति ।—अर्थात्—सम्भववलात् ; तथा च काव्यस्य शरीरात्मनोरुत्कर्षाधायकत्वेनैव काव्योत्कर्षाधायकत्वमिति भावः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सा पुनः स्याच्चतुर्विधा।
वैदर्भी चाथ गौड़ी च पाञ्चाली लाटिका तथा ॥ ६४५ ॥ (घ)

सा—रीतिः। तत्र,—

माधुर्य्यव्यञ्जकैर्वर्णै रचना ललितात्मिका।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ॥ ६४६ ॥ (ङ)

यथा,—"अनङ्गमङ्गलभुवः" इत्यादि। रुद्रटस्त्वाह,—

"असमस्तैकसमस्ता युक्ता दशभिर्गुणैश्च वैदर्भी।
वर्गद्वितीयबहुला स्वल्पप्राणाक्षरा च सुविधेया ॥" (च)

अत्र दशगुणाः,—तन्मतोक्ताः श्लेषादयः। (छ)

---

(घ) तस्या भेदानाह, सेति।—सा—रीतिरित्यर्थः, पुनः वैदर्भी, गौड़ी, पाञ्चाली, लाटिका चेति चतुर्विधा स्यात्, विदर्भ-गौड़-पाञ्चाल-लाटदेशोद्भवैः कविभिः सम्मतत्वात् वैदर्भ्यादिसंज्ञा इत्यर्थः। तद्यथा,—विदर्भाणां—विदर्भदेशभुवामियं वैदर्भी, गौड़ानां—गौड़देशभुवामियं गौड़ी, पाञ्चालानां—पाञ्चालदेशभुवामियं पाञ्चाली, लाटानां—लाटदेशभुवामियं लाटी, सैव लाटिका; प्राधान्येन हि व्यपदेशा भवन्तीति तथा व्यपदेश इति बोध्यम्। अन्ये तु लाटिकां नाङ्गीकुर्व्वन्ति।

(ङ) वैदर्भीमाह, माधुर्य्येति।—माधुर्य्यव्यञ्जकैः, पूर्वोक्तैरिति शेषः, वर्णैः ललितात्मिका—मनोहारिणी, सुकुमाराक्षरप्राया सुकुमारार्था चेति यावत्, अवृत्तिः,—समासरहिता, वा अल्पवृत्तिः,—अल्पसमासयुक्ता, रचना वैदर्भी—विदर्भदेशप्रचलिता रीतिः, इष्यते—कथ्यते इत्यर्थः। अन्ये त्वाहुः,—"अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता। विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते ॥" इति, "सति वक्तरि सत्यर्थे सति शब्दानुशासने। अस्ति तन्न, विना येन परिस्रवति वाङ्मधु ॥" इति च।

(च) असमस्तैकेति।—असमस्ता—समासरहिता, वा एकसमस्ता—अल्पसमस्ता इत्यर्थः, दशभिः,—पूर्वोक्तैः श्लेषादिभिः गुणैः युक्ता, वर्गद्वितीयैर्वर्णैः बहुला—युक्ता इत्यर्थः, स्वल्पः,—लघुः, प्राणः,—उच्चारणप्रयत्नो येषां तथाभूतानि अक्षराणि यस्यां तादृशी, वैदर्भी—वैदर्भीरचना, सुविधेया—कार्य्येत्यर्थः।

(छ) ननु गुणानां त्रित्वमेवोक्तं, कथं दशत्वम्? अत आह, तन्मतोक्ता इति।—रुद्रटमतोक्ता इत्यर्थः। (इदं पद्यं रुद्रटग्रन्थे न लभ्यते, न वा तत्र प्रकरणार्हमिति प्रक्षिप्तं प्रतीमः)।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ओजःप्रकाशकैर्वर्णैर्बन्धः आडम्बरः पुनः ।
समासबहुला गौड़ी ॥६४७॥ (ञ)

यथा "चञ्चद्भुज" इत्यादि । पुरुषोत्तमस्त्वाह,—

"बहुतर-समासयुक्ता सुमहाप्राणाक्षरा च गौड़ीया ।
रीतिरनुप्रास-महिमपरतन्त्राऽस्तोभवाक्या च ॥" (झ) ।

वर्णैः शेषैः पुनर्द्वयोः ।
समस्तपञ्चषपदो बन्धः पाञ्चालिका मता ॥६४८॥ (ञ)

द्वयोः,—वैदर्भीगौड्योः । यथा,—

"मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥" (ट)

---

(ञ) गौड़ीमाह, ओज इति ।—ओजःप्रकाशकैः,—डम्बरार्थप्रतिपादकैरित्यर्थः, वर्णैः आड़म्बरः,—उद्भटः, उद्भटार्थप्रतिपादकतयाऽपि उद्भटः, बन्धः,—रचनाविशेषः, गौड़ी । गुणानां दशविधत्वमङ्गीकुर्वाणास्तु,—"समस्ताऽत्युत्कटपदामोजःकान्तिगुणान्विताम् । गौड़ीयामिति गायन्ति रीतिं रीतिविशारदाः ॥" इति ।

(झ) बहुतरेति ।—बहुतरैः समासैः,—समस्तपदैरित्यर्थः, युक्ता सुमहान्—अतिगुरुः, प्राणः,—उच्चारणकालः, येषां तादृशानि अक्षराणि यस्यां तथोक्ता, अनुप्रासस्य—वक्ष्यमाणशब्दालङ्कारविशेषस्य, महिम्नः,—आधिक्यस्य, परतन्त्रा—पराधीना, अनुप्रासबहुला इत्यर्थः, अस्तोभम्—उद्धतं, वाक्यं—पदसमुदायः, यस्यां तथाविधा, रीतिः गौड़ीया । ["स्तोकवाक्या" इति पाठे,—स्तोकवाक्या—शिथिलबन्धेत्यर्थः] अत एव दण्ड्याचार्य्यैरुक्तम्,—"अल्पप्राणाक्षरोत्तरम् । शिथिलं मालतीमाला लोलालिकलिता यथा । अनुप्रासधिया गौड़ैस्तदिष्टम्—" इति ।

(ञ) पाञ्चालीमाह, वर्णैरिति ।—द्वयोः,—उक्तयोः वैदर्भीगौड्योः, शेषैः,—अवशिष्टैः, वैदर्भीगौड़ीव्यञ्जकवर्णभिन्नैरित्यर्थः, वर्णैः [ उपलक्षणे तृतीया ] समस्तानि पञ्चषाणि पदानि यत्र तादृशः, बन्धः,—रचना, पाञ्चालिका, रीतिरित्यनुषज्यते, [ अत्र स्वार्थे कप्रत्ययः न तु टिकण्, तथा सति ङीप्रत्ययः स्यात् ] मता ।

(ट) उदाहरति,—यथेति । मधुरयेति ।—मधुरया—मधुरशब्दयोगिनीपपन्ना तथाविधया, यद्वा,—मनोहारिण्या, मधुना—वसन्तेन, बोधिता—प्रकाशिता, या

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भोजस्त्वाह,—

"समस्तपञ्चषपदामोजःकान्तिसमन्विताम्।
मधुरां सुकुमाराञ्च पाञ्चालीं कवयो विदुः॥" (ठ)

लाटी तु रीतिर्वैदर्भीपाञ्चाल्योरन्तरा स्थिता॥६४९॥ (ड)

यथा,—"अयमुदयति मुद्रा-भञ्जनः पद्मिनीना-
मुदयगिरिवनालीबालमन्दारपुष्पम्।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
कुपितकपिकपोलक्रोड़ताम्रस्तमांसि॥" (ढ)

---

माधवी—वासन्ती, तस्याः मधुसमृद्ध्या—मकरन्दसन्दोहेन, समेधिता—संवर्द्धिता, मेधा—स्वरमाधुर्य्यं यस्याः तथाभूतया, उन्मदध्वनिभृता—उत्कृष्टहर्षजनकशब्द-कारिण्या, मधुकराङ्गनया—भ्रमर्य्या. मुहुः,—पुनः पुनः, निभृतानि—मन्दोच्चरितानि, अक्षराणि यस्मिन् तत् यथा तथा, उज्जगे—उच्चैः गीतम्। अत्र माधुर्य्यव्यञ्जकद्वित्व वर्णास्तेऽपि विभिन्नवर्णप्राचुर्य्येणैव पाञ्चालीव्यवहारः बोध्यः। द्रुतविलम्बितं वृत्तम्। शिशुपालवधस्येदं पद्यम्।

(ठ) समस्तेति।—कवयः,—विद्वांसः, समस्तानि पञ्चषाणि पदानि, यस्यां तथाभूताम्, ओजसा, कान्त्या—औज्ज्वल्येन च गुणेन, समन्वितां, मधुरां—मनोहारिणीं, माधुर्य्यव्यञ्जकवर्णघटितामित्यर्थः, सुकुमारां—कोमलवर्णबहुलां, रचनामिति शेषः, पाञ्चालीं विदुः। अन्येऽप्याहुः,—"आश्लिष्टश्लथभावां तां पुराणच्छायया-ऽऽश्रिताम्। मधुरां सुकुमाराञ्च पाञ्चालीं कवयो विदुः॥" इति।

(ड) लाटीमाह, लाटीति।—वैदर्भीपाञ्चाल्योः अन्तरा स्थिता—मध्यवर्त्तिनी; वैदर्भीमिश्रिता पाञ्चालीत्यर्थः, रीतिः लाटी। वैदर्भी पाञ्चाली च लक्षिता पूर्व्वम्।

(ढ) उदाहरति,—यथेति। अयमिति।—सूर्य्योदयवर्णनमिदम्। पद्मिनीनां मुद्राभञ्जनः,—सङ्कोचनाशकः, विकाशक इत्यर्थः, उदयगिरेः,—उदयाचलस्य, याः वनाल्यः,—वनश्रेण्यः, तासु स्थितं बालम्—अचिरविकचं, मन्दारपुष्पं—पारिभद्र-कुसुममिव, विरहेण विधुरं—विकलं, यत् कोकानां—चक्रवाकानां, द्वन्द्वं—मिथुनं, तस्य बन्धुः,—सङ्गसम्पादकत्वेन मित्रं, सूर्य्योदये तेषां पुनर्मेलनादिति भावः, (रात्रौ हि चक्रवाकमिथुनं मिथो वियुक्तं दिवा च संयुक्तं भवतीति प्रसिद्धिः) कुपितस्य कपेः,—वानरस्य यः कपोलः तस्य क्रोड़ः,—उत्सङ्गः, मध्यभाग इत्यर्थः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कश्चिदाह,—

"मृदुपदसमाससुभगा युक्तैर्वर्णैर्न चातिभूयिष्ठा।
उचितविशेषणपूरितवस्तुन्यासा भवेल्लाटी॥" (ण)

अन्ये त्वाहुः,—

"गौड़ी डम्बरबन्धा स्याद् वैदर्भी ललितक्रमा।
पाञ्चाली मिश्रभावेन लाटी तु मृदुभिः पदैः॥" इति। (त)

**क्वचित्तु वक्त्राद्यौचित्यादन्यथा रचनादयः॥ ६५०॥**(थ)

वक्त्रादीत्यादिशब्दाद्वाच्यप्रबन्धौ। रचनाऽऽदीत्यादिशब्दाद् वृत्तिवर्णौ। तत्र वक्त्रौचित्याद् यथा,—

"मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्ज्जत्प्रलयघनघटाऽन्योन्यसङ्घट्टचण्डः।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताड़ितोऽयम् ?॥" (द)

तद्वत् ताम्रः,—रक्तवर्ण इत्यर्थः, अयं—सूर्यः, (विशेषणानां योग्यताबलादयमित्यनेन सूर्यो लभ्यते) तमांसि—अन्धकारान्, विभिन्दन्—अपसारयन्, उदेति—उदयं गच्छति। मालिनी वृत्तम्।

(ण) मृद्विति।—मृदूनि पदानि यत्र तादृशेन समासेन सुभगा—मनोज्ञा, युक्तैः वर्णैः, न च अतिभूयिष्ठा—नातिबहुला इत्यर्थः, उचितैः,—साभिप्रायैः, विशेषणैः पूरितः,—पोषितः, वस्तुनः,—प्रतिपाद्यस्य इतिवृत्तविशेषस्य, न्यासः,—निवेशः, यत्र तादृशी, रचनेति शेषः, लाटी नाम रीतिः भवेत्।

(त) गौड़ीति।—डम्बरबन्धा—उद्भटरचना, ["डम्बरबद्धा" इति पाठान्तरम्] ललितक्रमा—मधुरा, मिश्रभावेन—गौड़ीवैदर्भ्योः सम्पर्केण इत्यर्थः।

(थ) इदानीं वक्त्राद्यौचित्येन प्रकृतरीतिपरीता अपि रचनादयः कर्त्तव्या इत्यत आह, क्वचिदिति।—तत्र वक्त्राद्यौचित्यव्यञ्जका वक्तृवाच्ययोरौचित्यम्, उद्भटत्वं, सुकुमारत्वं वा, बन्धस्यौचित्यं—स्वभावः, तथा च,—वक्तृवाच्ययोः औद्धत्य-सौकुमार्य्याभ्यां प्रबन्धस्य स्वभावेन वा उपक्रान्तायाः प्रकृतेः रसव्यञ्जिकाया वा रीतेः विपरीता रचनादयः कार्य्या इति भावः।

(द) मन्थेति।—अयं दुन्दुभिः,—दुन्दुभिशब्दः, केन ताड़ितः ? ताड़नेन

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र वाच्यस्य क्रोधाद्यभिव्यञ्जकत्वेऽपि भीमसेनवक्तृत्वेनोद्धता रचनादयः । वाच्यौचित्याद् यथोदाहृते,—"मूर्द्धव्याधूयमान" इत्यादौ । प्रबन्धौचित्याद् यथा नाटकादौ रौद्रेऽपि अभिनयप्रतिकूलत्वेन न दीर्घसमासादयः । एवमाख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः । कथायां रौद्रेऽपि नात्यन्तमुद्धताः । एवमन्यदपि ज्ञेयम् । (ध)

इति श्रीमन्नारायणचरणारविन्दमधुव्रतसाहित्यार्णवकर्णधारध्वनिप्रस्थापनपरमाचार्य-कविसूक्तिरत्नाकराष्टादशभाषावारविलासिनीभुजङ्गसान्धिविग्रहिकमहापात्र-श्रीविश्वनाथकविराजकृतौ साहित्यदर्पणे रीतिविवेचनो नाम

नवमः परिच्छेदः ॥ ९ ॥

---

जनितविशेषाणां शब्दविशेष्यकत्वेनैवोपपत्तेरिति कश्चित् ; वस्तुतस्तु ताड़ितः,—सशब्दः कृतः ? "स विशेषणे हि" इति न्यायेन विशेषणानां शब्दमात्रगामित्वमिति ब्रूमः ; कीदृशः ? मन्थेन—मन्थनेन, आयस्तं—क्षुभितं, यदर्णवस्याम्भः तेन प्लुतं—व्याप्तं, कुहरं—छिद्रं, कन्दरमिति यावत्, यस्य तादृशस्य चलतो मन्दरस्य ध्वानवद्धीरः,—गभीरः ; तथा कोणाघातेषु—वादनदण्डाभिघातेषु सत्सु, ("कोणो वादनदण्डः स्यात्" इति कोषः) गर्ज्जन्त्याः प्रलयकालीनघनघटाया अन्योऽन्यसङ्घट्टजन्यशब्द इव, चण्डः, ईदृशं चण्डत्वं कोणाघातकाल इत्यर्थः, यद्वा,—"ढक्काशतसहस्राणि भेरीशतशतानि च । एकदा यत्र ताड्यन्ते कोणाघातः स उच्यते ॥" इति परिभाषायां यत्रेत्यस्य यन्निमित्तमित्यर्थकत्वेन एकदा ढक्कादिताड़नजन्याः शब्दाः कोणाघाताः, तेषु मध्ये गर्ज्जदित्यादिवत् चण्ड इत्यर्थः ; कृष्णा—द्रौपदी, तस्याः क्रोधस्य अग्रदूतः,—पुरोयायिवार्त्तावह इव, तत्क्रोधप्रवर्त्तकत्वात् तदग्रदूतः, कुरुकुलनिधनस्य उत्पातः,—तत्सूचकः, यो निर्घातः,—"यदाऽन्तरीक्षे बलवान् मारुतो मारुताहतः । पतत्यधः स निर्घातो जायते वायुसम्भवः ॥" इत्युक्तलक्षणः उत्पातविशेषः, तत्सहितो वातः,—वायुः, सनिर्घातवायुसदृश इत्यर्थः । अस्माकं सिंहनादस्य—उत्साहव्यञ्जकभीमध्वनेः, यत्प्रतिरसितं—प्रतिध्वनिः, तत्समः,—तत्सदृशध्वनिविशिष्ट इत्यर्थः ।

(ध) वाच्यस्य—वाक्यार्थस्य । क्रोधादीति ।—अत्रादिना उत्साह-जुगुप्सयोर्ग्रहणम् । भीमसेनवक्तृत्वेनेति ।—भीमस्य क्रोधनत्वादौद्धत्यं प्रसिद्धमिति भावः । अत्र तादृशशब्दस्य घोरत्वेनोद्भटत्वाद् वाच्योद्भटत्वमपि सम्भवतीति शुद्धमुदाहरणमूह्यम् । वक्तुरनुद्धतत्वे वीरेऽपि सुकुमाररचना यथा,—"भो लङ्केश्वर !—" इत्यादि । अना-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्रोधनत्वेन अनुद्धत: धीरोदात्तो वक्ता; अभिनयप्रतिकूलत्वेन—अभिनेयार्थप्रतिपत्तिविलम्बकत्वेन। नाटकादौ रौद्रेऽपौत्याद्युक्तलक्षण: यत्र कुत्र व्यभिचारवानपि सम्पद्यते; यथा हि,—"उद्दामद्युमणिद्युतिव्यतिकरप्रक्रीडदर्कोपलज्वालाजालजटालजाङ्गलतटीनिष्कूजकौशिष्ठ्य:। भीमीभवद्भवमानसूरकिरणक्रूरप्रकाशा दृशोरायुष्कर्म्म समापयन्ति धिगमूर्मध्येऽह्निशून्या दिश: ॥" इत्यनर्घराघवे विपरीतोदाहरणं दृश्यते इति। मसृणा:,—माधुर्य्यव्यञ्जका:; नात्यन्तमुद्धता:, वर्णादय इति शेष:।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन-पण्डितकुलपतिना बि, ए, उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोधविद्यारत्नाभ्यां प्रतिसंस्कृतायां विमलाख्यायां साहित्यदर्पणव्याख्यायां

नवम: परिच्छेद: ॥ ९ ॥

---

(क) अलङ्कारनिरूपणे सङ्गतिमाह, अथेति।—रीतिनिरूपणानन्तरमित्यर्थ:, अवसरप्राप्तान्—अवसरसङ्गत्या निरूपयितुं युक्तानित्यर्थ:; प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तिरवसर:। प्रकृते सूचीकटाहन्यायेन प्रथमं रीतिनिरूपणजिज्ञासा जाता; एषैवोद्देशक्रमप्राप्ताऽलङ्कारनिरूपणप्रतिबन्धिका, तन्निवृत्तौ अलङ्कारनिरूपणजिज्ञासा जायते इति भाव:।

(ख) अलङ्काराणां सामान्यलक्षणमाह, शब्दार्थयोरिति।—अस्थिरा:,—काव्येष्वनियतवृत्तय:, काव्यत्वाव्यापका इति यावत्; [एतेन परम्परया शब्दार्थधर्म्माणां गुणानां वारणं, निरलङ्कारमपि काव्यमस्तीति च सूचितम]। रीतेरस्थिरत्वात् तद्वारणायाह, शोभाऽतिशायिन इति।—शोभाऽतिशयजनका इत्यर्थ:, रीते: शब्दशोभा-

# दशम: परिच्छेद:।

अथावसरप्राप्तानलङ्कारानाह, (क)—

**शब्दार्थयोरस्थिरा ये धर्मा: शोभाऽतिशायिन:।**
**रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत्॥६५१॥(ख)**

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा अङ्गदादयः शरीरशोभाऽतिशायिनः शरीरिणमुपकुर्वन्ति, तथाऽनुप्रासोपमादयः शब्दार्थशोभाऽतिशायिनो रसादेरुपकारकाः ये, तेऽलङ्काराः ; अस्थिरा इति नैषां गुणवदावश्यकी स्थितिः। शब्दार्थयोः प्रथमं शब्दस्य बुद्धिविषयत्वात् शब्दालङ्कारेषु वक्तव्येषु शब्दार्थालङ्कारस्यापि पुनरुक्तवदाभासस्य चिरन्तनैः शब्दालङ्कारमध्ये लक्षितत्वात् (ग) प्रथमं तमेवाह,—

**आपाततो यदर्थस्य पौनरुक्त्यावभासनम्।**
**पुनरुक्तवदाभासः स भिन्नाकारशब्दगः॥६५२॥ (घ)**

उदाहरणम्,—"भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशुशीतगुः।
जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः॥" (ङ)

---

जनकत्वेऽपि गुणालङ्कारवच्छोभाऽतिशयजनकत्वं नास्तीति भावः। नीरसशब्दार्थयोरनुप्रासोपमादीनां मुख्यालङ्कारत्वव्यवच्छेदायाह, रसादीनिति।—उपकुर्वन्तः,—उत्कर्षयन्तः ; एवञ्च यत्र रसो नास्ति, तत्रोक्तिवैचित्र्यमात्रप्रयोजकेषु अनुप्रासोपमादिषु अलङ्कारपदप्रयोगो गौण एव ; [ "तरङ्गनिकरोन्नीततरणीगणसङ्कुला। सरिद् वहति कल्लोलवाहव्याहततीरभूः॥" इत्यादौ रसानुसन्धानरहिते यद्रूपकानुप्रासयोरलङ्कारव्यवहारः, स गौण एव इति मन्तव्यम् ]।

(ग) कारिकार्थं विवृणोति, यथेति।—शरीरिणम्—आत्मानम्। अनुप्रासादेः शब्दालङ्कारत्वादुपमादेश्चार्थालङ्कारत्वादुभयोः पृथगुपादानम्। गुणेषु अतिव्याप्तिं वारयति, नैषामिति।—एषाम्—अलङ्काराणाम्। शब्दालङ्कारनिरूपणस्य प्राथमिकत्वे हेतुं दर्शयंस्तत्रापि पुनरुक्तवदाभासनिरूपणस्य प्राथमिकत्वे हेतुमाह, शब्दार्थयोरिति।—वक्तव्येषु—निरूपणयोग्येषु। शब्दार्थालङ्कारस्यापीत्यनेन शब्दार्थोभयशक्तिमूलध्वनिवत् पश्चान्निरूपणयोग्यत्वमस्य सूचितम्। चिरन्तनैरित्यादिग्रन्थस्तु अस्य शब्दालङ्कारप्रकरणे निरूप्यत्वे हेतुः, तत्रापि अस्य प्रथमनिरूपणे सूचीकटाहन्याय एव हेतुर्द्रष्टव्यः।

(घ) आपातत इति।—आपाततः,—श्रवणमात्रतः, तात्पर्य्यानवधारणदशायामित्यर्थः। अर्थस्य—वाच्यस्य। यत् पौनरुक्त्यावभासनं—पुनरुक्तवत् स्फुरणं, भिन्नाकारशब्दगः,—पृथगाकारशब्दगामी, (एतत् यमकेऽतिव्याप्तिवारणार्थम्) स पुनरुक्तवदाभासो नाम अलङ्कारः।

(ङ) शब्दस्य भङ्गाभङ्गाभ्यां द्विविधे तस्मिन् प्रथमतः शब्दाभङ्गमुदाहरति,



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र भुजङ्गकुण्डल्यादिशब्दानाम् आपातमात्रेण सर्पाद्यर्थतया पौनरुक्त्यप्रतिभासनम्। पर्य्यवसाने तु भुजङ्गरूपं कुण्डलं विद्यते यस्येत्याद्यन्यार्थत्वम्। "पायादव्यात्" इत्यत्र क्रियागतोऽयमलङ्कारः, "पायात्" इत्यस्य "अपायात्" इत्यत्र पर्य्यवसानात्। "भुजङ्गकुण्डली" इति शब्दयोः प्रथमस्यैव परिवृत्तिसहत्वम्। "हरः शिवः" इति द्वितीयस्यैव। "शशिशुभ्रांशु" इति द्वयोरपि। "भाति सदानत्यागः" इति न द्वयोरपीति शब्दपरिवृत्तिसहत्वासहत्वाभ्याम् अस्य उभयालङ्कारत्वम्। (च)

---

भुजङ्गेति।—भुजङ्ग एव कुण्डलं, तत् विद्यते अस्य स तथोक्तः, व्यक्तः,—उज्ज्वलः, शशिशुभ्रांशुशीतगुः,—अत्र शशिशुभ्रांशुशीतगुशब्दैः पौनरुक्त्यमापाततः प्रतिभाति, पर्य्यवसाने तु,—शशिनः, कर्पूरस्येव शुभ्रा अंशवो यस्य तादृशः शीतगुः चन्द्रो यत्र स इत्यर्थः। चेतोहरः,—मनोहरः, शिवः सदा अपायात् ( इत्यपि शब्दाभङ्गः ) जगन्ति अव्यात्—रक्षतु।

(च) अस्योभयालङ्कारात्मकत्वमुपपादयति, अत्र भुजङ्गकुण्डलीति।—भुजङ्गावतंस इति द्वितीयपरिवर्त्तने पौनरुक्त्यमेव नास्तीति भावः। एवमग्रेऽपि यथायथं बोध्यम्। परिवृत्तिसहत्वं—शब्दपरिवर्त्तनेऽपि प्रकृतार्थबोधनक्षमत्वम्। "द्वयोरपि" इत्यपिना "शीतगुः" इति तृतीयस्यापि लाभः। शब्दभङ्गे उदाहरणं यथा भातीति।—श्लोकस्य कियदंशोऽयम्। श्लोकस्तु,—"अरिवधदेहशरीरः सहसारथिसूततुरगपादातः। भाति सदानत्यागः स्थिरतायामवनितलतिलकः॥" इति, अरीणां वधं ददातीति तथोक्ता ईहा चेष्टा यस्य तत्, तादृशं शरीरं यस्य तथाभूतः, यद्वा,—अरिवधदा शत्रुसंहारिणी, ईहा चेष्टा, येषां तथाभूता ये अरिणः प्रयुक्ताः सैनिकाः, तान् ईरयति प्रेरयति इति अरिवधदेहशरीरः, स रथिभिः सहायभूतैः, सूततुरगपादातैः सारथ्यश्वपदातिभिः, सह वर्त्तमानः; यद्वा,—सहसा शीघ्रं रथिभिः सुष्ठु ऊताः सन्नद्धाः, तुरगाः अश्वाः, पादाताः पदातिकाश्च यस्य सः, अवनितलतिलकः,—पृथिवीललाटभूषणभूत इत्यर्थः, सदा—सर्व्वदा, अनत्या—अप्रणतभावेन, अरिषु इति शेषः. स्थिरतायां—दृढ़तरस्थित्याम्, अगः,—पर्व्वत इव; [अत्र प्रतीयमानोत्प्रेक्षा] यद्वा,—सदानत्या—सतां विषये आनत्या अतिनम्रभावेन, भाति—विराजते। अत्र देहशरीरयोः, सारथिसूतयोः, दानत्यागयोश्च एकार्थत्वात्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्॥६५२॥(छ)**

**स्वरमात्रसादृश्यन्तु वैचित्र्याभावान्न गणितम्। रसाद्यनुगतत्वेन प्रकर्षेण न्यासोऽनुप्रासः। (ज)**

आपाततः पौनरुक्त्यमिव प्रतीयते। इह तु देहशरीरयोः सारथिसूतयोश्च द्वितीयस्यैव परिहत्तिसहत्वं, दान-त्यागयोर्द्वयोरपि न इति बोध्यम्। अस्योदाहरणान्तरं यथा,—"अम्बरेण गगनेन संवृतं जीवनैः शिरसि वारिभिः श्रितम्। भोगिभिश्च भुजगैः विभूषितं शङ्करं शुभकरं भजामहे॥" इति। इह अम्बरेण गगनेन, जीवनैः वारिभिः, भोगिभिः भुजगैः, शङ्करं शुभकरम्, इत्यादौ आमुखे पौनरुक्त्यप्रतीतिः, पर्य्यवसाने विभिन्नार्थकत्वबोधात् तदभाव इति सङ्क्षेपः। अस्य—पुनरुक्तवदाभासस्य। उभयालङ्कारत्वं—शब्दार्थालङ्कारत्वमित्यर्थः, यत्र शब्दपरिवर्त्तनेऽपि तदलङ्कारसद्भावः, तत्रार्थालङ्कारः, यत्र तत्तच्छब्दानां सद्भाव एवालङ्कारः तत्र शब्दालङ्कारः; यत्र तु कियदंशे शब्दपरिहत्तिसहत्वं, कियदंशे न तथा, तत्रोभयालङ्कार इति तदन्वयव्यतिरेकेणालङ्कारव्यवस्थितिरिति बोध्यम्।

(छ) अनुप्रासालङ्कारमाह, अनुप्रास इति।—स्वरस्य वैषम्ये—वैलक्षण्ये, भिन्नत्वेऽपीत्यर्थः, "वैषम्येऽपि" इत्यपिना साम्येऽपीति लभ्यते। एतच्च स्वरसाम्यं लाटानुप्रासे नियतमिति बोध्यम्। यत् शब्दानां वर्णपदैकदेशपदानामन्यतमरूपाणां, साम्यं सादृश्यं, समभावेनावृत्तिरिति यावत्, सः अनुप्रासः। वर्णानां सादृश्यञ्च कत्वादिना एकस्थानोच्चार्य्यत्वेन च; तेन वर्णत्वादिना सदृशस्य विजातीयवर्णस्य आवर्त्तने नातिप्रसङ्गः, नापि श्रुत्यनुप्रासासङ्ग्रहः, पदपदैकदेशयोस्तु तत्तद्व्यञ्जनघटितत्वेन छेकलाटानुप्रासयोः सङ्ग्रहाय "वर्णसाम्यम्" इत्यनुक्त्वा "शब्दसाम्यम्" इति कृतम्। वस्तुतस्तु,—पदतदेकदेशसाम्येऽपि वर्णसाम्यसम्भवात् शब्दपदं वर्णमात्रपरम्; अत एव "वर्णसाम्यमनुप्रासः" इति काव्यप्रकाशः। न च समस्वरपदतदेकदेशसाम्यं यमकेष्वतिव्याप्तम् इति वाच्यं, तेषां प्रकरणनियम्यतया तदतिरिक्तत्वेनास्य विशेषणात्।

(ज) ननु "वैषम्येऽपि स्वरस्य" इत्यनेन व्यञ्जनसाम्यमनुप्रासः इति लभ्यते, स्वरमात्रसाम्यं न कथम् अनुप्रासः? इत्यत आह,—स्वरमात्रेति। अनुप्रासपदव्युत्पत्तिमाह, रसादीति।—[ तृतीयाद्वयं विशेषणे ] रसाद्यनुगतः प्रकृष्टेत्यर्थः, साम्यशब्दप्रकर्षणद्वारा रसादिप्रकर्षकत्वं, तेनैव प्रकृष्टत्वम्। आस इत्येकदेशार्थमाह,—न्यास इति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**छेको व्यञ्जनसङ्घस्य सकृत् साम्यमनेकधा ॥६५४॥(झ)**

छेकः,—छेकानुप्रासः। अनेकधेति स्वरूपतः क्रमतश्च। "रसः सरः" इत्यादेः क्रमभेदेन सादृश्यं नास्यालङ्कारस्य विषयः। (ञ) उदाहरणं मम तातपादानाम्,—

"आदाय वकुलगन्धानन्धीकुर्व्वन् पदे पदे भ्रमरान्।
अयमेति मन्दमन्दं कावेरीवारिपावनः पवनः॥" (ट)

अत्र "गन्धानन्धौ" इति संयुक्तयोः, "कावेरीवारि" इत्यसंयुक्तयोः, "पावनः पवनः" इति बहूनां व्यञ्जनानां सकृदावृत्तिः। छेको विदग्धः, तत्प्रयोज्यत्वादेष छेकानुप्रासः।

**अनेकस्यैकधा साम्यमसकृद्वाऽप्यनेकधा।**
**एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते ॥ ६५५ ॥ (ठ)**

(झ) छेकादिभेदात् पञ्चविधे तत्र छेकमाह, छेक इति।—व्यञ्जनानां हल्वर्णानां, सङ्घस्य समूहस्य, अनेकधा—स्वरूपतः क्रमतश्च, सकृत्—एकवारं, साम्यं—सादृश्येनावर्त्तनं, छेकः। यद्वा,—छेकाः,—गृहासक्ताः पक्षिणः, तेषां प्रायः द्विर्भाषितं प्रसिद्धम्, इति छेकभाषितोपलक्षितः अनुप्रासः छेकानुप्रासः [ "छेकस्त्रिषु विदग्धेषु गृहासक्तमृगाण्डजे" इति रभसः ] एषः सजातीयव्यवधानरहितद्वित्रादिवर्णानामपि समावर्त्तने सम्पद्यते, तत्र प्रमाणम् ;—"सजातीयाऽव्यवहितवर्णा द्वित्रादयो यदि। आवर्त्तन्ते तदा केचिच्छेकानुप्रासमूचिरे॥" इति।

(ञ) नास्यालङ्कारस्येति।—छेकानुप्रासस्य इत्यर्थः, न विषयः,—न स्थानम्; तथा च, तद्वारणायैव क्रमतश्चेत्युपात्तम्।

(ट) उदाहरति, आदायेति।—अयं पवनः वकुलानां गन्धान् आदाय पदे पदे—स्थाने स्थाने, भ्रमरान् अन्धीकुर्व्वन्—मधुलोभेन अन्धवत् भ्रान्तान् कुर्व्वन्, वकुलगन्धेन उन्मादयन् वा इत्यर्थः, कावेर्य्याः,—तन्नाम्न्या नद्याः, वारिणा—तत्सङ्गेनेति यावत्, पावनः,—पवित्रतामादधानः सन्, मन्दमन्दम् एति—गच्छति, वहतीत्यर्थः।

(ठ) वृत्त्यनुप्रासमाह, अनेकस्येति।—अनेकस्य—एकभिन्नस्य व्यञ्जनस्य, एकधा—स्वरूपत एव, न तु क्रमतोऽपीत्यर्थः, वा—किंवा, असकृत्—पुनः पुनः, अनेकधा—स्वरूपतः क्रमतश्च इत्यर्थः, तथा एकस्य—व्यञ्जनस्य, सकृत्, ( अपिशब्दात् असकृच्च ) साम्यं—समभावेनावर्त्तनम्, एष वृत्त्यनुप्रासः उच्यते—कथ्यते।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एकधा—स्वरूपत एव, न तु क्रमतोऽपि। अनेकधा—स्वरूपतः क्रमतश्च। "सकृदपि" इत्यपिशब्दादसकृदपि। उदाहरणम्,—

"उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-
क्रीड़त्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः।
नीयन्ते पथिकैः कथङ्कथमपि ध्यानावधानक्षण-
प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः॥" (ड)

अत्र "रसोल्लासैरमी" इति रसयोरेकधैव साम्यम्। न तु तेनैव क्रमेणापि। द्वितीये पादे तु कलयोरसकृत्। तेनैव क्रमेण च प्रथमे एकस्य तकारस्य सकृत् धकारस्य च असकृत्। रसविषयव्यापारवती वर्णरचना वृत्तिः, तदनुगतत्वेन प्रकर्षेण न्यसनाद् वृत्त्यनुप्रासः। (ढ)

(ड) उदाहरति, उन्मीलदिति।—वसन्तवर्णनमिदम्। उन्मीलत्सु प्राचुर्य्येण उद्गच्छत्सु, मधुगन्धेषु लुब्धाः ये मधुपाः भ्रमराः, तैः व्याधूतेषु विशेषेणाकम्पितेषु, चूताङ्कुरेषु आम्रमुकुलेषु, क्रीड़तां विहरतां, कोकिलानां पिकानां, काकलीनां सूक्ष्मकलध्वनीनां, कलकलैः कोलाहलैः, प्रौढ़शब्दैरित्यर्थः, उद्गीर्णः, सञ्जनितः, प्रवासित्वेन निक्षिप्त इत्यर्थः, कर्णज्वरः कर्णेषु पीड़ा येषु तथाविधाः, अमी वासराः वासन्ताः दिवसा इत्यर्थः, पथिकैः,—प्रवासिकामुकैः, ध्याने—प्रियाया इति भावः, यत् अवधानं मनोनिवेशः, तस्य क्षणे प्राप्तेन अनुभूतेन, प्राणसमायाः प्रियतमायाः, समागमरसेन सम्भोगरसेन, सङ्गमसुखेन इत्यर्थः, उल्लसन्ति—सन्तुष्यन्तीति तथोक्तैः सद्भिः, कथंकथमपि—अतिकृच्छ्रेणेत्यर्थः, नीयन्ते—अतिवाह्यन्ते। शार्दूलविक्रीड़ितं वृत्तम्।

(ढ) अत्रेति।—रसयोः,—रेफसकारयोः। प्रथमे इति।—पादे इत्यनेनान्वयः, तदतिरिक्ताः छेकानुप्रासा इह वेदितव्याः। संज्ञाव्युत्पत्तिमाह, रसेति।—रसविषयः यः व्यापारः व्यञ्जनध्वननादिकं, तद्वती तदुद्भावयित्रीत्यर्थः। वृत्तिश्च त्रिविधा,—उपनागरिका, परुषा, कोमला च। तदुक्तं काव्यप्रकाशे,—"माधुर्य्यव्यञ्जकैर्वर्णैरुप-नागरिकोच्यते। ओजःप्रकाशकैस्तैस्तु परुषा कोमला परैः॥" परैः,—शेषैः। केचित् कोमलां ग्राम्यां वदन्ति। एताः तिस्रः वृत्तयः वैदर्भी-गौड़ी-पाञ्चालीसंज्ञक-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उच्चार्य्यत्वाद् यदेकत्र स्थाने तालुरदादिके ।
सादृश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते ॥६५६॥(ण)

उदाहरणम्,—

"दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः ॥" (त)

अत्र "जीवयन्ति" इति "याः" इति "जयिनीः" इत्यत्र जकारयकारयोरेकत्र स्थाने तालौ उच्चार्य्यत्वात् सादृश्यम् । एवं दन्त्यकण्ठ्यानामप्युदाहार्य्यम् । एष च सहृदयानामतीव श्रुतिसुखावहत्वाच्छ्रुत्यनुप्रासः । (थ)

व्यञ्जनं चेद् यथाऽवस्थं सहाद्येन स्वरेण तु ।
आवर्त्त्यतेऽन्त्ययोज्यत्वादन्त्यानुप्रास एव तत्॥६५७॥(द)

---

रीतित्वेन प्राङ्निर्दिष्टाः इति ग्रन्थकृतेह नीताः । तदनुगतत्वेन—वृत्त्यनुगतत्वेन इत्यर्थः ।

(ण) श्रुत्यनुप्रासमाह, उच्चार्य्यत्वादिति ।—एकत्र—एकस्मिन् तुल्यरूपे इत्यर्थः, स्थाने—वर्णानामुच्चारणस्थाने, तालुरदादिके—तालुदन्तप्रभृतौ, (आदिना मूर्द्ध-कण्ठोष्ठानां सङ्ग्रहः) उच्चार्य्यत्वात् व्यञ्जनस्य यत् सादृश्यं स श्रुत्यनुप्रास उच्यते ; अत्र स्वरूपतः साम्याभावेऽप्यनुप्रासत्वं प्रागेवोपपादितम् इति ज्ञेयम् ।

(त) दृशेति ।—याः,—वामलोचनाः, दृशा—दर्शनेनेक्षणेनेत्यर्थः, दग्धं—भस्मीकृतं, मनसिजं—कामं, दृशैव—नेत्रेणैव, जीवयन्ति—सजीवं कुर्व्वन्ति, नेत्रविक्षेपेण कामाविष्करणादिति भावः, विरूपाक्षस्य—विषमनयनस्य, त्रिलोचनस्य इत्यर्थः, जयिनीः,—विजेत्रीः, ताः वामलोचनाः,—वामाक्षीः, स्तुमः,—नमामः ।

(थ) संज्ञाव्युत्पत्तिमाह, एष इति ।—अनुप्रासविशेष इत्यर्थः ।

(द) सव्युत्पत्तिकमन्त्यानुप्रासमाह, व्यञ्जनमिति ।—चेत्—यदि, यथाऽवस्थं—यादृश्या अवस्थया स्थितं, व्यञ्जनम् आद्येन स्वरेण सह आवर्त्त्यते—पुनरुच्चार्य्यते, तत्—तदा, अन्त्ययोज्यत्वात्—अन्त्ये—पादस्य पदस्य वा अवसाने, (अन्त एव अन्त्यः) योज्यत्वात्—प्रयोज्यत्वात्, एव अन्त्यानुप्रासः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"यथाऽवस्थम्" इति यथासम्भवमनुस्वारविसर्गस्वरसंयुक्ताक्षरविशिष्टम्। एष च प्रायेण पादस्य पदस्य चान्ते प्रयोज्यः।
पादान्तगो यथा मम,—

"केशः काशस्तवकविकासः, कायः प्रकटितकरभविलासः।
चक्षुर्दग्धवराटककल्पं, त्यजति न चेतः काममनल्पम्॥"(ध)

पदान्तगो यथा,—

"मन्दं हसन्तः पुलकं वहन्तः" इत्यादि। (न)

**शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्य्यमात्रतः।**
**लाटानुप्रास इत्युक्तो—"** ॥ ६५८ ॥ (प)

---

(ध) केश इति।—केशः काशस्य काशकुसुमस्य, स्तवकवत् विकासः प्रकाशः यस्य तथाभूतः, धवल इत्यर्थः, कायः,—देहः, प्रकटितः प्रकाशितः, करभस्येव करिशावकस्येव, विलासःविभ्रमः येन तथाविधः, कुब्जीभावमापन्न इति भावः, चक्षुः नयनं, दग्धं यत् वराटकं तस्मात् ईषदूनं, तत्सदृशमित्यर्थः, (तथापि) चेतः अनल्पं—प्रबलमित्यर्थः, कामं—विषयाभिलाषं, न त्यजति। अत्र "विकासः" इति प्रथमपादान्तस्थितस्य आस इति पदांशः द्वितीयपादान्ते आवर्त्तितः, तथा तृतीयपादान्तस्थितः "अल्पम्" इति पदांशः चतुर्थपादान्ते पुनः पठितः। अत्र पज्झटिका वृत्तम्; "प्रतिपदयमिकतषोड़शमात्रा, नवमगुरुत्वविभूषितगात्रा। पज्झटिकाया एष विवेकः क्वापि न मध्यगुरुर्गण एकः॥" इति लक्षणात्। यथा वा,—"अनन्तमहिमव्याप्तविश्वां वेधा न वेद याम्। या च मातेव भजते प्रणते मानवे दयाम्॥" इति।

(न) अथ पदान्तगस्य उदाहरणमाह,—मन्दमिति। उदाहरणान्तरं यथा स्तुतिकुसुमाञ्जल्याम्;—"सारासारविदः सतां भयभिदः प्रक्षीपतापच्छिदः कारुण्यार्द्रहृदः प्रपन्नसुहृदः स्फारीभवत्संविदः। वाताशेषविशः प्रकाशितदिशः कीर्त्त्या महीनिर्विशः कर्षन्तीश निशः प्रसक्तसुहृशस्त्वत्पादपीठस्पृशः॥" इति।

(प) लाटानुप्रासमाह, शब्दार्थयोरिति।—तात्पर्य्यमात्रतः, न तु अर्थतः इति भावः, भेदे सति—तात्पर्य्यविषयान्वयमात्रभेदे सतीत्यर्थः, अत एव "अन्वयमात्रभेदात्" इति काव्यप्रकाशः। ननु "यातु यातु किमनेन तिष्ठता मुञ्च मुञ्च सखि! सादरं वचः" इत्यादौ क्रोधादिव्यञ्जके शब्दार्थपौनरुक्त्ये लाटानुप्रासप्रसङ्गः भवितुमर्हति, इत्यतः "भेदे" इति पदमुपात्तम्। तथा च,—"यातु यातु" इत्यादौ अन्वयभेदो नास्ति, किन्तु

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उदाहरणम्,—

"स्मेरराजीवनयने! नयने किं निमीलिते?।
पश्य निर्जितकन्दर्पं कन्दर्पवशगं प्रियम्॥" (फ)

अत्र विभक्त्यर्थस्य अपौनरुक्त्येऽपि मुख्यतरस्य प्रातिपदिकांशद्योत्यधर्मिरूपस्य अभिन्नार्थत्वाल्लाटानुप्रासत्वमेव। (ब)

---

क्रोधव्यञ्जकमेव पौनरुक्त्यमिति भावः। शब्दार्थयोः,—शब्दः,—प्रातिपदिकं पदञ्च, तथा अर्थश्च तयोरित्यर्थः, भिन्नार्थशब्दपौनरुक्त्ये यमकस्यैव विषयः इति तद्वारणाय अर्थेति। पौनरुक्त्यं लाटानुप्रासः इति उक्तः। "स्मेरराजीवनयने! लोचने किं निमीलिते" इत्यादौ अर्थमात्रस्य पौनरुक्त्ये नायमनुप्रासः इति शब्दार्थोभयोरुपादानम्। अर्थस्य पौनरुक्त्यन्तु पूर्वपदार्थविशेषणविशेष्याभ्यां सह उत्तरपदार्थविशेषणविशेष्ययोरैक्ये सम्भवति; तेन "घनेन संवृते सुमुखि! व्योम्नि विभाति चन्द्रमाः" इत्यादौ विशेषणयोः भेदात् नायमनुप्रासः; नापि "वपुः कान्तं वचः कान्तं मनस्तु परुषं तव" इत्यादौ विशेष्ययोर्भेदात्। प्रकाशकारोऽप्याह,—"शाब्दस्तु लाटानुप्रासो भेदे तात्पर्य्यमात्रतः।" इति। तत्र शब्दस्य पौनरुक्त्यं द्विरुक्तिः, प्रातिपदिकपौनरुक्त्यञ्च तावदेकस्मिन् समासे विभिन्नसमासे समासासमासयोश्च सम्भवतीति त्रिविधम्। तद्यथा,—"सितकरकररुचिरविभा विभाकराकारधरणीधरकीर्त्तिः। पौरुषकमला कमला साऽपि तवैवास्ति नान्यस्य॥" अत्र करेति प्रातिपदिकावृत्तिरेकस्मिन् समासे, विभेति भिन्ने, कमलेति समासासमासयोश्च। इति।

(फ) समासासमासगतं प्रातिपदिकपौनरुक्त्यं विशेषेणोदाहर्त्तुमाह, स्मेरेति।—स्मेरं विकसितं, यत् राजीवं तद्वत् नयने यस्याः तत्सम्बुद्धौ, नयने किं—कथं, निमीलिते? निर्जितः कन्दर्पो येन तादृशम्, अतिसुन्दरमित्यर्थः, प्रियं—कान्तं, कन्दर्पवशगं—कामपरतन्त्रं, पश्य—अवलोकय।

(ब) नन्वत्र प्रातिपदिकस्य पौनरुक्त्यसत्त्वेऽपि विभक्त्यर्थस्य भिन्नत्वात् अर्थपौनरुक्त्यं नास्तीति कथमस्य विषयः? इत्यत आह, अत्रेति।—अत्र विभक्त्यर्थस्य—एकत्र सम्बोधनरूपस्य, अन्यत्र कर्मरूपस्य, मुख्यतरस्य—विभक्त्यपेक्षया प्रधानस्य, प्रकृतिप्रत्यययोः प्रकृतेरेव प्राधान्यम् आश्रयत्वादिति भावः, प्रातिपदिकांशेन शब्दांशेन, द्योत्यस्य प्रतिपाद्यस्य, धर्म्मिरूपस्य नेत्ररूपार्थस्य, अभिन्नार्थत्वात्—एकार्थत्वात्। [अत्र "भिन्नार्थत्वात्" इति पाठे,—पुनरुक्तत्वादित्यर्थः]। अत्र विभक्तेः भिन्नत्वात् तात्पर्य्यभिन्नत्वं बोध्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"नयने तस्यैव नयने च" अत्र द्वितीयनयनशब्दो भाग्यवत्त्वादिगुणविशिष्टत्वरूपतात्पर्य्यमात्रेण भिन्नार्थः । (भ)

यथा वा,—

"यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥"(म)

अत्र अनेकपदानां पौनरुक्त्यम् । एष च प्रायेण लाटजनप्रियत्वाल्लाटानुप्रासः ।

"—ऽनुप्रासः पञ्चधा ततः ॥ ६५८ ॥ (य)

स्पष्टम् ।

---

(भ) नन्वर्थान्तरसंक्रमितवाच्ये ध्वनावापाततः शब्दार्थयोः पौनरुक्त्यावभासनेऽपि पर्य्यवसाने वक्तृतात्पर्य्यविषयविशेषणान्तरप्रतीत्या भिन्नार्थत्वावभासनेनायमनुप्रासः इत्यभिप्रायेणाह,—नयने इति । भाग्यवत्त्वेति ।—भाग्यवत्त्वादिगुणरूपं यद्विशिष्टत्वं विशेषणं, तन्मात्रेण वक्तृतात्पर्य्यमात्रेण, भिन्नार्थ इति योजनाऽपरीत्येनान्वयः । अत एव "दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने । अर्थान्तरसङ्क्रमितवाच्ये हर्षेऽवधारणे ॥" इत्यर्थान्तरसङ्क्रमितवाच्यध्वनेः पृथगुपादानं सङ्गच्छते । तात्पर्य्यमात्रेणेत्यत्र मात्रपदेन नयनत्वस्य व्यवच्छेदः ।

(म) एकानेकपदगतत्वेन द्विविधे पदपौनरुक्त्ये प्रथमम् अनेकपदपौनरुक्त्यम् उदाहरति, यस्येति ।—यस्य सविधे—समीपे, दयिता—प्रिया, न, विद्यते इति शेषः, तस्य तुहिनदीधितिः,—चन्द्रः, दवदहनः,—दावाग्निः ; यस्य सविधे दयिता, विद्यते इति शेषः, तस्य दवदहनः तुहिनदीधितिः । अत्र प्रथमार्द्धे,—तापकरत्वात् तुहिनदीधितिर्दवदहनः, परार्द्धे तु,—तादृशदुःखाजनकत्वात् दवदहनोऽपि तुहिनदीधितिरिति तात्पर्य्यविषयस्योद्देश्यविधेयभावेनान्वयस्य भेदः, पदार्थानां त्वभेद एव । अत्र गीतिश्छन्दः, तथोक्तम्,—"आर्य्याप्रथमार्द्धसमं यस्या अपरार्द्धमाह तां गीतिम्" इति । एकपदपुनरुक्तौ यथा,—"वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः । सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत् ? ॥" अत्र विभक्तिसहितस्य प्रातिपदिकस्य तदर्थस्य च पौनरुक्त्यम् ; प्रथमं सुधाकरपदं विधेयार्थम्, अपरमनुवादार्थम् ।

(य) अनुप्रास इति ।—ततः,—पूर्वोक्तया रीत्या, छेक-वृत्ति-श्रुति-अन्त्य-लाटोपाधिभेदादिति यावत्, अनुप्रासः पञ्चधा—पञ्चविधः । चरमप्रकारद्वयं पदानुप्रास

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः।
क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ॥ ६६० ॥ (र)

अत्र द्वयोरपि पदयोः क्वचित् सार्थकत्वं, क्वचिन्निरर्थकत्वं, क्वचिदेकस्य सार्थकत्वम्, अपरस्य निरर्थकत्वम्; अत उक्तं—"सत्यर्थे" इति। तेनैव क्रमेण "दमो मोदः" इत्यादेर्विविक्तविषयत्वं सूचितम्। एतच्च पदपदार्द्धश्लोकावृत्तित्वेन पादाद्यावृत्तेश्चानेकविधतया प्रभूततमभेदम्। दिङ्मात्रमुदाह्रियते, (ल)—

इत्यन्ये, अयञ्चान्यैरुभयालङ्कारतयोक्तोऽपि शब्दविशेषान्वयव्यतिरेकानुविधायित्वाद् ग्रन्थकृता शब्दालङ्कारमध्ये गृहीतः इति बोध्यम्।

(र) यमकमाह, सत्यर्थे इति।—अर्थे सति—विद्यमाने, पृथगर्थायाः,—भिन्नार्थायाः, स्वरव्यञ्जनानां संहतेः,—समूहस्य, (स्वरव्यञ्जनयोरेकत्वेऽपि यमकं भवति, यथा,—"नानाकारेण कान्ताभूराराधितमनोभुवा। विविक्तेन विलासेन ततक्ष हृदयं मम॥" एतद्वर्णयमकं वामनसम्मतम्)। तेनैव—पूर्वोक्तेनैव, क्रमेण—येन क्रमेण प्रथमं स्वरव्यञ्जनसमूह उक्तस्तेनैवेत्यर्थः, आवृत्तिः,—आवर्त्तनं, पुनः कथनमित्यर्थः, यमकं विनिगद्यते—कथ्यते।

(ल) अत्र द्वयोरिति।—पदयोः,—स्वरव्यञ्जनसमूहयोः। क्वचिदिति।—"नगजानगजा दयिता दयिता" इत्यादौ। क्वचिन्निरर्थकत्वमिति द्वयोरित्यनुषङ्गः; यथा,—"विजितामरतामरसेक्षणा" इत्यादौ; अत्र तामरेतिस्वरव्यञ्जनसमूहयोः पदैकदेशत्वात् निरर्थकत्वम्। एकस्येति।—प्रथमस्य द्वितीयस्य वा स्वरव्यञ्जनसमूहस्येत्यर्थः। विविक्तविषयत्वं—विभिन्नविषयत्वं, यमकादिति शेषः, पूर्व्वोक्तक्रमेणैव उक्तेरावश्यकत्वकथनात् "दमो मोदः" इति नास्यालङ्कारस्य विषय इत्यर्थः। रसादीनामत्यन्तोपकारिणो यमकप्रपञ्चस्य निर्व्वचनमनतिप्रयोजनमिति सङ्क्षेपेणैव यमकनिरूपणं व्यांय इत्यभिप्रायेणाह, एतच्चेति।—यमकञ्चेत्यर्थः। अत्र पदपदं पादैकदेशपरम्, अर्द्धपदं श्लोकार्द्धपरम्। पादाद्यावृत्तेश्चेति।—पादस्य द्विधा त्रिधा चतुर्धा वा खण्डने चानेकविधत्वम्, [आदिना पादश्लोकार्द्धयोः सङ्ग्रहः]। तत्र प्रथमपादस्य द्वितीयाद्यन्यतमस्मिन् द्वितीयादिसमुदाये च, द्वितीयस्य तृतीयान्यतरस्मिन् तृतीयादिसमुदाये च, तृतीयस्य चतुर्थे आवृत्तिः सम्भवतीति दशविधत्वमेव पादयमकस्य; एवं प्रथमार्द्धस्य द्वितीयार्द्धे, प्रथमपादस्य द्वितीये, तृतीयस्य चतुर्थे,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"नवपलाश-पलाशवनं पुरः
स्फुटपराग-परागत-पङ्कजम्।
मृदुल-तान्त-लतान्तमलोकयत्
स सुरभिं सुरभिं सुमनोभरैः॥" (व)

अत्र पदावृत्तिः "पलाशपलाश" इति। "सुरभिं सुरभिम्" इत्यत्र च द्वयोः सार्थकत्वम्; "लतान्तलतान्त" इत्यत्र प्रथमस्य निरर्थकत्वम्; "परागपराग" इत्यत्र द्वितीयस्य। एवमन्यदप्युदाहार्य्यम्। (श)

---

द्वितीय-तृतीये पादे आवृत्तिः सम्भवतीति श्लोकार्द्धयमकस्य त्रैविध्यम्; श्लोकयमकमपि विजातीयचतुष्पादत्वस्या च द्विविधम्। प्रभूततमभेदं—बहुभेदमित्यर्थः। दिङ्मात्रं—किञ्चिन्मात्रं, प्रकारान्तरोपलक्षणमल्पमित्यर्थः।

(व) नवेति।—राजसूये निमन्त्रितस्य इन्द्रप्रस्थं गच्छतः कृष्णस्य पथि वसन्ताविर्भावदर्शनवर्णनमिदम्। सः,—कृष्णः, पुरः,—अग्रतः, नवानि नूतनानि, पलाशानि पत्राणि, यत्र तादृशं, पलाशवनं किंशुककाननं यत्र तादृशं, स्फुटानि—विकसितानि, परागैः,—रजोभिः, ("परागः कौसुमं रजः" इत्यमरः) परागतानि—व्याप्तानि, पङ्कजानि यस्मिन् तथाभूतं तथा मृदुलाः,—कोमलाः, अत एव तान्ताः,—कुसुमभरेण आतपेन वा क्लान्ता इत्यर्थः, लतान्ताः,—पल्लवाः यत्र तादृशं, सुमनसां—पुष्पाणां, भरैः,—समूहैः, सुरभिं—सुगन्धिं, सुरभिं—वसन्तम्, अलोकयत्—ददर्श। द्रुतविलम्बितं वृत्तम्। शिशुपालवधस्थेदं पद्यम्।

(श) अत्रेति।—पदावृत्तिः,—पादैकदेशावृत्तिः। द्वयोः,—"सुरभिं सुरभिम्" इत्युभयोरित्यर्थः। सार्थकत्वम्—अर्थवत्त्वम्; [ ग्रन्थकृता एतद्द्वयं सार्थकतया उदाहृतमपि, तदेव अन्यविधया "रभिंसु रभिंसु" इत्येवमानुपूर्व्या गृहीतमुभयमपि निरर्थकत्वेन उदाहर्त्तुं शक्यते इति सुधीभिर्विवेच्यम् ]। द्वितीयस्येति।—निरर्थकत्वम् इत्यन्वयः। अन्यदपीति।—पादावृत्त्यादिरूपयमकमित्यर्थः। पादाभ्यासो यथा,—"न मन्दयाऽवर्जित-मान-सात्मया नमन्दया-वर्जितमानसात्मया। उरस्युपास्तीर्ण-पयोधरद्वयं मया समालिङ्गत जीवितेश्वरः॥" इत्यादि। अर्द्धाभ्यासो यथा,—"नाऽश्रेयसत्वया वर्ज्यः परमायत-मानया। नाश्रेयः स त्वयाऽऽवर्ज्यः परमायतमानया॥" इत्यादि। श्लोकावृत्तिद्वयं क्रमेण यथा,—"विनायकेन भवता वृत्तोप-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"यमकादौ भवेदैक्यं डलोर्बवोर्लरोस्तथा ।" (ष)

इत्युक्तनयात् "भुजलतां जड़तामबलाजनः" इत्यत्र न यमकत्वहानिः ।

**अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद् यदि ।**

**अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा ॥६६१॥ (स)**

द्विधेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च ।

---

चितबाहुना । स्वमिचोद्धारिणाऽभीता पृथ्वीयमतुलाश्रिता ॥ विनायकेन भवता वृत्तोपचितबाहुना । स्वामिवोद्धारिणाऽभीता पृथ्वी यमतुलाश्रिता ॥" "समानयास माऽनया सनानयाऽसमानया । समानया समानया सभान या समानया ॥" अयं चतुरक्षरपादश्लोकः ।

(ष) यमकादाविति ।—अत्र आदिपदेन श्लेषादिग्रहणं, तेन "त्वं समुद्रश्च दुर्वारौ महासत्त्वौ सतेजसौ । अयन्तु युवयोर्भेदः स जड़ात्मा पटुर्भवान् ॥" इत्यादौ न श्लेषभङ्गः । अन्ये तु,—"यमकादौ भवेदैक्यं डलयो रलयोर्बवोः । शषयोर्नणयोश्चान्ते सविसर्गाविसर्गयोः ॥ सबिन्दुकाबिन्दुकयोः स्यादभेदप्रकल्पनम् ॥" इति पठन्ति ।

(स) वक्रोक्त्यलङ्कारमाह, अन्यस्येति ।—अन्यस्य—जनस्य, वक्तुरित्यर्थः, अन्यार्थकम्—अन्यतात्पर्य्यकं वाक्यम्, अन्यः,—अपरः, श्रोता इत्यर्थः, श्लेषेण वा काक्वा—ध्वनिविकारविशेषेण, अन्यथा—अन्यार्थत्वेनेत्यर्थः, यदि योजयेत्—सङ्घटयेत्, सा वक्रोक्तिः । ततः,—श्लेषकाकुवक्रोक्तिभ्यां, सा द्विधा—श्लेषनिबन्धना काकुनिबन्धना चेति द्विप्रकारा । केनचिदन्याभिप्रायेण कथितस्य वाक्यस्य केनचिदन्येनान्याभिप्रायकल्पनमेव वक्रवचनसम्बन्धात् वक्तृबोद्धव्यनियन्त्रितः वक्रोक्तिनामाऽलङ्कारः इति भावः । अत्र काव्यप्रदीपकाराणामयमाशयः ; यथा हि,—"इयञ्च न वाकोवाक्यमात्रे, किन्तु स्वतोऽप्यन्येनोक्तस्य अन्यथायोजनमात्रे न्यायसाम्यात् ;" यथा,—"त्वं हि वैरिविमर्द्दने हरिपदप्रोत्सर्ज्जने लग्र्जुनः पीतः पङ्कजलोचनाभिरभितो नेत्राञ्चलैर्यस्त्वं । रक्तः सज्जनसङ्गमेषु करणश्रेणीमयो ! श्रीधर ! स्थाने वर्णचतुष्टयस्य भुवने भर्त्ता भवान् गीयते ॥" अत्र वर्णचतुष्टयस्य भर्त्ता श्रीधर इति वक्तव्ये श्लिष्टपदसामर्थ्यवशेन वक्तृतात्पर्य्याभावेऽपि स्वत एव अन्यार्थबोधः" इति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्रमेणोदाहरणम्,—

"के यूयम्? स्थल एव सम्प्रति वयं, प्रश्नो विशेषाश्रयः,
किं ब्रूते विहगः, स वा फणिपतिर्यत्रास्ति सुप्तो हरिः?।
वामा यूयमहो! विडम्बरसिकः कीदृक् स्मरो वर्त्तते?
येनास्मासु विवेकशून्यमनसः पुंस्वेव योषिद्भ्रमः॥" (ह)

(ह) श्लेषस्यापि पदभङ्गाऽभङ्गाभ्यां द्वैविध्येन श्लेषमूलवक्रोक्तेरपि द्वैविध्यम्। तत्रादौ सभङ्गाभङ्गात्मकश्लेषमूलवक्रोक्तिमुदाहरति, के इति।—के यूयम्? (इति प्रश्नः) जले यूयम् इति अर्थान्तरे सङ्गमयन् श्रोताऽऽह, स्थले इति।—सम्प्रति वयं स्थले एव, न तु के—जले इति भावः, (उत्तरमिदं, "सुखशीर्षजलेषु कम्" इति नानार्थकोषः)। वक्ता स्वतात्पर्य्यमवगमयन्नाह, प्रश्न इति।—प्रश्नः विशेषमाश्रयतीति तथोक्तः विशेषविषयक इत्यर्थः, प्रश्नार्थकः किंशब्द इति भावः, (प्रत्युत्तरमिदम्)। विः,—पक्षी, शेषः,—अनन्तः, इत्यर्थाभिप्रायेण तदपि श्रोता अन्यथा योजयति, किमिति।—किं ब्रूते?—कथयति? भवान् इति शेषः, विहगः,—पक्षी? वा सः,—प्रसिद्धः, फणिनां—नागानां, पतिः,—अनन्तः, यत्र फणिपतौ, हरिः,—नारायणः, सुप्तः,—निद्रितः, अस्ति, निद्रातीत्यर्थः, [सुप्त इति वर्त्तमाने क्तप्रत्ययः] तदाशयः किं भवतः प्रश्नः? इति भावः; अत्र वि-शेष-शब्दौ पक्षिनागपतिवाचकौ इति बोध्यम्। (द्वितीयस्योत्तरमिदम्। "नगौकोवाजिविकिर-वि-विष्किरपतत्रयः" इत्यमरः)। एवं वाक्छलेन कदर्थितो वक्ता श्रोतारमाक्षिपति, वामा इति।—यूयं वामाः,—प्रतिकूलवादिन इत्यर्थः, एकार्थतया प्रयुक्तं मद्वाक्यं विपरीतार्थतया छलग्राहिण इति यावत्, (प्रथमस्योक्तिरियम्। "वामं धने पुंसि हरे कामदेवे पयोधरे। वल्गुप्रतीपसव्येषु त्रिषु नार्य्यां स्त्रियाम्" इति मेदिनी)। तदपि योषिदर्थपरतया श्रोता योजयन्नाह, अहो! इति।—अहो!—आश्चर्य्यं, विडम्बे—प्रतारणायां, रसिकः,—पटुरित्यर्थः, कीदृक् स्मरः,—कामः, वर्त्तते? तवेति शेषः, येन—कामपारवश्येन, विवेकशून्यमनसः,—निर्विवेकस्य, स्त्रीपुरुषगतवैशिष्ट्यविचाराक्षमस्येत्यर्थः, तव इति शेषः, पुंसु—पुरुषेषु एव, अस्मासु इति शेषः, योषिद्भ्रमः,—नारीभ्रान्तिः, वामाशब्दस्य नारीवाचकत्वादिति भावः। (द्वितीयस्य प्रत्युक्तिरियम्)। इह श्लेषवशेन एकस्य अन्यार्थकवाक्यस्य तद्भिन्नार्थतया सङ्घटनात् वक्रोक्तिः। शार्दूलविक्रीडितं वृत्तम्। यथा वा,—"किं गौरि! मां प्रति रुषा? ननु गौरहं किम्? कुप्यामि कां प्रति मयीत्यनुमानतोऽहम्। जानाम्यतस्त्वमनुमानत एव सत्यमित्थं गिरो



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र विशेषपदस्य "विः पक्षी" "शेषो नागः" इति अर्थद्वय-योगात् (क) सभङ्गश्लेषः । अन्यत्र तु अभङ्गः ।

"काले कोकिलवाचाले सहकारमनोहरे ।
कृतागसः परित्यागात् तस्याश्चेतो न दूयते ? ॥" (ख)

अत्र कयाचित् सख्या निषेधार्थे नियुक्तो नञ् अन्यथा काक्वा दूयत एवेति विध्यर्थे घटितः ।

**शब्दैरेकविधैरेव भाषासु विविधास्वपि ।**
**वाक्यं यत्र भवेत् सोऽयं भाषासम इतीष्यते ॥६६२॥(ग)**

---

गिरिभुवः कुटिला जयन्ति ॥" इति । "अहो केनेदृशी बुद्धिर्दारुणा तव निर्म्मिता । त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥" इति । तथा,—"नन्दराजगृहपक्ष-वीथिकाम्, आलि ! यामि वद किं नयामि ते ? । नीलमुज्ज्वलमतीव सुन्दरं 'केश-बन्धन'मिहानयस्व मे ॥" इति च । (अत्र केशबन्धनं—रज्जुविशेषार्थकं—श्लेषमूले सखीवाक्ये तु "केशवं धनम्" इति) इत्यादिकन्तु—श्लेषे एव उदाहरणीयं, न वक्रोक्तौ, इति केचित् ।

(क) उदाहृतश्लोके सभङ्गाभङ्गश्लेषमूलवक्रोक्तिद्वैविध्यं दर्शयति, अत्रेति ।—नागः,—सर्पराजः, अर्थद्वययोगात्—अर्थद्वयप्रयोज्यत्वात्, प्रतिपाद्यद्वये सङ्गमनीयत्वा-दिति यावत् ।

(ख) काकुवक्रोक्तिमुदाहरति, काले इति ।—कोकिलवाचाले—कोकिल-काकलीमुखरिते इत्यर्थः, सहकारेण आम्रेण, तद्विकासेन इति यावत्, मनोहरं काले—वसन्ते इत्यर्थ, कृतागसः,—कृतापराधस्य, कान्तस्य इति शेषः, [ कर्म्मणि षष्ठी ] परित्यागात्—निराकरणात्, तस्या,—नार्य्याः, चेतः,—चित्त, न दूयते ?—न खिद्यते ? अपि तु दूयते एवेति अर्थः काक्वा प्रतिपाद्यते । शब्दधर्म्मेण काक्वा उक्तार्थ-प्रतिपादनादस्य शब्दालङ्कारत्वम् । आपाततः प्रतीतस्यार्थस्य अन्यथा योजनञ्च व्यञ्जना मूलकं बोध्यम् ।

(ग) भाषासमालङ्कारमाह, शब्दैरिति ।—विविधासु अपि—नानाप्रकारा-स्वपि, भाषासु—संस्कृतप्राकृताद्युक्तिष्वित्यर्थः, एकविधैरेव—एकरूपैरेव, शब्दैः यत्र—यदित्यर्थः, [ अव्ययमिदम् ] वाक्यं भवेत्, सः अयं भाषासमः इति शब्दालङ्कारः इष्यते, बुधैरिति शेषः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा मम,—

"मञ्जुलमणिमञ्जीरे कलगम्भीरे विहारसरसीतीरे।
विरसाऽसि केलिकीरे किमालि! धीरे च गन्धसारसमीरे॥"(घ)

एष श्लोकः संस्कृतप्राकृतसौरसेनीप्राच्यावन्तीनागरापभ्रंशेषु एकविध एव।

"सरसं कइण कव्वं"। (ङ)

(घ) भाषासममुदाहरति, मञ्जुलेति।—मानिनीं प्रति सख्या वचनमिदम्। हे आलि!—सखि! ("आली सखी वयस्या च" इत्यमरः) कलेन—मधुरास्फुटेन स्वनेन, गम्भीरे—मनोरमे इत्यर्थः, मञ्जुल,—मनोहरः, यः मणिमञ्जीरः,—रत्ननूपुरः, ("मञ्जीरो नूपुरोऽस्त्रियाम्" इत्यमरः) तस्मिन्, विहारसरस्याः,—क्रीडावाप्याः, तीरे केलिकीरे—क्रीडाशुके, धीरे—मन्दमन्दसञ्चारिणीत्यर्थः, गन्धसारसमीरे—चन्दनसुरभिमलयमरुति च, किं—कथं, विरसा—अरुचिः, असि—भवसि? आर्या वृत्तम्। अथवा,—यथा रत्नाकरस्य,—"लीलाविलोलकलकण्ठविहङ्गकेलि-कोलाहलाकुलकुलायकुलामलाङ्गे। कल्लोलकन्दकदलीलवलीलवङ्गमालाललामजल-मञ्जुलकूलकच्छे॥" इति भाषाषट्कतुल्यं पद्यम्। मन्दराद्रिवर्णने एतदनुकूलश्लोकौ यथा,—"यस्मिन् सलीलमसितोन्नतगण्डशैलनागः करोति विकरालकरावमर्षात्। रक्तातपाभिनवपल्लवभङ्गमर्कविम्बालवालवलयस्य दिनद्रुमस्य॥" इति। संस्कृतप्राकृत-मयी गोमूत्रिकाबन्धो यथा,—"बालाविलासावलिहारिहासा लीलामला भावरुहा सहावा। देहं हरन्ती मरसा सुरामा गेहं चरन्ती सहसाऽभिरामा॥" इति। एवमानुलोम्यप्रतिलोम्याभ्यामपि भाषासाम्ये एष एवालङ्कारो बोध्यः, यथा,—"इह रे बहलालासे बाला राहुमलीमसा। सालका रसलीला सा तुङ्गालालिकलारत॥" इति। अत्रानुलोम्येन पाठे संस्कृतमयः, प्रातिलोम्येन पुनः पाठे प्राकृतमयः श्लोकः सम्पद्यते। यथा,—"तरला कलिला गातुं सालाली सरकालसा। सामली महुरा-लावा सेलाला इव रेहइ॥" इति। आनुलोम्येन प्रातिलोम्येन च पाठे अर्थैक्ये एकार्थं नाम चित्रालङ्कारः, यथा,—"विदिते दिवि केऽनीके तं यातं निर्जिताजिनि। विगदं गविरोद्धारो योद्धा यो नतिमेति न॥" इति। इदमेव प्रातिलोम्येन "नतिमेति न योद्धा यो रोद्धारो विगदं गवि। निर्जिताजिनि तं यातं केऽनीके विदितं दिवि॥" इति सम्पद्यते पद्यम्, अत्राऽपि अर्थसाम्यम्।

(ङ) ["सरसं कवेः काव्यम्" इति संस्कृतम्]।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत्यादौ तु "सरसम्" इत्यत्र संस्कृतप्राकृतयोः साम्येऽपि वाक्यगतत्वाभावे वैचित्र्याभावान्नायमलङ्कारः ।

**श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते ।**
**वर्णप्रत्ययलिङ्गानां प्रकृत्योः पदयोरपि ।**
**श्लेषाद्विभक्ति-वचन-भाषाणामष्टधा च सः ॥६६३॥ (च)**

(च) श्लेषालङ्कारमाह, श्लिष्टैरिति ।—"सकृदुच्चरितः शब्दः सकृदर्थं गमयति" इति नियमेन काव्ये स्वरभेदानादरात्, "यावन्तोऽर्थाः तावन्त एव शब्दाः एकप्रयत्नेनो-च्चार्यन्ते" इति नये युगपत् नानाशब्दोच्चारणेऽपि तेषां भेदोपलम्भो न भवति ; तत्रापि प्रकरणादिनियमाभावात् अनेकार्थानामभिधयैव बोधः, प्रकरणादिनियमसत्त्वे तु एक-स्याभिधया अपरस्य व्यञ्जनया इति मतमाश्रित्येदं लक्षणम् । एवञ्चैकप्रयत्नोच्चार्यत्वेन लुप्तभेदानां वर्णादीनां मेलकः श्लेषः तद्विशिष्टैः श्लिष्टैः,—अनेकार्थैः, पदैः,—स्वरव्यञ्जन-समूहात्मकैरित्यर्थः, अनेकार्थानाम् अभिधाने—अभिधया प्रतिपादने, [ अनेकार्थौ च अनेकार्थाश्च इत्येकशेषद्वन्द्वे अनेकार्थाः, तेषां, तेन द्वयोर्बहूनां वा अर्थानामित्यर्थो बोध्यते ] श्लेषः,—श्लेषाख्योऽलङ्कारः, इष्यते ; अनेकार्थाभिधानमेव श्लेषः, एवं सति नात्माश्रयः इति भावः । श्लिष्टवर्णादिभेदेन श्लेषस्याष्टविधत्वमाह, वर्णेति ।—स च—श्लेषालङ्कारः, वर्णप्रत्ययलिङ्गानां--वर्णौ च प्रत्ययौ च लिङ्गे च तेषामिति विग्रहः; तथा च वर्णादीनामष्टानां श्लेषात्—अनेकार्थतया प्रतिपादनात्, अष्टधा—अष्टविधः ; वर्णश्लेषः, प्रत्ययश्लेषः, लिङ्गश्लेषः, प्रकृतिश्लेषः, पदश्लेषः, विभक्तिश्लेषः, वचनश्लेषः, भाषा-श्लेषश्चेत्येवंरूपः । प्रकृतिश्लेषः पुनः द्विधा,—धातुप्रातिपदिकभेदात् द्विप्रकारः ; पदश्लेषश्च सुबन्ततिङन्तभेदात् द्विविध इति बोध्यम् । रुद्रटग्रन्थे वर्णादिश्लेषाणां प्रत्येकं लक्षण-मेवंविधं दृश्यते ; यथा,—"यत्र विभक्तिप्रत्ययवर्णवशादैकरूप्यमापतति । वर्णानां विविधानां वर्णश्लेषः स विज्ञेयः ॥ यत्र प्रकृतिप्रत्ययसमुदायानां भवत्यनेकेषाम् । सारूप्यं प्रत्ययतः स ज्ञेयः प्रत्ययश्लेषः ॥ स्त्रीपुंनपुंसकानां शब्दानां भवति यत्र सारूप्यम् । लघु-दीर्घत्वसमासैर्लिङ्गश्लेषः स विज्ञेयः ॥ सिध्यति यत्रानेकैः सारूप्यं प्रत्ययागमोपपदैः । प्रकृतीनां विविधानां प्रकृतिश्लेषः स विज्ञेयः ॥ यस्मिन् विभक्तियोगः समासयोगश्च जायते विविधः । पदभङ्गेषु विभक्तौ विज्ञेयोऽसौ पदश्लेषः ॥ सारूप्यं यत्र सुपां तिङां तथा सर्व्वथा मिथो भवति । सोऽत्र विभक्तिश्लेषो वचनश्लेषस्तु वचनानाम् ॥ यस्मिन्नुच्चा-र्यन्ते सुव्यक्तविविक्तभिन्नभाषाणि । वाक्यानि यावदर्थं भाषाश्लेषः स विज्ञेयः ॥" इति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्रमेण उदाहरणम्,—

"प्रतिकूलतामुपगते हि विधौ
विफलत्वमेति बहुसाधनता।
अवलम्बनाय दिनभर्त्तुरभूत्
न पतिष्यतः करसहस्रमपि॥" (छ)

अत्र "विधौ" इति विधु-विधिशब्दयोरुकारिकारयोर्वर्णयोरौकाररूपत्वात् श्लेषः। (ज)

"किरणा हरिणाङ्कस्य दक्षिणश्च समीरणः।
कान्तोत्सङ्गजुषां नूनं सर्व्व एव सुधाकिरः॥" (झ)

---

(छ) वर्णश्लेषमुदाहरति, प्रतिकूलतामिति।—सूर्य्यास्तवर्णनमिदम्। विधौ—दैवे, ("विधिर्विधाने दैवे च" इत्यमरः) प्रतिकूलतां—विमुखताम्, अनभिमतफल-साधनोन्मुखतामित्यर्थः, उपगते—प्राप्ते सति, बहूनि साधनानि उपायाः येषां ते बहु-साधनाः, तेषां भावः बहुसाधनता, बह्वभिमतफलोपायशालित्वम् इत्यर्थः, हि—निश्चितं, विफलतां—व्यर्थताम्, एति—प्राप्नोति, पक्षे,—विधौ—चन्द्रे, प्रतिकूलतां—विरुद्ध-फलभागित्वम्, उदयफलभागित्वमिति यावत्, उपगते बहुसाधनता—बहुक्ष्वित्युपाय-शालित्वं, विफलत्वमेति। तथा हि,—पतिष्यतः,—पतनोन्मुखस्य, अस्तं गमिष्यत इत्यर्थः, दिनभर्त्तुः कराणां—किरणानां, हस्तानाञ्च, सहस्रमपि—साधनभूतमिति भावः, अवलम्बनाय—आश्रयाय, रक्षणाय इति यावत्, न अभूत्—अवलम्बनसाधनं नासीदित्यर्थः। तथा च,—कालान्तरे सूर्य्यास्तगमनं प्रति तात्कालिककिरणानां प्रतिबन्धकत्वं कल्प्यते, एवञ्च सन्ध्याकाले तात्कालिककिरणरूपप्रतिबन्धकानां सद्भावेऽपि सूर्य्यास्तगमनमनिष्येति प्रथमार्थसमर्थनम्; अथ च,—पतिष्यतः,—स्खलिष्यतः जनस्य, करद्वयमपि पतनविघाताय भवति, तस्य तु करसहस्रमपि अवलम्बनाय नाभूत् इति श्लेषः। शिशुपालवधस्येदं पद्यम्। प्रमिताक्षरा वृत्तम्;—"प्रमिताक्षरा सजससैः कथिता" इति च तल्लक्षणम्।

(ज) अत्र विधाविति।—विधौ इति पदस्य औकाररूपवर्णस्य इकारोकार-जन्यत्वात् अर्थद्वयस्य श्लेषेण समर्थनं बोध्यम्।

(झ) प्रत्ययश्लेषमुदाहरति, किरणा इति।—हरिणाङ्कस्य—चन्द्रस्य, किरणाः,—अंशवः, दक्षिणः,—दक्षिणाशाभवः, समीरणः,—पवनश्च, सर्वे एव नूनं—निश्चितं,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र "सुधाकिरः" इति क्विप्-क-प्रत्यययोः । किञ्च अत्र बहुवचनैकवचनयोरैकरूप्याद्वचनश्लेषोऽपि । (ञ)

"विकसन्नेत्रनीलाब्जे तथा तन्व्याः स्तनद्वयी ।
तव दत्तां सदाऽऽमोदं लसत्तरलहारिणी ॥" (ट)

---

कान्तोत्सङ्गजुषां—कान्तक्रोड़स्थितानां कान्तानां, कान्ताक्रोड़स्थितानां कान्तानाञ्च, सुधाकिरः,—अमृतवर्षिणः, पक्षे अमृतवर्षी चेत्यर्थः । अत्र सुधां किरन्तीति क्विपि सुधाकिर्शब्दस्य प्रथमाबहुवचने, तथा सुधा किरतीति कप्रत्यये सुधाकिरशब्दस्य प्रथमैकवचने च सुधाकिर इति पदस्य, तथा किरणविशेषणत्वे समीरणविशेषणत्वे च "सर्वे" "सर्वः" इति च पदस्य प्रत्ययवचनाभ्यामुभयथा सिद्धत्वात् अनेकार्थाभिधायित्वं बोध्यम् ।

(ञ) अत्र सुधाकिर इति ।—क्विप्प्रत्यय-कप्रत्यययोरिति ।—श्लेष इत्यनुषङ्गः, एवमग्रेऽपि । किञ्चात्र "कान्तोत्सङ्गजुषाम्" इति लिङ्गश्लेषोऽपि बोद्धव्यः । वचनश्लेषोऽपीति ।—"सर्व्वः" इति, "सुधाकिरः" इति च, इत्यादौ सन्धिवशादैकरूप्यं ज्ञेयम् ।

(ट) लिङ्गश्लेषमुदाहरति, विकसदिति ।—तन्व्याः,—कृशाङ्ग्याः, लसत्तरलहारिणी विकसन्नेत्रे एव नीलाब्जे—नीलपङ्कजे, तथा स्तनयोः द्वयी तव सदा आमोदं—प्रेममोदं, सौरभं वा, (नीलाब्जयोः सौरभदानं सम्भवति) दत्ताम् । अत्र "दत्ताम्" इति क्रियापदं "विकसन्नेत्रनीलाब्जे" इत्यनेन यदा अन्वेति, तदा "दा" धातोः लोटपरस्मैपदप्रथमपुरुषद्विवचनान्तता ; यदा "स्तनद्वयी" इत्यनेनान्वेति, तदा लोट्-आत्मनेपदप्रथमपुरुषैकवचनान्तता, तस्मादस्य अनेकार्थत्वम् ; तथा "लसत्तरलहारिणी" इति पदं यदा "विकसन्नेत्रनीलाब्जे" इत्यस्य विशेषणं, तदा लसन्ती च तरले च हारिणी च—मनोहरे च इति विग्रहेण क्लीवलिङ्गद्विवचनान्तता ; यदा "स्तनद्वयी" इत्यस्य विशेषणं, तदा लसत्तरलः,—हारमध्यगो मणिः यत्र, ("तरलो हारमध्यगः" इत्यमरः) सा चासौ हारिणी चेति विग्रहेण स्त्रीलिङ्गैकवचनान्तता ; यद्वा,—लसंस्तरलो यत्र, एवम्भूतो हारो यत्रास्ति ; [ अत्र बहुव्रीहिसमासेन अर्थप्रतिपत्तिसम्भवेन कर्म्मधारयोत्तरेन्प्रत्ययस्य "न कर्म्मधारयान् मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकरः" इत्यनुशासनेन असाधुत्वेऽपि "भूम-निन्दा-प्रशंसासु—" इत्यादिनियमेन अतिरिक्तस्य नित्ययोगार्थस्य विवक्षितत्वान्न कोऽपि दोषः इति विचार्य्यम् ] इत्यनयोः क्रियापद-विशेषणपदयोरनेकार्थाभिधायित्वमवधेयम् । एवम् अत्र वचनयोर्लिङ्गयोश्च श्लेषः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र नपुंसकस्त्रीलिङ्गयोः श्लेषो वचनश्लेषोऽपि । (ठ)

"अयं सर्व्वाणि शास्त्राणि हृदि ज्ञेषु च वच्यति ।
सामर्थ्यकृदमित्राणां मित्राणाञ्च नृपात्मजः ॥" (ड)

अत्र "वच्यति" इति वहि वच्योः, "सामर्थ्यकृत्" इति कृन्तति-करोत्योः प्रकृत्योः । (ढ)

६१३ "पृथु कार्त्तस्वरपात्रम्—" इत्यादि । अत्र पदभङ्गे विभक्तिसमासयोरपि वैलक्षण्यात् पदश्लेषः, न तु प्रकृतिश्लेषः । एवञ्च, (ण)—

---

(ठ) अत्रेति ।—श्लेषोऽपीत्यपिना णिन्प्रत्ययस्य, इन्प्रत्ययस्य च श्लेष इति ज्ञेयम् ।

(ड) प्रकृतिश्लेषमुदाहरति, अयमिति ।—राजपुत्रे जाते ज्योतिर्विदो वचनमेतत् । अमित्राणां—शत्रूणां, सामर्थ्यकृत्—सामर्थ्यच्छेदकः, मित्राणां—सुहृदाञ्च, सामर्थ्यकृत्—सामर्थ्यकरश्च, अयं नृपात्मजः,—राजपुत्रः, हृदि—हृदये, ज्ञेषु—विद्वत्सु, च सर्व्वाणि शास्त्राणि वच्यति—धारयिष्यति कथयिष्यति चेत्यर्थः ; हृदि धारयिष्यति, ज्ञेषु कथयिष्यतीति यथासम्भवमन्वयः ।

(ढ) अत्रेति ।—अत्र वच्यतीति क्रियापदस्य हृदि इत्यनेन अन्वये "वह" धातुना, "ज्ञेषु" इत्यनेन अन्वये "वच" धातुना निष्पन्नस्य वहन-कथनोभयार्थत्वात् अनेकार्थाभिधायित्वम् ; तथा सामर्थ्यं कृन्तति करोति वा इत्युभयथा निष्पन्नस्य सामर्थ्यकृदितिपदस्य अनेकार्थाभिधायित्वं बोध्यम् ।

(ण) पदश्लेषमुदाहरति, पृथ्विति ।—व्याख्यातं प्राक् दोषपरिच्छेदे ६१३पृष्ठे । अत्र "पृथुकार्त्तस्वरपात्रम्" इत्यादिपदानामनेकार्थाभिधायित्वम् । नन्वत्र प्रकृतिश्लेषोऽपि सम्भवति इत्यत आह, अत्रेति ।—अत्र पदभङ्गे—अर्थबोधनाय समस्तपदस्य पार्थक्ये, विभक्तिसमासयोरपीत्यपिना प्रकृतेः सङ्ग्रहः । विभक्तिरत्र समासाङ्गम् ; क्वचित् पदभङ्गाभावेऽपि प्रकृतिविभक्तिवैलक्षण्येन पदश्लेषो यथा,—"यस्य चेतः प्रियालोके तस्य स्मरकदर्थनम्" । अत्र यद्यसीः तत्तमीः प्रकृत्योः सुप्तिङोर्विभक्त्योरपि वैलक्षण्यात् पदश्लेषः । तथा हि,—दैवादिकस्य यसः तसश्च लोट्मध्यमपुरुषैकवचने यस्य तस्येति सिद्धम् ; यत्तदोः षष्ठ्येकवचनेऽपि तथा रूपम् इति सारः । एवञ्च—प्रकृतिविभक्तिवैलक्षण्येन पदश्लेषाङ्गीकारे च इत्यर्थः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"नीतानामाकुलीभावं लुब्धैर्भूरिशिलीमुखैः।
सदृशे वनवृद्धानां कमलानां तदीक्षणे॥" (त)

अत्र लुब्धशिलीमुखादिशब्दानां श्लिष्टत्वेऽपि विभक्तेरभेदात् प्रकृतिश्लेषः। अन्यथा सर्व्वत्र पदश्लेषप्रसङ्गः। (थ)

"सर्व्वस्वं हर सर्व्वस्य त्वं भवच्छेदतत्परः।
नयोपकारसाम्मुख्यमायासि तनुवर्त्तनम्॥" (द)

(त) नीतानामिति।—भूरिशिलीमुखैः,—बहुवाणधारिभिः, लुब्धैः,—व्याधैः, अन्यत्र,—भूरि—अत्यन्तं, लुब्धैः,—लोलुपैः, शिलीमुखैः,—भ्रमरैः, ("अलिबाणौ शिलीमुखौ" इत्यमरः, "लुब्धो व्याधे लोलुपे च" इति गोपालः) आकुलीभावं—मर्द्दितावस्थां, नीतानां—प्राप्तानां, वनवृद्धानां—वने कानने, अन्यत्र—जले, ("वने सलिलकानने" इत्यमरः) वृद्धानां—वृद्धिं प्राप्तानां, कमलानां—हरिणानां पद्मानाञ्च, ("सहस्रपत्रं कमलम्" इति "स्यात् कुरङ्गेऽपि कमलः" इति चामरः) सदृशे—समाने, तदीक्षणे—तस्याः कान्तायाः, ईक्षणे—नेत्रे, शोभेते इति शेषः।

(थ) अत्रेति।—अत्र प्रकृतिश्लेष इति परेणान्वयः। प्रकृतिरत्र प्रातिपदिकरूपा बोध्या। अन्यथा—प्रकृतिभेदमात्रेणापि पदश्लेषाङ्गीकारे, सर्व्वत्र—प्रकृतिश्लेषस्थले; एवञ्च पदश्लेषासङ्कीर्णं प्रकृतिश्लेषोदाहरणं न स्यात् इति प्रकृतिश्लेषोच्छेदप्रसङ्गः इति भावः।

(द) विभक्तिश्लेषमुदाहरति, सर्व्वस्वमिति।—प्रथमोक्तव्याख्यायां शिवं प्रति तद्भक्तस्य उक्तिः।—हे हर! त्वं सर्व्वस्य, जगतः इति शेषः, सर्व्वस्वं—समस्तधनस्वरूपं, तथा भवस्य—संसारस्य, छेदे—खण्डने, तत्परः,—नित्यरतश्च, संसाराशेषदुःखध्वंसमार्थी च सन्नित्यर्थः, नयेन—नीतिप्रदर्शनेन, यः उपकारः तस्मिन् साम्मुख्यम्—आनुकूल्यं यस्य तादृशं, तनुवर्त्तनं—शरीरधारणम्, आयासि—प्राप्नोषि; लोकहितार्थं जन्म परिगृह्णासीत्यर्थः। पक्षान्तरे तस्करं प्रति तन्मातुरुक्तिः।—त्वं सर्व्वस्य, जनस्येति शेषः, सर्व्वस्वं—सर्व्वधनं, हर—चोरय, तथा छेदतत्परो भव—प्रतिबन्धिनो विनाशय इत्यर्थः; आयासि—आयासयुक्तं, क्लेशावहमित्यर्थः, तनुवर्त्तनं—क्षुद्रं जीवनोपायम्, उपकारसाम्मुख्यं नय—प्रापय; अतिकष्टे स्थिता वयं, तत् त्वं चौर्य्यं कृत्वा यथा वयं सुखेन जीवामस्तथा कुरु इति भावः। यद्वा,—उपकारसाम्मुख्यं नय—अपनय, तद्विमुखो भवेत्यर्थः, आयासि—परपीड़ाकारि, वर्त्तनं—जीवनोपायं, तनु—विस्तारयेत्यर्थः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र "हर" इति पक्षे शिवसम्बोधनमिति सुप्। पक्षे च हृधातोस्तिङिति विभक्तिः। एवं "भव" इत्यादौ; अस्य च भेदस्य प्रत्ययश्लेषेणापि गतार्थत्वे प्रत्ययान्तरासाध्यसुबन्ततिङन्तगतत्वेन विच्छित्तिविशेषाश्रयणात् पृथगुक्तिः। (ध)

"महदे सुरसन्धं मे तमव समासङ्गमागमाहरणे।
हर बहुसरणं तं चित्तमोहमवसर उमे! सहसा॥" (न)

अत्र संस्कृतमहाराष्ट्र्यौ।

**पुनस्त्रिधा सभङ्गोऽथाभङ्गस्तदुभयात्मकः॥ ६६४॥**

**एतद्भेदत्रयञ्च उक्तभेदाष्टके यथासम्भवं ज्ञेयम्। (प)**

---

(ध) "भव" इत्यादाविति।—भव इति पदम् एकत्र—भूधातोस्तिङन्तरूपम्, अन्यत्र,—सम्बन्धिपदत्वात् लुप्तषष्ठ्यन्तमिति विभक्तिवलात् अनेकार्थाभिधायकमिति भावः। अस्य च—विभक्तिश्लेषपरस्य च, प्रत्ययश्लेषेणापि इत्यपिर्भिन्नक्रमो, प्रत्ययश्लेषेण गतार्थत्वेऽपीत्यर्थः; गतार्थत्वे—चरितार्थत्वे, उक्तत्वे इत्यर्थः, प्रत्ययान्तरेति।—प्रत्ययान्तरेणासाध्यं यत् सुबन्तं तिङन्तञ्च तद्गतत्वेनेत्यर्थः, विच्छित्तिविशेषाश्रयणात्—वैचित्र्यातिशयप्रतिपादनात्; कृत्तद्धितान्तस्य स्वादिव्यतिरेकेण प्रयोगाभावात् प्रत्ययान्तरसाध्यत्वं, सुप्तिङन्तस्य तु न तथात्वमिति विशेषः। "आयासि" इत्यत्र प्रकृतिविभक्तिवैलक्षण्येन पदश्लेषोऽपीत्यवधेयम्।

(न) भाषाश्लेषमाह, महदे इति।—संस्कृतार्थो यथा,—हे महदे!—उत्सवदायिनि! ("मह उद्धव उत्सवः" इत्यमरः) उमे!—गौरि! मे—मम, तं सुरसन्धं—देवप्रार्थनीयम्, आगमाहरणे—शास्त्रज्ञाने, समासङ्गं—सम्यक् आसक्तिम्, अव—रक्ष; तथा अवसरे—समये, तं बहुसरणं—बहुव्यापिनं, चित्तमोहम्—अज्ञानमित्यर्थः, सहसा—झटिति, हर—नाशय। महाराष्ट्रीभाषाऽर्थस्तु,—मह—मम, धम्मे—धर्मे, रसम्—अनुरागं, देसु—देहि, गमागमा—गमागमात्, संसारात् इत्यर्थः, णो—नः, अस्माकमित्यर्थः, तमवसं—तमोवशां, तमोगुणजनितामित्यर्थः, आसम्—आशामित्यर्थः, हर—नाशय। हे हरवहु!—हरवधु! तं—त्वं, सरणं—शरणं, रचितोऽसीत्यर्थः, मे—मम, चित्तमोहं—चित्तमोह इत्यर्थः, सहसा अवसरउ—अपसरतु। भाषासमाऽलङ्कारे भाषाणामेकरूपत्वं, न तु अर्थतो भेदः, इह तु "महदे सुरसन्धं मे" इति पदानामनेकार्थता इत्युभयोर्भेदः।

(प) उक्तभेदाष्टके इति।—यथासम्भवं—"पृथुकार्त्तस्वरपात्रम्" इति सभङ्ग-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा वा,—

"येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गाञ्च योऽधारयत् ।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यञ्च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्व्वदो माधवः ॥" (फ)

श्लेषः । "नीतानाम्—" इति अभङ्गश्लेषः । "सर्व्वस्वं हर" इत्यत्र सभङ्गाभङ्गात्मकश्लेष इति बोध्यम ।

(फ) एकत्रैव तच्चितयमुदाहरति,—यथा वेति । येनेति ।—श्लोकोऽयं हरिहरोभयपक्षे एव व्याख्येय इति प्रथमं हरिपक्षे व्याख्या यथा,—सर्व्वदः,—सर्व्वाभीष्टप्रदायी, सः मा—लक्ष्मीः, तस्याः धवः,—पतिः, कृष्ण इत्यर्थः, सर्व्वदा उमाधवस्त्वां पायात्—रक्षतु । माधवं विशिनष्टि,—येन अभवेन—अजेन, अनः,—शकटं, ध्वस्तं—पादप्रक्षेपेण परावर्त्तितं, तथा पुरा—पूर्व्वस्मिन् काले. अमृतपरिवेशनावसरे इत्यर्थः, बलिजित्—बलिनामकासुरराजस्य जेता, कायः,—शरीरं, वामनदेह इत्यर्थः, स्त्रीकृतः,—असुराणां मोहनार्थं मोहिनीमूर्त्तिपरिग्रहः कृतः इत्यर्थः, (अमृतार्थं विवदमानानां देवासुराणाम् अमृतपरिवेशनाय मायया नारायणेन मोहिनीरूपं धृतम् इति पुराणवार्त्ता,) यश्च उद्वृत्तभुजङ्गहा—उद्वृत्तम्—उद्दामचरित्रं, भुजङ्गं—सर्पं रूपिणमघासुरं कालियं वा, हतवानित्यर्थः, तथा आरम्—आरिसम्बन्धि, बलं—सैन्यं, याति—आक्रामतीति आरबलयः, अथवा,—उद्वृत्तभुजङ्गं हरतीति उद्वृत्तभुजङ्गहारः,—गरुड़ः, तस्य बलेन याति—गच्छतीति तथोक्तः, यः अगं--पर्व्वतं, गोवर्द्धनमित्यर्थः, ("शैलवृक्षौ नगावगौ" इत्यमरः) कृष्णरूपेण ; गां—पृथिवीञ्च, कूर्म्मरूपेण, अधारयत् ; अमराः,—देवाः, यस्य शशिनं—चन्द्रं, मथ्नातीति शशिमत्—राहुः, तस्य शिरः हरतीति शशिमच्छिरोहरः इति स्तुत्यं—स्तवनीयं, नाम आहुः,—कथयन्ति । यश्च स्वयम् अन्धकानां—यादवानां, क्षयकरः,—क्षयः,—स्थानं,तस्य करः,—विधाता, द्वारकाख्यनिवासनिर्माता इत्यर्थः, ("क्षयो रोगान्तरे वेश्मकल्पान्तापचयेषु च" इति मेदिनी) हरपक्षे व्याख्या यथा,—ध्वस्तमनोभवेन—दग्धकामेन, येन पुरा—त्रिपुरविध्वंसकाले इत्यर्थः, बलिजित्कायः,—विष्णुशरीरम्, अस्त्रीकृतः,—अस्त्ररूपतया धनुषि संहित इत्यर्थः ; (विष्णुशरीरं शरं कृत्वा तेन त्रिपुरासुरो निपातितः इति पौराणिकी वार्त्ता) यद्वा,—पुरा स्त्रीकृतः,—नारीकृतः । (अत्र "मोहिनीरूपदिदृक्षुणा शिवेन प्रेषितो विष्णुः पुनर्मोहिनीरूपं दधार" इति पौराणिकी वार्त्ता) . यश्च उद्वृत्तः,—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र "येन ध्वस्त" इत्यादौ सभङ्गश्लेषः। "अन्धक" इत्यादौ अभङ्गः। अनयोश्चैकत्र सम्भवात् सभङ्गाभङ्गात्मको ग्रन्थगौरव-भयात् पृथङ्नोदाहृतः। (ब)

इह केचिदाहुः,—"सभङ्गश्लेष एव शब्दश्लेषविषयः। यत्रोदात्तादिस्वरभेदाद्भिन्नप्रयत्नोच्चार्य्यत्वेन भिन्नयोः शब्दयोर्जतुकाष्ठन्यायेन श्लेषः। अभङ्गस्तु अर्थश्लेष एव। यत्र स्वराभेदादभिन्नप्रयत्नोच्चार्य्यतया शब्दाभेदादर्थयोरेकवृन्तगतफलद्वयन्यायेन श्लेषः। यो हि यदाश्रितः, स तदलङ्कार एव; अलङ्कार्य्यालङ्करणभावस्य लोकवदाश्रयाश्रयिभावेनोपपत्तिः" इति; तदन्ये न मन्यन्ते। तथाहि,—अत्र ध्वनिगुणीभूतव्यङ्ग्यदोषगुणालङ्काराणां शब्दार्थगतत्वेन व्यवस्थितेरन्वयव्यतिरेकानुविधायित्वेन नियम इति। न च "अन्धकक्षय—" इत्यादौ शब्दाभेदः, "अर्थभेदेन शब्दभेदः" इति दर्शनात्। किञ्च, अत्र शब्दस्यैव मुख्यतया वैचित्र्यबोधोपायत्वेन कविप्रतिभयोट्टङ्कनात् शब्दालङ्कारत्वमेव; विसदृशशब्दद्वयस्य बन्धे च एवंविधस्य वैचित्र्याभावात्, वैचित्र्यस्यैव च अलङ्कारत्वात्। अर्थमुखप्रेक्षितया च अर्थालङ्कारत्वेऽनुप्रासादीनामपि रसादि-

---

उत्कर्षेण वर्त्तितः, भुजङ्गः,—पन्नगः, हारः,—हारस्थानीयः, वलयः—वलयस्थानीयश्च, यस्य तथाविधः, यश्च (गङ्गाञ्चेत्यत्र चकारो भिन्नक्रमः, तेन "यः" इत्यनेन अन्वयः) गङ्गाम् अधारयत—शिरसि दधार इत्यर्थः, यद्वा,—शरीरार्द्धेन गौरीं, शिरसि गङ्गाञ्च इत्यभिप्रायेण चकारः; अमराः,—देवाः, यस्य शिरः,—मस्तकं, भालस्थलमित्यर्थः, शशिमत्—चन्द्रवत्, तथा हर इति स्तुत्यं—स्तवार्हं नाम च आहुः, तथा यश्च स्वयम् अन्धकक्षयकरः,—अन्धकासुरहन्ता, अन्धकाख्यमसुरं निहतवानित्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

(ब) अत्रेति।—उदाहरणे इत्यर्थः। अनयोः,—सभङ्गाभङ्गयोः; तथा च एतेनैव सभङ्गाभङ्गतदुभयात्मकस्य त्रिविधश्लेषस्य उदाहृततया प्रत्येकं पृथग् उदाहरणमनावश्यकमिति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

परत्वेन अर्थमुखप्रेक्षितयाऽर्थालङ्कारत्वप्रसङ्गः। शब्दस्याभिन्नप्रयत्नोच्चार्य्यत्वेनार्थालङ्कारत्वे "प्रतिकूलतामुपगते हि विधौ" इत्यादौ शब्दभेदेऽपि अर्थालङ्कारत्वं तत्रापि प्रसज्यतीत्युभयत्रापि शब्दालङ्कारत्वमेव। यत्र तु शब्दपरिवर्त्तनेऽपि न श्लेषलखण्डना, (भ) तत्र,—

(भ) श्लेषस्तावच्छब्दालङ्कारोऽर्थालङ्कारश्च सम्भवति, तयोः परमतनिराकरणपूर्व्वकं भेदं निरूपयति,—इहेति। यत्रेति।—उदात्तादिस्वरभेदात्—उदात्तादीनाम्,—उच्चैःस्वरादीनाम्, [ अत्रादिपदेन अनुदात्त स्वरितयोः परिग्रहः, तदर्थश्च—अनुदात्तः,—नीचैःस्वरः, स्वरितः,—मध्यमस्वरः, इति ] स्वराणां भेदात्—पार्थक्यात्। भिन्नेन प्रयत्नेन—स्वरभेदजनितप्रयासेनेत्यर्थः, उच्चार्य्यत्वेन—उच्चारणीयत्वेन। भिन्नयोः,—समासभेदेन स्वरभेदात् भेदं गतयोः। जतुकाष्ठन्यायेन—यथा जतु काष्ठञ्च समवेतं प्रयत्नभेदेन जतुनः काष्ठं, काष्ठतश्च जतु पृथक् क्रियते,तथा स्वरभेदेन समवेतयोः शब्दयोः भेदोऽवगम्यते इत्यर्थः, पृथगुपलभ्यमानयोः अपि जतुकाष्ठयोर्योगे यथैकत्वप्रतिभासः, तथेहापि शब्दश्लेषः इति भावः। स्वराभेदात्—समासाभेदेनोदात्तादिस्वरभेदाभावात्। अभिन्नप्रयत्नोच्चार्य्यतया—एकप्रयत्नोच्चारणीयत्वेन। शब्दाभेदात्—शब्दैक्यात्। अर्थयोः,—द्वयोरित्यर्थः। एकवृन्तगतफलद्वयन्यायेनेति।—यथा एकस्मिन् वृन्ते फलद्वयं तिष्ठति, तथा एकप्रयत्नोच्चरिते एकस्मिन् शब्दे अर्थद्वयसमावेशेन अर्थश्लेषः इत्यर्थः। यदाश्रित इति।—यमाश्रित्य तिष्ठतीत्यर्थः। तदलङ्कारः,—तस्य आश्रयस्य अलङ्कारः इत्यर्थः। लोकवदिति।—यथा लोके यो यमलङ्कारं परिधत्ते, स तस्य एवालङ्कारः, तद्वदिहापीति भावः, यद्वा,—यथा लोके मौल्यादिगतं मुकुटादि मस्तकाद्यलङ्कारत्वेन व्यपदिश्यते, तथा काव्येऽपीति भावः। दूषयति,तदन्ये इति। तथा हि—तमेवार्थं जानीहीत्यर्थः। अत्र—अलङ्कारग्रन्थे इत्यर्थः। शब्दार्थगतत्वेन—अयं ध्वनिः, दोषः, गुणः, अलङ्कारः वा शब्दगतः अर्थगतो वा इत्यवमित्यर्थः। व्यवस्थितेः,—पर्य्यायान्तरपरिवृत्तिसहत्वासहत्वाभ्यां शब्दार्थगतत्वव्यवस्थायाः इत्यर्थ.। अन्वयेति।—तत्सत्त्वे तत्सत्ता अन्वयः, तदसत्त्वे तदसत्ता व्यतिरेकः, तौ अनुविदधाति—अनुसरतीति तथोक्ता तस्याः भावः तेन। नियमः,—निर्द्धारणमित्यर्थः ; यदि तस्य शब्दस्य सत्तायामेव तस्य ध्वन्यादेः सद्भावः, न तु तत्परिवृत्तौ, तदा ध्वन्यादीनां शब्दगतत्वम्, अन्यथा अर्थगतत्वमिति भावः। तस्मात् "अस्त्यकचयकुरः" इत्यादौ शब्दाभेदेऽपि नार्थश्लेषः, शब्दपरिवृत्त्यसहत्वात् शब्दानामेवात्र प्राधान्य

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तदपि न; न खलु क्यङादय आचारमात्रार्थाः, अपि तु सादृश्याचारार्थाः इति। तदेवं धर्म्मलोपे दशप्रकारा लुप्ता।

उपमानानुपादाने द्विधा वाक्यसमासयोः॥ ६७५॥ (श)

—प्रत्ययानां स्वातन्त्र्येणार्थबोधकत्वं नास्ति "प्रकृतिप्रत्ययौ सहार्थं ब्रूतः" इति नियमादित्यर्थः। कल्पबादाविति।—आदिपदेन वनेः परिग्रहः, "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" (५।३।६७ पा०) इत्यादिभिः सूत्रैर्विहितानां कल्पबादीनां प्रत्ययानां सद्भावस्थले, (कल्पबादेरित्यनवस्थमद्वितपकारनिर्देशः) कल्पबादिप्रत्ययस्थले लब्धा वनेर्लोपे इति वक्तुं न शक्यते, तत्र धर्म्मलोपे एव त्वया वाच्यं. तदयमेषां को भेद इति भावः। निश्चयाभावादिति।—सर्व्वे हि निपाता द्योतका एव, न तु वाचका इति केचित् वदन्ति, तन्मते इवादीनामपि साक्षात् औपम्यवाचकत्वेनाभिमतानां वाचकत्वे सन्देहः, का कथा प्रत्ययानामित्याशयः। तथा च इवादेः अव्ययतया उपमावाचकत्वम् असिद्धमिति तत्तुल्यस्य कल्पादेः सुतरामेव तदसिद्धमिति भावः। ननु "कमलमिव मुखम्" इत्यादौ उपमालक्षणाव्याप्तिभयेन इवादेः उपमावाचकत्वम् अवश्यमङ्गीकार्य्यम्, इत्यभिप्रायेणाह, वाचकत्वे वेति।—इवादितुल्यत्वेन कल्पादेः उपमावाचकत्वाङ्गीकारे वा इत्यर्थः, समुदितं—प्रकृतिप्रत्ययसमुदायः, वाचकं—प्रकृत्यर्थविशिष्टप्रत्ययार्थप्रतिपादकं, स्वस्वार्थबोधकौ—क्रमेण स्वार्थप्रतिपादकौ इत्यर्थः। वत्यादीति।—आदिपदेन कल्पादिपरिग्रहः। साम्यमेव—सादृश्यवाचकत्वेन तुल्यतैवेत्यर्थः। अनुशिष्यन्ते—विनीयन्ते। आचारार्थे इति।—"अनुशिष्यन्ते" इत्यनेनान्वयः। अपि तु—किन्त्वित्यर्थः। उपसंहरति, तदेवमिति।—वस्तुतस्तु—"चन्द्रायते शुक्लरुचापि हंसः" इत्यादौ साधारणधर्म्मोपादानेऽपि क्यङादियोगे उपमादर्शनात् आर्थ्यां उपमायास्तद्धितादित्रितयगतत्ववत् क्यजादिपञ्चकगतत्वेन विशेषो बोध्यः। एवञ्च अष्टप्रकाराया आर्थ्याः धर्म्मलोपालोपाभ्यां षोडशप्रकारत्वं बोध्यम्। क्यजादिपञ्चके धर्म्मलोपे उदाहरणं यथा,—"धीरः प्रीतिकरत्वेन पर्य्यङ्कीयति सद्मके। मित्रीयति परं प्रेम्णा भक्त्या देवायते नृणाम्॥ देवदर्शं जनैः साधुः प्रतीच्यत्वेन दृश्यते। कृपया विष्णुसञ्चारं नित्यं सञ्चरति क्षितौ॥" अत्र तृतीयान्तपदार्थानां क्यजाद्यर्थे सादृश्ये अभेदेनान्वयः।

(श) उपमानलुप्तामुपमामाह, उपमानेति।—उपमीयते अनेनेति उपमानं तस्य अनुपादाने—अप्रयोगे, वाक्यसमासयोः द्विधा—वाक्यगता समासगता चेति द्विप्रकारा, लुप्तोपमा इत्यनुषज्यः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उदाहरणम्,—

"तस्या मुखेन सदृशं रम्यं नास्ते न वा नयनतुल्यम् ।" (ष)

अत्र मुख-नयन-प्रतिनिधिवस्त्वन्तरयोर्गम्यमानत्वादुपमान-लोपः । अत्रैव च "मुखेन सदृशम्" इत्यत्र "मुखं यथेदम्", इति "नयनतुल्यम्" इत्यत्र "दृगिव" इति पाठे श्रौत्यपि सम्भवतीति, अनयोर्भेदयोः प्रत्येकं श्रौत्यार्थीत्वभेदेन चतुर्विधत्वसम्भवेऽपि प्राचीनानां रीत्या द्विप्रकारत्वमेवोक्तम् ।

**औपम्यवाचिनो लोपे समासे क्विपि च द्विधा॥६७६॥(स)**

क्रमेणोदाहरणम्,—

"वदनं मृगशावाक्ष्याः सुधाकरमनोहरम् ।"

"गर्दभति श्रुतिपरुषं व्यक्तं निनदन् महात्मनां पुरतः ।" (ह)

---

(ष) तस्या इति ।—तस्याः,—कान्तायाः, मुखेन सदृशं—तुल्यं, रम्यं—मनोरमं, न आस्ते, न वा नयनतुल्यं, रम्यम् आस्ते इति शेषः; अन्यथा धर्म्मोपमानलोपोदाहरणमिदं स्यात् ।

(स) इवादिलुप्तामाह, औपम्येति ।—औपम्यवाचिनः,—इवादेरित्यर्थः, लोपे समासे क्विपि च (यत्र काकापादिभिः आयलोपः क्रियते, तत्र पाणिनीयैः क्विप् अनुशिष्यते) प्रत्यये द्विधा भवति ।

(ह) वदनमिति ।—मृगशावाक्ष्याः,—मृगशावस्य अक्षिणी इव अक्षिणी यस्याः इति बहुव्रीहौ अक्षिपदलोपः, इवार्थस्य समासगम्यतया इवपदाप्रयोगः । चमत्कृतस्य शब्दानुपात्तत्वात् लोप इतीदं वक्ष्यमाणविलोपोदाहरणम् । वदनं सुधाकर इव मनोहरम् इति विग्रहे "उपमानानि सामान्यवचनैः" (२।१।५५ पा०) इति कर्म्मधारयसमासे इवेत्यस्य औपम्यवाचकस्य लोपे समासगता लुप्ता । एतदेव प्रकृतोदाहरणम् । क्विपि उदाहरति, गर्दभतीति ।—महात्मनां पुरतः,—अग्रतः, श्रुतिपरुषं —श्रोत्रकटु यथा स्यात् तथेत्यर्थः, निनदन् व्यक्तं—स्पष्टं, गर्दभति—गर्दभ इवाचरति, स इव आचरति इत्यर्थे "सर्व्वप्रातिपदिकेभ्यः क्विप् वा वक्तव्यः" इति 'गर्दभ' इत्युपमानपदात् आचारेऽर्थे क्विप्, अस्य च लोपादौपम्यवाचकलुप्तेयम् । यथा,—"रामभ्वत्" इत्यादौ क्विपो लोपेऽपि कर्त्तृत्वस्य वाच्यत्वं, तथा इहापि सादृश्यस्य इति सामान्यवचनगमनम् । अत्र श्रुतिपरुषनिनादः साधारणधर्म्मः, शब्दोपात्त एव ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र "गर्दभति" इत्यत्र औपम्यवाचिनः क्विपो लोपः। न चेह उपमेयस्यापि लोपः, "निनदन्" इत्यनेनैव निर्देशात्। (क)

**द्विधा समासे वाक्ये च लोपे धर्म्मोपमानयोः॥६७७॥(ख)**

"तस्या मुखेन" इत्यादौ "रम्यम्" इति स्थाने "लोके" इति पाठेऽनयोरुदाहरणम्।

**क्विप्समासगता द्वेधा धर्म्मेवादिविलोपने॥६७८॥(ग)**

उदाहरणम्,—"विधवति मुखाब्जमस्याः"। अत्र "विधवति" इति मनोहरत्व-क्विप्प्रत्यययोर्लोपः। केचित् तत्रापि प्रत्ययलोपमाहुः। "मुखाब्जम्" इति च समासगा। (घ)

**उपमेयस्य लोपे तु स्यादेका प्रत्यये क्यचि॥६७९॥ (ङ)**

यथा,—"अरातिविक्रमालोकविकस्वरविलोचनः।
कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति॥" (च)

---

(क) निर्देशादिति।—उपमेयस्य इत्यनेनान्वयः।

(ख) एवम् ५कलोपासुपमामुक्त्वा द्विलोपामाह, द्विधेति।—धर्म्मस्य उपमानस्य च उभयोः लोपे समासे वाक्ये च द्विधा भवति, लुप्तोपमा इत्यनुषज्यते, एवमग्रेऽपि।

(ग) प्रकारान्तरेण द्विलोपामाह, क्विपिति।—धर्म्मस्य इवादेश्च उभयोर्विलोपने क्विप्समासगतत्वेन द्विप्रकारा भवतीत्यर्थः।

(घ) विधवतीति।—अस्याः मुखाब्जं—वदनसरोजं, विधवति—विधुरिव—चन्द्र इवाचरतीति तथा, चन्द्रसदृशं सम्पद्यते इति यावत्। मुखाब्जमिति।—मुखम् अब्जमिवेति विग्रहे "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" (२।१।५६ पा०) इति औपम्यवाचकस्य इवादेः, तथा धर्म्मस्य मनोहरत्वसौरभादेश्च लोपः; एवं "शशाङ्कवदना" इत्यादिबहुव्रीहावप्येतदुदाहरणं बोध्यम्।

(ङ) उपमेयस्येति।—उपमीयते य इति उपमेयः तस्य।

(च) अरातीति।—अरातीनां—शत्रूणां, विक्रमस्य आलोकेन—दर्शनेन, विकस्वरे—विकासं गते, विस्फारिते इत्यर्थः, विलोचने यस्य तथाभूतः, तथा कृपाणेन—खड्गेन, उदग्रः,—भीषणः, दोर्दण्डः,—बाहुदण्डः यस्य तथोक्तः, सः सहस्रायुधीयति—सहस्रायुधमिव आत्मानमाचरतीत्यर्थः, इह [ "उपमानादाचारे" (३।१।१० पा०) इत्युपमानबोधकात् कर्म्मपदात् आचारार्थे क्यच्प्रत्ययः ] दुर्द्धर्षत्वादिरिहाचारः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र "सहस्रायुधमिव आत्मानमाचरति" इति वाक्ये उपमेयस्यात्मनो लोपः। न चेह औपम्यवाचकलोपः, उक्तादेव न्यायात्। अत्र केचिदाहुः,—"सहस्रायुधेन सह वर्त्तते इति ससहस्रायुधः, स इवाचरति इति वाक्यात् 'ससहस्रायुधीयति' इति पदसिद्धौ विशेष्यस्य शब्दानुपात्तत्वादिहोपमेयलोपः" इति तन्न विचारसहं, कर्त्तरि क्यचोऽनुशासनविरुद्धत्वात्। (छ)

धर्म्मोपमेयलोपेऽन्या ॥ ६८० ॥

यथा,—

"यशसि प्रसरति भवतः क्षीरोदीयन्ति सागराः सर्वे"।

अत्र क्षीरोदमिवात्मानमाचरन्तीत्युपमेय आत्मा साधारणधर्म्मः शुक्लता च लुप्तौ।

त्रिलोपे च समासगा ॥६८१॥ (ज)

यथा,—"राजते मृगलोचना।"

अत्र मृगस्य लोचने इव चञ्चले लोचने यस्या इति समासे उपमाप्रतिपादकसाधारणधर्म्मोपमानानां लोपः। (झ)

---

(छ) सहस्रायुधमिवात्मानमाचरति इति आत्मन्युपमेयता। यदि च अत्र "सः" इति साक्षात् तच्छब्दपरिगृहीते कर्त्तर्य्येवोपमेयता, तथा सत्यपि कर्म्मतयोपमेयस्यात्मनः, कर्म्मतयैवेहोपादानं सम्मतम् इति उक्तमेवोदाहरणं युज्यते। उपमेयस्यात्मन इति।—कर्म्मक्यचोर्योगे कर्म्मण एवोपमेयत्वं, तस्याप्रयोगे तथेति भावः। उक्तादेवेति।—क्वनादेः सादृश्यबोधकत्वव्यवस्थापनरूपात् कथितादित्यर्थः। न्यायात्—युक्तेः। कर्त्तरीति।—अत्र "उपमानात्—" (३।-१।१० पा०) इति सूत्रेण कर्म्मार्थे एव क्यचो निर्देशात् इत्याशयः, अनुशासनविरुद्धात्—व्याकरणशास्त्रविरोधात्, आधारकर्म्मणोरेव तद्विधानादिति भावः।

(ज) त्रिलोपे इति।—त्रिलोपे—धर्मोपमानेवादिलोपे इत्यर्थः।

(झ) अत्रेति।—मृगलोचना इत्यत्र, "सप्तम्युपमानपूर्व्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च" इति वार्त्तिकेन मृगलोचने इव लोचने यस्या इति विग्रहे बहुव्रीहिसमासे लोचने इत्युत्तरपदलोपः, तथा औपम्यवाचकस्य इवशब्दस्य, चञ्चलत्वरूपस्य साधारण-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तेनोपमाया भेदाः स्युः सप्तविंशतिसङ्ख्यकाः॥६८२॥(ञ)

पूर्णा षड्विधा लुप्ता च एकविंशतिविधेति मिलित्वा सप्तविंशतिप्रकारोपमा । एषु च उपमाभेदेषु मध्ये अलुप्तसाधारणधर्मेषु भेदेषु विशेषः प्रतिपाद्यते, (ट)—

एकरूपः क्वचित् क्वापि भिन्नः साधारणो गुणः ।
भिन्ने बिम्बानुबिम्बत्वं शब्दमात्रेण वा भिदा॥६८३॥(ठ)

---

धर्म्मस्य च लोपः । तथा च,—उक्तवितयलोपात् विलोपे समासगतेयमुपमा । यदि च इह मृगपदासमभिव्याहृतं लोचनपदमेवोपमानबोधकं, तदपि अवयवलोपेतसमुदायव्यपदेशवशात्, मृगलोचनेति समुदायस्योपमानपूर्व्वपदता बोध्या ; "अनेकमन्यपदार्थे"( २।२।२४ पा० ) इति तुल्याधिकरणे एव स्थले बहुव्रीहिनिर्देशात्, स्थलविशेषे विरुद्धाधिकरणानामपि पदानां तत्समासविधानाय, उत्तरपदलोपाय, क्वचित् केवलमुत्तरपदलोपविधानाय च शास्त्रे पुनः "सप्तमी—" इत्यादिवार्त्तिकसमावेशः । तत्र सप्तमीपूर्व्वपदस्योदाहरणं यथा,—उरसिस्थं लोम यस्य असौ उरसिलोमा, इह "अमूर्द्धमस्तकात्—" ( ६।३।१२पा० ) इति सप्तम्या अलुक् ; एतयोः समानाधिकरणबहुव्रीहिसम्भवेऽपि उत्तरपदलोपार्थमारम्भः । इह मृगपदस्य तल्लोचने लक्षणा इति केषाञ्चित् सिद्धान्ते तु नोदाहरणमेतत् इति बोध्यम् । समासे इति ।—अत्र लोचनपदस्यैव समासे लोपो विहितः, अन्ययोस्तु गम्यमानत्वम् इति ज्ञेयम् ।

(ञ) तेनेति ।—उक्तप्रकारप्रपञ्चेनेत्यर्थः ।

(ट) एकविंशतिविधेति ।—धर्म्मलोपे दश, उपमानलोपे द्वे, औपम्यवाचिलोपे द्वे, धर्म्मवादिलोपे च द्वे, उपमेयलोपे धर्म्मोपमेयलोपे धर्म्मवाद्युपमानलोपे चैकैकेत्येकविंशतिविधेत्यर्थः ।

(ठ) एकरूप इति ।—जातिवन्नानाव्यक्तिषु एक एव गुणादिः इत्युपाधिशक्तिकादिमतेनेदम् ; यद्वा,—एकजातीय इत्यर्थः, एवञ्च क्वचिदेकजातीयत्वेन, क्वचित् सादृश्यत्वेन एकोपचारादुभयवृत्तित्वं विवक्षणीयम् ; गुणः,—साधर्म्यं, भिन्ने—भिन्नसाधारणधर्म्मे, बिम्बानुबिम्बत्वं—बिम्बस्य—सादृश्यस्य, अनुबिम्बत्वं—प्रणिधानेन गम्यसाम्यत्वम् । एकधर्म्मस्यैकशब्देनोपादानं प्रायेण क्वचिच्छब्देनाप्युपादानं सम्भवतीत्याह, शब्दमात्रेण वेति ।—भिदा—भेदः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र एकरूपे यथा उदाहृतम्,—"मधुरः सुधावदधरः" इत्यादि । बिम्बप्रतिबिम्बत्वे यथा, (ड)—

"भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव ॥" (ढ)

अत्र "श्मश्रुलैः" इत्यस्य "सरघाव्याप्तैः" इति दृष्टान्तवत्-प्रतिबिम्बनम् । शब्दमात्रेण भिन्नत्वे यथा, (ण)—

"स्मेरं विधाय नयनं विकसितमिव नीलमुत्पलं मयि सा ।
कथयामास कृशाङ्गी मनोगतं निखिलमाकूतम् ॥" (त)

अत्र एके एव स्मेरत्वविकसितत्वे प्रतिवस्तूपमावच्छब्दभेदेन निर्दिष्टे । (थ)

---

(ड) क्रमेणोदाहरति, मधुर इति ।—एतद्गुणैकत्वे । क्रियैकत्वे यथा,—"स्त्रीव गच्छति षण्ढोऽयं वक्त्येषा स्त्री पुमानिव" इति ।

(ढ) भल्लेति ।—रघोर्दिग्विजयवर्णनमिदम् । सः,—रघुः, भल्लेन—अस्त्रविशेषेण, अपवर्जितैः,—छिन्नैः, श्मश्रुलैः,—श्मश्रुयुक्तैः, तेषां—यवनानां, शिरोभिः, छन्नमस्तकैरित्यर्थः, सरघाभिः,—मधुमक्षिकाभिः, व्याप्तैः क्षौद्रपटलैरिव—मधुचक्रैरिव, "मौचाक" इति प्रसिद्धैरित्यर्थः, महीं—पृथ्वीं, तस्तार—छादयामास । रघुवंशस्येदं पद्यम् ।

(ण) अत्र श्मश्रुलैरित्यस्येति ।—दृष्टान्तालङ्कारे यथा वाक्यार्थयोः सादृश्यम् इवाद्यभावात् प्रणिधानगम्यं, तथाऽत्रापि श्मश्रुसरघयोः । अत्र श्यामत्वविशेषः सादृश्यहेतुः । एवञ्च "सादृश्यहेतू गुणक्रिये" इत्यस्योपलक्षणतया द्रव्यस्यापि साधारणधर्मत्वमवगन्तव्यम् ।

(त) स्मेरमिति ।—कृशाङ्गी—क्षीणाङ्गी, सा—रमणी, विकसितं—प्रस्फुटितं, नीलम् उत्पलं—कमलमिव, स्मेरं नयनं, न तु नयने, वामानां तथैव स्वभावात् ; मयि विधाय—अर्पयित्वा, ("निधाय" इति पाठान्तरन्तु मनोरमम्) निखिलं—समस्तं, मनोगतम् आकूतम्—अभिप्रेतं, चेष्टितमर्थमिति यावत्, कथयामास, सखीं प्रति इति शेषः । वामायाः स्वभाव एवायं यत्, वल्लभं तिर्य्यक् पश्यन्ती उपसखि कथमपि स्वाभिप्रायमुद्घाटयति इति । अत्रार्य्या छन्दः ।

(थ) एक एवेति ।—सङ्ख्यार्थादेकशब्दात् द्विवचनासम्भवाद् "एके" पाठो न युक्तः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**एकदेशविवर्त्तिन्युपमा वाच्यत्वगम्यते।**
**भवेतां यत्र साम्यस्य ॥ ६८४ ॥ (द)**

यथा,—"नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः।
पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव ॥" (ध)

अत्र उत्पलादीनां नेत्रादीनां सादृश्यं वाच्यं, सरःश्रीणां चाङ्गनासादृश्यं गम्यम्। (न)

---

किन्तु "अत्रैकमेव प्रफुल्लत्वं प्रतिवस्तूपमावद् विभिन्नाभ्यां स्मेरविकसितशब्दाभ्यां निर्दिष्टम्" इति पाठो बोद्धव्यः। एकक्रियायाः शब्दभेदेनोपादाने यथा,—"प्रकाशते मुखं तस्याश्चन्द्रमा दीप्यते यथा"। नन्वत्र वाक्यैक्याभावात् कथमुपमा? इति चेत्, न; यथा,—"अमावास्यायां श्राद्धं कुर्यात्, रात्रौ श्राद्धं न कुर्यात्" इत्यत्र सम्भेदेनान्यतरवैयर्थ्यम् इति न्यायेन रात्रीतरत्वामावास्यायां श्राद्धं कुर्यात् इत्येकवाक्यत्वं, तथात्राप्येकवाक्यत्वस्वीकारात् इति सङ्क्षेपः।

(द) प्राचीनैरस्वीकृतामपि प्रमाणसिद्धाम् एकदेशविवर्त्तिनीमुपमामाह, एकदेशेति।—यत्र—वाक्ये, साम्यस्य—सादृश्यस्य, वाच्यत्वगम्यते—वाच्यत्वं गम्यत्वञ्च इत्यर्थः, भवेतां, कस्यचित् साम्यं वाच्यं, कस्यचित् गम्यमित्याशयः, तत्र एकदेशविवर्त्तिनी उपमा; एकदेशे स्थितत्वात् अस्या एकदेशविवर्त्तिनीति संज्ञा; इयञ्चैकदेशविवर्त्तिरूपकवत् साङ्गस्याङ्गिनः सादृश्ये एव सम्भवति इति।

(ध) नेत्रैरिवेति।—अङ्गना इव सरःश्रियः,—सरसीशोभाः, पदे पदे—प्रतिवस्तु, विभान्ति स्म—राजन्ते स्म। कैः हेतुभिरित्याह, नेत्रैरिति।—नेत्रैरिव उत्पलैः,—नेत्रसदृशैः कुवलयैः, तथा मुखैरिव पद्मैः,—वदनोपमैः सरोजैः, तथा स्तनैरिव चक्रवाकैः,—वक्षोजसदृशैः कोकपक्षिभिश्चेत्यर्थः।

(न) अत्रेति।—उक्तोदाहरणे इत्यर्थः। अत्र नेत्रादित्रयमुपमानस्य उत्पलादित्रयमुपमेयस्याङ्गम्। यद्यपि अत्र "प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम्। निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते॥" इति वक्ष्यमाणदिशा नेत्राणामुपमानत्वे प्रतीपमिति वक्तुं युक्तं, तथाऽपि अङ्गनासादृश्येन सरःश्रियौ वर्णयितुं प्रवृत्तेन कविना नेत्राणामुपमानत्वम् उत्पलानां चोपमेयत्वं वर्णितम्; युक्तञ्च तत्, अन्यथा प्रकृतोपघातः स्यात्। न चाङ्गनानामुपमानत्वं, सरःश्रियां चोपमेयत्वमपि कल्पितमिति वाच्यं, तत्र नियामकानुपलब्धेः, अतस्तथा वर्णनेनोपमाक्षतिरिति समाधा प्रतिभासते।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कथिता रशनोपमा ।
यथोर्द्ध्वमुपमेयस्य यदि स्यादुपमानता ॥ ६८५ ॥ (प)

यथा,—"चन्द्रायते शुक्लरुचाऽपि हंसो-
हंसायते चारुगतेन कान्ता ।
कान्तायते स्पर्शसुखेन वारि
वारीयते स्वच्छतया विहायः ॥" (फ)

मालोपमा यदेकस्योपमानं बहु दृश्यते ॥ ६८६ ॥ (ब)

---

(प) रशनोपमामाह, कथितेति ।—यथोर्द्धम्—उत्तरोत्तरम्, उपमेयस्य यदि उपमानता स्यात्, पूर्वोपमायां यदुपमेयम्, उत्तरोपमायां तस्योपमानता यदि स्यात् इत्यर्थः, यथा काञ्च्यां पूर्व्वत्वं प्राप्ताया: क्षुद्रघण्टिकाया: अन्यग्रथनावसरे परत्वं, तथाऽत्र पूर्व्वपूर्व्वोपमेयस्योपमानत्वार्थं परपरावसरः इत्याशयः, तदा रशनोपमा कथिता, रशना—काञ्ची, तत्सदृशग्रथनात् अस्यां इयं संज्ञेति भावः ।

(फ) साधारणधर्म्मस्याभेदे भेदे च द्विविधायामस्यां प्रथमं द्वितीयामुदाहरति, चन्द्रायते इति ।—हंसः शुक्लरुचा—शुभ्रकान्त्या, (अपिना सौम्यभावेनेत्यस्य ग्रहणम्) चन्द्रायते—चन्द्र इवाचरतीत्यर्थः, कान्ता चारुगतेन—मनोज्ञगमनेन, [अत्र भावे क्तः] हंसायते—हंस इवाचरति, वारि—जलं, स्पर्शसुखेन—सुखसम्पादकेन स्पर्शेन, कान्तायते—कान्तेवाचरति, विहायः,—आकाशं ("आकाशविहायसी" इत्यमरः) स्वच्छतया—नैर्म्मल्येन, वारीयते—वारीवाचरति इत्यर्थः । ["कर्त्तुः क्यङ् सलोपश्च" (३।१।११ पा०) इति सूत्रेण क्यङ्] । इहेन्द्रवज्रा छन्दः । आद्या यथा,—"मही-भृतो वदान्यस्य भारतीवामला मतिः । चेष्टा मतिरिव स्वच्छा चेष्टेव गुणसन्ततिः ॥" अत्र स्वच्छत्वमेकमेव साधारणो धर्म्मः ।

(ब) मालोपमामाह, मालोपमेति ।—एकस्य—उपमेयस्येत्यर्थः, यत् बहु—अनेकवारम्, उपमानं दृश्यते, सा मालोपमा । यथा काचित् माला तुल्यजातीयैः काचिद्वा भिन्नजातीयैः प्रसूनैर्ग्रथ्यते, इयमपि तथा तुल्यजातीयैर्वा भिन्नजातीयैः अनेकैरुपमानैः इति बोध्यम् । बहु इति एकाधिकपरमपि, तेन,—"तां हंसमालाः शरदीव गङ्गां महौषधीं नक्तमिवात्मभासः । स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्याः ॥" इत्यादौ उपमाद्वयेऽपि मालोपमा भवतीति बोध्यम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"वारिजेनेव सरसी शशिनेव निशीथिनी।
यौवनेनेव वनिता नयेन श्रीर्मनोहरा॥" (भ)

क्वचिदुपमानोपमेययोर्द्वयोरपि प्रकृतत्वं (म) दृश्यते,—

"हंसश्चन्द्र इवाभाति जलं व्योमतलं यथा।
विमलाः कुमुदानीव तारकाः शरदागमे॥" (य)

"अस्य राज्ञो गृहे भान्ति भूपानीता विभूतयः।
पुरन्दरस्य भवने कल्पवृक्षभवा इव॥" (र)

---

(भ) इयमपि द्विधा; तत्राद्यामाह, वारिजेनेति।—वारिजेन—पद्मेन, सरसी—सरोवरम्, इव शशिना—चन्द्रेण, निशीथिनी—रात्रिः इव, ("निशा निशीथिनी रात्रिः" इत्यमरः) यौवनेन—तारुण्येन, वनिता—कान्ता इव नयेन—नीत्या, नीतिप्रयोगेण इत्यर्थः, श्रीः,—लक्ष्मीः, सम्पदित्यर्थः, मनोहरा—मनोज्ञा, उत्कर्षशालिनीत्यर्थः, भवतीति शेषः। अत्र मनोहरत्वमेकमेव साहश्यहेतुः। द्वितीया यथा,—"ज्योत्स्नेव नयनानन्दः सुधेव मदकारणम्। प्रभुनेव समाक्रष्टसर्व्वलोका नितम्बिनी॥" अत्र नेत्रानन्दजननादयः विभिन्नधर्मा एव साहश्यानां हेतवः।

(म) उपमेयस्य प्रकृतत्वमुपमानस्याप्रकृतत्वं प्रायिकमित्यभिप्रायेणाह, क्वचिदिति।—प्रकृतत्व—वर्णनीयस्य उत्कर्षाधायकत्वेनाकाङ्क्षितत्वम्।

(य) हंस इति।—शरदागमे—शरत्कालप्रवृत्तौ, हंसः चन्द्र इव, जलं व्योमतलं यथा—नभोमण्डलमिव, तारकाः,—नक्षत्राणि, विमलाः,—शुभ्राः, विशदा इत्यर्थः, कुमुदानि—करवाणीव, आभाति—राजते। अत्र हंसादय इव चन्द्रादयोऽपि वर्णनीयशरत्कालस्य उत्कर्षाधायकत्वेनाकाङ्क्षिताः। ["विमलाः" इति पाठो न रमणीयः, भिन्नलिङ्गतया कुमुदानीत्युपमानान्वयायोग्यत्वात्; तस्मात् "लसन्ति" इति पाठो द्रष्टव्यः]।

(र) प्राचीनसम्मतान् आक्षेपोपमादीनुपमाप्रकारान् वैचित्र्यातिशयानाधायकत्वेनोपेक्षमाण आह, अस्य राज्ञ इति।—अस्य—प्रस्तुतस्य, वर्णनीयस्य वा, राज्ञः गृहे, पुरन्दरस्य—इन्द्रस्य, भवने कल्पवृक्षभवाः,—कल्पवृक्षोत्पन्नाः, विभूतयः इति शेषः, इव भूपानीताः,—भूपेभ्यः,—विजितनृपेभ्यः, आनीताः,—गृहीता इत्यर्थः, विभूतयः,—सम्पदः, भान्ति—विराजन्ते। ["भूपानीताः" इत्यत्र "भूपानां ताः" इति पाठे,—ताः,—बहुमूल्यत्वेन प्रसिद्धाः इत्यर्थः]।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्रोपमेयभूतविभूतिभिः "कल्पवृक्षभवा इव" इत्युपमानभूता विभूतय आक्षिप्यन्त इति आक्षेपोपमा । अत्रैव "गृहे" इत्यस्य "भवने" इत्यनेन प्रतिनिर्देशात् प्रतिनिर्देश्योपमा इत्यादयश्च न लक्षिताः । एवंविधवैचित्र्यस्य सहस्रधा सन्दर्शनात् । (ल)

**उपमानोपमेयत्वमेकस्यैव त्वनन्वयः ॥ ६८७ ॥ (व)**

अर्थादेकवाक्ये । (श) यथा,—

"राजीवमिव राजीवं जलं जलमिवाजनि ।
चन्द्रश्चन्द्र इवातन्द्रः शरत्समुदयोद्यमे ॥" (ष)

अत्र राजीवादीनामनन्यसदृशत्वप्रतिपादनार्थमुपमानोपमेयभावो वैवक्षिकः । "राजीवमिव पाथोजम्" इति चास्य लाटानुप्रासाद्विविक्तो विषयः । किन्तु अत्रोचितत्वादेकशब्दप्रयोग एव श्रेयान् । (स) तदुक्तम्,—

---

(ल) आक्षिप्यन्ते इति ।—"कल्पवृक्षभवाः" इति विशेषणेनोपस्थिता विभूतय एवाक्षिप्यन्ते इत्यर्थः । एवम्विधेति—यथाकथञ्चिद्वैचित्र्यविशेषाणां परिच्छेत्तुमशक्यतया तत्प्रयोजकप्रकाराणामपि परिच्छेदो न सम्भवति इति भावः ।

(व) अनन्वयमाह, उपमानेति ।—एकस्यैव—वस्तुन इत्यर्थः, उपमानोपमेयत्वम्—उपमानोपमेयभावः, अनन्वयः,—न वर्त्तते अन्वयः,—उपमानान्तरेण सम्बन्धः यस्मिन् असौ अनन्वयः । स प्रथमं पूर्णलुप्तभेदेन द्विविधः ; तत्र पूर्णस्य उपमावत् षट्प्रकारत्वं, लुप्तभेदे धर्म्मलुप्तस्य पञ्च भेदाः, वाचकधर्म्मोपमादीनां लोपात्, उदाहरणानि स्वयमुन्नेयानि इति सङ्क्षेपः ।

(श) नन्वेतद्रशनोपमायामुपमेयोपमायां चातिव्याप्तम्, अत आह, अर्थादिति ।—पारिशेष्यादित्यर्थः । रशनोपमायां "यथोर्द्धम्—"इत्यनेन, उपमेयोपमायां "पर्य्यायेण—" इत्यनेनानेकवाक्यलाभादेकवाक्ये एवास्य विषय इति भावः । ननूपमेयोपमायां "द्वयोः" इत्युपादानात् कथमतिव्याप्तिः ? इति चेत्, न ; तत्र प्रत्येकपदार्थस्यापि पर्य्यायेणोपमानोपमेयसम्भवात् ।

(ष) राजीवमिति ।—अतन्द्रः,—निर्म्मलः इत्यर्थः, अन्यत् स्पष्टम् ।

(स) ननूपमानोपमेयभावो भेदे एव सम्भवति, कथमेकस्यैव सः ? इत्यत आह,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"अनन्वये च शब्दैक्यमौचित्यादानुषङ्गिकम्।

अस्मिंस्तु लाटानुप्रासे साक्षादेव प्रयोजकम्॥" इति। (ङ)

**पर्य्यायेण द्वयोरेतदुपमेयोपमा मता॥ ६८८॥ (क)**

एतत्—उपमानोपमेयत्वम्। अर्थाद्वाक्यद्वये यथा,—

"कमलेव मतिर्मतिरिव कमला

तनुरिव विभा विभेव तनुः।

धरणीव धृतिर्धृतिरिव धरणी

सततं विभाति तव यस्य वत॥" (ख)

---

अत्र राजीवादीनामिति।—वैवक्षिकः,—आरोप्य विवक्षितः। ननु लाटानुप्रासविषय-विनिर्मोकेण अस्य विषयो न सम्भवति, इति तद्बाधकोऽयमेव स्यात्? इत्यत आह,—राजीवमिति। विविक्तो विषय इति।—तथा चायं सम्भवद्विषयान्तरत्वान्न बाधकः इति भावः। उचितत्वात्—उपमानोपमेयाभेदस्य झटिति प्रतीत्युपयुक्तत्वात्। श्रेयान्—अतिप्रशस्तः, न तु नियतः।

(ङ) अनन्वये इति।—अनन्वये—तदाख्ये अर्थालङ्कारे, औचित्यात्—प्राशस्त्यात् कारणात्, शब्दयोः,—उपमानोपमेयभूतयोरित्यर्थः, ऐक्यम् आनुषङ्गिकं—प्रसङ्गानुप्रसक्तम्, अनियतमित्यर्थः, अस्मिन् पुनर्लाटानुप्रासाख्ये शब्दालङ्कारे, साक्षादेव—स्वत एव, अत्र शब्दैक्यमिति पूर्व्वतोऽनुवर्त्तनीयं, प्रयोजकं—वैचित्र्याधायकम्। अयं भावः,—तत्र शब्दयोरैक्यं झटित्युपमानोपमेययोरैक्यावगमायैवेति न नियतम्, अत्र तु अन्यथाकरणेऽस्यासद्भाव एवेति नियतमिति विशेषः।

(क) उपमेयोपमामाह, पर्य्यायेणेति।—पर्य्यायेण—क्रमेण, "मुखमिव कमलम्" इत्यादौ युगपदेव द्वयोरुपमानोपमेयत्वम् इति तद्वारणाय "पर्य्यायेण" इत्युक्तम्। द्वयोः,—उपमानोपमेययोः, रशनोपमायामेकस्यैव क्रमेणोपमानोपमेय-भावः, इति तद्वारणाय "द्वयोः" इति पदं बोध्यम्। एतत्—उपमेयोपमानत्वम् इत्यर्थः, उपमेयोपमा मता। अत्र सादृश्यद्वित्वभेदे इत्यपि बोध्यम्; तेन "पल्लव-मिवारुणं करतलं करतलमिव कोमलं पल्लवम्" इत्युपमाद्वयव्यवच्छेदः।

(ख) कमलेति।—कमला—लक्ष्मीः, सम्पदित्यर्थः, सैव मतिः,—बुद्धिः, प्रभूता इति शेषः, प्रभूतधनवती यादृशी बुद्धिः भवितुमर्हति, तादृशीति भावः, मति-रिव कमला, प्रभूता इति शेषः; अनन्यसाधारणबुद्ध्यनुरूपा अनन्यसाधारणसम्प-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्रास्य राज्ञः श्रीवृद्ध्यादिसदृशं नान्यदस्तीत्यभिप्रायः । (ग)

**सदृशानुभवाद् वस्तुस्मृतिः स्मरणमुच्यते ॥ ६८६ ॥**(घ)

यथा,—

"अरविन्दमिदं वीक्ष्य खेलत्खञ्जनमञ्जुलम् ।
स्मरामि वदनं तस्याश्चारु चञ्चललोचनम् ॥" (ङ)

---

दित्यर्थः, तनुः,—शरीरमिव, शारीरसौष्ठवमिवेत्यर्थः, विभा—कान्तिः, समुज्ज्वलेति शेषः, अवयवसङ्घटनसौष्ठवमिव, सुन्दरकान्तिरित्यर्थः, विभेव तनुः, समुज्ज्वला इति शेषः, लावण्यानुरूपी देहविन्यास इत्यर्थः; धरणी—पृथ्वी, सैव धृतिः,—धैर्य्यं, दृढा इति शेषः, धृतिरिव धरणी—पृथ्वी, राज्यमिति यावत्, दृढा इति शेषः, अविचलं धैर्य्यमिव अनपायिराज्यमित्यर्थः, वत—हर्षे, यस्य तव सततं विभाति, तस्य सद्गुणानां विषये किमन्यद्वक्तव्यमिति शेषः । गीतिश्छन्दः ।

(ग) अस्यां वैचित्र्यं दर्शयति,—अस्य राज्ञ इति ।

(घ) स्मरणमाह, सदृशेति ।—सदृशस्य—तुल्यवस्तुनः इत्यर्थः, (सम्बन्धिज्ञानादिजन्यस्मृतिवारणाय सदृशेति पदं, तेन "भवदभिमतवस्तून्याकिरन्त्याः समन्तात् सरसिजदलतल्पं मर्म्मरं कल्पयन्त्याः । हतकरुण ! वयस्या जीवनोपायमस्याः स्मरणमविरलं ते हन्त सम्पादयन्ति ॥" इत्यादौ सम्बन्धिज्ञानजन्यस्मरणस्य नालङ्कारत्वम्) अनुभवात्—दर्शनादिजन्यज्ञानात्, वस्तुनः,—अन्यस्य इति भावः, स्मृतिः,—अनुभवः, स्मरणम् उच्यते । सदृशानुभवस्य स्मृतिं प्रति संस्कारोद्बोधकत्वेन कारणत्वं, संस्कारस्तु वस्त्वनुभवादुत्पन्नः । यथा—"दिव्यानामपि कृतविस्मयां पुरस्तादम्भसः स्फुरदरविन्दचारुहस्ताम् । उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्तीमस्मार्षीज्जलनिधिमन्थनस्य शौरिः ॥" इति । यदि तु अत्र श्रियमिवेत्युत्प्रेक्षायाः प्राधान्ये स्मृतेरतथात्वं, तर्हि "निम्ननाभिकुहरेषु यदम्भः प्लावितं चलदृशां लहरीभिः । तद्भवैः कुहुरुतैः सुरनार्य्यः स्मारिताः सुरतकण्ठरुतानाम् ॥" इति ।

(ङ) उदाहरति, अरविन्दमिति ।—खेलता—उपरि विहरता, खञ्जनेन—तदाख्यपक्षिणा, मञ्जुलं—मनोहरम्, इदं—पुरो दृश्यमानम्, अरविन्दं—कमलं, वीक्ष्य—दृष्ट्वा, तस्याः,—कान्ताया इत्यर्थः, चञ्चले—विलोले, लोचने—नेत्रे, यत्र तादृशं चारु—सुन्दरं, वदनं—मुखं, स्मरामि । कमलोपरि खञ्जनं दृष्ट्वा मुखकमलोपरि नेत्रखञ्जनस्मरणमिति भावः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"मयि सकपटम्" इत्यादौ च स्मृतेः सादृश्यानुभवं विनोत्थापितत्वान्नायमलङ्कारः। राघवानन्दमहापात्रास्तु वैसादृश्यात् स्मृतिमपि स्मरणालङ्कारमिच्छन्ति। तत्रोदाहरणं तेषामेव (च) यथा,—

"शिरीषमृद्वी गिरिषु प्रपेदे
यदा यदा दुःखशतानि सीता।
तदा तदाऽस्याः सदनेषु सौख्य-
लक्षाणि दध्यौ गलदश्रु रामः॥" (छ)

## रूपकं रूपितारोपात् विषये निरपह्नवे ॥६९०॥ (ज)

(च) चिन्ताजन्यस्मृतेर्नालङ्कारत्वमित्याह, मयीति।—स्मृत्याख्यव्यभिचारिभावस्योदाहरणमिदम्; व्याख्यातञ्च तत्रैव। मतान्तरेण तदेवाह, राघवेति।—वैसादृश्यात्—विसदृशस्य वस्तुनः अनुभवात्, विरुद्धानुभवादित्यर्थः। तेषां—राघवानन्दमहापात्राणाम् इत्यर्थः।

(छ) शिरीषेति।—शिरीषमृद्वी—शिरीषकुसुमसुकुमाराङ्गी, सीता गिरिषु—पर्व्वतेषु, यदा यदा दुःखशतानि—क्लेशसमूहमित्यर्थः, प्रपेदे—प्राप, रामः तदा तदा सदनेषु—गृहेषु, प्रासादेष्विति यावत्, अस्याः,—सीतायाः, सौख्यलक्षाणि—सुखसन्तानान्, गलदश्रु यथा तथा दध्यौ—चिन्तयामास, सस्मारेत्यर्थः। अत्र विसदृशस्य दुःखशतस्य अनुभवात् सुखसन्तानस्मरणं वैपरीत्यसम्बन्धेन सम्बन्धिनः ज्ञानं संस्कारोद्बोधकम् इति ज्ञेयम्।

(ज) रूपकमाह, रूपकमिति।—निरपह्नवे—प्रकृतगोपनम् अपह्नवः तद्रहिते, विषये—उपमेये इति यावत्, विषये इत्यस्य वाच्ये इति विशेषणं बोध्यम्; तेन "लतामूले लीनो हरिणपरिहीनो हिमकरः स्वयं हाराकारा गलति जलधारा कुवलयात्। धुनीते बन्धूकं तिलकुसुमजन्मा हि पवनो वहिर्द्वारे पुष्पं परिणमति कस्यापि कृतिनः॥" इत्यादौ निगीर्णविषये मुखादौ निष्कलङ्कचन्द्राद्युपमानतादात्म्यारोपरूपातिशयोक्तौ नातिव्याप्तिः। रूपितस्य—उपमानस्य, आरोपात्—तादात्म्याध्यासात्, रूपकं—रूपकालङ्कारः; अध्यासश्च अवाहार्य्यः, न तु वास्तवः। अत्र "रूपितारोपात्" इति पञ्चम्यन्तपाठः प्रामादिकः, अर्थासङ्गतेः; प्रथमान्तपाठस्तु रमणीयः, उपमेये उपमानाभेदारोपस्यैव रूपकत्वाङ्गीकारात्। तदुक्तं चण्डीदासेन

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"रूपित" इति परिणामाद् व्यवच्छेदः। एतच्च (झ) तत्प्रस्तावे विवेचयिष्यामः। "निरपह्नवे" इत्यपह्नुतिव्यवच्छेदार्थम्।

**तत् परम्परितं साङ्गं निरङ्गमिति च त्रिधा॥६९१॥(ञ)**

तत्—रूपकम्। तत्र,—

**यत्र कस्यचिदारोपः परारोपणकारणम्।**
**तत् परम्परितं श्लिष्टाश्लिष्टशब्दनिबन्धनम्।**
**प्रत्येकं केवलं मालारूपञ्चेति चतुर्विधम् ॥६९२॥ (ट)**

---

रूपकप्रकरणे,—"अलङ्कारस्त्वाहार्य्यस्तादात्म्यारोप इत्यवधेयम्" इति। न च "अतिसाम्यादपह्नुतभेदयोरभेदो रूपकम्" इति काव्यप्रकाशदर्शनात् तदानीं भेदप्रतीतेरभावात् कथमाहार्य्यत्वं, बाधकालीनेच्छाजन्यज्ञानस्यैवाहार्य्यत्वाङ्गीकारादिति वाच्यं, शाब्दस्य भेदानुभवस्य तदानीमसत्त्वेऽपि आनुमानिकस्य मानसस्य भेदप्रत्ययस्य सत्त्वात्। ननु "गौर्वाहीकः" इत्यादावपह्नुतभेदयोरुपमानोपमेययोस्तादात्म्यारोपस्य कथं न रूपकत्वम्, इति न वाच्यं, तस्य विच्छित्तिविशेषाजनकत्वेन रसाद्युपकारकत्वाभावात्। केचित्तु,—"विषयस्य प्राङ्निर्देशे रूपकस्य व्यवहारः, परनिर्द्देशे तु गौणो व्यवहारः" इत्याहुः, तन्न; "निर्म्माणकौशलं धातुश्चन्द्रिका लोकचक्षुषाम्। क्रीड़ागृहमनङ्गस्य सेयमिन्दीवरेक्षणा॥" इत्यादौ विषयस्य प्राङ्निर्द्देशाभावेऽपि रूपकव्यवहारात्। [ "रूपितारोपः" इति पाठे,—रूपितस्य—अपह्नवभेदोपमानस्य, निरपह्नवे—प्रतिषेधशून्ये, विषये—उपमेये, आरोपः,—तादात्म्यारोपः, रूपकमित्यर्थः; अत एवोक्तं काव्यप्रकाशकारेण,—"तद्रूपकमभेदो य उपमानोपमेययोः" इति बोध्यम् ]।

(झ) रूपितेति।—परिणामे ह्यारोप्यमाणस्य प्रकृतोपयोगित्वेनाप्रकृतत्वनियतोपमानत्वस्य बाधात् रूपितपदेन तद्व्यवच्छेद इति भावः। परिणामादिति।—अस्य इति शेषः। एतच्च—रूपकपरिणामयोर्वैलक्षण्यञ्च।

(ञ) रूपकप्रभेदानाह, तदिति।—रूपकमित्यर्थः, कार्य्यकारणभावरूपा परम्परा सञ्जाता अस्येति परम्परितं, साङ्गं—सावयवं, निरङ्गं—निरवयवम् इति त्रिधा, भवतीति शेषः।

(ट) परम्परितरूपकमाह, यत्रेति।—यत्र—यस्मिन् स्थले, कस्यचित् आरोपः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्र श्लिष्टशब्दनिबन्धनं केवलपरम्परितं यथा,—

"आहवे जगदुद्दण्डराजमण्डलराहवे ।
श्रीनृसिंहमहीपाल ! स्वस्त्यस्तु तव बाहवे ॥" (ठ)

अत्र राजमण्डलं नृपसमूह एव चन्द्रबिम्बम् इत्यारोपो राजबाहोः राहुत्वारोपे निमित्तम् । (ड)

मालारूपं यथा,—

"पद्मोदयदिनाधीशः सदागतिसमीरणः ।
भूभृदावलिदम्भोलिरेक एव भवान् भुवि ॥" (ढ)

---

—अध्यासः, परस्य—अन्यस्य, आरोपणे—आरोपविषये, कारणं, तत् परम्परितं—तदाख्यमित्यर्थः, रूपकमिति शेषः ; श्लिष्टाश्लिष्टनिबन्धनं—श्लिष्टशब्दनिबन्धनमश्लिष्टशब्दनिबन्धनञ्च इति द्विविधमित्यर्थः, ज्ञेयमिति शेषः । पुनरपि तस्य द्वैविध्यमाह, प्रत्येकमिति ।—प्रत्येकं—निरुक्तभेदयोरेकैकमित्यर्थः, केवलमालारूपभेदाभ्यां द्विविधम् ; तथा हि,—श्लेषाधीनतया केवलं मालारूपञ्च, अश्लेषेण च केवलं मालारूपञ्चेति चतुर्विधम् ।

(ठ) आहवे इति ।—हे श्रीनृसिंहमहीपाल ! आहवे—युद्धे, जगतम् उद्दण्डानाम्—उद्धतानां, राजमण्डलानां—नृपतिगणानाम् (आहवे—परस्परं विमर्द्दनावसरे, जगति गच्छतीति तस्मिन्, पान्थजने इति यावत्, तत्सन्तापोत्पादनविधाविति भावः ; उद्दण्डस्य—अकरुणस्य, राजमण्डलस्य—चन्द्रमण्डलस्य, इति व्यङ्ग्योऽर्थः) राहवे—राहुस्वरूपाय, तव बाहवे—भुजाय, स्वस्ति अस्तु । राहुणा चन्द्रमण्डलस्येव बाहुना राजमण्डलानां पीड़ोत्पादकत्वात् बाहौ राहुत्वारोपः बोध्यः ; अत्र राजमण्डलपदं श्लिष्टम् ।

(ड) इत्यारोप इति ।—अत्र श्लेषेण रूप्यरूपकयोर्द्वयोरेवाभिधानं शब्दसाम्यरूपसादृश्यमूलं प्रथमं रूपकं, तेन राजमण्डलपदवाच्योपमर्दकत्वरूपसादृश्यनिबन्धनं द्वितीयं रूपकमिति भावः । यथा वा,—"अहितापकरणभेषजनरनाथ ! भवान् करस्थितो यस्य । तस्य कुतोऽहिभयं स्यादखिलामपि मेदिनीं चरतः ॥" इत्यत्र अहितानामपकरणमेव अहीनां तापकरणमिति श्लेषमूलकेन आरोपेण नरनाथे भेषजत्वारोपस्य समर्थनम् ।

(ढ) पद्मेति ।—भुवि—पृथिव्यां, भवान् एक एव पद्मायाः,—लक्ष्म्याः, उदये—उपार्जने, अन्यत्र,—पद्मानामुदये—प्रकाशे, दिनाधीशः,—सूर्यः, सतां—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र पद्माया उदय एव पद्मानामुदयः, सतामागतिरेव सदागमनं, भूभृतो राजान एव पर्व्वता इत्याद्यारोपो राज्ञः सूर्य्यत्वाद्यारोपे निमित्तम् ।

अश्लिष्टशब्दनिबन्धनं केवलं यथा,—

"पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः ।
त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः ॥" (ण)

अत्र त्रैलोक्यस्य मण्डपत्वारोपो हरिबाहूनां स्तम्भत्वारोपे निमित्तम् ।

मालारूपं यथा,—

"मनोजराजस्य सितातपत्रं
श्रीखण्डचित्रं हरिदङ्गनायाः ।
विराजते व्योमसरःसरोजं
कर्पूरपूरप्रभमिन्दुबिम्बम् ॥" (त)

अत्र मनोजादेः राजत्वाद्यारोपश्चन्द्रबिम्बस्य सितातपत्रत्वाद्यारोपे निमित्तम् । तत्र च "राजभुजादीनां राहुत्वाद्या-

---

साधूनाम्, आगतौ—आगमनविषये, अन्यत्र,—सदा—नित्यं, गतौ—गमनविषये, प्रवहणविषये इत्यर्थः, समीरणः,—वायुः, तथा भूभृतां—राज्ञाम्, अन्यत्र,—पर्व्वतानाम्, आवलिषु—श्रेणिषु, दम्भोलिः,—वज्रम् । अत्र पद्मादीनि पदानि श्लिष्टानि ।

(ण) पान्त्विति ।—जलदश्यामाः,—नवनीरदश्यामवर्णाः, शार्ङ्गस्य—तदाख्यधनुषः, ज्यायाः,—मौर्व्याः, आघातेन—आस्फालनेन, कर्कशाः,—कठिनाः, त्रैलोक्यं—त्रिभुवनमेव, मण्डपं—गृहं, तस्य स्तम्भाः,—अवलम्बनदारूणीत्यर्थः, चत्वारः हरिबाहवः,—श्रीविष्णोः भुजचतुष्टयमित्यर्थः, वः,—युष्मान्, पान्तु—रक्षन्तु । अत्र किमपि पदं न श्लिष्टम् ।

(त) मनोजेति ।—मनोजराजस्य—कामनृपतेः, सितातपत्रं—श्वेतच्छत्रं, हरिदङ्गनायाः,—दिगङ्गनायाः, श्रीखण्डचित्रं—चन्दनतिलकं, व्योम—आकाशमेव, सरः,—सरोवरं, तस्य सरोजं—पद्मं, कर्पूरपूरप्रभं—कर्पूरपुञ्जसदृशम्, इन्दुबिम्बं—चन्द्रमण्डलं, विराजते—शोभते । अत्रेन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रोपो राजमण्डलादीनां चन्द्रमण्डलत्वाद्यारोपे निमित्तम्" इति केचित्। (थ)

**अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत्।**
**समस्तवस्तुविषयमेकदेशविवर्त्ति च ॥ ६९३ ॥ (द)**

तत्र,—

**आरोप्याणामशेषाणां शाब्दत्वे प्रथमं मतम्॥६९४॥ (ध)**

प्रथमं—समस्तवस्तुविषयम्। यथा,—

"रावणावग्रहक्लान्तमिति वागमृतेन सः।
अभिवृष्य मरुच्छस्यं कृष्णमेघस्तिरोदधे ॥" (न)

---

(थ) अत्र मतान्तरं निर्द्दिशति, तत्र चेति।—आहवे इत्युदाहृतपद्ये चेत्यर्थः, राजभुजादीनां—प्रस्तुतनृपेन्द्रबाह्वादीनाम्, [ आदिपदं प्रकारताबोधकम् ] राहुत्वाद्यारोपः,—राहुत्वाद्यध्यवसायेनाभिधानं, राजमण्डलादीनां—प्रतिपक्षिनृपादीनां, चन्द्रमण्डलत्वाद्यारोपे—चन्द्रत्वाद्यध्यवसाये, निमित्तं—कारणम्, इति केचित्—आलङ्कारिकम्मन्याः, आहुः इति शेषः। अत्र केचित् इति सूचितमस्वारस्यं द्योतयति, तथा हि राजमण्डलादीनां सरूपशब्दवाच्यत्वं साम्यं प्रसिद्धमारोपकारणम्; बाहुराह्वादीनान्तु तादृशधर्म्मान्तरमप्रसिद्धम्, इत्यस्वरसः इति बोध्यम्।

(द) साङ्गरूपकमाह, अङ्गिन इति।—साङ्गस्य—अङ्गसहितस्य, अङ्गिनः यत् रूपणम्—उपमानतादात्म्यारोपः, तत् साङ्गं—तदाख्यरूपकम्। तद्द्विविधं,—समस्तवस्तुविषयं—समस्तानि वस्तूनि—आरोप्यमाणानि, विषयाः,—शब्दोपात्तानि, यत्र तत्, तथा एकदेशविवर्त्ति च।

(ध) समस्तवस्तुविषयमाह, आरोप्याणामिति।—अशेषाणां — सर्व्वेषाम्, आरोप्याणाम्—उपमानानाम्,[इह बहुवचनमविवक्षितम्; "सूत्रे लिङ्गं सङ्ख्या कालश्चातन्त्राणि" इति न्यायात्; तेन "दन्तांशुकेशरालीभिस्तस्या भाति मुखाम्बुजम्" इत्यादेः सङ्ग्रहः] शाब्दत्वे—शब्दप्रतिपाद्यत्वे, प्रथमं—समस्तवस्तुविषयमित्यर्थः, मतम्।

(न) उदाहरति, रावणेति।—सः कृष्णः,—विष्णुः एव मेघः, इति कृष्णमेघः, रावणः एव अवग्रहः,—वृष्टिप्रतिबन्धकः, ("वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ" इत्यमरः) तेन क्लान्तं—पीड़ितं, सन्तप्तमिति यावत्, मरुत्—देवः एव, शस्यं—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र कृष्णस्य मेघत्वारोपे वागादीनाममृतत्वादिकमारोपितम् ।

**यत्र कस्यचिदार्थत्वमेकदेशविवर्त्ति तत् ॥६९५॥ (प)**

कस्यचित्—आरोप्यमाणस्य । यथा,—

"लावण्यमधुभिः पूर्णमास्यमस्या विकस्वरम् ।
लोकलोचनरोलम्बकदम्बैः कैर्न पीयते ॥" (फ)

अत्र लावण्यादौ मधुत्वाद्यारोपः शाब्दः, मुखे पद्मत्वारोपः आर्थः । न च इयमेकदेशविवर्त्तिन्युपमा, विकस्वरत्वधर्मस्यारोप्यमाणे पद्मे मुख्यतया वर्त्तनात्, मुखे चोपचरितत्वात् (ब)।

---

मौद्यादि तत्, इति—पूर्वोक्तेन, वागेव अमृतं—जलं तेन, अभिवृष्य—प्रीणयित्वा, पद्यै—अभिषिच्य, तिरोदधे—अन्तर्हितः । अत्र अङ्गिनः कृष्णस्य मेघत्वारोपसम्पादनाय तदङ्गानां सर्वेषाम् अमृतादीनां वागादिषु आरोपात् साङ्गं रूपकमिति बोध्यम् । यथा वा,—"सुविमलमौक्तिकतारे धवलांशुकचन्द्रिकाचमत्कारे । वदनपरिपूर्णचन्द्रे सुन्दरि ! राकाऽसि नात्र सन्देहः ॥" इत्यत्र सुन्दर्याः राकात्वारोपे सर्वेषामपि मौक्तिकादीनां तारात्वारोपणम् ।

(प) एकदेशविवर्त्तिसाङ्गरूपकमाह, यत्रेति ।—यत्र कस्यचित्—आरोप्यमाणस्य इत्यर्थः, ("कस्यचित्" इत्यनेनान्यस्य शाब्दत्वलाभः, "श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्त्ति तत्" इति काव्यप्रकाशदर्शनात् शाब्दत्वस्याप्येतल्लक्षणघटकत्वं बोध्यम् ) आर्थत्वम्—अर्थवशात् लभ्यत्वं, तत् एकदेशविवर्त्ति, रूपकमिति शेषः ।

(फ) उदाहरति, लावण्येति ।—अस्याः,—कान्तायाः इत्यर्थः, लावण्यानि—सौन्दर्यविशेषा एव मधूनि तैः, पूर्णं विकस्वरं—प्रफुल्लमित्यर्थः, आस्यं—मुखं, कैः लोकानां लोचनान्येव रोलम्बकदम्बानि—भ्रमरसमूहाः, ("इन्दिन्दिरस्तु रोलम्बः चञ्चरीको मधुव्रतः" इति हारावली) तैः, न पीयते ?—आस्वाद्यते ? सतृष्णं दृश्यते? इत्यर्थः, अपि तु सर्वैरेव पीयते इति भावः । यथा वा—"रूपजला चलनयना नाभ्यावर्त्ता कचावलिभुजङ्गा । मज्जन्ति यत्र सन्तः सेयं तरुणीतरङ्गिणी विषमा ॥" इत्यत्र रूपादौ जलाद्यारोपः शाब्दः, नयनयोर्मीनत्वारोपः आक्षिप्तः, न तु तरुण्यां तरङ्गिणीत्वारोप आर्थः, अस्य साक्षादुपात्तत्वात् इति ।

(ब) न चेयमिति ।—समभिव्याहृतपदार्थस्य मुख्यया वृत्त्याऽन्वयसम्भव एव

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

निरङ्गं केवलस्यैव रूपणं तदपि द्विधा।
मालाकेवलरूपत्वात्॥ ६९६॥ (भ)

तत्र मालारूपं निरङ्गं यथा,—

"निर्म्माणकौशलं धातुश्चन्द्रिका लोकचक्षुषाम्।
क्रीड़ागृहमनङ्गस्य सेयमिन्दीवरेक्षणा॥" (म)

केवलं यथा,—

"दासे कृतागसि भवेदुचितः प्रभूणां
पादप्रहार इति सुन्दरि! नास्मि दूये।

---

एकदेशविवर्त्तिनीरुपमारूपकयोरन्यतराङ्गीकारे बीजम्; "मुखपद्मं विकस्वरम्" इत्युपमाङ्गीकारे क्रियादिविशेषशालित्वरूपविकस्वरत्वस्य मुखे बाधात् कान्तिविशेषे लक्षणाप्रसङ्गः; "मुखमेव पद्मम्" इति रूपकाङ्गीकारे तु विशेष्ये पद्मे विकस्वरत्वस्य मुख्यया वृत्त्याऽन्वयः सम्भवति; "दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी। केशपाशालिवृन्देन सुवेशा हरिणेक्षणा॥" इत्यत्र रूपकाङ्गीकारे भूषणादिकृतशोभाविशेषस्य लतायां बाधात् शोभामात्रे लक्षणाप्रसङ्गः, उपमाऽङ्गीकारे तु मुख्यया वृत्त्याऽन्वयः सम्भवतीति; एतादृशं विशेषमवलोक्यैव केचिदेकदेशविवर्त्तिनीमुपमामेकदेशविवर्त्तिनि रूपके एवान्तर्भावयन्ति; वस्तुतस्तु,—विकस्वरत्वधर्म्मस्य—विकासस्य इत्यर्थः, मुख्यतया—प्राधान्येन, वर्त्तनात्—अवस्थानात्, मुखे च उपचरितत्वात्—आरोपितत्वात्, गुणभावेन वर्त्तनादित्यर्थः। तथा च,—यत्र साधर्म्म्यम् उपमाने मुख्यतया स्थितं, तत्रैव रूपकं, यत्र तु उपमेये स्थितं, तत्र उपमैवेति फलितम्।

(भ) निरङ्गमाह, निरङ्गमिति।—केवलस्य—एकमात्रस्यैव, न तु साङ्गस्य इत्यर्थः, अङ्गिन इति शेषः, रूपणं निरङ्गम्; तदपि—निरङ्गरूपकमपि, द्विधा—द्विविधम्। मालेति।—मालारूपत्वात् केवलरूपत्वाच्चेत्यर्थः।

(म) तत्र मालारूपमुदाहरति, निर्माणेति।—सा इयम् इन्दीवरेक्षणा—नीलोत्पलनेत्रा, धातुः,—विधातुः, निर्माणकौशलं—सृष्टिवैचित्र्यं, वराङ्गनासृष्टिव्युत्पत्तिरिति भावः, लोकचक्षुषां चन्द्रिका—कौमुदी, कौमुदीव नेत्रोत्सवविधायिनीत्यर्थः, तथा अनङ्गस्य—कामस्य, क्रीड़ागृहं—विलासागारस्वरूपा, कामोद्दीपकत्वादिति भावः। सौन्दर्य्यातिशयसम्पादकत्वमेवानयोः साम्यं, तन्मूलक एवायमारोपः। अत्र इन्दीवरेक्षणारूपे अङ्गिनि मालारूपेण निर्माणकौशलादीनाम् आरोपः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रै-
र्यद्भिद्यते मृदु पदं ननु सा व्यथा मे ॥" (य)

तेनाष्टौ रूपके भिदाः ॥६९७॥ (र)

"चिरन्तनैरुक्ताः" इति शेषः। क्वचित् परम्परितमप्येकदेश-विवर्त्ति। (ल) यथा,—

"पर्य्यङ्को राजलक्ष्म्या हरितमणिमयः पौरुषाब्धेस्तरङ्गो
भग्नप्रत्यर्थिवंशोल्वणविजयकरिस्त्यानदानाम्बुपट्टः।
सङ्ग्रामत्रासताम्यन्मुरलपतियशोहंसनीलाम्बुवाहः
खड्गः क्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य ॥"(व)

(य) केवलमुदाहरति, दासे इति।—मानिनीं कान्तां प्रसादयितुं तत्पादाहतस्य नायकस्योक्तिरियम्। हे सुन्दरि! दासे—किङ्करे, कृतागसि—कृतापराधे सति, प्रभूणां—स्वामिनां, पादप्रहारः,—चरणाघातः, उचितः,—योग्यः, भवेत् इति—अस्मात् हेतोः, अस्मि—अहमित्यर्थः, [ "अस्मि" इत्यत्र "अत्र" इति पाठान्तरे,—पादप्रहारे इत्यर्थः ] न दूये—न दुःखमनुभवामीत्यर्थः, किन्तु उद्यद्भिः,—उद्गच्छद्भिः, कठोरैः,—कर्कशैः, खरस्पर्शैरित्यर्थः,पुलकाङ्कुरैः,—अङ्कुरवत् रोमाञ्चैरिव, कण्टकाग्रैः, पादस्पर्शजनितसात्त्विकभावविशेषैरिति भावः, मृदु—कोमलं, पदं, तवेति शेषः, यत् भिद्यते—विध्यते, ननु—भोः! सा मे—मम, व्यथा—पीड़ा। तव पादप्रहारेऽपि मम पुलको भवति, तथाऽपि मयि तव क्रोधः इति महदनुचितम्। अत्र पुलकाङ्कुररूपे अङ्गिनि केवलस्य कण्टकाग्रस्य आरोपः।

(र) तेनेति।—प्रथमतः रूपकस्य त्रयो भेदाः,—साङ्गनिरङ्गपरम्परितप्रकारेण, तत्र समस्तवस्तुविषयैकदेशविवर्त्तिभेदाभ्यां साङ्गं द्विविधम्; एवं केवलमालारूपभेदाभ्यां निरङ्गमपि द्विविधम्; श्लिष्टाश्लिष्टशब्दनिबन्धनत्वाभ्यान्तु परम्परितं द्विविधं सत् पुनः प्रत्येकं केवल-मालारूपभेदाभ्यां द्विविधमिति चतुर्विधम्; सम्मेलनेन रूपकमष्टप्रकारम् इति।

(ल) क्वचिदिति।—एकदेशविवर्त्तिपरम्परितरूपके कस्यचिदाचार्य्यत्वमित्यर्थः।

(व) उदाहरति, पर्य्यङ्क इति।—राजलक्ष्म्याः,—राजश्रियाः, हरितमणिमयः,—मरकतमणिनिर्म्मितः, पर्य्यङ्कः,—खट्वा, उपवेशनासनमिति यावत्; खड्गमाश्रित्य राजलक्ष्म्याः स्थिरीकरणात् तत्र पर्य्यङ्कत्वारोप इति भावः; पौरुषाब्धेः,—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्रार्थः च्छायां महिषीत्वारोपः खड्गे सौविदल्लत्वारोपे निमित्तम्। अस्य भेदस्य पूर्व्ववन्मालारूपत्वेऽप्युदाहरणं मृग्यम्। (श)

दृश्यन्ते क्वचिदारोप्याः श्लिष्टाः साङ्गेऽपि रूपके॥६९८॥(ष)

पौरुषं—पराक्रम एव, अब्धिः,—सागरः, केनापि अनभिभवनीयत्वादिति भावः, तस्य तरङ्गः,—ऊर्म्मिः, खड्गस्य लतावत् दीर्घतया ईषदान्दोलनेन चाञ्चल्यसद्भावात् सूर्य्यकरप्रतिफलनेन चाकचक्यशालितया च सूर्य्यकरप्रतिफलितचञ्चलतरङ्गसन्तानेन साम्यात् तत्र तरङ्गत्वारोपो बोध्यः। भग्नेति।—भग्नेन—पराजितेन, प्रत्यर्थिनां—शत्रूणां, वंशेन—कुलेन, शत्रुपराजयेन हेतुनेत्यर्थः, यः उल्बणः,—महान्, विजयः,—सङ्ग्रामसफलतारूप इत्यर्थः, स एव करी—हस्ती, तस्य स्त्यानं—घनीभूतं यत् दानाम्बु—मदजलं, तस्य पट्टः,—पाषाणवत् दृढ़ाधार इत्यर्थः; मदमत्तकरी यथा रणस्थले अप्रतिहतं विचरति तद्वत् अप्रतिहतसञ्चार इत्यर्थः, खड्गस्य विस्तृतत्वात् प्रतिघातसहत्वाच्च करिगण्डसाम्यं ज्ञेयम्। सङ्ग्रामेति।—सङ्ग्रामात् यः त्रासः,—भीतिः, तेन ताम्यन्तः,—मुह्यन्तः, ये मुरलपतयः,—तदाख्यदेशनायकाः तेषां यशः,—शौर्य्यादिजनितोज्ज्वलकीर्त्तिः एव हंसः तस्य नीलाम्बुवाहः,—कृष्णमेघः; वर्षासु नीलमेघोदयो यथा हंसान् दूरं मानससरोवरं प्रापयति, तद्वत् पराजितमुरलपतीनां यशांस्यपि तेभ्यो दूरीकृतवान् इत्यर्थः, कृष्णमेघोदयस्य सर्व्वाच्छादकत्वात् खड्गेन तेषां यशसां तिरोधानाच्च खड्गे कृष्णमेघत्वारोपो बोध्यः। समित इति—युद्धे, मालवाखण्डलस्य—मालवः,—देशविशेषः, तस्य आखण्डलस्य—इन्द्रस्य, मालवाधिपतेरित्यर्थः, [ "मानवाखण्डलस्य" इति पाठान्तरं तु,—नरेन्द्रस्येत्यर्थः ] क्ष्मा-सौविदल्लः,—क्ष्मायाः,—पृथिव्याः, सौविदल्लः,—कञ्चुकी, अन्तःपुररक्षकपुरुषविशेषः इत्यर्थः, ( "सौविदल्लाः कञ्चुकिनः" इत्यमरः ); राज्ञां क्ष्मापतित्वेन क्ष्मायाः महिषीरूपत्वात् खड्गेन पृथिवीरक्षणाच्च तस्मिन् कञ्चुकित्वारोपो बोध्यः; खड्गः,—असिः, विजयते—सर्व्वोत्कर्षेण वर्त्तते इत्यर्थः। स्रग्धरा वृत्तम्।

(श) अत्रेति।—क्ष्मायां महिषीत्वारोपो राजभोग्यत्वरूपसाम्यमूलकः। मृग्यमिति।—"छत्रं सितं शम्बरशावकस्य श्रीखण्डचित्रं हरितोऽबलायाः। विराजते चारु नभःसरोजं कर्पूरपूरप्रभमिन्दुबिम्बम्॥" अत्र शम्बरशावकादे राजत्वाद्यारोपः शार्थः चन्द्रबिम्बस्य सितच्छत्रत्वारोपे निमित्तम् इत्यवधेयम्।

(ष) दृश्यन्ते इति।—क्वचित् साङ्गे रूपकेऽपि आरोप्याः,—अध्यसनीयाः, उपमानानीति यावत्, श्लिष्टाः,—अनेकार्था इत्यर्थः, दृश्यन्ते।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्रैकदेशविवर्त्ति श्लिष्टं यथा मम,—

"करमुदयमहीधरस्तनाग्रे
गलिततमःपटलांशुके निवेश्य ।
विकसितकुमुदेक्षणं विचुम्ब-
त्ययममरेशदिशो मुखं सुधांशुः ॥" (स)

समस्तवस्तुविषयं यथा,—अत्रैव "विचुम्बति" इत्यादौ "चुचुम्बे, हरिदबलामुखमिन्दुनायकेन" इति पाठे—न चात्र श्लिष्टपरम्परितम्; तत्र हि, "भूभृदावलिदम्भोलिः" इत्यादौ राजादौ पर्व्वतत्वादिरूपणं विना वर्णनीयस्य राजादेर्दम्भोलि-तादिरूपणं सर्व्वथैव सादृश्यासम्भवादसङ्गतम्। तर्हि कथं "पद्मो-दयदिनाधीशः" इत्यादौ परम्परितं, राजादेः सूर्य्यादिना सादृ-श्यस्य तेजस्वितादिहेतुकस्य सम्भवात् ? इति न वाच्यम्; तथा हि,—राजादेस्तेजस्वितादिहेतुकं सुव्यक्तं सादृश्यं, न तु प्रकृते तद्विवक्षितं, पद्मोदयादेरेव द्वयोः (ह) साधारणधर्म्मतया विव-

(स) करमिति।—चन्द्रोदयवर्णनमिदम्। अयं सुधांशुः,—चन्द्रः, अमरेश-दिशः,—ऐन्द्र्या दिशः, प्राच्या इत्यर्थः, गलितं—स्रस्तम्, अपगतमित्यर्थः, तमसां पटलं—समूह एव अंशुकं—वस्त्रं यस्मात् तादृशे, उदयमहीधरः,—उदयाचलः, एव स्तनः तस्याग्रे—तदुपरि, करं—किरणमेव हस्तं, निवेश्य—निधाय, विकसितानि कुमुदान्येव ईक्षणानि—नयनानि यत्र तादृशं, मुखं विचुम्बति। अत्र अमरेशदिशि अङ्गनाऽऽरोपस्य सुधांशौ नायकारोपस्य च आर्थत्वात् एकदेशविवर्त्तित्वम्। पुष्पि-ताग्रा वृत्तम्।

(ह) श्लिष्टपरम्परितमिति।—यत्र सादृश्यासम्भवेन विना आरोपणं वाक्यार्था-सङ्गतिः, तत्रैव परम्परितं, यत्र च न तथा, तत्र साङ्गनिरङ्गयोरवसर इति तात्पर्य्यम्। पद्मोदयादेरेव—पद्मोदयादिशब्दस्यैव, द्वयोः,—रूप्यरूपकयोः, राजादिसूर्य्यादीः इत्यर्थः। नन्वत्र शब्दसाम्यविवक्षावशात् प्रसिद्धतेजस्वितादिरूपसाम्यविवक्षाऽस्तु, "त्रैलोक्यमण्डपस्तम्भाः" इत्यादौ तु दीर्घत्वपीवरत्वादिसाम्यसम्भवेनात्र तन्मूलक एव सम्भवत्वाद्यारोपः, तत् त्रैलोक्यादौ मण्डपत्वाद्यारोपस्य तत्कारणत्वस्वीकारेण किम् ?

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

च्चितत्वात् ; इह तु महीधरादेः स्तनादिना साहश्यं पीनोत्तुङ्गत्वादिना सुव्यक्तमेव, इति न श्लिष्टपरम्परितम् ।

क्वचित् समासाभावेऽपि रूपकं दृश्यते । (क) यथा,—

"मुखं तव कुरङ्गाक्षि ! सरोजमिति नान्यथा ।" (ख)

क्वचिद्वैयधिकरण्येऽपि । (ग) यथा,—

"विदधे मधुपश्रेणीमिह भ्रूलतया विधिः ।" (घ)

क्वचिद्वैधर्म्येऽपि । (ङ)

यथा,—

"सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुण-
ज्योत्स्नाकृष्णचतुर्दशी सरलतायोगश्वपुच्छच्छटा ।
यैरेषाऽपि दुराशया कलियुगे राजावली सेविता
तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत् कौशलम् ?॥"(च)

---

इति चेत्, न ; रम्भा यथा मण्डपभारसहिष्णवः, तथा हरिबाहवः त्रैलोक्यभारसहिष्णवः, इति साम्यस्यैव प्रकृते विवक्षितत्वात्, तच्च त्रैलोक्यादौ मण्डपत्वाद्यारोपं विना दुर्बोधम् ।

(क) समासाभावेऽपीति ।—अत एव दण्डिना,—व्यस्तं, समस्तं, व्यस्तसमस्तं चेति त्रिविधं रूपकमुक्तम ।

(ख) मुखमिति ।—उत्तरार्द्धं त्वस्य "त्वं पुनः सरसी साक्षात् पतन्मधुकराञ्जलिः ॥" इति । यथा वोदाहृतं गङ्गाधरकृता,—"धर्म्मस्यात्मा, भागधेयं क्षमायाः, सारः सृष्टेः, जीवितं शारदायाः । आज्ञा साक्षाद् ब्रह्मणो वेदमूर्त्तेराकल्पान्तं राजतामेष राजा ॥"

(ग) वैयधिकरण्ये इति ।—उपमानोपमेययोर्भिन्नविभक्तिकत्वे इत्यर्थः ।

(घ) उदाहरति, विदधे इति ।—विधिः,—विधाता, इह—अस्यां नायिकायां, भ्रूलतया [ इत्थम्भेदे तृतीया, अन्यथा तादात्म्यारोपो न स्यात् ] मधुपश्रेणीं—भ्रमरावलीं, विदधे । अत्र भ्रूलतायां व्यधिकरणायां मधुपश्रेण्यारोपः ।

(ङ) वैधर्म्ये इति ।—विरुद्धधर्मसद्भावे इत्यर्थः ।

(च) उदाहरति, सौजन्येति ।—सौजन्यमेव अम्बु—जलं, तस्य मरुस्थली—मरुभूमिः, सौजन्यहीनेत्यर्थः, सुचरितं—साधुचरितम्, एव आलेख्यं—चित्रकर्म,



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इदं मम । अत्र च केषाञ्चिद्रूपकाणां शब्दश्लेषमूलत्वेऽपि रूपकविशेषत्वादर्थालङ्कारमध्ये गणनम् । एवं वक्ष्यमाणालङ्कारेषु (छ) बोध्यम् ।

**अधिकारूढवैशिष्ट्यं रूपकं यत्तदेव तत् ॥ ६६८ ॥ (ज)**

तदेव—अधिकारूढवैशिष्ट्यसंज्ञकरूपकम् । यथा मम,—

"इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधरः
सुधाधाराधारश्चिरपरिणतं बिम्बमधरः ।
इमे नेत्रे रात्रिन्दिवमधिकशोभे कुवलये
तनुर्लावण्यानां जलधिरवगाहे सुखतरः ॥" (झ)

---

तस्य द्युभित्तिः,—आकाशरूपकुड्यं, सच्चरिवत्तशून्येत्यर्थः, दुश्चरित्रेति भावः, गुणाः,—गाम्भीर्यौदार्यादयः, एव ज्योत्स्नाः तासां कृष्णचतुर्दशी—गुणशून्या इत्यर्थः, सरलतायाः,—ऋजुतायाः, योगः,—सद्भावः, तस्य श्वपुच्छच्छटा—कुक्कुरलाङ्गलकुण्डली, कुक्कुरलाङ्गूलं यथा शतशो मर्द्दनेऽपि सरलत्वं न गच्छति, तद्वत् बहुश उपास्यमानाऽपि स्वभावकुटिला इति भावः; एषा—ईदृशी, अपि राजावली—राजसमूहः, यैः,—जनैरित्यर्थः, कलियुगे दुराशया—दुष्टधनतृष्णया, सेविता—उपासिता, तेषां भक्तिमात्रसुलभे—केवलमात्रभक्तिलभ्ये, शूलिनि—शम्भौ, सेवा कियत् कौशलम् ?—किं नैपुण्यम् ? आशुतोषाराधनं न तेषां किमप्यायासकरमिति भावः । इह राजावल्यां मरुस्थल्याद्यारोपः सौजन्याम्बुशालित्वादिसाधर्म्यस्यासद्भाववशात् वैपरीत्येनाभिहितः । शार्दूलविक्रीड़ितं वृत्तम् ।

(छ) अत्र च केषाञ्चिदिति ।—शब्दश्लेषमूलत्वेऽपि—साधनस्य श्लेषस्य शब्दालङ्कारत्वेऽपि, रूपकविशेषत्वात्—रूपकस्य प्राधान्यात्, साध्यत्वेन प्रधानस्य अर्थालङ्कारमध्ये गणनमिति भावः । वक्ष्यमाणालङ्कारेषु—श्लेषापह्नवादिषु इत्यर्थः ।

(ज) अधिकारूढवैशिष्ट्यं रूपकमाह, अधिकेति ।—यत् रूपकम्, अधिकम्—अत्यर्थम्, आरूढं—प्राप्तं, वैशिष्ट्यं—वैचित्र्यं, विशेषणमित्यर्थः, यत्र तत् तादृशमित्यर्थः, तत्—रूपकं, तदेव—अधिकारूढवैशिष्ट्यनामकम् ।

(झ) उदाहरति, इदमिति ।—इदं—दृश्यमानमित्यर्थः, वक्त्रं—मुखं, साक्षात्—प्रत्यक्षं, स्वयमित्यर्थः, विरहितकलङ्कः,—निष्कलङ्कः, शशधरः,—चन्द्रः, सुधाधाराणाम्—अमृतधाराणाम्, आधारः,—आस्पदम्, अधरः,—अधरोष्ठः, चिर-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र कलङ्करहित्यादिना अधिकं वैशिष्ट्यम् । (ञ)

**विषयात्मतयाऽऽरोप्ये प्रकृतार्थोपयोगिनि ।**
**परिणामो भवेत्तुल्याऽतुल्याधिकरणो द्विधा॥७०॥(ट)**

परिणत—सम्यक्परिपक्कं, बिम्बं—फलविशेषः, दृश्—परिदृश्यमाने इत्यर्थः, नेत्रे रात्रिन्दिवम्—अहर्निशम्, अधिकशोभे—अधिकशोभाशालिनी इत्यर्थः, कुवलये—नीलोत्पलयुगले, ("नीलोत्पलं कुवलयम्" इत्यमरः) तनुः,—शरीरं; लावण्यानां—"मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । दृश्यमानं यदङ्गेषु तल्लावण्यमिहोच्यते ॥" इत्युक्तलक्षणानां कान्तिविशेषाणामित्यर्थः, जलधिः,—समुद्रः ; परम् अवगाहे—अवगाहनविषये, सुखतरः.—अतिसुखप्रद इत्यर्थः । अत्र शिखरिणी छन्दः ।

(ञ) अत्र कलङ्केति ।—अत्र मुखादीनां निष्कलङ्कत्वादिना शशधराद्यपेक्षया आधिक्येन वैशिष्ट्यम् ; चन्द्रादेः अत्यन्तासम्भवस्य कलङ्करहितत्वादिविशेषणस्य तत्रारोपणात् । ["कलङ्करहित्यादिना" इत्यभेदे तृतीया] आदिपदेन च सुधाधाराधारत्वादीनां ग्रहणं स्वयमूह्यम् ।

(ट) परिणामालङ्कारमाह, विषयेति ।—आरोप्ये—आरोप्यमाणे वस्तुनि, विषयात्मतया—आरोपविषयाभिन्नतया, विषयतादात्म्येन इत्यर्थः, प्रकृतार्थस्य—प्रस्तुतस्य कार्य्यस्य, उपयोगिनि—उपकारिणि, सम्पादके सतीत्यर्थः, परिणामः भवेत् ; प्रकृतार्थोपयोगितया विषये विषयिण आरोपः परिणामः ; रूपके सदृशवस्तुनः तादात्म्यं विषये भासते, इह तु सजातीयफलसाधनतया विषयस्य तादात्म्यमारोप्यमाणे भासते इति विशेषः । स च द्विधा—तुल्याधिकरणः अतुल्याधिकरणश्च—व्यधिकरणश्च । तत्र तुल्याधिकरणः,—समानाधिकरणः, स च समानविभक्तिकपदद्वये प्रयोज्यः, विभिन्नविभक्तिकपदद्वयप्रयोज्यो व्यधिकरण एवातुल्याधिकरण इति सारः । अलङ्कारशेखरकाराणां त्विदमभिधानतात्पर्य्यम्,—उपमानप्रतियोगिकाभेदोपमेयप्रतियोगिकाभेदाभ्यां यथाक्रमं रूपकपरिणामौ, प्रतीपवत् तत्र भेदाभावे उपमेयप्रतियोगिकत्वाभिप्रायोपपादकं प्रस्तुतार्थोपादानं न हि तदन्तरस्य निवेशः, तथा च यत्र उपमानस्य स्वस्वरूपेणैव प्रकृतार्थोपादानं यत्रौदासीन्यञ्च तत्र रूपकालङ्कार एव । एवञ्च विशेषणसमासाश्रितः परिणामः, मयूरव्यंसकादिसमासतन्त्रं रूपकं, यथा "मुखचन्द्रम्" इत्याद्युदाहरणे । यदि चन्द्रमुखम् इति प्रयोगः, तदा विशेषणसमासतन्त्रमपि रूपकम् इति । अन्येषां तु उपमानोपमेयानाम् उपमानप्रतियोगिकैक्यसम्बन्धेन ज्ञापकानां "मयूरव्यंसकादयश्च" इति विशेषणत्वविघातात् चन्द्रमुखमिति प्रयोग एव न स्यात् इति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आरोप्यमाणस्यारोपविषयात्मतया परिणमनात् (ठ) परिणामः। यथा,—

"स्मितेनोपायनं दूरादागतस्य कृतं मम।
स्तनोपपीड़माश्लेषः कृतो द्यूते पणस्तया॥" (ड)

अन्यत्रोपायनपणौ वसनाभरणादिभावेनोपयुज्येते, अत्र तु नायकसम्भावनद्यूतयोः स्मिताश्लेषरूपतया प्रथमार्द्धे वैयधि-

(ठ) आरोप्यमाणस्येति।—परिणमनात्—परिणतबुद्धिविषयीकरणात्। बुद्धेः परिणामस्य अनाहार्य्यत्वे सति धारावाहिकत्वम्; रूपके हि आहार्य्य एव सकृदभेदबुद्धिः, अनन्तरं साधर्म्यप्रतीतिरेव, न त्वभेदबुद्ध्यन्तरम्। इह तु वस्तुनोरेककार्य्यकारित्वेन अत्यन्ततिरस्कृतभेदयोरभेदप्रतीतिरिति भावः। अत्र प्रायेण भवत्यर्थस्य करोत्यर्थस्य वा धातोः प्रयोगः; तत्र भवत्यर्थस्य प्रयोगो यथा,—"तिरस्करिण्यो जलदा भवन्ति"। अत्र योषिल्लज्जावरणरूपप्रस्तुतप्रयोजनसाधनत्वेन प्रसिद्धे पटविशेषे आरोप्यमाणे तत्साधनस्य जलदस्य तादात्म्यारोपः। यथा वा,—"मन्दो गन्धवहः चारो वह्निरिन्दुश्च जायते। चर्चा चन्दनपङ्कस्य शस्त्रघातः प्रवासिनाम्॥" अत्र देहदाहादिरूपप्रस्तुतप्रयोजनसाधनत्वेन प्रसिद्धे वस्तुनि चारादौ आरोप्यमाणे तत्साधनस्य गन्धवहादिविषयस्य तादात्म्यारोपः।

(ड) करोत्यर्थप्रयोगे परिणाममाह, स्मितेनेति।—सखायं प्रति कस्यचित् स्वकान्तासद्भाववर्णनमिदम्। तया—मत्कान्तया इत्यर्थः, स्मितेन—मृदुहसितेन, दूरात् आगतस्य—उपस्थितस्य, मम उपायनम्—उपहारः, प्रीत्यर्थं दीयमानं मण्यादिद्रव्यमिति यावत्, कृतं, समागतं मां दृष्ट्वा स्मितमेव उपहारो दत्त इत्यर्थः; तथा द्यूते—द्यूतक्रीड़ायां, स्तनोपपीड़ं—स्तनौ स्तनयोर्वा उपपीड्य इत्यर्थः, यथा तथा आश्लेषः,—आलिङ्गनं, पणः,—पराजये एतद्दातव्यमित्यङ्गीकृतद्रव्यमित्याशयः, कृतः, अत्र "कृतः" इति पाठो न रमणीयः, कथितपदत्वदोषप्रसङ्गात्। अयञ्च वाक्यगतः समासगत इति पुनर्द्विधा भिद्यते; क्रमेणोदाहरणे,—"अपारे संसारे विषमविषयारण्यसरणौ मम भ्रामं भ्रामं विगलितविरामं जड़मतेः। परिश्रान्तस्यायं तरणितनयातीरनिलयः समन्तात् सन्तापं हरिनवतमालस्तिरयतु॥" "महर्षेर्व्यासपुत्रस्य श्रावं श्रावं वचःसुधाम्। अभिमन्युसुतो राजा परां मुदमवाप्तवान्॥" पूर्व्वमपारस्य संसारस्यारण्यसरणित्वारोपणमसमस्तमिति एतस्य वाक्यगतत्वं, परत्र पुनर्वचसः सुधात्वारोपः समासगतः, इत्यस्य समासगतत्वम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

करण्येन प्रयोगः, द्वितीये सामानाधिकरण्येन। रूपके "मुखचन्द्रं पश्यामि" इत्यादौ आरोप्यमाणचन्द्रादेरुपरञ्जकतामात्रं, न तु प्रकृते दर्शनादावुपयोगः। इह तु उपायनादेर्विषयेण तादात्म्यं प्रकृते च नायकसम्भावनादावुपयोगः। अत एव रूपके आरोप्यस्यावच्छेदकत्वमात्रेणान्वयः; अत्र तु तादात्म्येन। "दासे कृतागसि—" इत्यादौ रूपकमेव, न तु परिणामः; आरोप्यमाणकण्टकस्य पादभेदनकार्य्यस्याप्रस्तुतत्वात्। न खलु तत् कस्यचिदपि प्रस्तुतकार्य्यस्य घटनार्थमनुसन्धीयते। (ढ)

---

(ढ) आरोप्यमाणयोः प्रकृतोपयोगित्वेन प्रसिद्धिं विषयतादात्म्यारोपस्योपपादयति, अन्वेति।—सम्भावनान्तरदूतान्तरयोरित्यर्थः, उपयुज्येते—हेतू भवतः। अत्र त्विति।—प्रस्तुतयोस्त्वित्यर्थः, श्लिताश्लेषरूपतया—श्लिताश्लेषतादात्म्येन, उपयुज्येते इत्यन्वयः, उपयोगित्वेन प्रतीयेते इति तदर्थः। प्रथमार्द्धे इति।—वैयधिकरण्येन—भिन्नविभक्तिकत्वेन। रूपकादस्य भेदमुपपादयति,—रूपके इति। आरोप्यमाणेति।—आरोप्यमाणस्य—उपमानस्य, चन्द्रादेरुपरञ्जकतामात्रम्—उपलक्षणत्वमेव उपमेयस्य शोभाऽऽविष्कारकत्वमात्रमिति बोध्यं, यथा "आह्लादकं चन्द्रं पश्यामि" इत्यादौ आह्लादकधर्म्मत्वस्य दर्शनानुपयोगित्वेनोपलक्षणत्वं, तथेहापीति निष्कृष्टोऽर्थः। न त्विति।—प्रकृते—प्रस्तुते, उपयोगः,—उपकारित्वम्; चन्द्रस्य दर्शनयोग्यत्वेऽपि यथा आह्लादादिसाधनत्वेन प्रसिद्धिः, न तथा दर्शनसाधनत्वेनेति भावः। इह तु इति।—विषयेण—श्लितेन, तादात्म्यम्—अभेदः। प्रकृते चेति।—चकारस्य उपयोगश्चेत्यनेनान्वयः, प्रकृते—प्रस्तुते, नायकसम्भावनादौ—नायकसंवर्द्धनकर्म्मणि, उपयोगः,—उपकारित्वम्। ननु "मुखचन्द्रः प्रकाशते" इत्यादौ चन्द्रादेरारोप्यमाणस्य प्रकाशसाधनत्वेन प्रसिद्धिरस्तीति परिणामप्रसङ्गः, इत्यत आह, अत एवेति।—परिणामलक्षणे "विषयात्मतया" इत्यस्य निवेशादित्यर्थः। आरोप्यस्य—उपमानस्य, अवच्छेदकत्वमात्रेण—विशेषकत्वमात्रेण, विषयव्यावर्त्तकत्वमात्रेण न तु विषयतादात्म्येन इत्यर्थः, अत्र तु—परिणामे तु, तादात्म्येन—अभिन्नतयेत्यर्थः। ननु "दासे कृतागसि" इत्यादौ पादभेदनरूपकार्य्यसाधनत्वेन प्रसिद्धस्य कण्टकस्य पुलकाङ्कुरत्वेनारोपः, इति परिणाम एवेत्यत आह,—दासे इति। अप्रस्तुतत्वादिति।—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अयमपि (ण) रूपकवदधिकारूढ़वैशिष्ट्यो दृश्यते। यथा,—

"वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः।
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः॥" (त)

अत्र प्रदीपानामोषध्यात्मतया प्रकृते सुरतोपयोगिनि अन्धकारनाशे उपयोगोऽतैलपूरत्वेनाधिकारूढ़वैशिष्ट्यम्।

**सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः।**
**शुद्धो निश्चयगर्भोऽसौ निश्चयान्त इति त्रिधा॥७०१॥ (थ)**

---

मानभङ्गस्यैव तत्र प्रस्तुतत्वादिति भावः। ननु प्रस्तुतघटकस्यापि प्रस्तुतत्वमित्यतः पादभेदनमपि प्रस्तुतमत आह, न खल्विति।—तत्पादभेदनं घटनार्थमपि इत्यपेरन्वयः, उपपादनार्थमपीति तदर्थः। प्रस्तुतकार्य्यस्येति।—अत्र नायिकाया अनुनयनमेव प्रस्तुतं, पुलके कण्टकारोपस्य न खलु तदुपयोगित्वमिति भावः; अनुसन्धीयते—प्रतीयते इत्यर्थः।

(ण) अधिकारूढ़वैशिष्ट्यं परिणाममाह, अयमपीति।—परिणामोऽपीत्यर्थः।

(त) वनेचराणामिति।—यत्र—हिमाद्रौ, रजन्यां—रात्रौ, दर्य्यः,—कन्दराः, एव गृहाणि तेषाम् उत्सङ्गेषु—अभ्यन्तरेषु, निषक्ताः,—पतिताः, भासः,—प्रभाः यासां ताः, ओषधयः,—लताविशेषाः, वनितासखानां—सभार्य्याणां, वनेचराणां—वनवासिनाम्, अतैलपूराः,—नास्ति तैलस्य पूरः,—पूरणं येषु तथाविधाः, तैलरहिता इत्यर्थः, सुरतप्रदीपाः,—शृङ्गारकालिकदीपविशेषा इत्यर्थः, भवन्ति। उपेन्द्रवज्रा वृत्तम्। कुमारसम्भवस्येदं पद्यम्।

(थ) सन्देहालङ्कारमाह, सन्देह इति।—प्रकृते—प्रस्तुते, उपमेये इत्यर्थः, प्रतिभोत्थितः,—प्रतिभया—कविप्रौढ़ोक्त्या, उत्थितः,—सिद्धः, न तु वस्तुस्वभावसिद्धः इति भावः, अन्यस्य—उपमानस्य, संशयः,—सन्देहः, सन्देहः,—तदाख्यालङ्कार इत्यर्थः। "ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः" इति काव्यप्रकाशदर्शनात्, "अनन्वयससन्देहौ उपमास्वेव दर्शितौ" इति दण्डिदर्शनाच्च अस्य ससन्देह इति संज्ञान्तरम्; सन्देह इति संज्ञा तु,—"उपमानोपमेयसंशयः सन्देहः" इति वामनदर्शनादवसीयते। केचित्तु काव्यप्रकाशकारिकामेवं व्याकुर्व्वन्ति,—"भेदोक्तौ तु ससन्देहो भेदानुक्तौ तु संशयः" इत्यलङ्कारद्वयमेतदिति वदन्ति, तन्न; तथाऽर्थकत्वे विशिष्यं दुर्लभं स्यात्। उपमानोपमेययोर्भेदोक्तौ ससन्देहः, तदनुक्तौ सत्यां संशयः, इत्यर्थौ यदि क्रियते, तदा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कोऽप्यधिकोऽपि भिन्नोऽयं सन्देहप्रकारः” इति वदन्ति स्म, तदप्ययुक्तम्; निगीर्णस्वरूपस्यान्यतादात्म्यप्रतीतिर्हि सम्भावना, तस्याश्चात्र स्फुटतया सद्भावात् नुशब्देन च इवशब्दवत् तस्या द्योतनादुत्प्रेक्षैवेयं भवितुं युक्ता। अलमदृष्टसन्देहप्रकारकल्पनया। (भ)

“यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते
तदाचष्टे लोकः शशक इति नो मां प्रति तथा।
अहं त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणी-
कटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम्॥” (म)

---

(भ) अन्ये त्विति।—एककोऽप्यधिकोऽपि—अधिकबलैककोटिरपीत्यर्थः, अत्र तु व्यापनरूपा कोटिः हीनबला, रञ्जनरूपा कोटिरधिकबलेति द्रष्टव्यम् [“एककोऽप्यधिकेऽपि” इति पाठे, भावप्रधानो निर्देशः; एककोटेरुत्कटत्वेऽपीति तदर्थः]। निगीर्णस्वरूपस्य—अधःकृतस्वरूपस्य विषयस्य, तस्य विच्छित्तिविशेषं प्रत्यकिञ्चित्करत्वमेव, न तु शब्दानुपात्तत्वमात्रं, तथा सति “ऊरुः कुरङ्गकदृशः” इत्यादौ विषयोपादानादव्याप्तिः स्यात्; अन्येन—अप्रकृतेन, यत् तादात्म्यम्—अभेदः, तस्य प्रतीतिः,—अवबोधः, उपमानतादात्म्यारोप इत्यर्थः, प्रतीतिरत्र निर्द्धारणरूपा प्रत्येतव्या, तेनातिशयोक्तिव्युदासः। तस्याः,—सम्भावनायाः, स्फुटतया—स्पष्टतया। द्योतनात्—प्रकाशनात्। अदृष्टेति।—अदृष्टस्य—क्वचिदपि ग्रन्थे अनालोकितस्य, सन्देहप्रकारस्य कल्पनया—रचनया।

(म) यदिति।—राजस्तुतिरियम्। चन्द्रान्तः,—चन्द्रस्य मध्ये, यत् एतत् वस्तु इति शेषः, जलदलवलीलां—मेघखण्डविलासं, वितनुते—विस्तारयति, लोकः,—जनः, तत्—वस्तुरित्यर्थः, शशक इति आचष्टे—कथयति, मां प्रति तथा—शशकवचनमित्यर्थः, नो, प्रतिभातीति शेषः, तद्वस्तुनः शशकवचनं न ममेत्यर्थः, अहन्तु इन्दुं—चन्द्रं, तव अरीणां—शत्रूणां, विरहाक्रान्ता—विरहेण—कान्तविच्छेदेन, आक्रान्ता—अभिभूता इति यावत्, विरहिण्यः इत्यर्थः, याः तरुण्यः,—युवतयः, तासां कटाक्षोल्कापातेन—कटाक्षाः,—अपाङ्गवीक्षणानि एव उल्काः,—नभोमण्डलात् पतन्त्यः रेखाकाराः तेजःपदार्थविशेषाः, तासां पातेन—पतनेन, अङ्गे इति शेषः, यत् व्रणः—क्षतविशेषः, तस्य किणः,—चिह्नविशेषः, एव कलङ्कः,—लाञ्छनं, तेन अङ्किता—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत्यत्र 'मन्ये'शब्दप्रयोगेऽपि उक्तरूपायाः सम्भावनाया अप्रतीतेर्वितर्कमात्रं, (य) नासावपह्नवोत्प्रेक्षा।

**सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते ॥७१४॥ (र)**

विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः; अस्य च उत्प्रेक्षायां विषयिणोऽनिश्चितत्वेन निर्देशात् साध्यत्वम्, इह तु निश्चितत्वेनैव प्रतीतिरिति सिद्धत्वम्। विषयनिगरणं च उत्प्रेक्षायां विषयस्याधःकरणमात्रेण। (ल) इहापि मुखं द्वितीयश्चन्द्रः इत्यादौ, यदाहुः,—

---

चिह्निता, तनुः,—शरीरं यस्य तादृशमिव, मन्ये—सम्भावयामि। शिखरिणी वृत्तम्।

—(य) उक्तरूपाया इति।—उत्कटैककोटिकायाः इत्यर्थः। वितर्कमात्रं—सम्भावनमात्रं, प्रौढोक्तिसिद्धकोट्युपस्थितिमात्रम् इत्यर्थः, सामान्येन सम्भावनं, न तु उत्कटैककोटिकत्वेनेति भावः; तथा च,—"यदेतत्" इत्यनेन किमप्यनिर्दिष्टस्वरूपं वस्तु प्रस्तुतं, तस्यात्र शशरूपत्वं प्रतिषिध्य किणकलङ्करूपत्वं व्यवस्थापितं, न तु उपमानतादात्म्यं सम्भावितम् इति भावः।

—(र) अतिशयोक्तिमाह, सिद्धत्वे इति।—अध्यवसायस्य—अध्यासस्य, सिद्धत्वे—सिद्धवत् निर्देश्यत्वे, निश्चितविषयिग्राहकत्वे इत्यर्थः, निश्चयरूपत्वे इति पर्यवसितोऽर्थः, अतिशयोक्तिः निगद्यते—कथ्यते। सिद्धवन्निर्दिष्टोऽध्यवसायः, स एवातिशयोक्तिरिति फलितार्थः।

(ल) अध्यवसायपदार्थमाह, विषयेति।—विषयस्य—प्रकृतस्य, निगरणेन—अधःकरणेन, विषयिणः,—आरोप्यमाणस्य, अध्यवसायप्रकारस्येत्यर्थ, अभेदप्रतिपत्तिः,—अभेदज्ञानं, तादात्म्यारोप इति यावत्, विषयादिति शेषः। सिद्धत्वे इत्यस्य व्याहत्तिमाह, अस्य चेति।—अध्यवसायस्य चेत्यर्थः; अनिश्चितत्वेन—अनिर्द्धारितत्वेन, निर्देशात्—आरोपात्, विषयीकरणात् इति भावः, साध्यत्वं—साधनीयत्वं, व्यक्ताप्रामाण्यत्वम् इत्यर्थः। प्रतीतिरिति।—विषयिणः प्रतीतिरित्यभिप्रायः। ननु शब्देनानुपादानं निगरणम्, एवं सति उक्तप्रस्तुतायासुत्प्रेक्षायाम् अतिशयोक्तौ चोक्तविषयायां कथं लक्षणगमनम्? अत आह, निगरणञ्चेति।—अधःकरणमात्रेण—विच्छित्तिविशेषं प्रत्यकिञ्चित्करत्वेनापकर्षमात्रेण, न तु शब्दानुपादानेनापि इति ज्ञेयम्।

C. M. V. Sharma Bahauddin

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"विषयस्यानुपादानेऽप्युपादानेऽपि सूरयः।
अधःकरणमात्रेण निगीर्णत्वं प्रचक्षते।" इति। (व)

**भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्य्ययौ।**
**पौर्वापर्य्यात्ययः कार्य्यहेत्वोः सा पञ्चधा ततः॥७१५॥**(श)

तद्विपर्य्ययौ—अभेदे भेदः, असम्बन्धे सम्बन्धः। सा—अतिशयोक्तिः। अत्र भेदेऽभेदो यथा मम,—

"कथमुपरि कलापिनः कलापो
विलसति तस्य तलेऽष्टमीन्दुखण्डम्।
कुवलययुगलं ततो विलोलं
तिलकुसुमं तदधः प्रवालमस्मात्॥" (ष)

(व) विषयस्येति।—सूरयः,—विद्वांसः, विषयस्य—प्रस्तुतस्य, अनुपादाने—अप्रयोगे, अपि तथा उपादाने—प्रयोगे, अपि अधःकरणमात्रेण—अपकर्षमात्रेण, विषयस्येति शेषः, निगीर्णत्वं—निगरणं, प्रचक्षते—वदन्ति; निगरणमेवाधःकरणमिति फलितार्थः।

(श) तद्भेदानाह, भेदे इति।—सा—अतिशयोक्तिः, भेदेऽपि अभेदः,—भेदे सत्यपि अभेदप्रतिपत्तिरित्यर्थः, एवमग्रेऽपि; सम्बन्धेऽपि असम्बन्धरूपा, तद्विपर्य्ययौ—तयोर्विपरीतौ, अभेदेऽपि भेदरूपा, असम्बन्धेऽपि सम्बन्धरूपा इत्यर्थः, तथा कार्य्यहेत्वोः,—कार्य्यकारणयोः, पौर्वापर्य्यात्ययः,—पौर्वापर्य्यविपर्य्यासरूपा चेति भावः, ततः—तेभ्यः भेदेभ्यः, पञ्चधा—पञ्चप्रकारा, भवतीति शेषः। इह पौर्वापर्य्यात्ययः द्विविधः, यथा,—पूर्व्वोत्पन्ने परोत्पन्नत्वारोपः, परोत्पन्ने पूर्वोत्पन्नत्वारोपः इत्युभयस्वरूपः एकः प्रकारः, क्रमोत्पन्ने च समकालोत्पन्नत्वारोपः इति द्वितीयः प्रकारः। अलङ्कारसर्व्वस्वकारा अपि,—"अध्यवसितप्राधान्ये त्वतिशयोक्तिः" इत्यभिधाय "अध्यवसाने त्रयं सम्भवति,—स्वरूपं विषयी विषयी च। विषयस्य हि विषयिणाऽन्तर्निगीर्णत्वे अध्यवसायस्य स्वरूपोत्थानं, तत्र साध्यत्वे स्वरूपप्राधान्यं, सिद्धत्वे तु अध्यवसितत्वप्राधान्यं, विषयप्राधान्यमध्यवसाये नैव सम्भवति, अध्यवसितप्रधाना एव अतिशयोक्तिः। अस्याश्च पञ्च प्रकाराः,—भेदे अभेदः, अभेदे भेदः, सम्बन्धे असम्बन्धः, असम्बन्धे सम्बन्धः, कार्य्यकारणपौर्वापर्य्यविध्वंसश्च" इत्याहुः।

(ष) भेदे अभेदमुदाहरति, कथमिति।—नायिकावर्णनमिदम्। उपरि—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र कान्ताकेशपाशादेः (ख) मयूरकलापादिभिरभेदेनाध्यवसायः। यथा वा,—"विश्लेषदुःखादिव बद्धमौनम्"। अत्र चेतनगतमौनित्वमन्यत्, अचेतनगतं च अन्यत्, इति द्वयोर्भेदेऽप्यभेदः। (ह) एवम्, (क)—

"सहाधरदलेनास्या यौवने रागभाक् प्रियः॥"

अत्राधरस्य रागो लौहित्यं, प्रियस्य रागः प्रेम, द्वयोरभेदः। अभेदे भेदो यथा,—

"अन्यदेवाङ्गलावण्यमन्याः सौरभसम्पदः।
तस्याः पद्मपलाशाक्ष्याः सरसत्वमलौकिकम्॥" (ख)

---

शिरसीत्यर्थः, कलापिनः,—मयूरस्य, कलापः,—बर्हं, "कथम्" इति सर्व्वत्र योज्यम्; कलापस्य पुच्छवर्त्तित्वं सर्व्वत्र दृष्टम्, इह तु उपरि कथमिति भावः, (केशवर्णनमिदम्) तस्य—कलापस्य, तले—अधः, अष्टम्यास्तिथेः इन्दुखण्डं—चन्द्रशकलम्, अष्टम्यां तिथौ हि चन्द्रः अष्टाभिः कलाभिः सम्पन्नो भवति, तस्मात् अर्द्धचन्द्र इत्यर्थः, उपचारात् तत्सदृशमिति भावः, विलसति—विराजते, (भालवर्णनमिदम्) ततः,—तस्मात्, अध इति शेषः, विलोलं—चपलं, कुवलययुगलं—नीलोत्पलद्वयं, राजते इति शेषः, (नेत्रद्वयवर्णनमिदम्) तदधः,—तस्मात् अधः, नेत्रोत्पलतले इत्यर्थः, तिलकुसुमं, विराजते इति शेषः, (नासिकावर्णनमिदम्) अस्मात्—तिलकुसुमात्, अध इति शेषः, प्रवालं—नवपल्लवं, भातीति शेषः, (ओष्ठवर्णनमिदम्)। अत्र कान्ताकेशपाशादिर्भिन्नोऽपि मयूरकलापाद्यभेदेनाध्यवसीयते।

(ख) अत्रेति।—केशपाशादेः इत्यादिपदेन भालनेत्रनासाऽधरग्रहणम्।

(ह) सादृश्यनिबन्धनाऽभेदारोपरूपातिशयोक्तिमुदाहृत्य एकशब्दप्रतिपाद्यत्वनिबन्धनाऽभेदारोपरूपामुदाहरति,—यथा वेति। अत्र युगपद्वृत्तिद्वयस्य स्वार्थोपस्थापकत्वाङ्गीकारेण शक्यलक्ष्ययोरेकदैव एकशब्दोपस्थाप्यत्वम् इत्यभिप्रायेणाह, अत्रेति।—चेतनगतं मौनित्वं वचनाभावरूपम्, अचेतनगतञ्च ध्वन्यभावरूपम्; आद्ये शक्तिः, द्वितीये लक्षणा, ताभ्यामेकदैव उभयमुपस्थाप्यते श्लेषेण।

(क) एकशब्दप्रतिपाद्यत्वनिबन्धनाभेदारोपरूपामतिशयोक्तिमुदाहरति, एवमिति।—अत्र द्वयोरप्येकत्वनिबन्धनशाब्दसाधनत्वरूपाऽतिशयोक्तिरवसेया।

(ख) अभेदे भेदमुदाहरति, अन्यदिति।—तस्याः पद्मपलाशाक्ष्याः,—कमलदल-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सम्बन्धेऽसम्बन्धो यथा,—

"अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः ?
शृङ्गारैकरसः स्वयं नु मदनः ? मासो नु पुष्पाकरः ? ।
वेदाभ्यासजड़ः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ? ॥"(ग)

लोचनायाः, अङ्गलावण्यं—देहकान्तिः, अन्यदेव—असाधारणमेवेत्यर्थः, सौरभसम्पदः, —गुणपरम्पराः, अन्याः,—असाधारण्यः इत्यर्थः, एवेति पूर्व्वतोऽन्वेति ; तथा सरसत्वं —रसिकत्वं, रसचोद्गलमित्यर्थः, अलौकिकं—लोकातीतम्, अन्यदेवेति यावत्। अत्र अभिन्नमपि अङ्गलावण्यादिकं भिन्नत्वेनाध्यवसीयते ।

(ग) सम्बन्धे असम्बन्धमुदाहरति, अस्या इति ।—उर्वशीं दृष्ट्वा पुरूरवसो वितर्कवर्णनमिदम् । अस्याः,—उर्वश्याः, सर्गस्य—उत्पत्तेः, विधिः,—विधानं तत्र, सृष्टिकर्म्मणीत्यर्थः, चन्द्रः नु ( इदं वितर्के ) कान्तिं—शोभां, सौन्दर्य्यमिति यावत्, प्रददातीति तथाभूतः, ( चन्द्रस्य कान्तिमयत्वात् कान्तिप्रदत्वं सम्भाव्योक्तम् ) प्रजापतिः,—स्रष्टा, अभूत् ? चन्द्राख्येन प्रजापतिना सौन्दर्य्यमुत्पादितमिति भावः ; शृङ्गारस्य एकः,—मुख्यः असौ रसो यस्य तथाविधः, मदनः,—कामदेवः, स्वयं नु —साक्षात् खलु, प्रजापतिरभूत् इत्यन्वयः ; अन्यथा कथमेवं कुसुमवत् अङ्गानां सौकुमार्य्यमिति भावः ; पुष्पाणामाकरः तथाभूतः,—वासन्तः, चैत्र इत्यर्थः, मासः नु "प्रजापतिरभूत्" इति पूर्वतोऽन्वेति ; यद्वा,—अस्याः,—उर्वश्याः, सर्गविधौ चन्द्रो नु कान्तिप्रदः,—सौन्दर्य्याधायकः प्रजापतिरभूत् ? किंवा शृङ्गारमात्रपरः खलु मदनः कामः कान्तिप्रदः प्रजापतिरभूत् ? आहोस्वित् पुष्पाकरः उपचाराच्चैत्राख्यः खलु मासः कान्तिप्रदः प्रजापतिरभूत् ? ( सौरभ्यसौकुमार्य्यास्पदत्वमत्र हेतुर्बोध्यः, ) अस्य प्रसिद्धत्वान्न निर्हेतुकत्वदोषः ; यद्वा,—"शृङ्गारैकरसः" इति चैत्रस्यापि विशेषणम् ; तस्य वासन्तमासत्वात् वसन्तस्य च शरोद्दीपकत्वात् । ननु प्रसिद्धं प्रजापतिं तथाऽनवधार्य्य किमन्यमेवं कल्पसे ? इत्याशङ्क्याह, वेदेति ।—वेदानाम् अभ्यासेन—पुनःपुनरनुशीलनेन, परमतात्पर्य्यपर्य्यालोचनेनेत्यर्थः, जड़ः,—कर्त्तव्यविमूढ़ः, विषयोपभोगाचतुर इति यावत्, कामव्यापारानभिज्ञ इति भावः, अत एव विषयेभ्यो व्यावृत्तं—निवृत्तं, कौतूहलम्—औत्सुक्यं यस्य तथाभूतः, पुराणः,—वृद्धः, अत एव विकल इति यावत्, मुनिः—मननशीलः, नारायण ऋषिः इत्यर्थः, [ एतेन सृष्टिकर्म्मणि चित्तैकाग्र्यत्वं नास्तीति सूचितम्, ] तद्विनैतादृशरूपसृष्टिर्न भवतीति भावः ; इदम्—ईदृशं, मनोहरं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र पुराणप्रजापतिनिर्माणसम्बन्धेऽप्यसम्बन्धः। (घ)

असम्बन्ध सम्बन्धो यथा,—

"यदि स्यान्मण्डले सक्तमिन्दोरिन्दीवरद्वयम्।
तदोपमीयते तस्या वदनं चारुलोचनम्॥" (ङ)

अत्र यद्यर्थबलादाहृतेन सम्बन्धेन सम्भावनया सम्बन्धः। कार्य्यकारणयोः पौर्व्वापर्य्यविपर्य्ययश्च द्विधा भवति;—कारणात् प्रथमं कार्य्यस्य भावे, द्वयोः समकालत्वेन च। (च) क्रमेण यथा,—

—सौन्दर्य्यातिशयेन सर्वेषां चेतोवृत्तेराकर्षकमिति भावः, रूपं निर्मातुं—रचयितुं, कथं नु—केन प्रकारेण, केनोपायेन वा, प्रभवेत्?—समर्थो भवेत्? पुरा किल नारायणं भगवन्तं तपःपरं विलोक्य, तपसा विजित्य स्वर्गाधिपत्यमयं कामयते इति वस्तैः देवैस्तं तपसो निवर्त्तयितुं सवसन्तास्परसः कामदेवः प्रहितः, स च तत्सविधे वसन्तेन स्वप्रभावे प्रदर्शिते अप्सरसः प्रवर्त्तितवान्, ताश्च स्वविलासवैभवेन तं मोहयितुं प्रवृत्ता अपि यदा न प्रभवन्ति स्म, तदा भीतास्ताः सन्तोषयितुं भगवान् नारायणः स्वकीयादूरोरनेका अद्भुतसौन्दर्य्या अप्सरस उद्भाव्य स्म गृहीतुमाज्ञप्तवान्, ताश्च तासां यामिकामादाय निर्जग्मुः, सैवेयमुर्व्वशीति पौराणिकी गाथाऽत्रानुसन्धेया। इदं काव्यप्रकाशे शुद्धसन्देहोदाहरणत्वेन उपन्यस्तम्; तन्मते विधेर्निर्मातृत्वव्यावृत्तिरपि संशयितैवेति न निश्चयान्तत्वमस्य इति ज्ञेयम्। शार्दूलविक्रीड़ितं वृत्तम्। विक्रमोर्व्वश्याः पद्यमेतत्।

(घ) अत्र पुराणेति।—एवञ्च पुराणमुनेर्निर्मातृत्वेऽपि तदनिर्मातृत्वसम्बन्धेनाध्यवसानात् सम्बन्धातिशयोक्तिरियम्।

(ङ) असम्बन्धे सम्बन्धमुदाहरति, यदीति।—यदि इन्दोः,—चन्द्रस्य, मण्डले—बिम्बे, इन्दीवरद्वयं—नीलोत्पलयुगलं, सक्तं—युक्तं, स्यात्, तदा तस्याः,—कान्ताया इत्यर्थः, चारुलोचनं—चारुणी—मनोहरे, लोचने—नेत्रे यत्र तादृशं, सुन्दरनयनसमन्वितमित्यर्थः, वदनम् उपमीयते, सेन्दीवरद्वयेन चन्द्रमण्डलेनेति भावः। इयमद्भुतोपमेति दण्डी।

(च) नन्विन्दीवरद्वयसेन्दुमण्डले व्यतिरेकप्रतीतिरेव जायते, कथं सम्बन्धाध्यवसायः? इत्यत आह, अत्र यद्यर्थेति।—यदिशब्दस्य अर्थबलात्—अर्थसामर्थ्यात्,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"प्रागेव हरिणाक्षीणां चित्तमुत्कलिकाकुलम् ।
पश्चादुद्भिन्नबकुलरसालमुकुलश्रियः ॥" (छ)

"सममेव समाक्रान्तं द्वयं द्विरदगामिना ।
तेन सिंहासनं पित्र्यं मण्डलञ्च महीक्षिताम् ॥" (ज)

इह केचिदाहुः,—"केशपाशादिगतो लौकिकोऽतिशयो-

---

आहृतेन—आरोपितेन, सम्बन्धेन—पदार्थेन, इन्दीवरसंयोगेन इत्यर्थः, सम्भावनया—अध्यवसायेन, सम्बन्धः,'गृह्यते' इति शेषः ; इन्दीवरासम्बद्धमपि वदनं तत्सम्बद्धत्वेनाध्यवसीयते इति भावः। यद्यर्थप्रयोगे एवायं प्रकारः सम्भवति, आहार्य्य एव सम्बन्धाध्यवसायः इत्याशयः। अत एवोक्तं काव्यप्रकाशे,—"यद्यर्थोक्तौ च कल्पनम्" इति। द्वयोः,—कार्य्यकारणयोः, समकालत्वेन—समकालोत्पन्नत्वेन इत्यर्थः।

(छ) कारणात् प्रथमं कार्य्यस्य भावमुदाहरति, प्रागेवेति।—हरिणाक्षीणां—मृगलोचनानां, चित्तं—चेतः, प्रागेव—पूर्वमेव, उत्कलिकया—उत्कण्ठया, आकुलं—व्याप्तं, जातमिति शेषः। पश्चात् उद्भिन्नाः,—प्रफुल्लाः, वकुलानां रसालानाम्—आम्राणाञ्च, मुकुलानां श्रियः,—शोभाः, यद्वा,—उद्भिन्नानाम्—उत्फुल्लानां, वकुलानामाम्रमुकुलानाञ्च, श्रियः, जाता इति शेषः। अत्रोत्कण्ठायाः कारणात् वकुलरसालमुकुलश्रीणामुद्भेदात् प्राक् कार्य्यस्य उत्कण्ठारूपस्य उत्पत्तिः। प्रफुल्लवकुलरसालादीन् अवलोक्य हरिणाक्षीणां मदनोद्रिक्ततया चेतोव्याकुलत्वं युक्तं, किन्तु आसां प्रफुल्लवकुलाद्यवलोकनतः पूर्व्वमेव यज्जातं, तेन कार्य्यकारणयोः स्फुटं पौर्व्वापर्य्याभाव इति तन्मूलेयमतिशयोक्तिरिति भावः।

(ज) सममिति।—द्विरदः,—गजः, तद्वत् गमनशीलेन, तेन—रघुणा इत्यर्थः, पित्र्यं—पितृसम्बन्धि, पितुरागतमित्यर्थः, सिंहासनं महीक्षितां—राज्ञां, मण्डलं—चक्रञ्च ["अखिलं चारिमण्डलम्" इति पाठे—अखिलं—समस्तम्, अरीणां—शत्रूणां, मण्डलं—राज्यञ्चेत्यर्थः] इति द्वयं सममेव—एककालमेव, समाक्रान्तम्—आरूढं वशीकृतञ्च, न तु राज्ञो विजित्य राजासनमधिष्ठितम्। [अनयोः कारणस्यात्यन्तशीघ्रकारित्वं व्यज्यते]। केचित्तु,—"सममेवेत्यादिद्वितीयप्रकारः "धुनोति चासिं तनुते च कीर्त्तिम्" इतिवत् समुच्चयालङ्कारस्यैव विषयः" इति वदन्ति, तन्न ; विरूपशब्दाभ्यामेव क्रिययोरुपादाने हि समुच्चयस्वीकारात् ; एवञ्च राजमण्डलाक्रमणरूपस्य कारणस्य राजासनाधिरोहणरूपस्य कार्य्यस्य च एककालिकत्वाभिधानात् पूर्व्वापर्य्यव्युत्क्रममूलेयमतिशयोक्तिः। रघुवंशस्येदं पद्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ऽलौकिकत्वेनाध्यवसीयते ; केशपाशादीनां कलापादिभिरध्यवसाये "अन्यदेवाङ्गलावण्यम्" इत्यादिप्रकारेष्वव्याप्तिर्लक्षणस्य" इति, तन्न ; तत्रापि ह्यन्यदङ्गलावण्यमन्यत्वेनाध्यवसीयते। तथा हि "अन्यदेव" इति स्थाने "अन्यदिव" इति पाठे अध्यवसायस्यासाध्यत्वमेवेत्युत्प्रेक्षाऽङ्गीक्रियते। "प्रागेव हरिणाक्षीणाम्" इत्यत्र वकुलादिश्रीणां प्रथमभाविताऽपि पश्चाद्भावित्वेनाध्यवसिता, अत एव अत्रापि इवशब्दप्रयोगे उत्प्रेक्षा। एवमन्यत्र, (झ)—

पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत्।
एकधर्माभिसम्बन्धः स्यात् तदा तुल्ययोगिता ॥७१६॥(ञ)

अन्येषाम्—अप्रस्तुतानां, धर्मः,—गुणक्रियारूपः। उदाहरणम्,—

"अनुलेपनानि कुसुमान्यबलाः
कृतमन्यवः पतिषु दीपशिखाः।

---

(झ) इह केचिदाहुरिति।—कलापादिभिरध्यवसाये 'विवचिते' इति शेषः, अन्यदेवाङ्गलावण्यमित्यादिप्रकारेषु अव्याप्तिर्लक्षणस्येति।—अन्यदेवेत्यत्र लावण्यान्तरस्य भिन्नत्वेन अध्यवसायरूपत्वासम्भवादिति भावः। एवमन्यत्रापि यथायथं ज्ञेयम्। अन्यदिति।—अतिशयप्रतीतये एतद्व्यतिरेकेण भेदः तत्र अध्यवसीयते इत्यर्थः। तथा हीति। —निरुक्ताध्यवसायस्वीकारे अनुभवसिद्धोत्प्रेक्षा न स्यात् इति भावः। अन्यदिवेति पाठे उत्प्रेक्षाऽङ्गीक्रियते, तन्न ; अत्र हि अन्यदङ्गलावण्यमन्यत्वेनाध्यवसितम्। वकुलादिश्रीणामिति।—एवमुत्कलिकायाः पश्चाद्भावितापि पूर्व्वभावित्वेनाध्यवसितेति बोध्यम्। एवमिति।—उक्तदिशा इत्यर्थः, अन्यत्र—उदाहरणान्तरेऽपि, तृतीयचतुर्थप्रकारयोरव्याप्तिद्वारो बोद्धव्यः इति भावः ; तथा हि,—तादृग्रूपस्य निर्म्माता विधिः अनिर्मातृत्वेन इन्दुमण्डलासक्तमिन्दीवरद्वयम् इन्दुमण्डलसक्तत्वेनाध्यवसीयते इति भावः।

(ञ) तुल्ययोगितामाह, पदार्थानामिति।—प्रस्तुतानां—प्रकृतानां, वा अन्येषाम्—अप्रस्तुतानां, पदार्थानां—विषयाणां, यदा एकधर्माभिसम्बन्धः,—एकेन धर्म्मेण—गुणक्रियाऽन्यतररूपेण, संयोगः भवेत्, तदा तुल्ययोगिता—तदाख्योऽलङ्कारः, स्यात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

समयेन तेन चिरसुप्तमनो-
भवबोधनं सममबोधिषत ॥" (ट)

अत्र सन्ध्यावर्णनस्य प्रस्तुतत्वात् (ठ) प्रस्तुतानामनुलेपनादीनाम् एकबोधनक्रियाऽभिसम्बन्धः ।

"त्वदङ्गमार्दवं द्रष्टुः कस्य चित्ते न भासते ।
मालतीशशभृल्लेखाकदलीनां कठोरता ॥" (ड)

(ट) क्रियारूपधर्म्मसम्बन्धमुदाहरति, अनुलेपनानीति ।—सन्ध्यावर्णनमिदम् । तेन समयेन—सन्ध्याकालेन, तमस्विना इति भावः, अनुलेपनानि—अङ्गरागद्रव्याणि, चन्दनादीनि इत्यर्थः, कुसुमानि—माल्यादीनि, तथा पतिषु—भर्त्तृषु, क्षतमन्यवः,—मानवत्य इत्यर्थः, अबलाः,—नार्य्यः, तथा दीपशिखा—दीपज्वालाश्चेत्येतानि सर्व्वाणि चिरं सुप्तस्य—पूर्वं सम्भस, मनोभवस्य—कामस्य, बोधनम्—उद्दीपनं, यस्मिन् कर्म्मणि तद्यथा तथा, तत्पूर्व्वकमित्यर्थः, इतरथा अनुलेपनादिबोधकस्य वैफल्यसम्भवाच्च इति भावः, समं—सहैव, अबोधिषत—बोधितानि । प्रमिताक्षरा वृत्तम् । तल्लक्षणं चोक्तं यथा,—"प्रमिताक्षरा सजससैः कथिता" इति । शिशुपालवधस्येदं पद्यम् ।

(ठ) अत्रेति ।—प्रस्तुतत्वात्—प्रस्तुते तमसि स्फुरद्रूपत्वात्, अनुलेपनादीनामपि प्रस्तुतत्वम् इत्यभिप्रायः, एवं हि गन्धमाल्यादीनां प्रस्तुतानामवबोधनरूपैकधर्म्मसम्बन्ध इति तुल्ययोगिता । एषा च,—गन्धमाल्यसम्पादनस्त्रीमनःप्रसाददीपशिखोत्पादनानाम् अबोधिषतेत्येकेन श्लिष्टशब्देनाभिधानात् श्लेषमूलाभेदाध्यवसायरूपाऽतिशयोक्तिरेका ; तथा सुप्तमनोभवबोधनमिति क्रियाविशेषणसामर्थ्यात् सममिति यौगपद्याभिधानाच्च मनोभवबोधनया कार्य्यकारणभूतयोस्तद्विपर्य्ययरूपा अपरा ; तदुभयापेक्षया गन्धमाल्यादीनां प्रस्तुतानामवबोधनरूपैकधर्म्मसम्बन्धात् तुल्ययोगिताभेदश्चेति सङ्करः इति मल्लिनाथादयः ।

(ड) गुणरूपधर्म्मसम्बन्धमुदाहरति, त्वदिति ।—तव अङ्गस्य मार्दवं—सौकुमार्य्यं, ["तदङ्गमार्दवम्" इति पाठान्तरम् ; तव,—तस्याः अङ्गानां मार्दवं—म्रदिमा, तत्तयोस्ताम् । "न लोकाव्ययनिष्ठाखलर्थतृनाम्" (२।३।६९ पा०) इति सूत्रेण षष्ठ्या निषेधात् द्वितीया । क्वचित् समस्तपाठोऽपि दृश्यते ] द्रष्टुः,—पश्यत इत्यर्थः, कस्य, जनस्य इति शेषः, चित्ते—मनसि, मालतीशशभृल्लेखाकदलीनां—जातीपुष्पचन्द्ररेखारम्भाकाण्डानामित्यर्थः, कठोरता—कार्कश्यं, न भासते ?—न प्रतिभाति ? अपि तु सर्व्वस्येत्यर्थः । अत्र मालत्यादीनाम् उपमानत्वेनाप्रस्तुतानां कठोरताऽऽत्मकेनैकेनैव गुणेन

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत्यत्र मालत्यादीनामप्रस्तुतानां कठोरतारूपैकगुणसम्बन्धः। एवम्,—

"दानं वित्तादृतं वाचः कीर्त्तिधर्मौ तथाऽऽयुषः।
परोपकरणं कायादसारात् सारमाहरेत्॥" (ढ)

अत्र दानादीनां कर्म्मभूतानां सारतारूपैकगुणसम्बन्धे एकाहरणक्रियासम्बन्धः।

**अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते।**
**अथ कारकमेकं स्यादनेकासु क्रियासु चेत्॥७१७॥(ण)**

सम्बन्धः। यत्तु "अत्र वर्णनीयतया नायिका प्रस्तुता, मालत्यादीनां तूपमानत्वेनाप्रस्तुतत्वम्" इत्युक्तं तर्कवागीशैः, तस्यायं भावः,—नायिकां प्रस्तूय मालत्यादीनामप्रस्तुतानां कठोरतारूपेण एकेन धर्मेण सम्बन्धः इति।

(ढ) गुणक्रियोभयाभिसम्बन्धे तुल्ययोगितामुदाहरति, दानमिति।—असारात्—ईषत्सारो यत्र तस्मादित्यर्थः, न तु न सारो यत्र तस्मात्, तथाऽसम्भवात्; वस्तुनः,—विषयात्, सारम्—उत्कृष्टांशम्, आहरेत्—सङ्गृह्णीयात्, तथा हि,—वित्तात्—धनात्, असारभूतादित्यर्थः, वित्तस्य दानैकप्रयोजनत्वात्, दानं, सारमिति सर्वत्रान्वेतव्यम्; असारायाः वाचः, वाचोऽसारत्वञ्च सत्यपरत्वाभावे, ऋतं—सत्यम्; आयुषः,—जीवनकालात्, असारादिति शेषः, कीर्त्तिधर्मौ; "येन कीर्त्तिर्धर्मो वा नोपार्जितस्तस्य जीवनं मरणादधमम्" इति नयेन जीवनस्य कीर्त्तिधर्म्मैकफलत्वं मूल्यम्। तथा कायात्—देहात्, परोपकरणं—परेषामुपकारम्, आहरेदित्यन्वयः, अन्यथाऽस्य वैफल्यं, "कायेन वाचा मनसा च ये नराः परोपकाराय सदैव दीक्षिताः। त एव धन्याश्च त एव जीविताः" इत्याद्युक्तदिशाऽवसेयम्।

(ण) दीपकमाह, अप्रस्तुतेति।—अप्रस्तुतप्रस्तुतयोः,—अप्रकृतप्रकृतयोः, एकधर्म्माभिसम्बन्धः इति पूर्व्वतोऽत्रानुवर्त्तनीयं, दीपकं—दीपयति—प्रकाशयति, प्रकृतार्थमुपात्तो धर्म्मोऽद्भुततां नयतीति तथोक्तम्; यद्वा,—दीप इव दीपकं [ संज्ञार्थे कन्। दीपतुल्यत्वं हि प्रस्तुताऽप्रस्तुतभासकत्वेन ज्ञेयम् ] निगद्यते। ननु "कमलमिव मुखं मनोज्ञम्" इत्यादौ अतिव्याप्तिः इति चेत्, न; साम्यवाचकपदाभावे सतीत्यस्य विवक्षणीयत्वात्; एवं वैधर्म्योक्त्यभावे सतीत्यपि बोध्यम्; तेन "त्वं समुद्रश्च दुर्वारौ महासत्त्वौ सतेजसौ। अयन्तु युवयोर्भेदः स जडात्मा पटुर्भवान्॥" इत्यादि-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्रमेण उदाहरणम्,—

"बलावलेपादधुनाऽपि पूर्व्ववत्
प्रबाध्यते तेन जगज्जिगीषुणा ।
सती च योषित् प्रकृतिश्च निश्चला
पुमांसमभ्येति भवान्तरेष्वपि ॥" (त)

अत्र प्रस्तुतायाः निश्चलायाः प्रकृतेरप्रस्तुतायाश्च सत्य योषित एकानुगमनक्रियासम्बन्धः ।

"दूरं समागतवति त्वयि जीवनाथे
भिन्ना मनोभवशरेण तपस्विनी सा ।
उत्तिष्ठति स्वपिति वासगृहं त्वदीयम्
आयाति याति हसति श्वसिति क्षणेन ॥" (थ)

---

व्यतिरेकालङ्कारे नातिव्याप्तिः । प्रकारान्तरेण दीपकमाह, अथेति ।—अथ—किंवा, चेत्—यदि, अनेकासु क्रियासु एकं कारकं सम्बद्धं स्यात्, तदाऽपि दीपकं—स्यादित्यर्थः ।

(त) प्रथमं दीपकमुदाहरति, बलेति ।—जिगीषुणा—जयेच्छुना, तेन—शिशुपालेन इत्यर्थः, बलावलेपात्—सामर्थ्यगर्वात्, अधुनाऽपि—अस्मिन् जन्मनि अपि, पूर्व्ववत्—पूर्व्वजन्मनीव, जगत् प्रबाध्यते—प्रपीड्यते ; तथा हि,—सती—साध्वी, योषित्—स्त्री, च निश्चला—सुदृढ़ा, कदापि अनपायिनीत्यर्थः, प्रकृतिश्च—स्वभावश्च, [ अत्र चकाराधिक्यं समुच्चयार्थम्, एतेन प्रस्तुतायाः प्रकृतेः अप्रस्तुतायाः सत्याश्च "अभ्येति" इत्येकया क्रियया सम्बन्धः सूचितः ] भवान्तरेषु—जन्मान्तरेषु, अपि पुमांसं—जन्मान्तरीणाश्रयभूतमिति भावः, अभ्येति—प्राप्नोति । तथा च मनुः,—"पतिं या नाभिचरति मनोवाक्कायसंयता । सा भर्त्तुर्लोकमाप्नोति सद्भिः साध्वीति चोच्यते ॥" इति । ["सतीव योषित् प्रकृतिः सुनिश्चला" इति शिशुपालवधधृतपाठे उपमानोपमेयपुरस्कृतोऽर्थान्तरन्यासालङ्कारः ] । वंशस्थविलं वृत्तम् । शिशुपालवधस्येदं पद्यम् ।

(थ) द्वितीयं दीपकमुदाहरति, दूरमिति ।—दूत्या नायकं प्रत्युक्तिरियम् । जीवनाथे—प्राणवल्लभे, त्वयि—भवति इत्यर्थः, दूरं—देशान्तरमित्यर्थः, समागतवति—प्रस्थितवति सति, सा तपस्विनी—वराकी, मनोभवशरेण—कामबाणेन, भिन्ना—विद्धा, सती क्षणेन उत्तिष्ठति, स्वपिति—निद्राति, त्वदीयं—तव इत्यर्थः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इदं मम। अत्रैकस्या नायिकाया उत्थानाद्यनेकक्रियासम्बन्धः।

अत्र च गुणक्रिययोरादिमध्यावसानसद्भावेन त्रैविध्यं न लक्षितम्। तथाविधवैचित्र्यस्य सर्व्वत्रापि सहस्रधा सम्भवात्।

**प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः।**
**एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक्॥७१०॥ (द)**

यथा,—

"धन्याऽसि वैदर्भि! गुणैरुदारैः
यया समाकृष्यत नैषधोऽपि।
इतः स्तुतिः का? खलु चन्द्रिकायाः
यदब्धिमप्युत्तरलीकरोति॥" (ध)

---

वासगृहम् आयाति—आगच्छति, याति—गच्छति, हसति, श्वसिति—निश्वासान् त्यजति। ["जीवनाथ" इति पाठान्तरं तथात्वे,—हे जीवनाथ! इति सम्बुद्धिः]। वसन्ततिलकं वृत्तम्। यथा वा,—"खिद्यति कूणति वेल्लति, विचलति निमिषति विलोकयति तिर्य्यक्। अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने॥" अत्रार्य्यागीतिश्छन्दः।

(द) प्रतिवस्तूपमामाह, प्रतीति।—गम्यं—प्रणिधानवेद्यं, साम्यं—सादृश्यं ययोः तादृश्योः, प्रतीयमानोपमानोपमेयभावयोः इत्यर्थः, वाक्ययोः,—वाक्यार्थयोः; (तेन "पद्मं मनोज्ञं रुचिरः शशाङ्कः" इत्यादौ नातिव्याप्तिः, तत्र वाक्यार्थयोरुपमानोपमेयभाव प्रत्ययाभावात्। "प्रकाशते मुखं तस्याश्चन्द्रमा दीप्यते यथा" इत्याद्युपमावारणाय गम्येति; न चात्र प्रागुक्तरीत्यैकवाक्यत्वमेवेति वाच्यम्, अत्र गम्य इत्युपादानादेव तत्र तथा कल्पनात्; अन्यथा भिन्नवाक्ये उपमाप्रसक्त्यभावेन प्रतिवस्तूपमैव न स्यात्)। दृष्टान्तवारणायाह, एकोऽपीति।—एकोऽपि ["एकरूपः क्वचित् क्वापि भिन्नः साधारणो गुणः" इत्युक्तदिशा प्राप्तस्य भिन्नसामान्यधर्म्मस्य व्यवच्छेदः पृथग्भिन्नशब्दाभ्यां, तेन दीपकस्य व्यवच्छेदः] सामान्यः,—साधारणः, धर्म्मः,—गुणक्रियारूपः, पृथक्—पर्य्यायशब्देन, यत्र निर्दिश्यते, सा प्रतिवस्तूपमा—प्रतिवस्तु—प्रत्यर्थम्, उपमा यस्यां तथाभूता, स्यात्।

(ध) धन्याऽसीति।—दमयन्तीं प्रति हंसस्योक्तिरियम्। हे वैदर्भि!—विदर्भ-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र समाकर्षणमुत्तरलीकरणञ्च क्रिया एकैव, पौनरुक्त्य-निरासाय भिन्नवाचकतया निर्दिष्टा। इयं (न) मालयाऽपि दृश्यते। यथा,—

"विमल एव रविर्विशदः शशी
प्रकृतिशोभन एव हि दर्पणः।
शिवगिरिः शिवहाससहोदरः
सहजसुन्दर एव हि सज्जनः॥" (प)

अत्र विमलविशदादिरर्थत (फ) एक एव।

वैधर्म्येण (ब) यथा,—

---

राजनन्दिनि! दमयन्ति! त्वं धन्याऽसि—साधुवादार्हाऽसीत्यर्थः, यया, त्वयेति शेषः, नैषधोऽपि,—निषधाधिपः नलोऽपि, उदारैः,—महद्भिः, गुणैः,—सौन्दर्यादिभिः, समाकृष्यत—सम्यक् आकृष्ट इत्यर्थः, [समाकर्षणक्रियायाः करणत्वोपयोगितया गुणपदं श्लिष्टं, तेन गुणैरिव गुणैरित्युपमा व्यज्यते इति बोध्यम्] चन्द्रिकायाः,—ज्योत्स्नायाः, इतः,—अस्मात् अधिका, स्तुतिः,—महिमा, का खलु? यत् अब्धि-मपि—समुद्रमपि, उत्तरलीकरोति—चपलयति। उपजातिः वृत्तम्। इदं नैषधीय-चरितस्य पद्यम्।

(न) पौनरुक्त्येति।—कथितपदत्वदोषनिराकरणायेत्यर्थः, भिन्नवाचकतया—विभिन्नवाचकत्वेन। इयं—प्रतिवस्तूपमा इत्यर्थः।

(प) विमल इति।—रविः,—सूर्य्यः, विमलः,—स्वच्छः, प्रकाशमय इति यावत्, एव, शशी—चन्द्रः, विशदः,—उज्ज्वलः, दर्पणः,—मुकुरः, प्रकृतेः,—स्वभा-वात्, शोभनः एव, शिवस्य गिरिः,—पर्व्वतः, कैलास इति यावत्, शिवस्य हासस्य सहोदरः,—सदृशः, सज्जनः,—सत्पुरुषः, सहजसुन्दरः,—प्रकृत्या साधुः एव, भव-तीति शेषः। यथा वा,—"यदि दहत्यनलोऽत्र किमद्भुतं! यदि च गौरवमद्रिषु किं ततः। लवणमम्बु सदैव महोदधेः, प्रकृतिरेव सतामविषादिता" इति।

(फ) नन्वत्र प्रतिवाक्यं धर्मभेद एव, कथं प्रतिवस्तूपमा? इत्यत आह, अत्रेति।—अर्थतः,—तात्पर्य्यात्; विमलादिपदानां विभिन्नार्थवाचकत्वेऽपि पर्य्यवसाने तात्पर्य्यबलादैमल्यरूपैकार्थबोधकत्वमिति भावः।

(ब) वैधर्म्येणेति।—विपरीतधर्मेणेत्यर्थः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"चकोर्य्य एव चतुराश्चन्द्रिकापानकर्म्मणि।
विनाऽवन्तीर्न निपुणाः सुदृशो रतनर्म्मणि॥" (भ)

**दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिविम्बनम्॥७१९॥ (म)**

सधर्म्मस्येति प्रतिवस्तूपमाव्यवच्छेदः। अयमपि (य) साधर्म्य-वैधर्म्याभ्यां द्विधा। क्रमेण उदाहरणम्,—

"अविदितगुणाऽपि सत्कवि-
भणितिः कर्णेषु वमति मधुधाराम्।
अनधिगतपरिमलाऽपि हि
हरति दृशं मालतीमाला॥" (र)

(भ) चकोर्य्य इति।—चकोर्य्यः एव चन्द्रिकायाः—उपचारात् चन्द्रमण्डलात् क्षरन्त्याः सुधायाः, पानकर्म्मणि—पानक्रियायां [ "चन्द्रिकाचामकर्म्मणि" इति पाठान्तरेऽप्ययमेव अर्थः। आचामः,—पानम् ] चतुराः,—निपुणाः; अवन्तीः,—अवन्तिदेशीयाः कामिनीः, विना—भिन्ना इत्यर्थः, सुदृशः,—सुन्दर्य्य इत्यर्थः, रतनर्म्मणि—सुरतविलासे, न निपुणाः। अत्र चतुरा इति न निपुणा इति विपरीतधर्म्मत्वम्।

(म) दृष्टान्तमाह, दृष्टान्त इति।—सधर्म्मस्य—समानधर्म्मवतः, सदृशस्येत्यर्थः, वस्तुनः,—विषयस्य, सामान्यधर्म्मस्येति भावः, प्रतिविम्बनं—प्रणिधानगम्यसाम्यत्वं, (अत्रापि "वाक्ययोः" इत्यनुवर्त्तते, तेन "भल्लापवर्ज्जितैः" इत्यत्र नातिव्याप्तिः, एकवाक्यत्वात्) दृष्टान्तः।

(य) सधर्म्मस्येति।—अत्र धर्म्मस्य साम्यं न तु एकरूपत्वं, प्रतिवस्तूपमायाम् एकरूपत्वं न तु साम्यमित्यनयोर्भेद इति भावः। अयमपि—दृष्टान्तोऽपीत्यर्थः।

(र) अविदितेति।—सतां कवीनां भणितिः,—वाणी, अविदितगुणा अपि, अर्थबोधविरहादिति भावः, कर्णेषु मधुधारां वमति—उद्गिरति, माधुर्य्यादिगुणसम्पत्तेरिति तात्पर्य्यम्; मालतीमाला अनधिगतः,—अप्राप्तः, परिमलो यस्याः तादृशी, अपि दृशं—नेत्रं, हरति—आकर्षति, सौन्दर्य्यातिशयादिति भावः; अत्र मधुधारावमनस्य नेत्रहरणस्य च नैकरूपत्वं, परं प्रणिधानेन गम्यसाम्यत्वमस्तीति द्रष्टव्यम्। आर्य्या छन्दः। वासवदत्तायाः पद्यमेतत्। यथा वा,—"त्वयि दृष्ट एव तस्या निर्वाति मन्ये मनोभवज्वलितम्। आलोके हि हिमांशोर्विकसति कुसुमं कुमुद्वत्याः॥" इति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"त्वयि दृष्टे कुरङ्गाक्ष्याः स्रंसते मदनव्यथा ।
दृष्टाऽनुदयभाजीन्दौ ग्लानिः कुमुदसंहतेः ॥" (ल)

"वसन्तलेखैकनिबद्धभावं
परासु कान्तासु मनः कुतो नः ? ।
प्रफुल्लमल्लीमधुलम्पटः किं
मधुव्रतः काङ्क्षति वल्लिमन्याम् ? ॥" (व)

इदं पद्यं मम । अत्र "मनः कुतो नः ?" इत्यस्य "काङ्क्षति वल्लिमन्याम्" इत्यस्य चैकरूपतयैव पर्य्यवसानात् प्रतिवस्तूपमैव । इह तु कर्णे मधुधारावमनस्य नेत्रहरणस्य च साम्यमेव, न तु ऐकरूप्यम् । अत्र समर्थ्यसमर्थकवाक्ययोः सामान्यविशेषभावोऽर्थान्तरन्यासः ; (श) प्रतिवस्तूपमादृष्टान्तयोस्तु न तथेति भेदः ।

---

(ल) त्वयीति ।—त्वयि दृष्टे सति कुरङ्गाक्ष्याः,—हरिणनेत्रायाः, मदनव्यथा—स्मरपीड़ा, स्रंसते—भ्रश्यति, नश्यतीति यावत् । ["स्रंसु अधःपतने" इत्यस्य लटि प्रथमपुरुषैकवचनरूपमिदम्] इन्दौ—चन्द्रे, अनुदयभाजि—उदयमप्राप्ते, सति कुमुदसंहतेः,—कैरवसमूहस्य, ग्लानिः,—मालिन्यं, सङ्कोच इत्यर्थः, दृष्टा—नेत्रविषयीकृता । अत्र मदनव्यथास्रंसनस्य ग्लानिदर्शनस्य च वैपरीत्येन प्रणिधानगम्यसाम्यत्वमस्ति, सन्तोषविरोधित्वात् ; अनयोः सत्त्वासत्त्वाभ्यां वैधर्म्यम् इति बोध्यम् । श्लोकश्छन्दः,—"श्लोके षष्ठं गुरु ज्ञेयं सर्व्वत्र लघु पञ्चमम् । द्विचतुःपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥" इति च तल्लक्षणम् ।

(व) वसन्तेति ।—वसन्तलेखायां—तदाख्यायां कान्तायाम्, एकनिबद्धभावं—केवलानुरक्तमित्यर्थः, नः,—अस्माकं, मनः,—चेतः, परासु—अन्यासु, कान्तासु—रमणीषु, कुतः ?—कस्मात् ? अभिलाषि भवेदिति शेषः, प्रफुल्लायाः,—विकसितायाः, मल्ल्याः,—मल्लिकायाः, मधुलम्पटः,—रसलुब्धः, मधुव्रतः,—भ्रमरः, अन्याम्—अपरां, मल्लिकाऽतिरिक्तामित्यर्थः, वल्लिं—लतां, काङ्क्षति—अभिलषति, किम् ? नैवाभिलषतीत्यर्थः । अत्रोपेन्द्रवज्रा वृत्तम् ; तल्लक्षणञ्च यथोक्तम् ;—"उपेन्द्रवज्रा जतजा गगौ चेत्" इति ।

(श) इह त्विति ।—प्रीतिजनन एव पर्य्यवसानात् ऐकरूप्येऽपि प्रीतेर्वैलक्षण्याद

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वाऽपि कुत्रचित्।**
**यत्र विम्बानुविम्बत्वं बोधयेत् सा निदर्शना॥७२०॥(ष)**

अथ सम्भवद्वस्तुसम्बन्धनिदर्शना यथा,—

"कोऽत्र भूमिवलये जनान् मुधा
तापयन् सुचिरमेति सम्पदम्।
वेदयन्निति दिनेन भानुमान्
आससाद चरमाचलं ततः॥" (स)

अत्र रवेरीदृशार्थवेदनक्रियायां कर्तृत्वेनान्वयः सम्भवत्येव, ईदृशार्थज्ञापनसमर्थचरमाचलप्राप्तिरूपकर्म्मवत्त्वात्। स च रवेरस्ताचलगमनस्य परतापिनां विपत्प्राप्तेश्च विम्बप्रतिविम्बभावं बोधयति। असम्भवद्वस्तुसम्बन्धनिदर्शना तु एकवाक्यानेकवाक्यगतत्वेन द्विविधा। (ह) तत्रैकवाक्यगा यथा,—

वैलक्षण्यम् इति भावः। अत्रेति।—प्रतिवस्तूपमादृष्टान्तयोरित्यर्थः। समर्थ्येति।—समर्थ्यस्य—दृढ़ीकार्य्यस्य, समर्थकस्य—दृढ़ीकारकस्य, वाक्यद्वयस्य इत्यर्थः। सामान्यविशेषभावे इति।—उभयोरेकस्य सामान्यत्वे अपरस्य विशेषत्वे इत्यर्थः। प्रतिवस्तूपमादृष्टान्तयोस्तु न तथा—न सामान्यविशेषभावः, न वा समर्थ्यसमर्थकभावः इति अस्यास्ताभ्यां भेदः।

(ष) निदर्शनामाह, सम्भवन्निति।—कुत्रचित् सम्भवन्—अबाधितः, कुत्रचिद्वा असम्भवन्—वाधितः, वस्तुसम्बन्धः यत्र विम्बानुविम्बत्वं—प्रणिधानगम्यसाम्यत्वम्, उपमानोपमेयभावमित्यर्थः, बोधयेत्, व्यञ्जनया इति शेषः, सा निदर्शना। अलङ्कारसर्व्वस्वकारेणाप्युक्तम्;—"सम्भवताऽसम्भवता वा वस्तुसम्बन्धेन गम्यमानं प्रतिविम्बकरणं निदर्शना" इति।

(स) कोऽत्रेति।—अत्र भूमिवलये—भूमण्डले, कः,—जनः, जनान्—लोकान्, मुधा—निरर्थकं, तापयन्—पीड़यन्, सुचिरं—दीर्घकालं व्याप्येत्यर्थः, सम्पदं—श्रियम्, एति?—प्राप्नोति? न कोऽपीत्यर्थः। भानुमान्—सूर्य्यः, दिनेन—अह्ना, इति वेदयन्—ज्ञापयन्, ततः,—दिनान्ते इत्यर्थः, चरमाचलम्—अस्ताचलम्, आससाद—प्राप। इन्द्रवज्रा वृत्तम्

(ह) अत्रेति।—ईदृशार्थस्य—उक्तरूपार्थस्य, पूर्व्वार्द्धनिर्दिष्टस्येत्यर्थः, वेदन-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"कलयति कुवलयमाला-
ललितं कुटिलः कटाक्षविक्षेपः ।
अधरः किसलयलीला-
माननमस्याः कलानिधिविलासम् ॥" (क)

अत्र अन्यस्य धर्मं कथमन्यो वहत्विति कटाक्षविक्षेपादीनां कुवलयमालाऽऽदिगतललितादीनां कलनमसम्भवत् तल्ललितादिसदृशं ललितादिकमवगमयत् कटाक्षविक्षेपादेः कुवलयमालादेश्च बिम्बप्रतिबिम्बभावं बोधयति । यथा वा,—

"प्रयाणे तव राजेन्द्र ! मुक्ता वैरिमृगीदृशाम् ।
राजहंसगतिः पद्भ्यामाननेन शशिद्युतिः ॥" (ख)

---

क्रियायां—ज्ञापनव्यापारे । ईदृशार्थेति ।—ज्ञापनसमर्थं—ज्ञापननिष्पादकं, यत् चरमाचलप्राप्तिरूपं कर्म्म तद्वत्त्वात्—तच्छालित्वादित्यर्थः । स च—वेदनक्रियान्वयः, बिम्बप्रतिबिम्बभावं—गम्यसादृश्यं, (तज्ज्ञादर्शनप्रयोजकत्वेनेति बोध्यम्) बोधयति—प्रत्याययति । न सम्भवन् वस्तुसम्बन्धो यत्र तादृशी या निदर्शना सा तु एकवाक्यञ्च अनेकवाक्यञ्च, तानि गता, तस्या भावस्तत्त्वं तेन, एकवाक्यगतत्वेनानेकवाक्यगतत्वेन चेति भिद्यमाना द्विविधा ।

(क) कलयतीति ।—अस्याः,—कामिन्या इत्यर्थः, कुटिलः,—वक्रः, कटाक्षविक्षेपः,—अपाङ्गदर्शनं, कुवलयमालायाः,—नीलोत्पलस्रजः, ललितं—सौन्दर्य्यम्, अधरः किसलयस्य—पल्लवस्य, लीलां—शोभां, तथा आननं कलानिधेः,—चन्द्रस्य, विलासं—विभ्रमं, कलयति—धारयति । इह धर्म्मधर्म्मिणोरुपमाकल्पनम् । गीतिश्छन्दः ।

(ख) धर्म्मयोरुपमाकल्पने निदर्शनालङ्कारमुदाहरति, प्रयाणे इति ।—हे राजेन्द्र ! तव प्रयाणे—युद्धयात्रायां, वैरिणां—शत्रूणां, या मृगीदृशः,—कामिन्यः तासां, पद्भ्यां—चरणाभ्यां, राजहंसगतिः,—राजहंसानां गतिरिति तथोक्ता, तथा आननेन—मुखेन, शशिद्युतिः,—शशिनः,—चन्द्रस्य, द्युतिरिति तथोक्ता, मुक्ता—त्यक्ता ; त्वद्भयात् पलायमानेषु वैरिषु तेषां या रमण्यस्तासामपि ताननु पलायने कर्त्तव्यत्वे राजहंसानामिव मन्दं मन्दं गमनं, मुखस्य च म्लानत्वे चन्द्रस्येव तस्य सौन्दर्यशालित्वं विनष्टमिति भावः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र पादाभ्यामसम्बद्धराजहंसगतेस्त्यागोऽनुपपन्न इति तयोस्तत्सम्बन्धः (ग) कल्पयति, स च असम्भवन् राजहंसगतिमिव गतिं बोधयति। अनेकवाक्यगा यथा,—

"इदं किलाव्याजमनोहरं वपु-
स्तपःक्षमं साधयितुं य इच्छति।
ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति॥" (घ)

अत्र यत्तच्छब्दनिर्दिष्टवाक्यार्थयोरभेदेनान्वयोऽनुपपद्यमानस्तादृशवपुषस्तपःक्षमत्वसाधनेच्छा नीलोत्पलपत्रधारया शमीलताच्छेदनेच्छेवेति बिम्बप्रतिबिम्बभावे पर्य्यवस्यति। (ङ) यथा वा,—

(ग) अत्रेति।—तयोः,—पदयोः, तत्सम्बन्धः,—राजहंसगतिसम्बन्ध इत्यर्थः।

(घ) इदमिति।—शकुन्तलाया रूपं दृष्ट्वा राज्ञो दुष्मन्तस्योक्तिरियम्। यः किल (एतद् अरुचौ, तथाहि हैमः,—"किल सम्भाव्यवार्त्तयोः। हेत्वरुच्योरलीके च" इति) अव्याजेन—व्याजं—छलं विना, मनोहरं—सुन्दरं, स्वभावरमणीयमिति भावः, इदं—पुरःस्थितं, वपुः,—शरीरं, शकुन्तलाया इति शेषः, तपसि—तपश्चर्य्यायां, यत् क्षमं—क्लेशं, साधयितुं—सम्पादयितुम्, इच्छति, अर्थादनेन तपःक्षमं साधयितुं य इच्छति इति भावः, [ "तपःक्षमम्" इति पाठे,—तपसः,—तपश्चर्य्यायाः, क्षमं—योग्यमित्यर्थः, ] स ऋषिः,—कण्वमुनिरित्यर्थः, नीलञ्च तदुत्पलं—कमलं तस्य पत्रं तस्य धारया—प्रान्तभागेन, शम्येव लता तां तथोक्ताम्, [ उपमेये शकुन्तलावपुषि कोमलत्वसौभाग्यवत्त्वादिसाधारणधर्मसद्भावसूचनार्थं, लतापदोपादाने लिङ्गव्यत्ययेन अनौचित्यदोषप्रसङ्गाच्च शम्यां लतात्वारोप इति विभावनीयम् ] छेत्तुं व्यवस्यति—यतते, इच्छति इति यावत्, एतत् ध्रुवं—निश्चितम्। वंशस्थविलं वृत्तम्। अभिज्ञानशाकुन्तलस्येदं पद्यम्।

(ङ) अत्रेति।—यच्छब्दनिर्द्दिष्टवाक्यम्—इदमित्यादि इच्छतिपर्य्यन्तं, तच्छब्दनिर्द्दिष्टवाक्यं—ध्रुवमित्यादि व्यवस्यतीत्यन्तं, तयोरर्थयोः अभेदेन—अभिन्नतया, अन्वयः,—सम्बन्धः, अनुपपद्यमानः,—असम्भवन्। बिम्बप्रतिबिम्बभावे—गम्यसादृश्ये, पर्य्यवस्यति—परिणमति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"जन्मेदं बन्ध्यतां नीतं भवभोगोपलिप्सया।
काचमूल्येन विक्रीतो हन्त! चिन्तामणिर्म्मया॥" (च)

अत्र भवभोगलोभेन जन्मनो व्यर्थताऽऽनयनं काचमूल्येन चिन्तामणिविक्रय इवेति पर्य्यवसानम्। एवम्,—

"क्व सूर्य्यप्रभवो वंशः? क्व चाल्पविषया मतिः?।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥" (छ)

अत्र मन्मत्या सूर्य्यवंशवर्णनमुडुपेन सागरतरणमिवेति पर्य्यवसानम्।

इयञ्च क्वचिदुपमेयवृत्तस्योपमानेऽसम्भवेऽपि भवति। (ज) यथा,—

"योऽनुभूतः कुरङ्गाक्ष्यास्तस्या मधुरिमाऽधरे।
समास्वादि स मृद्वीकारसे रसविशारदैः॥" (झ)

---

(च) जन्मेति।—वीतरागस्योक्तिरियम्। मया भवस्य—संसारस्य, भोगः,—सुखं, ("भोगः सुखे स्यादिभृतावहेश्च फणकाययोः" इत्यमरः) तस्य उपलिप्सया—लालसया इत्यर्थः, इदं—वर्त्तमानं, जन्म बन्ध्यतां—विफलतां, नीतम्; हन्त—खेदे, काचमूल्येन—तदाख्यसुलभमणिविशेषमूल्येन, चिन्तामणिः,—तदाख्यदुष्प्राप्यमणिविशेषः, विक्रीतः।

(छ) क्वेति।—सूर्य्यः प्रभवति यस्मादिति प्रभवः,—उत्पत्तिस्थानं यस्य, अथवा,—सूर्य्यात् प्रभवः,—उत्पत्तिर्यस्य तादृशः, वंशः,—सूर्य्यवंशः इत्यर्थः, क्व?—कुत्र? अल्पविषया—यत्किञ्चिद्विचारणक्षमा इत्यर्थः, मतिः,—बुद्धिश्च क्व? क्वद्वयं महदन्तरं सूचयति, अल्पमतिसूर्य्यवंशयोः महदन्तरमिति भावः, तथा हि, मोहात्—अज्ञानात्, उडुपेन—भेलेन, क्षुद्रनौकयेत्यर्थः, दुस्तरं—दुष्पारं, सागरं तितीर्षुः,—तर्त्तुमिच्छुः, अस्मि—भवामि। रघुवंशस्येदम्।

(ज) इयञ्चेति।—उपमेयवृत्तस्य—उपमेयधर्म्मस्य, उपमाने सर्व्वथा बाधादुपमाकल्पनम् इति विशेषः। एवं "मुखं ते चन्द्रमःस्पर्द्धि पङ्कजद्वेषि लोचनम्" अत्र स्पर्द्धाद्वेषयोः चेतनधर्म्मत्वात् मुखलोचनयोरसम्भवात् उपमायां पर्य्यवसानम् इति ज्ञेयम्।

(झ) य इति।—तस्याः कुरङ्गाक्ष्याः,—मृगलोचनायाः, अधरे यः मधुरिमा—माधुर्य्यम्, अनुभूतः,—आस्वादगोचरीकृतः, सः,—मधुरिमा इत्यर्थः, रसविशारदैः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र प्रकृतस्याधरस्य मधुरिमधर्म्मस्य द्राक्षारसेऽसम्भवात् पूर्व्ववत् साम्ये पर्य्यवसानम्। मालारूपाऽपि। यथा मम,—

"क्षिपसि शुकं वृषदंशकवदने
मृगमर्पयसि मृगादनरदने।
वितरसि तुरगं महिषविषाणे
निदधच्चेतो भोगवितानें"॥ (ञ)

इह विम्बप्रतिविम्बताक्षेपं विना वाक्यार्थापर्य्यवसानम्। दृष्टान्ते तु पर्य्यवसितेन वाक्यार्थेन सामर्थ्याद्विम्बप्रतिविम्बताप्रत्यायनम्। नापीयमर्थापत्तिः, तत्र "हारोऽयं हरिणाक्षीणाम्" इत्यादौ सादृश्यपर्य्यवसानाभावात्। (ट)

---

—रसास्वादाभिज्ञैः जनैः, मृद्वीकारसे—द्राक्षारसे, समास्वादि—सम्यक् आस्वादितः। "न ह्यन्यधर्म्मा अन्यत्र सम्भवन्ति" इति नयेन उपमेयाधरगतमाधुर्य्यस्य उपमानमृद्वीकारसगतत्वासम्भवेऽपि उपमानभूतमृद्वीकारसगतसम्भवोक्त्येदमुक्तमित्यवसेयम्।

(ञ) क्षिपसीति।—कस्यचिन्महात्मनः स्वशिष्यं प्रति सांसारिकसुखासक्तेः निवृत्त्युपदेशोऽयम्। भोगविताने—संसारसुखसमूहे, चेतः निदधत्—अर्पयत्, त्वं वृषदंशकस्य—विडालस्य, ("ओतुर्विडालो मार्जारो वृषदंशक आखुभुक्" इत्यमरः) वदने शुकं—तन्नामानं पक्षिणं, क्षिपसि—न्यस्यसि, मृगादनस्य—तरक्षोः, व्याघ्रविशेषस्य इति यावत्, ("तरक्षुस्तु मृगादनः" इत्यमरः) रदने—दन्ते, मृगम् अर्पयसि—ददासि, महिषस्य विषाणे—शृङ्गे, तुरगम्—अश्वं, वितरसि—ददासि। अत्र भोगविताने चेतोनिधानस्य वृषदंशकवदनादिषु शुकादिक्षेपणस्य च अभेदेनान्वयः अनुपपद्यमानः परस्परं विम्बप्रतिविम्बभावं गमयति, तथा च,—विषयभोगजन्यसुखानुभवसन्ताने चेतोनिधानं वृषदंशकवदनादौ शुकाद्यर्पणमिवेत्युपमायां पर्य्यवसानम् इति बोध्यम्। पज्झटिका वृत्तम्, तल्लक्षणञ्च यथोक्तम्;—"प्रतिपदयमकितषोडशमात्रा नवमगुरुत्वविभूषितगात्रा। पज्झटिकाया एष विवेकः क्वापि न मध्यगुरुर्गण एकः॥" इति। "आर्य्यागीतिरियम् इत्येके, "पादाकुलकम्" इत्यन्ये।

(ट) दृष्टान्तान्निदर्शनाभेदमुपपादयति, इहेति।—इह—निदर्शनायां, विम्बप्रतिविम्बतायाः आक्षेपं—प्रतीतिं, विना वाक्यार्थस्य अपर्य्यवसानम्—असङ्गतिः। पर्य्यवसितेन—सङ्गततां प्राप्तेन। सामर्थ्यात्—योग्यतावशात्। विम्बेति।—गम्य-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा ।
व्यतिरेकः, एक उक्ते हेतौ नोक्ते स च त्रिधा ॥
चतुर्विधोऽपि साम्यस्य बोधनाच्छब्दतोऽर्थतः ।
आक्षेपाच्च द्वादशधा श्लेषेऽपीति त्रिरष्टधा ।
प्रत्येकं स्यान्मिलित्वाऽष्टचत्वारिंशद्विधः पुनः ॥७२१॥(ठ)

साद्दश्यावगतिरित्यर्थः । ननु "कोऽत्र भूमिवलये—" इत्यादौ "जनतापकरः सूर्य्योऽप्यस्तं याति, किमुतान्यः" इति दण्डापूपन्यायात् अर्थान्तरप्रतीतिरस्ति इतीयमर्थापत्तिः, इत्यत आह, नापीयमिति ।—"हारोऽयम्" इत्यादौ वक्ष्यमाणश्लोके साद्दश्यस्य—साम्यस्य, पर्य्यवसानं—निश्चयः, तदभावात्, न हि मुक्तेतिपदवाच्यानां मौक्तिकानां प्राप्ताऽपवर्गाणाञ्च साद्दश्यं पर्य्यवसीयते, अतो नात्र निदर्शना ; तथा च साद्दश्यपर्य्यवसानस्थले निदर्शनैव, विशेषत्वादन्यत्र त्वर्थापत्तिः इति भावः ।

(ठ) व्यतिरेकमाह, आधिक्यमिति ।—उपमेयस्य उपमानात् आधिक्यम् अथवा न्यूनता व्यतिरेकः,—व्यतिरिच्यते—उपमानवैलक्षण्येनोपलभ्यते उपमेयमनेन इति व्यतिरेकः, उपमानात् उपमेयम्, उपमेयात् उपमेयं वेति हि तदर्थः ; तथा च —उपमानापेक्षया उपमेयस्य वैलक्षण्येन प्रत्ययो व्यतिरेकः, उपमेयापेक्षया उपमानस्य वैलक्षण्येन प्रत्ययो वा व्यतिरेक इति फलितम् । वैलक्षण्येन प्रत्ययश्च आधिक्येन न्यूनत्वेन वेति द्विधैव सम्भवति, अतः उपमानापेक्षया उपमेयस्य अधिकतया वैलक्षण्ये प्रतीयमाने एकः, न्यूनतयेति द्वितीयः, उपमेयापेक्षया उपमानस्य अधिकतया वैलक्षण्ये प्रतीयमाने तृतीयः, न्यूनतयेति चतुर्थः व्यतिरेक इति बोध्यम् । आधिक्यपक्षं विकल्पयति, एक इति ।—स च हेतौ उक्ते एकः,—एकविध एव, हेतौ नोक्ते—अकथिते, त्रिधा ; अयमभावः,—हेतुस्तावत् शब्दकृतः, अर्थकृतः, आक्षेपकृतश्च इति त्रिविधः, तथा सति तस्य तस्य उक्त्यभावे व्यतिरेकस्य त्रैविध्यं स्पष्टम् इति । तथा चतुर्विधोऽपि साम्यस्य—साद्दश्यस्य, शब्दतः,—इवादिशब्दात्, अर्थतः,—तुल्यादिपदार्थानुसन्धानात्, आक्षेपाच्च—व्यञ्जनातश्च, बोधनात्—प्रत्यायनात्, द्वादशधा—इति प्रत्येकं त्रिधा भूत्वा द्वादशविधो भवतीति भावः । श्लेषेऽपीति अपिना श्लेषाभावसमुच्चयः ; तेन द्वादशविधोऽपि सः श्लेषनिबन्धनत्वात् अश्लेषत्वाच्च द्वैविध्येन इति भावः, त्रिरष्टधा—चतुर्व्विंशतिप्रकारः । प्रत्येकम्—आधिक्यन्यूनतयोश्च, मिलित्वा पुनः अष्टचत्वारिंशत्प्रकारः स्यात् इति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उपमेयस्य उपमानादाधिक्ये हेतुः उपमेयगतमुत्कर्षकारणम् उपमानगतं निकर्षकारणञ्च। तयोर्द्वयोरपि उक्तौ एकः, प्रत्येकं समुदायेन वाऽनुक्तौ त्रिविध इति चतुर्विधेऽप्यस्मिन्नुपमानोपमेयस्य निवेदनं शब्देनार्थेनाक्षेपेण चेति द्वादशप्रकारोऽपि श्लेषेऽपिशब्दादश्लेषेऽपि चतुर्व्विंशतिप्रकारः। उपमानान्न्यूनतायामप्यनयैव भङ्ग्या चतुर्व्विंशतिप्रकारता (ङ) इति मिलित्वा अष्टचत्वारिंशत्प्रकारो व्यतिरेकः। उदाहरणम्,—

"अकलङ्कं मुखं तस्या न कलङ्को विधुर्यथा।" (ढ)

अत्र उपमेयगतमकलङ्कत्वम् उपमानगतञ्च कलङ्कित्वं हेतुद्वयमपि उक्तम्। यथाशब्दप्रतिपादनाच्च शाब्दमौपम्यम्; अत्रैव "न कलङ्कि विधूपमम्" इति पाठे आर्थम्; "जयतीन्दुं कलङ्किनम्" इति पाठे तु इव वत्तुल्यादिपदविरहादाक्षिप्तम्। अत्रैवाकलङ्कपदत्यागे उपमेयगतोत्कर्षकारणानुक्तिः; कलङ्किपदत्यागे च उपमानगतनिकर्षकारणानुक्तिः, द्वयोरनुक्तौ द्वयोरनुक्तिः। (ण) श्लेषे यथा,—

---

(ङ) उपमेयस्येति।—निकर्षः,—अपकर्षः। प्रत्येकमिति।—उत्कर्षकारणानुक्तौ अपर इत्यर्थः। अनयैव भङ्ग्येति।—निरुक्तक्रमेण इत्यर्थः, तथा हि,—उपमेयस्योपमानान्न्यूनतायां हेतुः उपमेयगतं निकर्षकारणमुपमानोत्कर्षकारणञ्च, तयोर्द्वयोरप्युक्तावेकः, प्रत्येकं समुदायेन वाऽनुक्तौ त्रिविधः, इत्याद्युक्तप्रकारेण चतुर्व्विंशतिःवधत्वं बोध्यम्।

(ढ) अकलङ्कमिति।—तस्याः,—सुन्दर्य्या इत्यर्थः, मुखम् अकलङ्कं—कलङ्कविरहितं, न कलङ्कि इति भावः। विधुः,—चन्द्र, यथा कलङ्की—मालिन्यसादृश्येन कलङ्कीति प्रतीयमानः, तथा न।

(ण) अत्रेति। जयतीति।—जयः,—पराभवः, स चापकृष्टत्वेन ज्ञानं, तस्य च मुखे असम्भवात् सादृश्ये पर्य्यवसानमित्याक्षेपः इति भावः। द्वयोरिति।—अकलङ्ककलङ्किपदयोः इत्यर्थः, द्वयोरनुक्तिः,—उत्कर्षनिकर्षकारणयोरनुक्तिः, मुखे चन्द्रसादृश्यनिबन्धनाधिक्य प्रतीयते इत्याशयः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"अतिगाढ़गुणायाश्च नाब्जवद् भङ्गुरा गुणाः ।" (त)

अत्र इवार्थे वतिरिति शाब्दमौपम्यम्; उत्कर्षनिकर्षकारणयोर्द्वयोरपि उक्तिः। गुणशब्दः श्लिष्टः। अन्ये भेदाः पूर्ववदूह्याः। (थ) एतानि च उपमेयस्य उपमानादाधिक्ये उदाहरणानि। न्यूनत्वे दिङ्मात्रं यथा,—

"क्षीणः क्षीणोऽपि शशी भूयो भूयोऽभिवर्द्धते सत्यम्।
विरम प्रसीद सुन्दरि! यौवनमनिवर्त्ति यातं तु ॥" (द)

अत्रोपमेयभूतयौवनास्थैर्य्यस्याधिक्यम्; तेनात्र "उपमानादुपमेयस्याधिक्ये विपर्य्यये वा व्यतिरेकः" इति केषाञ्चिल्लक्षणे "विपर्य्यये वेति पदमनर्थकम्" इति यत् केचिदाहुः, तन्न विचारसहम्; तथा हि,—अत्राधिकन्यूनत्वे सत्त्वासत्त्वे एव विवक्षिते। अत्र च चन्द्रापेक्षया यौवनस्यासत्त्वं स्फुटमेव। अस्तु (ध) वा अत्रोदाहरणे यथाकथञ्चिद् गतिः,—

(त) अतीति।—अतिगाढ़ाः,—अतिघनाः, गुणाः यस्याः तथाभूतायाः तस्याः, कान्तायाः इति भावः, गुणाः,—दयादाक्षिण्यादयः सूत्राणि च, अब्जवत्—पद्मस्येव, भङ्गुराः,—भङ्गप्रवणाः, छिदुरा इत्यर्थः, न, भवन्तीति शेषः। अत्रोपमेयं नायिका, उपमानं पद्मम्, उपमेयस्य उत्कर्षकारणम् अतिगाढ़गुणशालित्वम्, उपमानस्य अब्जादेः निकर्षकारणं भङ्गुरगुणभागित्वमिति बोध्यम्।

(थ) अन्येति।—पूर्व्ववत्—"तस्या नाब्जवद्भङ्गुरा गुणाः" इति, "अतिगाढ़गुणायाश्च नाब्जवद्गुणाः" इति, "तस्या नाब्जवद्गुणाः" इति प्रकारत्रयमूह्यम्।

(द) क्षीण इति।—मानिनीं प्रत्युक्तिरियम्। हे सुन्दरि! शशी—चन्द्रः, क्षीणः क्षीणः अपि भूयः भूयः,—पुनः पुनः, अभिवर्द्धते—अभितो वर्द्धते, सर्व्वतो लभ्यमानप्रकाशो भवतीति यावत्, एतत् सत्यम्; विरम—निवर्त्तस्व, मानात् इति शेषः, प्रसीद—प्रसन्ना भव, यातं—गतं, तु—पुनः, यौवनम् अनिवर्त्ति—न निवर्त्ति, न निवर्त्तते इत्यर्थः, गतं यौवनं गतमेव, न पुनः वर्द्धते इति भावः। अत्र पुनः वर्द्धनम् उपमानचन्द्रोत्कर्षकारणम्, अपुनः वर्द्धनम् उपमेययौवननिकर्षकारणम् इति ज्ञेयम्। आर्य्या छन्दः। काव्यालङ्कारस्य पद्यमेतत्।

(ध) उपमानन्यूनतायां व्यतिरेकमस्वीकुर्व्वतां मतं दूषयति, अत्रोपमेयेति।—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"हनूमदाद्यैर्यशसा मया पुन-
र्द्विषां हसैर्दूतपथः सितीकृतः।" (न)

इत्यादिषु का गतिः ? इति सुष्ठूक्तं "न्यूनताऽथवा" इति।

## सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः।
## सा सहोक्तिर्मूलभूताऽतिशयोक्तिर्यदा भवेत्॥७२२॥(प)

चन्द्रास्थैर्य्यमत्रोपमानं बोध्यं, तेन "क्षीणः क्षीणः" इत्यादावाधिक्यव्यतिरेकेणैव सङ्कृह-सम्भवेन, विपर्य्यये वा—न्यूनतायां वेत्यर्थः। तथा हीति।—सत्त्वासत्त्वे—स्थायित्वा-स्थायित्वे, उत्कृष्टत्वापकृष्टत्वे इत्यर्थः। ननु यौवनस्थैर्य्यस्याधिक्यस्य निवेदनं प्रकृतस्य मानभङ्गस्य उपकारकमिति तस्यैव वैचित्र्याधायकत्वं, न तु यौवनासत्त्वस्य, एवं दोषः, इत्याशङ्का अनुपपत्त्यन्तरं दर्शयति,—अस्त्विति।

(न) हनूमदाद्यैरिति।—दमयन्तीं प्रति दौत्येन इन्द्रादिभिः प्रेरितस्य तत्र च अकृतार्थस्य नलस्य विषादोक्तिरियम्। हनूमदाद्यैः,—हनूमत्प्रमुखैः, दूतपथः यशसा सितीकृतः,—उज्ज्वलीकृतः ; मया पुनः द्विषां—शत्रूणां, हसैः,—हासैः, दूतपथः सितीकृतः ; मां दौत्ये अकृतकार्य्यं दृष्ट्वा शत्रवो हसन्तीति तेषां हासस्मितिना स एव मार्गोऽलङ्कृत इति भावः। अत्र प्रभुप्रयोजननिष्पादकत्वेन हनूमदादेरुपमानस्योत्कृष्टत्वं, तद्व्यतिरेकेणोपमेयस्य नलस्यापकृष्टत्वञ्च प्रतीयते ; इह द्वयोरुपमानोपमेयभावविव-क्षयेऽपि उपमानस्यैवाधिक्यं, न तूपमेयस्य इति ध्येयम्। अलङ्कारकौस्तुभकारास्तु,—"उभयोः साम्यप्रोक्तौ विशेष उपमेयगो व्यतिरेकः" इति लक्षयित्वा, "ननु तथाऽपि क्वचिदुपमानादुपमेयापकर्षेऽप्ययं दृश्यते, यथा,—'हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दूतपथः सितीकृतः' अत्र हि नलेन हनूमदादिदौत्यापेक्षया स्वकृतदौत्ये हीनत्वं प्रदर्श्यते इति चेत्, न ; उत्कर्षापकर्षौ ह्यत्र न वास्तवाभिमतौ, किन्तु प्रकृतार्थाति-शायकत्वानतिशायकत्वरूपौ, प्रकृतश्चात्र नलनिर्वेदः, तदुत्थसंकल्पश्च दौत्यनिष्टोत्कापकर्षस्याप्यस्तीति न दोषः" इत्याहुः। वंशस्थविलस्य पादद्वयमेतत् ;—"वदन्ति वंशस्थविलं जतौ जरौ" इति तल्लक्षणम्। नैषधीयचरितस्थेदं पद्यार्द्धम्।

(प) सहोक्तिमाह, सहेति।—यत्र सहार्थस्य बलात्—सामर्थ्यात्, एकं, वस्तु इति शेषः, द्वयोः वाचकं स्यात्, तथा यदा—यदि, तत्र अतिशयोक्तिः मूलभूता—कारणभूता, भवेत्, तदा सा सहोक्तिः। तथा हि,—सहार्थश्च "सह, साकं, समं, सार्द्धं, सत्रा, अनुप्रभृतिः, तस्य एकं—वस्तु, वाचकम्, अभेदाध्यवसानमूलाभेदाध्यव-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अतिशयोक्तिरपि अत्राभेदाध्यवसायमूला कार्य्यकारणपौर्वापर्य्यविपर्य्ययरूपा च। अभेदाध्यवसायमूलाऽपि श्लेषभित्तिका अन्यथा च। (फ) क्रमेण उदाहरणम्,—

"सहाधरदलेनास्या यौवने रागभाक् प्रियः ।" (ब)

अत्र रागपदे श्लेषः । -

---

सायमूलां वाऽतिशयोक्तिमुपजीव्य प्रधानाप्रधानयोर्द्वयोरपि कथमपि यत्रान्वयि स्यात्, सा सहोक्तिरिति फलितम्। अलङ्कारकौस्तुभकारास्त्वाहुः,—"धर्म्मयोरभेदाध्यवसायमूलत्वस्थल एव सहोक्तिर्भवितुमर्हति, कार्य्यकारणयोः पौर्व्वापर्य्यविपर्य्ययात्मकातिशयोक्तिमूलभेदस्तु प्राचीनोक्तो न युक्तः, तत्रातिशयोक्तेरेवालङ्कारत्वसम्भवात्। "तव कोपोऽरिनाशश्च जायेते युगपन्नृप !" इत्यतिशयोक्त्यपेक्षया "तव कोपोऽरिनाशश्च सहैव नृप! जायते" इति सहोक्तौ विच्छित्तिविशेषानुभवात्, तस्यैव च अलङ्कारपार्थक्यव्यवस्थापकत्वात्। न चैवं धर्म्मयोरभेदाध्यवसानस्थलेऽप्यतिशयोक्तिसत्त्वात् कथं पार्थक्यमिति सहोक्त्युच्छेद इति वाच्यं, तत्राभेदाध्यवसायस्य सहोक्त्युपस्कारकत्वेन गुणतया सहोक्तितिरस्काराभावात्। पौर्व्वापर्य्यविपर्य्ययस्थले च सहोक्तेरेवातिशयोक्त्युपस्थापकत्वेन वैषम्यात्। किञ्च, उपमानेनोपमेयनिगरणमेवातिशयोक्तिरलङ्कारः, निगरणमात्रन्तु न तथा। अतोऽत्रातिशयोक्तिविषयाभावात् सहोक्तिरेवेति। वस्तुतः दीपके तुल्ययोगितायां वा तदन्तर्भावः। तत्रैकरूपेण सर्व्वत्र धर्म्मान्वयः, अत्र तु गुणप्रधानभावेन इति विशेषस्तु तदवान्तरभेदत्वमेव साधयति, न त्वतिरिक्तत्वं, विच्छित्तिविशेषानाधायकत्वात्; तस्मात् प्राचीनानुभवमात्रप्रमाणकमेवास्याः पार्थक्यम्" इति।

(फ) अतिशयोक्तिरिति।—अभेदाध्यवसायमूला—अभेदाध्यवसायरूपा इत्यर्थः, श्लेषभित्तिका—श्लेषनिबन्धना, श्लेषप्रतिपन्नभेदमूला इत्यर्थः, अन्यथा—अश्लेषभित्तिका, श्लेषमनुपजीव्यैव सम.र्थता इति यावत्, सम्बन्धिभेदादवगतभेदमूलेत्यर्थः।

(ब) सहेति।—अस्याः,—पुरतो विलसन्त्या बिम्बोष्ठ्याः कान्ताया इति यावत्, अधरदलेन सह प्रियः,—कान्तः, यौवने रागभाक्—अनुरक्तः। अधरदले तु रागभाक्त्वं रक्तिमवत्त्वमिति बोध्यम्। एवम् "......अस्तं भास्वान् प्रयातः सममरिभिरयं संह्रियन्तां बलानि" इत्यादावपि अस्तादीनां श्लिष्टत्वात्। अत्र सहशब्दस्य रागभजनमर्थः, तृतीयायाः सम्बन्धित्वं तस्य च सहार्थेऽन्वयः, सहशब्दस्याव्ययत्वात् तदर्थस्य द्वारीभूतविभक्त्यर्थं विनाऽपि समकालीनत्वसम्बन्धेन रागभाक्सहार्थैकदेशे रागभजनेनान्वयः; यौवने इति सति सप्तम्याः समकालीनत्वमर्थः, अस्यापि रागभजनेनान्वयः;

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"सह कुमुदकदम्बैः काममुल्लासयन्तः
सह घनतिमिरौघैर्धैर्य्यमुत्सारयन्तः।
सह सरसिजषण्डैः स्वान्तमामीलयन्तः
प्रतिदिशममृतांशोरंशवः सञ्चरन्ति ॥" (भ)

अस्या इति तात्पर्य्यबलादधरदलेन प्रियेण चान्वयः, तथा चास्याः प्रिय इदमधरदल-सम्बन्धियौवनकालीनरागाश्रयः इत्यन्वयबोधः। रागशब्दः द्वयोर्लौहित्यानुरागयो-र्वाचकः, तयोरभेदारोपात्, अन्यथा एकत्वाभावात् एकस्मीभयान्वयासम्भवेन लक्षण-मसङ्गतं स्यात् इति सङ्क्षेपः। अतिशयोक्तिश्च भेदेऽप्यभेदरूपा इति बोध्यम्।

(भ) सहेति।—चन्द्रवर्णनमिदम्। अमृतांशोः,—चन्द्रस्य, अंशवः,—किरणाः, कुमुदानां—कैरवाणां, कदम्बैः,—समूहैः, सह कामं—मदनम्, उल्लासयन्तः,—विकाशयन्तः, वर्द्धयन्त इति यावत्, घनैः,—सान्द्रैः, तिमिराणाम्—अन्धकाराणाम्, ओघैः,—समूहैः, सह धैर्य्यं—निरुद्वेगत्वं, कामिजनानामिति शेषः, उत्सारयन्तः,—विध्वंसयन्तः, मदनस्य प्रकाशस्य च बाधायकत्वादिति भावः; सरसिजानां—पद्मानां, षण्डैः,—समूहैः, ("षण्डं पद्मादिसङ्घाते न स्त्री स्याद् गोपतौ पुमान्" इति मेदिनी) सह स्वान्तं—मनः, ("स्वान्तं हृन्मानसं मनः" इत्यमरः) आमीलयन्तः,—सङ्कोचयन्तः, प्रतिदिशं—दिशि दिशि, सञ्चरन्ति। ["सञ्चरन्ति" इत्यनुक्त्वा "भान्ति यन्तः" इति पाठान्तरे तु यन्तः,—गच्छन्तः, सञ्चरन्त इति यावत्, भान्ति—संस्फुर-न्तीत्यर्थः, तथा अन्त्यानुप्रासाभावप्रयुक्तो दोषोऽपि न सम्भवतीति विभावनीयं सूक्ष्म-दृशा]। अत्रेदं बोध्यम्;—कुमुदकदम्बस्योल्लासो विकाशः, कामस्योल्लासो वर्द्धनं, तयोः सादृश्येनैवाभेदारोपः; तेजःसंसर्गाभावरूपस्य तिमिरस्योत्सारणं तद्देशे सम्बन्धा-भावः, धैर्य्यस्योत्सारणं विनाशः, तयोः सादृश्येनैवाभेदारोपः; सरसिजषण्डाना-मामीलनं सङ्कोचः, स्वान्तस्यामीलनं विषयान्तरादाकर्षणं, तयोरपि सादृश्येनैवा-भेदारोपः; एवञ्चात्रोल्लासादयः सहशब्दानामर्थाः, कर्म्मत्वं तृतीयानामर्थः, तस्य सहार्थेनान्वयः, सहार्थस्य च समकालीनत्वसम्बन्धेन उल्लासयन्तः इत्यादिपदार्थैकदेशे उल्लासादावन्वयः; तथा कुमुदकदम्बादिकर्म्मकोल्लासादिसमकालीनोल्लासादिकर्त्तारः चन्द्रांशवः इत्यन्वयबोधः। अत्र मालिनी वृत्तम्, "ननमयययुतेयं मालिनी भोगि-लोकैः" इति तल्लक्षणम्। यथा वा—"छाया संश्रयते तलं विटपिनां श्रान्तेव पान्थैः समं, मूलं याति सरो जलस्य जड़ता म्लानेव मीनैः सह। आचामत्यहिमांशुदीधिति-रपस्नेव स्नाकं जनैः निद्रा गर्भगृहं सह प्रविशति क्लान्तेव कान्ताजनैः ॥" इति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इदं मम। अत्रोल्लासादीनां सम्बन्धिभेदादेव भेदः, (म) न तु श्लिष्टतया।

"सममेव नराधिपेन सा गुरुसम्मोहविलुप्तचेतना।
अगमत् सह तैलविन्दुना तनुदीपार्चिरिव क्षितेस्तलम्॥" (य)

इयञ्च (र) मालयाऽपि सम्भवति। यथोदाहृते "सह कुमुदकदम्बैः" इत्यादौ।

"लक्ष्मणेन समं रामः काननं गहनं ययौ" इत्यादौ च अतिशयोक्तिमूलत्वाभावान्नायमलङ्कारः। (ल)

## विनोक्तिर्यद्विनाऽन्येन नासाध्वन्यदसाधु वा॥७२३॥(व)

(म) अत्राभेदाध्यवसायमूलभूतं भेदमुपपादयति, अत्रोल्लासादीनामिति।—मदुक्तदिशा सम्बन्धिभेदात् भेदो बोध्यः।

(य) कार्य्यकारणपौर्व्वापर्य्यरूपातिशयोक्तिमूलां सहोक्तिमुदाहरति, सममिति।—इन्दुमत्या भुवि पतनवर्णनमिदम्। सा—इन्दुमती, गुरुणा—महता, सम्मोहेन विलुप्तं चेतनं यस्यास्तथाभूता सती, तनुदीपार्चिः,—क्षीणा दीपशिखा, ["तनु" इत्यत्र "ननु" इति पाठान्तरं, तत्र निश्चयोऽर्थः] तैलविन्दुना सह इव नराधिपेन—अजेन, तन्नाम्ना स्ववल्लभेनेति यावत्, सममेव—सहैव, एकदैवेति यावत्, क्षितेः,—भुवः, तलम् अगमत्, भुवि पतितेति भावः। अत्राजस्य पतनम् इन्दुमतीपतनजन्यमपि समकालीनत्वेनाध्यवसितम्। अत्र कार्य्यकारणपौर्वापर्य्यविपर्य्ययरूपाऽतिशयोक्तिः। वैतालीयं वृत्तम्। रघुवंशस्येदं पद्यम्।

(र) इयमिति।—इयञ्च—सहोक्तिश्चेत्यर्थः।

(ल) मूलभूतत्वादिविवक्षायाः फलमाह,—लक्ष्मणेनेति। वस्तुतस्तु यत्र वैचित्र्यमनुभूयते, तत्रैवास्यालङ्कारत्वमङ्गीकरणीयम्, अन्यथा "सह मणिवलयैर्हि बाष्पधारा गलन्ति—" इति काव्यप्रकाशकारदत्तोदाहरणमसङ्गतं स्यात्; तत्र स्वस्थानाच्यवनरूपं गमनमेकमेव। न च गमनयोरेकजातीयत्वेऽपि व्यक्तिभेदाद्भेद इति वाच्यं, प्रस्तुते "लक्ष्मणेन" इत्याद्युदाहरणेऽपि तथाकल्पनस्य सम्भवात्, व्यावृत्त्यभावेन तद्विवक्षणस्य अकिञ्चित्करत्वात्; एवं "वर्द्धते सह पान्थानां मूर्च्छया चूतमञ्जरी" इति दण्डिदत्तोदाहरणे तृतीयार्थो वृत्तित्वं, मूर्च्छावृत्तिवृद्धिसमकालीनवृद्ध्याश्रया चूतमञ्जरीत्यन्वयः।

(व) विनोक्तिमाह, विनोक्तिरिति।—यत्—यदि, अन्येन विना अन्यत् न

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

न असाधु—अशोभनं न भवति। एवञ्च यद्यपि शोभनत्वे एव पर्य्यवसानं, तथाऽपि अशोभनत्वाभावमुखेन शोभनवचनस्यायमभिप्रायो यत् कस्यचिद्वर्णनीयस्याशोभनत्वं तत्परसन्निधेरेव दोषः। तस्य पुनः स्वभावतः शोभनत्वमेवेति। (श) यथा,—

"विना जलदकालेन चन्द्रो निस्तन्द्रतां गतः।
विना ग्रीष्मोष्मणा मञ्जुर्वनराजिरजायत॥" (ष)

असाधु—अशोभनम्। यथा,—

"अनुयान्त्या जनातीतं कान्तं साधु त्वया कृतम्।
का दिनश्रीर्विनाऽर्केण? का निशा शशिना विना?॥"(स)

---

असाधु—अशोभनं न भवति, तथा अन्येन विना अन्यत् असाधु वा भवति, सा विनोक्तिः। एवं हि,—एकपदार्थाशोभनत्वाभावादिप्रयोजकापरपदार्थव्यतिरेककथनं विनोक्तिरित्यर्थः। एषा च विनाशब्दयोगे एव भवति इति नाङ्गीकरणीयं, नञ्-निर्-वि-अन्तरेण-ऋते-रहितेत्यादिप्रयोगे तद्दर्शनात्। "नित्यसम्बन्धानामसम्बन्धवचनं विनोक्तिः" इत्यलङ्कारभाष्यकाराः; तेषां मते इदमुदाहरणं, तथाहि,—"मृणालमन्दानिलचन्दनानामुशीरशैवालकुशेशयानाम्। वियोगदूरीकृतचेतनाया विनैव शैत्यं भवति प्रतीतिः॥" इहाविनाभावेऽपि शैत्यस्य विनाभावः प्रतिपन्नः इति सङ्क्षेपः।

(श) यद्यपीति।—'नासाध्वित्यस्य' इति शेषः। पर्य्यवसानं—तात्पर्य्यम्; तथा च साधुत्वस्य साधुशब्देनैव प्रतिपादनमुचितम् इति भावः। अशोभनत्व भावमुखेन—अशोभनत्वाभावप्रतिपादनद्वारा; तस्य—परसन्निधिजातदोषस्य वस्तुनः, पुनर्दोषविगमे सति स्वभावत एव, न तु दोषविगमरूपोपाधेः शोभनत्वमित्यन्वयः, दोषविगमेन यत्र शोभनत्वं भवति सामान्यविषय इति भावः।

(ष) विनेति।—चन्द्रः जलदकालेन—जलदाः,—मेघाः, तेषां कालः,—सम्भवसमयः, वर्षर्त्तुरित्यर्थः, तेन विना निस्तन्द्रतां—निर्मलतां, गतः; ग्रीष्मोष्मणा विना वनराजिः मञ्जुः,—मनोहारिणी, अजायत। अत्र स्वतः सुन्दरयोः चन्द्रवनराज्योः मेघग्रीष्मोष्मसन्निधानरूपदोषविगमेन शोभनत्वं प्रतिभाति इति निष्कृष्टोऽर्थः; जलदकालापगमाच्चन्द्रमस इव आतपकालापगमाद्वनराजेरशोभनत्वापगमः संवृत्त इत्यौपम्यञ्च व्यङ्ग्यमिति बोध्यम्।

(स) अनुयान्त्येति।—जनातीतं—लोकातिशायिनं, मृतं वा, कान्तं—प्रियम्,



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"निरर्थकं जन्म गतं नलिन्याः
यया न दृष्टं तुहिनांशुबिम्बम्।
उत्पत्तिरिन्दोरपि निष्फलैव
दृष्टा विनिद्रा नलिनी न येन॥" (ह)

अत्र परस्परविनोक्तिभङ्ग्या चमत्कारातिशयः। विनाशब्दप्रयोगाभावेऽपि विनाऽर्थविवक्षायां विनोक्तिरेवेयम्। एवं सहोक्तिरपि सहशब्दप्रयोगाभावेऽपि सहार्थविवक्षया भवतीति बोध्यम्। (क)

**समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः।**
**व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः॥७२४॥ (ख)**

---

अनुशान्त्या—अनुगच्छन्त्या, त्वया साधु—सम्यक्, कृतम्; तथाहि,—अर्केण—सूर्येण, विना दिनश्रीः,—दिवसशोभा, तथा शशिना—चन्द्रेण, विना निशा च का?—कुत्सिता इत्यर्थः।

(ह) निरर्थकमिति।—नलिन्याः,—पद्मिन्याः, जन्म—उत्पत्तिः, निरर्थकं—विफलं, गतं, यया—नलिन्या इत्यर्थः, तुहिनांशुबिम्बं—चन्द्रबिम्बं, न दृष्टम्; इन्दोः,—चन्द्रस्यापि, उत्पत्तिः निष्फलैव—निष्प्रयोजनैव, येन—इन्दुना, विनिद्रा—विकसिता, प्रफुल्लेति यावत्, नलिनी—कमलिनी, न दृष्टा। अत्र पूर्व्वं विद्विषस्य उत्तरस्य राजकुमार्य्या उक्तिरिति बोध्यम्। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः।

(क) अत्रेति।—परस्परस्य दर्शनं विना परस्परजन्मनिरर्थकत्वमुखेनाशोभनत्वम् इति भङ्ग्येत्युक्तम्। एवं सहोक्तिरिति।—अत एव "समनैव नराधिपेन सा" इदमित्युदाहरणमुपपन्नम्।

(ख) समासोक्तिमाह, समासोक्तिरिति।—समैः,—प्रस्तुताप्रस्तुतसाधारणैरित्यर्थः, कार्य्यलिङ्गविशेषणैः,—कार्य्याणि च लिङ्गानि च विशेषणानि चेति द्वन्द्वः तथोक्तैः, कार्य्यैः लिङ्गैः,—पुंलिङ्गस्त्रीलिङ्गनपुंसकलिङ्गवाचित्वप्रत्यायकैः प्रत्ययैः, विशेषणैश्चेत्यर्थः, यत्र [ यद्वा,—यत्रेत्यव्ययं य इत्यर्थे ] प्रस्तुते अन्यस्य—अप्रस्तुतस्य, वस्तुनः,—विषयस्य, व्यवहारसमारोपः,—व्यवह्रियते—निश्चयेन प्रतीयते अनेन इति व्यवहारः,—अवस्थाभेदः तस्य समारोपः, इह तु स्वावस्थासमारोपेणेत्यर्थः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र समेन कार्य्येण प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपः। यथा,—

"व्याधूय यद्वसनमम्बुजलोचनाया
वक्षोजयोः कनककुम्भविलासभाजोः।
आलिङ्गसि प्रसभमङ्गमशेषमस्या
धन्यस्त्वमेव मलयाचलगन्धवाह!॥" (ग)

अत्र गन्धवाहे हठकामुकव्यवहारसमारोपः।

---

वक्ष्यमाणस्वरसात् अत्र व्यवहारसमारोपे कृतप्रकृतविशेषाधानस्यानुभवसिद्धतया व्यवहारः; अथवा "तत्त्वमौपम्ये यत् प्रतीयते" इति प्राचीनोक्तानुसारेण च व्यवहारसमारोपरूपैव समासोक्तिरनेनाङ्गीकृता; न तु "परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः" इति काव्यप्रकाशलक्षणानुसारेण प्रकृतवाचिना श्लिष्टविशेषणबलात् अप्रकृतव्यञ्जनरूपद्वितीयार्थस्यौपमानत्वानङ्गीकारेणासङ्गतिप्रसङ्गात्; सा समासोक्तिः,—समासेन—सकृदुच्चारणरूपसङ्क्षेपेणावस्थाद्वयप्रतीतिः समासोक्तिरिति संज्ञाव्युत्पत्तिरवधेया; यद्वा,—समस्यन्तेऽर्थादिः, आसेन—उपन्यासेन, उक्तिः,—अप्रस्तुतावस्थाव्यञ्जनम् इति सङ्क्षेपः।

(ग) व्याधूयेति।—हे मलयाचलगन्धवाह! यत्—यस्मात्, त्वम् अस्याः अम्बुजलोचनायाः,—पद्मसदृशनयनायाः, कनककुम्भविलासभाजोः,—कनके—सुवर्णे तस्य कुम्भौ—सुवर्णमयौ घटावित्यर्थः, तयोर्विलासः,—शोभा, तां भजेते इति तयोस्तथोक्तयोः,("विलासो हावभेदे स्यात् शोभालीलाप्रभेदयोः"इति गोपालः) सुवर्णमयकलससदृशशोभाशालिनोरिति भावः; ["भजो ण्विः"(३।२।६२ पा०) इति ण्विः] वक्षोजयोः,—वक्षसि जायेते इति तयोस्तथोक्तयोः, ["सप्तम्यां जनेर्डः" (३।२।९७ पा०) इति डः] स्तनयोः, वसनं—वस्त्रम्, व्याधूय—अपसार्य्य, अशेषं—समस्तम्, अङ्गं प्रसभं—बलात्, आलिङ्गसि—आलिङ्गनानन्दानुभवं करोषीति भावः, तस्मात् त्वमेव धन्यः,—श्लाघ्यः। अत्र नायिकायाः स्तनवसनाक्षेपपूर्वकालिङ्गनमेव कार्य्यं प्रकृतस्य वायोरप्रकृतस्य नायकस्य चेति समानम्; यदि पुनर्नायिकायास्तादृशालिङ्गनमप्राप्नुवतः कस्यचित् आत्मनः अधन्यत्वनिवेदनमेतत् स्यात्, तदा वायोरप्रकृतत्वात् नेयं समासोक्तिः, किन्तु "धन्याः खलु वने वाताः—" इत्यादिवक्ष्यमाणवद्वैधर्म्येणाप्रस्तुतप्रशंसैव, अहमधन्यः इति प्रस्तुतस्य गम्यत्वात्; एवञ्च "नवा लता गन्धवहेन चुम्बिता करम्बिताङ्गी मकरन्दशीकरैः" इत्याद्युदाहरणमस्यावगन्तव्यम; यत्र वायुर्वर्णनीयत्वेन प्रकृतः, तत्र चुम्बनरूपकार्य्यसाम्येन शृङ्गारित्वरूपनायकावस्थासमारोपः चारुत्वमावहति इति ज्ञेयम्। वसन्ततिलकं वृत्तम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

लिङ्गसाम्येन यथा,—

"असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः ।
अनाक्रम्य जगत् कृत्स्नं नो सन्ध्यां भजते रविः ॥" (घ)

अत्र पुंस्त्रीलिङ्गत्वमात्रेण रविसन्ध्ययोर्नायकनायिकाव्यवहारः । विशेषणसाम्यन्तु,—श्लिष्टतया, साधारण्येन, (ङ) औपम्यगर्भत्वेन च त्रिधा । तत्र श्लिष्टतया यथा मम,—

"विकसितमुखीं रागासङ्गाद्गलत्तिमिरावृतिं
दिनकरकरस्पृष्टामैन्द्रीं निरीक्ष्य दिशं पुरः ।
जरठलवलीपाण्डुच्छायो भृशं कलुषान्तरः
श्रयति हरितं हन्त ! प्राचेतसीं तुहिनद्युतिः ॥" (च)

---

(घ) असमाप्तेति ।—असमाप्ता—समाप्तिमप्राप्ता, जिगीषा—जयेच्छा यस्य तादृशस्य, मनस्विनः,—नीतिविदः, महानुभावस्य जिगीषोरित्यर्थः, स्त्रीचिन्ता—कान्ताऽभिलाषः, का ? न काऽपीत्यर्थः ; तथा हि,—रविः,—सूर्य्यः, कृत्स्नं—समग्रं, जगत् अनाक्रम्य सन्ध्यां नो भजते । अत्र दृष्टान्तत्वेनाप्रकृतयोरपि रविसन्ध्ययोः प्रकृताङ्गत्वेनैव प्रकृतत्वमवधेयम् । न चायं समासोक्तिमूलकोऽर्थान्तरन्यास इति वाच्यं, प्रथममप्रकृतार्थप्रतीतेरसम्भवात् प्राथमिकप्रतीतिविषयस्यैव समर्थकत्वाङ्गीकारात्, आरोपितस्त्रीपुंसभावयोः स्त्रीपुंसविशेषत्वाभावेन सामान्यसमर्थकत्वायोगाच्च इति बोध्यम् । विलक्षणस्येदं पद्यम् ।

(ङ) साधारण्येन—वाच्यव्यङ्ग्यगतत्वेनेत्यर्थः ।

(च) विकसितेति ।—हन्तेति खेदसूचकमव्ययम् ; तुहिनद्युतिः,—तुहिनमिव शीतला, द्युतिः,—कान्तिर्यस्य तथोक्तः, चन्द्र इत्यर्थः, पुरः,—अग्रतः, रागस्य—लौहित्यस्य अनुरागस्य च, ("रागस्तु मात्सर्य्ये लोहितादिषु । क्लेशादावनुरागे च गान्धारादौ नृपेऽपि च ॥" इति मेदिनी ) आसङ्गात्—आवेशात्, विकसितमुखीं—प्रकाशितैकदेशां प्रसन्नमुखीञ्च, तथा गलन्ती—नश्यन्ती, तिमिरावृतिर्यस्यास्तां, पक्षे,—गलन्ती—निर्गच्छन्ती, तिमिरमेव आवृतिः,—आवरणं, वसनमित्यर्थः, यस्याः तथाभूतां, दिनकरस्य—सूर्य्यस्य, [ तदभिधेयस्योपनायकस्य चेति ध्वनिः ] करेण—किरणेन हस्तेन च, ("बलिहस्तांशवः कराः" इत्यमरः ) स्पृष्टाम् ऐन्द्रीं—पूर्वां दिशं, निरीक्ष्य—दृष्ट्वा, जरठा—परिणता, परिपक्वेति यावत्, या लवली—"नोयाड़"

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र मुखरागादिशब्दानां श्लिष्टता। अत्रैव हि "तिमिरावृतिम्" इत्यत्र "तिमिरांशुकाम्" इति पाठे एकदेशस्य रूपणेऽपि समासोक्तिरेव, न तु एकदेशविवर्त्ति रूपकम्। तत्र हि तिमिरांशुकयोः रूप्यरूपकभावो द्वयोरावरकत्वेन स्फुटसादृश्यतया परसाचिव्यमनपेक्ष्यापि स्वमात्रविश्रान्त इति न समासोक्तिबुद्धिं व्याहन्तुमीशः। (छ)

यत्र तु रूप्यरूपकयोः सादृश्यमस्फुटं तत्रैकदेशान्तररूपणं विना तदसङ्गतं स्यात् इत्यशाब्दमपि एकदेशान्तररूपणमार्थमपेक्षते एवेति। (ज)

तत्रैकदेशविवर्त्तिरूपकमेव यथा,—

"जस्स रणंतेउरए करे कुणंतस्स मण्डलग्गलअम्।
रससंमुहीवि सहसा परंमुही होइ रिउसेणा॥" (झ)

---

इत्याख्यो वृक्षः, उपचारात् तत्फलं, तद्वत् पाण्डुः छाया—कान्तिः यस्य तथाभूतः, भृशम्—अत्यर्थं, कलुषान्तरः,—कलङ्कमलिनान्तःकरणः, पक्षे,—ईर्ष्याकषायितचित्तः सन्, प्राचेतसीं—पश्चिमां, लक्षणया बन्धकीञ्च, हरितं—दिशं, श्रयति—अवलम्बते। अत्र प्राच्यां बन्धकीव्यवहारः चन्द्रे नायकव्यवहारश्च प्रतीयते। हरिणीवृत्तम्;—"नसमरसलागः षड्वेदैर्हयैर्हरिणी मता" इति च तल्लक्षणम्।

(छ) अत्रेति।—एकदेशविवर्त्तिरूपकेण सहास्या विषयविभागं करोति, तत्र हीति।—तत्र—"विकसितमुखीं—" इत्युदाहरणे, रूप्यरूपकभावः,—रूप्यम्—आरोपविषयः तिमिरं, रूपकम्—आरोप्यमाणम् अंशुकं, तयोर्भावः, द्वयोः,—तिमिरांशुकयोः, आवरकत्वेन—आच्छादकत्वेन, परसाचिव्यं—नायिकारूपणानुकूल्यं, वाक्यार्थपर्य्यालोचनसाहाय्यमित्यर्थः, अनपेक्ष्य—अगृहीत्वाऽपि, स्वमात्रेण—सुखसाधनसामर्थ्येन, विश्रान्तः,—वैचित्र्यविशेषे कार्य्ये उपक्षीणः, सादृश्यावबोधकतया स्वतः सिद्धः इत्यर्थः, इति हेतोः समासोक्तिबुद्धिं व्याहन्तुं—खण्डयितुं, न ईशः,—न शक्तः।

(ज) यत्रेति।—यत्र, वाक्ये इति शेषः, अस्फुटम्—अस्पष्टं, तत्र एकदेशान्तरस्य रूपणं विना तत्—वाक्यम्, असङ्गतम्—अनुपपन्नम्। अशाब्दम्—शब्दाप्रतिपाद्यम्। आर्थम्—अर्थबललभ्यम्।

(झ) जस्सेति।—[ "यस्य रणान्तःपुरे करे कुर्वाणस्य मण्डलाग्रलताम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र रणान्तःपुरयोः सादृश्यमस्फुटमेव। क्वचिच्च यत्र स्फुटसादृश्यानामपि बहूनां रूपणं शाब्दम् एकदेशस्य चार्थं, तत्रैकदेशविवर्त्ति रूपकमेव, रूपकप्रतीतेर्व्यापितया समासोक्तिप्रतीतितिरोधायकत्वात्। ननु अस्ति रणान्तःपुरयोरपि सुखसञ्चारतया स्फुटं सादृश्यमिति चेत्, सत्यमुक्तम्; अस्त्येव; किन्तु वाक्यार्थपर्य्यालोचनसापेक्षं, न खलु निरपेक्षम्; (ञ) मुखचन्द्रादेर्मनोहरत्वादिवत् रणान्तःपुरयोः स्वतः सुखसञ्चारत्वाभावात्।

साधारण्येन यथा,—

"निसर्गसौरभोद्भ्रान्तभृङ्गसङ्गीतशालिनी।
उदिते वासराधीशे स्मेराऽजनि सरोजिनी॥" (ट)

---

रससम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेना॥" इति संस्कृतम्।} रण एव अन्तःपुरं तत्र, करे मण्डलाग्रलताम्—असिलताम् [अपरां नायिकामिति ध्वनिः] कुर्वतः यस्य रससम्मुखी—रसेन—समरेच्छया, सुरतेच्छया च, सम्मुखी—अभिमुखगामिनी, उत्साहाभिमुखी अनुरागवती चेत्यर्थः, रिपुसेना—शत्रुबलं, [कान्ता चेति ध्वनिः] सहसा पराङ्मुखी भवति। अत्र यदि लिङ्गसाम्येन मण्डलाग्रलतायां नायिकाव्यवहारः, पराङ्मुखत्वरूपकार्य्यसाम्येनापि रिपुसेनायां प्रतिनायिकाव्यवहारः प्रतीयते, तथाऽपि तदुभयं रणे अन्तःपुररूपणस्य असङ्गतिप्रसङ्गसापेक्षमित्येकदेशविवर्त्तिरूपकमेवेदम् इति भावः। अलङ्कारकौस्तुभे तु संस्कृतभाषायामेव दर्शितं पद्यमेतदिति ज्ञेयम्। आर्य्या छन्दः।

(ञ) क्वचिच्च यत्रेति।—अत्र साहचर्य्यमर्य्यादया प्रथमत एवाप्रस्तुतोपस्थितिरिति भावः। रूपकप्रतीतेरिति।—व्यापितया—बहुगामितया इत्यर्थः, समासोक्तिप्रतीतेः तिरोधायकत्वात्—आवरकत्वात, यथा,—"लावण्यमधुभिः पूर्णं—" इत्यादि। सुखसञ्चरतयेति।—यथा अन्तःपुरे सुखं सञ्चरति तथा रणेऽपीति भावः। निरपेक्षं—वाक्यार्थपर्य्यालोचननिरपेक्षमित्यर्थः; ततश्च बहूनां स्फुटसादृश्यानां सद्भावे तथा अस्फुटसादृश्यानां सद्भावे रूपणस्य अव्यापित्वेऽपि यदि एकदेशस्य रूपणं स्यात्, तदा एकदेशविवर्त्तिरूपकमेवेति बोध्यम्।

(ट) निसर्गेति।—निसर्गसौरभेण—स्वाभाविकसौगन्ध्येन, उद्भ्रान्ताः,—विमो-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र निसर्गेत्यादिविशेषणसाम्यात् सरोजिन्यां नायिकाव्यवहारप्रतीतौ स्त्रीमात्रगामिनः स्मेरत्वधर्म्मस्य समारोपः कारणम्; तेन विना विशेषणसाम्यमात्रेण नायिकाव्यवहारप्रतीतेरसम्भवात्। औपम्यगर्भत्वं पुनस्त्रिधा सम्भवति, उपमारूपकसङ्करगर्भत्वात्। (ठ) तत्रोपमागर्भत्वे यथा,—

"दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी।
केशपाशालिवृन्देन सुवेशा हरिणेक्षणा॥" (ड)

अत्र सुवेशत्ववशात् प्रथमं दन्तप्रभाः पुष्पाणीव इत्युपमागर्भत्वेन समासः। अनन्तरञ्च दन्तप्रभासदृशैः पुष्पैश्चिता इत्यादिसमासान्तराश्रयेण समानविशेषणमाहात्म्यात् हरिणेक्षणायां लताव्यवहारप्रतीतिः। (ढ)

---

ष्ठिताः, ये भृङ्गाः तेषां सङ्गीतशालिनी सरोजिनी—पद्मिनी, वासराधीशे—सूर्य्ये, उदिते सति, स्मेरा—विकसिता सस्मिता च, अजनि—अभूत्।

(ठ) अत्रेति। नायिकाव्यवहारप्रतीताविति।—यस्या मुखे स्वाभाविकं सौरभं, तस्या एव व्यवहारसमारोपः। ननु श्लिष्टविशेषणस्य द्व्यर्थशब्दप्रयोगसामर्थ्यादेवार्थान्तरप्रतिपादकत्वं, साधारणविशेषणस्य तु वाच्यविशेषाधानेनैवोपक्षयणत्वात् कथं तेनार्थान्तरप्रतीतिः? इत्यत आह,—स्त्रीमात्रेति।—मात्रपदेन सरोजिन्या व्यवच्छेदः; सरोजिनीविकासे चित्तोल्लासविशेषरूपस्मेरत्वस्य तादात्म्यारोपः। कारणं—सहकारि। तेन—स्मेरत्वसमारोपेण। असम्भवादिति।—साधारणविशेषणस्य वाच्यविशेषाधानेनैव उपक्षीणतया व्यञ्जनबोधे सामर्थ्याभावादिति भावः। एवञ्च साधारणविशेषणमप्रस्तुतासाधारणधर्म्मारोपादिसहकृतमेवार्थान्तरप्रतिपादकमिति फलितम्। उपमारूपकयोः सन्दिग्धत्वे सङ्कर इति ज्ञेयम्।

(ड) दन्तेति।—दन्तानां प्रभाः पुष्पाणीवेति दन्तप्रभापुष्पाणि तैः चिता—व्याप्ता, पाणिः पल्लव इव पाणिपल्लवः, तेन शोभते इति पाणिपल्लवशोभिनी, केशपाशः अलिवृन्दमिव तेन उपलक्षिता सुवेशा—सुष्ठु परिच्छदवती, हरिणेक्षणा, विभातीति शेषः। लतापक्षे,—दन्तप्रभा इव पुष्पाणि तैश्चिता, पाणिरिव पल्लवः तेन शोभिनी, केशपाश इव अलिवृन्दं तेन।

(ढ) नन्वेतद्रूपकगर्भमेवेत्यत आह, सुवेशत्ववशादिति।—सुवेशत्वरूपान्यथा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रूपकगर्भत्वे यथा,—"लावण्यमधुभिः पूर्णं—" इत्यादि। सङ्करगर्भत्वे यथा,—"दन्तप्रभापुष्पचिता—" इत्यादौ "सुवेशा" इत्यत्र "परीता" इति पाठे ह्युपमारूपकसाधकाभावात् सङ्कर-समाश्रयणम्। समासान्तरं पूर्व्ववत्। समासान्तरमहिम्ना लताप्रतीतिः। एषु च येषां मते उपमासङ्करयोरेकदेशविवर्त्तिता नास्ति, तन्मते आद्यतृतीययोः समासोक्तिः। द्वितीयस्तु प्रकार एकदेशविवर्त्तिरूपकविषय एव। पर्य्यालोचने तु आद्ये प्रकारे एकदेशविवर्त्तिन्युपमैवाङ्गीकर्त्तुमुचिता। (ण) अन्यथा,—

---

नुपपत्तेरित्यर्थः, सुवेशत्वधर्म्मस्य मुख्यतया उपमेये हरिणेक्षणायां वर्त्तनात् औपम्य-गर्भत्वम्। पुष्पपल्लवाभ्यामपि शरीरशोभाविशेषस्य सम्भवेऽपि अलिहन्तेन तस्या-सम्भवात् तत्रैवोपमासमासस्यावश्यकत्वमित्यवगन्तव्यम्; लताप्रतीतौ सुवेशत्वेन शोभनत्वारोपो वेदितव्यः।

(ण) लावण्येति।—अत्र लावण्यमधुनोराह्लादकत्वे लोचनरोलम्बयोः श्याम-त्वादिना स्फुटसादृश्यसम्भवात् रूपकाणां बहुलाभावाच्च समासोक्तिरेव, न त्वेकदेश-विवर्त्तिरूपकम्; एकदेशविवर्त्तिरूपकस्य यदेतदुदाहरणं दत्तं, तन्मतभेदेनेत्यव-गन्तव्यम्। नन्वत्र मध्वादीनां मुखे बाधात् प्राथमिकबोधानुपपत्तिः, इति चेत्, न; यथा,—"मुखचन्द्रं चुम्बति" इत्यादौ चुम्बनस्य चन्द्रे बाधात् मुखे पर्य्यवसानं, तथा मुखसम्बन्धस्य मध्वादावसम्भवात् लावण्यादौ पर्य्यवसानम् इति स्वीकारात्; नन्वेवमपि पूर्व्ववत् समासद्वयाङ्गीकारेणोपमागर्भमेवेदमस्तु, किमधिकेन रूपकगर्भत्व-कल्पनेन? इति चेत्, सत्यम्; गतानुगतिकन्यायेनास्य प्रकारस्य स्वीकारात् ग्रन्थकृतैव खण्डनीयत्वाच्च। उपमारूपकेति।—उपमासाधकस्य—उपमेये मुख्यतया स्थितस्य धर्म्मस्य, रूपकसाधकस्य—उपमाने मुख्यतया स्थितस्य धर्म्मस्य वाचकस्य च, उपमैवात्र न रूपकं, रूपकमेवात्र नोपमा इत्येवंरूपस्य अभावादित्यर्थः। समासान्तरं पूर्व्ववत्—उपमापक्षे उपमितिसमासः, रूपकपक्षे रूपकसमासः, यथा,—दन्तप्रभा पुष्पाणीव, तथा दन्तप्रभा एव पुष्पाणि इत्यादि बोध्यम्। आद्यतृतीययोः,—दन्त-प्रभापुष्पचितेत्यादिरूपे आद्ये उदाहरणे, तृतीये—अत्रैव सुवेशेत्यत्र परीतेति पाठे न परिवर्त्तिते इत्यर्थः। द्वितीयस्त्विति।—मुखे मध्वाद्यन्वयस्यासम्भवात् प्रथमत एव पद्माध्याहारेण प्रतीतिः, कुतः व्यञ्जनामात्रप्राणा समासोक्तिरिति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानाऽऽर्द्रनखक्षताभम्।
प्रमोदयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार॥"(त)

इत्यत्र कथं शरदि नायिकाव्यवहारप्रतीतिः? नायिकापयोधरेणार्द्रनखक्षताभशक्रचापधारणासम्भवात्। ननु "आर्द्रनखक्षताभम्" इत्यत्र स्थितमप्युपमानत्वं वस्तुपर्य्यालोचनया ऐन्द्रे धनुषि सञ्चारणीयम्; यथा,—"दध्ना जुहोति" इत्यादौ हवनस्यान्यथासिद्धेर्दध्नि सञ्चार्य्यते विधिः। एवञ्च इन्द्रचापाभमार्द्रनखक्षतं दधानेति प्रतीतिर्भविष्यतीति चेन्न; एवंविधानिर्व्वाहे कष्टसृष्टिकल्पनादेकदेशविवर्त्तिन्युपमाऽङ्गीकारस्यैव ज्यायस्त्वात्। अस्तु वा अत्र यथाकथञ्चित् समासोक्तिः; "नेत्रैरिवोत्पलैः पद्मैः" इत्यादौ च अन्यगत्यसम्भवात्। किञ्च, उपमायां व्यवहारप्रतीतेरभावात् कथं तदुपजीविकायाः समासोक्तेः प्रवेशः? (थ) यदाहुः,—

---

(त) ऐन्द्रमिति।—शरद्वर्णनमिदम्। शरत्—तदाख्यकालः, पाण्डुपयोधरेण—निर्हष्टत्वात् सितजलधरेण, आर्द्रम्—अभिनवं, यत् नखक्षतं तस्येव आभा यस्य तादृशम्, ऐन्द्रं धनुः,—शक्रचापं, दधाना—धारयन्ती सती, सकलङ्कम् इन्दुं प्रमोदयन्ती—विकाशयन्ती, रवेः,—सूर्य्यस्य, तापम् अभ्यधिकं चकार। शरदि चन्द्रस्य उज्ज्वलत्वं, सूर्य्यस्य च उपतापकत्वं स्यादिति प्रसिद्धिरिति भावः। अत्रेन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः।

(थ) वस्तुपर्य्यालोचनयेति।—विषयानुशीलनेन, अभिप्रेतार्थबोधनानुरोधेन इत्यर्थः। सञ्चारणीयं—याचितमण्डलन्यायेनार्पणीयम्। अत्र वैदिकदृष्टान्तमाह, दध्नेति।—हवनस्य—होमस्य, अन्यथा—अन्यप्रकारेण, "सायं प्रातर्जुहोति" इत्यादिविधिना इति यावत्, सिद्धेः,—वचनान्तरप्राप्तेरित्यर्थः, दध्नि—दधिपदे, विधिः,—अप्राप्यप्रापकत्वरूपविधिशक्तिः, सञ्चार्य्यते—उपक्रम्यते। तदुक्तम्;—"सर्व्वत्राख्यातसम्बन्धे श्रूयमाणे पदान्तरे। विधिशक्त्युपसङ्क्रान्ते स्याद्धातोरनुवादता॥" इति। यथाख्याते स्थिता विधिशक्तिः धात्वर्थस्यान्यथासिद्धत्वे तत्रानुपयोगिनी, अदग्धदहनन्यायेन पदार्थान्तरस्य विधेयतायामुपयोगं लभमाना पदान्तरे सञ्चार्य्यते, तथाऽत्रापीति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"व्यवहारोऽथवा तत्त्वमौपम्ये यत् प्रतीयते ।
तन्नौपम्यसमासोक्तिरेकदेशोपमा स्फुटा ॥" (द)

एवञ्च उपमारूपकयोरेकदेशविवर्त्तिताऽङ्गीकारे तन्मूलसङ्करेऽपि समासोक्तेरप्रवेशो न्यायसिद्ध एव, (ध) तेनौपम्यगर्भविशेषणोत्थापितत्वं नास्या विषय इति । विशेषणसाम्ये श्लिष्ट-

निर्वाहे इति ।—अशक्यनिर्वाहे इत्यर्थः । ननु धर्म्मिकल्पनातो धर्म्मकल्पना लघीयसीति न्यायेनोपमेयस्योपमानत्वकल्पनमपेक्ष्यैकदेशविवर्त्त्युपमाकल्पनागुरुरित्यत आह,—अस्तु वेति । यथाकथञ्चिदिति ।—कष्टसृष्ट्या आर्द्रनखचते स्थितस्य उपमावाचकस्य आभाशब्दस्य ऐन्द्रे धनुषि सञ्चारणेनेति भावः । नेत्रैरिवेति ।—"नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः । पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव ॥" इति प्रागुक्तोदाहरणे इत्यर्थः । अन्यगत्यसम्भवात्—समासोक्तिप्रकारासम्भवात्, "एकदेशविवर्त्त्युपमैवाङ्गीकर्त्तुमुचिता" इति पूर्व्वेणान्वयः । ननु प्रागुक्तयुक्त्या उत्पलादौ उपमानत्वं सञ्चारणीयम् इति चेत्, न ; "आर्द्रनखचताभम्" इत्यत्रार्थ्याः उपमायाः अर्थवशेनैव कल्पनाया योग्यत्वात्, प्रकृते तु श्रौत्यास्तदसम्भवादिति भावः । ननु इवशब्दव्यत्ययेन अत्रापि सरःश्रिया मङ्गलव्यवहारसमारोप इति समासोक्तिरस्तु, का क्षतिः ? इत्याशङ्क्य द्रढ़यति, किञ्चेति ।—तथा च यत्र व्यवहारसमारोपप्रतीतिः स्फुटा, तत्रैव समासोक्तिः, न तु कष्टसृष्ट्या व्यवहारप्रतीत्यानयने, तथा हि विशेषणानां सादृश्योपलम्भमहिम्ना विशेष्यस्याप्यध्याहारेण प्रथमत एव सादृश्यप्रतीतिरनुभवसिद्धा, तथैव श्रोतुराकाङ्क्षाविरहात् व्यवहारव्यञ्जनं न भवति इति भावः ।

(द) व्यवहार इति ।—औपम्ये—औपम्यगर्भविशेषणसाम्ये सति इत्यर्थः, व्यवहारः,—साधर्म्यं, तत्त्वं—स्वरूपं, वा, अप्रस्तुतस्येति शेषः, (तत्त्वप्रतीतौ समासोक्तिमन्ये स्वीकुर्व्वन्ति, तन्मतानुसारेणैव "अथवा तत्त्वम्" इत्युक्तम्) यत् प्रतीयते—बुध्यते, तत् औपम्यसमासोक्तिः न—औपम्यगर्भविशेषणसाम्योत्थापिता समासोक्तिर्न भवतीति भावः ; तत्र हेतुः,—यतः सा स्फुटा—सुव्यक्ता, सर्व्वजनानुभवसिद्धा इत्यर्थः, एकदेशोपमा—एकदेशविवर्त्तिनी उपमेत्यर्थः । तथा च सादृश्यप्रतीतिरेवानुभवसिद्धा, न व्यवहारप्रतीतिः, इति नात्र समासोक्तिप्रसङ्ग इति भावः ।

(ध) एवमिति ।—तन्मूलसङ्करे—उपमारूपकसङ्करे इत्यर्थः, न्यायसिद्धः,—युक्तिसिद्धः, व्यवहारसमारोपाभावादिति भावः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विशेषणोत्थापिता साधारणविशेषणोत्थापिता चेति द्विधा। कार्य्यलिङ्गयोस्तुल्यत्वे च द्विविधेति चतुष्प्रकारा समासोक्तिः। सर्व्वत्रैवात्र व्यवहारसमारोपः कारणम्। स च क्वचिल्लौकिके वस्तुनि लौकिकवस्तुव्यवहारसमारोपः, शास्त्रीये वस्तुनि शास्त्रीयवस्तुव्यवहारसमारोपः, लौकिके वा शास्त्रीयवस्तुव्यवहारसमारोपः, शास्त्रीये वा लौकिकवस्तुव्यवहारसमारोप इति चतुर्द्धा। तत्र लौकिकवस्त्वपि रसादिभेदादनेकविधम्; शास्त्रीयमपि तर्कायुर्वेदज्योतिःशास्त्रादिप्रसिद्धतयेति बहुप्रकारा समासोक्तिः। दिङ्मात्रं यथा,—"व्याधूय यद्वसनम्" इत्यादौ। लौकिके वस्तुनि लौकिकस्य हठकामुकव्यवहारादेः (न) समारोपः।

"यैरेकरूपमखिलास्वपि वृत्तिषु त्वां
पश्यद्भिरव्ययमसङ्ख्यतया प्रवृत्तम्।
लोपः कृतः किल परत्वजुषो विभक्ते-
स्तैर्लक्षणं तव कृतं ध्रुवमेव मन्ये॥" (प)

अत्र आगमशास्त्रप्रसिद्धे वस्तुनि व्याकरणप्रसिद्धवस्तुव्यव-

(न) व्यवहारादेः इत्यादिपदेन स्वरूपस्य ग्रहणम्।

(प) यैरिति।—ईश्वरं प्रति कस्यचिदुक्तिरियम्। हे भगवन्! अखिलासु—समयासु, वृत्तिषु—अवस्थासु, वस्तुषु वा, पदप्रत्यययोगसमासादिरूपेषु पदार्थान्वयेषु च, ("वृत्तिर्विवरणावस्थासमासाजीवनेषु च। कौशिक्यादौ प्रवृत्तौ च" इति गोपालः) एकरूपं—रूपान्तरमलभमानमित्यर्थः, अव्ययम्—अविनाशिनम्, अव्ययपदवाच्यञ्च असङ्ख्यतया—सङ्ख्याऽतीततया, अनन्तरूपतयेति यावत्, सङ्ख्याविशेषप्रतिपादकतया च, प्रवृत्तं त्वां पश्यद्भिः यैः,—जनैः, परत्वजुषः,—उत्कर्षभाजः, यद्वा,—त्वदन्यः कश्चिदस्ति इत्येवंरूपाया इत्यर्थः, विभक्तेः,—भेदग्रहस्य, पक्षे,—परवर्त्तिन्याः, विभक्तेः,—प्रत्ययस्य, स्वादेरित्यर्थः, लोपः कृतः, तैः तव लक्षणं,—विशिष्टस्वरूपज्ञानं, तत्त्वमित्यर्थः, सूत्रञ्च, कृतं—निरूपितम्, इति ध्रुवमेव—निश्चितमेव, मन्ये—जानामि। वसन्ततिलकं वृत्तम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

हारसमारोपः । एवमन्यत्र । रूपकेऽप्रकृतम् आत्मस्वरूपसन्निवेशेन प्रकृतस्य रूपमवच्छादयति, इह तु स्वावस्थासमारोपेणानवच्छादितं स्वरूपमेव तं पूर्व्वावस्थातो विशेषयति। अत एव अत्र "व्यवहारसमारोपो न तु स्वरूपसमारोपः" इति वदन्ति । उपमाध्वनौ श्लेषे च विशेष्यस्यापि साम्यम्, इह तु विशेषणमात्रस्य ; अप्रस्तुतप्रशंसायां प्रस्तुतस्य गम्यत्वम्, (फ) इह तु अप्रस्तुतस्येति भेदः ।

**उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः ॥७२५॥(ब)**

(फ) अत्र आगमेति ।—आगमशास्त्रं—वेदः, तत्र प्रसिद्धं तस्मिन्, वस्तुनि—ब्रह्मणीति भावः, व्याकरणशास्त्रप्रसिद्धस्य वस्तुनः,—अव्ययशब्दस्य इत्यर्थः, व्यवहारसमारोपः । एवमन्यत्रेति ।—तद्यथा,—"गण्डान्ते मददन्तिनां प्रहरतः स्थामण्डली वैधृते रक्षामाचरतः सदा विदधती लाटेषु याचोत्सवम् । पूर्व्वामत्यजतः स्थितिं शुभकरीमासेव्यमानस्य ते वर्द्धन्ते विजयश्रियः किमिव न श्रेयस्विनां मङ्गलम् ॥" अत्र ज्योतिःशास्त्रप्रसिद्धपदार्थारोपः । रूपकादस्याः परैरूपपादितं भेदं दर्शयति, रूपके इति ।—अप्रकृतं—वस्तु, उपमानमित्यर्थः, आत्मस्वरूपस्य सन्निवेशेन—आरोपणेन, प्रकृतस्य—उपमेयस्य, रूपं—स्वरूपम्, अवच्छादयति—आवृणोति । इह तु—समासोक्तौ तु, स्वावस्था—स्वसाधर्म्यं, तस्याः समारोपेण । तं—प्रकृतपदार्थं, पूर्वावस्थातः,—प्रकृतावस्थामवच्छाद्येत्यर्थः, विशेषयति—उत्कृष्टत्वेन ज्ञापयति । अत्रापि "अप्रकृतम्" इति कर्तृपदमन्वेति । विशेष्यस्यापीत्यपिना विशेषणस्यापि साम्यं, प्रतीयते इति शेषः । गम्यत्वं—व्यङ्ग्यत्वम् ।

(ब) परिकरमाह, उक्तिरिति ।—साभिप्रायैः,—अभिप्रायव्यञ्जकैः, प्रकृतार्थपरिपोषणाभिप्रायेण प्रयुक्तैरित्यर्थः, विशेषणैः (बहुत्वमत्र विवक्षितं, तेनैव वैचित्र्यस्यानुभवसिद्धत्वात्) उक्तिः,—विशेषणस्य प्रकृतोपयोगित्वज्ञापनमित्यर्थः, परिकरोति—प्रकृतार्थमुत्कर्षयति, इति परिकरः मतः [मत्वर्थीयोऽच् । "सम्पर्य्युपेभ्यः—"(६।१।१३७ पा०) इति भूषणार्थाभावान्न सुट्] ["उक्तेः" इति पाठान्तरम्]. यद्यप्यपुष्टार्थस्य दोषत्वाभिधानात् तन्निराकरणेन पुष्टार्थस्य स्वीकारः कृतः, तथाप्येकनिष्ठत्वेन बहूनां विशेषणानामेवोपन्यासे वैचित्र्यमित्यलङ्कारमध्येऽयं गणित इति काव्यप्रकाशः। अत्र "साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः। चतुर्णां पुरुषार्थानां दाता देव-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—"अङ्गराज! सेनापते! द्रोणोपहासिन्! कर्ण! रक्षैनं भीमाद् दुःशासनम्।" (भ)

**शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनम्॥७२६॥ (म)**

"स्वभावादेकार्थैः" इति शब्दश्लेषाद् व्यवच्छेदः, "वाचनम्" इति च ध्वनेः। (य) उदाहरणम्,—

"प्रवर्त्तयन् क्रियाः साध्वीर्मालिन्यं हरितां हरन्।
महसा भूयसा दीप्तो विराजति विभाकरः॥" (र)

---

यतुर्भुजः"॥ इति विशेषोऽवगन्तव्यः। तरोरङ्कुर इवायं परिकरान्न भिन्नः, परिकरस्याङ्कुर इति विग्रहात्।

(भ) अङ्गराजेति।—भीमेन बध्यमानं दुःशासनं रक्षितुमशक्नुवन्तं कर्णं प्रति अश्वत्थाम्नः सोल्लुण्ठनं वचनमिदम्। अङ्गानां—देशभेदानां, राजा अङ्गराजः तत्सम्बुद्धौ, सेनापते!—माम् अवज्ञाय त्वं सैनापत्ये अभिषिक्तोऽसीति भावः। द्रोणम् उपहसितवान् इति द्रोणोपहासी तत्सम्बुद्धौ—त्वम् आत्मगर्वेण द्रोणं मत्पितरम् उपहसितवानसि। कर्ण! एनं दुःशासनं भीमात्—वृकोदरहस्तात्, रक्ष—परित्रायस्व। अत्र उक्तविशेषणत्रयप्रभावात् कर्णस्य दुःशासनरक्षणम् अवश्यकर्त्तव्यं प्रतीयते, तथाविधस्य स्वपक्षरक्षणाक्षमतायां लज्जातिशयश्च इति बोध्यम्।

(म) अर्थश्लेषमाह, शब्दैरिति।—स्वभावात् एकार्थैः शब्दैः [ स्वभावादित्यर्थपदस्याभिधेयमात्रपरत्वरूपतात्पर्य्यग्राहकत्वम्, अन्यथा एकार्थैरित्ययोग्यं, सर्वेषामेव शब्दानां वाच्यत्वव्यङ्ग्यरूपनानार्थसम्भवात् ] अनेकार्थानाम्—अनेकेषामर्थानां, वाचनम्—अभिधालक्षणाभ्यां प्रतिपादनं, सम्बन्धिभेदेन इति भावः, श्लेषः। एकस्मिन् विशिष्येऽभिधया, अपरस्मिन् विशेष्ये लक्षणया अर्थद्वयप्रतिपादनेऽर्थश्लेषः इति निष्कृष्टोऽर्थः।

(य) शब्दश्लेषादिति।—शब्दश्लेषे हि स्वभावादेव शब्दानां भिन्नार्थता, अत एव तस्य शब्दालङ्कारत्वम्, अर्थश्लेषे तु न शब्दानामनेकार्थत्वं, किन्तु पुनरपि अनेकार्थानामभिधालक्षणाभ्यां प्रतिपादनम्। ध्वनेः,—वाचकव्यञ्जनस्य शब्दस्य व्यङ्ग्यतया तस्याऽभिधया बोधनमसम्भवीति ध्वनेः, स्फुटं व्यवच्छेदः इति पूर्वेणान्वयः।

(र) प्रवर्त्तयन्निति।—[एतत्कर्त्तरि शक्तम् ] साध्वीः क्रियाः,—वैदिककर्माणि, पक्षे,—करस्पर्शेन पावित्र्यजननद्वारा उपयोगि लाक्षणिकमित्यर्थः; तदुक्तं विष्णु-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र प्रकरणादिनियमाभावात् (ल) द्वावपि राजसूर्य्यौ वाच्यौ ।

क्वचिद्विशेषः सामान्यात् सामान्यं वा विशेषतः ।
कार्य्यान्निमित्तं कार्य्यञ्च हेतोरथ समात् समम् ॥
अप्रस्तुतात् प्रस्तुतञ्चेद्गम्यते पञ्चधा ततः ।
अप्रस्तुतप्रशंसा स्यात् ॥ ७२७ ॥ (व)

पुराणे,—"सृष्टौ यदंशुभिर्लोकः क्रियायोग्योऽभिजायते । पवित्रताकारणाय तस्मै शुद्धात्मने नमः ॥" इति ; प्रवर्त्तयन्—प्रजाभिः स्वयञ्च कारयन्, हरितां—दिग्वर्त्तीनां, मालिन्यं—दैन्यादनौजस्यं, पक्षे,—दिशां तमःश्यामतां, हरन्—अपाकुर्व्वन्, शिक्षाप्रदानादिना अन्धकारध्वंसेन चेति भावः, भूयसा—अतिमहता, महसा—"अधिक्षेपापमानादेः" इत्यादिना प्रागुक्तेन तेजसा, शौर्य्यप्रभावेण वा, पक्षे,—ज्योतिषा, दीप्तः,—अधृष्यः, पक्षे,—जाज्वल्यमानः, विभां—विनाशितदस्युजनोपद्रवतया यशःप्रसारं, पक्षे,—संहततमिस्रतया किरणप्रकाशं करोतीति विभाकरः,—राजा सूर्य्यश्च, विराजति—शोभते ।

(ल) ननु अत्र प्रकरणाद्राजप्रतीतौ सूर्य्ये व्यञ्जनयोपमाध्वनिरेवायमित्यत आह, प्रकरणादिनियमाभावात् इति ।—आदिना संयोगादिपरिग्रहः । नन्वेवं शब्दश्लेष एवायं, विभाकरपदस्य राजसूर्य्योभयवाचकत्वादिति चेत्, न ; तस्याष्टसु भेदेषु कस्मिंश्चिदपि भेदेऽस्यान्तर्भावानुपपत्तेः, विभाकरादिपदानां परिवृत्तावपि च एतस्य सम्भवात्, तथापि यदि सङ्कीर्णमेवेदमुदाहरणमिति चेत् ? तर्हीदम् असङ्कीर्णोदाहरणम्,—"लोकेनोन्नतिमायाति लोकेनायात्यधोगतिम् । अहो ! सुसदृशी वृत्तिः तुलाकोटेः खलस्य च ॥" अत्रोन्नत्यधोगतिपदाभ्यामुत्कर्षापकर्षौ लक्ष्यौ, इति बोध्यम् ।

(व) अप्रस्तुतप्रशंसामाह, क्वचिदिति ।—एतच्च वाक्यपञ्चकेऽन्वेति, "अप्रस्तुतात्" इति "सामान्यात्" इत्यादिपञ्चकस्य विशेषणम् ; "प्रस्तुतम्" इति यथायथं लिङ्गविपरिणामाविपरिणामाभ्यां "विशेषः" इत्यादिपञ्चकस्य च विशेषणम् ; तथाहि,—क्वचित् सामान्यात्—साधारणात्, अप्रस्तुतात् विशेषः प्रस्तुतः, क्वचित् विशेषतः,—विशेषात्, अप्रस्तुतात् सामान्यं प्रस्तुतं, क्वचित् अप्रस्तुतात् कार्य्यात् प्रस्तुतं निमित्तं, क्वचित् अप्रस्तुतात् निमित्तात् प्रस्तुतं कार्य्यं; क्वचित् समात् अप्रस्तुतात् समं प्रस्तुतं गम्यते चेत्, ततः,—तदा, पञ्चधा—पञ्चविधा, उक्तरीत्येति भावः, अप्रस्तुतप्रशंसा—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्रमेण उदाहरणम्,—

"पादाहतं यदुत्थाय मूर्द्धानमधिरोहति।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः॥" (श)

अत्र अस्मदपेक्षया रजोऽपि वरमिति विशेषे प्रस्तुते सामान्यमभिहितम्। (ष)

"स्रगियं यदि जीवितापहा
हृदये किं निहिता न हन्ति माम्।
विषमप्यमृतं क्वचिद्भवेत्
अमृतं वा विषमीश्वरेच्छया॥" (स)

अत्र ईश्वरेच्छया क्वचिदहितकारिणोऽपि हितकारित्वं,

---

अप्रस्तुतेन प्रस्तुतस्य प्रशंसाव्यञ्जनं, यद्वा,—प्रस्तुतव्यञ्जकमप्रस्तुतकथनम् अप्रस्तुतप्रशंसा, स्यात्।

(श) पादाहतमिति।—बलदेवस्योक्तिरियम्। यत् रजः,—धूलिः, पादाहतं—चरणाघातितं सत्, उत्थाय—उड्डीय, [ उद्यम्येति तु ध्वनिः ] मूर्द्धानं—शिरः, हन्तुरेवेति शेषः, अधिरोहति—प्रतिपद्यते, [ आक्रामतीति ध्वन्यर्थः ] तत्—रजः, अपमानेऽपि—पराभवेऽपि, स्वस्थात्—अविचलात्, अविजिगीषोरित्यर्थः, देहिनः,—प्राणिनः, तदपेक्षयेति भावः, वरं—श्रेष्ठमित्यर्थः। ("देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीवे मनाक् प्रिये" इत्यमरः)। शिशुपालवधस्येदं पद्यम्।

(ष) सामान्यमभिहितमिति।—देहिनः इति सामान्यवाचकम् इति।

(स) स्रगिति।—दिव्यस्रजि उरसि पतितायामेव स्वप्रियामिन्दुमतीं गतासु-मवलोक्य अजस्य विलापवचनमिदम्। इयं स्रक्—माल्यं, यदि जीवितम् अप-हन्तीति जीवितापहा—जीवनहारिणीत्यर्थः, [ यद्यपि "अपेः क्लेशतमसोः" ( ३।२।५ पा॰ ) इति सूत्राविषयतया च्युतसंस्कारत्वदोषयुक्तं, तथाऽपि अजस्य शोकातुरतायाः प्रत्यायकतया च्युतसंस्कारत्वस्याकिञ्चित्करत्वमेव इति बोध्यम् ] तदा हृदये निहिता सती, ममेति शेषः, मां किं—कथं, न हन्ति ? मन्ये स्रजो न दोषः, ममैवेश्वरप्रति-कूलतेत्याह, विषमिति।—क्वचित् ईश्वरेच्छया विषमपि अमृतम्, अमृतं वा विषं भवेत्, अत एव मामनिहत्य एतामेव निहतवतीति भावः। वैतालीयं वृत्तम्। इदञ्च रघुवंशस्य पद्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

हितकारिणोऽप्यहितकारित्वम्, इति सामान्ये प्रस्तुते विशेषोऽभिहितः । एवं चात्र अप्रस्तुतप्रशंसामूलोऽर्थान्तरन्यासः । दृष्टान्ते प्रख्यातमेव वस्तु प्रतिविम्बत्वेनोपादीयते, इह तु विषामृतयोरमृतविषीभावस्याप्रसिद्धेर्न तस्य सद्भावः । (ङ)

"इन्दुर्लिप्त इवाञ्जनेन जड़िता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमदलं श्यामेव हेमप्रभा ।
कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त ! शिखिनां वर्हाः सगर्हा इव ॥" (क)

अत्र सम्भाव्यमानेभ्यः (ख) इन्द्वादिगताञ्जनलिप्तत्वादिभ्यः कार्य्येभ्यो वदनादिगतसौन्दर्य्यविशेषरूपं प्रस्तुतं कारणं प्रतीयते ।

---

(ङ) अवेति ।—नन्वत्र विम्बप्रतिविम्बभावसत्त्वात् दृष्टान्त एवायमत आह,—दृष्टान्ते इति । प्रख्यातमेवेति ।—प्रसिद्धमेवेत्यर्थः । तस्य—दृष्टान्तस्य, सद्भावः,—सम्भवः । अस्या असङ्कीर्णोदाहरणन्तु,—"मणिर्लुठति पादेषु काचः शिरसि धार्य्यते । यथैवास्ति तथैवास्तु काचः काचो मणिर्मणिः ॥" अत्राविवेचकेनोत्कृष्टस्यानादरेऽपि नोत्कर्षापचयः, अनुत्कृष्टस्यादरेऽपि नोत्कर्ष इति प्रस्तुतमप्रस्तुतेन वाक्यार्थेन प्रतीयते ।

(क) इन्दुरिति ।—सीतायाः सौन्दर्य्यवर्णनमिदम् । हन्तेति हर्षसूचकमव्ययम् ; सीतायाः पुरतः,—अग्रतः, इन्दुः,—चन्द्रः, अञ्जनेन लिप्त इव—मालिन्यपूर्ण इव, न राजते इति भावः, मृगीणां दृष्टिः जड़िता इव—सङ्कुचिता इव, विद्रुमदलं—प्रवालपल्लवं, प्रम्लानः,—प्रकर्षेण म्लानिं गतः, अरुणिमा—आरक्तत्वं, यस्य तादृशमिव, हेम्नः,—काञ्चनस्य, प्रभा श्यामेव—कृष्णवर्णेव, कोकिलवधूनां—कोकिलानां, कण्ठेषु कलया—काकलीरवेण इत्यर्थः, कार्कश्यं—माधुर्य्यविपर्य्यासः, प्रस्तुतमिव—प्रचुरीभूतमिवेत्यर्थः, कोकिलारवः कर्कशः प्रतीयते इति भावः ; तथा शिखिनां—मयूराणां, वर्हाः,—कलापाः, सगर्हा इव—निन्दिता इव, श्यामकोमलत्वाभावात् इति भावः । शार्दूलविक्रीड़ितं वृत्तम् ।

(ख) अत्रेति ।—सम्भाव्यमानेभ्यः,—उत्प्रेक्षणीयेभ्यः । अनुक्तनिमित्तेयमुत्प्रेक्षा, तन्निष्ठकार्य्यत्वस्य तद्विषये उपचारात् इदमुपपन्नम् ; उदाहरणान्तरन्तु,—"नाघ्रातं न कृतं कर्णे स्त्रीभिर्मधुनि नार्पितम् । त्वद्विषां दीर्घिकास्वेव विशीर्णं नीलमुत्पलम् ॥"

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"गच्छामीति मयोक्तया मृगदृशा निःश्वासमुद्रेकिणं
त्यक्त्वा तिर्य्यगवेक्ष्य वाष्पकलुषेणैकेन मां चक्षुषा।
अद्य प्रेम मदर्पितं प्रियसखीवृन्दे त्वया वध्यता-
मित्थं स्नेहविवर्द्धितो मृगशिशुः सोत्प्रासमाभाषितः॥" (ग)

अत्र कस्यचिदगमनरूपे कार्य्ये कारणमभिहितम्। (घ)

तुल्ये प्रस्तुते तुल्याभिधाने च द्विधा श्लेषमूला सादृश्यमात्र-मूला च। श्लेषमूलाऽपि समासोक्तिवद्विशेषणमात्रश्लेषे श्लेष-वद्विशेष्यस्यापि (ङ) श्लेषे भवतीति द्विधा। क्रमेण यथा,—

"सहकारः सदामोदो वसन्तश्रीसमन्वितः।
समुज्ज्वलरुचिः श्रीमान् प्रभूतोत्कलिकाकुलः॥" (च)

---

अत्रोत्पलाघ्राणाद्यभावरूपकार्य्येभ्यः प्रस्तुतायाः शोच्यावस्थायाः हेतोः प्रतीतिः, तत्सत्त्व-नियतसत्ताकत्वमेव कार्य्यत्वमभावानामवगन्तव्यम्।

(ग) गच्छामीति।—विदेशं गन्तुं कृतनिश्चयत्वेऽपि अगमने हेतुं प्रदर्शयतः कस्यचित् सखायं प्रति उक्तिरियम्। गच्छामि इति मया उक्तया मृगदृशा उद्रेकिणं—दीर्घं, निःश्वासं त्यक्त्वा वाष्पकलुषेण—अश्रुमलिनेन, एकेन चक्षुषा मां तिर्य्यक्—वक्रम्, अवेक्ष्य—दृष्ट्वा, अद्य मदर्पितं—मयि विन्यस्तं, प्रेम त्वया प्रियसखीवृन्दे वध्यताम्—अर्प्यताम्, इत्थम्—अनेन प्रकारेण, स्नेहेन विवर्द्धितः,—प्रतिपालितः, मृगशिशुः सोत्प्रासं—समनाक्स्मितं, सूक्ष्महासयुक्तम् इत्यर्थः, ("सोत्प्रासं समनाक्स्मितम्" इत्यमरः) आभाषितः,—कथितः। अद्य यावत् त्वामहं लालितवती, इतः परं प्रिये देशान्तरं गते तद्वियोगं सोढुमशक्ता जीवितं हास्यामीति मम सखीजनस्त्वां लालयि-ष्यतीति भावः। शार्दूलविक्रीडितं वृत्तम्।

(घ) अत्रेति।—अगमनरूपे कार्य्ये, जिज्ञासिते इति शेषः, कारणं—मृग-शिशुं प्रति तादृगाभाषणं, नायिकाया मरणाभिप्रायव्यञ्जकं वाक्यरूपमिति भावः।

(ङ) तुल्याभिधाने इति।—तुल्यस्य अप्रस्तुतस्य अभिधाने इत्यर्थः। विशेषण-मात्रश्लेषे इति।—मात्रपदेन विशेष्यव्यवच्छेदः। विशेष्यस्यापीत्यपिना विशेषणपरिग्रहः इति ज्ञेयम्।

(च) सहकार इति।—सहकारः,—अतिशयितसौरभः आम्र इत्यर्थः, अत एव सदा—शश्वत्, आमोदः,—गन्धो यस्य तथोक्तः; यद्वा,—सतः,—काकादि-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र विशेषणमात्रश्लेषवशादप्रस्तुतात् सहकारात् कस्यचित् प्रस्तुतस्य नायकस्य प्रतीतिः ।

"पुंस्त्वादपि प्रविचलेद् यदि यद्यधोऽपि
यायाद् यदि प्रणयने न महानपि स्यात् ।
अभ्युद्धरेत् तदपि विश्वमितीदृशीयं
केनापि दिक् प्रकटिता पुरुषोत्तमेन ॥" (छ)

अत्र पुरुषोत्तमपदेन विशेष्येणापि श्लिष्टेन प्रचुरप्रसिद्ध्या प्रथमं विष्णुरेव बोध्यते ; तेन वर्णनीयः कश्चित् पुरुषः प्रतीयते । (ज)

खलेभ्यो भिन्नान् कोकिलादीन्, आमोदयतीति तथोक्तः ; अन्यत्र,—सदा आमोदः,—हर्षो यस्य तथोक्तः, ("आमोदो हर्षगन्धयोः" इति मेदिनी) वसन्तस्य श्रिया—शोभया, पुष्पपल्लवादिजनितया इति भावः, समन्वितः,—युक्तः, वसन्तकालोचितवेशसमन्वितश्च ; समुज्ज्वला—भासुरा, रुचिः,—कान्तिः, अन्यत्र,—समुज्ज्वले—शृङ्गारे, रुचिः,—अभिलाषो यस्य तथोक्तः, ("रुचिः स्त्री दीप्तौ शोभायामभिष्वङ्गाभिलाषयोः" इति मेदिनी) श्रीमान्—श्रीः,—शोभा, वेशरचना च तद्वान्, उभयत्रापि सुदर्शन इत्यर्थः, तथा प्रभूताभिः,—बह्वीभिः, उत्कलिकाभिः,—उद्गतमुकुलैः, आकुलः,—व्याप्तः, अन्यत्र,—प्रकर्षेण भूतया उत्कलिकया—नायिकोत्कण्ठया, आकुलः,—व्याकुलः ।

(छ) पुंस्त्वादिति ।—पुंस्त्वात्—पुरुषभावात्, अपि यदि प्रविचलेत्—भ्रश्येत्, पुरुषत्वं परित्यज्य यदि स्त्री अपि स्यादिति भावः, अधोऽपि—पातालमपि, यदि यायात्—गच्छेत्, प्रणयने—याच्ञायां, याचननिमित्तमित्यर्थः, यदि महान् अपि न स्यात्—खर्व्वः स्यादित्यर्थः, तदपि—तथाऽपि, विश्वं—जगत्, अभ्युद्धरेत् इति ईदृशी—एवम्प्रकारा, इयं दिक्—नीतिः, केनापि—अनिर्वचनीयेन इत्यर्थः, पुरुषोत्तमेन—पुरुषेषु उत्तमस्तथाविधेन, विष्णुना इत्यर्थः, प्रकटिता—दर्शिता, राजपक्षे अयं भावः,—यदि पुंस्त्वमपि विनश्येत् तर्हि तत् विनश्यतु, यदि अधोऽपि (नरकेऽपि) पतनं स्यात् तर्हि तत् भवतु, यदि याच्ञया खर्व्वत्वमपि स्यात् तर्हि तदपि अस्तु, एवं सर्व्वदा विपन्नो विपदापत्तावपि परं सङ्कटात् विश्वं—स्वराज्यम् उद्धरेदिति केनापि पुरुषोत्तमेन—स्वस्य विश्वम्भरत्वं प्रकटयता पुरुषोत्तमनाम्ना राज्ञेत्यर्थः, नीतिः प्रकटितेति । वसन्ततिलकं वृत्तम् । इदं भल्लटशतकस्य ।

(ज) अत्रेति ।—प्रचुरप्रसिद्ध्या—भूरिप्रयोगेण, बहुशः ख्यात्या वा । विष्णुरेवेति ।—तेन हि दैत्यहृतामृतहरणात् मोहिनीमूर्त्तिपरिग्रहः कृतः । महार्णव-

सादृश्यमात्रमूला यथा,—

"एकः कपोतपोतः शतशः श्येनाः क्षुधाऽभिधावन्ति।
अम्बरमावृतिशून्यं हरिहरि! शरणं विधेः करुणा॥" (झ)

अत्र कपोतादप्रस्तुतात् कश्चित् प्रस्तुतः प्रतीयते। इयञ्च क्वचित् वैधर्म्येणापि भवति। (ञ) यथा,—

"धन्याः खलु वने वाताः कह्लारस्पर्शशीतलाः।
राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः॥" (ट)

अत्र वाता धन्याः, अहमधन्य इति वैधर्म्येण प्रस्तुतः प्रतीयते। वाच्यस्य सम्भवासम्भवोभयरूपतया त्रिप्रकारेयम्। (ठ) तत्र सम्भवे उक्तोदाहरणान्येव।

---

निमग्नां धरामुद्धर्तुं वराहरूपेण पातालं प्रविष्टम्। बलिराजहृतं त्रैलोक्यमुद्धर्तुं वामनरूपेण याञ्चाऽपि कृता इति द्रष्टव्यम्। प्रकृतस्यैवात्र व्यङ्ग्यत्वं, न तूपमानस्येति नोपमाध्वनित्वं, द्वयोरभिधेयत्वाभावान्न श्लेषत्वम्।

(झ) एक इति।—एकः,—असहाय इत्यर्थः, कपोतपोतः,—पारावतशावकः, शिशुः कपोत इति यावत्, शतशः,—बहुशः, श्येनाः,—शशादनाख्याः पक्षिविशेषाः, ("अथ शशादनः। पत्री श्येनः" इत्यमरः) क्षुधा—क्षुधया, अभिधावन्ति—द्रुतमागच्छन्ति, एनं प्रतीति शेषः, अम्बरम्—आकाशम्, आवृतिशून्यं—निरावरणं, हरि हरि—इदं खेदसूचकमव्ययम्, विधेः करुणा शरणं—रक्षित्री। विधातैवास्येदानीं रक्षणक्षम इति भावः। अत्रार्य्याच्छन्दः।

(ञ) अत्रेति। कश्चित् प्रस्तुत इति।—प्रस्तुतः,—आपन्नः, यस्य बहवः शत्रवः गोपनस्थानं नास्ति, स इत्यर्थः; बहुशत्रुपरिवृत इति भावः। इयञ्च—अप्रस्तुतप्रशंसा च, वैधर्म्येणापि—विधर्म्मान्तरव्यञ्जकवैधर्म्यविशिष्टस्य कथनेनापि इत्यर्थः। एवञ्च षट्प्रकारा अप्रस्तुतप्रशंसेति फलितम्।

(ट) धन्या इति।—दशरथस्योक्तिरियम्। कह्लाराणां—रक्तोत्पलवतां जलानां, स्पर्शेन शीतलाः, [सौगन्ध्यप्रतीतिरत्र लक्षणाप्रयोजनं] वने वाताः,—वनवायवः, धन्याः खलु, ये—वाताः, अनिवारिताः,—प्रतिरोधमप्राप्ताः सन्तः, अविरतमित्यर्थः, इन्दीवरश्यामं रामं स्पृशन्ति।

(ठ) अत्रेति।—वाता धन्या इति वैधर्म्येण अहमधन्य इति प्रस्तुतः, सम इति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

असम्भवे यथा,—

"कोकिलोऽहं भवान् काकः समानः कालिमाऽऽवयोः ।
अन्तरं कथयिष्यन्ति काकलीकोविदाः पुनः ॥" (ड)

अत्र काककोकिलयोर्वाक्योपवाक्यं प्रस्तुताध्यारोपणं विनाऽसम्भवि । (ढ)

उभयरूपत्वे यथा,—

"अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः ।
कथं कमलनालस्य मा भूवन् भङ्गुरा गुणाः ॥" (ण)

अत्र प्रस्तुतस्य कस्यचिदध्यारोपणं विना कमलनालान्तश्छिद्राणां गुणभङ्गुरीकरणे हेतुत्वमसम्भवि, अन्येषान्तु सम्भवीत्युभयरूपत्वम् । अस्याश्च समासोक्तिवद् व्यवहारसमा-

---

शेषः । वाच्यस्येति ।—क्वचित् वाच्यस्य—वाक्यार्थस्य, सम्भवरूपत्वं, क्वचित् असम्भवरूपत्वं क्वचिच्च उभयरूपत्वमिति भावः ।

(ड) कोकिल इति ।—इयञ्च कस्यचित् निपुणस्य स्वस्पर्द्धिनमुद्दिश्य उक्तिः । अहं कोकिलः, भवान् काकः, आवयोः कालिमा—कृष्णवर्णत्वं, समानः, पुनः,—किन्तु, काकली—सूक्ष्मो मधुरध्वनिः, ("काकली तु कले सूक्ष्मे" इत्यमरः) तस्यां कोविदाः,—विचक्षणाः, अन्तरं—कोकिलोऽहमिति प्रभेदम्, आवयोरिति शेषः, कथयिष्यन्ति । कालिम्ना समानत्वेऽपि ये काकलीविज्ञास्ते आवयोः कोकिलकाकयोर्भेदं निरूपयिष्यन्ति, यस्य काकली सोऽहं कोकिलः, यस्य च कटुरटनं स च भवानिति निवेदनमन्तरैव ते ज्ञास्यन्ति इति भावः ।

(ढ) अत्रेति ।—वाक्योपवाक्यम्—उक्तिप्रत्युक्ती, [ "वाकोवाक्यम्" इति पाठे,—स एवार्थः ] प्रस्तुतयोः,—तयोः काककोकिलयोः, अध्यारोपणम्—आरोपणं, स्वरूपव्यञ्जनमित्यर्थः, विना असम्भवि—न सम्भवति इति भावः ।

(ण) अन्तरिति ।—कमलनालस्य—पद्मदण्डस्य, गुणाः,—सूत्राणि यशांसि च, कथं भङ्गुराः,—छिदुराः नश्वराश्च, मा भूवन् ?—न भवेयुः ? यतः अन्तः,—अभ्यन्तरे, भूयांसि—बहूनि, छिद्राणि—विवराणि दोषाश्च, तथा बहिः बहवः कण्टकाः,—तीक्ष्णाग्रहचावयवाः, क्षुद्रशत्रवश्च, सन्तीति शेषः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रोपप्रामाण्यात् शब्दशक्तिमूलाद् वस्तुध्वनेर्भेदः, उपमाध्वनाव-प्रस्तुतस्य व्यङ्ग्यत्वम्। एवं समासोक्तौ श्लेषेऽपि द्वयोरपि वाच्यत्वम्। (त)

उक्ता व्याजस्तुतिः पुनः।

निन्दास्तुतिभ्यां वाच्याभ्यां गम्यत्वे स्तुतिनिन्दयोः॥७२८॥(थ)

निन्दया (द) स्तुतेर्गम्यत्वे व्याजेन स्तुतिरिति व्युत्पत्त्या व्याजस्तुतिः ; स्तुत्या निन्दाया गम्यत्वे व्याजरूपा स्तुतिः। क्रमेण यथा,—

---

(त) अत्रेति।—छिद्राणां—विवराणां, गुणभङ्गुरीकरणे—पद्मनालतन्तुच्छेदने। अन्येषां—कण्टकानामित्यर्थः। अस्याश्च—श्लेषमूलतुल्याप्रस्तुतप्रशंसायाश्चेत्यर्थः, समासोक्तिवत्—समासोक्तौ यथा श्लिष्टशब्दप्रयोगमात्रेण व्यवहारो न प्रतीयते, किन्तु विशेषणसाम्यानुसन्धानेनापि, तथा अत्रापि विशेषणसाम्यानुसन्धानमपि अपेक्षितम् ; शब्दशक्तिमूलवस्तुध्वनौ तु तन्नापेक्षितमिति ततोऽस्या भेदः, तत्र हि व्यवहार-समारोपो नास्तीति भावः। एवं समासोक्तौ, अप्रस्तुतस्य व्यङ्ग्यत्वमिति शेषः, इह तु प्रस्तुतस्य इति भावः ; द्वयोः,—प्रस्तुताऽप्रस्तुतयोः, वाच्यत्वं—प्रकरणादिनियमाभावा-दित्यर्थः।

(थ) व्याजस्तुतिमाह, उक्तेति।—वाच्याभ्याम्—अभिधेयाभ्याम्, आपाततः प्रतीयमानाभ्यामित्यर्थः, निन्दास्तुतिभ्यां स्तुतिनिन्दयोर्गम्यत्वे—प्रतीयमानत्वे, व्याज-स्तुतिरुक्ता। अयं भावः,—व्याजेन—छलेन, प्रकारान्तरेणेति यावत्, स्तुतिः,—प्रशंसनम् इति व्याजस्तुतिः, स्तुतेश्च प्रकारान्तरं निन्दा, तस्मात् निन्दारूपेण प्रकारा-न्तरेण स्तुतिर्व्याजस्तुतिरिति फलितम्। एवं व्याजा—छलरूपा, परमार्थदशायामवा-स्तवीति यावत्, स्तुतिरिति वा व्याजस्तुतिः ; स्तुतेः अवास्तवत्वन्तु निन्दापरत्वादेव सम्भवति, तस्मात् स्तुत्या निन्दा व्याजस्तुतिरित्यपि फलितम् ; वाच्यया निन्दया स्तुत्या वा स्तुतेर्निन्दाया वा पर्य्यवसीयमानत्वे व्याजस्तुतिरिति भावः।

(द) ननु निन्दाव्याजेन स्तुतिरिति भवतु व्याजस्तुतिः, स्तुतिव्याजेन निन्दा तु व्याजनिन्दैव भवति, अथ कथमुभयथा व्याजस्तुतिः ? इत्यतः संज्ञाया द्विविधं योगार्थ-माह,—निन्दयेति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"स्तनयुगमुक्ताभरणाः कण्टककलिताङ्गयष्टयो देव!।
त्वयि कुपितेऽपि प्रागिव विश्वस्ता रिपुस्त्रियो जाताः॥" (ध)

इदं मम।

"व्याजस्तुतिस्तव पयोद! मयोदितेयं
यज्जीवनाय जगतस्तव जीवनानि।
स्तोत्रन्तु ते महदिदं घन! धर्म्मराज-
साहाय्यमर्जयसि यत् पथिकान् निहत्य॥"(न)

(ध) स्तनेति।—राजानं प्रति कस्यचित् व्याजस्तुतिरियम्। हे देव! त्वयि कुपितेऽपि रिपूणां स्त्रियः,—नार्य्यः, स्तनयुगेषु मुक्ताभरणं—हारो यासां तथाभूताः, (इति निन्दा) पक्षे,—स्तनयुगेभ्यः मुक्तानि—त्यक्तानि, आभरणानि याभिरिति, स्तनयुगैः मुक्तानि—त्यक्तानि, आभरणानि यासामिति वा, तथोक्ताः, (इति स्तुतिः) कण्टकेन—रोमाञ्चेन, पतिसङ्गजनितसात्त्विकभावविशेषेण इति यावत्, कलिताः,—आक्रान्ताः, अङ्गयष्टयो यासां तथाविधाः, (इति निन्दा) पक्षे—कण्टकैः,—सूच्यग्रतुल्यैः वृक्षाङ्गसंहविशेषैः, कलिता—आक्रान्ता, अङ्गयष्टिः,—चरणादिरूपाङ्गं यासां तथाभूताः, (इति स्तुतिः। "सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः" इत्यमरः) अत एव प्रागिव—इतरकोपात्पूर्व्वकाले इव, अकुपिते इवेत्यर्थः, विश्वस्ताः,—अयमस्माकं नापकर्त्ता इति विश्वासाश्रयाः, निःशङ्का इति यावत्, (इति निन्दा) पक्षे,—विधवाः, ("विश्वस्ताविधवे समे" इत्यमरः) जाताः, (इति स्तुतिः)। अत्र शत्रुस्त्रीणां पीड़ाजनकत्वेन आपाततो निन्दा, पर्य्यवसाने तु शत्रुनाशकत्वेन स्तुतिः प्रतीयते इति निन्दया स्तुतेर्गम्यत्वम्। यथा वा,—"कस्ते शौर्य्यमदो योद्धुं त्वय्येकं सप्तिमास्थिते। सप्तसप्तिसमारूढ़ा भवन्ति परिपन्थिनः॥" इति। अत्र राज्ञो निन्दा तत्परिपन्थिनाञ्च स्तुतिः वाच्या, तया प्रकृतस्य राज्ञः स्तुतिः, तत्परिपन्थिनाञ्च निन्दा प्रतीयते।

(न) व्याजेति।—हे पयोद!—मेघ! तव जीवनानि—जलानि, जगतः जीवनाय, भवन्तीति शेषः, इति यत् इयं तव व्याजस्तुतिः,—छलरूपा स्तुतिः, हे घन!—मेघ! इदन्तु ते—तव, महत् स्तोत्रं, यत् पथिकान् निहत्य धर्म्मराजस्य—नीतिपरतया महामहिम्नो राज्ञः, यमस्य वा, साहाय्यम्—आनुकूल्यम्, अर्जयसि। अत्र स्तुत्या यमराजसाहाय्यार्जनरूपाया निन्दाया गम्यत्वम्। वसन्ततिलकं वृत्तम्। तथा च, "यद्वक्त्रं मुहुरीक्षसे न धनिनां, ब्रूषे न चाटून्मृषा, नैषां गर्ववचः शृणोषि, न च तान् प्रत्याशया धावसि। काले बालतृणानि खादसि, परं निद्रासि निद्राऽऽगमे, तन्मे ब्रूहि

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## पर्य्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते ॥७२६॥ (प)

कुरङ्ग! कुत्र भवता किन्नाम तप्तं तपः ?॥" इत्यत्र तु कुरङ्गस्तुत्या राजसेवानिर्विण्णस्य स्वात्मनो निन्दा व्यज्यते इति दीपिता:। प्राचस्तु,—स्तुतिनिन्दयोः सामानाधिकरण्येन प्रतीतावेवोक्तालङ्कारमभ्युपगच्छन्ति। तेषामयमाशयः,—निन्द्यत्ववद्विषयकत्वं स्तुत्यवद्विषयकत्वञ्च तावत् स्तुतिनिन्दयोः व्याजत्वमिति स्पष्टम् एव; तदेव चोक्तालङ्कारप्रवृत्तिनिमित्तम्; तच्च यस्यैव स्तुतिनिन्दे, तस्यैव निन्दास्तुत्योः प्रतीतौ सम्भवति, न त्वन्यथा। न च स्वविपर्य्ययतात्पर्य्यवत् स्तुतिनिन्दाऽन्यतरकत्वमेव प्रवृत्तिनिमित्तं, तच्च सामानाधिकरण्यवैयधिकरण्योभयसाधारणमिति वाच्यम्; एकालङ्कारकोपाध्यवच्छिन्नविषयसाधारणस्यालङ्कारान्तरविभाजकोपाधेः कल्पयितुमनुचितत्वात्, वैयधिकरण्यस्थले चाप्रस्तुतप्रशंसयैवोपपत्तेः तत्साधारणप्रवृत्तिनिमित्तकल्पने प्रमाणाभावात्; तदुक्तमाचार्य्यदण्डिना,—"अप्रस्तुतप्रशंसा स्यादप्रकाण्डे तु या स्तुतिः। अयत्नसुलभैर्जलदर्भाङ्कुरादिभिः॥ सुखं जीवन्तु हरिणा न येष्व (ये स्व) परसेविनः। सेयमप्रस्तुतेवात्र मृगवृत्तिः प्रशस्यते॥ राजानुवर्त्तनक्लेशनिर्विण्णेन मनस्विना॥" इति; यत्तूक्तम्,—"अप्रस्तुतप्रशंसायामप्रस्तुतेन प्रस्तुतार्थप्रतिपत्तिमात्रं, न तु प्रकृताप्रकृतयोः निन्दास्तुतिस्वरूपनियमः; अत्र स्तुत्या निन्दाऽभिव्यक्तिनियमात्; किञ्चैवं सम्मतस्थलेऽप्यप्रस्तुताभ्यां स्तुतिनिन्दाभ्यां प्रस्तुतनिन्दास्तुतिप्रतीतिः इत्यप्रस्तुतप्रशंसैव स्यात्, इति व्याजस्तुतेरुच्छेदापत्तिः। स्तुतिनिन्दाप्रतीतिनियमरूपविशेषादतिरेकत्वमुभयत्रापि समानः; अतः,—"अयत्नसुलभैः—" इत्यादौ व्याजस्तुतिरेव युक्ता" इति, तच्चिन्त्यम्; अप्रस्तुतेन प्रस्तुतप्रतिपत्तिमात्रमप्रस्तुतप्रशंसास्वरूपं, तच्चोक्तस्थलेऽप्यबाधितमेव, इति न निन्दास्तुतिप्रतीतिनियमवैलक्षण्येनातिरिक्तत्वसम्भवः, उक्तधर्म्मावच्छिन्नत्वेन तदैक्यसिद्धावान्तरविशेषेण तद्भेदानुपपत्तेः; अन्यथाऽनयैव रीत्या सामान्यधर्म्मावच्छिन्नावान्तरतत्तद्विशेषस्थलेऽप्यलङ्कारान्तरकल्पने अप्रस्तुतप्रशंसाविलयापत्तेः। यदपि किञ्चैवमित्यादि, तदप्यसत्, सम्मतस्थले स्तुतिनिन्दयोरेकधर्म्मत्वात् अप्रस्तुतप्रशंसायास्तत्रासम्भवेन व्याजस्तुतेः पार्थक्यस्य साम्राज्यात्। प्रस्तुतधर्म्मिकेऽप्यप्रस्तुतप्रशंसाऽभ्युपगमे तु ललितालङ्कारपार्थक्यस्वीकारः तत्रैव व्याहतः स्यादिति दिक्।

(प) पर्य्यायोक्तमाह, पर्य्यायोक्तमिति।—यदा भङ्ग्या—भङ्गीक्रमेण, उक्तिवैचित्र्यविशेषेणेत्यर्थः, गम्यमेव—बोध्यमेवेत्यर्थः, अभिधीयते—अभिधेयवत् स्फुटं प्रतीयते, तत् पर्य्यायोक्तम्; एवञ्च पर्य्यायेण भङ्ग्या व्यङ्ग्यस्य स्फुटप्रतिपादनं पर्य्यायोक्तम् इति सारः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उदाहरणम्,—

"सृष्टास्ता नन्दने शच्याः केशसम्भोगलालिताः।
सावज्ञं पारिजातस्य मञ्जर्य्यो यस्य सैनिकैः॥" (फ)

अत्र हयग्रीवेण स्वर्गो विजित इति प्रस्तुतमेव गम्यं कारणं वैचित्र्यविशेषप्रतिपत्तये सैन्यस्य पारिजातमञ्जरीसावज्ञस्पर्शन-रूपकार्य्यद्वारेणाभिहितम्। (ब) न चेदं कार्य्यात् कारण-प्रतीतिरूपा अप्रस्तुतप्रशंसा; तत्र कार्य्यस्य अप्रस्तुतत्वात्। इह तु वर्णनीयस्य प्रभावातिशयबोधकत्वेन कार्य्यमपि कारण-वत् प्रस्तुतम्। एवञ्च,—

"अनेन पर्य्यासयताऽश्रुविन्दून्
मुक्ताफलस्थूलतमान् स्तनेषु।
प्रत्यर्पिताः शत्रुविलासिनीनाम्
आक्षेपसूत्रेण विनैव हाराः॥" (भ)

अत्र वर्णनीयस्य राज्ञो गम्यभूतशत्रुमारणरूपकारणवत्

(फ) सृष्टा इति।—यस्य—हयग्रीवस्य इत्याशयः, सैनिकैः शच्याः,—इन्द्राण्याः, केशानां सम्भोगे—नेपथ्यक्रियायाम् इत्यर्थः, लालिताः,—प्रयुक्ताः, यद्वा,—केशानां सम्भोगाय—भूषणाय, लालिताः,—सयत्नं पालिताः, नन्दने—तदाख्योपवने, पारिजातस्य ताः,—प्रसिद्धाः, मञ्जर्य्यः, सावज्ञं—सावहेलं, सृष्टाः; स हयग्रीव आसीदिति शेषः।

(ब) अत्रेति।—अत्र इन्द्रस्यातिपराभवेन भयस्य, हयग्रीवोद्याने पारिजात-मञ्जरीणामनुभूतत्वात् आदरस्य चाभावश्च सावज्ञमित्यनेन प्रतीयते; इत्यञ्च हय-ग्रीवेण स्वर्गः सुतरां जित इति व्यङ्ग्यं सुव्यक्तमेव इति ज्ञेयम्। वैचित्र्यविशेषस्य—अप्रस्तुतप्रशंसाजन्यवैचित्र्यादिलक्षणवैचित्र्यस्य, प्रतिपत्तये—सिद्धये। कार्य्यद्वारेण—कार्य्याभिधानमुखेन, अभिहितं—स्फुटं प्रतिपादितम्।

(भ) अनेनेति।—अनेन—राज्ञा इति यावत्, शत्रुविलासिनीनां—रिपुसुन्दरीणां, स्तनेषु मुक्ताफलानीव स्थूलतमान्—अतिस्थूलान्, अश्रुविन्दून् पर्य्यासयता—पातयता सता, आक्षेपसूत्रेण—ग्रन्थनगुणेन, गुम्फनसूत्रेण इति यावत्, विनैव हाराः,—मुक्तावल्यः, प्रत्यर्पिताः। उपजातिर्वृत्तम्। रघुवंशस्येदं पद्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कार्य्यभूतं तथाविधशत्रुस्त्रीक्रन्दनजलमपि प्रभावातिशयबोधकत्वेन वर्णनार्हमिति पर्य्यायोक्तमेव। (म)

"राजन्! राजसुता न पाठयति मां, देव्योऽपि तूष्णीं स्थिताः,
कुब्जे! भोजय मां, कुमारसचिवैर्नाद्यापि किं भुज्यते ?।
इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरात्
चित्रस्थानवलोक्य शून्यवड़भावेकैकमाभाषते॥" (य)

अत्र "प्रस्थानोद्यतं भवन्तं श्रुत्वा सहसैव अरयः पलायिताः इति कारणं प्रस्तुतम्"। "कार्य्यमपि (र) वर्णनार्हत्वेन प्रस्तुतम्" इति केचित्। अन्ये तु "राजशुकवृत्तान्तेन न कोऽपि प्रस्तुतस्य प्रभावो बोध्यते इति अप्रस्तुतप्रशंसैव" इत्याहुः।

**सामान्यं वा विशेषेण विशेषस्तेन वा यदि।**
**कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते।**
**साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः॥७३०॥(ल)**

(म) अत्रेति। वर्णनार्हमिति।—वर्णनार्हत्वेन प्रस्तुतमित्यर्थः। पर्य्यायोक्तमेवेत्येवकारेण अप्रस्तुतप्रशंसाव्यवच्छेदः।

(य) काव्यप्रकाशे कार्य्यात् कारणरूपाप्रस्तुतप्रशंसायाः दत्तमुदाहरणं पर्य्यायोक्तविषयत्वेन सम्भावयति, राजन्निति।—शत्रुजयोद्यतं राजानं प्रति पलायितेषु राजपरिवारेषु प्रासादस्थितस्य पालितशुकस्य राजादिचित्रपटेषु राजादिबुद्ध्या आवेदनस्य तच्चारमुखेणोक्तिरियम्। हे राजन्! राजसुता मां न पाठयति, देव्यः,—महिष्यः, अपि तूष्णीं स्थिताः,—न पाठयन्ति इति भावः, हे कुब्जे। मां भोजय, कुमारस्य—राजपुत्रस्य, सचिवैः,—सह चरैः, यद्वा,—कुमारैरेव सचिवैः,—अस्मद्भोजनसहचरैः, किं—कथम्, अद्यापि—इदानीमपि, न भुज्यते? इत्थम्—अनेन प्रकारेण, तव अरेः भवने—वास्तुनि, अध्वगैः,—पथिकैः, पञ्जरात्—पिञ्जरात्, मुक्तः राजशुकः शून्यवड़भौ—राजादिहीनगृहे इत्यर्थः, चित्रस्थान्, राजादीनिति शेषः, अवलोक्य एकैकम—एकाकी एव, आभाषते—कथयति। शार्दूलविक्रीड़ितं वृत्तम्।

(र) अत्रेति। कार्य्यमपीति।—शुकाऽऽभाषणरूपं कार्य्यमपीत्यर्थः।

(ल) अर्थान्तरन्यासमाह, सामान्यमिति।—साधर्म्येण—समानधर्मवत्तया,



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्रमेण उदाहरणम्,—

"वृहत्सहायः कार्य्यान्तं क्षोदीयानपि गच्छति ।
सम्भूयाम्भोधिमभ्येति महानद्या नगापगा ॥" (व)

अत्र द्वितीयार्द्धगतेन विशेषेणार्थेन प्रथमार्द्धगतः सामान्योऽर्थः सोपपत्तिकः (श) क्रियते ।

---

साधर्म्यप्रकारकज्ञानेन इत्यर्थः, (सामान्यविशेषयोः विधीयमानधर्म्म एव विशेषसामान्ययोः साधर्म्यं, तस्य क्वचित् ताद्रूप्येण, क्वचित् व्याप्यधर्म्मेण, क्वचित् व्यापकधर्म्मेण ग्रह एव समर्थकः) इतरेण—वैधर्म्यज्ञानेन, (वैधर्म्यं निरुक्तसाधर्म्यविरुद्धधर्म्मः, तज्ज्ञानेनेत्यर्थः,) वा विशेषेण—व्याप्यधर्म्मावच्छिन्नगोचरेण, सामान्यं—व्यापकधर्म्मावच्छिन्नमित्यर्थः, वा तेन—सामान्येन विशेषो वा, कारणेन कार्य्यञ्च [ कारणस्य साधर्म्यं प्रकृतकार्य्यसाधनत्वं, वैधर्म्यं स्वविरुद्धस्वकार्य्यविरुद्धसाधनत्वम् ] कार्य्येण इदं—कारणञ्च, (कार्य्यस्य साधर्म्यं प्रकृतकारणजन्यत्वम्; वैधर्म्यं स्वविरुद्धस्य स्वकारणविरुद्धजन्यत्वम्) यदि समर्थ्यते—सोपपत्तिकीक्रियते, संशयायोग्यत्वादिरूपानुपपत्तिनिराकरणेन दृढ़प्रतिपत्तिविषयः क्रियते इति यावत्, तदा अर्थान्तरन्यासः इत्यर्थः । हेतुत्वात् समर्थकः स्यादेव । असौ ततः,—उक्तरीत्या, अष्टधा—अष्टप्रकारः, इति ज्ञेयम् । तथा हि, सामान्यं विशेषो वा विशेषस्य सामान्यस्य वा समर्थक इति द्वौ भेदौ; एवं कार्य्यं कारणं वा कारणस्य कार्य्यस्य वा समर्थकम् इति द्वौ भेदौ; एवम्प्रकारचतुष्टये साधर्म्यवैधर्म्याभ्यां प्रत्येकं पुनः प्रकारद्वये अष्टप्रकारत्वं सम्पन्नम् ।

(व) सामान्यविशेषसाधर्म्येण समर्थनमाह, वृहदिति ।—क्षोदीयान्—क्षुद्रतरोऽपि जनः, वृहत्—महान्, सहायो यस्य तथाभूतः सन्, कार्य्यान्तं—कार्य्यपारं, कार्य्यातिशयं वा, महाकार्य्यमित्यर्थः, गच्छति—प्राप्नोति, साधयतीति यावत्, सिद्धकार्य्यो भवतीत्यर्थः; तथा हि,—नगापगा—नगनिर्झरिणी, [ नद्या नगसम्बन्धदर्शनेन जलबाहुल्याभावः प्रतीयते, तेन चातिक्षुद्रत्वम् ] महानद्या—गङ्गाप्रभृतिकया, सम्भूय—मिलित्वा, अम्भोधिं—समुद्रम्, अभ्येति—प्राप्नोति । शिशुपालबधस्येदं पद्यम् । यथा वा—"निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् । पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम् ॥" इति ।

(श) अत्रेति ।—द्वितीयार्द्धगतेन—द्वितीयवाक्यार्थसङ्गतेन, विशेषेण—विशेषरूपेण नगापगया, अर्थेन—महानदीमेलनप्रयुक्तसमुद्रप्राप्तिरूपमहाकार्य्यसाधनत्वप्रतिपत्तिविषयेणेत्यर्थः, सोपपत्तिकः,—विधीयमानः, संशयनिरासेन निश्चयविषयः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"यावदर्थपदां वाचमेवमादाय माधवः।
विरराम महीयांसः प्रकृत्या मितभाषिणः॥" (ष)

"पृथ्वि! स्थिरा भव, भुजङ्गम! धारयैनां
त्वं कूर्म्मराज! तदिदं द्वितयं दधीथाः।
दिक्कुञ्जराः! कुरुत तत्त्रितये दिधीर्षाम्
आर्य्यः करोति हरकार्म्मुकमाततज्यम्॥" (स)

इत्यर्थः, एकविशेषस्य यद्दृश्यते बाधकाभावेन तुल्यन्यायतया तत्सधर्म्माणामन्येषामपि तत्सम्भवतीति विशेषदर्शिनां सामान्यविधीयमानस्य संशयो निवर्त्तते इति सुतरां दृढ़-प्रतिपत्तिरिति भावः। अत्र सामान्यसमर्थनमुखेन अस्मत्क्षुद्रतरस्यापि शिशुपालस्य कालयवनादिबहुत्सहायसम्पत्त्या अस्मत्पराभवरूपबहुत्कार्य्यसाधनत्वं समर्थितम् इत्यव-धेयम्।

(ष) विशेषस्य सामान्यसाधर्म्येण समर्थनमाह, यावदिति।—माधवः,—कृष्णः, यावन्तः अर्थाः यावदर्थं, यावदर्थपदानि—सुप्तिङन्तानि यस्यां तथोक्तां ["याव-दर्थ्यपदाम्" इति पाठे,—यावन्त्येव अर्थ्यानि—प्रकृतोपयुक्तार्थात् अनपेतानि, पदानि यस्यां तां, न त्वनुपयुक्तार्थपदैर्बहुलामित्यर्थः; एतेन वाक्यस्याल्पत्वं सूचितम्] एवम्—उक्तप्रकारां, वाचम् आदाय—गृहीत्वा, उक्त्वेत्यर्थः, विरराम—निववृते, ["व्याङ्-परिभ्यो रमः" (१।३।८३ पा०) इति परस्मैपदम्] तथा हि, महीयांसः,—महत्तराः, अतिमहान्तः इति यावत्, जनाः इति शेषः, प्रकृत्या—स्वभावेन, मितभाषिणः,—अल्पवचसः, भवन्तीति शेषः, वृथाऽऽलापनिषेधादिति भावः। अत्र व्यञ्जनया विधीय-मानमपि माधवस्याल्पभाषणं प्रतिपाद्यबाहुल्ये सत्यनुपपन्नमहत्तरस्य स्वभावत एवाल्प-भाषणम् इति सामान्यगोचरसाधर्म्यज्ञानेन समर्थ्यते; सामान्यधर्मो विशेषेष्वप्रतिहत-प्रसरः इति विशेषदर्शनेनानुपपत्तिनिरासः इति भावः। शिशुपालवधस्येदं पद्यम्। यथा वा,—"सुसितवसनालङ्कारायां कदाचन कौमुदी महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः। तदनु भवतः कीर्त्तिः केनाप्यगीयत येन सा प्रियगृहमगात् मुक्ताशङ्का क्व नासि शुभप्रदः॥" इति।

(स) कारणसाधर्म्येण कार्य्यसमर्थनमाह, पृथ्वीति।—श्रीरामेण हरधनुर्ज्या-योगोद्यमे कृते पृथ्व्यादीनामस्थैर्य्यादिकं सम्भावयतः लक्ष्मणस्योक्तिरियम्। हे पृथ्वि! (त्वं) स्थिरा भव, हे भुजङ्गम!—अनन्त! इति भावः, त्वम् एनां पृथ्वीं धारय, हे कूर्म्मराज! त्वम् इदं द्वितयं—पृथ्वीभुजङ्गमयोर्द्वयं, पृथ्वीं भुजङ्गमं (शेषं) चेति यावत्,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र कारणभूतं हरकार्मुकाततज्योकरणं पृथ्वीस्थैर्य्यादेः कार्य्यस्य समर्थकम्। (ह)

"सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।"(क)

इत्यादौ सम्पद्वरणं कार्य्यं सहसा विधानाभावस्य विमृष्यकारित्वरूपस्य कारणस्य समर्थकम्। (ख) एतानि साधर्म्ये उदाहरणानि। वैधर्म्ये यथा,—

---

दधीथाः,—धर, हे दिक्कुञ्जराः!—दिक्षु कुञ्जराः,—गजाः इति तत्पुरुषौ तथोक्ताः, दिग्गजा इत्यर्थः, ("कुञ्जरो वारणः करी" इत्यमरः। ते च,—"ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः। पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः॥" इत्युक्ता ज्ञेयाः) तत्त्रितये—तेषां—पृथ्वीभुजङ्गकूर्म्माणां, त्रितयं तत्रेति तथोक्ते, दिधीर्षां—धारणेच्छां, धारणप्रयत्नमित्यर्थः, कुरुत, आर्य्यः,—पूज्यः, रामः इति यावत्, ["आर्य्यः" इत्यत्र "देवः" इति पाठान्तरम्] हरस्य—शम्भोः, कार्म्मुकं—धनुः, आततज्यं—विस्तृतमौर्व्वीकम्, आरूढगुणमित्यर्थः, करोति। वसन्ततिलकं वृत्तम्। बालरामायणस्येदं पद्यम्।

(ह) अत्रेति।—आततज्यीकरणं—गुणयोगानुकूलव्यापारः। पृथ्व्यादीनां स्थैर्य्यादेः सिद्धत्वे तत्तन्नियोगानुपपत्त्या स्थैर्य्यादिविशेषो लक्षणीयः, तस्य च ज्यायोगसम्भावनायामनुष्ठितत्वेन कार्य्यत्वमक्षतमेव, तच्च ज्यायोगसम्भावनायाः कारणत्वग्रहणेव समर्थ्यते। स्थैर्य्यादीनां नियुज्यमानत्वेन कार्य्यत्वं प्रतीयते, तच्च कारणमन्तरेण नोपपद्यते, इत्यनुपपत्तिरत्रावधेया।

(क) कार्य्यसाधर्म्येण कारणसमर्थनमाह, सहसेति।—सहसा—अविविच्येत्यर्थः, क्रियां न विदधीत—न कुर्य्यात्, अविवेकः,—विवेचनाराहित्यं, यद्वा अविमृष्यकारी जनः, परम्—अत्यर्थम्, आपदां पदं—स्थानम्। अस्योत्तरार्द्धन्तु.—"वृणते हि विमृष्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः"। व्याख्या च,—सम्पदः गुणलुब्धाः,—गुणानुरक्ताः सत्यः, विमृष्यकारिणं जनं स्वयमेव वृणते हि—आश्रयन्त्येव। वैतालीयं वृत्तम्। किरातार्ज्जुनीयस्येदं पद्यम्।

(ख) इत्यादाविति।—अत्र विधीयमानस्य सहसा विधानाभावस्य किञ्चिदिष्टं प्रति साधनत्वमवगम्यते; तच्च क्वचिदिष्टे साध्यत्वग्रहमन्तरेण नोपपद्यते इति कार्य्यस्य समर्थकत्वं सम्पद्वरणं कार्य्यमिति, कार्य्यं—कार्य्यत्वप्रतीतिविषयः। कार्य्यत्वप्रतीतिरत्र "उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः" इतिवत् विमृष्यकारित्वे एव सहसा विधाना-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम्।
शाम्येत् प्रत्यपकारेण नोपकारेण दुर्ज्जनः॥" (ग)

अत्र सामान्यं विशेषस्य समर्थकम्। "सहसा विदधीत" इत्यत्र सहसा विधानाभावस्य आपत्प्रदत्वं विरुद्धं कार्य्यं समर्थकम्। (घ) एवमन्यत्।

---

भावः पर्य्यवस्यतीति नानयोर्भेदः। विशेषवैधर्म्येण सामान्यसमर्थनं यथा,—"गुणानामेव दौरात्म्याद्धुर्य्यो धुरि नियुज्यते। असंजातकिणस्कन्धः सुखं स्वपिति गौर्गडिः॥" दुःखावहकर्म्मप्रयोजकत्वात् गुणानां निन्दा, [धुर्य्यः,—धूर्वहनयोग्यः, किणः,—वहनचिह्नविशेषः, गडिः,—अलसः]; अत्र गुणवन्त एव धुर्य्याः भारवहने नियुज्यन्ते, इत्यन्ययोगव्यवच्छेदप्रतीतिः अन्यवायोगग्रहेणैवोपपद्यते इति धूर्वहनयोग्यतया धुर्य्यविशेषे गड़िगवे धूर्वहनायोगरूपवैधर्म्यज्ञानं समर्थकम्; किणहीनस्कन्धत्वेन सुखस्वपनेन च भारवहनायोगः प्रतीयते, इति सङ्क्षेपः।

(ग) सामान्यवैधर्म्येण विशेषसमर्थनमाह, इत्थमिति।—कुमारसम्भवे ब्रह्माणं प्रति वृहस्पतेः तारकदौरात्म्यनिवेदनमिदम्। इत्थम्—अनेन प्रकारेण, आराध्यमानः,—सेव्यमानोऽपि, स तारक इति शेषः, भुवनत्रयं क्लिश्नाति—तापयति, विबाधते इत्यर्थः, दुर्जनः,—दुष्टो जनः, प्रत्यपकारेण—तत्कृतानिष्टविनिमयरूपेणानिष्टेन इत्यर्थः, शाम्येत्—शान्तिं गच्छेत्, अपकारान्निवर्त्तेत इत्यर्थः, उपकारेण न, शाम्येदिति शेषः, प्रत्युत विकुर्य्यादिति भावः।

(घ) अत्रेति। समर्थकमिति।—अनुकूलाचरणेनोपशमाभावः अयोग्यतयाऽनुपपन्न एव; दुर्जनसामान्यस्वभावेन प्रत्युपकारमात्रोपशाम्यत्वेन वैधर्म्येण समर्थ्यते इति भावः। कारणवैधर्म्येण कार्य्यसमर्थनं यथा,—"वह्निरेव चिरादनाश्रवे विलसत्येष तुषारदीधितिः। भज सम्पदमत्र सन्ततं ननु सन्तापमितः प्रसूयते॥" चन्द्रस्य सन्तापजनकत्वानुभवेन सम्मदजनकत्वे बाधं प्रति सन्दधतीं विरहिणीं प्रति तत्सख्या उक्तिरियम्। अनाश्रवे—अवचनस्थे। अत्र सूर्य्यस्य सन्तापजनकत्वप्रदर्शनेन तद्विरुद्धस्य चन्द्रस्य सन्तापविरुद्धसम्मदजनकत्वम् उपपन्नम्। कार्य्यवैधर्म्येण कारणसमर्थनं कथयति, सहसेति।—विरुद्धं—विरुद्धजन्यम्। समर्थकमिति।—सम्पद्विरुद्धकार्य्ये विपदि विवेकविरुद्धविवेकाभावजन्यत्वज्ञानेन सम्पदि विवेकजन्यत्वं दृढं प्रत्याय्यते, यज्जन्यं यद्विरुद्धं, तत्कारणविरुद्धजन्यमेवेति नियमादिति भावः। अत्र घटत्वादौ व्यभिचारवारणाय जन्यमित्यवगन्तव्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते ॥७३१॥ (ङ)

तत्र वाक्यार्थगता यथा,—

"यत् त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये ! तव मुखच्छायाऽनुकारी शशी ।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गताः,
त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥" (च)

अत्र चतुर्थपादे पादत्रयवाक्यानि (छ) हेतवः । पदार्थगता यथा मम,—

---

(ङ) काव्यलिङ्गमाह, हेतोरिति ।—हेतोः,—कारणस्य, वाक्यपदार्थत्वे—वाक्यार्थपदार्थयोः कारणत्वे, वाक्यपदान्यतरप्रतिपाद्ये इत्यर्थः, वाक्यार्थस्य पदार्थस्य वा हेतुत्वे व्यङ्ग्ये इति पर्य्यवसितोऽर्थः, (तत्र क्रियान्वयसमाप्तौ वाक्यार्थत्वम्, अन्यथा पदार्थत्वमिति बोध्यम्) काव्यलिङ्गं निगद्यते । अयमेव हेत्वलङ्कार उच्यते ।

(च) यदिति ।—रावणेन सीताया हरणानन्तरं माल्यवत्पर्व्वते वर्षाकाले सीताविरहिणः रामस्य उक्तिरियम् । हे प्रिये ! तव नेत्रयोः समाना कान्तिर्यस्य तथोक्तं, यत् इन्दीवरं—नीलोत्पलं, ("अथ नीलाम्बुजन्म च । इन्दीवरञ्च नीलेऽस्मिन्" इत्यमरः) तत् सलिले—जले, मग्नं, वर्षाप्रभावादिति भावः, तव मुखस्य छायां—कान्तिम्, अनुकरोतीति तथाभूतः, त्वन्मुखकान्तिसदृश इत्यर्थः, शशी—चन्द्रः, मेघैरन्तरितः,—आच्छादितः, ये तव गमनानुकारिणी गतिर्येषां तथोक्ताः, [ "गमनानुसारिगतयः" इति पाठे,—गमनानुसारिणी गतिर्येषामिति विग्रहोऽवसेयः ] ते राजहंसाः अपि गताः, मानसमिति शेषः, वर्षासु भूस्थजलानामाविलतया तत्पानस्य हंसानां पीड़ाकरत्वात् ते निर्म्मलजलं मानसं सरो यान्तीति प्रसिद्धिः ; (अतः) दैवेन—दुर्दैवेन इत्यर्थः, तव सादृश्यविनोदमात्रमपि—सादृश्यमात्रेण विनोदः,—सन्तापनिवृत्तिरपि, [ मात्रपदेन सङ्ग्व्यवच्छेदः ] मे—मम, न क्षम्यते—न सह्यते । प्रियासादृश्यदर्शनं हि विरहिणां विनोदः, तदपि मम नास्तीति भावः । मतान्तरे प्रतीपालङ्कारोऽयम् । शार्दूलविक्रीड़ितं वृत्तम् । हनुमन्नाटकस्थेदं पद्यम् ।

(छ) अत्रेति ।—चतुर्थपादे—चतुर्थपादप्रतिपाद्ये, सादृश्यमात्रविनोदाभावे इत्याशयः, पादत्रयवाक्यानि—पादत्रयरूपवाक्यत्रयार्थाः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम्।
न धत्ते शिरसा गङ्गां भूरिभारभिया हरः॥" (ज)

अत्र द्वितीयार्द्धे प्रथमार्द्धमेकपदं हेतुः। अनेकपदं यथा मम,—

"पश्यन्त्यसङ्ख्यपथगां त्वद्दानजलवाहिनीम्।
देव! त्रिपथगाऽऽत्मानं गोपयत्युग्रमूर्द्धनि॥" (झ)

इह केचित् वाक्यार्थगतेन काव्यलिङ्गेनैव गतार्थतया कार्य्य-कारणभावेऽर्थान्तरन्यासं नाद्रियन्ते, तदयुक्तम्; तथा हि अत्र हेतुस्त्रिधा भवति,—ज्ञापकः, निष्पादकः, समर्थकश्चेति। तत्र

(ज) त्वदिति।—राजस्तुतिरियम्। हरः,—शम्भुः, भूरिभारभिया—बहुभार-भयेन, शिरसा तव वाजिराजिभिः,—अश्वसमूहैः, निर्धूतं—चिप्तं, यत् धूलीपटलं—धूलीनां—भूमिकणानां, रजसामिति यावत्, पटलं—पुञ्जः, रजोराशिरित्यर्थः, ["पटलं पिटके च परिच्छदे। छदिष्टंयोगतिलके क्लीवं वृन्दे पुनर्न ना" इति मेदिनी। "कृदि-कारादक्तिनः" इति वार्त्तिकेन धूलिशब्दात् ङीष्] तेन पङ्किला—सञ्जातपङ्का, गङ्गां न धत्ते। अत्र कविप्रौढ़ोक्तिसिद्धं तादृशं पङ्किलत्वं सम्भाव्यमानभूरिभारभय-कारणहरगङ्गात्यागे हेतुः। वास्तवहेतूदाहरणन्तु,—"वदनाम्बुजदृष्टालोकनिन्दितेन्दु-प्रभाभराम्। तामवेच्य मनोजस्य को युवा न वशंवदः॥" अत्र पूर्वार्द्धमेक-पदार्थस्यार्थः परार्द्धार्थे हेतुः।

(झ) पश्यन्तीति।—हे देव! त्रिपथगा—मार्गत्रयमात्रवाहिनी, स्वर्गपृथ्वी-पातालेषु सञ्चारिणी गङ्गेत्यर्थः, तव दानजलवाहिनीं—नदीमित्यर्थः, असङ्ख्यपथगां—बहुमार्गवाहिनीं, पश्यन्ती सती आत्मानम्, उग्रस्य—हरस्य, [भीषणपुरुषस्येति ध्वनिः] मूर्द्धनि—शिरसि, ("उत्तमाङ्गं शिरः शीर्षं मूर्द्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः) गोपयति—रक्षति, लज्जयेति शेषः। गङ्गा त्रिपथगामिनीति बहुमता आसीत्, किन्तु त्वद्दानजलवाहिनीमसङ्ख्यपथगामिनीं दृष्ट्वा कदाचित् नेयं मम यशो-ऽपहन्यात् इति भीता लज्जयेव तिरोभवितुमिच्छति स्म इति भावः। अत्र पूर्वार्द्धे क्रियान्वयासमाप्तौ वाक्यत्वमनापन्नमनेकपदघटितं तदर्थस्य हेतुता। अत्रापि कवि-प्रौढ़ोक्तिसिद्धो हेतुः, सम्भाव्यमानमात्मगोपनं कार्य्यम्। वास्तवहेतूदाहरणन्तु,—"अपाङ्गान्तनटन्नेत्रं वीक्ष्यमाणा मनागपि। अनङ्गसचिवाः कान्ता हरन्ति जगतो मनः॥" इति बोध्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ज्ञापकोऽनुमानस्य विषयः, निष्पादकः काव्यलिङ्गस्य, समर्थकोऽर्थान्तरन्यासस्य, इति पृथगेव कार्य्यकारणभावेऽर्थान्तरन्यासः काव्यलिङ्गात्। तथा हि "यत् त्वन्नेत्र—"इत्यादौ चतुर्थपादवाक्यम्। अन्यथा साकाङ्क्षतयाऽसमञ्जसमेव स्यात् इति पादत्रयगतवाक्यं निष्पादकत्वेनापेक्षते। (ञ) "सहसा विदधीत" इत्यादौ तु,—

"परापकारनिरतैर्दुर्जनैः सह सङ्गतिः ।
वदामि भवतस्तत्त्वं न विधेया कदाचन ॥" (ट)

इत्यादिवदुपदेशमात्रेणापि निराकाङ्क्षतया स्वतोऽपि गतार्थं (ठ) सहसाविधानाभावं सम्पदरणं सोपपत्तिकमेव करोतीति पृथगेव कार्य्यकारणभावेऽर्थान्तरन्यासः काव्यलिङ्गात्।

---

(ञ) कार्य्यकारणभावेऽर्थान्तरन्यासमनङ्गीकुर्व्वतः काव्यप्रकाशादेर्मतं दूषयति,—इह केचिदिति। पदार्थगतेन काव्यलिङ्गेनार्थान्तरन्यासासम्भवात् आह, वाक्यार्थगतेनेति।—अन्यथा—हेत्वनुक्तौ, प्रथमद्वितीयतृतीयपादवाक्यानि विनेत्यर्थः, साकाङ्क्षतया—कारणजिज्ञासया, असमञ्जसम्—असङ्गतं, सुदृढ़प्रतिपत्तिजननाक्षममित्यर्थः। पादत्रयगतवाक्यं,—पादत्रयस्वरूपवाक्यं, निष्पादकत्वेन—निष्पादकत्वप्रतिपादकत्वेनेत्यर्थः।

(ट) परापकारेति।—भवतः तत्त्वं—सत्यं, युक्तियुक्तमिति यावत्, वदामि, कदाचन परापकारनिरतैः,—परेषाम्—अन्येषां, न तु पराणां शत्रूणाम्, अपकारः तत्र निरताः,—परायणास्तैस्तथोक्तैः, अत एव दुर्जनैः सह सङ्गतिः न विधेया—न कर्त्तव्या इति।

(ठ) इत्यादिवदिति।—निराकाङ्क्षतया—कारणनिरपेक्षतया, स्वतोऽपि—हेतूक्तिं विनापि, आत्मनैव इत्यर्थः, गतार्थं—ज्ञातार्थं, निःसंशयप्रतिपादितस्वार्थमित्यर्थः; नान्योत्तराङ्गं निष्पादकत्वेन अपेक्ष्यते इति भावः। तथा च,—हेत्वाकाङ्क्षया यद्वाक्यं यद्वाक्यमपेक्षते तदर्थस्य तदर्थो निष्पादकः, स एव काव्यलिङ्गस्य विषयः; यत्र हेतूपदेशादिना हेतुनिरपेक्षं वाक्यं, तत्र हेतुवाक्यस्यार्थः समर्थक एव, स चार्थान्तरन्यासस्य विषयः; एवंविधं भेदमनङ्गीकृत्य समर्थकहेतोरपि काव्यलिङ्गविषयत्वस्वीकारेऽर्थान्तरन्यासमात्रोच्छेदप्रसङ्गः इति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"न धत्ते शिरसा गङ्गां भूरिभारभिया हरः।
त्वद्वाजिराजिनिर्धूतधूलिभिः पङ्किला हि सा॥" (ड)

इत्यत्र हिशब्दोपादानेन पङ्किलत्वादितिवत् हेतुत्वस्य स्फुटतया नायमलङ्कारः, वैचित्र्यस्यैवालङ्कारत्वात्।

**अनुमानन्तु विच्छित्त्या ज्ञानं साध्यस्य साधनात्** ॥७३२॥(ढ)

यथा,—

"जानीमहेऽस्या हृदि सारसाक्ष्या
विराजतेऽन्तः प्रियवक्त्रचन्द्रः।
तत्कान्तिजालैः प्रसृतैस्तदङ्गे-
ष्वापाण्डुता कुड्मलताऽक्षिपद्मे॥" (ण)

(ड) नेति।—हरः,—शङ्करः, भूरिभारभिया—अत्यन्तभारोद्वहनभीत्या हेतुना, शिरसा—मस्तकेन, तद्द्वारेति यावत्, गङ्गां न धत्ते, अत एव तां मार्गवशेष कपर्दगोपितामपि निःसारयतीति भावः। ननु भूरिभारभीः सम्प्रत्येव कुतः प्राप्ता? इत्याह,—हि—यतः, सा—गङ्गेत्यर्थः, तव—राज्ञ इत्यर्थः, ये वाजिनः,—सैन्याश्वाः, तेषां राजिः,—पङ्क्तिः, तया निर्धूताः,—खुरचोदनोत्थापिताः, धूलयः ताभिः,—तद्द्वारा, पङ्किला—पङ्कवती, अत एव गरीयसी संवृत्तेति भावः।

(ढ) अनुमानमाह, अनुमानमिति।—विच्छित्त्या—अलङ्कारादिकृतवैचित्र्येण, परिपुष्टवैचित्र्यमिति शेषः, साधनात्—साधनगोचरव्याप्यत्वज्ञानात्, साध्यस्य—व्यापकस्य, कार्य्यस्येति यावत्, (अनुमितिं प्रति साधनस्य हेतुत्वाङ्गीकारेऽतीतानागतलिङ्गकानुमितिर्न स्यात्) ज्ञानम् अनुमानम्। अत्रेदं बोध्यम्;—स्वार्थपरार्थभेदेन तदनुमानं द्विविधम्; यत्र स्वयमवगतोऽर्थः इति आत्मपरामर्शस्य विषयः, तत् स्वार्थानुमानम्; यत्र अन्यावबुद्धस्य वस्तुनः समर्थनात् अन्यबोधकत्वं, तत् परार्थानुमानम्, एतद्द्विप्रकारकमप्येकोऽनुमानालङ्कारः इति सङ्क्षेपः।

(ण) जानीमहे इति।—विरहवर्णनमिदम्। अस्याः सारसाक्ष्याः,—सरोऽभिजनो नियतवसतिरस्य इत्यण् सारसं,—पद्ममित्यर्थः, तद्वत् अक्षिणी यस्याः तस्याः, कमललोचनायाः इति यावत्, हृदि अन्तः,—हृदयमध्ये, प्रियस्य वक्त्रचन्द्रः,—मुखचन्द्रः, विराजते इति जानीमहे—मन्यामहे, अनुमिनुमः इत्यर्थः. तथा हि,—प्रसृतैः,—विस्तृतैः, तस्य—हृदिस्थितस्य प्रियवक्त्रचन्द्रस्य, कान्तिजालैः,—प्रभापटलैः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र रूपकवशाद्विच्छित्तिः । यथा वा,—

"यत्र पतत्यबलानां दृष्टिर्निशिताः पतन्ति तत्र शराः ।
तच्चापरोपितशरो धावत्यासां पुरः स्मरो मन्ये ॥" (त)

अत्र कविप्रौढोक्तिवशाद्विच्छित्तिः । उत्प्रेक्षायामनिश्चिततया प्रतीतिः, इह तु निश्चिततयेत्युभयोर्भेदः ।

**अभेदेनाभिधा हेतुर्हेतोर्हेतुमता सह ॥ ७३३ ॥ (थ)**

---

तदङ्गेषु—तस्याः,—सारसाक्ष्याः, अङ्गेषु आपाण्डुता—ईषत्पाण्डुवर्णता, तथा अक्षिपद्मे—नयनकमले, कुड्मलता—मुकुलीभावः, ("कुड्मलो मुकुलोऽस्त्रियाम्" इत्यमरः) जातेति शेषः । अत्र अङ्गानाम् आपाण्डुतया अक्षिपद्मस्य च मुकुलीभावेन लिङ्गेन साध्यस्य वक्त्रचन्द्रस्य हृन्मध्ये विराजनस्य ज्ञानम् । "अनुमानं हि पक्षसत्त्व-सपक्षसत्त्व-विपक्षव्यावृत्तत्वविशिष्टात् लिङ्गात् लिङ्गिनो ज्ञानम्" इति पञ्चमपरिच्छेदोक्तलक्षणं विच्छित्तिविशेषेण समर्थितम् इति भावः पुनरस्यालङ्कारस्य । तथा हि,—विरहजन्य-पाण्डुत्वाक्षिकुड्मलतयोश्च प्रियवक्त्रचन्द्रकिरणजन्यत्वमुत्प्रेक्ष्य हेतुः क्रियते, एवं रूपकोत्प्रेक्षाभ्यां परिपुष्टवैचित्र्यमनुमानमलङ्कारः इति ज्ञेयम् । उपजातिः वृत्तम् ।

(त) कविप्रौढोक्तिजन्यविच्छित्तिपरिपुष्टवैचित्र्यमनुमानमुदाहरति, यत्रेति ।—यत्र अबलानां—कामिनीनां, दृष्टिः पतति, तत्रैव निशिताः,—तीक्ष्णाः, शराः, कामस्येति शेषः, पतन्ति ; तत्—तस्मात्, स्मरः,—कामः, चापे—धनुषि, रोपितः शरो येन तथाभूतः सन्, आसाम्—अबलानां, पुरः,—अग्रतः, धावति इति मन्ये—अनुमिनोमि । अत्र अबलादृष्टिपतने कामशरपतनरूपात् लिङ्गात् साध्यस्य स्मरस्य धनुरारोपितशरत्वेन पुरोधावनरूपस्य ज्ञानम् । तथा हि—"अबलादृष्टिपातसहचरितशरपातः अबलापुरोवर्त्तिचापरोपितशरजन्यः अबलादृष्टिपातसहचरितशरपातत्वात्" इत्यनुमानम् ; तत्रेतरस्य बाधात् स्मरस्य सिद्धिः ; वस्तुतस्तु,—अलङ्कारादिसंस्कारं विनाऽपि यत्र वैचित्र्यमनुभूयते, तत्राप्ययमलङ्कारः, यथा,—"विकसन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः" अत्र वर्षाकालानुमानम् ।

(थ) [ अभिधा ] हेत्वलङ्कारमाह, अभेदेनेति ।—हेतुमता—कार्य्येण, सह हेतोः,—कारणस्य, अभेदेन अभिधा—उक्तिः, हेतुः । केचित्तु,—हेतुमता सह हेतोरभेदेन—अभेदारोपेण, अभेदारोपणमित्यर्थः, [ अभेदे तृतीया ] अभिधा हेतुनामालङ्कारः इत्याहुः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा मम,—

"तारुण्यस्य विलासः समधिकलावण्यसम्पदो हासः।
धरणितलस्याभरणं युवजनमनसो वशीकरणम्॥" (द)

इत्यत्र वशीकरणहेतुर्नायिका वशीकरणत्वेनोक्ता। विलास-हासयोस्तु अध्यवसायमूलोऽयमलङ्कारः। (ध)

**अनुकूलं प्रातिकूल्यमनुकूलानुबन्धि चेत्॥७३४॥(न)**

यथा,—

"कुपिताऽसि यदा तन्वि! निधाय करजक्षतम्।
बधान भुजपाशाभ्यां कण्ठमस्य दृढं तदा॥" (प)

अस्य च विच्छित्तिविशेषस्य सर्व्वालङ्कारविलक्षणत्वेन स्फुरणात् पृथगलङ्कारत्वमेव न्याय्यम्। (फ)

---

(द) तारुण्यस्येति।—(व्याख्यातमिदं पद्यं १५५ पृष्ठे)। अत्र प्रकरणवशात् नायिकाया लाभः।

(ध) नन्वत्र लक्षणया वशीकरणकारणप्रतीतिरेव, न त्वभेदप्रतीतिरित्यत आह, विलासहासयोरिति।—विलासः,—विजृम्भणं, हासः,—विकासः, अध्यवसायः,—आहार्य्याभेदावबोध एव मूलं यस्य तादृशोऽयम् अलङ्कारः। तथा च,—नायिकाया विलासहासयोः कार्य्यकारणभावरूपसम्बन्धाभावेन कारणलक्षणाया असम्भवात् आहार्य्याभेदप्रतीतिरवश्यमङ्गीकरणीया तस्मादुचर्य्यात् प्रकृतेऽप्याहार्य्यप्रतीतिरेव, न तु लाक्षणिको प्रतीतिरिति भावः।

(न) अनुकूलालङ्कारमाह, अनुकूलमिति।—प्रातिकूल्यं—प्रतिकूलभावः, अनु-कूलानुबन्धि—आनुकूल्यविधायकं, चेत् तदा अनुकूलं—तन्नामालङ्कारः।

(प) कुपितेति।—नायिकां प्रति सख्या वचनमिदम्। हे तन्वि!—कृशाङ्गि! यदा—यदि, कुपिता असि, तदा करजक्षतं—नखक्षतं, निधाय—दत्त्वा, कृत्वेत्यर्थः, भुजपाशाभ्याम् अस्य—कान्तस्य, कण्ठं दृढं बधान। अत्र करजक्षतं भुजबन्धनञ्च प्रति-कूलमपि नायकस्य आनुकूल्यकरम्।

(फ) प्राचीनैरयमलङ्कारो नादृत इत्याशयेनाह,—अस्येति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये ।
निषेधाभास आक्षेपो वक्ष्यमाणोक्तगो द्विधा ॥७३५॥ (व)

अत्र वक्ष्यमाणविषये क्वचित् सर्व्वस्यापि सामान्यतः सूचितस्य निषेधः, क्वचिदंशोक्तौ अंशान्तरे निषेध इति द्वौ भेदौ। उक्तविषये च (भ) क्वचिद्वस्तुस्वरूपस्य निषेधः, क्वचिद्वस्तुकथनस्येति द्वौ, इत्याक्षेपस्य चत्वारो भेदाः । क्रमेण यथा,—

"स्मरशरशतविधुराया भणामि सख्याः कृते किमपि ।
क्षणमिह विश्राम्य सखे ! निर्दयहृदयस्य किं वदाम्यथवा ॥"(म)

अत्र सख्या विरहस्य सामान्यतः सूचितस्य वक्ष्यमाणविशेषे निषेधः । (य)

---

(व) आक्षेपालङ्कारमाह, वस्तुन इति ।—वक्तुमिष्टस्य—विवक्षितस्य, वस्तुनः,—विषयस्य, विशेषप्रतिपत्तये—विवक्षितवस्तुनो वक्तुर्वा वैलक्षण्यसूचनाय, यः निषेधाभासः,—निषेधवत् प्रकाशः, स आक्षेपः । विवक्षितस्य वक्ष्यमाणोक्तरूपद्वैविध्येन आक्षेपस्यापि द्वैविध्यमाह, वक्ष्यमाणेति ।—स च द्विधा—वक्ष्यमाणगः,—वक्ष्यमाणविषयः, उक्तगश्च—उक्तविषयश्चेत्यर्थः ।

(भ) अत्रेति ।—सर्व्वस्यापि—समुदितस्यापि इत्यर्थः, वक्ष्यमाणविषये विवक्षितकथनाभावस्यैव वैचित्र्यव्यञ्जकत्वमिति । तत्र प्रकारान्तराऽसम्भवात् द्वितीयप्रकारस्यैव वस्तुतत्कथननिषेधत्वेन द्वैविध्यमाह,—उक्तविषये चेति ।

(म) स्मरेति ।—नायकं प्रति नायिकाप्रेरितायाः सख्या उक्तिरियम् । हे सखे ! स्मरस्य—कामस्य, शरशतैः,—क्रूरशतप्रहारैरित्यर्थः, विधुरायाः,—कातरायाः, सख्याः कृते—निमित्तं, किमपि भणामि—कथयामि, इह क्षणं विश्राम्य—तिष्ठ इत्यर्थः, अथवा निर्दयहृदयस्य, तव इति शेषः, किं वदामि ?—न किमपि वक्तुमुचितं त्वदग्रे इति भावः । अत्र वक्ष्यमाणगः आक्षेपः ।

(य) अत्रेति ।—विरहस्य—कान्तविच्छेदस्य, सामान्यतः,—विरहत्वेन, सूचितस्य—स्मरशरशतेत्यनेन निर्दयहृदयेत्यनेन च व्यञ्जितस्य, विशेषे—मरणपर्यवसायित्वेनातिमहति, निषेधः,—विवक्षितस्य वचननिषेधेनैव निषेध इति भावः । इदानीं त्वयि गतेऽपि साऽवश्यं मरिष्यतीति त्वयि तन्निवेदनमनर्थकम् इति विवक्षितवस्तुनो विरहस्य मरणाव्यभिचारितरूपवैलक्षण्यं विशेषकथननिषेधेनैव व्यज्यते । विरहविशेषस्य

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"तव विरहे हरिणाक्षी निरीक्ष्य नवमालिकां दलिताम्।
हन्त! नितान्तमिदानीमाः!! किं हतजल्पितैरथवा॥" (र)

अत्र मरिष्यतीत्यंशो नोक्तः।

"बालअ! णाहं दूती तस्स पिओसि त्ति ण मह वावारो।
सा मरइ तुज्झ अअसो एअं धम्मक्खरं भणिमो॥" (ल)

अत्र दूतीत्वस्य वस्तुनो निषेधः।

"विरहे तव तन्वङ्गी कथं क्षपयतु क्षपाम्।
दारुणव्यवसायस्य पुरस्ते भणितेन किम्?॥" (व)

प्रकरणादिना वाच्यवत्स्फुटप्रतीयमानतया तत्कथननिषेधस्याकिञ्चित्करत्वेनाभासत्वम् इति सङ्क्षेपः।

(र) तवेति।—नायकं प्रति दूत्या उक्तिरियम्। हन्तेति खेदसूचकमव्ययम्। हरिणाक्षी तव विरहे—विरहदशायां, नवमालिकां दलितां—विकसितां, निरीक्ष्य, इदानीं नितान्तम् आः! अथवा हतजल्पितैः,—अत्यन्तानिष्टत्वात् अशक्यवचनैरित्यर्थः, किम्? अत्र जल्पनस्य निन्दया सूचितस्य मरिष्यतीत्यंशस्य सुहृदनिष्टत्वेनाशक्य-(वाक्य)वक्तव्यत्वं वस्तुवैलक्षण्यं प्रतीयते इति बोध्यम्।

(ल) बालअ इति।—["बालक! नाहं दूती, तस्याः प्रियोऽसीति न मम व्यापारः। सा म्रियते तवायशः एतद् धर्माक्षरं भणामः॥" इति संस्कृतम्]। नायकं प्रति, दूतीत्वेन कथितात्मनः सख्या उक्तिरियम्। हे बालक!—अविदग्ध! इत्यर्थः, नाहं दूती—नाहं मिथ्यावादिनीति भावः; तस्याः,—तव कान्ताया इति भावः, प्रियः असि इति—अस्मात् हेतोः, न मम व्यापारः,—उद्यमः, त्वदर्थं प्रयासो नेत्यर्थः, अथ सा—तव कान्ता, म्रियते, तव च अयशः,—अपकीर्त्तिः, एतत् धर्माक्षरं —सत्यवचनं, यथार्थवचनमित्यर्थः, भणामः। स्वप्रियायाः स्वस्मिन् सति सर्व्वथा प्रियमाचरितुं सामर्थ्येऽपि प्रियानाचरणे तस्या अनन्याधारतया मरणं, स्वस्य च तव यशोमालिन्यमिति सत्यमहं ब्रवीमीति भावः। अत्र स्वस्मिन् सतोऽपि दूतीत्वस्य निषेधेन दूत्यन्तरवन्नाहं मिथ्या वदामीति स्ववैलक्षण्यं व्यज्यते। निषेधआरोप्यमाणत्वात् आभासत्वम् इति आक्षेपालङ्कारः। अत्रार्य्या छन्दः।

(व) विरहे इति।—वर्षाऽऽरम्भे प्रवसन्तं नायकं प्रति सख्या उक्तिरियम्। तव विरहे तन्वङ्गी—कृशाङ्गी, कथं क्षपां—रात्रिं, क्षपयतु?—अपगमयतु? रात्रि-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र कथनस्यैव निषेधः। प्रथमोदाहरणे सख्या अवश्यम्भाविमरणमिति विशेषः प्रतीयते, द्वितीयेऽशक्यवक्तव्यत्वादि, तृतीये दूतीत्वे यथार्थवादित्वं, चतुर्थे दुःखस्यातिशयः। न च अयं विहितनिषेधः, अत्र निषेधस्याभासत्वात्। (श)

**अनिष्टस्य तथाऽर्थस्य विध्याभासः परो मतः॥७२६॥ (ष)**

तथेति पूर्व्ववद्विशेषप्रतिपत्तये।

---

यापनमशक्यमिति भावः; अथवा दारुणव्यवसायस्य—निष्ठुरक्रियस्य, दुरुच्छेदतत्समीपप्रापणनिश्चयस्य वा, ( वर्षासु प्रियविच्छेदहेतुत्वात् व्यवसायस्य निन्दा ) तव पुरतः,—अग्रतः, भणितेन—उक्तेन, किम् ?—उक्तिः निरर्थिकेति भावः।

( श ) अत्रेति।—पूर्वार्द्धे तत्समीपं त्वं याहि इति वक्तुमिष्टं वस्तु तस्य व्यञ्जकनिषेधेनैवार्थतो निषेधः सिध्यति इति न लक्षणगमनानुपपत्तिः इत्यभिप्रायेणाह, कथनस्योक्तस्यैवेति।—पूर्वार्द्धस्यैवेत्यर्थः। अवश्यम्भाविमरणं—मरणाव्यभिचारित्वं, विरहविशेषस्य वस्तुनो वैलक्षण्यम्। अशक्येति।—अवक्तव्यं वचनं यस्य तत्त्वम्, आदिना अतिप्रसिद्धत्वपरिग्रहः। दूतीत्वे यथार्थवादित्वं—दूतीत्वे सत्यपि यथार्थवादित्वम्। चतुर्थे इति।—चतुर्थोदाहरणे, दुःखस्य, नायिकाया इति शेषः, दूतीदुःखस्य वेत्यर्थः। न चाक्षेपालङ्कारघटकनिषेधो वास्तवनिषेध एव, न तु निषेधाभास इति वाच्यम्, आक्षेपालङ्कारे निषेधाभासस्यैव वैचित्र्याधायकत्वात् इत्यभिप्रायेणाह, न चेति।—अयम्—आक्षेपालङ्कारघटकनिषेधः, विहितनिषेधः,—वास्तवनिषेधः, कथनस्येति शेषः; तथात्वे दूत्या आगमनस्य निष्प्रयोजनत्वात्, निषेधाभासस्यैव वैचित्र्याधायकत्वादिति बोध्यम्।

( ष ) प्रकारान्तरेणाक्षेपमाह, अनिष्टस्येति।—अनिष्टस्य—अनभिमतस्य, अर्थस्य—विषयस्य, तथा—विशेषप्रतिपत्तये इत्यर्थः, विध्याभासः,—विधिरूपेण प्रकाशः, किञ्चित् सत्यवत् प्रतिभास इत्यर्थः, परः,—निरुक्तरूपात् अन्यः, आक्षेपः इत्यनुषज्यते, मतः। अत एव अलङ्कारसर्व्वस्वकृताऽप्युक्तम्,—"अनिष्टविध्याभासश्च" इति सूत्रयित्वा "यथा इष्टस्य इष्टत्वादेव निषेधः अनुपपन्नः, एवम् अनिष्टस्यापि अनिष्टत्वादेव विधानं नोपपद्यते। तत्क्रियमाणं प्रस्खलद्रूपत्वात् निषेधे पर्य्यवस्यति। ततश्च विधेरुपकरणीभूतो निषेध इति विधिना अयं निषेधः अनिष्टविशेषपर्य्यवसायी निषेधाभूरणादाक्षेपः" इति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—"गच्छ गच्छसि चेत् कान्त ! पन्थानः सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान्॥" (स)

अत्रानिष्टत्वाद्गमनस्य विधिः प्रस्खलद्रूपो निषेधे पर्य्यवस्यति। (ह) विशेषश्च गमनस्यात्यन्तपरिहार्य्यत्वरूपः प्रतीयते।

**विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते।**
**उक्तानुक्तनिमित्तत्वाद् द्विधा सा परिकीर्त्तिता॥७३७॥(क)**

विना कारणमुपनिबध्यमानोऽपि कार्य्योदयः किञ्चित् (ख) अन्यत् कारणमपेक्ष्यैव भवितुं युक्तः। तच्च कारणान्तरं क्वचिदुक्तं क्वचिदनुक्तमिति द्विधा। यथा,—

"अनायासकृशं मध्यमशङ्कतरले दृशौ।
अभूषणमनोहारि वपुर्वयसि सुभ्रुवः॥" (ग)

---

(स) गच्छेति।—हे कान्त! गच्छसि चेत् गच्छ, ते—तव, पन्थानः शिवाः,—शुभदाः, सन्तु—भवन्तु, यत्र भवान् गतः, स्यादिति शेषः ममापि तत्रैव जन्म भूयात्। तव गमने मम मरणं निश्चितं भविष्यति, ततश्च पुनर्जन्म स्यात् इत्यर्थः। [ "गतः" इत्यत्र "भाव्यर्थो भूतवद् अङ्गीक्रियते" इति न्यायात् भूते निष्ठा ]।

(ह) अत्रेति।—प्रस्खलत्—असङ्गच्छमानं, रूपं यस्य तथाविधः, अत्यन्तम् असम्भवन् इत्यर्थः, पर्य्यवस्यति—परिणमति। अयं भावः,—कान्तस्य प्रस्थानमात्मनोऽनिष्टमपि काचित् तस्य अनिराकरणद्वाराऽनुजानातीव, न चास्यानुज्ञापनरूपो विधिः प्रस्थाने अनभिमतत्वात्। तस्मात् तथाऽनुज्ञापनं प्रस्खलद्रूपत्वेन निषेधं पर्य्यवसाययति। प्रयोजनञ्च अत्र अनभिमतस्य प्रस्थानस्याऽसंविज्ञानपदनिर्बन्धमत्यन्तपरिहार्य्यत्वप्रतिपादनम् इति।

(क) विभावनामाह, विभावनेति।—हेतुं—प्रसिद्धकारणं, विना यत् कार्य्यस्य उत्पत्तिः, असौ विभाव्यते—समालोच्यते, कारणं विना कार्य्यमस्यामिति विभावना [बाहुलकादधिकरणे युच्] उच्यते। सा उक्तनिमित्ता अनुक्तनिमित्ता चेति द्विधा परिकीर्त्तिता। तथोक्तम्,—"इयञ्च विशेषोक्तिवत् उक्ताऽनुक्तनिमित्तभेदात् द्विधैव" इति।

(ख) विनेति।—किञ्चित्—अप्रसिद्धमित्यर्थः।

(ग) अनायासेति।—वयसि—यौवने, ("वयः पक्षिणि बाल्यादौ वयो यौवनमात्रके" इति कोषः) सुभ्रुवः,—नायिकायाः इति भावः, मध्यं—मध्यावयवः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र वयोरूपं निमित्तमुक्तम् । अत्रैव "वपुर्भाति मृगीदृशः" इति पाठेऽनुक्तम् ।

**सति हेतौ फलाभावे विशेषोक्तिस्तथा द्विधा** ॥७३८॥ (घ)

---

कटिदेश इत्यर्थः, अनायासम्—आयासरहितम्, अथ च कृशं, दृशौ—नेत्रे, अशङ्के—शङ्कारहिते अथ च तरले—चञ्चले, तथा वपुः,—शरीरम्, अभूषणम्—अनलङ्कारम् अथ च मनोहारि, भवतीति शेषः । अत्र कृशत्वे हेतुमायासं, तारल्ये हेतुं शङ्कां, मनोहारित्वे हेतुं भूषणं विना कार्य्यस्य कृशत्वस्य, तारल्यस्य, मनोहारित्वस्य चोत्पत्तिः । यथा वा,—"असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य । कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात् परं साऽथ वयः प्रपेदे ॥" अत्र द्वितीयचरणे आसवाभावेऽपि मदोक्त्या चोक्तनिमित्ता विभावनेति सर्व्वस्वकारादिमतं दूषयद्भिः रसगङ्गाधरकृद्भिरुक्तम् ;—"विरोधमूलत्वादेतदाद्यलङ्काराणां प्रकृते च यौवनस्य मदकारणतायाः कविनैव निबद्धत्वादासवयौवनयोः मदं प्रति व्रीहियवयोः यागं प्रतीव निरपेक्षकारणत्वावगमात् विरोधास्फुरणात् विभावनैवेयं न भवितुमर्हति, कुतः तद्विशेषः, इति तच्चिन्त्यम् ; लोकप्रसिद्धकारणताकस्य मदस्य व्यतिरेकेऽपि यौवनान्मदोत्पत्त्यभिधाने विरोधस्य प्रतिभाने बाधकाभावात् ; अन्यथा द्वयोर्निरपेक्ष्यकारणत्वप्रतीतौ यौवनोन्मदोत्पत्तौ चमत्कारानुपपत्तेः । आलोकपरामर्शव्यतिरेकेण धूमपरामर्शादनुमित्युत्पत्त्यादिवत् अनुपपत्त्यभावात् ; किञ्चैवं "यदवधि विलासभवनं यौवनमुदियाय चन्द्रवदनायाः । दहनं विनैव तदवधि यूनां हृदयानि दह्यन्ते ॥" इति भवदुक्तोदाहरणमपि दुर्घटं यौवनावधि हृदयदाहोक्तौ दाहे यौवनहेतुत्वस्यापि स्वीकारात् प्रतीत्यविशेषात् । कारणशब्देनाभिधानस्याकिञ्चित्करत्वात् ; तदुक्तं कुसुमाञ्जल्याचार्य्यैः,—"नियमस्यैवापेक्षार्थत्वात् तस्यैव च कारणार्थत्वात्" इति, तस्मात्त्याज्या चोक्तनिमित्ता विभावना, आश्रयणीया वा यथोक्तैवेति दिक् ।"

(घ) विशेषोक्तिमाह, सतीति ।—हेतौ—हेतुसद्भावेऽपीत्यर्थः, फलस्य—कार्य्यस्य, अभावे, फलाभावकथने इत्यर्थः, सति विशेषोक्तिः ; सा च तथा—पूर्व्ववत् उक्तानुक्तनिमित्तत्वादित्यर्थः, द्विधा । अत्राहुरलङ्कारकौस्तुभकाराः,—"हेतौ सत्यपि कार्य्यानुत्पत्तिः स्याद्विशेषोक्तिः" इति सूत्रयित्वा "सा च त्रेधा, अनुक्तनिमित्ता, उक्तनिमित्ता, अचिन्त्यनिमित्ता च" इति । न च तर्हि तृतीयः कथं न भेदः कविराजैः स्वीकृतः ? इति शङ्क्यम्, "अचिन्त्यनिमित्तत्वस्यानुक्तनिमित्तस्यैव भेद इति पृथङ्नोक्तम्" इति कविराजैरेवाभिधास्यमानत्वात् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तथेत्युक्ताऽनुक्तनिमित्तत्वात्। तत्रोक्तनिमित्ता यथा,—

"धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः।
प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः॥" (ङ)

अत्र महामहिमशालित्वं निमित्तमुक्तम्। अत्रैव चतुर्थपादे "कियन्तः सन्ति भूतले" इति पाठे त्वनुक्तम्। अचिन्त्यनिमित्तत्वञ्च अनुक्तनिमित्तस्यैव भेद इति पृथक् नोक्तम्। यथा,—

"स एकस्त्रीणि जयति जगन्ति कुसुमायुधः।
हरताऽपि तनुं यस्य शम्भुना न हृतं बलम्॥" (च)

अत्र तनुहरणेऽपि बलाहरणे निमित्तमचिन्त्यम्। इह च कार्य्याभावः कार्य्यविरुद्धसद्भावमुखेनापि निबध्यते। विभावनायामपि कारणाभावः कारणविरुद्धसद्भावमुखेन। एवञ्च "यः कौमारहरः स एव हि वरः" इत्यादेरुत्कण्ठाकारणविरुद्धस्य निबन्धनाद् विभावना। "यः कौमारहरः" इत्यादेः कारणस्य च कार्य्यविरुद्धाया उत्कण्ठाया निबन्धनाद् विशेषोक्तिः। एवञ्चात्र विभावनाविशेषोक्त्योः सङ्करः। शुद्धोदाहरणन्तु मृग्यम्। (छ)

---

(ङ) धनिन इति।—स्पष्टम्। अत्र उन्मादस्य हेतोर्धनस्य, चाञ्चल्यस्य हेतोर्यौवनस्य, प्रमादस्य हेतोः प्रभुत्वस्य सत्त्वेऽपि उन्मादादीनां फलानामभावः। अत्र निमित्तं फलाभावप्रयोजकम्।

(च) स इति।—सः कुसुमायुधः एकः,—एकक इत्यर्थः, त्रीणि जगन्ति—भुवनत्रयं, जयति ; यस्य तनुं हरता—भस्मीकुर्वता, अपि शम्भुना बलं न हृतम्।

(छ) अत्रेति।—अत्र तनुहरणलक्षणे कारणे सत्यपि बलहरणरूपस्य कार्य्यस्यानुत्पत्तौ निमित्तमनुक्तमेवाचिन्त्यतामावहति, प्रत्ययाविषयत्वात् इति। उत्कण्ठाकारणविरुद्धस्येति।—उत्कण्ठायाः कारणं—पत्याद्यभावः, तद्विरुद्धस्य—पत्यादिसद्भावस्येत्यर्थः, निबन्धनात्—रचनात्। कारणस्य चेति।—कारणस्य—उत्कण्ठाऽद्यभावकारणस्य पत्यादिसद्भावस्य, कार्य्यम्—उत्कण्ठाभावः, तद्विरुद्धायाः,—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः ।
क्रिया क्रियाद्रव्याभ्यां यद् द्रव्यं द्रव्येण वा मिथः ।
विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिः ॥७३८॥(ज)

क्रमेण यथा,—

"तव विरहे मलयमरुद्दवानलः शशिरुचोऽपि सोष्माणः ।
हृदयमलिरुतमपि भिन्ते नलिनीदलमपि निदाघरविरस्याः ॥"(झ)

तद्विपरीतायाः । कार्य्यकारणविरुद्धसद्भावमुखेन कार्य्याभावकारणाभावोक्तौ विशेषोक्तिविभावनयोः शुद्धोदाहरणे क्रमेण यथा,—"धनिनोऽपि स्थिरस्वान्ता यौवने धर्मतत्पराः । अनात्मश्लाघिनः शूरा भूपाला रघुवंशजाः ॥" अत्र स्थिरस्वान्तत्वमुन्मादविरुद्धं, धर्मोपार्ज्जनकारणं वार्द्धकं तद्विरुद्धं यौवनम् इति ।

(ज) विरोधालङ्कारमाह, जातिरिति ।—जातिः,—गोत्वादिः, जात्याद्यैः चतुर्भिः,—जातिगुणक्रियाद्रव्यैरित्यर्थः, (गुणक्रियाद्रव्याणां जात्या सह विरोधस्तु गुणादिभिः सह जातिविरोध एवेति पृथङ्नोक्तः) गुणः,—शुक्लादिः, गुणादिभिः त्रिभिः,—गुणक्रियाद्रव्यैरित्यर्थः, क्रिया—पाकादिः, क्रियाद्रव्याभ्यां, तथा द्रव्यम्—एकव्यक्तिवाचकः शब्दः इत्यर्थः, द्रव्येण मिथः,—परस्परं, यत् विरुद्धमिव भासेत, क्वचिदारोपेण, क्वचित् कविप्रौढ़ोक्त्या, क्वचित् कालभेदेन, क्वचिदीश्वरादिमहिमातिशयेन समावेशं लभमानैः जात्यादिभिः सह जात्यादेर्यदापाततो विरोधभानमिति भावः, असौ दशाकृतिः,—उक्तरीत्या दशविधः विरोधः, विरोधालङ्कारः । आपाततो विरोधवत् भासनं विरोधालङ्कार इति फलितार्थः । अत्रेदं बोध्यम्,—अयमेव विरोधाभासः इति कथ्यते, आभासः ईषद्भासनं, विरोधश्चासावाभासश्चेति विग्रहः ; यथार्थतश्श्लेषः जात्यादिप्रकाराणाममनोहरत्वात् शुद्धश्लेषकारणत्वाभ्यां द्विप्रकारः इति प्राञ्चः, तत्र श्लेषकारणो यथा विन्ध्याटवीवर्णनप्रसङ्गे,—"पुष्पवत्यपि पवित्रा" इति ।

(झ) चतुर्भिः पादैः जात्यादीनां चतुर्णां विरोधमाह, तवेति ।—दूत्या नायकं प्रत्युक्तिरियम् । तव विरहे अस्याः,—नायिकायाः, त्वत्कृते इति यावत्, मलयमरुत्—चन्दनगिरिसम्भूतः पवनः, चन्दनराशिसम्पर्केण सुगन्धितसुशीतलोऽपि मारुत इति भावः, दवानलः,—दावाग्निः, शशिरुचः,—चन्द्रमरीचयः, स्वभावतः शीतांशोः करा इति भावः, अपि—तथा शीतला इत्यपिशब्दार्थः, सोष्माणः,—उष्णाः, इत्यर्थः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"सन्ततमुषलासङ्गात् बहुतरगृहकर्म्मघटनया नृपते ! ।
द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः॥"(ञ)

"अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ?॥" (ट)

अलिरुतं—भ्रमराणां मधुरस्वनोऽपि, हृदयं भिन्ते—विध्यति, नलिनीदलमपि—पद्मिनीनां क्लमादिहरणक्षमं पत्रमपि, निदाघरविः,—ग्रीष्मसूर्य्यः। अत्रार्य्या छन्दः। यथा वा विविक्तानि जातिविरोधोदाहरणानि क्रमेण,—"यस्याऽऽकर्णनमात्रतोऽपि भवतोऽवस्थेयमीदृग्विधा येनाङ्गे मलयानिलोऽपि भवति प्रायः करीषानलः। हंहो मानस ! बालिश ! प्रतिपथं प्रत्याशमुन्नीविकां कुर्वन्तं नयनातिथिं पुनरहो! कर्त्तुं किमाकाङ्क्षसि ॥" अत्र द्वितीयपादे वायुलववह्निलयोः विरोधः। "गिरयोऽप्यनुन्नतियुजो मरुदथ चलोऽब्धयोऽप्यगम्भीराः। विश्वम्भरोऽप्यतिलघुर्नरनाथ ! तवान्तिके नियतम् ॥" अत्र गुणेन जातेर्विरोधः। "येषां कण्ठपरिग्रहप्रणयितां सम्प्राप्य धाराधरः तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं पराप्नोति च। तेषां सङ्गररङ्गसक्तमनसां राज्ञां त्वया भूपते ! पांशूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ॥" अत्र क्रियया जातेर्विरोधः। "प्राणेश्वरी गुरुजनेन क्लतान्नियोगाद्देशान् परानगमदित्युदयत्यसूया। दुर्दैववैभववलात् सखि! साम्प्रतं यच्चन्द्रोऽपि वह्निरभवत् क इहापराध्येत् ?॥" अत्र द्रव्येण जातेर्विरोधः।

(ञ) गुणेन सह गुणविरोधमाह, सन्ततेति।—हे नृपते ! भवति—त्वयि राजनि, सति—विद्यमाने इत्यर्थः, सन्ततं—निरन्तरं, यः मुषलेन—धान्यकण्डनोपकरणेन, आसङ्गः,—संसर्गः तस्मात्, तथा बहुतराणां गृहकर्म्मणां घटनया—अनुष्ठानेन, कठिनाः,—किणाङ्किता इति भावः, द्विजपत्नीनां—ब्राह्मणीनां, कराः सरोजवत्—कमलवत्, सुकुमाराः,—सुकोमलाः, जाताः इति शेषः, तव दानशक्तिप्रभावात् ब्राह्मणानां कष्टकरवृत्तित्वव्यपगमादिति भावः ; तथा हि,—भवता द्विजेभ्यः तथा वित्तानि दत्तानि, यथा तेषां दासीभिरेव कर्म्मकरणात् तत्पत्नीनां कराः सुकुमाराः जाताः। अत्र काठिन्यं गुणः तस्य सौकुमार्य्येण सह विरोध आपाततो भासते, परं राज्ञो दानशक्त्या कालभेदेन समाधानम्। अत्रार्य्या छन्दः। यथा वा,—"सरसाऽपि शुष्यत्येव जानाति दुःखानि मुग्धहृदयाऽपि। रक्ताऽपि पाण्डुरेव जाता वराकी तव वियोगेन ॥"

(ट) गुणस्य क्रियया विरोधमाह, अजस्येति।—ब्रह्मस्तुतिरियम्। हे देव !

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"वल्लभोत्सङ्गसङ्गेन विना हरिणचक्षुषः।
राकाविभावरीजानिर्विषज्वालाकुलोऽभवत्॥" (ठ)
"नयनयुगासेचनकं मानसवृत्त्याऽपि दुष्प्रापम्।
रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे॥" (ड)

को जनः अजस्य—जन्मरहितस्य, अथ च जन्म गृह्णतः, निरीहस्य—निश्चेष्टस्य, अथ च हताः द्विषो येन तादृशस्य, स्वपतः,—निद्राणस्य, (स्वप्नस्य सिद्धा मनःसंयोगरूपतया गुणत्वम्) अथ च जागरूकस्य तव याथार्थ्यं—तत्त्वं, वेद—जानाति? अत्र गुणस्य क्रियया विरोधः। इदं रघुवंशस्य पद्यम्।

(ठ) गुणस्य द्रव्येण सह विरोधमाह, वल्लभोत्सङ्गेति।—वल्लभस्य—कान्तस्य, उत्सङ्गः,—क्रोडः, तत्र सङ्गः,—आसक्तिः, उपवेशनमिति भावः, तेन विना—तत्रोपवेशनेन विनेत्यर्थः, हरिणचक्षुषः,—हरिणेक्षणायाः कान्तायाः, राकाविभावरीजानिः,—राकाविभावरी—पूर्णचन्द्रसमन्विता निशा, पौर्णमासी रात्रिरित्यर्थः ("पूर्णे राका निशाकरे" इत्यमरः) जाया—पत्नी यस्य सः, पौर्णमासीनिशाचन्द्रः इत्यर्थः, विषस्य ज्वालया आकुलः,—आकुलताजनक इत्यर्थः, अभवत्। अत्र पूर्णचन्द्रेण द्रव्येण सह दाहजनकत्वस्य गुणस्य तादात्म्येनापाततो विरोधभानं, विरहहेतुकत्वात्तु समाधानम्। अत्र गुणस्य द्रव्येण विरोधः।

(ड) क्रियायाः क्रियया सह विरोधमाह, नयनेति।—नयनयुगस्य आसेचनकम्—अतितृप्तिकरं, ("तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शने" इत्यमरः) मानसवृत्त्या—मनःकल्पनयाऽपि, दुष्प्रापं—लब्धुमशक्यं, मदिराक्ष्या इदं रूपं मे हृदयं मदयति—उल्लासयति, दर्शनेनेति भावः, दुनोति—तापयति च, अप्राप्त्या इति भावः। अत्र प्रहर्षजननक्रियया सह खेदजननक्रियाया आपाततो विरोधभानं, विरहहेतुकत्वात्तु समाधानम्। यथा वा,—"निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा कलाशेषा मूर्त्तिः शशिन इव नेत्रोत्सवकरी। अवस्थामापन्ना मदनदहनोद्दाहविधुरामियं नः कल्याणी! रमयति मनः कम्पयति च॥" अत्र रमयतीति कम्पयतीति क्रिययोर्युगपदेककारणजन्यत्वरूपो विरोधः। अवच्छेदकद्वयसत्त्वात् तत्परिहारः। क्रियायाः द्रव्येण विरोधो यथा,—"अयं वारामेको निलय इति रत्नाकर इति श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः। क एवं जानीते निजकरपुटीकोटरगतं क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः॥" अत्र वारांनिधिरूपस्य द्रव्यस्य पानं नितान्तमसम्भवि, तस्माद्विरोधः, मुनेस्तु सर्व्वं तत् सम्भवतीत्यविरोधः। "समदमतङ्गज-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"त्वद्वाजिराजि" इत्यादि, "वल्लभोत्सङ्ग" इत्यादिश्लोके चतुर्थपादे "मध्यन्दिनदिनाधिपः" इति पाठे द्रव्ययोर्विरोधः । अत्र "तव विरहे" इत्यादौ पवनादीनां बहुव्यक्तिवाचकत्वाज्जातिशब्दानां दावानलोषस्तहृदयभेदनसूर्य्यैर्जातिगुणक्रियाद्रव्यरूपैरन्योऽन्यं विरोधो मुखत आभासते । विरहहेतुकत्वात् समाधानम् । अत्र "अजस्य" इत्यादावजत्वादिगुणस्य जन्मग्रहणादिक्रियया विरोधः, भगवतः प्रभावस्यातिशयित्वात्तु समाधानम् । "त्वद्वाजि" इत्यादौ "हरोऽपि शिरसा गङ्गां न धत्ते" इति विरोधः । "त्वद्वाजि" इत्यादिकविप्रौढ़ोक्त्या तु समाधानम् । स्पष्टमन्यत् । विभावनायां कारणाभावेनोपनिबध्यमानत्वात् कार्य्यमेव बाध्यत्वेन प्रतीयते, विशेषोक्तौ च कार्य्याभावेन कारणमेव । इह तु अन्योऽन्यं द्वयोरपि बाध्यत्वमिति भेदः । (ढ)

---

मदजलनिस्यन्दतरङ्गिणीपरिष्वङ्गात् । चितितिलक ! त्वयि तटजुषि शङ्करचूड़ाऽऽपगाऽपि कालिन्दी ॥" अत्र द्रव्यस्य द्रव्येण विरोधः ।

(ढ) क्रियाया द्रव्येण सह विरोधमाह, तद्वाजीति ।—व्याख्यातं प्राक् । अत्र गङ्गाधरोऽपि गङ्गां न धारयतीति, गङ्गाधररूपद्रव्यं क्रियया अधारणरूपया विरुद्धमिवापाततः प्रतीयते, राजस्तुतिपरत्वात् तु समाधानम् । द्रव्यस्य द्रव्येण सह विरोधमाह, वल्लभेति ।—अत्र चन्द्रसूर्य्ययोः द्रव्ययोः तादात्म्येन विरोधभानम् । जातिशब्दानामित्ति ।—जातिः शब्दो येषां तथोक्तानामित्यर्थः, प्रतिपाद्यतया जातीनां पवनत्वादीनामिति शेषः ; यद्वा,—पवनादीनामिति धर्मपरो निर्देशः, पवनत्वादीनामिति तदर्थः । दवानलेति ।—दावानलत्वेत्यर्थः । मुखतः,—प्रथमतः । विरहहेतुकत्वात् इति ।—मलयमरुदादेर्विरहिणां सन्तापजनकत्वेन दावानलत्वाद्यारोपात् समावेश इति भावः । नन्वजत्वं जन्माभाव एव, कथमस्य गुणत्वम् ? इति चेत्, जातिक्रियाभिन्नानां विशेषणानामपि गुणत्वस्वीकारात् । विशेषोक्तौ चेति ।—कार्य्याभावेनोपनिबध्यमानत्वात् कारणमेव बाध्यत्वेन प्रतीयते इत्यन्वयः । इह त्विति ।—विरोधालङ्कारे त्वित्यर्थः । ननु "मलयमरुद्दवानल—" इत्यादौ रूपकमेवेति चेत्, न ; सहानवस्थाननियमरूपविरोधस्य पुरःस्फूर्त्तिकतया वैचित्र्याधायकत्वात् इति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिः ॥७४०॥ (थ)

यथा,—

"सा बाला वयमप्रगल्भमनसः, सा स्त्री वयं कातराः,
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् ।
साऽऽक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयम्,
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥" (त)

---

(थ) असङ्गतिमाह, कार्य्येति।—कार्य्यकारणयोः भिन्नदेशतायां—वैयधिकरण्ये, कार्य्यकारणयोः समदेशवर्त्तित्वं नियमः, तदन्यथात्वे इत्यर्थः, असङ्गतिः। प्रकाशकारोऽप्याह,—"भिन्नदेशतयाऽत्यन्तं कार्य्यकारणभूतयोः। युगपद्धर्म्मयोर्यत्र ख्यातिः सा स्यादसङ्गतिः ॥" इति।

(त) सेति।—नायिकामप्राप्य दुःखभाजः कस्यचित् विरहिणः सखायं प्रति उक्तिरियम्। सा—कान्ता इति यावत्, बाला—मुग्धा, वयम् अप्रगल्भमनसः,—कार्य्याकार्य्यावधारणाक्षमचेतसः; तस्याः बालात्वेन मदुपभोगरूपकार्य्यावधारणाक्षमत्वं युक्तं, मम तु तत्सम्भोगलालसत्वेऽपि तत्प्राप्त्युपायरूपकार्य्यावधारणाक्षमत्वमित्याश्चर्य्यम् इति भावः; सा स्त्री, वयं कातराः,—सभयाः, कामभयार्त्ता इत्यर्थः, स्त्रीणामेव कातरत्वं स्वभावः, न तु पुंसामिति भावः; सा पीनोन्नतिमत्—पीनमुन्नतञ्चेत्यर्थः, पयोधरयुगं धत्ते—धारयति, वयं सखेदाः,—श्रान्ताः, सा गुरुणा—दुर्भरेण, जघनस्थलेन आक्रान्ता—अभिभूता, वयं गन्तुं—चलितुं, पुरः पदं धर्त्तुमिति यावत्, न शक्ताः, कामार्त्ततया किमपि कर्त्तुं न समर्था इति भावः; अन्यजनाश्रितैः,—तत्कान्तारूपजनाश्रितैः, दोषैः स्मः,—(इदमव्ययं) वयम्, अपटवः,—इतिकर्त्तव्यमूढाः, जाताः इति अद्भुतम्—आश्चर्य्यम्। अत्र अप्रगल्भमनस्त्वादिकं कार्य्यं नायकनिष्ठं, कारणन्तु बालात्वादिकं नायिकानिष्ठमिति कार्य्यकारणयोर्भिन्नदेशत्वम्। शार्दूलविक्रीडितं वृत्तम्। अमरुशतकस्येदं पद्यम्। केचित्तु,—"कार्य्यकारणभावयोः धर्म्मयोः अत्यन्तं भिन्नदेशतया युगपदुत्पन्नत्वेन ख्यातिरसङ्गतिः। एकधर्म्मिण्यवच्छेदकभेदेन भिन्नदेशतावारणायात्यन्तमिति, तेन "दष्टो भुजङ्गेन पदेऽचिघूर्णना" इत्यत्र नातिव्याप्तिः, दंशनघूर्णनयोरेकस्मिन् शरीरे सङ्गतिसत्त्वात्; कालभेदेन तदुभयख्यातिवारणाय युगपदिति; तेन "क्रियाशरीरेऽत्र परत्र भोगः" इत्यत्र "नातिव्याप्तिः" इत्याहुः, तन्न; "दन्तक्षतं कपोले बध्वाः, वेदना सपत्नीनाम्" इत्यत्र

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अस्याश्चापवादकत्वादेकदेशस्थयोर्विरोधे विरोधालङ्कारः।(थ)

गुणौ क्रिये वा चेत् स्यातां विरुद्धे हेतुकार्य्ययोः।
यद्वाऽऽरब्धस्य वैफल्यमनर्थस्य च सम्भवः॥
विरूपयोः सङ्घटना या च तद्विषमं मतम्॥७४१॥ (द)

स्त्रीक्तोदाहरणे बोधकाभावेन कार्य्यकारणयोः युगपदुत्पन्नत्वख्यातिविरहात्; "सा स्त्री वयं कातराः" इत्यत्र स्त्रीत्वस्य कारणत्वस्य उत्पन्नत्वाभावादेव कार्य्योत्पत्तियुगपदुत्पन्नत्वख्यातिविरहात्; न च स्त्रीत्वस्योत्पन्नत्वमारोप्यम् इति वाच्यम्; तस्य वैचित्र्यानावहत्वेन तदङ्गीकारस्यान्याय्यत्वात्। "दष्टौ भुजङ्गेन" इत्यादौ युगपदुत्पन्नत्वख्यातिविरहादेवातिप्रसङ्गभङ्गेन तद्वारणार्थमुपात्तस्यात्यन्तपदस्य अनर्थकत्वाच्च; अस्मन्मते तु कार्य्यकारणयोर्वैयधिकरण्यस्यैव यत्र विच्छित्तिविशेषजनकत्वं, तत्रैव तस्यालङ्कारत्वस्वीकारः। "दष्टौ भुजङ्गेन" इत्यादौ कार्य्यकारणयोरवच्छेदकभेदसत्त्वेऽपि अधिकरणैकत्वेन वैयधिकरण्याभावात्, "क्रियाशरीरे" इत्यादौ वैयधिकरण्यस्य सत्त्वेऽपि तस्य विच्छित्तिविशेषानाधायकत्वादेव नातिप्रसङ्ग इति सङ्क्षेपः। उदाहरणान्तरं यथा,—"सन्न्यासमक्षत काञ्ची जहौ दुकूलं कलत्रमबलायाः। तत्याज रागमधरो मुक्तिमुरीचक्रिरे चिकुराः॥" अबलायाः काञ्ची सन्न्यासम् अक्षतदुकूलं कलत्रम्—अबलां, जहौ। स्पष्टमन्यत्। अत्र चिकुराणां मुक्त्यङ्गीकारे काञ्च्यादीनां सन्न्यासाद्यङ्गीकारः, इति स्फुटं वैयधिकरण्येन असङ्गतिः। "वर्षासु जाता नवयौवनश्रीराशावधूः प्रौढपयोधराऽभूत्। पुष्पोद्गमोऽजायत केतकीनां बभूवुरस्पृष्टतमास्तटिन्यः॥" अत्रेयं मालारूपा। "अजस्रमारोहति दूरदीर्घां सङ्कल्पसोपानततिं तदीयाम्। श्वासान् स वर्षत्यधिकं पुनर्यद् ध्यानात्तव त्वन्मयतामवाप्य॥" अत्र कैस्या सोपानारोहणं, नले च श्वास इति वैयधिकरण्यम्।

(थ) ननु कार्य्यकारणयोः सहानवस्थानलक्षणो विरोधोऽत्रास्ति, तस्यैवात्रालङ्कारत्वमास्तां, किमधिककल्पनया इत्यत आह, अस्याश्च इति।—अस्याः,—कार्य्यकारणवैयधिकरण्यरूपाया असङ्गतेः, अपवादत्वात्—विलक्षणवैचित्र्याधायकत्वेन विशेषत्वात्, एकदेशस्थयोः,—समानाधिकरणयोः, विरोधे, विरोधालङ्कारः,—विरोधालङ्कारस्य विषय इत्यर्थः, भिन्नदेशयोस्तथात्वे असङ्गतिरिति भावः।

(द) विषममाह, गुणाविति।—हेतुकार्य्ययोः विरुद्धौ गुणौ, विरुद्धे क्रिये वा चेत् स्यातां, यद्वा,—यदि वा, आरब्धस्य—प्रक्रान्तस्य कर्म्मणः, वैफल्यं—निष्फलत्वम्,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्रमेण यथा,—

"सद्यः करस्पर्शमवाप्य चित्रं
रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु-
यशस्त्रिलोकाभरणं प्रसूते ॥" (ध)

अत्र कारणरूपासिलतायाः "कारणगुणा हि कार्य्यगुणानारभन्ते" इति स्थितेर्विरुद्धा शुक्लयशस उत्पत्तिः । (न)

"आनन्दममन्दमिमं कुवलयदललोचने ! ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥" (प)

अत्रानन्दजनकस्त्रीरूपकारणात् तापजनकविरहोत्पत्तिः ।

---

अभिमतफलानवाप्तिः इत्यर्थः, अनर्थस्य—अनिष्टफलस्य, च सम्भवः, या च विरूपयोः,—विरुद्धयोः, एकत्र वस्तुन्यत्यन्तमसम्भवतोः इत्यर्थः, सङ्घटना—सम्मेलनं, तत् विषमं मतम् । अत एवालङ्कारकौस्तुभकृताऽप्युक्तम् ;—"सम्बन्धानुपपत्तौ इष्टार्थानाप्त्यनिष्टसम्प्राप्तौ । जन्यजनकोभयगुणक्रियाविरोधे च विषमः स्यात् ॥" इति ।

(ध) कार्य्यकारणयोर्गुणविरोधमाह, सद्य इति ।—यस्य तमालनीला कृपाणलेखा—खड्गयष्टिरित्यर्थः, रणे रणे—प्रतिसङ्ग्रामं, करस्पर्शम् अवाप्य शरदिन्दुः,—शरच्चन्द्रः, तद्वत् पाण्डु—शुभ्रं, त्रिलोकाभरणं—सर्व्वगामित्वेन त्रिभुवनाद्दतमिति भावः, [ "त्रिलोकाभरणम्" इति त्वसाधु ] यशः सद्यः प्रसूते—जनयति, चित्रम्—आश्चर्य्यम्, एतदिति शेषः । उपजातिः वृत्तम् । यथा वा,—"न खलु न खलु बाणः पातनीयोऽयमस्मिन्मृदुनि मृगशरीरे तूलराशाविवाग्निः । क्व बत हरिणकानां जीवितञ्चातिलोलं क्व च निशितनिपाताः वज्रसाराः शरास्ते ॥" इति ।

(न) अत्रेति ।—अत्र कारणरूपासिलतायाः,—हेतोरसिलताया इत्यर्थः । कारणगुणा इति ।—यद्यप्यत्रयविरूपकार्य्यगुणक्रिययोः एकावयवरूपकारणगुणक्रियाजन्यत्वनियमः, तथापि तत्र तथा दर्शनादन्यत्रापि तथात्वं कविसृष्टौ कल्प्यते इति नानुपपत्तिः इति भावः । कारणविरुद्धो गुणः,—कार्य्यस्य यशसः शुक्लता, कार्य्यस्य च शुक्लयशसः विरुद्धो गुणः,—कारणस्य कृपाणस्य तमालनीलत्वम् ।

(प) कार्य्यकारणयोः क्रियाविरोधमाह, आनन्दमिति ।—नायिकां प्रति नायकस्योक्तिरियम् । हे कुवलयदलं—नीलोत्पलपत्रं, तद्वत् लोचनं यस्याः तत्सम्बुद्धौ ;

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया।
धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः॥" (फ)

अत्र केवलं काङ्क्षितधनलाभो नाभूत्, प्रत्युत क्षारवारिभिर्वदनपूरणम्।

"क्व वनं तरुवल्कभूषणं नृपलक्ष्मीः क्व महेन्द्रवन्दिता।
नियतं प्रतिकूलवर्त्तिनो बत! धातुश्चरितं सुदुःसहम्॥" (ब)

अत्र वनराजश्रियोर्विरूपयोः सङ्घटना। इदं मम।

---

त्वम् इमम् अमन्दं—महान्तम्, आनन्दं ददासि, किन्तु त्वयैव जनितः,—उत्पादितः, विरहः मे—मम, शरीरं तापयतितराम्—अतिशयेन तापयति। अत्र कारणस्य नायिकायाः क्रिया आनन्ददानं, नायिकाकार्य्यस्य विरहस्य क्रिया शरीरतापनं तद्विरुद्धमिति हेतोः कार्य्यस्य विरुद्धे क्रिये। यद्यप्यानन्दतापौ गुणौ तथाऽप्यत्र द्वयोर्धात्वर्थघटकत्वेन क्रियात्वेनैव व्यवहारः इति ज्ञेयम्। आर्य्या वृत्तम्।

(फ) तृतीयं प्रकारमाह, अयमिति।—अयम् अम्भोधिः,—समुद्रः, रत्नानाम् आकर इति हेतोः धनाशया—धनप्राप्तिलालसया, असेवि—सेवितः, मयेति शेषः; किन्तु धनं दूरे अस्तु, (प्रत्युत) वदनं—मुखं, क्षारवारिभिः,—लवणजलैः, अपूरि—पूरितम्। अत्र समुद्रसेवया धनप्राप्तिरूपफलस्यानवाप्तिः, क्षारवारिभिः वदनपूरणस्य अनिष्टस्य प्राप्तिः, सेव्यस्यानभीष्टसम्पादकत्वातिशयं स्वस्य दुरदृष्टातिशयं वा व्यञ्जयति। यथा वा,—"अयं दुग्धाम्भोधेः पतिरिति गवां पालक इति, श्रितोऽस्माभिर्दुग्धोपनयनधिया गोपतनयः। अनेन प्रत्यूहो व्यरचि स तथा येन जननीस्तनादप्यस्माकं निजमपि पयो दुर्लभमभूत्॥" इति।

(ब) चतुर्थं प्रकारमाह, क्वेति।—तरूणां वल्कानि—त्वचः, भूषणानि यत्र तादृशं, वनं क्व? महेन्द्रवन्दिता—देवेन्द्रादृता, नृपलक्ष्मीः,—राजश्रीश्च, क्व? [क्वद्वयं महदन्तरमनयोः सूचयति] बत—खेदे, प्रतिकूलवर्त्तिनः,—विरुद्धस्य, धातुः,—दैवस्य, चरितं नियतं—निश्चितं, सुदुःसहम्। अत्रैकस्मिन् वस्तुनि श्रीरामे अत्यन्तमसम्भवतोर्वनवासराजश्रीलाभयोः मेलनं, वस्तुतः तदानीं श्रीरामस्य राजश्रीलाभ एव नासीदिति न विरुद्धयोः सङ्घटनं, किन्तु दशरथप्रयत्नस्य श्रीरामस्य राज्यलाभरूपफलानवाप्तिः, प्रत्युतानिष्टस्य श्रीरामवनवासस्य सम्भव इति तृतीयप्रकार एवेदं पर्य्यवस्यति; एवञ्च "शरीरादपि मृद्वङ्गी केयमायतलोचना। अयं क्व च कुकूलाग्निकर्कशो



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा वा,—

"विपुलेन सागरशयस्य कुक्षिणा
भुवनानि यस्य पपिरे युगक्षये।
मदविभ्रमासकलया पपे पुनः
स पुरस्त्रियैकतमयैकया दृशा॥" (भ)

**समं स्यादानुरूप्येण श्लाघा योग्यस्य वस्तुनः॥७४२॥(म)**

---

मदनानलः॥" इत्युदाहरणमस्य वेदितव्यम्। अत्राङ्गमार्दवमदनानलसहनयोरेवात्र नायिकायां मेलनम् इति ज्ञेयम्। यथा वा,—"क्व कला हृदयप्रमाथिनी, क्व च ते विश्वसनीयमायुधम्। मृदुतीक्ष्णतरं यदुच्यते तदिदं मन्मथ! दृश्यते त्वयि॥" अत्र कोमलायुधोत्कटव्ययोः कार्य्यकारणभावसम्बन्धोऽनुपपन्नवद्भासते।

(भ) विपुलेनेत्याद्युक्ता इत्यादावपि विषमत्वं यथायोगमनुगन्तव्यम् इति काव्यप्रकाशोक्तं चतुर्थप्रकारे एव सङ्गमयति, विपुलेनेति।—युगक्षये—कल्पान्ते, सागरशयस्य—समुद्रनिलयस्य, यस्य—श्रीकृष्णस्य, विपुलेन कुक्षिणा—उदरेण, भुवनानि—जगन्ति, पपिरे—पीतानि, सः,—श्रीकृष्णः, एकतमया पुरस्त्रिया—नगरवासिन्या कामिन्या, मदविभ्रमेण असकलया—असम्पूर्णया, कटाक्षरूपयेत्यर्थः, एकया दृशा—नेत्रेण, पुनः पपे—पीतः, कटाक्षेण सर्व्वाङ्गीणं दृष्टः इत्यर्थः। मञ्जुभाषिणी वृत्तं,—"सजसा जगौ च यदि मञ्जुभाषिणी" इति लक्षणात्। शिशुपालवधस्य पद्यमिदम्। अत्र एकत्र सर्व्वजगत्पायित्वम् एकनार्य्यैकनेत्रपीतत्वञ्च विरुद्धं सङ्घटितम्। तथा हि,—यत्र यदेकदेशेन कुक्षिणा जगत् पीयते, स पुनः चक्षुरेकदेशेन स्त्रिया पीयते इति विरूपयोः मेलनम्। चतुर्थः प्रकारः क्रियाप्रयोगे एव सम्भवति इति वदन्तः केचिदेतदवयव्यवयवयोः कार्य्यकारणयोः क्रियाविरोधोदाहरणं वदन्ति; तथा हि,—कुक्षिरवयवः कारणं तत्कर्तृका भुवनपानक्रिया कुक्षिकार्य्यस्यावयविनः सागरशयस्य कर्म्मतासम्बन्धेन पानक्रियया विरुध्यते, भुवनपातृकुक्षिमतः कटाक्षपेयत्वस्य विरुद्धतया भानादिति, तन्न; प्रमाणान्तरवेद्यस्य हेतुहेतुमद्भावस्यात्र बोधाभावेनाप्रत्ययात्, धारणदर्शनरूपयोः पानयोः स्वतो विरोधाभावात् उपदर्शितविरोधस्य क्रियागतत्वाभावेन प्रकृतानुपयोगित्वाच्च इति ज्ञेयम्।

(म) सममाह, सममिति।—आनुरूप्येण—योग्यकर्म्मणा, योग्यस्य वस्तुनः, विषयस्य, श्लाघा—प्रशंसा, समं स्यात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—

"शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्याऽवतीर्णा।
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः॥" (य)

**विचित्रं तद्विरुद्धस्य कृतिरिष्टफलाय चेत् ॥७४३॥(र)**

यथा,—

"प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान्।
दुःखीयति सुखहेतोः को मूढ़ः सेवकादन्यः ?॥" (ल)

(य) शशिनमिति।—इन्दुमत्या अजे स्वयंवृते पौराणामुक्तिः। इयं—इन्दुमती कौमुदी, अनुरूपं—स्वयोग्यम् अजमिति भावः, मेघमुक्तं—मेघावरणशून्यं, शशिनम् उपगता, एवमग्रेऽपि ; जह्नुकन्या—जाह्नवी, अनुरूपं—स्वसदृशं, जलनिधिम् अवतीर्णा—प्रविष्टा, इति—एवं, समगुणयोः,—तुल्यगुणयोः, अजेन्दुमत्योरिति शेषः, योगेन—सम्मेलनेन, प्रीतिः येषां तथाभूताः, पौराः,—पुरवासिनः, तत्र—स्वयंवरक्षेत्रे, नृपाणाम्—इन्दुमतीलिप्सया समागतानामजेतरराजानां, श्रवणकटु—स्वमनोरथप्रतिकूलतया दुःश्रवम्, असह्यश्रवणमिति यावत्, एकवाक्यं विवव्रुः,—कथयामासुः। रघुवंशस्येदं पद्यम्। मालिनी वृत्तम्। यथा वा,—स्त्रीपुंसव्यतिषञ्जनं जनयतः पत्युः प्रजानामभूदभ्यासः परिचायकः किमनयोर्दाम्पत्यसम्पत्तये। आसंसारपुरन्ध्रिपूरुषमिथःप्रेमार्पणक्रीड़याऽप्येतद्दम्पतिगाढ़रागरचनात् प्राकर्षि चेतो भुवः॥" अत्रान्यस्त्रीपुरुषसम्बन्धजननाभ्यासस्य भैमीनलसम्बन्धफलकोत्या तत्सम्बन्धस्यानुरूप्यं लभ्यते। यथा वा,—"धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी, रूपे देवोऽप्ययमनुपमो दत्तपादः स्मरस्य। जातं दैवात् सदृशमनयोः सङ्गतं यत् तदेतत् शृङ्गारस्योपनतमधुना राज्यमेकाधिपत्यम्॥" इति।

(र) विचित्रमाह, विचित्रमिति।—तद्विरुद्धस्य—इष्टविपरीतस्य, कृतिः,—करणम्, इष्टफलाय—अभिमतफलसाधनाय, चेत् भवति, तदा विचित्रम्।

(ल) प्रणमतीति।—सेवकात्—भृत्यात्, अन्यः को मूढ़ः,—अविवेकी ? उन्नतिहेतोः,—उत्कर्षनिमित्तं, प्रणमति—अपकृष्टो भवति, जीवितहेतोः,—प्राणरक्षानिमित्तं, प्राणान् विमुञ्चति—त्यजति, तथा सुखहेतोः,—सुखाशया, दुःखीयति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आश्रयाश्रयिणोरेकस्याधिक्येऽधिकमुच्यते ॥७४४॥ (ब)

आश्रयाधिक्ये यथा,—

"किमधिकमस्य ब्रूमो महिमानं वारिधेर्हरिर्यत्र ।
अज्ञात एव शेते कुक्षौ निक्षिप्य भुवनानि ॥" (भ)

आश्रिताधिक्ये यथा,—

"युगान्तकालप्रतिसंहृतात्मनो
जगन्ति यस्यां सविकासमासत ।
तनौ ममुस्तत्र न कैटभद्विष-
स्तपोधनाभ्यागमसम्भवा मुदः ॥" (म)

---

—दुःखमिच्छति ? न कोऽपि सेवकादन्योऽधिको मूढ़ इति भावः। अत्रार्या छन्दः। इह उन्नतिरूपस्य नतिविरुद्धस्य फलस्य लाभाय उन्नतिविरुद्धस्य प्रणतिरूपकार्यस्य करणम्। एवमन्यत्रापि। यथा—'मलिनयितुं खलवदनं विमलयति जगन्ति देव! कीर्त्तिस्ते। मित्राह्लादं कर्त्तुं मित्राय द्रुह्यति प्रतापोऽपि ॥" इति।

(ब) अधिकमाह, आश्रयेति। आश्रयाश्रयिणोः,—आधाराधेययोः, एकस्य—आश्रयस्य आश्रयिणो वा, आधिक्ये—महत्त्वातिशये, प्रतिपाद्ये इति शेषः, अधिकम् उच्यते।

(भ) आश्रयाधिक्ये अधिकमाह, किमधिकमिति।—अस्य वारिधेः,—समुद्रस्य, महिमानं—महत्त्वम्, अधिकं किं ब्रूमः ?—कथयामः ? यत्र—वारिधौ, हरिः,—नारायणः, कुक्षौ—जठरे, भुवनानि निक्षिप्य अज्ञात एव—कुत्रेति केनाऽप्यलक्ष्यमाण एव, एकदेशे एव शयनात् समुद्रस्थैः सर्वैः सत्त्वैः न ज्ञायते इत्यर्थः, शेते। अत्र "कुक्षौ निक्षिप्य" इत्यनेन हरेर्महत्त्वमवगम्यते, समुद्रैकदेशे तच्छयनेनाश्रयस्य समुद्रस्यातिशयमाहात्म्यं व्यज्यते। श्लोकेऽस्मिन् समस्तभुवनानां महाऽऽधारस्यापि भगवतः क्षीरोदशायित्वेनाधेयत्वं, क्षीरोदस्य चाधारत्वं, तत्रापि अविगणितभावेन स्थितत्वात् आधेयस्य आधाराधिक्यवर्णनमिति लक्षणसमन्वयः। अत्रार्या छन्दः।

(म) आश्रिताधिक्ये अधिकमाह, युगान्तेति।—नारदागमे श्रीकृष्णस्य हर्षातिशयवर्णनम्। युगान्तकाले—कल्पान्तसमये, प्रलयकाले इति यावत्, प्रतिसंहृतः,—सङ्कुचितः, आत्मा येन तादृशस्य, यद्वा,—प्रतिसंहृताः,—स्वोदरं प्रवेशिताः, आत्मानः,—समस्तप्राणिनो येन तथाभूतस्य, कैटभद्विषः,—श्रीकृष्णस्य, यस्यां तनौ—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## अन्योऽन्यमुभयोरेकक्रियायाः करणं मिथः॥७४५॥(स)

शरीरे, जगन्ति सविकासम—असङ्कीर्णम्, अयन्त्रणमिति यावत, यथा तथा आसत —तिष्ठन्ति स्म, [ आस् उपवेशने इत्यस्य लङि प्रथमपुरुषस्य बहुवचनमिदम् ] तत्र —तस्यां, तनौ—भगवती देहे, तपोधनस्य—नारदस्य, अभ्यागमेन—समागमेन, सम्भवाः,—समुत्पन्नाः, मुदः,—हर्षाः, न ममुः,—न मान्ति स्म, नावकाशं प्राप्य तस्थुः, स्थातुमक्षमाः सन्तो वहिर्निःसेतुरिति भावः। अत्र "जगन्ति" इत्यादिना श्रीकृष्णतनोराश्रयस्याधिक्यमुक्तं, तत्रावकाशालाभात् आश्रितानां मुदामतिमहत्त्वं व्यज्यते इति। अत्र समस्तजगदाधाररूपाया भगवत्तन्वाः अपेक्षया नारदमुनिसमागमजन्यामोदरूपस्य आधेयस्य "न ममुः" इत्यनेन आधिक्योक्तेरधिकं नामालङ्कारः। मल्लिनाथस्तु,—"चतुर्दशभुवनभरणपर्य्याप्ते वपुषि अन्तर्न मान्तीति कविप्रौढ़ोक्तिसिद्धातिशयेन स्वतःसिद्धस्याभेदेनाध्यवसितातिशयोक्तिः, सा च मुदामन्तःसम्बन्धेऽप्यसम्बन्धोक्त्या सम्बन्धासम्बन्धरूपा" इति अतिशयोक्त्यलङ्कारं समर्थितवान्; वस्तुतस्तु कविप्रौढ़ोक्तिसिद्धातिशयेनाध्यवसितत्वेन आमोदरूपस्याधेयस्य आधिक्यसिद्धिरिति अतिशयोक्तिमूलोऽयमधिकालङ्कारः इति सर्वं समञ्जसम्। वंशस्थविलं वृत्तम्। शिशुपालवधस्येदं पद्यम्।

(स) अन्योऽन्यमाह, अन्योऽन्यमिति।—अत्र चेदित्यनुषज्यते; उभयोः,—एकजातीययोः क्रिययोः, ("दुदोह गां स यज्ञाय शस्याय मघवा दिवम्" इत्यादिव्यावृत्तये "उभयोः" इति। अत्र स्वं स्वं दोहनं प्रत्येव स्वं स्वं कारणं, न तु परस्परस्य दोहनं प्रति परस्परं कारणम्) मिथः,—परस्परम्, एकक्रियायाः चेत् करणं तदा अन्योऽन्यम—अन्योऽन्यंनामालङ्कारः, भवतीति शेषः। क्रियापदं गुणस्याप्युपलक्षणम्; तेन "निशया रुचिरश्चन्द्रश्चन्द्रेण रुचिरा निशा" इत्यत्राप्ययमलङ्कारः। अत्र कारणयोः क्रिययोश्च शब्दैक्यं वैचित्र्यपरिपोषकमेव, न तु नियामकम्; तेन "नलिन भायाः शशिना निशेव त्वया स भाया निशया शशीव" इत्यादौ शब्दभेदेऽप्ययमलङ्कारः। अत्रेदं बोध्यम्;—यद्यपि एकस्याः क्रियायाः परस्परमेककरणत्वे एव एतदनुज्ञातं, तथाऽपि एकया क्रियया परस्परमुत्कर्षाधाने एतस्य सद्भावः; अन्यथा तावन्मात्रत्वेऽस्य अलङ्कारव्यपदेशार्हत्वस्यैवासम्भवः। अत एवोक्तमलङ्कारकौस्तुभकृता,—"अन्योऽन्यं वस्तूनां परस्परोत्कर्षहेतुत्वे" इति। केचित्तु,—यदा तु परस्परन्विता काचिदेकैव क्रिया अन्येनाप्यन्वेति, तदाप्ययमेवालङ्कारः इति सिद्धान्तयन्ति, उदाहरन्ति च,—"शशिना च निशा निशया च शशी, शशिना निशया च विभाति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—"त्वया सा शोभते तन्वी तया त्वमपि शोभसे ।
रजन्या शोभते चन्द्रश्चन्द्रेणापि निशीथिनी ॥" (छ)

**यदाधेयमनाधारमेकञ्चानेकगोचरम् ।**
**किञ्चित् प्रकुर्व्वतः कार्य्यमशक्यस्येतरस्य वा ॥**
**कार्य्यस्य करणं दैवाद्विशेषस्त्रिविधस्ततः ॥७४६॥ (ज)**

क्रमेण यथा,—

"दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ? ॥" (झ)

नभः । कविना च विभुः विभुना च कविः, कविना विभुना च विभाति सभा ॥" इत्यादि ।

(छ) त्वयेति ।—सा तन्वी—कृशाङ्गी, त्वया शोभते, त्वमपि तया—कृशाङ्ग्या, शोभसे ; चन्द्रः रजन्या शोभते, निशीथिनी—रजनी, अपि चन्द्रेण, शोभते इति शेषः । अत्र परस्परशोभयोः परस्परकारणम् । यथा वा,—"कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य । अन्योऽन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः ॥" इति ।

(ज) विशेषमाह, यदिति ।—यत् अनाधारम्—आधारवर्जितम्, आधेयं, यच्च एकं, वस्तु इति शेषः, अनेकगोचरं—बहुस्थानवर्त्ति, (पर्य्यायालङ्कारलक्षणे "क्रमात्" इत्यस्योपादानादत्र परिशेषात् युगपदित्यस्य लाभो ज्ञेयः) अथवा, किञ्चित्—किमपि, कार्य्यं प्रकुर्व्वतः, जनस्य इति शेषः, अशक्यस्य इतरस्य—शक्यस्य, वा कार्य्यस्य—अप्रक्रान्तस्य इति भावः, दैवात्—प्रतिसन्धानं विना, करणम्—उत्पत्तिः, विशेषः । स च ततः,—तस्मात्, उक्तनयादित्यर्थः, त्रिविधः ; तथा च,—प्रसिद्धमाधारं विनाऽऽधेयस्य सत्त्वे आद्यो विशेषः, एकस्य परिमितस्य वस्तुनः युगपत् अनेकत्र सत्त्वे द्वितीयो विशेषः, एकस्मिन् कार्य्ये आरब्धे सुकरस्य दुष्करस्य वा अन्यस्य कार्य्यस्य करणे तृतीयो विशेषः इति निष्कृष्टोऽर्थः ।

(झ) दिवमिति ।—दिवं—स्वर्गम्, उपयातानामपि—मृतानामपीत्यर्थः, येषां—कवीनाम्, अनल्पाः,—बहवः, गुणानां—माधुर्य्यादीनां, गणा यासु ताः, गिरः,—वाचः, आकल्पम्—आप्रलयं, जगन्ति रमयन्ति—तोषयन्ति, ते कवयः कथमिव—कथमिति भावः, न वन्द्याः,—नार्च्चनीयाः ? अपि तु वन्द्या एवेत्यर्थः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"कानने सरिदुद्देशे गिरीणामपि कन्दरे।
पश्यन्त्यन्तकसङ्काशं त्वामेकं रिपवः पुरः॥" (ग)

"गृहिणी सचिवः सखी मिथः
प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना
हरता त्वां वद किं न मे हृतम्?॥" (घ)

अत्र निर्माहत्वेन प्रसिद्धाधारान् कवीन् विनाऽपि काव्यरूपाणां गिरां स्थितिः इति कवीनां स्वर्गगतत्वात् तेषां वाक्यानां भूमिनिष्ठत्वमनाधारमेव; तस्मादाद्यप्रभेदो विशेषः। अत्रार्या छन्दः। इदं रुद्रटस्य। यथा वा,—"रूपमक्ष्णोः स्थितं स्पर्शोऽङ्गेषु जल्पितं कर्णे। हृदयं हृदये निहितं वियोजितं किमत्र दैवेन॥" अत्र नायिकानिष्ठरूपस्य नायिका आधारः प्रसिद्धः, तत्समवायिकारणत्वात्; तां विनाऽपि अक्ष्णोस्तदवस्थानमुक्तम्; तज्ज्ञानोपनीतविषयत्वाभिप्रायेण इत्युपपत्तिः।

(ग) कानने इति।—राजस्तुतिरियम्। रिपवः,—शत्रवः, एकं त्वां कानने —वने, सरितां—नदीनाम्, उद्देशे—अवकाशे, गिरीणां—पर्वतानां, कन्दरे— गुहायामपि, पुरः,—अग्रतः, अन्तकसङ्काशं—यमसदृशं, पश्यन्ति। अत्र भावनातिशयेनैकेनैव स्वभावेन कानन-नदी-पर्वत-कन्दरादिषु अनेकेषु युष्मत्पदार्थस्य एकस्य राज्ञः युगपत् सत्त्वोपलब्धेः द्वितीयो विशेषः। यथा वा,—"प्रासादे सा, पथि पथि च सा पृष्ठतः सा पुरः सा, पर्य्यङ्के सा दिशि दिशि च सा तद्वियोगातुरस्य। हंहो चेतः प्रकृतिरपरा नास्ति ते काऽपि सा सा, सा सा सा सा जगति सकले कोऽयमद्वैतवादः॥" इति।

(घ) गृहिणीति।—इन्दुमत्या मरणे तत्पतेः अजस्य विलापोऽयम्। हे प्रिये! इत्यध्याहार्य्यम्; त्वां हरता करुणाविमुखेन—निर्द्दयेन, मृत्युना मे किं न हृतम्? वद, तथा हि,—त्वं मे गृहिणीति गृहिणी हृता, त्वं मे सचिवः,—इष्टोपदेशकत्वात् मन्त्रीति मन्त्री हृतः, त्वं मे मिथः,—रहसि, सखी—समीहितसाधकत्वात् विजनसहचरीति सखी हृता; त्वं मे ललिते—मनोहरे, कलाविधौ—नृत्यगीताद्यनुष्ठाने, सुरते वा, प्रियशिष्या इति साऽपि हृता, तस्मात् त्वां हरता गृहिण्यादिकं सर्व्वमेव मे हृतमिति भावः। अत्र इन्दुमतीहरणरूपमेकं कार्य्यं प्रकुर्व्वतः विधेः गृहिण्यादिकस्य अपरस्य कार्य्यस्य दैवात् करणम्। नन्विन्दुमतीहरणमेव सचिवादिहरणं, तच्चैकमेव

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

व्याघातः स तु केनापि वस्तु येन यथाकृतम् ।
तेनैव चेदुपायेन कुरुतेऽन्यस्तदन्यथा ॥ ७४७ ॥ (ङ)

यथा "दृशा दग्धं मनसिजम्" इत्यादि । (च)

सौकर्य्येण च कार्य्यस्य विरुद्धं क्रियते यदि ॥७४८॥(छ)

व्याघात इत्येव ।

"इहैव त्वं तिष्ठ द्रुतमहमहोभिः कतिपयैः
समागन्ता कान्ते ! मृदुरसि न चायाससहना ।
मृदुत्वं मे हेतुः सुभग ! भवता गन्तुमधिकं
न मृद्वी सोढ़ा यद्विरहकृतमायासमसमम् ॥" (ज)

---

कार्य्यं, कथमत्र कार्य्यान्तरोत्पत्तिः ? इति चेत्, सचिवादिहरणे तात्पर्य्यात् इति ज्ञेयम् । सुन्दरी वृत्तम्,—"अयुजोर्यदि सौ जगौ युजोः सभरालौ यदि सुन्दरी तदा" इति लक्षणात् । इदं रघुवंशस्य पद्यम् ।

(ङ) व्याघातमाह, व्याघात इति ।—येन केनापि यथा—यत्प्रकारं, कृतं वस्तु अन्यः,—अन्यो जनः इत्यर्थः, तेनैव उपायेन चेत्—यदि, तदन्यथा—तस्मादन्यप्रकारं, कुरुते,तदा सःव्याघातः,—निष्पादितवस्तुव्याहतिहेतुत्वात् व्याघातनामालङ्कारइत्यर्थः।

(च) दृशेति ।—६६६ पृष्ठे व्याख्यातं प्राक् । अत्र हरेण दृगुपायेन भस्मीकृतः मदनः नारीभिः तेनैव नेत्ररूपोपायेन सजीवः कृतः । अत्र केचिदाहुः,—"व्यतिरेक एवायमलङ्कारः ; उक्तोदाहरणे जयिनीरित्यनेन तस्यैव प्रकाशनात् । न च व्याघातोऽप्यत्र व्यतिरेकोत्थापकत्वेन स्थित इति वाच्यम् ; तथाप्यलङ्कारान्तरत्वसिद्धेः विविक्तविषयाभावादिति दिक् ; तदसत्, सादृश्यविवक्षायामेव व्यतिरेकः इत्यसकृत् व्यवस्थापितत्वात् ; अत्र च धर्मान्तरेणापि शिवनायिकयोः सादृश्यानभिमतेः स्पष्टत्वात्" इति कौस्तुभाशयः ।

(छ) प्रकारान्तरेण व्याघातमाह, सौकर्य्येणेति ।—सौकर्य्येण—सुकरत्वेन, यदि कार्य्यस्य विरुद्धं क्रियते—कथ्यते इत्याशयः, तदापि व्याघातः स्यादिति शेषः ; केनापि येनोपायेन यत्कार्य्यमुच्यते, तदन्येन तेनैवोपायेन सौकर्य्येण तद्विरुद्धं कार्य्यं यद्युच्यते तदा व्याघातः इति तात्पर्य्यार्थः ।

(ज) व्याघातमुदाहरति, इहेति ।—प्रवासगमनकाले दम्पत्योरुक्तिप्रत्युक्ती । हे

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र नायकेन नायिकाया मृदुत्वं सहगमनाभावहेतुत्वेन उक्तम्, नायिकया च प्रत्युत सहगमने ततोऽपि सौकर्य्येण हेतुतयोपन्यस्तम्।

परं परं प्रति यदा पूर्व्वपूर्व्वस्य हेतुता।
तदा कारणमाला स्यात्॥ ७४९॥ (झ)

यथा,—

"श्रुतं कृतधियां सङ्गाज्जायते विनयः श्रुतात्।
लोकानुरागो विनयान्न किं लोकानुरागतः?॥" (ञ)

---

कान्ते! त्वम् इहैव—अत्र गृहे एव, तिष्ठ, अहं कतिपयैरेव—स्वल्पैरेवेति यावत्, अहोभिः समागन्ता—आगमिष्यामीत्यर्थः, (त्वं) मृदुः,—कोमलाङ्गी, असि, आयाससहना—क्लेशक्षमा, न च, येन मया सह गमिष्यसीति भावः; (इति उक्तिः) हे सुभग! मे—मम, मृदुत्वं—कोमलत्वं, भवता सह गन्तुम् अधिकं हेतुः, यद्वा,—अधिकं मृदुत्वं भवता सह गन्तुं हेतुः, यत्—यस्मात्, मृद्वी अहं विरहकृतम् असमं—निरुपमम्, आयासं न सोढ़ा—न सहिष्ये। शिखरिणी वृत्तम्। यथा वा,—"अम्भोधीनां तमालप्रभवकिसलयश्यामवेलावनानाम् आ पारेभ्यश्चतुर्णां चटुलतिमिकुलक्षोभितान्तर्जलानाम्। मालेवाम्ला सपुष्पा नतनृपतिशतैरुह्यते या शिरोभिः सा मय्येव स्खलन्ती कथयति विनयालङ्कृतिस्ते प्रभुत्वम्॥" अत्र चाणक्ये चन्द्रगुप्तेनासक्तिव्यञ्जकतया स्वाज्ञाभङ्गो दीषत्वेन प्रागुक्तः, स एवात्र चाणक्येन विनयव्यञ्जकतया गुणत्वेनोक्तः इति ज्ञेयम्।

(झ) कारणमालामाह, परमिति।—यदा पूर्व्वपूर्व्वस्य, कार्य्यस्येति शेषः, परं परं प्रति हेतुता, तदा कारणमाला स्यात्। कार्य्याणामपि माला इह वर्त्तते एव, कथं न कार्य्यमालेत्याख्यानम्? अत्रोच्यते,—"विवक्षापूर्व्विका हि शब्दार्थप्रतिपत्तिः" इति नियमेन कारणगुणवर्णनस्यैव कवेरभीष्टतया कारणमालेत्याख्यानमेव सङ्गतम् इति ज्ञेयम्।

(ञ) श्रुतमिति।—कृतधियां—शिक्षितमतीनां, पण्डितानामिति यावत्, सङ्गात्—संसर्गात्, श्रुतं—शास्त्रज्ञानम्, अध्ययनमित्यर्थः, जायते; श्रुतात् विनयः,—शिष्टाचारः, जायते इत्यनुषङ्गः, विनयात् लोकानुरागः,—लोकप्रियता, जायते इत्यत्रापि अनुवर्त्तते, लोकानुरागतः किं न जायते? अत्र परं परं विनयादिकं प्रति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तन्मालादीपकं पुनः ।

धर्म्मिणामेकधर्म्मेण सम्बन्धो यद् यथोत्तरम् ॥७५०॥(ट)

यथा,—

"त्वयि सङ्गरसम्प्राप्ते धनुषाऽऽसादिताः शराः ।
शरैररिशिरस्तेन भूस्तया त्वं त्वया यशः ॥" (ठ)

अत्रासादनक्रिया धर्म्मः ।

पूर्व्वपूर्व्वस्य श्रुतादेः हेतुत्वम् । यथा वा,—"विद्या ददाति विनयं विनयाद् याति पात्रताम् । पात्रत्वाद्धनमाप्नोति धनाद्धर्म्मं ततः सुखम् ॥" यथा वा,—"दारिद्र्याद्ध्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते । निर्विण्णः शुचमेति शोकविहतो बुद्ध्या परित्यज्यते निर्बुद्धिः क्षयमेत्यहो ! निधनता सर्व्वापदामास्पदम् ॥" अत्र दारिद्र्यस्य लज्जायां, तस्याः तेजोनाशे, तस्य च परिभवे हेतुत्वमिति रीत्या मालात्वमेव । यत्रोत्तरोत्तरस्य पूर्व्वं पूर्व्वं प्रति हेतुत्वमुच्यते, तत्रापीयमिति कौस्तुभकाराः ।

(ट) मालादीपकमाह, तदिति ।—धर्म्मिणां, बहूनामिति भावः, यथोत्तरम्—उत्तरोत्तरं यत् एकधर्म्मेण सम्बन्धः, तत् पुनः मालादीपकम् । अत्रैवं ज्ञेयम् ;—लोके मालायां यथा पूर्व्वपूर्व्वगुम्फितप्रसूनानामुत्तरोत्तरावलम्बनात्सहायकत्वं,तथैवेहापि मालारूपता इति सारः । अप्पयदीक्षितास्त्वेवमाहुः,—"वदन्ति वर्ण्यावर्ण्यानां धर्म्मैक्यं दीपकं बुधाः । मदेन भाति कलभः प्रतापेन महीपतिः ॥ त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकम् । वर्षत्यम्बुदमालेयं वर्षत्येषा च शर्व्वरी ॥ उन्मीलन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः । माद्यन्ति चातकास्तृप्ताः माद्यन्ति च शिखावलाः ॥" अत्र देहलीदीपकन्यायमवलम्ब्य अनेकपोषकस्य पदस्यार्थस्य द्वयोरपि वा आवर्त्तने उदाहरणक्रमः इति ।

(ठ) त्वयीति ।—राजस्तुतिरियम् । हे राजन् ! त्वयि सङ्गरसम्प्राप्ते—रणं गते सति, धनुषा शराः आसादिताः,—प्राप्ताः, शरैः अरैः,—शत्रोः, शिरः, आसादितमिति शेषः ; तेन—अरिशिरसा, भूः,—भूतलम्, आसादितेति लिङ्गव्यत्ययेन अत्रापि अनुवर्त्तनीयम् ; तया—भुवा, त्वम्, आसादितः इति शेषः, तव भूलाभिलाषादिति भावः, त्वया यशः, आसादितमित्यनेनान्वयः । अत्रैकया आसादनक्रियया यथोत्तरं बहूनां धर्म्मिणां धनुरादीनां सम्बन्धः । इदं विश्वनाथस्य पद्यम् । यथा वा,—"लावण्येन भवत्कलेवरमिदं तेनोत्कटं यौवनं तेनासौ सुतनु ! प्रसूनविशिखस्तेन

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पूर्व्वं पूर्व्वं प्रति विशेषणत्वेन परं परम्।
स्थाप्यतेऽपोह्यते वा चेत् स्यात् तदैकावली द्विधा॥७५१॥(ड)

क्रमेण उदाहरणम्,—

"सरो विकसिताम्भोजमम्भोजं भृङ्गसङ्गतम्।
भृङ्गा यत्र ससङ्गीताः सङ्गीतं सस्मरोदयम्॥"(ढ)

"न तज्जलं यन्न सुचारु पङ्कजं
न पङ्कजं तद् यदलीनषट्पदम्।
न षट्पदोऽसौ न जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः॥" (ण)

---

द्रुतं कार्म्मुकम्। तेन प्रापि पुनः शिलीमुखगणस्तेनापि मन्मानसं तेनोत्तापभय-प्रमाथदलनभ्रान्तिप्रमोहोदयः॥" अत्र प्रापीतिक्रियायां पूर्व्वं कर्म्मीभूतस्य पश्चात् तत्रैव कर्त्तृत्वमित्यादिरीत्या मालात्वमिति बोध्यम्।

(ड) एकावलीमाह, पूर्व्वमिति।—चेत्—यदि, पूर्व्वं पूर्व्वं प्रति परं परं—यद्विशेष्यमित्यर्थः, विशेषणत्वेन स्थाप्यते वा अपोह्यते—निराक्रियते, तदा द्विधा—स्थापनापोहनभेदात् द्विप्रकारा, एकावली स्यात्। अत्र कौस्तुभलक्षणं यथा,—"प्रथमं विशेषणं यद्विशेष्यमग्रे भवत्यसक्तत्। विरहप्रतियोगी वा तदानेकावली सोक्ता॥" इति। यत्र प्रथमं विशेषणीभूतस्य पश्चात् विशेष्यत्वं, सा एका, यत्र च प्रथमतोऽभाव-प्रतियोगिनो अन्यप्रतियोगिकाभावाधिकरणत्वं साऽपरेति द्विविधैकावली इति।

(ढ) सर इति।—यत्र—शरदि इत्यर्थः, सरः,—सरोवरः, विकसितानि—प्रस्फुटानि, अम्भोजानि—पद्मानि यस्मिन् तथोक्तम्, अम्भोजं भृङ्गैः,—भ्रमरैः, सङ्गतं—युक्तं, भृङ्गाः,—भ्रमराः, ससङ्गीताः,—सङ्गीतशालिनः, सङ्गीतं स्मरस्य—कामस्य, उदयः स्मरोदयः तेन सहितं, कामवृद्धिकरमित्यर्थः। अत्र अम्भोजभृङ्गसङ्गीतानि उत्तरोत्तरत्र विशेष्याणि पूर्व्वपूर्व्वेषु सरोऽम्भोजभृङ्गेषु विशेषणत्वेनोपन्यस्तानि इति बोध्यम्। पथ्यावक्त्रं छन्दः। यथा वा,—"प्रचिताः कर्म्मारम्भाः नियतविपाकानि कर्म्माणि। अतिविषमाश्च विपाका वैषम्यं दुःसहं तेषाम्॥" इति।

(ण) नेति।—तत् जलं न, आसीदिति शेषः, यत्—जलं, सुचारूणि—सुललितानि, पङ्कजानि यस्मिन् तथाभूतं, न; तत् पङ्कजं— पद्मं, न, यत् अलीनाः,—न लीनाः, सौरभमुग्धतया अनुड्डीयमानाः स्थिताः इति यावत्, षट्पदाः,—भ्रमराः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्वचित् (त) विशेष्यमपि यथोत्तरं विशेषणतया स्थापितमपोहितञ्च दृश्यते। यथा,—

"वाप्यो भवन्ति विमलाः स्फुटन्ति कमलानि वापीषु।
कमलेषु पतन्त्यलयः करोति सङ्गीतमलिषु पदम्॥" (थ)

एवमपोहनेऽपि। (द)

---

("द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः" इत्यमरः) यत्र तादृशम्; असौ षट्पदी न, यः कलं—मधुरं, न जुगुञ्ज—गुञ्जनं चकार, तत् गुञ्जितं न, यत्—गुञ्जितं, मनः न जहार। अत्र पङ्कजषट्पदगुञ्जितानि उत्तरोत्तरविशेष्याणि पूर्वपूर्वेषु जलपङ्कजषट्पदेषु विशेषणत्वेन अपोहितानि। वंशस्थविलं छन्दः। इदं भट्टिकाव्यस्य पद्यम्। अत्र कौस्तुभकाराशयः,—"यत्तु पूर्वपूर्वस्योत्तरोत्तरं प्रति विशेष्यत्वरूपभेदे उत्तरोत्तरविशेषणस्य स्थापकत्वापोहकत्वाभ्यां द्वैविध्यं, (स्वसम्बन्धेन विशेष्यतावच्छेदकनियामकत्वं स्थापकत्वं, स्वव्यतिरेकेण विशेष्यतावच्छेदकव्यतिरेकबुद्धिजनकत्वमपोहकत्वम्) तदनुकूलोदाहरणे यथा,—"स पण्डितो यः स्वहितार्थदर्शी हितञ्च तद्यत्र परानपक्रिया। परे च ते ये श्रितसाधुभावाः सा साधुता यत्र चकास्ति केशवः॥" "नार्थः स यो न स्वहितं समीक्षते न तद्धितं यन्न परानुतोषणम्। न ते परे ये न हि साधुताश्रिता न साधुता सा हि न यत्र माधवः॥" इति; अत्राद्ये हितार्थदर्शनस्य पाण्डित्यरूपविशेष्यतावच्छेदकनियामकत्वम्; द्वितीये च हितावेक्षणव्यतिरेकेणार्थत्वव्यतिरेकाभिधानम् इति, तन्न; "न तज्जलम्—" इत्यादौ उदाहृतेऽव्याप्तेः, तत्र तत्तोत्तरविशेष्यतावच्छेदकनियामकतायाः स्वव्यतिरेकेण विशेष्यतावच्छेदकव्यतिरेकप्रयोजकतायाश्चाभावात्; न हि पङ्कजव्यतिरेकेण जलत्वाभावे तात्पर्यं, किन्तु जलत्वावच्छेदेन पङ्कजायोगव्यतिरेक एव, शरत्समयपरे श्लोके तथैव तात्पर्यावगमात्" इति ज्ञेयम्।

(त) प्रकारान्तरेणाप्येकावल्यलङ्कारमाह,—क्वचिदिति।

(थ) उदाहरति, वाप्य इति।—वाप्यः,—सरस्यः, विमलाः भवन्ति, वापीषु कमलानि स्फुटन्ति—विकसन्ति, कमलेषु अलयः,—भ्रमराः, पतन्ति, सङ्गीतम् अलिषु पदं—स्थानं, करोति, अलयः सङ्गीतं कुर्वन्तीत्यर्थः। उपगीतिश्छन्दः, तल्लक्षणं यथोक्तम्,—"आर्य्याऽपरार्द्धतुल्ये दलद्वये प्राहुरुपगीतिम्" इति।

(द) एवमपोहनेऽपीति।—"पुण्यश्चैवं न सर्व्वत्र पुण्यचेते न नास्तिकाः। नास्तिकेषु न धर्म्मोऽस्ति न धर्म्मे दुःखहेतुता॥" अत्र पूर्व्वपूर्वेषु विशेष्याः पुण्यचेतनास्तिकधर्म्माः परपरेषु नास्तिकधर्म्मदुःखहेतुतासु विशेषणत्वेनापोहिताः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते ॥७५२॥ (ध)

यथा,—"राज्ये सारं वसुधा वसुधायामपि पुरं पुरे सौधम्।
सौधे तल्पं तल्पे वराङ्गनाऽनङ्गसर्व्वस्वम्॥" (न)

---

(ध) सारमाह, उत्तरोत्तरमिति।—उत्तरोत्तरं वस्तुनः,—विशेष्यस्य, उत्कर्षः सार उच्यते। केचित्तु,—"श्लोकसमापनमुत्तरोत्तरोत्कर्षेण अयमलङ्कारो भवति, तथात्वे एव वैचित्र्यविशेषप्रतीतेः" इत्याहुः, तन्न; "लोकस्तनि द्यौर्दिवि चादितेया अप्यादितेयेषु महान् महेन्द्रः। किं कर्त्तुमर्थो यदि सोऽपि रागाज्जागर्त्ति कक्षा किमतः पराऽपि॥" इत्यादौ श्लोकार्द्धसमाप्तिपर्य्यन्तमुत्कर्षसत्त्वेनाप्यस्यालङ्कारस्य सम्भवात्। इति।

(न) राज्ये इति।—राज्ये—राज्याङ्गे, काननसागरसहितभूतले इति यावत्, वसुधा—पृथिवी, सारं—श्रेष्ठं, वसुधायामपि पुरं—नगरं, सारं, पुरे सौधं—राजमन्दिरं, विविधरुचिरमणिमण्डितं सुधासुन्दरमुन्नतं भवनमिति यावत्, ("सौधोऽस्त्री राजसदनम्" इत्यमरः) सारं, सौधे—सौधवर्त्तिनि, तल्पं—शय्या, सारं, तल्पे—शय्यावर्त्तिनि, अनङ्गस्य—कामस्य, सर्व्वस्वं—सर्वधनं, वराङ्गना—उत्तमा कान्ता, सारं—सारेत्यर्थः। (एतदनुरूपश्लोको यथा बृहत्संहितायाम्;—"जये धरित्र्याः पुरमेव सारं, पुरे गृहं सद्मनि चैकदेशः। तत्रापि शय्या शयने वरा स्त्री, रत्नोज्ज्वला राज्यसुखस्य सारः॥" इति। जये—उत्कर्षविषये)। [सर्वत्र निर्द्धारणे सप्तमी, एतदनुरोधेनैव राज्यादिपदानां मुख्यार्थपरित्यागः। तदुपादाने तु सामान्यविशेषभावाभावान्निर्द्धारणे सप्तमी न स्यात्; न हि भवति घटेषु पटः सुन्दर इति; अत्र क्लीबाक्लीबयोः क्लीबः स चैकवद्वेति एकशेषेण क्लीबत्वमुपपन्नम्] यद्वा,—राज्ये वसुधा सारं वस्तु इत्यर्थः, अथवा,—राज्ये वसुधा सारं—धनं, तद्वदुपादेयमित्यर्थः; (तथा च मेदिनी,—"सारो बले स्थिरांशे च यच्छे पुंसि धने जले। न्याय्ये क्लीबं त्रिषु वरे" इति) केचित्तु,—"राज्ये—राजत्वविषये, यानि वस्तूनि तेषु वसुधा सारम्। [वसुधायामित्यादौ अधिकरणे सप्तमी] वसुधायां यानि वस्तूनि सन्ति तेषु पुरं सारम्; एवमग्रेऽपि, [सर्व्वत्र तेष्विति निर्द्धारणे सप्तमी। राजत्वस्याधिकरणत्वासम्भवात् विषयत्वविवक्षा; राज्यवसुधादीनां सामान्यविशेषभावाभावेन निर्द्धारणासम्भवात् यानि इत्यादेरध्याहारः। सारस्य रूपस्य विशेषणत्वाभावान्न स्त्रीत्वादि" इत्याहुः, तन्न; धर्मे वेदा इतिवत् राज्ये वसुधेत्यत्र वसुधायाः प्रतिपादकत्वाभावेन



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# यथासङ्ख्यमनूद्देश उद्दिष्टानां क्रमेण यत् ॥७५३॥ (प)

यथा,—

"उन्मीलन्ति नखैर्लुनीहि वहति क्षौमाञ्चलेनावृणु
क्रीड़ाकाननमाविशन्ति वलयक्वाणैः समुत्त्रासय ।

---

राज्यत्वस्य प्रतिपाद्यत्वरूपविषयत्वासम्भवात् यानीत्यध्याहारेण न्यूनपदत्वदोषप्रसङ्गात् सारस्य विशेषणत्वं विनोत्कर्षप्रतीतेः सामानाधिकरण्येन विशेषणविशेष्ययोः रूप्यरूपकभावसम्भवाच्च । न हि भवति चन्द्रः सुन्दरमिति ; यदि सारपदस्य धनपरत्वं विवक्ष्यते, तदा रूप्यरूपकभावः सम्भवति ; उत्कर्षप्रतीतिस्तु व्यञ्जनयैवेति ध्येयम् ] केचित्तु,—अवस्थाभेदेनैकस्यैवोत्तरोत्तरोत्कर्षवर्णनेऽपि सारः ; यथा,—"नम्रीरश्रियमतिलङ्घ्य लीलयैव व्यानम्रीकृतकमनीयहेमकुम्भौ । नीलाम्भोरुहनयनेऽधुना कुचौ ते स्पर्द्धेते खलु कनकाचलेन सार्द्धम् ॥" अत्र पूर्व्वपूर्व्वावस्थाविशिष्टाभ्यां कुचाभ्यामुत्तरोत्तरावस्थाविशिष्टयोः तयोरेवोत्कर्षः ; एकाश्रये क्रमेणानेकाधेयस्थितिरूपपर्य्यायस्तु यद्यप्यत्र प्रतीयते, तथाप्युत्कर्षरूपसारस्यापि अनन्यथासिद्धत्वादङ्गीकार इति वदन्ति ; तत्र "प्रथमश्रितकज्जकोरकाभावय लक्ष्मीमनुभूय कन्दुकानाम् । अधुना श्रयितुं कुचौ यतेते दयिते ते करिशावकुम्भलीलाम् ॥" इति तात्पर्य्योदाहरणेऽपि उत्तरोत्तरोत्कर्षानुभवाद्विशेषश्चिन्त्यः । अयमलङ्कारो वेदेऽपि दृश्यते, तथा च कठवल्लीषु,—"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिरात्मा बुद्धेर्महान् परः ॥ महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥" इति कौस्तुभकाराः । इदं रुद्रटस्य ।

(प) यथासङ्ख्यमलङ्कारमाह, यथासङ्ख्यमिति ।—उद्दिष्टानां, वस्तूनामिति शेषः, बहुत्वमत्राविवक्षितम ; तेन "ददर्श कृष्णं रामञ्च व्रजे गोदोहनं गतौ । पीतनीलाम्बरधरौ शरदम्बुरुहेक्षणौ ॥" इत्यादावप्ययमलङ्कारः ज्ञेयः ; क्रमेण अनु—पश्चात्, यत्—य इत्यर्थः, उद्देशः,—कीर्त्तनं, तत् यथासङ्ख्यम् । अत्रेदं बोध्यम् ;—उत्—ऊर्द्ध्वं, दिष्टाः,—निर्दिष्टाः उद्दिष्टाः, अनु—पश्चात्, उद्देशः,—निर्देशः अनूद्देशः, प्रथमं प्रतिपादितानामर्थानां पश्चात् प्रतिपादितैः अर्थैः क्रमेण सम्बन्धः यथासङ्ख्यमिति वाक्यार्थः, प्राचीनास्त्वेनमेव क्रमालङ्कारमाहुः, तथा च वामनः,—उपमेयोपमानानां क्रमसम्बन्धः क्रमः" इति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत्थं वञ्जुलदक्षिणानिलकुहूकण्ठेषु साङ्केतिक-
व्याहाराः सुभग ! त्वदीयविरहे तस्याः सखीनां मिथः ॥" (फ)

क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात्।
भवति क्रियते वा चेत् तदा पर्य्याय इष्यते ॥ ७५४ ॥ (ब)

(फ) उन्मीलन्तीति।—दूत्या नायकं प्रत्युक्तिरियम्। हे सुभग! त्वदीयविरहे तस्याः,—तव कान्तायाः, सखीनां मिथः,—अन्योऽन्यं, वञ्जुलाः,—वकुलाः, दक्षिणानिलाः,—मलयवाताः, कुहूकण्ठाः,—कोकिलाः तेषु, इत्थम्—एवम्प्रकाराः, साङ्केतिकव्याहाराः,—इङ्गितोक्तयः, वर्त्तन्ते इति शेषः। यथा ["वञ्जुलाः" इति कर्त्तृपदं सङ्केतगम्यम्] उन्मीलन्ति—विकसन्ति, स्फुटन्ति इति यावत, [इति एकया वञ्जुलान् प्रति उक्ते अपरया] नखैः लुनीहि—छिन्धि, [वञ्जुलमुकुलानीति कर्म्मपदं सङ्केतगम्यम्] वहति [इति एकया दक्षिणानिलं प्रति उक्ते; अत्र दक्षिणानिल इति सङ्केतगम्यम्; अपरया] क्षौमाञ्चलेन—पट्टवसनप्रान्तेन, तस्य घनत्वादिति भावः, आवृणु—आच्छादय, [अत्र तम् इति सङ्केतगम्यम्] यथा न सखीशरीरं स्पृशेदिति भावः; क्रीड़ाकाननं—विहारोद्यानम्, आविशन्ति—प्रविशन्ति, [अत्र कुहूकण्ठा इति सङ्केत्यम्; इति एकया कोकिलान् प्रति उक्ते अपरया] वलयक्वाणैः,—कङ्कणध्वनिभिः, समुत्त्रासय—ताड़य, [अत्र तान् कोकिलान् इति सङ्केत्यम्] येन ते न कुहूरवमातन्वीरन्निति भावः, इति उच्यते। वञ्जुलादीनां नामग्रहणे नायिकायाः विरहपीड़ाऽतिशयी भवति इति तत्सखीनामयं साङ्केतिको व्यवहारः; सङ्केतश्चात्र योग्यकर्त्राद्यध्याहारः इति बोध्यम्। अत्र उद्दिष्टानां वस्तूनां पश्चात् क्रमेण पुनरुद्देशः। शार्दूलविक्रीड़ितं वृत्तम्। अलङ्कारसर्व्वस्वकारस्तु "उद्दिष्टानामर्थानां क्रमेणानूद्देशो यथासङ्ख्यम्" इति सूत्रयित्वा अन्ये त्विममलङ्कारं क्रमसंज्ञयाऽभिदधिरे; तच्च शाब्दमार्थं च द्विधा।........शाब्दं यथासङ्ख्यं यथा,—"कज्जलहिमकनकरुचः सुपर्णवृषहंसवाहनाः शं वः। जलनिधिगिरिकमलस्था हरिहरकमलासना ददतु॥" ......आर्थं यथा,—"लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां देव! त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा। इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं चिन्तारत्नमहो! मुधैव किममी सृष्टाः कुलक्ष्माभृतः॥" इति।

(ब) पर्य्यायालङ्कारमाह, क्वचिदिति।—क्वचित् एकं, वस्तु इति भावः, क्रमात् अनेकस्मिन्, वस्तुनि इति शेषः, भवति—स्वयं भवति इत्यर्थः, वा क्रियते—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्रमेण यथा,—

"स्थिताः क्षणं पक्ष्मसु ताड़िताधराः
पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे
क्रमेण नाभिं प्रथमोदबिन्दवः ॥" (भ)

"विचरन्ति विलासिन्यो यत्र श्रोणिभरालसाः ।
वृककाकशिवास्तत्र धावन्त्यरिपुरे तव ॥" (म)

---

परेण क्रियते इति भावः, चेत् तथा क्वचित् अनेकं, वस्तु इति शेषः, क्रमात् एकगं भवति वा क्रियते चेत् तदा पर्य्याय इष्यते ।

(भ) एकस्य वस्तुनोऽनेकत्र भवनरूपं प्रथमं पर्य्यायमुदाहरति, स्थिता इति ।—समाध्यवस्थायां पार्व्वत्याः शरीरोपरि पतितस्य वृष्टिसलिलस्य स्वभाववर्णनमिदम् । प्रथमे उदबिन्दवः,—वृष्टिजलकणाः, [ "मन्थौदन—" (६।३।६० पा०) इत्यादिना उदकशब्दस्य उदादेशः ] तस्याः,—पार्व्वत्याः इत्याशयः, पक्ष्मसु—नेत्रलोमसु, क्षणं स्थिताः, [ "स्थिताः" इत्यनेन पक्ष्मणामतिसान्द्रत्वं, "क्षणम्" इति स्नेग्धाञ्च गम्यते ] ततः ताड़ितः,—पतनेन कम्पितः, अधरः यैः तथाभूताः, अधरपतिता इत्यर्थः, [ एतेन अधरस्य मार्दवं गम्यते ] ततः पयोधरयोः,—स्तनयोः, उत्सेधे—उच्छ्राये, निपातेन चूर्णिताः,—खण्डिताः, [ एतेन स्तनयोः काठिन्यं व्यज्यते ] ततः वलीषु—त्रिवलीषु, स्खलिताः,—निपतिताः सन्तः, निम्नोन्नतत्वादिति भावः, क्रमेण—आनुपूर्व्येण [ अत्र "चिरेण" इति पाठे,—विलम्बेन, प्रतिबन्धबाहुल्यादिति भावः ] नाभिं प्रपेदिरे—प्रापुः । [ एतेन नाभेः सुगभीरत्वं गम्यते ] । अत्र एकं प्रथमोदबिन्दुरूपं वस्तु पक्ष्मादावनेकत्र क्रमेण स्वयं भवति । यत्तु मल्लिनाथेन,—"अत्र प्रतिपदमर्थवत्त्वात् परिकरालङ्कारः" इत्युक्तं, तदयुक्तम्,—"उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः" इत्याद्युक्त्या विशेष्यपदानां साभिप्रायविशेषणानुगततया उक्तावेव परिकरस्याङ्गीकारात् ; अत्र च "बिन्दवः" इति विशेष्यपदस्य "ताड़िताधराः" इत्यादिविशेषणानां "प्रपेदिरे" इत्यत्राभिप्रायशून्यत्वात् । वंशस्थविलं वृत्तम् । कुमारसम्भवस्येदं पद्यम् ।

(म) अनेकस्यैकत्र भवनमुदाहरति, विचरन्तीति ।—राजस्तुतिरियम् । हे राजन्! इति अध्याहार्य्यं, तव अरिपुरे—शत्रुनगरे, यत्र श्रोणिभरेण—नितम्बभारेण, अलसाः,—मन्थरगामिन्यः, विलासिन्यः विचरन्ति, तत्र इदानीं वृककाकशिवाः,—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"विसृष्टरागादधरान्निवर्त्तितः
स्तनाङ्गरागारुणिताच्च कन्दुकात्।
कुशाङ्कुरादानपरिक्षताङ्गुलिः
कृतोऽक्षसूत्रप्रणयी तया करः॥" (य)

"ययोरारोपितस्तारो हारस्तेऽरिवधूजनैः।
निधीयन्ते तयोः स्थूलाः स्तनयोरश्रुबिन्दवः॥" (र)

एषु च क्वचिदाधारः संहतरूपोऽसंहतरूपश्च, क्वचिदाधेयमपि। यथा,—"स्थिताः क्षणम्—" इत्यत्र उदबिन्दवः पक्ष्मादौ असंहतरूप आधारे क्रमेण अभवन्। "विचरन्ति—" इत्यत्राधेयभूता वृकादयः संहतरूपारिपुरे क्रमेण अभवन्। एव-

शार्दूलवायसशृगालाः, विचरन्ति, तत्र शत्रूणां निधनात् तन्नगरं वनीभूतमिति भावः। अत्र एकस्मिन्नरिपुरे विलासिनीनां वृकादीनां चानेकानां क्रमेण भवनम् इति ज्ञेयम्। पथ्यावक्त्रं वृत्तम्।

(य) एकस्यानेकत्र करणमुदाहरति, विसृष्टेति।—तया—पार्व्वत्या इत्यर्थः, विसृष्टः,—त्यक्तः,व्रतविरुद्धत्वादिति भावः, रागः,—रञ्जनं यस्य तथोक्तात्, अधरात्—अधरोष्ठात, निवर्त्तितः,—परावर्त्तितः, रागक्रियात्यागेन निष्प्रयोजनत्वादिति भावः, तथा स्तनयोरङ्गरागेण अरुणितात्—रक्तीकृतात्, पतनसमये तस्य स्तनयोः उपरोधादिति भावः, कन्दुकात् च, निवर्त्तितः इति शेषः, करः,—पाणिः, इदानीं कुशाङ्कुराणाम् आदानेन—चयनेन, परिक्षताः,—व्रणिताः, अङ्गुलयः यस्य तादृशः, तथा अक्षसूत्रप्रणयी—जपमालानिरतः, कृतः। अत्र एकः करः तपसः पूर्वं रागदानार्थमधरे, क्रीड़ार्थं कन्दुके कृतः, तपःकाले तु कुशाङ्कुरेऽक्षसूत्रे च कृतः इत्ययं क्रमः ज्ञेयः। वंशस्थविलं छन्दः। कुमारसम्भवस्येदं पद्यम्।

(र) अनेकस्यैकत्र करणमाह, ययोरिति।—ते—तव, अरीणां—शत्रूणां, वध्वः,—स्त्रियः एव जनाः तैः, ययोः,—स्तनयोरिति भावः, तारः,—शुद्धमुक्ताघटितः इत्यर्थः, हारः आरोपितः, तयोः,—तादृशयोः, हारशोभितयोरिति यावत्, स्तनयोः, स्थूलाः, पत्यादिनिधनजनितातिशोकादिति भावः, अश्रुबिन्दवः,—नेत्रजलकणाः, निधीयन्ते—समर्प्यन्ते, निपात्यन्ते इति यावत्, त्वयेति शेषः। अनेकस्मिन् स्तने पतिसत्त्वे हारस्य तदसत्त्वे अश्रुबिन्दूनां करणम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मन्यत्। अत्र चैकस्यानेकत्र क्रमेणैव वृत्तेर्विशेषालङ्काराद्भेदः, विनिमयाभावात् परिवृत्तेः। (ल)

**परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत् ॥८५५॥(व)**

क्रमेण उदाहरणम्,—

"दत्त्वा कटाक्षमेणाक्षी जग्राह हृदयं मम।
मया तु हृदयं दत्त्वा गृहीतो मदनज्वरः ॥"

अत्र प्रथमेऽर्द्धे समेन, द्वितीयेऽर्द्धे न्यूनेन। (श)

"तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यतेऽधुना।
येन जर्जरकलेवरव्ययात् क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥" (ष)

अत्राधिक्येन।

---

(ल) क्वचिदाधेयमपीति।—संहतरूपमसंहतरूपञ्चेति शेषः। ननु द्विविधोऽव पर्य्यायः परिवृत्त्यभिन्न एव, पूर्व्वत्र त्यक्तग्रहणरूपत्वेन, परत्रैकवस्तुत्यागानन्तरापरवस्तुग्रहणरूपत्वेन परिवृत्तिसम्भवात्, अत आह, विनिमयाभावादिति।—एकवस्तुत्यागोपाधिकाऽपरवस्तूपादानरूपस्य विनिमयस्याभावात् इत्यर्थः, परिवृत्तेर्भेद इत्यन्वयः; तथा च,—पूर्व्वत्र वस्तुभेदाभावात् अपरत्रापरवस्तूपादानं प्रत्यन्यवस्तुत्यागस्य नियमाभावात् पर्य्यायद्वये परिवृत्त्यभेदसम्भावना नास्तीति भावः।

(व) परिवृत्त्यलङ्कारमाह, परिवृत्तिरिति।—समन्यूनाधिकैः, वस्तुभिरिति शेषः, विनिमयः,—किमपि विसृज्य कस्यापि ग्रहणमित्यर्थः, परिवृत्तिः भवेत्। अत्रायमाशयः,—समेन समस्य, न्यूनेनोत्तमस्य, उत्तमेन न्यूनस्य च विनिमये त्रेधा परिवृत्तिः; येषां मते न्यूनेन न्यूनस्य विनिमयः, तेषामिदमुदाहरणम्,—"अस्थिमालामयीं दत्त्वा मुण्डमालामयीं तनुम्। गृह्णतां त्वत्पुरस्थानां को लाभः स्मरशासन ! ॥" इति समधिककविसम्मताभावात् एतदयोग्यमेवेति ज्ञेयम्।

(श) अत्रेति।—समेन—तुल्येन, कटाक्षहृदययोर्द्वयोरपि उपादेयत्वादिति भावः। न्यूनेन—निकृष्टेन, मदनज्वरस्य भयहेतुत्वेन हृदयान्निकृष्टत्वमिति भावः। यथा वा,—"आदाय चरणकिसलयमस्मादियमत्र चरणमर्पयति। उभयोः सदृशविनिमयादात्मानमवञ्चितं मन्ये ॥" "आदत्त दीप्तं मणिमम्बरस्य दत्त्वा यदस्मै खलु सायधूर्त्तः। रज्यत्तुषारद्युति कूटहेम तत्पाण्डुलाभं रजतं चयेन ॥"

(ष) अधिकेन न्यूनस्य विनिमयात्मानं परिवृत्त्यलङ्कारमुदाहरति, तस्येति।—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रश्नादप्रश्नतो वाऽपि कथिताद्वस्तुनो भवेत् ।
तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा ॥
परिसङ्ख्या ॥ ७५६ ॥ (स)

क्रमेण उदाहरणम्,—"किं भूषणम् ? सुदृढमत्र यशो न रत्नं
किं कार्य्यमार्य्यचरितं सुकृतं न दोषः ।

---

रामस्योक्तिरियम् । तस्य प्रवयसः,—स्थविरस्य, अधुना—सम्प्रति, स्वर्गिणः,—स्वर्गं गतस्य, जटायुषः,—जटायोः सम्बन्धे, [ अत्र सम्बन्धविवक्षयां षष्ठीति वक्तव्यम् ] किमिव—कथमित्यर्थः, शोच्यते ?—नैव शोच्योऽसाविति भावः, येन—जटायुषा, जर्जरं—जराजीर्णं, यत् कलेवरं तस्य व्ययात्—विनिमयात्, इन्दुकिरणवत् उज्ज्वलं यशः क्रीतम् । अयं भावः,—शरीरं स्वभावतः विनाशधर्म्मि, तस्यापि जरया ग्रस्तत्वे किं कथनम् ? अतः जराग्रस्ततया नितान्तं क्षीणस्य स्वभावतो विनाशधर्म्मिणः शरीरस्य व्ययेन येन विमलं शाश्वतिकञ्च यशः क्रीतं, तस्य किमर्थः शोकः ? इति । अत्र अधिकेन वस्तुना यशसा न्यूनं वस्तु जराजीर्णं शरीरं परिवर्त्तितम् । रथोद्धता वृत्तं,—"रात् परैर्नरलगै रथोद्धता" इति च तल्लक्षणम् । यथा वा,—"अस्ताचलेऽस्मिन्निकषोपलाभे सन्ध्याकषोल्लेखपरीक्षितो यः । विक्रीय तं हंसहिरण्यपिण्डं तारावराटानियमादित द्यौः ॥" इति । अत्र स्वर्णपिण्डेन वराटकोपादानात् उत्तमेन न्यूनस्य विनिमय इति ।

(स) परिसङ्ख्यामाह, प्रश्नादिति ।—प्रश्नात् वा अप्रश्नतः कथितात्—उपादेयत्वेन निर्णीयोक्तात्, वस्तुनः शाब्दः,—शब्दप्रतिपाद्यः, अथवा आर्थः,—अर्थबलात् लभ्यः, तादृक्—तादृशः, कथितसदृश इत्यर्थः, अन्यस्य व्यपोहः,—निराकरणं, हेतु, भवतीति शेषः, तदा परिसङ्ख्या—परिसङ्ख्यानं—वर्ज्जनीयत्वेन बोधनमिति तथोक्ता, भवेत् । ["परिर्वर्ज्जने" (८।१।५ पा०) इति सूत्रात् परीति वर्ज्जने, "यत् साङ्ख्यैः प्राप्यते स्थानं तद्द योगैरपि गम्यते" इति शास्त्रतश्च सङ्ख्याशब्दः ज्ञानार्थकः ; तेन परित्यागबुद्धिः परिसङ्ख्येत्याशयः ] । सा प्रथमतः प्रश्नपूर्व्विका अप्रश्नपूर्व्विकेति द्विप्रकारा, शाब्दत्वार्थत्वप्रकाराभ्यां पुनः प्रत्येकं द्विप्रकारेति तस्याः चतुर्व्विधत्वम् ; अस्या अलङ्कारत्वविषयता कविप्रतिभोत्थापितान्यतरप्रतिषेधे एव इति ; तेन "पञ्च पञ्चनखा भक्ष्याः धर्म्मतः परिकीर्त्तिताः । गोधा कूर्म्मः शशः खड्गी शल्यकश्चेति ते स्मृताः ॥" इत्यादौ तु नालङ्कारत्वमिति ।

किं चक्षुरप्रतिहतम् ? धिषणा न नेत्रं
जानाति कस्त्वदपरः सदसद्विवेकम् ॥" (ह)

अत्र व्यवच्छेद्यं रत्नादि शाब्दम् ।

"किमाराध्यं सदा ? पुण्यं, कश्च सेव्यः ? सदागमः ।
को ध्येयः ? भगवान् विष्णुः, किं काम्यम् ? परमं पदम् ॥" (क)

(ह) वाच्यव्यपोह्यां प्रश्नपरिसङ्ख्यामाह, किमिति ।—उक्तिप्रत्युक्ती । अत्र—जगति इत्यर्थः, सुदृढं—दृढतरम्, अक्षयमित्यर्थः, रत्नस्य भङ्गापहरणादिमत्त्वात् न तथात्वम् इति भावः, भूषणम्—अत्युत्कर्षप्रयोजकं, किम् ? (इति प्रश्नः) यशः,—तादृशं सुदृढं भूषणं यश इति भावः, (इत्युत्तरम्) न रत्नम् (इति व्यपोहः)। किं कार्य्यम् ? (इति प्रश्नः) आर्य्याणाम् आर्य्यैः,—मन्वादिभिर्वा, चरितं, सुकृतं—सत्कार्य्यं, पुण्यजनकं तपस्यादि इति यावत्, (इत्युत्तरम्) न दोषः,—पापजनकः परदारगमनादिरूपः, कार्य्यः, इति लिङ्गविपरिणामेन योज्यम् ; (इति व्यपोहः) [आर्य्यचरितं दुष्टमपि भवति, किन्तु तन्नानुकरणीयम् ; अत एवोक्तं,—"धर्म्मव्यतिक्रमो दृष्ट ईश्वराणाञ्च साहसम् । तेजीयसां न दोषाय वह्नेः सर्व्वभुजो यथा ॥" (भाग० १०।३३।२९) इति ]। अप्रतिहतं—दिव्यं, सर्व्वतोदर्शीति यावत्, चक्षुः,—नेत्रम्, उत्कृष्टज्ञानसाधनमिति समुदायार्थः, किम् ? (इति प्रश्नः) धिषणा—बुद्धिः, अप्रतिहतं चक्षुरिति शेषः, (इत्युत्तरम्) नेत्रं न, तस्यावरकप्रतिहन्यमानत्वात् ; (इति व्यपोहः)। नेत्रस्य असम्यग्दर्शनमप्याह,—"गावो घ्राणेन पश्यन्ति शास्त्रैः पश्यन्ति पण्डिताः। चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥" इति ; नैषधेऽपि,—"सविधेऽपि न सूक्ष्मसाक्षिणी, वदनालङ्कृतिमात्रमक्षिणी"। इति। इत्येवमुत्तरं श्रुत्वा प्रसन्नः सन् उत्तरदातारं प्रशंसति, त्वदपरः,—भवतोऽन्यः, कः सदसतां विवेकं—याथार्थ्यावधारणं, जानाति ? न कोऽपीत्यर्थः ; प्रत्युत्तरपरितुष्टस्य प्रश्नकर्त्तुः वक्तस्य प्रत्युत्तरयितृप्रशंसेयम् ; यद्वा,—स्वस्यैवोत्तरमभिप्रेत्य प्रश्नान्तरमाह, जानातीति।—सदसद्विवेकं को जानातीति प्रश्नः । [ तदभिप्रायबोधेन हृष्टस्योत्तरमिदं, त्वदपर इति।—त्वं तु न जानासीति अर्थव्यपोहोऽत्र बोध्यः, केचित्तु,—"तदपरः" इति पाठं कल्पयित्वा "धिषणाया अपरः" इति व्याचक्षते, तन्न ; धिषणाप्रशंसायां जानातीत्यन्वयापत्तेः ] वसन्ततिलकं वृत्तम् ।

(क) प्रतीयमानव्यपोह्यां प्रश्नपरिसङ्ख्यामाह, किमिति ।—उक्तिप्रत्युक्ती । सदा किम् आराध्यम् ?—अनुष्ठेयम् ? कार्य्यमित्यर्थः, (इति प्रश्नः)। पुण्यं, कार्य्यमिति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र व्यवच्छेद्यं पापाद्यार्थम्। अनयोः प्रश्नपूर्व्वकत्वम्। अप्रश्नपूर्व्वकत्वे यथा,—

"भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम्॥" (ख)
"बलमार्त्तभयोपशान्तये विदुषां सम्मतये बहु श्रुतम्।
वसु तस्य न केवलं विभोर्गुणवत्तापि परप्रयोजनम्॥" (ग)

शेषः, (इत्युत्तरम्) न पापं, नरकसाधनत्वात् (इति व्यपोहः)। कश्च सेव्यः? (इति प्रश्नः)। सदागमः,—सच्छास्त्रं, सत्समागमो वा, सेव्य इति शेषः, (इत्युत्तरम्) नासत्समागमः, पापसाधनत्वात् (इति व्यपोहः)। कः ध्येयः,—चिन्तनीयः? (इति प्रश्नः)। भगवान् विष्णुः, ध्येय इति शेषः, (इत्युत्तरम्) धनं न, भयप्रमाद'दिसाधनत्वादिति भावः (इति व्यपोहः)। किं काम्यम्?—वाञ्छनीयम्? (इति प्रश्नः)। परमं पदं—मुक्तिपदं, वाञ्छनीयमिति शेषः, (इत्युत्तरम्) न स्वर्गादिकं, पुण्यक्षये स्वर्गच्युतिसम्भवात् इति ज्ञेयम् (इति व्यपोहः)।

(ख) वाच्यव्यपोह्यामप्रश्नपरिसङ्ख्यामाह, भक्तिरिति।—महतां, जनानामिति शेषः, प्रायः,—बाहुल्येन, भवे—शिवे, ("जन्म-हरौ भवौ" इत्यमरः) भक्तिः,—प्रेम, परिदृश्यते—प्रतीयते, न विभवे—सम्पदि; शास्त्रे—शास्त्राभ्यासे, व्यसनम्—आसक्तिः, अनुशीलनमित्यर्थः, (सर्व्वत्र "परिदृश्यते" इति क्रियापदं योजनीयम्) युवतिरेव कामस्य अस्त्रं तस्मिन् न; यद्वा,—युवतीनां कामास्त्रं—मधुरवचनश्रवणादि, तस्मिन्नित्यर्थः, न व्यसनमिति शेषः, यशसि—ख्यातौ, चिन्ता, न वपुषि—शरीरे। अत्र महतां कुत्र भक्तिर्दृश्यते इत्यादिप्रश्नाभावः। आर्य्या वृत्तम्। यथा वा,—"दानेन पाणिर्न तु कङ्कणेन श्रोत्रं श्रुतेनैव न कुण्डलेन। विभाति कायः करुणापराणां परोपकारेण न चन्दनेन॥" इति।

(ग) प्रतीयमानव्यपोह्यामप्रश्नपरिसङ्ख्यामाह, बलमिति।—तस्य विभोः,—अजस्येत्यर्थः, बलम्, आर्त्तानां—विपन्नानां, भयस्य उपशान्तये—नाशाय, न तु परपीडनायेति भावः, बहुश्रुतं—शास्त्रज्ञानं, विदुषां—पण्डितानां, सम्मतये—सत्कृतये, सम्मानाय इत्यर्थः, न तु विवादाय इति भावः, वसु—धनं, केवलं न परप्रयोजनं, गुणवत्ताऽपि—दयादाक्षिण्यादिगुणशालित्वमपि, परप्रयोजना—परेषां प्रयोजनानुरोधिनीत्यर्थः, न तु स्वार्थपरेति भावः। अत्रापि किमर्थं तस्य बलमित्यादिप्रश्ना-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

श्लेषमूलत्वे च अस्य वैचित्र्यविशेषः। यथा,—

"यस्मिंश्च राजनि जितजगति पालयति महीं चित्रकर्म्मसु वर्णसङ्कराः, चापेषु गुणच्छेदाः" इत्यादि। (घ)

**उत्तरं प्रश्नस्योत्तरादुन्नयो यदि।**

**यच्चासकृदसम्भाव्यं सत्यपि प्रश्न उत्तरम् ॥७५७॥(ङ)**

यथा मम,—"वीचितुं न क्षमा श्वश्रूः स्वामी दूरतरं गतः।

अहमेकाकिनी बाला तवेह वसतिः कुतः? ॥"(च)

अनेन पथिकस्य वसतियाचनं प्रतीयते।

---

भावः। अत्र सुन्दरी वृत्तम्,—"अयुजोर्यदि सौ जगौ युजोः सभरा ल्गौ यदि सुन्दरी तदा" इति तल्लक्षणात्। रघुवंशस्येदं पद्यम्।

(घ) यस्मिंश्चेति।—जितं जगत येन तथाभूते, यस्मिन् राजनि—शूद्रकाख्ये, महीं—पृथ्वीं, पालयति—शासति सति, चित्रकर्म्मसु—आलेख्यव्यापारेषु, वर्णानां—रञ्जनद्रव्याणां, सङ्कराः,—समावेशाः, न तु मनुष्येषु वर्णानां ब्राह्मणादीनां सङ्कराः,—सङ्करोत्पत्तिरिति भावः; चापेषु—धनुःषु, गुणानां—मौर्व्वीणां छेदाः, न तु जनेषु गुणानां—दयादाक्षिण्यादीनां विच्छेदा इति भावः। इदं कादम्बर्य्याः। यथा वा,—"कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते। काठिन्यं कुचयुगले तरलत्वं नेत्रयोर्वसति॥" इति।

(ङ) उत्तरमाह, उत्तरमिति।—उत्तरात्—उत्तरवाक्यात्, यदि प्रश्नस्य उन्नयः,—आगमः, प्रतीयमानत्वम् इत्यर्थः, स्यात्, यद्वा,—सत्यपि—विद्यमानेऽपि, प्रश्ने असकृत्—पुनः पुनः, [ एतत् प्रश्ने उत्तरे चान्वेति ] असम्भाव्यं—पूर्व्वं मनसा अनिश्चितं, लोकप्रसिद्धिगम्यम् अतिविचित्रमित्यर्थः, यत् उत्तरं स्यात्, तत् उत्तरं—उत्तरनामालङ्कारः। अत्रैवं बोध्यं, तथा हि,—असति प्रश्ने उत्तरात् प्रश्नस्य कल्पनं चेदेकमुत्तरम्, एवमसकृत्प्रश्ने सम्भावनानर्हं यदसकृदुत्तरं तदपरमुत्तरम्; एष द्विप्रकारकोऽपि प्रश्नोत्तरयोरेकस्योभयोश्चापि सप्रयोजनत्वनिष्प्रयोजनत्वाभ्यां चतुष्प्रकार इत्यष्टप्रकारताऽस्य ज्ञेया।

(च) वीचितुमिति।—पथिकं प्रति कस्याश्चिदुक्तिः। श्वश्रूः,—स्वामिजननी, वीचितुं—द्रष्टुं, न क्षमा—न शक्ता, अन्धेति यावत्; स्वामी—भर्त्ता, दूरतरम्—अतिदूरं, गतः, तस्यागमनमपि न सम्भवतीति भावः; बाला—मुग्धा, अप्रगल्भा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"का विसमा ? देव्वगई, किं लद्धव्वं ? जणो गुणग्गाही।
किं सोक्खं ? सुकलत्तं, किं दुग्गेज्झं ? खलो लोओ॥" (छ)

अत्र अन्यव्यपोहे तात्पर्य्याभावात् परिसङ्ख्यातो भेदः। न चेदमनुमानं, साध्यसाधनयोर्द्वयोर्निर्देश एव तस्याङ्गीकारात्। न च काव्यलिङ्गम्, (ज) उत्तरस्य प्रश्नं प्रत्यजनकत्वात्।

दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते॥७५८॥(झ)

---

इति यावत्, अहम् एकाकिनी, अतः तव इह वसतिः,—अवस्थानं, कुतः,—कथम् ? स्यादिति शेषः। अत्र उत्तरवाक्येन पथिकः पूर्वं वसत्यर्थं प्रार्थितवानिति प्रश्नस्य उन्नयः। यथा वा,—"एकाकिनी यदबला तरुणी तथाऽहमस्मद्गृहे गृहपतिश्च गतो विदेशम्। कं याचसे तदिह वासमियं वराकी श्वश्रूर्ममान्धबधिरा ननु मूढ़ पान्थ !॥" इति, अत्रापि मम वासो दीयतामिति प्रश्नः उत्तरादुन्नीयते इति ज्ञेयम्।

(छ) का विसमा इति।—["का विषमा ? दैवगतिः, किं लब्धव्यम् ? जनो गुणग्राही। किं सौख्यम् ? सुकलत्रं, किं दुर्ग्राह्यम् ? खलो लोकः॥" इति संस्कृतम्]। विषमा—विसदृशी, का ? दैवगतिः। किं लब्धव्यम् ?—प्राप्तव्यम् ? गुणग्राही जनः। सौख्यं—सुखसाधनं, किम् ? सुकलत्रं—साध्वी भार्य्येत्यर्थः। दुर्ग्राह्यम्—अवश्यं, किम् ? खलः लोकः,—दुर्जन इत्यर्थः।

(ज) इह प्रतीयमानव्यपोह्यायाः प्रश्नपरिसङ्ख्यायाः प्रसक्तिं वारयति, अत्रेति।—अन्यव्यपोहे—अन्यस्य व्यवच्छेदे, तात्पर्य्याभावात्—वक्तुरभिप्रायासद्भावात्। ननु "वीचितुं न चमा" इत्यादावुत्तरात् प्रश्नानुमानमिति अनुमानालङ्कार एवायमित्यत आह,—न चेदमिति। ननु उत्तरेण प्रश्नं कल्प्यं चेत् तर्हि हेतुताया उत्तरवाक्ये व्यञ्जत्वेन काव्यलिङ्गालङ्कार एव स्यात्, अत आह,—न चेति।

(झ) अर्थापत्तिमाह, दण्डेति।—दण्डापूपिकया—दण्डापूपौ विद्येते यत्र सा दण्डापूपिका, ["अत इनिठनौ" (५।२।११५ पा०) इति ठन्] यद्वा,—दण्डापूपयोर्भाव इति, ["द्वन्द्वमनोज्ञादिभ्यश्च" (५।१।१३३ पा०) इति वुञ्। "पृषोदरादीनि यथोपदिष्टम्" (६।३।१०९ पा०) इति द्वन्द्वाभावः] अथवा,—दण्डापूपाविवेति दण्डापूपिका, ["इवे प्रतिकृतौ" (५।३।९६ पा०) इति कन्] तया, कैमुतिकन्यायेनेत्यर्थः, अन्यस्य अर्थस्य आगमः,—उपस्थितिः, भिन्नार्थप्रतीतिरित्यर्थः, अर्थापत्तिः इष्यते।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"मूषिकेण दण्डो भक्षितः" इत्यनेन तत्सहचरितमपूपभक्षणमर्थादायातं भवतीति नियतसमानन्यायादर्थान्तरमापततीत्येष न्यायो दण्डापूपिका। (ञ) अत्र च क्वचित् प्राकरणिकादर्थादप्राकरणिकस्यार्थस्यापतनं, क्वचिदप्राकरणिकार्थात् प्राकरणिकार्थस्येति द्वौ भेदौ। क्रमेण उदाहरणम्,—

"हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले।
मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः?॥" (ट)

"विललाप स वाष्पगद्गदं सहजामप्यपहाय धीरताम्।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु॥" (ठ)

(ञ) दण्डापूपन्यायमाह, मूषिकेणेति।—इतिशब्दो हेतौ, अनेन—मूषिकेण, तत्सहचरितं—दण्डभक्षणसहचरितम्, अर्थात्—औचित्यात्, आयातम्—अवगतं, भवतीत्यनन्तरं "वदन्त्यत्रापि" इति पूरणीयम्। नियतेति।--नियतः,—निश्चितः, सिद्धान्तित इति यावत्, यः समानन्यायः तस्मात्—तुल्यनयादित्यर्थः, आपतति—आगच्छति; यद्वा,—नियतस्य—तद्वत्त्वेन निश्चितस्य, समानन्यायात्—तुल्यसामर्थ्यात्, अर्थात्, न तु शब्दादिति भावः, आपतति—प्रतीतिविषयो भवति; मूषिकस्य हि दण्डभक्षणं दुष्करं, तन्निष्पत्तौ तत्सहचरितापूपभक्षणमतिसुकरत्वात् यथा सम्भाव्यते, तथा अत्रापि सहचरितैकसिद्धेरपरसिद्धिरौचित्यात् सम्भाव्यते इति भावः। न्यायः,—नीतिः।

(ट) हार इति।—अयं हारः हरिणाक्षीणां स्तनमण्डले लुठति, मुक्तानां—मौक्तिकानां, हारघटकरत्नविशेषाणां, [ निवृत्तसंसारदुःखानाञ्च मुक्तिपथावलम्बिनामिति ध्वनिः ] अपि (यदा) इयम् अवस्था—दशा, (तदा) स्मरस्य—कामस्य, किङ्कराः वयं के ? अत्र मुक्तानां तावद् योषिदालिङ्गनं दुर्घटं, तन्निष्पत्तौ अमुक्तानामस्माकं सुतरां तत् स्यात् इति पुंस्त्वमत्र समानो धर्म्मः। मुक्तानां वर्णनीयत्वेन प्राकरणिकत्वम् इति बोध्यम्। यथा वा,—"पशुपतिरपि तान्यहानि कृच्छ्रादगमयदद्रिसुतासमागमोत्कः। कमपरमवशं न विप्रकुर्य्युर्विभुमपि तं यदमी स्पृशन्ति भावाः॥" इति। अत्र विभुवृत्तः प्राकरणिको लोकवृत्तान्तमप्राकरणिकमर्थादाक्षिपति इति ज्ञेयम्।

(ठ) विललापेति।—सः,—अजः, सहजां—स्वाभाविकीम्, अपि धीरताम्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र च समानन्यायस्य श्लेषमूलत्वे वैचित्र्यविशेषो यथोदाहृते "हारोऽयम्—" इत्यादौ। न चेदमनुमानं, समानन्यायस्य सम्बन्धरूपत्वाभावात्। (ङ)

**विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुतः ॥७५८॥(ढ)**

यथा,—"नम्यन्तां शिरांसि धनूंषि वा, कर्णपूरीक्रियन्तामाज्ञाः मौर्व्यो वा।"(ण) अत्र शिरसां धनुषाञ्च नमनयोः सन्धि-

---

अपहाय—परित्यज्य, वाष्पगद्गदं यथा तथा विललाप; तथा हि,—अभितप्तं—सन्तप्तम्, अयोऽपि—लौहमपि, मार्दवं भजते, शरीरिषु—देहिषु, कोमलेषु इति भावः, कैव कथा? अत्र अप्राकरणिकात् लौहद्रवीभावात् अयसो वर्णनीयत्वाभावात् अप्राकरणिकत्वम्। प्राकरणिकस्य शरीरिद्रवस्यापतनम्। सुन्दरी हत्तम्; तल्लक्षणञ्च यथोक्तम्,—"अयुजोर्यदि सौ जगौ युजोः सभरा लौ यदि सुन्दरी तदा" इति। रघुवंशस्येदं पद्यम्। यथा वा,—"धृतधनुषि वाहुशालिनि शैला न नमन्ति यत्तदाश्चर्य्यम्। रिपुसंज्ञकेषु गणना कैव वराकेषु काकेषु॥" इति। अत्रापि शैलवृत्तान्तः अप्राकरणिकः रिपुवृत्तान्तं प्राकरणिकम् अर्थादाक्षिपति इति बोध्यम्।

(ङ) समानन्यायस्येति।—द्रव्यत्वमत्र समानो धर्मः, सम्बन्धरूपत्वाभावात्—व्याप्तिरूपत्वाभावात् इत्यर्थः, व्याप्तिश्च ज्ञाप्यज्ञापकयोः अव्यभिचरितसामानाधिकरण्यरूपः, प्रकृते तु एकस्य साधर्म्यग्रहेण औचित्यात् तत्समानस्य तादृशधर्म्मान्तरग्रहो भवति इति ज्ञाप्यज्ञापकयोः व्याप्त्यसम्भवादिति भावः।

(ढ) विकल्पमाह, विकल्प इति।—तुल्यं बलं ययोः तादृशयोः, वस्तुनोरिति शेषः, (तुल्यबलत्वं तत्तदुदाहरणे यथायथं बोध्यम्) चातुरीयुतः,—वैचित्र्ययुक्तः, विरोधः,—अर्थतोऽलङ्कारादेः चारुता वैचित्र्यं यदि स्यात् इत्यर्थः, विकल्पः। ["विरोधश्चान्तरा यतः" इति पाठस्तु न सम्यक्, अर्थासङ्गतेः; "चातुरी यतः" इति पाठे तु,—यतः,—विरोधात्, चातुरी—वैचित्र्यं, स विकल्प इत्यर्थः]।

(ण) नम्यन्तामिति।—बलवद्युयुत्सोरुक्तिरियम्। शिरांसि धनूंषि वा नम्यन्तां—नतैः भूयतां, धनुर्वा गृह्यताम् इत्यर्थः, आज्ञाः,—अस्मदादेशाः, मौर्व्यः,—धनुर्गुणाः, वा कर्णपूरीक्रियन्तां—कर्णभूषणसदृशीक्रियन्तां, कर्णसङ्गतीक्रियन्तामिति यावत्, अरिभिरिति कर्त्तृपदमवोध्यम्।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विग्रहोपलक्षणत्वात् सन्धिविग्रहयोश्चैकदा कर्त्तव्यताऽसम्भवाद् विरोधः। स च एकपक्षाश्रयणपर्य्यवसानः। तुल्यबलत्वञ्चात्र धनुःशिरोनमनयोर्द्वयोरपि स्पर्द्धया सम्भाव्यमानत्वात्। चातुर्य्यञ्च श्लौपम्यगर्भत्वेन। एवं "कर्णपूरीक्रियन्ताम्" (त) इत्यत्रापि। एवं,—"युष्माकं कुरुतां भवार्त्तिशमनं नेत्रे तनुर्वा हरिः" अत्र श्लेषावष्टम्भेन चारुत्वम्। "दीयतामर्जितं वित्तं देवाय ब्राह्मणाय वा" (थ) इत्यत्र चातुर्य्याभावान्नायमलङ्कारः।

---

(त) नन्वसमर्थस्य शिरोनमनं, समर्थस्य धनुर्नमनमिति कथं तुल्यबलत्वम्? अत आह, अत्र शिरसामिति।—शिरोनमनं सन्धिलक्षणं धनुर्नमनं विग्रहलक्षणं तदुपलक्षणत्वात्—तज्ज्ञापकत्वात् इत्यर्थः। सन्धिविग्रहयोर्वैरीच्छेदाय राजाद्यनुष्ठेयत्वात् तुल्यबलत्वम्। विरोधमुपपादयति, सन्धिविग्रहयोरिति।—एकदा—युगपत्, कर्त्तव्यताया असम्भवात्—कर्त्तुमशक्यत्वात्, विरोधः। ननु सर्व्वत्रोदाहरणे तादृशविरोधो न सम्भवतीत्यत आह, स चेति।—विरोधश्चेत्यर्थः, तुल्यबलयोरेकतरस्यैव प्रकृतेऽन्वयः एकपक्षाश्रयणं यस्य स इत्यर्थः; तथा च तुल्यबलयोरेकस्मिन् प्रकृते अनन्वयविरोधः इति परमतात्पर्य्यम्। इदानीं धनुःशिरोनमनयोः यथाकथञ्चित् तुल्यबलत्वमुपपाद्य उपलक्षणं विनैव लक्षणं सङ्गमयति, तुल्यबलत्वमिति।—वक्तुः स्पर्द्धाजन्यसम्भावनाविषयत्वात् इत्यर्थः। चातुर्य्यमिति।—वैचित्र्यमित्यर्थः। औपम्यगर्भत्वेनेति।—शिरोनमनस्योत्कटत्वेन धनुर्नमनस्योपमानत्वेन पर्य्यवसानमिति भावः। एवमिति।—आशायाः कर्णपूरीकरणस्य सन्धिलक्षणत्वात् मौर्व्याः कर्णपूरीकरणस्य विग्रहलक्षणत्वात् तयोर्यौगपद्ये विरोधः, स च एकपक्षाश्रयणपर्य्यवसानः। औपम्यञ्च वैचित्र्याधायकं, तुल्यबलत्वञ्च अत्र उभयोरपि प्रस्तावस्य स्पर्द्धाजन्यत्वादिति बोध्यम्।

(थ) युष्माकमिति।—हरेः,—नारायणस्य, नेत्रे तनुः,—शरीरं, वा युष्माकं भवार्त्तिशमनं—संसारदुःखध्वंसं, कुरुताम्। अस्य पूर्व्वगतं पादत्रयन्तु,—"भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्द्धिनी ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये। लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती" इति। अत्र कुरुतामिति पदस्य लोट्विभक्तेः परस्मैपदीयप्रथमपुरुषद्विवचनान्तत्वे नेत्रे इत्यनेनान्वयः, आत्मनेपदीयैकवचनान्तत्वे तनुरित्यनेनान्वयः। नेत्रयोस्तन्वा वा जीवार्त्तिशमनसाधनक्षमत्वेन संसारदुःखमोचने सामर्थ्यात् तुल्यबलत्वं, तयोरेकतरस्यैव भवार्त्तिशमनरूपे प्रकृतकार्य्ये

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

समुच्चयोऽयमेकस्मिन् सति कार्य्यस्य साधके।
खलेकपोतिकान्यायात् तत्करः स्यात् परोऽपि चेत्।
गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये ॥७६०॥(द)

यथा मम,—

"हंहो धीरसमीर! हन्त जननं ते चन्दनक्ष्माभृतो
दाक्षिण्यं जगदुत्तरं परिचयो गोदावरीवारिभिः।
प्रत्यङ्गं दहसीति मे त्वमपि चेदुद्दामदावाग्निव-
न्मत्तोऽयं मलिनात्मको वनचरः किं वक्ष्यते कोकिलः? ॥"(ध)

---

हेतुत्वेनान्वयः, न तु समुच्चयवदुभयोः, इति विरोधः। श्लेषावष्टम्भेन—श्लेषानुकूल्येन। "पतत्यविरतं वारि नृत्यन्ति शिखिनो मुदा। अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति॥" अत्र विप्रलम्भशृङ्गारावष्टम्भेन चारुत्वम्, एवमन्यत्रापि यथायथं चारुत्वमवगन्तव्यम्। चारुतार्थत इति यदुक्तं तस्य व्यावृत्तिमाह, दीयतामिति।— अत्र देवब्राह्मणयोरुत्तमपात्रत्वेन तुल्यबलत्वं, प्रकृते दाने एकतरस्यैव सम्बन्धः, न तूभयोः इत्यस्ति विरोधः इति बोध्यम्।

(द) समुच्चयमाह, समुच्चय इति।—एकस्मिन्—वस्तुनि इत्यर्थः, कार्य्यस्य—प्रक्रान्तस्य इति भावः, साधके—निष्पादके सति, खले—धान्यादिमर्द्दनस्थाने, कपोतिकान्यायात् परोऽपि—अन्योऽपि, चेत् तत्करः,—तस्य कार्य्यस्य सम्पादकः, स्यात्, तदा समुच्चयः। अयं भावः,—खलं—धान्यकणमर्द्दनस्थानं, तत्र यथा वृद्धा युवानः शिशवः कपोताः भक्षणार्थम् एकदैव निपतन्ति, तथा एककार्य्यानुष्ठानार्थं यत्र समकालमनेकेषामुपस्थापनं, तत्र तमर्थं बोधयितुं प्रवृत्ता नीतिः "खलेकपोतिका" इति गीयते; प्रकारान्तरेण समुच्चयालङ्कारमाह, गुणाविति।—वा—अथवा, गुणौ—गुणद्वयं, [ गुणश्च क्रियाभिन्नधर्म्ममात्रम् ] वा क्रिये—क्रियाद्वयं, [ क्रिया धात्वर्थरूपा ] युगपत् स्याताम्, अथवा गुणक्रिये—गुणः क्रिया च द्वयं युगपत् स्यात्, तदाऽपि समुच्चयः। तथा च,—खलेकपोतिकानीत्या यत्र गुणयोः क्रिययोः गुणक्रिययोर्वा युगपत् समुपस्थितिः स समुच्चयः। स च उक्तरीत्या चतुर्विध इति बोध्यम्। स एष समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च भवतीति त्रिधा भिद्यते इति सारः।

(ध) हंहो इति।—विरहिण उक्तिरियम्। हंहो इति सम्बोधनसूचकमव्ययं,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र दाहे एकस्मिंश्चन्दनक्ष्माभृज्जन्मरूपे कारणे सत्यपि दाक्षिण्यादीनां हेत्वन्तराणामुपादानम्। अत्र सर्व्वेषामपि हेतूनां शोभनत्वात् सद्योगः। अत्रैव चतुर्थपादे मत्तादीनाम् अशोभनानां योगादसद्योगः। सदसद्योगो (न) यथा,—

"शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गनगतः खलो मनसि सप्त शल्यानि मे॥" (प)

—हे इत्यर्थः, हे धीरसमीर! हन्तेति खेदसूचकमव्ययम्; ते—तव, जननम्—उत्पत्तिः, चन्दनक्ष्माभृतः,—चन्दनपर्व्वतात्, मलयशैलादित्यर्थः, दाक्षिण्यं—सारल्यं, दक्षिणदिग्भवत्वञ्च, जगति उत्तरं—प्रधानं, ख्यातञ्च, परिचयः,—सङ्गः, गोदावरीवारिभिः, इति—एतादृशोऽपि, त्वं चेत्—यदि, उद्दामदावाग्निवत्—उत्कटदावानल इव, मे—मम, प्रत्यङ्गं—सर्व्वाण्यङ्गानि, दहसि, तदा मत्तः,—गर्व्वितः, मलिनात्मकः,—मलिनस्वभावः, कृष्णवर्णश्च, वनचरः,—वन्यः, अभद्र इति भावः, अयं कोकिलः किं वक्ष्यते? मयेति शेषः, न किमपि वक्तुं शक्यः कोकिलः, सुतरां दाहजनको भवतीति भावः। यदि महान्तोऽपि परान् बाधन्ते, तदा दुरात्मानः परान् बाधन्ते एव इति किमस्माभिरुच्येत? कथं वा तऽस्मिन् विषये उपालम्भनीयाः? इति भावः। शार्दूलविक्रीड़ितं वृत्तम्। अयमर्थापत्त्यलङ्कारसङ्कीर्णः।

(न) अत्र सर्वेषामिति।—सताम्—उपादेयानां कारणानां केवलानां योगः,—सद्योगः, तेषामेवानुपादेयानां योगः असद्योगः, उभयमिश्रणे सदसद्योगः इति ज्ञेयम्। तत्र सद्योगे उदाहरणं यथा,—"कुलममलिनं भद्रा मूर्त्तिर्मतिः श्रुतिशालिनी भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम्। प्रकृतिसुभगा एते भावा अमीभिरयं जनो व्रजति सुतरां दर्पं राजन्! त एव तवाङ्कुशाः॥" इति। असद्योगे यथा,—"दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं गाढ़ं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्म्मलम्। स्त्रीत्वं धैर्य्यविरोधि मन्मथसुहृत् कालः कृतान्तोऽक्षमी नो सख्यश्चतुराः कथं नु विरहः सोढ़व्य इत्थं शठः॥" इति।

(प) सदसद्योगे उदाहरणं, शशीति।—(१) दिवसे धूसरः,—मलिनः, शशी, (२) गलितं—गतं, यौवनं यस्यास्तादृशी, कामिनी, (३) विगतानि—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इह केचिदाहुः,—"शशिप्रभृतीनां शोभनत्वं खलस्य अशोभनत्वमपि सदसद्योगः" इति। अन्ये तु,—"शशिप्रभृतीनां स्वतःशोभनत्वं धूसरत्वादीनां त्वशोभनत्वम् इति सदसद्योगः"। अत्र हि शशिप्रभृतिषु धूसरादेरत्यन्तमनुचितत्वमिति विच्छित्तिविशेषस्यैव चमत्कारविधायित्वम्; "मनसि सप्त शल्यानि" इति सप्तानामपि शल्यत्वेनोपसंहाराय, "नृपाङ्गनगतः खलः" इति क्रमभेदाद् दुष्टत्वमावहति, अत्र विशेष्यस्यैव शोभनत्वेन प्रक्रमादिति। (फ) इह च खले कपोतवत् सर्व्वेषां कारणानां

---

नष्टानि, वारिजानि—पद्मानि यस्मात् तादृशं, सरः,—सरोवरः, (४) शोभना आकृतिः यस्य तादृशस्य, सुन्दरस्येत्यर्थः, अनचरम्—अचरशून्यं, वचनाक्षममित्यर्थः, मुखं, (५) धनपरायणः,—धनलुब्धः, अतिलोभेन सदसद्विवेकहीन इत्यर्थः, प्रभुः,—राजा, (६) सततं दुर्गतः,—दुरवस्थः, सज्जनः,—साधुजनः, (७) तथा नृपाङ्गनगतः,—राजसभास्थः इत्यर्थः, खलः,—दुर्जनः, (एतानि) मे मनसि सप्त शल्यानि, दुःखदायकत्वादिति भावः, निखातानीति शेषः। पृथ्वी वृत्तम्;—"जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" इति च तल्लक्षणम्। नीतिशतकस्येदं पद्यम्।

(फ) इह केचिदिति।—अत्र शल्यत्वे एकस्यैव दिवसधूसरशशिनः कारणत्वेऽपि कामिन्यादेर्गलितयौवनत्वादीनां बहूनामुपादानम्। अन्ये त्विति।—शशिप्रभृतीनामिति सज्जनपर्य्यन्तानाम्। धूसरत्वादीनामिति सततदुर्गतत्वपर्य्यन्तानां ग्रहणम्। खलस्य तु स्वतः अशोभनत्वं, नृपाङ्गनगतत्वस्य शोभनत्वमिति वैपरीत्येन सदसद्योगः। मनोदुःखं प्रति धूसरत्वादिविशिष्टाश्चन्द्रादयः कारणानि कारणीभूतानां विशेष्याणां विशेषणानाञ्च यथासम्भवं सताम् असताञ्च योग एव सदसद्योग इति भावः। अन्येषां मतमुपपादयति, अत्र हीति।—"विच्छित्तिविशेषस्यैव" इत्येवकारेण मनसोत्यादेर्व्यावृत्तिः। नन्वेतत् निरर्थकम् अत आह, मनसीति।—तथा च वाक्यसमापकत्वेनैव तत् सार्थकमिति भावः। प्रथममतं दूषयति, नृपाङ्गनगत इति।—विशेष्यस्यैव इत्येवकारेण विशिष्टव्यवच्छेदः; तथा च अत्र विशेष्यविशेषणयोर्योग एव वैचित्र्यावहः, न तु विशिष्टानां योगः, क्रमभेदरूपदोषावहत्वादिति भावः। अत्र सर्व्वस्वकाराणामयमभिप्रायः यथा,—शशिनः स्वतः शोभनस्यापि दिवसधूसरत्वात् अशोभनत्वेन सदसतः तादृशैरेव कामिनीप्रभृतिभिः समुच्चयः। नन्वत्र कश्चित्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

साहित्येनावतारः । समाध्यलङ्कारे तु एककार्य्यं प्रति साधके समग्रेऽप्यन्यस्य काकतालीयन्यायेन आपतनमिति भेदः । (ब)

"अरुणे च तरुणि ! नयने तव मलिनञ्च प्रियस्य मुखम् ।
मुखमानतञ्च सखि ! ते ज्वलितश्चास्यान्तरे स्मरज्वलनः॥" (भ)

---

समुच्चीयमानः शोभनः, अन्यस्त्वशोभनः इति सदसद्योगी व्याख्येयः । ननु "नृपाङ्गनगतः खलः" इत्यशोभनः, अन्ये तु अशोभना इति कथं समुच्चीयमानस्य सतः ताद्दृशेनासता योगः ? नैतत्, "नृपाङ्गनगतः खलः" इति प्रत्युत प्रक्रमभङ्गात् दुष्टमेव, न तु सौन्दर्य्यनिमित्तमिति उपेक्ष्यमेवैतत् । अत एव अन्यैरेवमादौ सहचरभिन्नोऽर्थदुष्ट एवेत्युक्तम् ; प्रकृते तु नृपाङ्गनगतत्वेन शोभनत्वं खलत्वेनाशोभनत्वम् इति समर्थनीयम् । एवमपि विशेष्यस्य शोभनत्वं प्रक्रान्तं, विशेषणस्य त्वशोभनत्वमित्त तु अन्यथा इति न सर्व्वथा निरवद्यम् इति ।

(ब) समाध्यलङ्कारादस्य भेदमाह, इहेति ।—खले इति ।—खले—धान्यादिचिते, यथा एकस्य कपोतस्य आगमनात् बहवः समापतन्ति, तद्वत् एकस्य कारणत्वेऽपि यत्र अन्येषामापतनं, स खलेकपोतिकान्याय इति बोध्यम् । साहित्येन—यौगपद्येन, मिलितत्वेनेत्यर्थः, अवतारः । काकतालीयन्यायेनेति ।—काकगमनेन तालपतनमिव आकस्मिकम् अन्यस्य यत्र आपतनं, स काकतालीयन्यायः तेन, अप्रतिसंहतत्वेनेत्यर्थः, समग्रे—समर्थे, पर्य्याप्ते इति यावत्, आपतनम्—उपस्थापनम् । यत्र कार्य्यविशेषं मिलितान्येव कारणानि जनयन्ति, स समुच्चयस्य विषयः, यत्र तु एकस्मिन् कारणे फलसाधनाय अनुष्ठीयमाने दैवादुत्पन्नेन कारणान्तरेण तत्फलस्य सुकरत्वं, स समाधिरिति भावः ।

(भ) गुणयौगपद्ये समुच्चयमाह, अरुणे इति ।—नायिकां प्रति सख्या उक्तिरियम् । हे तरुणि ! तव नयने अरुणे—रक्ते, च, वर्त्ते इति शेषः, तव प्रियस्य मुखं मलिनञ्च, हे सखि ! ते तव मुखम् आनतञ्च, अस्य—तव प्रियस्य, अन्तरे—मनसि, स्मरज्वलनः,—कामाग्निः, ज्वलितश्च । च द्वयं यौगपद्यसूचकम् । अत्रोद्गीतिश्छन्दः,—"आर्य्याशकलद्वितये विपरीते पुनरिहोद्गीतिः" इति । यथा वा,—"यौवनविजृम्भणेन स्तनद्वयं महदभूच्चास्याः । मदनोद्रेकाद्ध यूनां मनांसि रक्तानि चाभूवन् ॥" अत्र महत्त्वरक्तत्वगुणयोर्यौगपद्यम् ; चकारेण तदभिधानात् । क्रिययोर्यौगपद्ये यथा वा,—"अद्येव प्रोषितोऽद्यैव शून्यकानि जातानि । रथ्यामुखदेवकुलचत्वराण्यस्माकञ्च हृदयानि ॥" अत्र प्रस्थानजननक्रिययोरिति ज्ञेयम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्राद्येऽर्द्धे गुणयोर्यौगपद्यं, द्वितीये क्रिययोः। (म) उभयोर्यौगपद्ये यथा,—

"कलुषञ्च तवाहितेष्वकस्मात्
सितपङ्केरुहसोदरश्रि चक्षुः।
पतितञ्च महीपतीन्द्र! तेषां
वपुषि प्रस्फुटमापदां कटाक्षैः॥" (य)

"धुनोति चासिं तनुते च कीर्त्तिम्" इत्यादावेकाधिकरणेऽप्येष दृश्यते। न चात्र दीपकम्। एते हि गुणक्रियायौगपद्ये समुच्चयप्रकारानियमेन कार्य्यकारणकालनियमविपर्य्ययरूपातिशयोक्तिमूलाः। (र) दीपकस्य च अतिशयोक्तिमूलत्वाभावः।

---

(म) अत्रेति।—गुणयोः,—अरुणमलिनयोरित्यर्थः। क्रिययोः,—म्लानमनज्वलनयोरित्यर्थः।

(य) कलुषमिति।—राजस्तुतिरियम्। हे महीपतीन्द्र!—भूपश्रेष्ठ! तव सितं—शुभ्रं, यत् पङ्केरुहं—पद्मं, तस्य सोदरा—सदृशीत्यर्थः, श्रीर्यस्य तादृशं, चक्षुः अकस्मात् अहितेषु—शत्रुषु, कलुषञ्च—आविलञ्च, रोषकषायितञ्चेत्यर्थः, तेषां—तव अहितानां, वपुषि प्रस्फुटं—सुव्यक्तं यथा तथा, आपदां कटाक्षैः पतितञ्च। अत्र गुणस्य कलुषस्य क्रियायाः पतनस्य च यौगपद्यम्। अस्य वैयधिकरण्ये एव प्रयोगप्राचुर्य्यं विच्छित्तिविशेषजनकत्वञ्च इति ज्ञेयम्। औपच्छन्दसकं वृत्तम्;—"षड् विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः। न समाऽत्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः॥ तत्रैवान्तेऽधिके गुरौ स्यादौपच्छन्दसकं कवीन्द्रहृद्यम्।" इति च तल्लक्षणम्। यथा वा,—"सज्जितकज्जलरेखौ बिम्बाधरदीर्चितश्च दयितस्य। तामरसच्छदशोणं नयनञ्चाभूत् मनस्विन्याः॥" इति। अत्र दर्शनशोणत्वरूपयोः गुणक्रिययोः। इह यौगपद्यमात्रं विवक्षितं, न तु सामानाधिकरण्यं वैयधिकरण्यं वा; तच्चोदाहृतेषु स्पष्टमिति कौस्तुभकाराः।

(र) क्वचिच्च सामानाधिकरण्येऽपि प्रयोगमाह, धुनोतीति।—असिं—तलवारं, धुनोति च—कम्पयति च, कीर्त्तिं तनुते च—विस्तारयति च। समुच्चयप्रकारा इति।—समुच्चयभेदा इत्यर्थः, नियमेन—अवश्यम्भावेन, कार्य्यकारणयोः कालनियमः,—पौर्व्वापर्य्यं, तस्य विपर्य्ययः; यौगपद्यमारोपितं भ्राटति फलोत्पादनप्रतिपत्त्यर्थम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

**समाधिः सुकरे कार्य्ये दैवाद्वस्त्वन्तरागमात्** ॥७६१॥ (ल)

यथा,—

"मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्ज्जितम् ॥" (व)

**प्रत्यनीकमशक्तेन प्रतीकारे रिपोर्यदि ।
तदीयस्य तिरस्कारस्तस्यैवोत्कर्षसाधकः** ॥७६२॥ (श)

(ल) समाधिमाह, समाधिरिति ।—दैवात्—सहसा, अकस्मादित्यर्थः, वस्त्वन्तरस्य—अन्यस्य वस्तुनः, आगमात्—कारणान्तरसमाधानादित्यर्थः, कार्य्ये सुकरे सति (एतेन प्रक्रान्तकारणेन कार्य्यस्य दुष्करत्वं प्रतीयते) समाधिः स्यात् । चिकीर्षितस्य कार्य्यस्य सिद्ध्यर्थमभिमतो यो हेतुः तदतिरिक्तहेतुना कार्य्यस्य सौकर्य्यं समाधिः । समाधीयते कार्य्यमनेन इति व्युत्पत्तेः इति कौस्तुभकाराशयः ।

(व) मानमिति ।—सखायं प्रति कस्यचिदुक्तिः । अस्याः,—कान्तायाः इति भावः, मानं—प्रणयकोपं, निराकर्त्तुम्—अपनेतुं, पादयोः,—चरणयोः, पतिष्यतः मे—मम, उपकाराय—पादपतनस्य अनावश्यकत्वाय इत्यर्थः, दिष्ट्या—दैवेन, भाग्येनेत्यर्थः, इदं घनगर्ज्जितं—मेघगर्ज्जनम्, उदीर्णम्—उपस्थितम्, उत्पन्नमिति यावत्; तस्योद्दीपकत्वात् तत्क्षणादेव मानभङ्गो जात इति भावः । अनारब्ध-कारणे एतदुदाहरणं ज्ञेयम् । अत्र दैवात् मेघगर्जनरूपवस्तुन आगमात् मानभञ्जनस्य कार्य्यस्य सुकरत्वम् । अत्रेदं बोध्यं,—सौकर्य्यमत्र तद्धर्म्मावच्छिन्नोद्देश्यकप्रवृत्तिविषय-हेत्वतिरिक्तहेतुना कार्य्योपकाराधानम्, उपकारश्च तदुपयुक्तकिञ्चित्सहकारिसकल-सहकारिसमवधानसजातीयान्तरसंवलितत्वादिसाधारणः । कारणबाहुल्यस्य वाविव-क्षितत्वादेव समुच्चयाद्भेदः, कार्य्यस्य प्रवृत्तिविषयत्वस्य फलतो लाभात् काव्यलिङ्गात् इति कौस्तुभाशयः । प्रक्रान्तकारणसम्भवे यथा,—"पादपतितस्य पत्युः पृष्ठं पुत्रे समा-रोहति । दृढमन्युदूनाया अपि हासो गृहिण्या निष्क्रान्तः ॥" इति । अत्र मानाप-नोदार्थं प्रणते पत्यौ तदभावेऽपि तत्पृष्ठे पुत्रसमारोहणरूपविलक्षणचेष्टाहासगम्यो मानत्यागः ।

(श) प्रत्यनीकमाह, प्रत्यनीकमिति ।—रिपोः प्रतीकारे—दमने, अशक्तेन, जनेन कृत इति शेषः, तदीयस्य—तस्य रिपुसम्बन्धिवस्तुनः, तिरस्कारः यदि तस्यैव—रिपोरेव, उत्कर्षसाधकः,—श्रेष्ठत्वप्रतिपादकः, स्यात्, तत् प्रत्यनीकं—प्रतिकूलम्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तस्यैवेति रिपोरिव। यथा मम,—

"मध्येन तनुमध्या मे मध्यं जितवतीत्ययम्।

इभकुम्भौ भिनत्त्यस्याः कुचकुम्भनिभौ हरिः॥" (ष)

**प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम्।**

**निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते ॥७६३॥ (स)**

अनीकमित्यर्थः, उपचारात् तथा वर्ण्यमानवैचित्र्यमिति भावः; यद्वा,—अनीकेन सदृशं प्रत्यनीकं, यथार्थत्वेन सादृश्यादानेऽपि पुनः सादृश्यग्रहणं विशेषणीभूतेऽपि सादृश्ये अव्ययीभावद्योतनाय; प्रतिभटस्य अवमाननाय अनीकं नियुज्यते, तदक्षमत्वे प्रतिभटसम्बन्धिनः यस्य कस्यचिदपि आक्षेपः क्रियते इति लोकाचारः; स चानीकसदृशप्रयोगयोग्यत्वात् प्रत्यनीकमिति कथ्यते; प्रतिभटगतं बलवत्त्वम् आत्मगतं दुर्बलत्वञ्च इह गम्यते इति रसगङ्गाधरकाराशयः।

(ष) मध्येनेति।—तनुमध्या—क्षीणकटी प्रमदा, मध्येन—कटीदेशेन, मे—मम, मध्यं, कृशमिति शेषः, जितवती इति—इति हेतोः, क्रोधेनेति भावः, असौ हरिः,—सिंहः, अस्याः,—प्रमदायाः इत्यर्थः, कुचकुम्भनिभौ—स्तनकलससदृशौ, इभकुम्भौ—हस्तिकुम्भौ, भिनत्ति। तदीयस्य स्तनकुम्भस्य तत्सदृशहस्तिकुम्भभेदेन तिरस्कारः कृतः। अत्र मध्यजयित्वेन रिपोः प्रमदायाः प्रतीकारासमर्थेन हरिणा तस्या एव उत्कर्षसाधकः औपम्येनेति भावः। यथा वा,—"यस्य किञ्चिदपकर्त्तुमक्षमः कायनिग्रहगृहीतविग्रहः। कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनाऽपि बाधते॥" अत्र राहोः सकाशात् भगवान् बलवान् विपक्षः, तदीयः पुनः वक्त्रसादृश्यमुखेन दुर्बलश्चन्द्रमाः, तत्तिरस्कारात् भगवतः प्रकर्षावगतिः इति ज्ञेयम्।

(स) प्रतीपमाह, प्रसिद्धस्येति। प्रसिद्धस्य—विख्यातस्य, उपमानस्य उपमेयत्वप्रकल्पनं वा निष्फलत्वाभिधानं—निष्फलत्वज्ञापनमित्यर्थः, प्रतीपं—प्रतिगता आपो यस्मिन् इति प्रतीपम्—आनतोन्नतस्थलं, तत्साम्यात् लक्षणया अलङ्कारोऽपि तन्नामकः ["ऋक्पूरब्धूः" (५।४।७४ पा०) इति अप्रत्ययः। "द्व्यन्तरुपसर्गेभ्योऽप ईत्" (६।३।९७ पा०) इति ईदादेशे सिद्धम्] इति कथ्यते। तदत्र उपमानोपमेयभावे वैपरीत्यं प्रथमप्रतीपम्; निष्फलत्वाभिधानेन उपमेयस्य प्रकर्षप्रतीतेरुपमानप्रातिकूल्यं द्वितीयप्रतीपम्। आद्ये उपमानस्य उपमेयत्वकल्पनेन, द्वितीये वैफल्याभिधानेन अपकर्षः प्रतीयते।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्रमेण यथा,—"यत् त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरम्" (ह) इत्यादि ।

"तद्वक्त्रं यदि मुद्रिता शशिकथा हा ! हेम सा चेद्द्युति-
स्तच्चक्षुर्यदि हारितं कुवलयैस्तच्चेत् स्मितं का सुधा ।
धिक् कन्दर्पधनुर्भ्रुवौ यदि च ते किं वा बहु ब्रूमहे
यत् सत्यं पुनरुक्तवस्तुविमुख: सर्गक्रमो वेधस: ॥" (क)

अत्र वक्त्रादिभिरेव चन्द्रादीनां शोभाऽतिवर्द्धनात् तेषां निष्फलत्वम् ।

---

(ह) यदिति ।—व्याख्यातं प्राक् । अत्र नेत्रादीनामुपमानानामपि इन्दीवरादीनामुपमेयत्वकथनम् ।

(क) तदिति ।—विद्धशालभञ्जिकायां केरलाधिपते: स्वप्नावस्थायां कुवलयमालामवलोक्य तन्मूर्त्तिस्मरणम् । यदि तस्या:—स्वप्नदृष्टाया: कुवलयमालाया इति भाव:, एवं सर्व्वत्र ; वक्त्रं—मुखं, तिष्ठतीति शेष:, तदा शशिकथा—चन्द्रसम्बन्धिनी वार्त्ता, शशिसौन्दर्य्यप्रशंसा इति यावत्, मुद्रिता—सङ्कुचिता, नष्टेत्यर्थ: ; चेत्—यदि, सा द्युति:,—कान्ति:, तिष्ठतीति शेष:, तदा हेम—स्वर्णं, हा !—शोचनीयमित्यर्थ:, हेम्न: शोच्यत्वमिति भाव:, तेन च तस्य वैफल्यं प्रतीयते ; हाशब्द: शोकसूचको विफलार्थो वा अव्यय: ; यदि तस्याश्चक्षु: तिष्ठति, तदा कुवलयै:,—नीलोत्पलै:, हारितं—पराभूतं, विफलीभूतमित्यर्थ:, यद्वा,—हा—खेदे, रितं—गतं, नष्टमिति यावत्, चेत्—यदि, तत्—विलक्षणमित्यर्थ:, स्मितं—मृदुहास्यं, तिष्ठतीति शेष:, तदा सुधा का ?—साऽपि विफला इति भाव:, यदि ते भ्रुवौ, तिष्ठत इति शेष:, तदा कन्दर्पस्य—कामदेवस्य, ("कन्दर्पो दर्पकोऽनङ्ग: काम: पञ्चशर: स्मर:" इत्यमर: ) धनु:,—शरासनं, धिक् !—निन्दामोत्यर्थ:, ("धिक् निर्भर्त्सननिन्दयो:" इत्यमर: ) कामदेवस्य धनु: अतिधिक्, एतदपि तदपेक्षया अकिञ्चित्करमिति भाव: । किं वा बहु—अधिकं, ब्रूमहे—वदाम:, वेधस:—विधातु:, सर्गक्रम:,—सृष्टिनियम:, पुनरुक्तात्—द्वितीयात्, वस्तुन: विमुख:,—विधिरेकरूपं वस्तुद्वयं न सृजतीत्यर्थ:, इति यत् तत् सत्यम् । एतेन केशपाशादिसत्त्वे चामरादीनां वैफल्यं प्रतीयते । शार्दूलविक्रीड़ितं वृत्तम् । यथा वा,—"तदोजसस्तद्यशस: स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा । तनोति भानो: परिवेषकैतवात् तदा विधि: कुण्डलनां विधोरपि ॥" इति । अत्र नलीयप्रतापकीर्त्तिभ्यां सूर्य्याचन्द्रमसो: वैफल्यम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उक्त्वा चात्यन्तमुत्कर्षमत्युत्कृष्टस्य वस्तुनः।
कल्पितेऽप्युपमानत्वे प्रतीपं केचिदूचिरे ॥७६४॥ (ख)

यथा,—"अहमेव गुरुः सुदारुणाना-
मिति हालाहल! तात! मा स्म दृप्यः।
ननु सन्ति भवादृशानि भूयो
भुवनेऽस्मिन् वचनानि दुर्जनानाम्॥" (ग)

अत्र प्रथमपादे उत्कर्षातिशय उक्तः। तदनुक्तौ तु नायम् अलङ्कारः। यथा,—"ब्रह्मेव ब्राह्मणो वदति" इत्यादि। (घ)

मीलितं वस्तुनो गुप्तिः केनचित् तुल्यलक्ष्मणा ॥७६५॥ (ङ)

अत्र समानलक्षणं वस्तु क्वचित् सहजं, क्वचिदागन्तुकम्।

---

(ख) प्रकारान्तरेण प्रतीपमाह, उक्त्वेति।—अत्युत्कृष्टस्य—अतिश्रेष्ठस्य, वस्तुनः अत्यन्तम् उत्कर्षम् उक्त्वा तस्यैव उपमानत्वे कल्पिते अपि—येन धर्म्मेण उत्कर्षं उच्यते, तेनैव धर्म्मेण अप्रसिद्धस्यापि उपमानत्वे कल्पिते इति भावः, [अपिकारात् पूर्व्वोक्तप्रकारयोः समुच्चयः] केचित् प्रतीपम् ऊचिरे—कथयामासुः।

(ग) अहमिति।—हे हालाहल!—कालकूट! हे तात! अहमेव सुदारुणानाम्—अतिभीषणानां, प्राणघातिनामिति भावः, गुरुः,—श्रेष्ठः, इति—एवं बुद्ध्वा, मा स्म दृप्यः,—दर्पवान् मा भूः, दर्पं मा कार्षीरित्यर्थः। कथमित्यत आह, नन्विति।—अस्मिन् भुवने—जगति, भवादृशानि—त्वत्सदृशानि, दुर्जनानां वचनानि भूयः,—बाहुल्येन, सन्ति ननु—विद्यन्ते खलु।

(घ) अत्रेति।—अत्र प्रथमे पादे उत्कर्षमुक्त्वा द्वितीये दुर्जनवचनानाम् उपमानत्वं कल्पितम्; तथा हि,—दारुणत्वातिशयः सामान्यगुणः तद्योगादुपमानत्वमभूतपूर्वमपि दारुणत्वांशे दर्पनिषेधादनुभूतपूर्व्वमेव विवक्षितम् इति भावः। तदनुक्तौ—उत्कर्षानुक्तावित्यर्थः। ब्रह्मेवेति।—अत्रोत्कर्षो गम्य एव, न तु वाच्यः।

(ङ) मीलितमाह, मीलितमिति।—केनचित्—सहजेनागन्तुकेन वा इत्यर्थः, तुल्यलक्ष्मणा—समानचिह्नेन, वस्तुनः गुप्तिः,—गोपनं, मीलितम्। न चायं सामान्यालङ्कारः, तत्र हि साधारणगुणयोगात् भेदानुपलक्षणं रूपम्, अस्य तु उत्कृष्टगुणेन निकृष्टगुणस्य तिरोधानमिति महाननयोर्विशेषः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्रमेण यथा,—

"लक्ष्मीवक्षोजकस्तूरीलक्ष्म वक्षःस्थले हरेः।
ग्रस्तं नालक्षि भारत्या भासा नीलोत्पलाभया॥" (च)

अत्र भगवतः श्यामा कान्तिः सहजा।

"सदैव शोणोपलकुण्डलस्य
यस्यां मयूखैररुणीकृतानि।
कोपोपरक्तान्यपि कामिनीनां
मुखानि शङ्कां विदधुर्न यूनाम्॥" (छ)

अत्र माणिक्यकुण्डलस्यारुणिमा मुखे आगन्तुकः।

---

(च) लक्ष्मीति।—भारत्या—सरस्वत्या, सपत्न्या इत्यर्थः, हरेः,—नारायणस्य, वक्षःस्थले लक्ष्म्याः,—श्रियाः, वक्षोजयोः,—स्तनयोः, या कस्तूरी—मृगमदः, तस्य लक्ष्म—चिह्नं, नीलोत्पलाभया—इन्दीवरतुल्यया, भासा—भगवद्देहप्रभया, ग्रस्तं—कवलितं, दर्शनाविषयीभूतमित्यर्थः, अत एव न अलक्षि—न दृष्टम्। अत्र तुल्यलक्ष्म-वस्तुना देहप्रभया कस्तूरीलक्ष्मरूपस्य वस्तुनः गोपनम्। यथा वा,—"अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो विलासभरमन्थरा गतिरतीव कान्तं मुखम्। इति स्फुरित-मङ्गके मृगदृशां स्वतो लीलया यदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते॥" इति।

(छ) सदेति।—नगरीवर्णनमिदम्। यस्यां—नगर्यां, सदैव शोणोपल-कुण्डलस्य—माणिक्यकुण्डलस्य, मयूखैः,—किरणैः, अरुणीकृतानि—रक्तीकृतानि, कामिनीनां मुखानि कोपेन—प्रणयजनितेनेति भावः, उपरक्तान्यपि—आरक्तान्यपि, यूनां—तरुणानां, शङ्कां भयं न विदधुः,—उत्पादयामासुरित्यर्थः। अत्र तुल्यलक्ष्म-वस्तुना आगन्तुकेन माणिक्यमयूखेन कोपोपरागरूपस्य वस्तुनः गोपनम् इति। उपजातिः वृत्तम्। यथा वा,—"अपह्नुतः स्वेदभरः करे तयोस्तपाजुषोर्दानजलै-र्मिलन् मुहुः। दृशोरपि प्रस्तुतमश्रु सात्त्विकं घनैः समाधीयत धूमलङ्घनैः॥" इति। अत्र दानजलेनागन्तुकधर्मेण स्वेदजलस्य धूमजन्येन चाश्रुणा सात्त्विकजन्याश्रूणां तिरोधानम्; एतयोराद्यस्य सजातीयापेक्षोत्कर्षवत्त्वं, द्वितीयस्य च प्रत्ययविषय-स्वकार्यत्वप्रतियोगिककारणताश्रयत्वं तिरस्कारत्वप्रयोजकम् इति ज्ञेयम्। यथा वा,—"ये कन्दरासु निवसन्ति सदा हिमाद्रेस्त्वत्पातशङ्कितधियो विवशा द्विषस्ते। अप्यङ्ग-मुत्पुलकमुद्वहतां सकम्पं तेषामहो! बत भियां न बुधोऽप्यभिज्ञः॥" अत्र हिमाद्रि-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणैः ॥ ७६६ ॥ (ज)

यथा,—

"मल्लिकाचितधम्मिल्लाश्चारुचन्दनचर्च्चिताः।
अविभाव्याः सुखं यान्ति चन्द्रिकास्वभिसारिकाः॥" (झ)

---

कन्दरानिवाससामर्थ्यप्रतिपन्नेन शैत्येन समुद्भावितौ आगन्तुकौ कम्परोमाञ्चौ भयकृतयोस्तयोः तिरोधायकौ, तिरोधायकत्वादेव च मीलितव्यपदेशः इति ज्ञेयम्।

(ज) सामान्यमाह, सामान्यमिति।—प्रकृतस्य—प्रस्तुतस्य, सदृशैः गुणैः अन्यस्य—इतरस्य, तादात्म्यं—भिन्नत्वेनापरिचेयत्वम्, अभेदप्रतीतिरिति यावत्, सामान्यम्। यद्वा,—"स्वगुणसजातीयगुणाश्रयैकरूप्यन्तु सामान्यम्। यत्र कस्यचिद्वस्तुनोऽपरित्यक्तस्वगुणस्यैव स्ववृत्तिगुणसजातीयगुणाश्रयेण सहाभिन्नतया भानं, तत् सामान्यम्। तद्गुणे व्यभिचारवारणाय अपरित्यक्तेति; अत्र स्वगुणसाजात्यं रूपवत्त्वव्याप्यधर्म्मेण शुक्लत्वादिना बोध्यम्, अन्यथा गुणत्वादिधर्म्मभिन्नरूपाणां साजात्यं नैव स्यात्। समानस्य भावः सामान्यमिति व्युत्पत्त्या उभयोरेकधर्म्मवत्ताप्रतिपादनादित्यर्थः" इति कौस्तुभाशयः।

(झ) मल्लिकेति।—अभिसारिकाः,—कान्तार्थिन्यः नायिकाः, (तदुक्तम्;—"कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिका" इति) मल्लिकाभिः,—पुष्पविशेषैः, आचिताः,—खचिताः, धम्मिल्लाः,—संयतकेशा यासां तथोक्ताः, ("धम्मिल्लाः संयताः कचाः" इत्यमरः) तथा चारुभिः,—अतिसुरभिभिः, चन्दनैः चर्च्चिताः,—कृताङ्गरागा इत्यर्थः, अत एव चन्द्रिकासु—ज्योत्स्नासु, अविभाव्याः,—अभिसारिकात्वेन अप्रतीयमाना इत्यर्थः, सुखं यान्ति। अत्र मल्लिकादिगुणसादृश्येन प्रकृतस्य अभिसारिकारूपस्य वस्तुनः चन्द्रिकातादात्म्यम्। न च दीधितादिमते अस्य मीलितोदाहरणत्वेन लिखनादिष्टापत्तिरिति वाच्यम्; सामान्योदाहरणतया लिखद्भिः नवीनैर्विरोधप्रसङ्गात्; विशेषस्तत्र कौस्तुभे द्रष्टव्यः। यथा वा,—"सितारविन्दप्रचयेषु लीनाः संसक्तफेनेषु च सैकतेषु। कुन्दावदाताः कलहंसमालाः प्रतीयिरे श्रोत्रसुखैर्निनादैः॥" अत्र कुसुमसैकते हंसानामेकगुणतया अभेदेन भानम्; न च शब्देन हंसानां पृथक् प्रतीतिरस्त्येवेति वाच्यं, तत्पूर्व्वकाले अभेदभानस्य निर्बाधतया तदभिप्रायेणैवोदाहृतत्वात् उत्तरकालीनभेदज्ञानेन पूर्व्वकालीनाभेदज्ञानबाधाभावात्; अत एव "वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि। भृङ्गाः सहेलं



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मीलिते उत्कृष्टगुणेन निकृष्टगुणस्य तिरोधानम्, इह तु उभयोस्तुल्यगुणतया भेदाग्रहः ।

**तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः ॥ ७६७ ॥ (ञ)**

यथा,—

"जगाद वदनच्छद्मपद्मपर्य्यन्तपातिनः ।
नयन् मधुलिहः श्वैत्यमुदग्रदशनांशुभिः ॥" (ट)

---

यदि नापतिष्यन् को वेदयिष्यन्नवचम्पकानि ॥" इति । यत्तु,—नैतद्युक्तम्, उत्तरप्रतिपत्त्या तिरस्कृतत्वात् पूर्वप्रतीतेर्न चमत्कारकत्वं, किन्तु उत्तरप्रतीतेरेवेति तथैव व्यपदेशस्य युक्तत्वात्; अन्यथा व्यतिरेकेऽप्युपमाया एवापत्तेरिति, तच्चिन्त्यम्; भेदप्रतीतेर्वर्णनीयोत्कर्षानाधायकत्वेन तथानापत्तेः तिरस्कारातिरस्कारयोश्चाप्रयोजकत्वात्, अन्यथा विरोधाभासस्याप्युच्छेदापत्तेः, विरोधस्य तत्राप्यप्रविष्टत्वात् । एतेन मीलितसामान्योभयप्रतिद्वन्द्विभूतसुन्मीलितविशेषात्मकं दीक्षितालङ्कारद्वयं प्रत्याख्यातम्; वर्णनीयोत्कर्षानाधायकत्वेन प्रथमद्वित्तिकाभ्यां मीलितसामान्याभ्यामेवान्यथासिद्धेरिति दिक् ।

(ञ) तद्गुणमाह, तद्गुण इति ।—स्वस्य गुणत्यागात् अत्युत्कृष्टस्य गुणस्य—सन्निकृष्टस्य वस्तुनः अतिनिविड़गुणस्य, ग्रहः,—ग्रहणं, स्फूर्त्तिरिति यावत्, तद्गुणः । ( अत्युत्कृष्टेति गुणविशेषणं स्वगुणतिरोधाने बीजम् ) तथा च,—परकीयैर्गुणैस्तिरोहितगुणत्वे सति परकीयगुणशालितया प्रत्ययस्तद्गुण इति निष्कृष्टोऽर्थः । अत्रेदं बोध्यम्;—यत्र परिमितगुणस्य वस्तुनः समीपवर्त्तिप्रकृष्टवस्तुगुणस्य स्वीकरणं स तद्गुणः; तस्योत्कृष्टगुणस्य गुणा अस्मिन् इति कृत्वा । न चेदं मीलितं, तत्र हि प्रकृतं वस्तु वस्त्वन्तरेणाच्छादितत्वेन प्रतीयते, इह तु अनपह्नुतस्वरूपमेव प्रकृतम् । यत्र परिमितगुणं वस्तु तस्य समीपवर्त्तिप्रकृष्टवस्तुगुणस्वीकारं कुरुते, स तद्गुणः, वस्त्वन्तरगुणोपरक्ततया प्रतीयते इत्यस्त्यनयोर्भेदः इति सर्व्वस्वकारः ।

(ट) जगादेति ।—उदग्रदशनांशुभिः,—उन्नतदन्तकिरणैः, वदनमेव छद्म—छलं, यस्य तादृशं यत् पद्मं तस्य पर्य्यन्ते पतन्तीति तथोक्तान्, मधुलिहः,—भ्रमरान्, श्वैत्यं—धावल्यं, नयन्—प्रापयन्, जगाद—उवाच । अत्र प्रक्रान्तो बलदेवः कर्त्ता । इह मधुलिहां कृष्णवर्णरूपस्वगुणत्यागात् अत्युत्कृष्टस्य श्वैत्यगुणस्य ग्रहणम् । शिशुपालवधस्येदं पद्यम् । यथा वा,—"गाढ़ाश्लेषविकीर्णचन्दनरजःपुञ्जप्रसङ्गादियं श्यामा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मीलिते प्रकृतस्य वस्तुनो वस्त्वन्तरेणाच्छादनम्, इह तु वस्त्वन्तरगुणेनाक्रान्तता प्रतीयते इति। (ठ)

**तद्रूपाननुहारस्तु हेतौ सत्यप्यतद्गुणः॥ ७६८॥ (ड)**

यथा,—"हन्त! सान्द्रेण रागेण भृतेऽपि हृदये मम।
गुणगौर! निषण्णोऽपि कथं नाम न रज्यसि?॥" (ढ)

---

सम्प्रति कोमलाङ्गि! कठिनेत्यारोप्य मां वचसि। गाढ़ौष्ठग्रहपूर्वमाकुलतया पादाग्रसन्दंशकेनाकृष्याम्बरमात्मनो यदुचितं धूर्त्तेन तत् प्रस्तुतम्॥" इति। अत्र शय्यास्पर्शतिरोधानेन चन्दनपरागीयकठिनस्पर्शसम्बन्धः उक्तः। इह सर्वत्र तिरोधायकगुणस्य तिरोधेयगुणनिष्ठात्यन्ताभावप्रतियोगिगुणत्वव्याप्यजात्यवच्छिन्नत्वमवधेयम्। यथा वा,—"विभिन्नवर्णा गरुड़ाग्रजेन सूर्य्यस्य रथ्याः परितः स्फुरन्त्या। रत्नैः पुनर्यत्र रुचं रुचा स्वामानिन्यिरे वंशकरीरनीलैः॥" अत्र रवितुरगापेक्षया गरुड़ाग्रजस्य तदपेक्षया च हरिन्मणीनां प्रगुणवर्णता इति सारः।

(ठ) नन्वत्रोत्कृष्टगुणेन निकृष्टगुणतिरोधानमस्तीति मीलितादस्य को भेदः? इत्यत आह, मीलिते इति।—इह तु—तद्गुणे तु, सन्निकृष्टगुणेन स्वगुणस्यैव तिरोधानं, न तु वस्तुनः, मीलिते तु वस्तुनोऽपीति विशेषः; मीलिते स्वजातीयोत्कृष्टगुणतिरोधानम्, अत्र तु विजातीयोत्कृष्टगुणेन अपकृष्टगुणतिरोधानं "स्वगुणत्यागात्" इत्यनेन लभ्यते इत्यपि बोध्यः, अनेन सामान्यालङ्कारादप्यस्य भेदः, तत्र "सदृशैर्गुणैः" इत्युपादानात्।

(ड) अतद्गुणमाह, तद्रूपेति।—हेतौ सत्यपि [ उत्कृष्टगुणवस्तुसन्निधानमत्र हेतुरवधेयः ] तस्य रूपस्य—उत्कृष्टगुणवस्तुनो गुणस्य, अननुहारः,—अपकृष्टगुणेन वस्तुना अग्रहणम्, अतद्गुणः।

(ढ) हन्तेति।—नायकं प्रति कस्याश्चिदुक्तिरियम्। हे गुणगौर!—गुणोज्ज्वल! यशःशुक्ल! इत्यर्थः, शुक्लगुणस्य रक्तगुणयोगेन रक्तत्वं सुतरां जायते इति भावः; हन्त—खेदे, सान्द्रेण—घनेन, रागेण—अनुरागेण, लौहित्येन च, भृते—परिपूर्णेऽपि, मम हृदये निषण्णोऽपि—आसीनोऽपि, त्वं कथं नाम न रज्यसि?—न अनुरागभाग्, लोहितश्च भवसीत्यर्थः। अत्र रक्ते स्थाने स्थितिरूपहेतौ सत्यपि रक्ततायाः अग्रहणम्। श्लेषादनुरागरक्तिम्नोरेकत्वाध्यासादेतदुपपद्यते। इह प्राकरणिकेन नायकेन प्राकरणिकस्य नायिकाहृदयस्य गुणाग्रहणम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा वा,—

"गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस ! तव सैव शुभ्रता चीयते न च न चापचीयते ॥"(ण)

पूर्व्वत्रातिरक्तहृदयसम्पर्कात् प्राप्तवदपि गुणगौरशब्द-वाच्यस्य नायकस्य रक्तत्वं न निष्पन्नम् ; उत्तरत्राप्रस्तुतप्रशंसायां विद्यमानायामपि गङ्गायमुनाऽपेक्षया प्रकृतस्य हंसस्य गङ्गायमुनयोः सम्पर्केऽपि न तद्रूपता । अत्र च गुणाग्रहणरूप-विच्छित्तिविशेषाश्रयाद् विशेषोक्तेर्भेदः । वर्णान्तरोत्पत्त्यभावाच्च विषमात् । (त)

(ण) प्राकरणिकेनाप्राकरणिकगुणाग्रहणेऽप्ययमलङ्कार इत्याह, गाङ्गमिति ।—हे राजहंस ! गाङ्गं—गङ्गाया इदं, गङ्गासम्बन्धीत्यर्थः, अम्बु—जलं, सितं—शुभ्रं, यामुनम् अम्बु—यमुनासम्बन्धि जलं, कज्जलाभं—कज्जलसदृशकृष्णवर्णमित्यर्थः, उभयत्र—गङ्गाजले यमुनाजले च, मज्जतः तव सैव शुभ्रता न च चीयते—न च वर्द्धते, गङ्गाजलसम्पर्केणेति भावः, न च अपचीयते—ह्रासं गच्छति, यमुनाजलसम्पर्केणेत्याशयः । अत्र शुभ्रताया हेतौ सत्यपि तदग्रहणम् । अत्र रथोद्धता छन्दः,—"रात् परैर्नरलगै रथोद्धता" इति । यथा वा,—"भाता भालतलानलैः कवलिता कण्ठस्थ-हालाहलैरालीढाथ जटाटवीवलयितैराशीविषाणां गणैः । कीर्णा भस्मभिराहतास्थि-पटलैर्विद्धा जटाग्रैरपि क्षीयामुज्झति माधुरीं हरशिरोरत्नं किमिन्दोः कला ॥" अत्र प्राकरणिकया चन्द्रकलया अप्राकरणिकानामनलहालाहलादिगुणानामग्रहणम् ।

(त) पूर्व्वत्रेति ।—प्राप्तवदपि—भवितुं योग्यमपि इत्यर्थः । ननु उत्तरत्राप्रस्तुत-प्रशंसया स्वसम्बन्धिगुणग्राही जन एव प्रकृतः, न तु राजहंस इति प्रकृतस्याप्रकृत-गुणाग्रहणोदाहरणं कथमेतत् सङ्गच्छताम् ? अत आह, उत्तरत्रेति ।—प्रस्तुतस्य प्रतिपाद्यत्वेन प्राकरणिकस्य गङ्गायमुनाद्यपेक्षया प्रतिपाद्यत्वेन राजहंसस्यापेक्षिकं प्रकृतत्वमिति भावः । नन्वत्र कारणसत्त्वे कार्य्यानुत्पत्तिरस्तीति विशेषोक्त्यलङ्कार एवायमित्यत आह, अत्र चेति ।—गुणाग्रहणरूपा या विच्छित्तिः,—वैचित्र्यं, तस्या विशेषः,—वैशिष्ट्यं, तस्य आश्रयात्—वैचित्र्यविशेषसम्बन्धात् इत्यर्थः, कारणसत्त्वे कार्य्यानुत्पत्तिरूपवैचित्र्यादुक्तवैचित्र्यं विलक्षणं, तत्प्रयोजकत्वादलङ्कारस्य वैलक्षण्य-मिति भावः । विशेषोक्तेः "सति हेतौ गुणाभावरूपायाः" भेदः,—सामान्यविशेष-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

संलक्षितस्तु सूक्ष्मोऽर्थं आकारेणेङ्गितेन वा।
कयाऽपि सूच्यते भङ्ग्या यत्र सूक्ष्मं तदुच्यते ॥७६८॥ (थ)

सूक्ष्मः,—स्थूलमतिभिः (द) असंलक्ष्यः। अत्राकारेण यथा,—

"वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धै-
र्दृष्ट्वा भिन्नं कुङ्कुमं काऽपि कण्ठे।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गलेखां लिलेख ॥" (ध)

---

भविनेति भावः। ननु नायिकाहृदयादिरूपकारणगुणस्य विरुद्धस्तत्सम्पृक्तनायकादिरूपकार्य्यगुण इति विषमालङ्कार एवायं, सम्पर्कस्य कार्य्यत्वात् सम्पृक्तस्यापि कार्य्यत्वमुपचर्य्यते इत्यभिप्रायेणाह, वर्णान्तरेति।—कार्य्यस्य कारणगुणविरुद्धगुणोत्पत्तावेव विषमस्य विषयः, प्रकृते तु तदभावान्न तद्विषय इति भावः। विषमादिति।—भेद इत्यन्वयः। तथा हि,—"अत्राचिपन्ति,—सत्यपि परगुणग्रहणहेतौ तद्रूपकार्य्याभावात् विशेषोक्तितो नातिरिच्यते एवायम्; न चात्र कार्य्यकारणभावो न विवक्षितः, किन्तु धर्म्मान्तरसन्निधानेऽपि तद्गुणग्रहणाभाव एवेति वाच्यम्, अपिशब्देन विरोधस्मरणात्, विरोधस्य च कार्य्यकारणभावविवक्षाया एव समुल्लासात्, अन्यथा कारणाभावेऽपि कार्य्यानुत्पत्तौ विरोधानुपपत्तिप्रसङ्गात् इति। अत्रोच्यते,—कारणसत्त्वे कार्य्यानुपपत्तिसाम्येऽपि यत्राभावप्रतियोगितावच्छेदकस्य तद्धर्म्मावच्छिन्नकारणतावच्छेदकप्रतियोगिकार्य्यतावच्छेदकत्वं विवक्षितं, तत्र विशेषोक्तिः; यत्र तु अभावप्रतियोगिनः तन्निष्ठकारणतानिरूपितकार्य्यताशालित्वमात्रं तत्रातद्गुण इति विभागात्" इति कौस्तुभाशयः।

(थ) सूक्ष्ममाह, संलक्षित इति।—आकारेण—धर्म्मेण, मुखभावादिना इत्यर्थः, वा इङ्गितेन—क्रियाभङ्ग्या, विदग्धचेष्टयेति यावत्, संलक्षितः,—सम्यक् अनुभूतः, सूक्ष्मः अर्थः कयाऽपि—अनिर्वाच्यया इत्यर्थः, भङ्ग्या—प्रकारेण, यत्र सूच्यते—प्रकाश्यते, तत् सूक्ष्मम् उच्यते।

(द) सूक्ष्म इति।—मतेः स्थूलत्वं—गहनार्थाग्राहित्वमिति भावः।

(ध) वक्त्रेति।—काऽपि वयस्या—सखी, तन्व्याः,—कृशाङ्ग्याः वयस्यायाः, नायिकाया इति भावः, वक्त्रात्—वदनात्, स्यन्दिनः,—चरन्तः, ये स्वेदबिन्दवः,—घर्म्मबिन्दवः, तेषां प्रबन्धैः,—धाराभिः, कण्ठे कुङ्कुमं भिन्नं—मृष्टं, रेखारूपकृत-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र कयाचित् कुङ्कुमभेदेन संलक्षितं कस्याश्चित् पुरुषायितं पाणौ पुरुषचिह्नखड्गलेखालिखनेन (न) सूचितम् ।

इङ्गितेन यथा,—

"सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥" (प)

अत्र विटस्य भ्रूविक्षेपादिना लक्षितः सङ्केतकालाभिप्रायो रजनीकालभाविना पद्मनिमीलनेन प्रकाशितः । (फ)

**व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुनः ॥ ७१० ॥ (ब)**

---

विभागमित्यर्थः, दृष्ट्वा (तस्याः) पुंस्त्वं—पुरुषत्वं, सुरते पुरुषवदाचरितत्वमित्यर्थः, व्यञ्जयन्ती—प्रकटयन्ती सती, स्मित्वा—ईषत् हसित्वा, पाणौ—तस्या एव करे, खड्गलेखां—खड्गाकृतिं, लिलेख । अत्र स्वेदबिन्दुक्षतकुङ्कुमरूपभिन्नेनाकारेण संलक्षितं पुरुषायितं पाणौ पुरुषोचितखड्गधारालिखनेन प्रकाशितम् । पुरुषायितायाएव वक्त्रागलितस्वेदानां गण्डे गलनं सम्भवति, न तु उत्तानसुप्तायाः ; अतः सूक्ष्ममपि पुरुषायितं लक्षितं पुरुषधर्मस्य खड्गलेखायाः सस्मितलिखनेन प्रकाशितम् । अत्र शालिनी छन्दः,—"मात् तौ गौ चेच्छालिनी वेदलोकैः" इति च तल्लक्षणम् । यथा वा,—"संवाहनसुखरसतोषितेन ददता तव करे लाक्षाम् । चरणेन विक्रमादित्य-चरितमनुशिक्षितं तस्याः ॥" अत्र नायकहस्तद्वये लाक्षारससंयोगं दृष्ट्वा विपरीताख्य-सुरतमभिज्ञाय तच्छ्लेषेण चरणस्य विक्रमादित्यसाम्यमभिधाय नायिकया नायकाय तत्प्रकाशनं कृतम् ।

(न) अत्र कयाचिदिति ।—कुङ्कुमभेदोऽवाकारः । खड्गलेखा—खड्गाकृति-चिह्नविशेषः पुंसां हस्ते तिष्ठति ।

(प) सङ्केतेति ।—व्याख्यातं प्राक् ।

(फ) अत्र विटस्येति ।—इह सङ्केतकालाभिप्रायः,—सङ्केतकालजिज्ञासा, विटसम्बन्धिना भ्रूविक्षेपादिना इङ्गितेन लक्षितः रजनिकालभाविना लीलापद्मनिमीलनेन प्रकाशितः इति बोध्यम् ।

(ब) व्याजोक्तिमाह, व्याजोक्तिरिति ।—उद्भिन्नस्य—प्रकटितस्य, केनापि कारणेनेति शेषः, कार्य्यादिना व्यक्तीभूतस्य वा, वस्तुनः व्याजात्—कारणान्तरोद्भावन-च्छलात्, गोपनं व्याजोक्तिः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—"शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः।
आः! शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद् वः शिवः॥" (भ)

नेयं प्रथमापह्नुतिः, अपह्नवकारिणो विषयस्यानभिधानात्। द्वितीयापह्नुतेर्भेदस्य तत्प्रस्तावे दर्शितः। (म)

---

(भ) शैलेन्द्रेति।—शैलेन्द्रेण—हिमालयेन, प्रतिपाद्यमानायाः,—सम्प्रदीयमानायाः, गिरिजायाः,—गौर्य्याः, हस्तस्य उपगूढेन—स्पर्शेन, सम्पर्केणेति यावत्, उल्लसद्भिः,—उत्पाद्यमानैः, रोमाञ्चादिभिः,—पुलककम्पादिभिः, विसंष्ठुलः,—विपर्य्यस्तः, अयथाभूत इत्यर्थः, यः अखिलः,—समस्तः, विधिः,—वेदबोधितक्रियाकलापः, तस्य व्यासङ्गः,—सम्बन्धः, अत्यन्तासक्तिर्वा, तस्य भङ्गेन—व्याघातेन, तद्भयेनेति यावत्, आकुलः,—व्याकुलः, अत एव आः! तुहिनाचलस्य—हिमाद्रेः, करयोः शैत्यं—शीतलत्वम्, इति ऊचिवान्, तथा शैलस्य—हिमालयस्य, अन्तःपुरे, स्थितैरिति शेषः, मातृमण्डलगणैः,—ब्राह्मीत्यादिभिः, यद्वा,—शैलस्य अन्तःपुरवर्त्तिनो ये मातृकामण्डलाः,—मण्डलीभूता मातरः तेषां गणैः, मातृकासङ्घैरिति भावः, सस्मितं दृष्टः शिवः वः,—युष्मान्, अवतात्—रक्षतु। शार्दूलविक्रीड़ितं वृत्तम्। अत्र सत्त्वोद्रेकात् रोमाञ्चादिना कार्य्येणोद्भिन्नः स्वकीयोद्भावविशेषः तुहिनाचलकरशैत्यरूपकारणान्तरोद्भावनेन श्रीशिवेन गोपितः इति। "यद्यप्यपह्नुतोऽपि सस्मितत्वख्यापनेन पुनरप्युद्भिन्नत्वेन प्रकाशितः, तथाप्यपलापमात्रचिन्तयाऽस्यालङ्कारस्योल्लेखः। नन्वपह्नुतिग्रन्थ "यथा सादृश्याय योऽपह्नवः साऽपह्नुतिः, तथाऽपह्नवायाऽपि यत्सादृश्यं साऽप्यपह्नुतिः" इति स्थापितं, व्याजोक्तौ चोत्तरः प्रकारो विद्यते, तत् कथमियमलङ्कारान्तरेण कथ्यते? सत्यम्, उद्भटसिद्धान्ताश्रयेणोत्तरवोक्तम्; न हि तन्मते व्याजोक्त्याख्यमलङ्करणमस्ति; इह तु तस्य सम्भवाद्व्यतिरिक्तापह्नुतिरिति पृथगयमलङ्कारो निर्द्दिष्टः" इत्यलङ्कारसर्व्वस्वकाराः। यथा वा,—"श्वश्रूः क्रुध्यतु विद्विषन्तु सुहृदो निन्दन्तु वा यातरः, तस्मिन् किन्तु न मन्दिरे सखि! पुनः स्वापो विधेयो मया। आखोराक्रमणाय कोणकुहरादुत्फालमातन्वती मार्जारी नखरैः खरैः क्षतवती कां कां न मे दुर्दशाम्?॥" इति। अत्र नखदन्तक्षतादिदर्शनेन स्वव्यभिचारप्रवादप्राकट्यमाशङ्क्य तदनुमितिलिङ्गभूता नखक्षतादय उक्तप्रकारेण निगूहिताः।

(म) ननु प्रकृतगोपनेनाप्रकृतोद्भावनमपह्नुतिरुक्ता, तदनयोः को भेदः? इत्यत

स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम् ॥ ७७१ ॥ (य)

दुरूहयोः,—कविमात्रवेद्ययोः, अर्थस्य—डिम्भादेः, स्वयोः,—तदेकाश्रययोश्चेष्टास्वरूपयोः। (र)

यथा मम,—

"लाङ्गूलेनाभिहत्य क्षितितलमसकृद्दारयन्नग्रपद्भ्या-
मात्मन्येवावलीय द्रुतमथ गगनं प्रोत्पतन् विक्रमेण।

---

आह, नेयमिति।—प्रथमा—अप्रकृतनिषेधपूर्वकप्रकृतस्थापनरूपा, विषयस्य—अप्रकृतारोपविषयस्य; अत्र तु गोपनाकारिभिन्नेन काव्यादिना विषयी व्यज्यते एव, न त्वभिधीयते इति भावः। द्वितीयापह्नुतेः,—"गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन। यदि श्लेषेणान्यथा वाऽन्ययेत् साऽप्यपह्नुतिः॥" इत्युक्तलक्षणायाः तत्प्रस्तावे दर्शित इति।—तत्र गोपनकृता गोपनीयं प्रथममभिधीयते, अत्र तु न तथेति भावः। यत्तु,—"दम्पत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वचस्तत्प्रातर्गुरुसन्निधौ निगदतस्तस्यैव तारं वधूः। कर्णालम्बितपद्मरागशकलं विन्यस्य चञ्चोः पुटे व्रीडार्त्ता विदधाति दाडिमफलव्याजेन वाग्बन्धनम्॥" इत्यत्र "युक्तिः परातिसन्धानं क्रियया मर्म्मगुप्तये" इत्यलङ्कारमुक्तावल्यां दर्शितः युक्त्यलङ्कारः; व्याजोक्तौ वचसा गोपनम्, इह तु क्रियया, इति द्वयोर्भेद इति, तन्न; व्याजोक्तिलक्षणस्योभयसाधारण्यात्, तत्रोक्तिनिवेशस्य गौरवपराहतत्वात्, अन्यथा प्रकारान्तरेण गोपनस्थले अलङ्कारान्तरप्रसङ्गात्, तत्राप्युक्तक्रियान्यत्वनिवेशस्य सुवचत्वादिति दिक्।

(य) स्वभावोक्तिमाह, स्वभावोक्तिरिति।—दुरूहयोः स्वक्रियारूपयोः अर्थस्य वर्णनं स्वभावोक्तिः।

(र) दुरूहयोरिति:—डिम्भादेरित्यादिपदेन अकृत्रिमक्रियारूपवन्मात्रपशुपत्त्यादिपरिग्रहः। ("मात्रं कार्त्स्न्येऽवधारणे" इत्यमरः) स्वपदं स्वकीयपरतायां व्याचष्टे,—स्वयोरिति। तस्याप्यवधारणपरतामाह, तदेकाश्रययोरिति।—डिम्भादिमात्रगतयोरित्यर्थः। कारिकास्थं क्रियारूपपदे व्याचष्टे, चेष्टास्वरूपयोरिति।—स्वरूपं—वर्णसंस्थानादि। तत्र डिम्भस्य क्रियावर्णनं यथा,—"करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम्। वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि॥" इति ज्ञेयम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्फूर्जद्धुङ्कारघोषः प्रतिदिशमखिलान् द्रावयन्नेष जन्तून्
कोपाविष्टः प्रविष्टः प्रतिवनमरुणोच्छूनचक्षुस्तरक्षुः ॥"(ल)

**अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः।**
**यत् प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ॥७७२॥(व)**

---

(ल) आदिपदग्राह्यस्य तरक्षोः क्रियावर्णनमाह, लाङ्गूलेनेति।—कोपाविष्टः अत एव अरुणे—रक्ते, उच्छूने—स्फीते, चक्षुषी यस्य तथाभूतः, एष तरक्षुः,—शार्दूल-विशेषः, ("तरक्षुस्तु मृगादनः" इत्यमरः) असकृत्—पुनः पुनः, लाङ्गूलेन क्षितितलम् —[एतत् काकाक्षिगोलकन्यायेन पूर्व्वापरयोरन्वितम्] अभिहत्य—आहत्य, अग्र-पद्भ्यां—पादाग्राभ्यां, दारयन्—उल्लिखन्, आत्मन्येव—स्वदेहे एव, अवलीय—लीनो भूत्वा, अतिवामनीभूयेति यावत्, अथ द्रुतं—शीघ्रं, विक्रमेण—बलेन, गगनं प्रोत्पतन् —उल्लम्फन्, स्फूर्जन् हुङ्कारस्य घोषः यस्य तथोक्तः सन्, घोरं हुङ्कारं कुर्वन्नित्यर्थः, प्रतिदिशं—दिशि दिशि, अखिलान्—सर्वान्, जन्तून् द्रावयन्—ताड़यन्. भापयन्निति यावत्, प्रतिवनं—वनं प्रति, यावद्वनं वा, प्रविष्टः। ईदृशक्रिया अत्रविमा दृष्ट-तरक्षोरेव इति ज्ञेयम्। स्रग्धरा वृत्तम्। वर्णवर्णनं दण्ड्याचार्य्येणोदाहृतं यथा,—"तुण्डैराताम्रकुटिलैः पक्षैर्हरितकोमलैः। त्रिवर्णराजिभिः कण्ठैरेते मञ्जुगिरः शुकाः॥" संस्थावर्णनं यथा,—"पश्चात् पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं दीर्घ-ग्रीवः स भवति खुरास्तस्य चत्वार एव। शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्र-मात्रानास्तामितद्व्रजति स पशुर्दूरमेह्येहि यामः॥" अत्र विपुलपुच्छखुरचतुष्टयदीर्घ-ग्रीवा अश्वस्यैव संस्थानानि इति। यथा वा,—"ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्व्वकायम्। शष्पैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति॥" इति।

(व) भाविकमाह, अद्भुतस्येति।—अद्भुतस्य—असम्भवस्य, भूतस्य—अतीतस्य, भविष्यतः,—भाविनः, पदार्थस्य—वस्तुनः, यत् प्रत्यक्षायमाणत्वं—वर्णनाविशेषवशेन प्रत्यक्षवत् भासमानत्वं, तत् भाविकं—भावः,—वक्तुरभिप्रायः, स च वर्णनीयगोचरवति स्वरूपः, तद्द्योगात् भाविकमित्याशयः, तद्द्योगस्य व्यञ्जकत्वेन इति बोध्यम्; यद्वा,—भावः,—कविगत आशयः, श्रोतरि प्रतिबिम्बत्वेन अस्तीति, भावः,—भावना वा चेतसि पुनः पुनः निवेशनं, स अस्य अस्तीति; [विषयत्वाख्यसम्बन्धपरषष्ठीसामर्थ्यात्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यथा,—"मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः ।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥" (अ)

यथा वा,—"आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसम्भारां साक्षात् कुर्व्वे तवाकृतिम् ॥"(ष)

न चायं प्रसादाख्यो गुणः, भूतभाविनोः प्रत्यक्षायमाणत्वे तस्याहेतुत्वात् । न च अद्भुतो रसः, विस्मयं प्रति

---

मत्वर्थे ठन् ; यत्तु,—सोऽवास्तीति विग्रहप्रदर्शनं, तन्न ; "सप्तम्याश्च न तौ स्मृतौ" इति भाष्यकारोक्तेः ] उदाहृतम् ।

(अ) अद्भुतस्य प्रत्यक्षायमाणत्वे भाविकमाह, मुनिरिति ।—महात्मा कुम्भसम्भवः,—कुम्भोद्भूतः, योगीन्द्रः,—ऋषिश्रेष्ठः, मुनिः,—अगस्त्यः, ("अगस्त्यः कुम्भसम्भवः" इत्यमरः) जयति—सर्व्वोत्कर्षेण वर्त्ततामित्यर्थः, येन—अगस्त्येन, एकचुलुके—एकस्मिन् गण्डूषे, तौ—प्रसिद्धौ, दिव्यौ—श्रीविष्णोरवतारौ, मत्स्यकच्छपौ दृष्टौ । समुद्रपानकाले गण्डूषे समुद्रेण सह पातालनिलययोर्मत्स्यकूर्म्मयोरभ्युत्थानादिति भावः । अत्र चुलुकीकृतसमुद्रे दृश्यमानदिव्यमत्स्यकच्छपरूपमद्भुतं वस्तु मुनिश्च वर्णनाविशेषवशेन सन्निकृष्टश्रोतृणां प्रत्यक्षवद्भासते इति अतीतपदार्थस्य अद्भुतस्य प्रत्यक्षायमाणत्वम् । यथा वा सेतुबन्धे (५।२८)—"क्षुभितजलक्लिष्टसारो मुखनिर्धावितप्रसारितोल्कानिवहः । आकृष्यमाण एव ज्ञायते पतित इति सागरे रामशरः ॥" इति । अत्र बाणस्य समुद्रमध्यपाते भाविन्यपि तस्मात् प्रागेव शरपातस्य लौकिकप्रत्यक्षमुक्तं, श्रीरामप्रभावातिशयवर्णने तात्पर्य्यमिति बोध्यम् ।

(ष) भूतभाविनोः प्रत्यक्षायमाणत्वे भाविकमाह, आसीदिति ।—अत्र अञ्जनमासीदिति तव लोचने—नयने, पश्यामि, तव आकृतिश्च भाविनः,—भविष्यन्तः, भूषणानां सम्भाराः,—समूहाः, यस्यास्तादृशीं, साक्षात् कुर्वे—पश्यामीत्यर्थः । अत्र पूर्व्वार्द्धे भूतस्य परार्द्धे भाविनः प्रत्यक्षायमाणत्वं नयनशोभाविशेषवशेनाञ्जनं सौन्दर्य्यातिशयवशीकृतस्य धनिनः पत्युरादरातिशयेन भूषणसम्भारमनुमाय सख्या तथाऽभिहितं, यथा भूतभाविनावपि अञ्जनभूषणसम्भारौ सन्निकृष्टश्रोतृणां प्रत्यक्षवद्भासेते । केचित्तु,—"यौवनोद्भेदादञ्जनं विनापि चक्षुषि तच्छोभा, भूषणाभावेऽपि वपुषि तच्छोभारम्भः" इति व्याचक्षते, तन्न ; तादृशार्थस्य व्यञ्जकाभावेनाप्रतीतेः, भूतभाविनोरञ्जनभूषणयोः प्रत्यक्षायमाणत्वे वक्तृतचारुत्वे एव तात्पर्य्यात् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अस्य हेतुत्वात्। न च अतिशयोक्तिरलङ्कारः, अध्यवसायाभावात्। न च भ्रान्तिमान्, भूतभाविनोर्भूतभावितयैव प्रकाशनात्। न च स्वभावोक्तिः, तस्य लौकिकवस्तुगतसूक्ष्मधर्म्मस्वभावस्यैव यथावद्वर्णनं स्वरूपम्। अस्य तु वस्तुनः प्रत्यक्षायमाणत्वरूपो विच्छित्तिविशेषोऽस्तीति ; (स) यदि पुनर्वस्तुनः क्वचित् स्वभावोक्तावपि अस्या विच्छित्तेः सम्भवस्तदोभयोः सङ्करः।

"अनातपत्नोऽप्ययमत्र लक्ष्यते
सितातपत्नैरिव सर्व्वतो वृतः।
अचामरोऽप्येष सदैव वीज्यते
विलासबालव्यजनेन कोऽप्ययम्॥" (ह)

---

(स) ननु सन्निकृष्टपदार्थस्य वर्णनातः प्रत्यक्षायमाणत्वं तदा भवति, यदि प्रसन्नार्थाः शब्दाः प्रयुज्यन्ते ; एवं सति प्रसादाख्यो गुण एवायमित्यभिप्रायेणाशङ्कते, न चायं प्रसादाख्यो गुण इति।—भूतभाविनीरित्यद्भुतस्याप्युपलक्षणम्। तस्य—प्रसादगुणस्य। अद्भुतस्य प्रत्यक्षायमाणत्वपक्षे शङ्कते, न चाद्भुतो रस इति।—विस्मयं—चमत्कारं, चमत्कारायोगे रसरूपत्वासम्भवादिति भावः। नन्वत्र वर्णनीयगतः कोऽप्यतिशयः प्रतीयते, इत्यतिशयोक्तिरेवायमित्याशङ्कते, न चातिशयोक्तिरिति।—अध्यवसायाभावात्—अभेदारोपाभावात्। ननु भूतभाविपदार्थाभाववति तत्प्रकारकप्रतीतिरत्रास्तीति भ्रान्तिमानेवायमित्याशङ्कते, न च भ्रान्तिमानिति।—भूतभाविनोर्वर्त्तमानत्वेन भानेऽपि भ्रमः सम्भवतीति तद्वारणाय भूतभावितयैवेत्युक्तं, प्रकाशनात्—तद्रूपेण विषयीकरणात्। तस्य—स्वभावोक्त्यलङ्कारस्य। सूक्ष्मेति कविमात्रवेद्य इत्यर्थः। यथावद्वर्णनं—सम्भावनाऽतिक्रमेण वर्णनम्। अस्य—भाविकालङ्कारस्य तु। विच्छित्तिविशेषोऽस्तीति।—अत्र इतिशब्दो हेतौ इति।

(ह) अनातपत्र इति।—अयम् अनातपत्रः,—छत्ररहितोऽपि, अत्र—अस्मिन् समये, स्थाने वा, सितातपत्रैरिव—श्वेतच्छत्रैरिव, सर्व्वतः,—समन्तात्, वृतः,—आवृतः, लक्ष्यते ; एष अचामरः,—चामरपरिहीणः, अपि सदैव—नित्यमेव, विलासबालव्यजनेन—शुभ्रतया दीप्यमानचामरेण इत्यर्थः, वीज्यते, अतः कोऽपि—अलोकसामान्यगुण इत्यर्थः, अयं—पुरुष इति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र प्रत्यक्षायमाणस्यैव वर्णनान्नायमलङ्कारः। वर्णनावशेन प्रत्यक्षायमाणत्वस्य अस्य स्वरूपत्वात्। यत् पुनरप्रत्यक्षायमाणस्यापि वर्णने प्रत्यक्षायमाणत्वं तत्र अयमलङ्कारो भवितुं युक्तः। यथोदाहृते "आसीदञ्जनम्" इत्यादौ। (क)

(क) अत्रेति।—अत्र सदनुमानवशेन वक्तुः प्रत्यक्षायमाणयोः सितातपत्रचामरयोर्वर्णनं, न तु वर्णनाविशेषवशेन श्रोतॄणां तयोः प्रत्यक्षायमाणत्वम् इति नास्ति भाविकावसर इति भावः। अस्य—भाविकालङ्कारस्येत्यर्थः। ननु एवम् "आसीदञ्जनम्" इत्यादावपि सदनुमानवशेन प्रत्यक्षायमाणत्ववर्णनम् इति नास्य विषयः, इत्यत आह, यत्पुनरिति।—यत्—यदा, धर्म्मिसन्निकर्षादिरूपहेतुभावदशायामित्यर्थः। वर्णने इति।—वर्णने—वाग्वैचित्र्यविशेषे सतीत्यर्थः। तत्राय-मिति।—तत्राप्ययमित्यर्थः। न चातपत्रोऽपीत्यादावपि उक्तरीत्या भाविकप्रसक्तिरिति वाच्यम्; श्रोतॄणां धर्म्मिसन्निकर्षाभावेन प्रत्यक्षायमाणत्वाभावात् तस्यापि प्रकृतोपयोगित्वेन विवक्षणीयत्वात् इति। अत्र कौस्तुभाशयः,—ननु कारणाभावेऽपि कार्य्योत्पत्तिरूपायाः विभावनायाः कोऽस्य भेदः? लौकिकप्रत्यक्षं प्रति विषयस्य हेतुतया अनागतातीतविषयरूपहेतुव्यतिरेकेऽपि तत्प्रत्यक्षरूपकार्य्योत्पत्तिः। एवं द्वितीयभेदस्यातिशयोक्तावेवान्तर्भावः, कारणात् प्रागेव कार्य्योत्पत्तेरभिधानात्; न चात्र "यः कौमारहरः—" इत्यादिवत् हेत्वभावत्वेनोक्तिः नास्तीति वाच्यम्; "आसीदञ्जनमत्रेति" "विरतेऽपि गीतसनये" इत्यादौ तत्तद्भूतभाव्यर्थकप्रत्ययैर्हेतूनां ध्वंसप्रागभावबोधनेन हेत्वभावोक्तिसत्त्वात्; "अनातपत्रोऽप्ययमत्र लक्ष्यते" इत्यादौ नञैव तदभावबोधनात्, इति चेत्; उच्यते,—कारणतावच्छेदकरूपावच्छिन्नप्रतियोगिताकसंसर्गाभावत्वेन हेत्वभावोक्तौ विभावना, इह तु उक्तरूपावच्छिन्नप्रतियोगिताकत्वं ध्वंसप्रागभावयोः न सम्भवत्येव, तयोः सामान्यावच्छिन्नप्रतियोगिकत्वाभावात्। "अनातपत्रोऽपि" इत्यादौ तु विभावनासत्त्वेऽपि न क्षतिः; एवं द्वितीयभेदस्यातिशयोक्तावपि नान्तर्भावसम्भवः, विषयतातिरिक्तसम्बन्धावच्छिन्नकार्य्यतावच्छेदकधर्म्मावच्छिन्नतादात्म्यातिरिक्तसम्बन्धावच्छिन्नकारणतावच्छेदकधर्म्मावच्छिन्नात् प्रागुत्पत्तावेवातिशयोक्तेरभ्युपगम्यत्वात्, "कारणात् प्राक् कार्य्योत्पत्तिः" इत्यनेन प्रकारेणोक्तावेवातिशयोक्तिः; भाविविषयप्रत्यक्षत्वेनोक्तौ भाविकमित्यङ्गीकारात, तन्मुखाभिधानानभिधानयोः एव नियामकत्वाच; किञ्च; तत्रत्यं कार्य्यतावच्छेदकं कार्य्याधिकरणवृत्तिप्रागभावप्रतियोगित्वेनोक्तं यत्कारणं तत्प्रतियोगिककार्य्यतावच्छेदकम्, अत्र तु

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते।
यद्वाऽपि प्रस्तुतस्याङ्गं महतां चरितं भवेत्॥७७३॥(ख)

क्रमेण उदाहरणम्,—

"अधःकृताम्भोधरमण्डलानां यस्यां शशाङ्कोपलकुट्टिमानाम्।
ज्योत्स्नानिपातात् क्षरतां पयोभिः केलीवनं वृद्धिमुरीकरोति॥"(ग)

---

प्रागभावप्रतियोगित्वेन यत्कारणमुक्तं, तदतिरिक्तकारणताप्रतियोगिककार्य्यतावच्छेदकम् इति भेदः, इति दिक्।

(ख) उदात्तमाह, लोकेति।—लोकातिशयसम्पत्तिवर्णना—लोकानतिशेते—अतिक्रामति, या सम्पत्तिः,—धनसमृद्धिः, तस्याः वर्णना—व्यञ्जनया ज्ञापनम्, अलौकिकसमृद्धिवर्णनमिति यावत्; अन्यविधमुदात्तमाह, यद्वेति।—यद्वा,—महतां—प्रस्तुतसम्बन्धिमहतामित्यर्थः चरितं—महत्त्वप्रतिपादकसाधर्म्यं, प्रस्तुतस्य—प्रक्रान्तस्य, वर्णनीयस्य इत्यर्थः, अङ्गं भवेत्, तदपि उदात्तम् उच्यते; प्रस्तुतमहत्त्वव्यञ्जकप्रस्तुतमहत्त्वसम्बन्धिचरितमुदात्तमित्याशयः। स्वभावोक्तौ भाविके च यथावद्वस्तुवर्णनं, तद्विपक्षत्वेनारोपितवस्त्वात्मन उदात्तस्यावसरः; तत्र असम्भाव्यमानविभूतियुक्तस्य वस्तुनो वर्णनं कविप्रतिभोत्थापितमैश्वर्य्यलक्षणम् उदात्तमिति तात्पर्य्यम्।

(ग) अध इति।—नगरीवर्णनमिदम्। यस्यां—पुर्य्याम्, अधःकृतानि—नीचैः कृतानि, अम्भोधरमण्डलानि—मेघपटलानि, यैः तादृशानाम्, अभ्रङ्कषाणामित्यर्थः, ज्योत्स्नानिपातात्—गृहमध्ये कौमुदीप्रभापातात् इत्यर्थः, क्षरतां—स्रवतां, शशाङ्कोपलकुट्टिमानां—चन्द्रकान्तमणिनिर्म्मितगृहभूमीनां, पयोभिः,—जलैः, ("पयः क्षीरं पयोऽम्बु च" इत्यमरः) केलीवनं—क्रीड़ाकाननं, वृद्धिम् उरीकरोति—अङ्गीकरोति, प्राप्नोतीत्यर्थः। चन्द्रकिरणसम्पर्कात् चन्द्रकान्तमणेर्निस्रावः प्रसिद्धः। अत्र पौराणां समृद्धातिशयो व्यङ्ग्यः। उपजातिः वृत्तम्। यथा वा,—"मुक्ताः केलिविसूत्रहारगलिताः सम्मार्जनीभिर्हृताः प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षाऽरुणाः। दूराद्दाड़िमबीजशङ्कितधियः कर्षन्ति केलीशुका यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम्॥" इति। यथा वा,—"नीवीबन्धोच्छ्वसनशिथिलं यत्र यक्षाङ्गनानां वासः कामादनिभृतकरेष्वाक्षिपत्सु प्रियेषु। अर्चिस्तुङ्गानभिमुखमपि प्राप्य रत्नप्रदीपान् ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः॥" इति।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"नाभिप्रभिन्नाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा ।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते ॥"(घ)

**रसभावौ तदाभासौ भावस्य प्रशमस्तथा ।**
**गुणीभूतत्वमायान्ति यदाऽलङ्कृतयस्तदा ॥**
**रसवत् प्रेय ऊर्जस्वि समाहितमिति क्रमात् ॥७७४॥ (ङ)**

(घ) नाभीति ।—समुद्रवर्णनमिदम् । युगान्ते—कल्पान्ते, उचिता—अभ्यस्ता, योगनिद्रा यस्य तादृशः, पुरुषः,—नारायणः, नाभेः,—नाभिदेशात्, प्रभिन्नम्—उत्थितम्, उत्पन्नमिति यावत्, यत् अम्बुरुहं—पद्मं, तदेव आसनं यस्य तथोक्तेन, प्रथमेन धात्रा—आदिस्रष्ट्रा, ब्रह्मणा इत्यर्थः, संस्तूयमानः सन् लोकान्—जगन्ति, संहृत्य—स्वकुक्षौ सङ्गोप्येत्यर्थः, अमुं—समुद्रम्, अधिशेते । अत्र प्रस्तुतसमुद्रस्य महत्त्वव्यञ्जकं सर्व्वलोकसंहारकस्य महती हरेः चरितम् अङ्गम् । रघुवंशस्येदं पद्यम् । यथा वा,—"तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी । निवसन् बाहुसहायश्चकार रक्षःक्षयं रामः ॥" अत्रारण्ये वर्णनीये रामचरितमङ्गत्वेन वर्णितम् इति ।

(ङ) उदात्ते महापुरुषचरितस्य चित्तवृत्तिरूपत्वात् चित्तवृत्तिविशेषस्वभावलाच्च रसादीनामिह तदलङ्काराणां प्रस्तावः, अत एव चत्वारोऽलङ्काराः युगपत् लक्षिताः, तद्यथा रसेति ।—रसः,—शृङ्गारहास्याद्यन्यतमः, विभावानुभावव्यभिचारिभिः प्रकाशितो रत्यादिश्चित्तवृत्तिविशेष इति यावत्, भावः,—विभावानुभावाभ्यां सूचितः निर्वेदादिः त्रयस्त्रिंशद्भेदाः, देवादिविषयो रत्यादिश्च तौ, तदाभासौ—तयोराभासौ, शृङ्गाराद्यन्यतमाभासः निर्वेदाद्यन्यतमाभासश्च, आभासत्वम्—अविषयप्रवृत्त्यानौचित्यम् इत्यर्थः, भावस्य—निर्वेदाद्यन्यतमस्य व्यभिचारिभावस्य, प्रशमः,—उक्तप्रकाराभ्यां निवर्त्तमानत्वेन प्रशाम्यदवस्था इति यावत्, तत्रापि रसस्य परविश्रान्तिरूपत्वात् सा न सम्भवति इति परिशिष्टभेदविषयः भावतदाभासतत्प्रशमविषय इत्यर्थः द्रष्टव्यः इति भावः, इत्येते यदा गुणीभूतत्वं—गुणीभावं, गुणीभूतरसान्तरादीनामुत्कर्षाधायकत्वेन रसाङ्गत्वमित्यर्थः, आयान्ति—रसान्तराङ्गतयाऽप्रधाना भवन्तीति यावत्, तदा क्रमात् रसवत्—रसो विद्यते यत्र व्यापारात्मनि निबन्धे तदिति विग्रहः, तथा हि,—यत्र तु रसोऽन्यस्मिन्नर्थे अङ्गत्वं भजति, तत्रान्योपकारकत्वात् एष इति भावः; प्रेय इति भावस्य तथात्वे इत्यर्थः, रसाभासो भावाभासश्चेत्येतद्द्वयम् ऊर्जस्वीति, तदाभासयोरितराङ्गत्वे इत्यर्थः, भावप्रशमः समाहितं, भावप्रशमस्य इतराङ्गत्वे इत्यर्थः;

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तदाभासौ—रसाभासो भावाभासश्च । तत्र रसयोगाद्रसवदलङ्कारो यथा,—"अयं स रसनोत्कर्षी—" इत्यादि । अत्र शृङ्गारः करुणस्याङ्गम् । एवमन्यत्रापि । (च) प्रकृष्टप्रियत्वात् प्रेयः । यथा मम,—

"आमीलितालसविवर्त्तिततारकाक्षीं
मत्कण्ठबन्धनदरश्लथबाहुवल्लीम् ।
प्रस्वेदवारिकणिकाचितगण्डबिम्बां
संस्मृत्य तामनिशमेति न शान्तिमन्तः ॥" (छ)

---

"न भावहीनोऽस्ति रसः" इत्युक्तदिशा रसव्यभिचारिभावयोरव्यभिचारेणालङ्कार्यालङ्कारभावासम्भवात्, तयोरङ्गाङ्गिभावेनैतदलङ्कारप्रसङ्ग इति ध्येयम्; इति अलङ्कृतयः, भवन्तीति शेषः,—इत्यलङ्कारव्यपदेश्यतां भजन्ते इत्यर्थः ।

(च) तत्रेति । रसवत उदाहरणमाह,—अयमिति ।—व्याख्यातोऽयं प्राक् ३२७ पृ० । यथा वा,—"किं हास्येन न मे प्रयास्यसि पुनः प्राप्तश्चिराद्दर्शनं केयं निष्करुण ! प्रवासरुचिता केनासि दूरीकृतः । स्वप्नान्तेष्विति ते वदन् प्रियतमव्यासक्तकण्ठग्रहो बुद्ध्वा रोदिति रिक्तबाहुवलयस्तारं रिपुस्त्रीजनः ॥" अत्र हि करुणो रसो विप्रलम्भशृङ्गाराङ्गभावं प्राप्त इति । एवमन्यत्रापीति ।—वीरादेः शृङ्गाराद्यङ्गत्वेऽप्युदाहरणान्यूह्यानीत्यर्थः । करुणस्य भावाद्यङ्गत्वे उदाहरणं गुणीभूतव्यङ्ग्यप्रकरणे "मानोन्नतां प्रणयिनीम्—" इत्यादि स्वयमेवोक्तम् ।

(छ) आमीलितेति ।—सखायं प्रति कस्यचिदुक्तिः । आमीलिते—ईषत् सङ्कुचिते, अलसं यथा तथा विवर्त्तिते—चालिते, तारके ययोः तादृशी अक्षिणी यस्यास्तां, सुरतान्ते निद्रावेशपरामिति भावः, यद्वा,—अलसेन—रसावेशजनितालस्येन, विवर्त्तितं—स्थिरीकृतं, तारकं यस्य तादृशमक्षि यस्याः तां, मम कण्ठबन्धने—कण्ठालिङ्गने, दरश्लथा—ईषच्छिथिला, बाहुवल्ली यस्यास्तथाविधां, तथा प्रस्वेदवारिकणिकाभिः,—सुरतश्रमात् सञ्जातप्रकृष्टस्वेदबिन्दुभिः, आचितं—व्याप्तं, गण्डबिम्बं—कपोलमण्डलं यस्याः तादृशीं, तां—मत्कान्ताम्, अनिशं—सततं, संस्मृत्य अन्तः—अन्तःकरणं, शान्तिं न एति—न गच्छति । वसन्ततिलकं वृत्तम् । यथा वा,—"गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा सान्द्रस्वेदरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा । मा मा मानद ! माति मामलमिति क्षामाक्षरोल्लापिनी सुप्ता किं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र सम्भोगशृङ्गारः स्मरणाख्यभावस्याङ्गं, स च विप्रलम्भस्य । ऊर्जः,—बलम्, अनौचित्यप्रवृत्तौ तदत्रास्तीत्यूर्जस्वि । यथा,—

"वनेऽखिलकलाऽऽसक्ताः परिहृत्य निजस्त्रियः ।
त्वद्वैरिवनितावृन्दे पुलिन्दाः कुर्व्वते रतिम् ॥" (ञ)

अत्र शृङ्गाराभासो राजविषयरतिभावस्याङ्गम् । एवं भावाभासोऽपि । समाहितं परीहारः । (झ) यथा,—

---

नु ! मृता नु किम ! मनसि मे लीना विलीना नु किम !! ॥" अत्र नायिकायां हर्षाख्यो व्यभिचारिभावः । यथा वा,—"तद्वक्त्रामृतपानदुर्ललितया दृष्ट्या क्व विश्रम्यताम् ? तद्वाक्यश्रवणाभियोगपरयोः श्राव्यं कुतः कर्णयोः । एभिस्तत्परिरम्भनिर्भरतरैरङ्गैः कथं स्थीयताम् ? कष्टं तद्विरहेण सम्प्रति वयं क्वेमामवस्थां गताः ॥" अत्र चिन्ताख्यो व्यभिचारिभावः ।

(ञ) वने इति ।—राजस्तुतिरियम् । हे राजन्निति अध्याहार्य्यं, पुलिन्दाः,—किरातभेदाः, म्लेच्छजातिविशेषा इति यावत्, वने अखिलकलासक्ताः,—चतुःषष्टिकलासु निपुणा इत्यर्थः, निजस्त्रियः परिहृत्य—परित्यज्य, तव वैरिणां—शत्रूणां, वनितावृन्दे—कान्तासमूहे, रतिं—विहारं, कुर्व्वते । यथा वा,—"देव ! त्वत्परिपन्थिपार्थिवसमालोकैकसत्तात्मनां कान्तारेषु पुलिन्दराजनिवहप्राणप्रियाणामपि । तेषामेव तथाऽवरोधनवधूलावण्यमुत्पश्यतां तेषाञ्चापि परस्परं कथमहो जातानुरागव्रतिः ॥" अत्र शवरीनिष्ठवैरिराजविषयकः शवरनिष्ठवैरिस्त्रीविषयकश्च रसाभासः कविनिष्ठराजविषयकभावस्य इति सारः । यथा वा,—"दूराकर्षणमोहमन्त्र इव मे तन्नाम्नि याते श्रुतिं चेतः कालकलामपि प्रकुरुते नावस्थितिं यां विना । एतैराकुलितस्य विक्षततरैरङ्गैरनङ्गातुरैः सम्पद्येत कदा तदाप्तिसुखमित्येतन्न वेद्मि स्फुटम् ॥" अत्र रावणस्याभिलाषकी विप्रलम्भशृङ्गारः ; औत्सुक्यञ्च व्यभिचारिभावः ।

(झ) अत्रेति ।—अत्र—"वनेऽखिल" इत्यादिश्लोके, परोढ़ाविषयत्वाच्छृङ्गाराभासः । एवं भावाभासोऽपीति ।—भावाभासस्याङ्गत्वेऽपीत्यर्थः । एतदुदाहरणं यथा, —"वन्दीकृत्य नृपद्विषां मृगदृशस्ताः पश्यतां प्रेयसां श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः । अस्माकं सुकृतैर्दृशां निपतितोऽस्यौचित्यवारां निधे ! विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥" अत्र राजविषयकरतिभाव-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"अविरलकरवालकम्पनै-
र्भ्रुकुटीतर्ज्जनगर्ज्जनैर्मुहुः।
ददृशे तव वैरिणां मदः
स गतः क्वापि तवेक्षणे क्षणात्॥" (ञ)

अत्र मदाख्यभावस्य प्रशमो राजविषयरतिभावस्याङ्गम्।

**भावस्य चोदये सन्धौ मिश्रत्वे च तदाख्यकाः॥७७५॥**

तदाख्यकाः,— भावोदय-भावसन्धि-भावशबलनामानोऽलङ्काराः। (ट) क्रमेण उदाहरणम्,—

---

स्योत्तराङ्गयोत्यो भावः प्रभुविषयत्वादाभासरूपोऽङ्गम्। परीहारः,—परित्यागः, विलय इति यावत्।

(ञ) अविरलेति।—हे राजन्! अविरलैः,—घनैः, सन्ततैरित्यर्थः, करवालानाम्—असीनां, कम्पनैः,—आस्फालनैः, तथा मुहुः,—पुनः पुनः, भ्रुकुटीभिः, तर्जनैः, गर्जनैश्च, तव वैरिणां मदः,—गर्वः, ददृशे—दृष्टः, सः,—मदः, क्षणात् तव ईक्षणे—दर्शनमात्रे, क्वापि गतः,—विलयं प्राप्त इत्यर्थः। वैतालीयं वृत्तम्;— "षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः। न समाऽत्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः॥" इति च तल्लक्षणम्। यथा वा,—"अस्मिन्नेव जने विधेयमधुना व्यावर्त्तितेच्छं मनो दूत्यं वा प्रथितः कुले कथमिति चिन्ता विमर्षो मया। इत्येवं बहुदोषमाधिगहनं यत्कार्य्यमङ्गीकृतं तन्मामूनमुचिद्विषो मयि सुधैवाभ्यर्थनाविस्तरः॥" अत्र विमर्षभावशान्तिर्नलनिष्ठेन्द्रविषयकभावस्येति समाहितम्।

(ट) भावोदयादीनामलङ्कारत्रयमाह, भावस्येति।—भावस्य उदये, सन्धौ मिश्रत्वे च, चकाराद्गुणीभूतत्वमायाति सति, चेत्यनुवर्त्तते [अत्राय।तीति सप्तम्यन्तमवगन्तव्यं, योग्यत्वात्] तदाख्यकाः,—तन्नामानः, अलङ्काराः भवन्ति इति शेषः। एवं भावोदयभावशबलत्वयोरलङ्कारत्वं विशेषसंज्ञानभिधानात् स्वसंज्ञयैवेति ज्ञेयम्। तथा चात्र—"भावोदयो भावसन्धिर्भावशबलता च पृथगलङ्कारः" इति। अस्यार्थः,—भावस्य—उक्तरूपस्य, उदयः,—उद्गमावस्था, सन्धिः,—द्वयोर्विरुद्धयोः स्पर्द्धित्वेनोपनिबन्धः, शबलता च—बहूनां पूर्व्वोपमर्देन निबन्धः, एते च पृथक्—रसवदादिभ्यो भिन्नाः, अलङ्कारा इति बोध्यम्। एतत्प्रतिपादनं चोद्भटादिभिरेषां पृथगलङ्कारत्वेनानिर्द्दिष्टत्वात्; अथ च सङ्करसंसृष्टिवैलक्षण्येन, एते च सर्वालङ्काराः पृथक्केवलत्वेनाल-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः ।
श्रुत्वा कुतोऽपि त्वन्नाम लेभिरे विषमां दशाम् ॥" (ठ)

अत्र त्रासोदयो राजविषयरतिभावस्याङ्गम् । (ड)

"जन्मान्तरीणरमणस्याङ्गसङ्गसमुत्सुका ।
सलज्जा चान्तिके सख्याः पातु नः पार्व्वती सदा ॥" (ढ)

अत्रौत्सुक्यलज्जयोश्च सन्धिर्देवताविषयरतिभावस्याङ्गम् ।

"पश्येत् कश्चिच्चल चपल रे ! का त्वराऽहं कुमारी
हस्तालम्बं वितर हहहा ! व्युत्क्रमः क्वासि यासि ? ।
इत्थं पृथ्वीपरिवृढ़ ! भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित् फलकिसलयान्याददानाऽभिधत्ते ॥" (ण)

---

ङ्कारा इति सर्वालङ्कारशेषत्वेनोक्तम्; संसृष्टिसङ्करयोर्हि सम्भूततयाऽलङ्काराणां स्थितिः, तद्वैलक्षण्यप्रतिपादनमेतत् इति सर्वस्वकाराः ।

(ठ) मध्विति ।—ते वैरिणः,—शत्रवः, सुहृद्भिः,—सखिभिः, सह मधुपाने—मद्यपाने, प्रवृत्ताः,—उद्यताः, अपि कुतोऽपि—कस्मादपि, जनादिति शेषः, तव नाम श्रुत्वा विषमां—वैक्लव्यकारिणीं, दशाम्—अवस्थां, लेभिरे—प्रापुः । यथा वा,—"साकं कुरङ्गकदृशा मधुपानलोलां कर्त्तुं सुहृद्भिरपि वैरिणि च प्रवृत्ते । अन्याभिधायि तव नाम विभो ! गृहीतं केनापि तव विषमामकरोदवस्थाम् ॥" इत्यत्र त्रासस्योदयो राजविषयिण्या रतेरङ्गम् ।

(ड) अत्रेति ।—अत्र त्रासस्य भावस्य उदयः राजविषयरतेरङ्गम् ।

(ढ) जन्मान्तरीणेति ।—जन्मान्तरीणस्य—पूर्वजन्मनि भूतस्य, रमणस्य—पत्युः हरस्य, अङ्गसङ्गे समुत्सुका—उत्कण्ठिता, अत एव सख्या अन्तिके—समीपे, सलज्जा च पार्वती सदा नः,—अस्मान्, पातु—रक्षतु । यथा वा,—"वामेन नारीनयनाश्रुधारां कृपाणधारामथ दक्षिणेन । उत्पुंसयन्नेकतरः करेण कर्त्तव्यमूढ़ः सुभटो बभूव ॥" अत्र स्नेहाख्यरतिभावरणौत्सुक्ययोः सन्धिः ।

(ण) पश्येदिति ।—स्वकामुकं कञ्चित् शबरयुवानं प्रति प्रतिपक्षराजभयेन वनं गतस्य कस्यचित् राज्ञः कुमार्य्याः कन्याया उक्तिवर्णनप्रसङ्गेन राज्ञः स्तुतिरियम् । कश्चित् पश्यन्, रे चपल !—दुर्विनीत इत्यर्थः, चल—गच्छ, इतोऽपसरेत्यर्थः, का त्वरा ?—औत्सुक्यम् ? अहं कुमारी—अजातपरिणया, हस्तालम्बं वितर—हस्तं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र शङ्काऽसूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता राजविषयरतिभावस्याङ्गम्।(त) इह केचिदाहुः,—"वाच्यवाचकरूपालङ्करणमुखेन रसाद्युपकारका एवालङ्काराः। रसादयस्तु वाच्यवाचकाभ्यामुपकार्य्या एवेति न तेषामलङ्कारता भवितुं युक्ता" इति ; अन्ये तु—"रसाद्युपकारमात्रेणेहालङ्कृतिव्यपदेशो भाक्तश्चिरन्तनप्रसिद्धा अङ्गीकार्य्य एव"इति। अपरे च—"रसाद्युपकारमात्रेणालङ्कारत्वं मुख्यतो रूपकादौ तु वाच्याद्युपधानम् अजागलस्तनन्यायेन" इति। अभियुक्तास्तु—"स्वव्यञ्जकवाच्यवाचकाद्युपकृतैरङ्गभूतैः रसादिभिरङ्गिनो रसादेर्वाच्यवाचकोपस्कारद्वारेणोपकुर्व्वद्भिरलङ्कृतिव्यपदेशो लभ्यते। समासोक्तौ तु नायकादिव्यवहारमात्रस्यैवालङ्कृतिता, न तु आस्वादस्य,

गृहाणेत्यर्थः, हहहा—दैन्यसूचकमव्ययमेतत्, व्युत्क्रमः,—वैपरीत्यम्, अहं राजकन्या, कथमिममधमजातिं स्पृशामीति स्वस्या अवस्थाविपर्य्यय इति भावः, असि—त्वं, क्व—कुत्र, यासि ? हे पृथ्वीपरिवृढ़ !—पृथिवीपते ! अरण्यवृत्तेः,—वनाश्रयस्य, भवद्विद्विषः,—भवद्रिपोः, कन्या फलकिसलयानि—फलनवपल्लवानि, ("पल्लवोऽस्त्री किसलयम्" इत्यमरः) आददाना—चिन्वती सती, कश्चित्—शबरयुवानमिति भावः, इत्थम्—उक्तप्रकारम्, अभिधत्ते—कथयति। मन्दाक्रान्ता वृत्तम्। यथा वा,—"अप्यादिर्जगतां नवी लवणिमा सीदन्ति गात्राणि किं रज्यन्ते न हि मानसानि विषये प्रत्यङ्गिरुद्धात्मनाम्। धिग् वृत्तिं मनसः स्पृहातरलितां लभ्येत वाऽयं मया प्रेयानित्यचलाधिराजतनयाचिन्ता चिरं पातु वः॥" इत्यत्र भगवदालोकनेन भगवत्या महेश्वर्य्यां विस्मयश्रममतिनिर्वेदौत्कण्ठानां शाबल्यं कविनिष्ठस्य महेश्वरीविषयकस्य भक्त्यपरपर्य्यायस्य रतिभावस्याङ्गम्। यथा वा,—"क्वाकार्य्यं शशलक्ष्मणः—" इत्यादि, अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां भावानां शबलता, तदेते चित्तवृत्तिगतत्वेनालङ्कारा दर्शिताः इति ज्ञेयम्।

(त) अत्रेति।—पश्येत् कश्चिदिति शङ्का, चल चपल रे इति असूया, का त्वरेति धृतिः, अहं कुमारीति स्मृतिः, हस्तालम्बं वितर इति श्रमः, हहहेति दैन्यं, व्युत्क्रम इति विबोधः, क्वासि यासीति औत्सुक्यम्, एतेषां शबलता—मिश्रणम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तस्योक्तरीतिविरहात्" इति मन्यन्ते। अत एव ध्वनिकारेणोक्तम् (थ),—

(थ) इदानीं रसवदादीनां अलङ्कारत्वमस्वीकुर्व्वतां केषाञ्चिन्मतमाह, इहेति।—वाच्यवाचकरूपालङ्करणमुखेन—वाच्यः,—अभिधेयोऽर्थः, स च वाचकः,—अभिधायकः शब्दः, स चेति तावेव रूपं यस्य तादृशस्य, काव्यस्येत्यर्थः, यदलङ्करणं—शोभोत्पादनं, तन्मुखेन—तद्द्वारा, शब्दार्थस्वरूपशोभाजननद्वारेणेत्यर्थः, रसादीनां—रस-भाव-रसाभास-भावाभासादीनाम्, उपकारकाः,—पोषका एव, रसवदादय इति शेषः, अलङ्काराः,—अलङ्कारपदव्यपदेश्या भवन्तीति भावः। रसादयः,—रसभावतदाभासभावप्रशमभावोदयभावसन्धिभावशबलताः पूर्वोक्ताः, पुनः वाच्यवाचकाभ्याम्—अर्थशब्दद्वारा, उपकार्य्याः,—अलङ्कार्य्याः एव, न तु तयोरुपकारकाः, येनालङ्कारा इति व्यपदेष्टुं शक्येरन्निति भावः, इति—अस्मात् कारणात्, तेषां—रसादीनाम्, अलङ्कारता—अलङ्कारत्वलक्षणलक्षिततया स्वीकार्य्यत्वं, भवितुं न—नैव, युक्ता इति केचिद् आहुः। अन्ये पुनः "रसादीनामुपकारः तन्मात्रेण इह—रसवदादौ, यः अलङ्कृतेर्व्यपदेशः,—अलङ्कारपदप्रयोगः, सः भाक्तः,—गौणः, चिरन्तनप्रसिद्ध्या—प्राचीनमतेन। एतेभ्योऽपि भिन्नानां मतमाविष्करोति, रसाद्युपकारमात्रेणेति।—अलङ्कारत्वमिति मुख्यलक्षणमिति भावः। वाच्याद्युपधानं—वाच्यवाचकालङ्करणमित्यर्थः। अजागलस्तनन्यायेनेति।—यथा छागस्य गलदेशवर्त्ती स्तनः दुग्धानुपयोगितया निष्प्रयोजनः, तथा रसादेरुपकारकत्वाभावेन प्रकृतानुपयोगी इति निष्प्रयोजन इत्यर्थः। अभियुक्ताः,—मान्याः। स्वव्यञ्जकेति।—स्वम्—अङ्गभूतं रसादि तद्व्यञ्जकौ यौ वाच्यवाचकौ—अर्थशब्दौ, ताभ्याम् उपकृतैः,—पुष्टिं नीतैः, अङ्गभूतैः,—अप्रधानतया स्थितैः, न तु प्रधानीभूतरसादिव्यञ्जकाभ्यामिति भावः, प्रत्युत स्वव्यञ्जकशब्दार्थघटितत्वेन तयोरुपकारक एवाङ्गरसादय, न तूपकार्य्याः इति सारः। अङ्गिनः,—मुख्यस्य, वाच्यवाचकोपस्कारद्वारेण—अर्थशब्दाभ्यां य उपस्कारः स एव द्वारं तेन, [ एतेन रसादयस्तु वाच्यवाचकाभ्यामुपकार्य्या एवेति यद्दूषणमुक्तं तन्निरस्तमिति बोध्यम् ]। नन्वेव गुणप्रधानभावेनालङ्कारालङ्कार्य्यभावः उपपद्यतां, समासोक्तौ तु व्यवहारसमारोपजन्यास्वादस्यालङ्कारत्वस्वीकारेऽलङ्कार्य्याभावात् कथं स उपपद्यते ? इत्यत आह, समासोक्तौ त्विति।—व्यवहारमात्रस्य—प्रस्तुते वस्तुनि अप्रस्तुतसाधर्म्यारोपमात्रस्य, न तु तज्जन्यास्वादस्येत्यर्थः। उक्तरीतिविरहादिति।—वाच्यवाचकालङ्कारद्वारेण रसाद्युपकारकत्वस्याभावादित्यर्थः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गन्तु रसादयः।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः॥" इति (द)

यदि च रसाद्युपकारमात्रेणालङ्कृतित्वं, तदा वाचकादिष्वपि तथा प्रसज्येत। एवञ्च यच्च कैश्चिदुक्तं—"रसादीनाम् अङ्गित्वे रसवदाद्यलङ्कारः, अङ्गत्वे तु द्वितीयोदात्तालङ्कारः" तदपि परास्तम्। (ध)

**यद्येत एवालङ्काराः परस्परविमिश्रिताः।**
**तदा पृथगलङ्कारौ संसृष्टिः सङ्करस्तथा॥ ७७६॥ (न)**

यथा लौकिकालङ्काराणामपि परस्परमिश्रणे पृथक्

---

(द) प्रधाने इति।—यत्र वाक्यार्थे प्रधाने अन्यत्र—अन्यस्मिन् रसादौ, वाक्यार्थे वा, रसादयः, (आदिपदेन भावादिपरिग्रहः)। अङ्गम्—अप्राधान्येन स्थिता इत्यर्थः, तस्मिन् काव्ये—वाक्यार्थे, रसादिः अलङ्कारः, भवतीति शेषः, इति मे—मम, मतिः।

(ध) रसाद्युपकारकत्वमात्रेणालङ्कारत्वं मुख्यतः इति प्रागुक्तमपरेषां मतं दूषयति,—यदीति। वाचकादिष्विति।—तथा अलङ्कारत्वमित्यर्थः। एवञ्चेति।—उक्तरीतिविरहादित्यर्थः। परास्तं—निराकृतं, वाच्यवाचकालङ्करणमुखेन रसाद्युपकारकत्वाभावादिति भावः।

(न) अधुना एषां सर्व्वेषामलङ्काराणां संश्लेषसमुत्थापितं पृथगलङ्कारद्वयमुच्यते, यद्येति।—यदि एते—पूर्व्वोक्ता एव अलङ्काराः, यमकोपमादयः इत्यर्थः, परस्परं विमिश्रिताः एकस्मिन् पद्ये गद्ये वा स्थिताः, भवन्ति इति शेषः, तदा संसृष्टिः तथा सङ्कर इति नामानौ, पृथक्—भिन्नौ, अलङ्कारौ, स्यातामिति शेषः। अयं भावः,—पूर्व्वमभिहिताः शब्दालङ्कारा अर्थालङ्काराश्चेति द्विविधा अलङ्काराः, ते पुनर्यदि परस्परं मिश्रिताः एकत्र सम्भवन्त उपलभ्येरन्, तदा तेषां संसृष्टिः सङ्करश्चेत्यलङ्कारद्वयं सम्पद्यते इति। अत्रेदं बोध्यम,—उक्तालङ्काराणां यथासम्भवं यदि क्वचिद्वचनं स्यात्, तदा ते किं पृथक्त्वेन पर्य्यवसिताः, उत अलङ्कारान्तरमेव किञ्चिदिति विचार्य्यते,—तत्र यथा बाह्यालङ्काराणां सौवर्णमणिमयप्रभृतीनां पृथक्चारुत्वहेतुत्वेऽपि सङ्घटनाकृतं चारुत्वान्तरं जायते, तद्वत् प्रकृतालङ्काराणामपि संयोजने चारुत्वान्तरमुपलभ्यते; अतः पृथक् पर्य्यवसानमिति निर्णयः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

चारुत्वेन पृथगलङ्कारत्वं, तथोक्तरूपाणां काव्यालङ्काराणामपि परस्परमिश्रत्वे संसृष्टिसङ्कराख्यौ पृथगलङ्कारौ। तत्र,—

**मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते॥७७७॥(प)**

एतेषां—शब्दार्थालङ्काराणाम्। यथा,—

"देवः पायादपायान्नः स्मेरेन्दीवरलोचनः।
संसारध्वान्तविध्वंसहंसः कंसनिसूदनः॥" (फ)

अत्र "पायादपायात्" इति यमकम्। "संसार" इत्यादौ चानुप्रास इति शब्दालङ्कारयोः संसृष्टिः। द्वितीये पादे उपमा, द्वितीयार्द्धे च रूपकमित्यर्थालङ्कारयोः संसृष्टिः। एवमुभयोः स्थितत्वाच्छब्दार्थालङ्कारसंसृष्टिः। (ब)

---

(प) तयोः सामान्यलक्षणमुक्त्वा विशेषलक्षणमाह, मिथ इति।—मिथः,—अन्योऽन्यम्, अनपेक्षया—परस्परापेक्षां विनेत्यर्थः, एतेषाम्—अलङ्काराणां, [बहुवचनमुपलक्षणं, तेन द्वयोरपि अलङ्कारयोरित्याशयः] स्थितिः, संसृष्टिः उच्यते—एकस्मिन् गद्ये पद्ये वा शब्दालङ्काराणामर्थालङ्काराणामुभयेषाञ्च परस्परानपेक्षया स्थित्या त्रिविधा संसृष्टिः निरूप्यते इत्यर्थः। तत्राद्या यथा,—"चारुचन्द्रमसं भीरु! बिम्बं पश्येदमम्बरे। मन्मनो मन्मथाक्रान्तं निर्दयं हन्तुमुद्यतम्॥" अत्र प्रथमार्द्धे द्वितीयार्द्धे चानुप्रासः, तृतीयपादे यमकम्। द्वितीया यथा,—"विपद्भ्यस्त्रायतां देवः फुल्लेन्दीवरलोचनः। भवान्धकारसङ्घीभरविः केशिनिसूदनः॥" अत्र प्रथमार्द्धे उपमा, द्वितीयार्द्धे रूपकम्। उभयसंसृष्टिः यथा,—"त्वयि वीर! परं विराजते दमयन्तीकिलकिञ्चितं किल। तरुणीस्तन एव दीप्यते मणिहारावलिरामणीयकम्॥" अत्र यमकानुप्रासाभ्यां शब्दालङ्काराभ्यां सह प्रतिवस्तूपमायाः अर्थालङ्कारस्य संसृष्टिः इति ज्ञेयम्।

(फ) एकस्मिन्नेव पद्ये त्रिविधां संसृष्टिमुदाहरति, देव इति।—स्मेरे—विकसिते, इन्दीवरे इव लोचने यस्य तथोक्तः, संसार एव ध्वान्तं—तिमिरं, तस्य विध्वंसे—विनाशने, हंसः,—सूर्य्यः, ("भानुर्हंसः सहस्रांशुस्तपनः सविता रविः" इत्यमरः) कंसनिसूदनः,—कंसारिः, देवः,—श्रीकृष्णः, अपायात्—आपदः, नः,—अस्मान्, पायात्—रक्षतु।

(ब) एवमिति।—शब्दालङ्कारयोरर्थालङ्कारयोश्च सजातीयत्वेन अन्तरङ्गतया

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ।
सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः॥७७८॥(भ)

अङ्गाङ्गिभावो यथा,—

"आकृष्टिवेगविगलद्भुजगेन्द्रभोग-
निर्मोकपट्टपरिवेष्टनयाऽम्बुराशेः।
मन्थव्यथाव्युपशमार्थमिवाशु यस्य
मन्दाकिनी चिरमवेष्टत पादमूले॥" (म)

अत्र निर्मोकपट्टापह्नवेन मन्दाकिन्या आरोप इत्यपह्नुतिः। सा च मन्दाकिन्या वस्तुवृत्तेन (य) यत्पादमूलवेष्टनं, तच्चरणमूलवेष्टनमिति श्लेषमुत्थापयतीति तस्याङ्गम्; श्लेषश्च पादमूलवेष्टनमेव चरणमूलवेष्टनमित्यतिशयोक्तेरङ्गम्; अतिशयोक्तिश्च "मन्थव्यथाव्युपशमार्थमिव" इत्युत्प्रेक्षाया अङ्गम्; उत्प्रेक्षा च

---

संसृष्टीभूय वैचित्र्यविशेषं जनयित्वा संसृष्टित्वेनापि अतिरिक्तवैचित्र्यजनकत्वमिति भावः।

(भ) सङ्करमाह, अङ्गेति।—अलङ्कृतीनाम् अङ्गाङ्गित्वे—गुणप्रधानभावे, तद्वत्—तथा, एक एव आश्रयः,—आधारः तत्र, एकस्मिन् पादे पदे वा इत्यर्थः, स्थितौ तथा सन्दिग्धत्वे च अत एव सङ्करः पुनः त्रिविधः भवति; अङ्गाङ्गिभावेन, एकवाचकानुप्रवेशेन, संशयेन च सङ्करस्त्रिप्रकारकः इति सारः।

(म) आकृष्टीति।—आकृष्टेः,—समुद्रमन्थनसमये देवासुराणामुभयतः आकर्षणस्य, यः वेगः तस्मात्, तेन वा विगलन्—स्खलन्, भुजगेन्द्रभोगस्य—वासुकिदेहस्य, यः निर्मोकपट्टः,—परित्यक्तत्वग्वसनं, त्यक्तचर्मपट्ट इत्यर्थः, तस्य परिवेष्टनया—परिवेष्टनच्छलेनेत्यर्थः, अम्बुराशेः,—समुद्रस्य, पत्युरिति भावः, मन्थव्यथायाः,—मन्थनजनितपीडायाः, व्युपशमार्थमिव—अपनोदनार्थमिव, आशु—शीघ्रं, मन्दाकिनी—गङ्गा, यस्य—समुद्रस्य इति भावः, पादमूले—एकदेशे, चरणसमीपे च, चिरम् अवेष्टत—अवहत्, संवाहनार्थमतिष्ठच्च। वसन्ततिलकं वृत्तम्।

(य) अङ्गाङ्गिभावमुपपादयति, अत्रेति।—सा च—अपह्नुतिश्चेत्यर्थः। वस्तुवृत्तेन—वस्तुगत्या।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अम्बुराशिमन्दाकिन्योर्नायकनायिकाव्यवहारं गमयतीति समासोक्तेरङ्गम्। यथा वा,—

"अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः।
अहो! दैवगतिश्चित्रा तथाऽपि न समागमः॥" (र)

अत्र समासोक्तिर्विशेषोक्तेरङ्गम्। सन्देहसङ्करो यथा,—

"इदमाभाति गगने भिन्दानं सन्ततं तमः।
अमन्दनयनानन्दकरं मण्डलमैन्दवम्॥" (ल)

---

(र) अनुरागेति।—सन्ध्या—सायंसमयः, नायिका च, अनुरागवती—लौहित्यवती, सुरताभिलाषवती च, दिवसः,—अहः, नायकश्च, तस्याः,—सन्ध्यायाः, पुरःसरः,—पुरोवर्त्ती; अहो!—आश्चर्य्यं, दैवगतिश्चित्रा—अद्भुता, (यतः) तथापि—अनुरागवत्त्वे पुरोवर्त्तित्वे चेत्यर्थः, न समागमः,—न सम्मेलनम्। यथा वा,—"वयोमयोऽपि प्रथितौ जगत्सु यद्वारुणीं प्रत्यगमद्विवस्वान्। मन्येऽस्तशैलात् पतितोऽत एव विवेश शुद्ध्यै बड़वाग्निमध्यम्॥" इति। अत्र हि पूर्वार्द्धे विरोधोत्पत्तिहेतुः श्लेषः, उत्तरार्द्धे पुनस्ताभ्यामङ्गाङ्गिभावमापन्नो मन्ये इति पदेनोत्थापितोत्प्रेक्षा इति भावः। तथा ह्यत्र यत्कारणमुत्प्रेक्षते, तत्र विरोधश्लेषानुप्रवेशः। यच्चात्र कार्य्यमुत्प्रेक्षानिमित्तं, तत्र पतितत्वाग्निप्रवेशौ वस्तुस्थित्या अन्यथास्थितावपि अन्यथाभूताभ्यां ताभ्यामभेदेनाध्यवसितौ ज्ञेयौ, तेनात्राङ्गाङ्गिभावः सङ्करः, न च विरोधोत्पत्तिहेतौ श्लेषे श्लेषस्य विरोधेन सहाङ्गाङ्गिभावः सङ्करः, उत्प्रेक्षाया वा निमित्तगतातिशयोक्त्या सहाऽयं सङ्करः, ताभ्यां विना तयोरनुत्थानात्, अतश्च निरवकाशत्वाद्बाधकत्वम्; न च मन्तव्यं विरोधमन्तरेणापि श्लेषो दृश्यते इति श्लेषस्य सावकाशत्वमिति, यतो न ब्रूमो विरोधमन्तरेण श्लेषो न भवतीति। किं तर्हि अलङ्कारान्तरविविक्तो विषयः श्लेषस्य नास्तीति निरवकाशत्वात् तेषां बाधः। तन्मध्ये च विरोधोऽनुप्रविष्टः इति सोऽपि न बाध्यते इति न कश्चिद्दोषः, एवमर्थालङ्कारसङ्कराः प्रोक्ता इति सर्व्वस्वकाराः।

(ल) सन्देहसङ्करातिरिक्तस्थले एकाश्रयस्थितेर्विषयो भविष्यतीति चरमोक्तमपि सन्देहसङ्करं प्रथमं दर्शयति, इदमिति।—सन्ततं—निविड़ं, सम्यग्व्याप्तमिति यावत्, तमः,—अन्धकारं, पक्षे,—स्मरजनिताज्ञानं, भिन्दानं—खण्डयत्, अमन्दं यथा तथा नयनयोः आनन्दकरम् ऐन्दवं—चान्द्रं, मण्डलमिदं गगने आभाति—राजते। ["इदमाभाति वदनम्—" इति पाठो न रमणीयः, विषयस्य निगरणाभावादति-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र किं मुखस्य चन्द्रतयाऽध्यवसानादतिशयोक्तिः? उत इदमिति मुखं निर्दिश्य चन्द्रत्वारोपाद्रूपकम्? अथवा इदमिति मुखस्य चन्द्रमण्डलस्य च द्वयोरपि प्रकृतयोरेकधर्म्माभिसम्बन्धात् तुल्ययोगिता? आहोस्विच्चन्द्रस्याप्रकृतत्वाद्दीपकम्? किं वा विशेषणसाम्यादप्रस्तुतस्य मुखस्य गम्यत्वात् समासोक्तिः? यद्वा अप्रस्तुतचन्द्रवर्णनया प्रस्तुतस्य मुखस्यावगतिरित्यप्रस्तुतप्रशंसा? यद्वा मन्मथोद्दीपनः कालः स्वकार्य्यभूतचन्द्रवर्णनामुखेन वर्णित इति पर्य्यायोक्तिः? इति बहूनामलङ्काराणां सन्देहात् सन्देह-सङ्करः। यथा वा "मुखचन्द्रं पश्यामि" इत्यत्र किं मुखं चन्द्र इवेत्युपमा? उत चन्द्र एवेति रूपकम्? इति सन्देहः; साधकबाधकयोर्द्वयोरेकतरस्य सद्भावे न पुनः सन्देहः। यथा "मुखचन्द्रं चुम्बति" इत्यत्र चुम्बनं मुखस्यानुकूलमित्युपमायाः साधकं, चन्द्रस्य तु प्रतिकूलमिति रूपकस्य बाधकम्। "मुख-चन्द्रः प्रकाशते" इत्यत्र प्रकाशाख्यो धर्म्मो रूपकस्य साधको मुखे उपचरितत्वेन सम्भवतीति नोपमाबाधकः। (व)

शयोक्तेरसम्भवापत्तेः, इदमिति मुखं निर्द्दिश्येति निर्वचनासङ्गतिप्रसङ्गाच्च; "वदनम्" इत्यत्र "गगनम्" इति पाठोऽपि न सुन्दरः, अव्यावर्त्तकत्वात्; तस्मात् "इदमाभाति रुचिरम्" इति पाठो रुचिरः इत्यवधेयम्]। यथा वा,—"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपास्ते चोन्मीलितमालतीसुरभयः प्रौढ़ाः कदम्बानिलाः। सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते॥" अत्र विभावनाविशेषोक्त्योः सन्देहसङ्करः, तथा ह्युत्कण्ठाकारणाभावे उत्कण्ठाया उत्पत्तौ विभावना, स च कारणाभावो "यः कौमारहरः" इत्यादिना कारणविरुद्धमुखेन प्रतिपादितः; तथा च "यः कौमारहरः" इत्यद्युत्कण्ठाकारण-सद्भावेऽपि अनुत्कण्ठाया अनुत्पत्तौ विशेषोक्तिः, सा चानुत्पत्तिः "समुत्कण्ठते" इति विरोधोत्पत्तिमुखेनोक्ता, अत एव द्वयोरप्यस्फुटत्वमन्वयीत्तम्। न चानयोः प्रत्येकं साधकबाधकप्रमाणयोग इति सन्देहसङ्करोऽयम् इति सर्व्वस्वकाराः।

(व) साधकेति।—बाधकं—मुख्यतया उपमाननिष्ठं साधर्म्यं रूपकस्य



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम् ।" (श)

अत्र योषित आलिङ्गनं नायकस्य सदृशेनोचितमिति लक्ष्म्यालिङ्गनस्य राजन्यसम्भवादुपमाबाधकं, नारायणे सम्भवाद्रूपकम् । एवं,—

"वदनाम्बुजमेणाक्ष्या भाति चञ्चललोचनम् ।" (ष)

अत्र वदने लोचनस्य सम्भवादुपमायाः साधकता, अम्बुजे च असम्भवाद्रूपकस्य बाधकता । एवं "सुन्दरं वदनाम्बुजम्" इत्यादौ साधारणधर्म्मप्रयोगे "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" ( २ । १ । ५६ पा० ) इति वचनादुपमासमासो न सम्भवतीति उपमाया बाधकः । एवञ्चात्र मयूरव्यंसकादित्वाद्रूपकसमास एव । एकाश्रयानुप्रवेशो यथा मम,—

"कटाक्षेणापीषत्क्षणमपि निरीक्षेत यदि सा
तदाऽऽनन्दः सान्द्रः स्फुरति पिहिताशेषविषयः ।

---

साधकम्, उपमाया बाधकं तथा मुख्यतया उपमेयनिष्ठं साधर्म्यम् उपमायाः साधकं रूपकस्य बाधकं, तयोरेकतरस्य—साधकस्य बाधकस्य वा इत्यर्थः ।

( श ) राजेति ।—राजा एव नारायणः तं त्वां लक्ष्मीः निर्भरं—गाढम्, आलिङ्गति—आश्रयतीत्यर्थः । "विध्युन्नावनविख्यातं शङ्खचक्राब्जभूषितम् ॥" इति स्यादस्योत्तरार्द्धम् । एवं सति रूपकं श्लेषोत्थापितम् । अत्र प्रसङ्गे "पादाम्बुजं भवतु वो विजयाय मञ्जुमञ्जीरशिञ्जितमनोहरमम्बिकायाः ।" पादाम्बुजमित्यत्र उपमितसमासे च उपमारूपकयोः सम्भवात् सन्देहः, तत्र रूपकसत्त्वे उत्तरपदार्थस्याम्बुजस्य प्राधान्यप्रसङ्गेन तत्र च मञ्जीरादिविशेषणानामन्वयानुपपत्तिरूपबाधकसत्त्वादुपमैवेति निर्णयः । "यस्यातिशब्दविषयं चरणारविन्दमुत्तंसयन्त्यमितभक्ति............वराननाः" इत्यादौ तूत्तंसनकार्यस्यारविन्दनिर्वापितत्वमेवेति । एवं "राजनारायणम्" इत्यत्र उपमायां राजप्राधान्ये लक्ष्मीसमागमानौचित्यापातात् राज्ञि तदुपपादकनारायणतादात्म्यसिद्ध्यर्थं रूपकमेवेति कौस्तुभाशयः ।

( ष ) वदनेति ।—एणाक्ष्याः,—हरिणाक्ष्याः, चञ्चले लोचने यत्र तथाविधं, वदनम् अम्बुजमिव तत् वदनाम्बुजं, भाति—शोभते ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सरोमाञ्चोदञ्चत्कुचकलसनिर्भिन्नवसनः
परीरम्भारम्भः क इव भविताम्भोरुहदृशः॥" (स)

(स) कटाक्षेणापीति।—यदि सा कटाक्षेण ईषत्क्षणमपि—अल्पक्षणमपि, निरीक्षेत—पश्येत्, तदा पिहितः,—आच्छादितः, अशेषः,—निखिलः, विषयः येन तादृशः, सान्द्रः,—घनः, आनन्दः स्फुरति—उदेतीत्यर्थः। सान्द्रादिविशेषणद्वयेन आनन्दस्य ब्रह्मानन्दसदृशत्वं प्रतीयते। अम्भोरुहे इव दृशौ यस्याः तथाभूतायाः, तस्याः सरोमाञ्चं—सपुलकं यथा तथा उदञ्चद्भ्यां—स्फीततां गच्छद्भ्यां, कुचकलसाभ्यां—कलससदृशस्तनाभ्यां, निर्भिन्नं—छिन्नं, वसनं यत्र तादृशः, अथवा सरोमाञ्चात्—जातपुलकात्, उदञ्चतः,—उच्चात्, कुचकलसान्निर्भिन्नं—विगलितं, वसनं यत्र सः, परीरम्भारम्भः,—आलिङ्गनव्यापारः, क इव?—कीदृगिव, निरुपम इत्यर्थः, भविता—तत्र कियानानन्दो भवितेति न जाने इति भावः। शिखरिणी वृत्तम्;—"रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी।" इति च तल्लक्षणम्। यथा वा,—"स्पष्टोल्लसत्किरणकेसरसूर्य्यबिम्बविस्तीर्णकर्णिकमथो दिवसारविन्दम्। श्लिष्टाष्टदिग्दलकपालमुखावतारबद्धान्धकारमधुपावलि संचुकोच॥" अत्र रूपकानुप्रासौ एकपदानुप्रविष्टौ स्पष्टौ। प्राञ्चस्तु,—अर्थालङ्कारयोरपि उक्तरूपसङ्करमङ्गीकुर्व्वन्ति। वाचकानुप्रवेशेत्यत्र वाचकत्वस्य वाच्यनिरूपितत्वात् वाच्ययोरेवानुप्रवेशः प्रतिभाति, उदाहरणं यथा,—"सत्पुष्करद्योतितरङ्गशोभिन्यभेदमारब्धमृदङ्गवाद्ये। उद्यानवापीपयसीव यस्यामेणीदृशो नाट्यगृहे रमन्ते॥" अत्राद्यविशेषणे शब्दमात्रसाम्यं श्लेषः; द्वितीयेऽर्थसाम्यमुपमा, तदुभयमप्येकस्मिन् इवपदेऽनुप्रविष्टम्। नाट्यगृहवापीपयसोरुपमायामिवशब्देन तयोः साधारणधर्म्मतया बोधनादिति। अत्र दीक्षिताः,—नैतद्युक्तं, सत्पुष्करेत्यत्र श्लेषसत्त्वेऽपि तद्बोध्यार्थद्वयस्य भेदेऽप्यभेदरूपातिशयोक्तिमहिम्ना ऐक्यविवक्षया तत्रापि धर्म्मसाम्यस्य प्रतिपादितत्वेन शब्दसाम्यस्य तत्रानभिमतत्वात्; अन्यथा "अहो रागवती सन्ध्या" इत्यादौ विशेषणसाम्याभावेन श्लिष्टविशेषणकसमासोक्त्यनुपपत्तेः, अस्तु वा शब्दसाम्यमिव प्रतिपाद्य, तथाप्युपमावाचकत्वात्तस्य श्लेषवाचकत्वमनुपपन्नमेव; तस्मात् यत्रैकस्मिन्नेवार्थे प्रतिपाद्यमानेऽलङ्कारद्वयलक्षणसम्भवादलङ्कारप्रतीतिः, तत्रैकवाचकानुप्रवेशरूपसङ्करः। यथा वा,—"विधुकरपरिरम्भादात्मनिस्यन्दपूर्णैः शशिदृषदुपक्लृप्तैरालवालैस्तरूणाम्। विफलितजलसेकप्रक्रियागौरवेण व्यरचि स हृतचित्तः तत्र भैमीवनेन॥" अत्र सम्भाविमहस्तुवर्णनादुदात्तम्, असम्बन्धे सम्बन्धकल्पनाच्चातिशयोक्तिः, न चोदात्तस्य शयोक्तातिः

अत्र "कटाक्षेणापीषत्क्षणमपि" इत्यत्र छेकानुप्रासस्य, "निरीक्षेत" इत्यत्र क्षकारमादाय वृत्त्यनुप्रासस्य चैकाश्रये-ऽनुप्रवेशः। एवञ्च अत्रैवानुप्रासार्थापत्त्यलङ्कारयोः; (ङ) यथा वा,—"संसारध्वान्तविध्वंस—" इत्यत्र रूपकानुप्रासयोः; यथा वा,—"कुरबका रवकारणतां ययुः" इत्यत्र रबका रवका इत्येकं बकार-वकार इत्येकमिति यमकयोः। यथा वा,—

"अहिणअपओअरसिएसु पहिअसामाइएसु दिअहेसु।
मोहइ पसारिअगीआणं णच्चिअं मोरविंदाणम्॥" (क)

---

अयोक्तिव्याप्यत्वेन विविक्तविषयाभावात् कथमेतदिति वाच्यम्; दिव्यलोकसम्पद्वर्णने उदात्तस्यातिशयोक्तिव्यभिचारेण, शौर्य्यदारिद्र्यादिवर्णने चातिशयोक्तेरुदात्तव्यभिचारेण, प्रकृते द्वयोः समावेशात्। नचानयोरङ्गाङ्गिभावः, एकस्यान्यानुपजीवकत्वात्; नापि समप्राधान्यम्, उदात्तप्रतिपादकशक्तेरेवातिशयोक्तिप्रत्यायनात्; नापि सन्देहः, एककोटेरपरकोटिप्रतिक्षेपकत्वाभावादित्याहुः; तदसत्, स्वस्वजन्यतावच्छेदकीभूत-वैजात्यावच्छिन्नचमत्कारनिष्ठकार्य्यताप्रतियोगिक-कारणतावच्छेदकधर्मवत्तया प्रकृतेऽप्येककोटेस्तदन्यकोटिविरोधित्वेन सन्देहस्योपपत्तेः, एतद्विलक्षणायाः प्रतिक्षेपकतायाः अलङ्कारमात्रेऽपि दुर्वचत्वात्। प्राचां त्वयमाशयः,—उपमाप्रकारे यादृशधर्म्मोक्तौ श्लेषेणानुगामित्वेन च तदुक्तिव्यवहारसादृश्यमेव, भेदमात्रे "सत्पुष्करद्योतित" इति उदाहरणं, तदुपादानञ्चेवशब्देन सम्भवत्येव, तस्य साधारणधर्म्मवाचकतायाः अप्यङ्गीकारात्, एतेन शब्दसाम्यस्य इवशब्दप्रतिपाद्यत्वेऽपि तस्योपमावाचित्वस्यैव प्राप्त्या श्लेषवाचकत्वाभावादित्यपास्तम्। श्लेषत्वेन रूपेण तस्यैव शब्दवाच्यत्वाभावेऽपि श्लेषवाच्यार्थद्वयस्य साधारणधर्म्मत्वेन इवपदबोध्यत्वावश्यकत्वात् तावतैव प्रकृतोदाहरणोपपत्तेरिति दिक्।

(ङ) अत्रेति।—"कटाक्षेणापीषत्क्षणमपि" इति वर्णद्वयघटितस्य क्षकारस्य क्रमस्वरूपाभ्यां सकृत् साम्यात् छेकानुप्रासः, पश्चात् "निरीक्षेत" इति क्षकारमादाय क्रमस्वरूपाभ्यामसकृत् साम्यसम्भवात् वृत्त्यनुप्रासः, एवं चतुर्थपादेऽपि मकार-भकारघटितवर्णपिण्डस्य छेकवृत्त्यनुप्रासौ वेदितव्यौ इति।

(क) एकपदे सङ्करमाह, यथेत्यादि इति।—["अभिनवपयोदरसितेषु पथिकश्यामायितेषु [ पथिकसामाजिकेषु ] दिवसेषु। मह्यति प्रसारितग्रीवाणां नृत्तं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र "पहिअसामाइएसु" इत्येकाश्रये पथिकश्यामायिते-त्युपमा ; पथिकसामाजिकेषु इति रूपकं प्रविष्टम्। (ख)

श्रीचन्द्रशेखरमहाकविचन्द्रसूनु-
श्रीविश्वनाथकविराजकृतं प्रबन्धम्।
साहित्यदर्पणममुं सुधियो विलोक्य
साहित्यतत्त्वमखिलं सुखमेव वित्त ॥ (ग)

---

मयूरवृन्दानाम् ॥" इति संस्कृतम् ]। अभिनवं—नूतनं, पयोदानां—मेघानां, रसितं—गर्जितं, येषु तथोक्तेषु, यद्वा,—अभिनवानां—नवोदितानां, पयोदानां रसितं येषु तथोक्तेषु, पथिकाः,—प्रवासिनः, श्यामायिताः,—प्रियाविरहदुःखेन मलिना इव आचरन्तः, येषु तादृशेषु, पक्षे,—पथिका एव सामाजिकाः,—नृत्यकलाद्रष्टारः येषु तथोक्तेष्वित्यर्थः, दिवसेषु—दिनेषु, वर्षासु इत्यर्थः, प्रसारिता—विस्फारिता, ग्रीवा यैः तेषां, मयूरवृन्दानां नृत्यं महति—उत्सवायते इत्यर्थः ; अथवा,—पथिकेति सम्बोधनं, श्यामायितेषु मेघेनेति भावः ; दिवसेषु इत्यस्य विशेषणमिति च बोध्यम्।

(ख) अत्रेति।—पथिकानां प्रियाविरहदुःखेन श्यामलं, दिवसानां मेघेनेत्युपमा ; "पहिअसामाइएसु" इति प्राकृतांशस्य "पथिकसामाजिकेषु" इति अनुवादपक्षे,—पथिका एव सामाजिकाः यत्र तेषु, नाट्यदर्शनेन सामाजिकानामुत्सवो भवतीति रूपणम्। पथिकानां मयूरनृत्यं सुखदं न भवति इति महति इत्युक्तं, वस्तुतस्तु,—"मुखचन्द्रं पश्यामि" इत्यादौ यथा समासद्वयसम्भवात् सन्देहः, तथेहापि "पहिअसामाइएसु" इति प्राकृतयोनिपथिकश्यामायित-पथिकसामाजिकशब्दद्वय-सम्भवात् सन्देह एवेत्यवधेयम्। एवञ्चैकपदवृत्तिसङ्करस्योदाहरणं "संसारध्वान्त-विध्वंसहंसः" इत्याद्यवगन्तव्यम्। यथा वा,—"मनो विहं सरोजाक्षी अरश्मत्या सुनिर्भरम्। सा चेद्विहजते गाढं स्वास्थ्यमालम्बते खलु ॥" इत्याद्युदाहरणमुन्नेय-मिति।

(ग) श्रीचन्द्रेति।—श्रीचन्द्रशेखरश्चासौ महाकविषु चन्द्रश्चेति, तस्य सूनुः,—पुत्त्रः, यः श्रीविश्वनाथकविराजः तेन कृतम् अमुं साहित्यदर्पणं प्रबन्धं भोः सुधियः !—विद्वांसः ! विलोक्य—विचार्य, यूयमिति शेषः, सुखम्—अनायासमेव, अखिलं—समस्तं, साहित्यस्य तत्त्वं—रहस्यं, वित्त—जानीत। वसन्ततिलकं वृत्तम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यावत्प्रसन्नेन्दुनिभानना श्रीर्नारायणस्याङ्गमलङ्करोति ।
तावन्मनः सम्मदयन् कवीनामेष प्रबन्धः प्रथितोऽस्तु लोके ॥ (घ

इति श्रीमन्नारायणचरणारविन्दमधुव्रतसाहित्यार्णवकर्णधारध्वनिप्रस्थापनपरमाचार्य-
कविसूक्तिरत्नाकराष्टादशभाषावारविलासिनीभुजङ्गसान्धिविग्रहिकमहापात्र-
श्रीविश्वनाथकविराजकृतौ साहित्यदर्पणे अलङ्कारनिरूपणं नाम
दशमः परिच्छेदः ॥ १० ॥

---

(घ) यावदिति ।—प्रसन्नेन्दुनिभं—पूर्णचन्द्रसदृशमित्यर्थः, आननं—मुखं यस्याः तादृशी, श्रीः,—लक्ष्मीः, ("श्रीर्वेशरचनाशोभाभारतीसरलद्रुमे। लक्ष्म्यां त्रिवर्गसम्पत्तिवेशोपकरणेषु च ॥ विभूतौ च मतौ च स्त्री" इति मेदिनी) याव नारायणस्य—भगवतः, अङ्गं—वक्षःस्थलम्, अलङ्करोति, तावत्—तत्कालावधि, एषः,—मत्कृत इत्यर्थः, प्रबन्धः,—साहित्यदर्पणनामाऽलङ्कारशास्त्रविषयको निबन्धः कवीनां मनः सम्मदयन्—संहृष्टं कुर्वन्, लोके—जगति, ("लोकस्तु भुवने जने" इत्यमरः) प्रथितः,—विख्यातः, अस्तु । इन्द्रवज्रा वृत्तं,—"स्यादिन्द्रवज्रा यदि तौ जगौ गः ।"

वैशेषैर्यदि किञ्चिदत्र रभसादुन्नाव्यते दूषणं
तेनाधातुरपारमार्थिकतया काचिन्न शङ्क्या क्षतिः ।
विद्वद्भिः पुनरुच्यते यदि च तत् स्यात्तेन शोभा परा
सन्तापोऽपि विभावयत्यतिशयं कार्त्तस्वरस्यानले ॥
विलोक्य तर्कवागीशनिर्म्मितां विवृतिं वराम् ।
टीका विरचिता पूर्व्वं या जीवानन्दशर्म्मणा ॥
शब्दविचारविनिवेशपरैः प्रमाणैः दृष्टान्तराजिरुचिरैश्च गभीरभावैः ।
तां भूषितां व्यदधताशुसुबोधहेतोः श्रीनित्यबोधसहितो द्विज आशुबोधः ॥ इति




SRI JAGADGURU VISHWAR...
JNANA SIMHASAN JNANAMANDIR
LIBRARY. 1592
Jangamwadi Math, VARANASI.
Acc. No. ...
CC-0. Jangamwadi Math Collection. Digitized by eGangotri

